॥ श्रीगणेशायनमः ॥

—:०:—

# वैयाकरणसिद्धान्तमञ्जूषा ।

## नागेशभट्टविरचिता ।

---

दुर्बलाचार्यकृतकुञ्जिकाटीकया बालम्भट्टकृतकलाटीकया
च सहिता ।

(मं०) नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः ॥
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ १ ॥

वाक्यस्फोटस्यमुख्यत्वम् तत्र वाक्यस्फोटो मुख्यः । लोके तस्यैवार्थबोधकत्वात् । तेनैवार्थसमाप्तेश्च । तदुक्तं न्यायभाष्यकृता पदसमूहो वाक्यमर्थसमाप्ताविति । अत्र पदं सुवन्तं तिङन्तं च । तेन तत्समूह इत्यर्थः । समाप्तावित्यस्य समर्थमिति शेषः ॥ १ ॥

(कुं० टी०) मञ्जूषाकुञ्जिकाशिल्पशाब्दब्रह्मसमुच्चयः ॥
दिश दिशेति दिश्यान्नः शर्म शाश्वतिकं परम् ॥ १ ॥

नागेश इति । भटतीति भट्टः । वाग्मी । भटपरिभाषणे तन् प्रत्ययः । मज्जतीति मञ्जूषा मस्जेनुम् चेत्यूपन् । इदमित्थम्भूतं चेत्येवं ज्ञायमानमर्थजातं सिद्धं, सिद्धस्य संस्थितिरित्थम्भावव्यवस्था सिद्धान्त इति वात्स्यायननः । परमपुरुषार्थापवर्गहेतुत्वादुपोद्घातमाह । तत्रेति । वैयाकरणसिद्धान्तेष्वित्यर्थः ।

मुख्य इति । वाक्यस्फोटात्मकशाब्दब्रह्मज्ञानं व्याकरणस्य मुख्यं प्रयोजनमित्यर्थः । वाक्यस्फोटात्मकब्रह्मण एव तात्त्विकतया तद्व्यतिरिक्तवस्तुनोऽतात्त्विकत्वात् सिद्धान्तान्तरस्यामुख्यत्वम् । यद्यपि आभ्यन्तरः स्फोटो वाचकः, न च तस्य लोके प्रयोगोऽस्ति, तथापि तस्यैवेत्यस्य वाक्यस्यैवेत्यर्थः । एवञ्च तदभिव्यङ्ग्यस्य वाक्यस्फोटस्य सिद्धिः ।

ननु कथं द्वारमित्यादितो बोध इत्यत आह । तेनेति । तत्रापि वाक्यस्मरणद्वारैव बोधादिति भावः । अर्थसमाप्तिः । अर्थपर्यवसानम् । यद्यपि स्वमते द्वारमित्येकपदमपि वाक्यं तदेव चार्थबोधकमिति वक्ष्यते तथापि परमतरीत्येदम् । तदेव परमतमुपक्रमते । पदसमूह इति । यद्यपि एको निरवयवः स्फोटो वाक्यं प्रतिभावावाक्यार्थ इति सिद्धान्तः तथापि पदकल्पनयैव वाक्यव्युत्पादनादिदम् । तदुक्तं हरिणा ।

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यत इति ॥

एकतिङ् वाक्यमित्यादीनि तु अनुदात्तादिविधावेव परिभाषितानीति पदसमूह इत्युक्तम् । तदुक्तम् ।

निघातादिव्यवस्थार्थं शास्त्रे यत्परिभाषितमिति ।

एतेन पश्य मृगो धावतीत्यादावव्याप्तिवारणाय एकतिङन्तार्थमुख्यविशेष्यकं वाक्यमिति व्याचक्षाणाः परास्ताः । पदशब्देन तद्योग्यताया ग्रहणादनुकरणे नाव्याप्तिः ।

ननु शक्तं पदमिति मते प्रकृत्यादिसमुदायस्यापि समासार्थवत्त्वापत्तिरत आह । अत्रेति । तथा च गौतमसूत्रम् । विभक्त्यन्ताः पदमिति । सुबन्तसमुदायः त्वया भोक्तव्यमिति । तिङन्तसमुदायः पचति भवतीति । अथ यत्र द्वारमित्येवोक्तं

त्र पिधेहीति पदाध्याहारादपि बोधो न सम्भवति उच्चारित
व प्रत्यायक इति भाष्यादिति चेत् । तत्रैकस्यापि पदस्य वा-
यार्थे शक्तिरिति वक्ष्यते । एकदेशसादृश्यात्तु वाक्येषु वाक्यै-
कदेशा अपि प्रयुज्यन्त इति भाष्यम् । यत्र तु वह्न्यभिप्रायेण
धूमवानिति प्रयुज्यते तत्र धूमसाहचर्याद्वह्नौ लक्षणैव । सत्यान्तु
व्याप्त्यादिस्मृतावनुमितिरेव। यत्तु पदशब्द उपस्थितिपरः मौनि
श्लोकादितो ऽपि बोधादिति तार्किकप्राञ्चः तदसत् । प्रयोगहे-
तुभूतार्थतत्त्वज्ञानजन्यशब्दः प्रमाणमिति चिन्तामणिलक्षणस्य
प्रयोगहेतुभूतं यद्वाक्यार्थतत्त्वज्ञानं तज्जन्यतावच्छेदकावच्छि-
न्नस्य ग्रहणेन मौनिश्लोके ऽव्याप्त्यभावात् ॥ १ ॥

( क० टी० ) रामं वामघनश्यामं निकाम हृदयङ्गम ॥
काम वन्दे जगद्धाम विश्राम वचसां शमम् ॥ १ ॥
अमन्दगुणमन्दिर विमतरत्नविद्याधरं
कलाधरकृतादरं कलितचित्तलक्ष्मीवरम् ॥
शिरो धृतनदीवर शिवकर रमोमावरं
नमामि दुरिताहर गुरुवर सनागेश्वरम् ॥ २ ॥
मञ्जूषास्थस्य मुक्तादेर्न लाभः कलया विना ॥
वैयाकरणसिद्धान्तज्ञानस्यापि यथा तथा ॥ ३ ॥
अतस्तदाख्यां विवृतिं मञ्जूषायाः प्रयत्नत ॥
पायगुण्डो वैद्यनाथभट्टः कुर्वे स्वबुद्धये ॥ ४ ॥
कर्तुं न जाने रचनां समर्था
न चाप्यनन्त सा बुधबोधनाय ॥
अह प्रवृत्तो ऽस्मि तथापि तस्मिन्
विश्वप्रणोदः शरण हृदिस्थः ॥ ५ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं स्वेष्टदेवतानम-
स्काररूप मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो
मङ्गलाय च निबध्नाति । नागेश इति । स्वकीर्त्यनुवृत्त्यर्थं स्वना-
मोल्लेखो ऽयम् । तत्रापि तिङन्तकृदन्तवाच्यक्रियाकर्तृत्वेन प्राधान्या-

द्वादो तदुत्कीर्तनम् । भट्टः चतु शास्त्राभिज्ञ । स्पष्टश्चेद वेणीसंवरण-व्याख्यायाम् । न केवल यथाश्रुतशास्त्रचतुष्टयज्ञानमात्र किन्तु ग्रन्थ-सन्दर्भरचनप्रयोजको ऽन्यो ऽपि गुणो ऽस्तीत्याह । विद्वान् कल्पक इत्यर्थ. । सदसाद्विवेककरणैकधुरीण इति यावत् । एतेनान्यतरवै-यर्थ्यमित्यपास्तम् । अत एव तद्रचने विद्वत्वचतु'शास्त्राभिज्ञत्वयो-रेव मुख्यहेतुत्वे । नागेश इति स्वसञ्ज्ञया अहेतुत्वेन विशेष्यवाच-कस्यापि तत्पदस्य पूर्वनिपात । वस्तुतो विद्वत्वभट्टत्वयोरातिप्रस-क्तत्वात्तन्निवारकत्वेन तस्य पूर्वनिपात. । यद्यपि तदप्यतिप्रसक्त, त-थापि त्रितयस्य नातिप्रसङ्ग. । यद्यपि गुणक्रिययो' समभिव्याहारे जा-तिसञ्ज्ञयोर्विशेष्यतैव, तथापि पूर्वयो सञ्ज्ञाशब्दयोः समास कृत्वा पुनः कर्मधारयः । तत्र च द्वयोर्यौगिकत्वामिति न दोष इति बोध्य-म् । निर्गुणमूर्तेर्नतिप्रयोजकाकारवत्वाभावेन नत्यसम्भवादाह । सा-म्ब शिवमिति । तादृश परमेश्वर पितर चेत्यर्थ. । वोतो गुणव-चनादित्यनेन स्त्रियां विकल्पेन ङीषो ऽविधानपक्षे लघुरित्यपि तत्र साधु' । एवञ्च लिङ्गत्रयवत्त्वे ऽपि बाधकाभाव । अनेन गुर्व्यप्येका मञ्जूषास्तीति सूचितम् । वैयाकरणानां पाणिन्यादीनां ये सिद्धा-न्तास्तेषां मञ्जूषेव मञ्जूषा । यथा सम्पुटकः सकलमणिमुक्तादी-नां सङ्ग्राहकस्तथायमपि तदाख्यो ग्रन्थः सकलवैयाकरणसिद्धान्त-सङ्ग्राहक इत्यर्थ । एतेन भूषणादिग्रन्थादेव वैयाकरणसिद्धान्तज्ञा-ने ऽय ग्रन्थो व्यर्थं इत्यपास्त तत्र सकलसिद्धान्ताभावात् । मञ्जू-षात्वनोल्लेखेनेदमपि सूचित सकलसिद्धान्तानामत्र सत्त्वे ऽपि न प्रकाशते या सत्ता किन्त्वावृतरूपेण, किञ्च सिद्धान्ताना मुक्ता-दितुल्यत्वेनावश्योपादेयतात्वाञ्चेति तथा च यथाश्रुतग्राहिणो न यस्य कस्य चिदत्राधिकार. किन्तु विलक्षणप्रेक्षावत इति बोध्यम् । एषा । बुद्धिस्था । एतेन स्वस्यैतत्करणे क्लेशाभावः ज्ञानपूर्वकमे-वात्र लेखा नाज्ञानपूर्वक इति सूचितम् । विरच्यत इति । वर्तमान-सामीप्ये वर्तमानवद्वेति लट् । यद्वा वर्तमाने एव लट् । प्रारब्धा-परिसमाप्तत्वं वर्तमानत्वमित्यस्य वक्ष्यमाणत्वादित्यन्यत्र विस्तरः ।

असिद्धान्तत्वेनात्र प्रक्रियांशमात्रत्यागे ऽपि स्फोटान्यसिद्धा-न्तानामप्यवास्तवत्वात् वस्तुतः स्फोटस्यैव वाचकत्वाद्वक्ष्यमाण-विचारस्यावास्तवतां ध्वनयितु व्याकरणशास्त्रतात्पर्यविषयभूतस-

फलतत्सिद्धान्तेषु प्रधानसिद्धान्त तावदाह । तत्रेति । सकलसिद्धान्तानां मध्ये इत्यर्थ । वाक्यस्फोट इति । स्फुटति प्रकाशते ऽर्थोऽस्मादिति स्फोट वाचक इति, तथा च वाक्यस्फोटो नाम वाक्य वाचकमित्यर्थ । यद्यपि वर्णस्फोट. पदस्फोटो वाक्यस्फोट, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं, तथापि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्व ध्वनयितुं तदुपादानम् । अत एवाह । मुख्य इति । अत एव तस्यादावुत्कीर्तनम् । तत्त्वमेव प्रतिपादयति । लोके इत्यादिना । तस्यैव । वाक्यस्फोटस्यैव । शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण प्रथम तत्रैव शक्तिग्रहादिति भावः । ननु प्रविश पिण्डीमित्यादौ पदस्याप्यर्थबोधकत्वं लोके दृष्टमत आह । तेनैवेति । वाक्येनैवेत्यर्थः । अर्थसमाप्तेरिति । निराकाङ्क्षस्य वाक्यार्थस्य तत एव ज्ञानेन वाक्येनैव वाक्यार्थस्य पूर्णत्वादित्यर्थः । तथा च प्रविश पिण्डीमित्यादौ पदानामर्थबोधकत्वेऽपि न तस्य समाप्तिरिति भावः । एवं मुख्यवाक्यस्य स्फोटस्य पाणिन्यादिऋषिसम्मतत्वे ऽपि स्फोटविघट्टकाधुनिकनैयायिकाज्ञानं प्रकटयितु प्रत्यन्तहेतौ तन्त्रान्तरसम्मतिमाह । तदुक्तमिति । भाष्यकृता । वात्स्यायनेन । यस्त्वत्र शक्तमर्थवत्पदशब्देन गृह्यते इति तन्न । वाक्यव्यवहारस्य लोकतन्त्रान्तरयोरसिद्धत्वात् । तादृशपदसमूहस्य केवलसुबन्तादौ तदेकदेशभूतप्रातिपदिकादौ चातिप्रसक्तत्वाच्च । अर्थसमाप्ताविति वाक्यशेषोपादानस्यानर्थक्यापत्तेश्च ।

तदेतत् ध्वनयन्नाह । अत्रेति । पदसमूह इत्यत्रेत्यर्थ. । तेन । पदशब्देन सुबन्ततिङन्तयोर्ग्रहणेन । तत्समूह इति । सुबन्तसमूहः तिङन्तसमूहः सुबन्ततिङन्तसमूहश्चेत्यर्थः । तथा च सुप्तिङन्तचयो वाक्यमित्यमरैकवाक्यता सिद्धेति भाव । नन्वेवमपि सप्तम्यन्तमनन्वितमुक्तार्थासिद्धिश्चेत्यत आह । समाप्तावित्यस्येति । तथा च नेदं वाक्यलक्षण किन्तु तादृशवाक्यमुद्दिश्य परिपूर्णार्थत्व विधीयत इति नोक्तदोषद्वयम् । तदुक्तिफल तु वाक्यस्फोटस्य मुख्यत्वबोधनमेव । यद्वा वाक्यभेदेनोभयमप्यत्रात एव क्लीबशेषपूरणमिति भावः ॥१॥

वाक्ये प्रकृतिप्रत्यययो कल्पितत्वम् ॥ **तत्र प्रतिवाक्ये सङ्केतग्रहासम्भवात्तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया प-**

दानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः । एतदेवाभिप्रेत्य विभाषा सुप इति सूत्रे कैयटः अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रे ऽर्थवत्ता परिकल्पनादित्याह ।

तत्तदवयवतदर्थबोधनेन समुदायस्य समुदायार्थस्य च बोधने तात्पर्यमृषीणाम् । स्पष्टश्चेदमर्थवत्सूत्रे भाष्यकैयटयोः। श्रुतिवाक्यादीनां बलाबलविचारकल्पनार्थं च तत्कल्पनेति बोध्यम् ॥ २ ॥

(कुं० टी० ) ननु वाक्यस्य निरवयवत्वात्पदप्रत्ययो भ्रम इति किं तद्व्युत्पादननेत्याशङ्क्याह । तत्रेति । शक्तिग्रह इव शब्दज्ञानमपि फलमित्याह । तदन्वाख्यानस्येति । वाक्यान्वाख्यानस्येत्यर्थः । कल्पनयेति । वाक्ये पदानि प्रकल्प्य पदे च प्रकृतिप्रत्ययभागं प्रकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिता इत्यर्थः । यद्यपि अणूप्रत्ययाभावे ऽपि फिञादिनापि अपत्यबोधान्न व्यतिरेकसम्भवस्तथापि वह्निं प्रति तृणारणिमणीनां कारणत्वे इवात्र व्यतिरेकः । प्रकृत्यादिविभागस्य कल्पितत्वादन्वयव्यतिरेकयोः कल्पितत्वम् । एवं घटमानयेति वाक्ययोरखण्डत्वान्न तार्किकोक्तावापोद्वापसम्भवः । शास्त्रमात्रेति । एषा कल्पना प्रक्रियायामेवोपयुक्ता लोके वाक्यस्यैव बोधकत्वादित्यर्थः । एतदेवेति । शास्त्रविषयकत्वमेवेत्यर्थः । कैयट इति । सुब् ग्रहणं प्रातिपदिकान्मा भूदिति भाष्यमुपादाय सुबन्तस्यैव ईषदसमाप्तिद्योत्यत्वेन प्रातिपदिकस्य तद्द्योत्यत्वाभावात्कथं प्राप्तिरित्याशङ्क्येति भावः ।

अन्वयेति । शास्त्रद्वारा कल्पिताभ्यामन्वव्यतिरेकाभ्यां कल्पितार्थवत्त्वैव शास्त्रप्रक्रियोपयोगिनीति भावः ।

ननु अप्रत्यस्यावयवस्य तदर्थस्य च कल्पने ऋषीणामप्रमाण्यं स्यादत आह । तत्तदवयवेति । तत्तदवयव-बोधनेन तत्समुदायो बोध्यते अवयवार्थबोधनेन च समुदायार्थो बोध्यत इत्यन्वयः । भाष्यकैयटयोरिति । तत्र हि पदार्थसंसर्गरूपे वाक्यार्थे वाक्यस्यैव शक्तिरस्ति सादृश्यात्त्वन्वयव्यतिरेकौ कल्पितौ एवञ्च वाक्यस्य प्रातिपदिकत्वं प्राप्तं समासग्रहणकृतनियमेन निवर्त्यत इति स्पष्टम् । श्रुतिवाक्येति । ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र श्रुत्या गार्हपत्योपस्थानं लभ्यमानं प्रबलम्, इन्द्रोपस्थानं तु इन्द्रो देवता अस्या इति तद्धितानुसन्धानमूलकत्वाद्दुर्बलमित्यादि । बलाबलेति । क्रियाकारकभावसम्बन्धलक्षणो हि वाक्यार्थः प्रथमोपस्थितत्वात्प्रबलः । यदि तु वाक्यमखण्डमेवाखण्डमेवाखण्डार्थबोधकं स्यात्तदा लिङ्गादिलभ्यस्यार्थस्यासम्भवादुच्छेद एव स्यादिति भावः ॥ २ ॥

(क०टी०)ननु वाक्यस्फोटस्य मुख्यत्वे व्याकरणशास्त्रानर्थक्यमत्र प्रकृतिप्रत्ययादितत्तदर्थानां प्रतिपादनेन तस्यान्वाख्यानाभावादत आह । तत्रेत्यादिना । वाक्ये अस्य च कल्पनया पदानि प्रविभज्येत्यत्रान्वय. । तत्र हेतुमाह । प्रतिवाक्यमिति । देशकालकर्तृभेदेन वाक्यानामानन्त्यादिति भावः । नन्वेवमपि तस्यैव लघूपायेनान्वाख्यानं तथैवेत्यत आह । तदन्वेति । यद्वा व्यवहाराद्यदा यस्य वाक्यस्य शक्तिग्रहस्तदा तच्छक्ततावच्छेदकसामान्यप्रत्यासत्त्या सर्वतद्वाक्योपस्थितौ तदवच्छिन्ने तत्र शक्तिग्रहसम्भवान्नानन्त्यप्रयुक्तदोषो व्यक्तिपक्षवदत आह । तदन्वेति । निखिलवाक्यान्वाख्यानस्येत्यर्थः । अशक्यत्वेऽप्युक्त एव हेतुः । तत्र च वक्ष्यमाणान्यलघुत्वविशिष्टोपायाभाव एव हेतु. । तावताप्यनिर्वाहादाह । पदे इति । वक्ष्यमाण-

फलसिद्ध्यर्थमाह । कल्पीति । तत्तदर्थविभागमिति । तस्य तस्येति कृतद्विर्वचनेन षष्ठीसमासे स सोऽर्थ विभाग इति कर्मधारये वा विभक्तिलुकि इद साधु । स्पष्टश्चेदमर्थवत्सूत्रे शब्दरत्ने । एवमग्रे ऽपि बोध्यम् । नन्वेव लोके ऽप्यवयवादवयवार्थप्रतीतिः कुतो नेत्यत आह । शास्त्रमात्रेति । शास्त्रकल्पितावन्वयव्यतिरेकौ तत्कल्पितार्थवत्ता च शास्त्रमात्रव्यवहारोपयोगिन्येवेति भावः । कल्पयन्तीति । अन्यथानुपपत्त्येति भाव. । आचार्याः । पाणिन्यादय. । एवमग्रे ऽपि । एतदेवेति । यतः पदादिकल्पनमावश्यकमित्यादिपूर्वोक्तमेवेत्यर्थः । कैयट इति । अथ सुब्ग्रहण किमर्थ सुबन्तादुत्पत्तिर्यथा स्यात्प्रातिपदिकान्मा भूदित्यत्रत्य इति भावे ऽपि सुबन्तस्यार्थलभ्यत्वेन प्रातिपदिकान्नैव भविष्यतीति प्रातिपदिकान्मा भूदित्यसङ्गतमत आह । अन्वयेति । शास्त्रकल्पितेत्यादि. । एव प्रकृतीत्यस्यापि । इह । शास्त्रे । अर्थवत्तेति । तादृशतत्कल्पितार्थवत्ता च शास्त्रमात्रव्यवहारोपयोगिनीति इह शास्त्रे इत्यनेन सूचितम् । नन्वेवमपि व्याकरणशास्त्रानर्थक्यस्यापरिहृतत्वादर्थान्तरत्व दुष्परिहरमत आह । तत्तदवयवेति । इदमपि पूर्ववत्साधुः । तत्तत्प्रकृतिप्रत्ययाद्यवयवेत्यर्थः । तत्तदर्थबोधनेनेति । इदमपि पूर्ववत्साधु । तत्तत्प्रकृतिप्रत्ययाद्यर्थबोधनेनेत्यर्थः । तत्तद्विभागव्युत्पादनेनेति यावत् । तात्पर्यमिति । मुख्यतात्पर्यमित्यर्थ' । तथा च नोक्तदोष इति भावः । तत्र तात्पर्यमानमाह । स्पष्टमिति । तत्र हि वाक्यस्यार्थवत्वात्सञ्ज्ञामापाद्य पदार्थाभावान्नेत्युक्त्वा तदन्यस्य तत्संसर्गरूपस्य वाक्यार्थस्य स नेह देवदत्तेत्यादिना प्रतिपादिता । कैयटेन चात एव वाक्यमेव मुख्यः शब्द इत्यादिना तत्समर्थितम् । ननूक्तफलार्थमवयवकल्पनमस्तु तत्तदर्थकल्पन तु निष्फलमनुपयोगात्सङ्केतग्रहसिद्धिस्तूक्तैवात आह । श्रुतीति । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादिति जैमिन्युक्तेः । अत्र श्रुतिलिङ्गादीति वाच्ये एवमुक्तिर्वाक्यस्फोटप्रस्तावात् । तथा चादिपदस्य प्रत्येक सम्बन्धाल्लिङ्गस्यापि सङ्ग्रह. । तत्कल्पनेति । अवयवतदर्थकल्पनेत्यर्थः । इदञ्चावयवमात्रकल्पनातो न सिद्ध्यतीति भावः ॥ २ ॥

वर्णस्फोटस्य प्रक्रियानिर्वाहकत्वम्

**तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः । प्रकृतिप्रत्ययास्तत्तदर्थवाचका इति तदर्थः । उपस-**

गनिपातधात्वादिविभागो ऽप्येवमेव काल्पनिकः। तस्यैवान्वाख्यानस्य लाघवेन निर्वाहाय स्थानिनो लादय आदेशास्तिबादयश्च कल्पिता एव। तेषामर्था अपि कल्पिता एव। तत्र स्थानिनामर्था ऋषिभिः कण्ठत उक्ताः। आदेशानां च स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति न्यायेन ते। मुख्यं वाचकत्वं तु तथा कल्पनया बोधिते तत्समुदायरूपे पदे वाक्ये वा। लौकिकानां तत एव बोधात्॥

एतदेवाभिप्रेत्य भूवादिसूत्रे भाष्ये भाववचनो धातुरिति लक्षणे सति प्रत्यये भाववचनत्वं भाववचनाच्च प्रत्यय इत्यन्योन्याश्रयमाशङ्क्यानाश्रित्य भाववचनत्वं प्रत्ययः नित्यत्वाच्छब्दानामित्युक्तम्। पारमार्थिकं नाश्रीयते कल्पितं त्वाश्रीयत एवेति कैयटः॥

एवञ्च स्थानिनां वाचकत्वमादेशानां वेत्यादिविचारो निष्फल एव कल्पितवाचकत्वस्योभयत्रापि सत्त्वात्। व्याकरणभेदेन स्थानिनां भेदे ऽपि न क्षतिः लिपीनां भेद इवेति दिक्॥ ३॥

(कुं० टी०) ननु वाक्यस्फोटस्य मुख्यत्वे स्फोटान्तरस्योच्छेद इत्यत आह। तत्र शास्त्रेति। प्रक्रियते प्रत्ययात् पूर्वं क्रियत इति प्रकृतिरिति केचित् तन्न। बहुपटुरित्यत्राव्याप्तेः। प्रत्ययोद्देश्यतेति तु युक्तो ऽर्थः। एवमेव शास्त्रप्रक्रियार्थमेव कल्पितः। लघोर्भावो लाघवमनायासेन प्रवृत्तिः। तत्साधने तूपचाराद्वृत्तिः। कण्ठत उक्ता इति। लः कर्मणि चेत्यादिना। न्यायेन ते इति। उक्तन्यायेनादेशाना-

मर्थो उक्ता इत्यर्थः । तथा कल्पनयेति । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययौ प्रकल्प्य तत्समुदायरूपे पदे इत्यर्थः ॥

लक्षणे इति । क्रियमाणे इति शेषः । सति प्रत्यये इति । उत्पन्ने हि प्रत्यये भाववचनत्वं गम्यते भाववचनाच्च प्रत्ययो भवतीत्यर्थः । शास्त्रव्यवहारात् प्राक् समुदाय एव नास्तीत्यन्वयव्यतिरेकलभ्यार्थवत्वाविभागाभावात् भाववचनत्वस्याश्रित्येत्ययुक्तमत आशयं योजयति । पारमार्थिकमिति । व्यवहारगम्यं मुख्यं वाचकत्वं पदनिष्ठं वाक्यनिष्ठं वा तदत्र नाश्रीयत इति तदर्थः । कल्पितमिति । भाष्यकृतान्वयव्यातिरेकाभ्यां धातुरेव क्रियावाचीत्युक्तत्वात् प्रकृत्यादिनिष्ठमेव वाचकत्वमाश्रीयत इति भावः । ननु प्रत्ययाहितविभागस्य कल्पितत्वे को धातुरित्यादिश्रुतिविरोध इति चेत् सत्यम् । कल्पिताभिप्रायेणैव तथोक्तेः । कल्पनाया अपि व्यवहारनित्यतया नित्यत्वात् ॥

एवञ्चेति । मुख्यवाचकत्वस्य पदे एव सत्त्वात् व्याकरणभेदेन स्थानिनामनियतत्वान्न वाचकत्वमिति मतं निराकरोति । व्याकरणेति । लिपीनामिति । भिन्नानामपि लिपीनां बोधकत्ववदित्यर्थः ॥ ३ ॥

(क०टी०) एवं मुख्यं चरममुक्त्वा शास्त्रोपयोगित्वेन सर्वतोपकृष्टमाद्यमाह । तत्रेति । कल्पितपदतदेकदेशयोर्मध्ये इत्यर्थ । ननु वर्णस्फोट इत्यस्य वर्णा वाचका इत्यर्थः स्यात्स चायुक्तः, तेषामानर्थक्यस्य भाष्ये एव बहुश. स्पष्टत्वात् । किञ्चात्र पक्षे ऽर्थबोधानुकूलाशक्तिर्वर्णसमूहे एव पर्याप्ता न प्रत्येक तथा सति प्रत्येकमर्थवत्वात्प्रातिपदिकत्वाद्यापत्तौ धनवनमित्यादौ नलोपाद्यापत्तेः । किञ्च प्रत्येक शक्तिमत्त्वे प्रत्येक वर्णादर्थबोधापत्ति. । किञ्च द्वितीयादिवर्णोच्चारणस्य वैयर्थ्यापत्तिः । न च प्रत्येकं वर्णैरर्थस्मरणमात्रं जन्यते चरमे-

ण पुनः स्पष्टं जन्यते प्रत्यक्ष इव स्मरणे ऽपि वैजात्याङ्गीकारादिति वाच्यम् । प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वाद्गुरुत्वाच्च । न च प्रत्येकावृत्तेः कथं समुदायवृत्तित्वं द्वित्वादिवदुपपत्तेरत आह । प्रकृतीति । तथा च वर्णपद पदैकदेशपरमिति भावः । प्रवास्तवप्रसङ्गेनान्यदपि तथा आह । उपेति । एतेषां मिथो विभागं इत्यर्थः । अन्यथा निपातपदानर्थक्यापत्तिः । आदिना नामपरिग्रहः । एवमेव । प्रकृतिप्रत्ययादिवत् । ननु प्रकृतिप्रत्ययादिकल्पने ऽपि न लाघवेन तदन्वाख्यान तदानन्त्येन तेषामप्यानन्त्यादत आह । तस्यैवेति । प्रतिवाक्यान्वाख्यानस्यैवेत्यर्थः । उक्तफलार्थमाह । तेषामिति । स्थानिनामादेशानां चेत्यर्थः । तत्र । स्थान्यादेशयोर्मध्ये । तं । अर्थाः । उपसहरति । मुख्यमिति । यद्वा तत्र गमकं वक्तुमुक्तमेव पुनराह । मुख्यमिति । तथेति । प्रकृतिप्रत्ययादीत्यर्थः । तत्समुदेति । प्रकृत्यादिसमुदायेत्यर्थः । पदस्यापि तत्त्वादाह । वाक्ये इति । लौकिकानामिति । प्रियतद्धिता इति न्यायेन निर्देश । यद्वा लोको व्यवहारस्तत्र स्थितानामित्यर्थः । तत एव । वाक्यादेव । गमकमत्राह । एतदेवेति । मुख्यवाचकत्वस्य तत्रैव सत्त्वमित्येवेत्यर्थः । सतीति । प्रत्यये सतीत्यन्वय । केवलधातोरप्रयोगादिति भावः । नित्यत्वादिति । साधुत्वान्वाख्यानमात्रे शास्त्रव्यापारात्प्रागुक्तप्रणाडी सर्वापि सिद्धैवेति नान्योन्याश्रय इति भावः । ननु धातुसंज्ञार्थे भाववचनत्वस्याश्रितत्वादनाश्रित्येत्ययुक्तमत उक्तमेवाशयमाह । पारेति । तस्य व्यवहारेण समुदायवृत्तित्वादिति भावः । कल्पितान्त्वित्ति । भाष्यकृता तत्रैव पूर्वमन्वयव्यतिरेकाभ्यां धातुरेव क्रियावाचीत्युक्तेरिति भाव । अन्येषामज्ञान प्रकटयन्फलितमाह । एवञ्चेति । मुख्यवाचकत्वस्य तत्रैव सत्त्वे चेत्यर्थः । आदिना प्रकृतेरेवार्थो ऽथवा प्रत्ययस्य विकरणा अर्थवन्तो ऽथवा निरर्थका इत्यादिग्रहः । उभयत्र । स्थान्यादेशयो । अन्यदप्याह । व्याकरणेति । स्थानिनाम् । तिङादीनाम् । क्वचित्कडचङादीनामुक्तेरिति भावः । न क्षतिरिति । यथा कल्पितवाचकत्वभ्रमात् लिपिषु इति तद्भेदे न दोषस्तथा कल्पितवाचकत्वात्तेषां भेदे ऽपीति भावः । दिगिति । दिगर्थस्तु वृ-

त्विषु एकार्थीभाव नामार्थयोः प्रकृतिप्रत्यययोरित्यादिकमपि कल्पितमिति ।

आप्तोक्तरूप शब्दप्रामाण्यम् । **तत्र आप्तोपदेशरूपः शब्दः प्रमाणम् । आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् । रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः ॥ ४ ॥**

( कुं० टी० ) प्रमाणमिति । अर्थान्तरवाचकस्य शब्दस्यार्थान्तरप्रयोगेऽनेन श्रोतुः सत्यप्यर्थबोधे प्रमाजनकत्वरूपं प्रमाणत्वं नेति भावः । यत्तु मौनिश्लोकादितोऽपि बोधात्पदज्ञानं करणं न तु पदमिति तन्न । आन्तरस्फोटस्य वाचकत्वस्वीकारेण तत्र लिपीनामेव स्फोटव्यञ्जकत्वात् । यत्तु पदार्थस्मृत्या अन्यथासिद्धत्वात्पदं न करणमिति तन्न । तत्र व्यापाराभावेन करणत्वासम्भवात् । परे तु पदार्थस्मरणमेव व्यापारः, अपौरुषेयस्य वेदस्य तु आप्तोक्तत्वाभावेऽपि स्वत एवासत्त्वम्, पौरुषेयत्वे तु आप्तप्रणीतत्वादेवाप्तत्वम् । लोके तु यथार्थप्रवृत्तिजनकवाक्यप्रयोक्तृत्वादसत्त्वानुमानम् । वेदे तु प्रतिनियतलोकान्तरफलस्य ज्योतिष्टोमादेः संवादाभावात् स्वत एव प्रामाण्यमभ्युपेयम् । वस्तुतत्त्वेति । तत्त्वशब्दोऽनारोपिते रूढः । रागादीति । रागश्चेष्टसाधनताज्ञानरूपसङ्कल्पनिमित्तः । आदिना द्वेषः । नान्यथावादीति । यः पुमान्नान्यथावादी स आप्त इत्यन्वयः । अर्थतत्त्वज्ञानमाप्तिः तया प्रतीत इत्याप्तः ॥ ४ ॥

( क०टी० ) एवं वाक्यस्य शब्दस्य वाचकत्वमुक्त्वा तस्य प्रामाण्यमाह । तत्रेति । वाक्येष्वित्यर्थः । उपदेशपदे कर्मणि घञ् । तथा आप्तोपदेशेन वृद्धव्यवहारेणाप्तकर्तृककथनमात्रेण

रूप्यते गृह्यत इत्यर्थः । तत्राप्तलक्षणमाह । ...म इति । अनुभवेन । अनेनाशिकनिश्चयव्यावृत्ति ... ...यव्यावृत्तये निश्चयेति । सरागादिनिरासाय राग्याद्विति । आदिना मोहादि । अपिनाऽज्ञानसमुच्चय ... च रागादिहीनत्वे सति कृत्स्नवस्तुनिश्चयवत्व त... ...लितम् ॥ ४ ॥

शब्दबोधे गृ...ता-या वृत्तेर्हेतुत्वम्। तत्रागृहीतवृत्तिकस्य शाब्दबोधादर्शनात् न हि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यत इति समर्थसूत्रभाष्याच, तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्माव... ...निरू... ...वृत्तिविशिष्टज्ञानं हेतुः । यद्यपि गुड इत्युक्ते ऽर्थप्रतीतिस्तद्गते मधुरत्वे गम्यते तथापि न तच्छब्दजप्रतीतिविषयः किन्तु मानान्तरजन्यप्रतीतिविषयः।

यत्र तु गुडो मधुर इति वाक्यार्थे गुड इत्येकदेशः प्रयुज्यते तत्रापि मधुराभिन्नो गुड इत्येव बोधो न तु मधुरत्वप्रकारको गुडविशेष्यकः । ध्वनितं चेदमन्नेन व्यञ्जनामिति सूत्रे भाष्ये ॥ ५ ॥

(कुं०टी०) अगृहीतेति। अगृहीतवृत्तिकपुरुषस्यागृहीतवृत्तिकपदादर्थबोधादर्शनादित्यर्थः । धर्मांशे ऽपि शक्तिरस्तीत्याह । न हीति । मधुरत्वमिति । मधुरत्वप्रकारकबोधादर्शनादित्यर्थः । तद्धर्मावच्छिन्नेति । घटत्वावच्छिन्नविषयकवृत्तीत्यर्थः। ज्ञाने वृत्तिवैशिष्ट्यं सामानाधिकरण्येन । ज्ञानाधिकरणतात्वंविषयतया । तार्किका वृत्तिज्ञानपदज्ञानयोः पृथक् हेतुत्वमिच्छन्ति । अत्र तु लाघवाद्विशिष्टस्यैव हेतुत्वमुक्तम् । तत्रापि वृत्तिविषयकोद्बुद्धसंस्कारसमानाधिकरणवृत्त्याश्रयपदविषयकज्ञानस्य हेतुत्वे गौरवमतः सामानाधिकरण्यादीनां सम्बन्धकोटौ निवेशः । यस्य हि घटादिपदस्य वृत्तिर्ज्ञाता तत्र पदे

वृत्तिविषयकसंस्कारो ज्ञानं चेत्युभयमपि विषतयास्ति वृत्त्याश्रयपदविषयकं च तज्ज्ञानम् । यत्तु वृत्त्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारणमिति तन्न । तादृशोपस्थितित्वस्य गुरुतरस्य कारणतावच्छेदकत्वापेक्षया स्वजन्यपदार्थोपस्थितिसम्बन्धेन पदज्ञानस्य हेतुत्वे लाघवात् । मानान्तरेति । मधुरत्वस्यानुमानादिनोपस्थितिरित्यर्थः । तार्किकास्तु ज्ञानलक्षणाजन्यं वदन्ति । आलङ्कारिकास्त्वत्र व्यञ्जनां वदन्ति । ननु मधुरत्वप्रकारकशक्तिग्रहाभावाद्गुड इत्येकदेशप्रयोगे कथं तादृशबोध इत्यत आह । यत्र त्विति । न त्विति । मधुरत्ववान् गुड इत्यन्वयो नेत्यर्थः । ध्वनितमिति । तत्र हि दध्योदन इत्यत्र दधिशब्देनैव दध्युपसिक्तप्रतीतिः गुड इत्यत्र मधुरत्वस्य प्रकारान्तरेण प्रतीतावपि न तस्य शाब्दवाच्यतेति स्पष्टम् । अथ गुडं भुङ्क्ते इत्यत्र गुडत्वस्येव मधुरत्वस्यापि प्रकारतया तत्प्रकारकशाब्दबोधवारणाय गुडत्वप्रकारकगुडविशेष्यकशाब्दबोधं प्रति तादृशशक्तिज्ञानत्वेन कारणतया आकाशः शब्दाश्रय इति वाक्याच्छाब्दबोधानापत्तिः, तत्राकाशत्वस्य शब्दाश्रयत्वस्य शब्दाश्रयत्वरूपतयावच्छेदकताया निरवच्छिन्नत्वादिति चेन्न । आकाशपदान्निर्विकल्पकोपस्थितेरेव स्वीकारेण तत्रेदृशहेतुत्वाकल्पनात् । आकाशत्वस्यापि जातित्वाच्च । एतेन निर्विकल्पकस्वीकारे आकाशं द्रव्यमित्यत्र भिन्नप्रकारकोपस्थित्यभावादभेदबोधानापत्तिरिति परास्तम् । यदपि आकाशस्यैकव्यक्तित्वेनानुगमकधर्मानपेक्षणेऽपि नियतोपस्थितये शब्दाश्रयत्वमाकाशपदशक्तमिति तन्न । शाब्दिकमते आकाशत्वादेरपि जातित्वात् । ननु घटघटत्वे इत्यादिनिर्विकल्पकस्य घटत्वादिप्रकारकत्वाभावात्कथं घटादिपदार्थज्ञानजन्यत्वमिति चेन्न ।

निर्विकल्पकस्यातीन्द्रियतया तस्य कार्यतावच्छेदकत्वानभ्युपगमात् ॥ ९ ॥

(क० टी०) ननु प्रमाणत्व प्रमाकरणत्वं तच्च तादृशशब्दस्य चेत्सर्वस्य श्रोतुस्तर्हि ततो बोधापत्तिरत आह। तत्रेति। तादृशतच्छब्दश्रोतॄणां मध्य इत्यर्थः। नन्वदर्शने मानाभावोऽत आह। न हीति। गम्यते। बुध्यते। इतीति। इत्यादीत्यर्थः। ननु वाक्यस्य वाक्यार्थे शक्तिस्वीकारे समभिव्याहारानन्त्येन गौरवमिति तन्त्रान्तरोक्तप्रकार एव सम्यगिति चेन्न। प्रमाणिकत्वात्। तत्रापि तावत्कार्यकारणभावावश्यकत्वाच्च। न च घटप्रकारकशाब्दबोधमात्रे घटार्थकपदोत्तरसार्थकप्रत्ययानिपातान्यतरजन्योपस्थितिर्हेतु एव कर्मत्वाविशेष्यकशाब्दबोधमात्रे कर्मत्वार्थकाम्प्रत्ययप्रकृतिजन्योपस्थितिर्हेतुरिति सामान्यत एव कार्यकारणभावः। न च घटः कर्मत्वमित्यतो विपरीतव्युत्पन्नस्य तथाबोधादव्यभिचारः। घटबोधकपदोत्तरपदजन्यज्ञानत्वेन कर्मत्वबोधकपदप्राग्वर्तिपदजन्यज्ञानत्वेन च हेतुत्वाददोषात्। नचैवमपि घटादिलाक्षणिकघटितघटमानयेति वाक्यात्तथा बोधवारणाय घटबोधकत्वं घटबोधफलोपहितत्व निवेश्यम्। एवञ्चान्योन्याश्रयात्तादृशकार्यकारणभावग्रहासम्भव इति वाच्यम्। तत्र घटस्य वृत्तिजन्योपस्थित्यभावादेव तथा बोधवारणेन स्वरूपयोग्यत्वनिवेशेऽपि क्षत्यभावादिति वाच्यम्। कर्मत्व घटः अम् घट इत्येतादृशसमभिव्याहारव्युत्पन्नानां ततस्तथा बोधव्यभिचारात्। सद्व्युत्पन्नासद्व्युत्पन्नविभागोच्छेदापत्तेश्च। न च यादृशबोधे यत्समभिव्याहार. कारणं तादृशबोधे तत्कारणत्वज्ञानस्यापि कारणत्वान्न दोष इति वाच्यम्। सामान्यविधा तज्ज्ञानस्यापि सत्त्वात्। न च तद्व्युत्पत्तिविशिष्टशाब्दबोधे तत्तद्व्युत्पत्तिर्हेतुः। तद्धीजनकत्वज्ञानं च व्युत्पत्तिः। व्युत्पत्तिवैशिष्ट्यं च स्वाव्यवहितोत्तरोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेनेति न दोष इति वाच्यम्। अनन्तकार्यकारणभावतादवस्थ्यात्। प्रत्ययत्वानिपातत्वाद्यभावात्ततस्तथा कार्यकारणभावाग्रहासम्भवाच्च।

किञ्च सिद्धान्ते पदतदर्थादेः कल्पितत्वेन वस्तुतो ऽसत्त्वेन भवदुक्तप्रकारस्य सर्वस्यापि दुर्वचत्वात् । न चास्तु वाक्ये तद्बोधकतयेच्छाविषयत्वादि परन्तु तस्य वृत्तित्वे ऽपि किं मानमिति वाच्यम् । विनिगमनाविरहस्य कार्यकारणभावद्वयस्य च तत्त्वसम्भवात् । वृत्तित्वं च सङ्केतविशेषसम्बन्धेन वृत्तिपदत्वमिति बोध्यम् । विस्तरस्त्वन्यत्र द्रष्टव्यः । तदेतद्धृदि निधायैव लघुभूतं कार्यकारणभावमाह । तद्धर्मेति । मन्मते ऽयमेक एव कार्यकारणभावः त्वत्तु सांसर्गिकविषयताशालितद्विषयकशाब्दबुद्धौ आकाङ्क्षाज्ञानकार्यकारणभावः अधिकः । वृत्तिज्ञानकार्यकारणभावे च प्रकारताविशेष्यतयोर्विशिष्य निवेश इत्यपरं च गौरवम् । एतेन घटमित्यानुपूर्वीज्ञानजन्यघटाद्युपस्थितिविशिष्टायां कर्मताविशेष्यकघटाद्युपस्थितिविशिष्टायां कर्मताविशेष्यकघटाद्यन्वयबुद्धौ स्वप्रयोज्यघटाद्युपस्थितिसम्बन्धेन घटमित्यानुपूर्वीज्ञानत्वेन कारणत्वम् । एवं कलशमित्यानुपूर्वीज्ञानजन्यघटाद्युपस्थितिविशिष्टायां कर्मताविशेष्यकघटाद्यन्वयबुद्धावपि तादृशोपस्थितिसम्बन्धेन कलशमित्यानुपूर्वीज्ञानत्वेनेति रीत्या प्रत्येकमेवानुपूर्वीज्ञानस्य कारणत्वं वैशिष्ट्यं चैकक्षणावच्छेदेनैकावृत्तित्वमिति नव्यनैयायिकोक्तमपास्तमिति भावः । उक्तभाष्योक्तावाशङ्कते । यद्यपीति । तत्र प्रत्ययेणोपदेशादिना वा माधुर्यग्रहवत् सर्वस्येति भावः । तत् । माधुर्यम् । तच्छब्देति । गुडशब्देनेत्यर्थः । मानान्तरेति । अनुमानेन व्यञ्जनया मनसा वेत्यर्थः । वाक्यैकदेशन्यायेनापि न तथेत्याह । यत्र त्विति । न त्विति । यदर्थे यत्प्रयोगस्तथार्थप्रतीतेरेव तदौचित्यमिति भावः । तत्र मानमाह । ध्वनितमिति । मनान्तरजन्यधीविषयत्वं तथा ज्ञानं चेत्यर्थः । तत्र हि दध्योदनादौ कथं सामर्थ्यमिति शङ्कायां युक्तार्थसम्प्रत्ययाच्च सामर्थ्यं दध्ना युक्तार्थतासम्प्रतिपत्तेः । अन्यथा दधीत्युक्ते बहवोऽर्था गम्यन्ते इति लोपपक्षे ऽनवस्था स्यादित्युक्तम् । दध्नेति पदवाच्येन युक्तो यो ऽर्थ उपसेकक्रियादिरूपस्तदर्थता तस्य प्रतीयते इत्यर्थः । वाक्यैकदेशन्यायेन दध्नेत्यस्यैव सो ऽर्थ इति तात्पर्यमिति भावः ॥ ५ ॥

विशेषणविशेष्यभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदाद्घटत्वविशिष्टघटबोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्‌बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्।

अतो नागृहीतवृत्तिकस्य बोधः नापि विस्मृतवृत्तिकस्य नापि तद्वाचकपदाज्ञानवतः नापि घटपदादाश्रयत्वेनोपस्थिताकाशस्य जनकतयोपस्थितचैत्रादेश्च बोधः। संस्काराजनकशक्तिग्रहसत्त्वे तेन शाब्दबोधजनने च न मानम्। संस्कारकल्पिका च वृत्तिस्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत्॥ ८॥

(कुं०टी०) व्यत्यासेनेति। घटत्वविशेष्यकशक्तिग्रहानन्तरं घटत्वप्रकारकशाब्दबोधवारणायेत्यर्थः। तद्धर्मावच्छिन्नेतीति। नन्वेवं तदादीनां बुद्धिस्थत्वावच्छिन्ने शक्तिग्रहात् तमानयेत्युक्ते बुद्धिस्थमानयेत्येव बोधः स्यान्न तु घटत्वादिविशेषरूपेण। अत एव वन्हिव्याप्यधूमवत्पर्वतं तच्छब्देन परामृश्य स वह्निमानिति वाक्यजन्यशाब्दबोधे परामर्शजन्यत्वेनानुमितिलक्षणातिव्याप्तिरुक्ता दीधिताविति चेदत्राहुः। सामान्यरूपेण शक्तावपि त्यदादितो विशेषरूपेणैवोपस्थितिः। उपस्थितिशक्तिग्रहयोः समानाकारकत्वप्रवादस्तु त्यदाद्यतिरिक्तविषय इति घटत्वादिविशेष एव शक्यतावच्छेदकः। तदादीनां नानार्थत्वमिष्टमेवेत्यन्ये। स्वविषयकेति। वृत्तिविषयको य उद्‌बुद्धसंस्कारः तत्सामानाधिकरण्यं वृत्त्याश्रयपदविषयकत्वं चेत्यर्थः। अस्ति च घटपदार्थनिरूपितवृत्तिविषयकः उद्‌बुद्धसंस्कारः विषयतया घटपदज्ञानं च। अयम्भावः। घटादिपदस्य घटत्वा-

दिविशिष्टे शक्तिरित्यादिवृत्तिविशेष्यकज्ञानानन्तरं तत्समानाकार एव संस्कार उत्पद्यते तादृशसंस्कारविशिष्टं पदज्ञानं शाब्दबोधे हेतुः । नागृहीतवृत्तिकस्येति । वृत्तिविषयकसंस्काराभावात् पदान्तरविषयकवृत्तिसत्त्वे ऽपि पदान्तराच्छाब्दबोधवारणाय सामानाधिकरण्यनिवेशः । सामानाधिकरण्यं च विषयतयेव समवायेनापि बोध्यम् । नातश्चैत्रीयशक्तिग्रहानन्तरं मैत्रस्य शाब्दबोधः । विस्मृतवृत्तिकस्येति । बोध इत्यनेनान्वयः । उद्बुद्धसंस्काराभावादिति भावः । पदाज्ञानवत इति । तत्र विषयतया ज्ञानस्याभावात् । हस्तचेष्टादिनाप्यर्थवत्त्वात्तत्रातिव्याप्तिवारणाय पदशब्दप्रयोगः । तन्निरूपितवृत्त्याश्रयत्वनिवेशस्य फलमाह । आश्रयत्वेनेति । तथाच शब्दस्याकाशगुणत्वाद्घटादिशब्दादाकाशस्योपस्थितावपि आकाशत्वावच्छिन्ननिरूपितवृत्तेर्घटादिशब्दे ऽभावान्न तद्बोध इत्यर्थः ।

यद्यपि वृत्तिज्ञानस्य पदज्ञानस्य वा अभावे कारणसमुदायरूपसामग्रीविरहादेव न कार्योत्पत्तिः सम्भवति तथापि समुदायघटकसम्बन्धज्ञानार्थं सामानाधिरण्यनिवेशः । स्यादेतत् स्मृतिं प्रत्यनुभव एव कारणम् उपेक्षात्मकज्ञानात्तु संस्कारानुत्पत्त्यैवास्मरणसम्भवे किं संस्कारहेतुतया । अन्यथा भ्रमणाभावादेव घटादीनामनुत्पत्तौ दण्डादीनामपि हेतुतानापत्तेरिति चेन्न । उद्बोधकानां तत्तद्व्यक्तित्वेन हेतुत्वे गौरवाल्लाघवेन संस्कारस्यैव हेतुत्वकल्पनात् । व्यापारेण व्यापारिणो नान्यथासिद्धिरिति प्रवादस्तु निर्मूल एव । संस्कारशब्देनात्र वासनाविशेष उच्यते न तु स्मृतिजनकतया तार्किकप्रसिद्धः । शाब्दबोधस्य स्मृतिरूपतायाः निराकरिष्यमाणत्वात् । चैत्रादेश्चेति । अस्ति हि पदव्यञ्जकतया चैत्रादेरुपस्थितिः ।

ननु घटादिपदवृत्त्यनुभवाव्यवहितोत्तरं बोधानापत्तिः तत्पूर्वं संस्काराभावादत आह । संस्काराजनकेति । अनुभवस्य क्षणिकतया तत्रापि स्मरणादेव बोधादिति भावः । ननु उपेक्षात्मकशक्त्यनुभवानन्तरं संस्कारानुत्पत्त्या शाब्दबोधानापत्तिरत आह । तेनेति । ननु संस्कारस्यातीन्द्रियतया तत्सत्त्वे मानाभाव इत्यत आह । संस्कारकल्पिका चेति । स्मृतिरूपकार्येणैव कारणस्य संस्कारस्यानुमानात् । यद्यपि स्वरूपसदेव कारणं कार्यजनकं न ज्ञातं तथापि कल्पिकेत्यस्य हेतुत्वकल्पिकेत्यर्थः । ननु संस्कारस्य फलनाश्यत्वात् वृत्तिस्मृतौ संस्कारस्य नष्टत्वात् शाब्दबोधानापत्तिरत आह । शाब्दबुद्धिरेव वेति। चरमफलस्यैव संस्कारनाशकत्वमिति भावः । नचैवं स्मरणानन्तरं पुनः स्मरणानापत्तिरिति वाच्यम् । तत्र स्मरणस्यैवसंस्कारजनकत्वात् । तदुक्तं दीधितौ जायते च पुनः पुनः स्मरणात् दृढतरः संस्कार इति ॥ ८ ॥

(क० टी०) तद्धर्मावच्छिन्नेति निवेशस्य फलमाह । विशेषणेति । एतत्प्रयोगोपपत्तिर्भावप्रकाशे स्पष्टा घटावच्छिन्नघटत्वे घटपदं शक्तमित्यादिरूपेणेत्यर्थः । तन्निवेशे तु समानप्रकारकत्वलाभान्न दोष इति भावः । ननु विषयितासम्बन्धेन वृत्तिविशिष्टज्ञानस्य हेतुत्वे विस्मृतवृत्तिकस्य तत्तद्वाचकपदाद्यज्ञानवतश्च शाब्दबोधापत्तिरत आह । ज्ञाने इति । उभयत्र स्वपदेन वृत्तिः । तथा च तदुभयसम्बन्धेन तादृशवृत्तिविशिष्टं ज्ञानं हेतुरिति सिद्धम् । पदेति । पदादीत्यर्थः । आदिना वाक्यम् । यद्वा पदशब्दो यौगिको वाक्यपर एव तथैव वाच्ये एवमुक्तेरस्य पदशास्त्रत्वसूचनाय मतान्तरसङ्ग्रहाय चेति बोध्यम् । तत्समुदितस्य फलमाह । अत इति । उक्तसमुदितस्य कारणत्वादित्यर्थः । तत्र वृत्तिज्ञानकारणत्वफलमाह । नागृहीतेति । स्वविषयकोद्बुद्धेत्यस्य फलमाह । नापि विस्मृतेति । केवलोद्बुद्धेत्यस्यापीदमेवफल-

म् । अन्यविषयकोद्‌बुद्धसंस्कारसामानाधिकरण्येनातिप्रसङ्गनिरासाय स्वविषयेति । स्वाश्रयपदेत्यस्य फलमाह । तद्धाचेति । यत्किञ्चित्पदविषयत्वमादायानतिप्रसङ्गाय स्वाश्रयेति । निरूपकत्वेन स्वाश्रयार्थमादायानतिप्रसङ्गाय पदेति । विशिष्टस्य कृत्य तु तदेव । तद्धर्मावच्छिन्ननिरूपितेत्यस्य फलद्वयमाह । नापि घटपदादाश्रयेति । सिद्धान्ते शब्दस्य द्रव्यत्वेन समवायासम्भवादिति भावः । एतेन घटपदादुपस्थितलाकाशादेः शाब्दविषयत्ववारणाय शाब्दबोधे वृत्तिग्रहजन्योपस्थितिर्हेतुः वृत्तित्व शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलशब्दतदर्थसम्बन्धत्वमित्यपास्तमुक्तयुक्तेः । किञ्च तत्प्रकारकतद्विशेष्यकवत्संसर्गकबोधे तत्तत्समभिव्याहारज्ञानरूपाकाङ्क्षायास्तत्कारणत्वज्ञानस्य च कारणतायास्तार्किकादिसंमततया तथैवाकाशादिवारणसम्भवेन पदार्थोपस्थितिकार्यकारणभाववृत्तिजन्यत्वनिवेशस्य विफलत्वात् । किञ्च शक्तिग्रहांशे उद्‌बुद्धसंस्कारस्य तदुपस्थितिं विनापि बोधानुभवेन पदार्थोपस्थितेः कारणत्वे मानाभावात् । किञ्च पदार्थोपस्थितित्वापेक्षया पदार्थविषयकत्वेनैव लाघवात्कारणत्वौचित्यात् तादृशश्च शक्तिसंस्कार एवेति भावः ।

नन्वेवं यच्छक्तिग्रहात्संस्कारो नोत्पन्नस्तत्र स्वविषयकोद्‌बुद्धसंस्कारसामानाधिकरण्यसम्बन्धेन वृत्तिवैशिष्ट्याभावाच्छाब्दबोधानापत्तिरतस्तद्ध्वनयन्नाह । संस्कारेति । ननु यत्र शक्तिग्रहः संशयात्मकस्तत्र संस्कारो नेति तत्सत्त्वमत आह । तेनेति । तादृशशक्तिग्रहेणेत्यर्थः । निश्चयस्यैव शब्दबुद्धिजनकत्वादिति भाव । यद्वा ननु शक्तिग्रहाव्यवहितोत्तरक्षणे शाब्दबोधो न स्यादत आह । तेनेति । ननु यजेत स्वर्गकाम इति श्रुत्या यागस्य करणत्वे बोधिते कालान्तरभाविस्वर्गं प्रत्याशुतरविनाशिनो यागस्य करणत्वानुपपत्तिः । संस्कारस्तत्र कल्प्यते तद्वत्प्रकृते किं कल्पकमत आह । संस्कारकल्पीति । ननु तत्र वृत्तिस्मृतावेव किं मानमत आह । शाब्देति । अन्यथानुपपद्यमानकार्येण कारणकल्पनादिति भावः ॥ ८ ॥

वृत्तेस्त्रैविध्यम् मं० सा च वृत्तिस्त्रिधा । शक्तिर्लक्षणाव्यञ्जना

च । तत्र शक्तिः कः पदार्थं इति चेत् । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारा इदं पदमिममर्थं बोधयतु इत्याकारा चेश्वरेच्छा ।

तस्याश्च यद्यपि विषयत्वलक्षणः सम्बन्धः पदे ऽर्थे जन्यजनकभावे बोधे च तथापि तस्यां बोधनिष्ठजन्यतानिरूपकजनकतावत्त्वेन विषयो वाचकः तस्यां बोध विषयत्वेन विषयो वाच्य इति नातिप्रसङ्गः । यद्यपि प्रथमशक्तिग्रहो वाक्ये एव तथापि अवापोद्धापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदे शक्तिग्रह इति बोध्यम् । यद्वा तादृशबोधविषयको बोध एव सेति नैयायिकास्तन्न ॥ ९ ॥

( कु० टी० ) वृत्तिस्त्रिधेति । त्रिधेति धाप्रत्ययः प्रकारे । स च सामान्यस्य भेदको विशेषः । इह च वृत्तित्वं सामान्यं शक्तित्वादिर्विशेषः । तथा च विशेषत्रयवती वृत्तिरित्यर्थः । एतच्च स्वरूपकथनमात्रम् । शक्तिज्ञानलक्षणाज्ञानयोः कार्यकारणभावस्त्वेक एव । तथा हि शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताकज्ञानत्वेन शाब्दबोधं प्रति कारणता शक्तिसम्बन्धेन शक्यसम्बन्धेन वा पदप्रकारकज्ञाने शक्तेः संसर्गत्वात् । यत्तु शक्तिलक्षणान्यतरत्वं वृत्तित्वमिति तन्न । द्योतकानामसङ्ग्रहापत्तेः । तार्किकमतमनुवदति । अस्माच्छब्दादिति । ननु बोध्यत्वप्रकारकेश्वरेच्छायाः शक्तित्वे ऽर्थधर्मत्वापत्तिरित्यरुचेराह । इदमिति ।

तस्याश्चेति । ईश्वरेच्छा पदे ऽर्थे जन्यजनकभावे चेति सर्वत्र शक्तिमाप्तेत्यर्थः । यद्यपि मुख्यविशेष्यतार्थनिष्ठैव तथापि लोमवान् पशुपदाद्बोध्य इति शक्तिग्रहे मुख्यविशेष्य-

तारहितस्य लोमादेरपि बोधान्न तथोक्तम् । तस्यामिति । बोधजनकत्वेनेच्छाविषयो वाचक इत्यादिरर्थः । नातिप्रसङ्गः । न सम्बन्धादौ वाचकत्वापत्तिः । प्रथमशक्तिग्रह इति । बालानां वाक्यादेवार्थबोधात् । आवापः। पदान्तरप्रक्षेपः।उद्वापः। निष्काशनम् । घटमानय घटं नय इत्यादि । शास्त्रकृदिति । पदविभागस्य काल्पनिकत्वात् वस्तुतो घटमानय घटं नयेत्यादिवाक्यमखण्डमेवेति भावः । यद्यपि तार्किकमते नाखण्ड वाक्यं तथापि पदविभागेन कल्पित एवार्थविभागः । वाक्येनैवार्थसमाप्तिरिति प्रागेवोक्तत्वात् ।

ननु ईश्वरेच्छैव शक्तिरित्ययुक्तमीश्वरज्ञानकृत्योरपि विनिगमनाविरहेण शक्तिरूपत्वसम्भवादतस्तत्रेष्टापत्तिमाह । यद्वेति । सा शक्तिः । तन्नेति । घटमानयेत्यादिवाक्यं श्रुतवता प्रयोज्येनानीतं घटं पश्यन् बालो ऽनुमिमीते अयं घटानयनकार्यताज्ञानवान् घटविषयकचेष्टावत्त्वादिति । ततः कारणं विना कार्यानुत्पत्त्या अखण्डवाक्यस्य तत्कार्यकारणत्वमवधारयति । ततो वाक्यार्थयोः सम्बन्धाभावे बोधकत्वासम्भवात् कल्पनाया बोधजनकत्वज्ञानोत्तरकालभावित्वात् बोधजनकत्वस्य सम्बन्धत्वं कथमित्यर्थः । प्रथमतो हि बोधजनकत्वग्रहो भवति पश्चात् सम्बन्धः कल्प्यत इति भावः ॥ ९ ॥

( क० टी० ) मतान्तरासामञ्जस्यसूचनाय तां विभजते । सा चेति । अनेन सङ्गतिः सूचिता । तत्र । तासु वृत्तिषु । शब्दात् । पदात् । बोद्धव्ये ण्वर्थान्तर्भावः । अर्थाविशेष्यकेच्छामुक्त्वा विनिगमनाविरहात्पदनिष्ठत्वाच्च शक्ते पदविशेष्यिकामाह । इदं पदमिति । ईश्वरेच्छेति । शक्तिरित्यस्यानुषङ्गः । इयमेव त दीयसङ्केत इति व्यवह्रियते नैयायिकैः । नन्वेव वाच्यवाचकव्यवस्थानुपपत्तिः तस्याः सर्वत्राविशेषण बोध्यम् । यथाश्रुते ऽतिप्र-

सङ्गस्तदवस्थ एव । नातीति । एवं न वाच्यमर्थो न वाचक इत्यादीत्यर्थः । एतेनेहाया अतिप्रसक्तत्वान्न तत्र शक्तित्वमित्यपास्तम् । ननु पदे शक्तिग्रहस्यैवाभावेन कथं पदघटिता सेत्याशयेन शङ्कते । यद्यपीति । आवाप. । पदान्तरप्रक्षेप. । उद्धारो । विद्यमानपदत्यागः । तयोरवास्तवत्वादाह । शास्त्रकृदिति । विनिगमनाविरहादेवाह । यद्वेति । एतच्छब्दजन्यार्थबोधविषयकेश्वरज्ञानमेव शक्तिरित्यर्थ. ॥ ९ ॥

नैयायिकाभिमत शक्तिखण्डनम्। मं० प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्त्या तस्य ज्ञानमनुमाय ज्ञानस्य चोपस्थितत्त्वाच्छब्दमेव कारणत्वेन गृहीत्वा असम्बद्धस्य कारणत्वानुपपत्तिज्ञानपूर्वकं कल्प्यमानस्य सम्बन्धस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वघटितस्य ग्रहीतुमशक्यत्वात् । एतेन बोधजनकत्वमेव पदपदार्थयोः सबन्ध इत्यपास्तम् । विनिगमनाविरहेणेच्छाबोधयोरुभयोः शक्तित्वकल्पने गौरवाच्च । किञ्चैवमिदमस्माद्भवत्वितीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपप्लवः । किञ्च प्रमाणानां जनकत्वतद्घटितसमूहातिरिक्तसबन्धेनैव प्रमेयसम्बद्धानां ज्ञानजनकत्वदर्शनेह तयोः सम्बन्धत्वानौचित्यम् ।

अन्यथा धूमाद्वन्हिज्ञानं जायतामितीच्छाविषयत्वमेव वा हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्त्युच्छेदः । किञ्चेच्छाया जनकत्वस्य वोभयवृत्तित्वाभावः । इच्छाविषयबोधीयविषयतायामिच्छाश्रयतानियामकत्वाभावात् । सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रित इति श्लिष्टः सम्बन्ध इति च विशिष्टबुद्धि-

नियामक इति चाभियुक्तव्यवहारात । न हि तत्र विषय इच्छावानित्यादिव्यवहारो ऽस्ति । जनकता शक्तिरिति पक्षे बोधजनकतायाः पदे ऽर्थे च सत्त्वे ऽपि तयोः परस्परं सम्बन्धस्य दुरूपपादत्वात् । ज्ञाने विषयस्य कर्तुश्च कारणत्वे ऽपि तयोः परस्परं विशिष्टबुद्ध्यदर्शनात् । अर्थपदयोः सम्बन्धस्य दुरूपपादत्वात् ॥ १० ॥

( कुं० टी० ) प्रयोज्यस्य प्रवृत्त्या । घटाद्यानयनेन । तस्य ज्ञानमिति । एतद्वाक्यार्थज्ञानं प्रयोज्यस्य जातमित्यनुमायेत्यर्थः । ज्ञानस्येति । प्रयोज्यनिष्ठज्ञानस्य तु तद्वाक्यमेव कारणं वाक्यवाक्यार्थयोश्चासम्बन्धे बोधकता न स्यादिति तयोः सम्बन्धः कल्प्यत इत्यर्थः । स्वयमनुपपद्यमानत्वेनेति । प्रथमतो ऽसम्भवादित्यर्थः । गृहीतेति । ज्ञातेत्यर्थः । बोधजनकत्वरूपसम्बन्धस्य ज्ञातुमशक्यत्वादिति यावत् । अपास्तमिति । बोधजनकत्वज्ञानानन्तरमेव सम्बन्धत्वकल्पनात् । किञ्च बोधकत्वस्यैव वाचकत्वे माधुर्यादिव्यञ्जके स्पर्शादिवर्णे ऽतिव्याप्तिः ।

विनिगमनाविरहेणेति । ईश्वरेच्छाया ईश्वरज्ञानस्य वा शक्तित्वमित्यत्र विनिगमनाविरह इत्यर्थः । किञ्चैवमिति । दण्डाद्घटो जायतामितीच्छाविषयत्वमेव दण्डादौ कारणत्वं स्यादित्यर्थः । तस्माद्दण्डादिनिष्ठा शक्तिः स्वरूपसती कार्योत्पादिका, शब्दनिष्ठा तु ज्ञातैव शाब्दबोधोपयोगिनीति वैलक्षण्यमावश्यकमिति भावः । किञ्च स्वर्गादिजनकत्वमेव यागादौ कारणत्वं वाच्यं, तथा च स्वर्गजनकत्वेन पूर्वं ग्रहाभावात् स्वर्गकामो यजेतिवाक्याच्छाब्दबोधानापत्तिः । बहूपप्लव इति। अन्यत्रापि कारणत्वस्यातिरिक्तस्य सिद्ध्यनापत्तिरित्यर्थः ।

तस्मादीश्वरेच्छाकरणत्वस्यैव नियामिकेति भावः । प्रमाणानामिति । संयोगादिसम्बन्धेन घटादिसम्बद्धानामेव चक्षुरादीनां घटादिबोधकत्वदर्शनादिहापि प्रमाणप्रमेययोः सम्बन्धान्तरमेवोचितम् जनकत्वस्य जनकत्वघटितस्य वा सम्बन्धत्वं नोचितमित्यर्थः ।

अन्यथा । जनकत्वादेः सम्बन्धत्वे सति । ज्ञायमाने । धूमे । धूम एव हेतुर्न तु धूमज्ञानमित्यभिप्रेत्य धूमादित्युक्तम् । व्याप्त्युच्छेद इति । व्याप्तिर्नाम साहचर्यनियमः तस्या हेतुत्वमुच्छिद्येतेत्यर्थः । तस्माज्जनकत्वघटितः सम्बन्धो नोचित इति भावः । इच्छाया जनकत्वस्य वेति । यो हि घटभूतलयोः संयोगवत्तदुभयास्मिन्नपि सम्बन्धिनि वर्तते स एव सम्बन्धो भवति जनकत्वादि तु पदमात्रवृत्तीत्युभयवृत्तित्वाभावान्न सम्बन्धत्वमित्यर्थः । इच्छाया उभयवृत्तित्वाभावमुपपादयति । इच्छेति । इच्छाविषयो यो बोधस्तदीयाविषयताया इच्छाश्रयतानियामकत्वाभावादित्यर्थः । तत्र हि न पदं नापि पदार्थ इच्छाविषयः किन्तु बोध एव बोधविषयतयैव च इच्छाश्रयता वाच्या सा च न सम्भवति अयं शब्दः अयमर्थो वा इच्छावानिति प्रतीत्यभावादिति भावः ।

सम्बन्धत्वाभावं वक्तुं प्रथमतः सम्बन्धस्वरूपं दर्शयति । सम्बन्धो हीति । यद्यपि विशिष्टबुद्धिनियामकत्वं विशेष्यविशेषणयोरपि तथापि तयोरविशिष्टबुद्धावपि विषयत्वात्तद्व्युदासः । घटवद्भूतलमित्यादिविशिष्टबुद्धिवत्प्रकृते विशिष्टबुद्धिर्नास्तीत्याह । न हीति । तत्रेति । इच्छाविषयो यो बोधस्तदीयविषये इत्यर्थः । ननु शब्दवदर्थस्यापि शाब्दबोधे निमित्तत्वादस्त्युभयत्र बोधजनकत्वाख्यः सम्बन्ध इत्यत आह ।

सत्त्वे ऽपीति । दुरुपपादत्वादिति । न हि दण्डचक्रयोरुभयोर्घटजनकत्वे ऽपि परस्परं सम्बन्धोस्तीत्यर्थः । सम्बन्धाभावादिति पाठे ऽप्ययमेवार्थः । एतदेवाह । ज्ञाने इति । अन्यथा विषयपुरुषयोरपि बाधहेतुत्वात् पुरुषविषययोः सम्बन्धे तयोर्विशिष्टबुद्ध्यापत्तिरित्यर्थः । ननु बोधजनकत्वस्याश्रयतया पदे निरूपकतया चार्थे ऽपि सत्त्वादस्तु सम्बन्धत्वमिति चेन्न । निरूपकतासम्बन्धस्य वृत्त्यानियामकत्वात् ॥ १० ॥

(क०टी०) प्रयोज्यस्येति । प्रयोजकवृद्धोच्चारितशब्दश्रवणानन्तरमित्यादि । तस्य । प्रयोज्यस्य । शब्दमेव । प्रयोजकवृद्धोक्तशब्दमेव । असम्बद्धस्य शब्दस्येति शेषः । कल्प्येति । पदपदार्थयोरिति भावः । धस्य । भवदुक्तस्येति शेषः । स्वयमात्मनेत्यर्थक गृहीतेत्यत्रान्वेति । घटितस्य । इच्छाज्ञानान्यतररूपस्य । आद्ये पञ्चम्या जनकत्वमुक्तम् । द्वितीये बोधयत्विति ण्यन्तस्य तद्विषयकबोधं जनयत्वित्यर्थेन तदुक्तम् । तथा च स्वसामानाधिकरण्येन तस्य तत्प्रतिबन्धकत्वेन तद्रूपकारणाभावेन दुष्करस्तद्ग्रह इति भावः । दीक्षितभूषणोक्त मतं निराचष्टे । एतेनेति । उक्तदोषेणेत्यर्थ । सम्बन्ध. । शक्तिपदवाच्यः । एतेन वैयाकरणमतत्वेन तदनूद्य नव्यनैयायिकोक्त तत्खण्डनमपास्तम् । वैयाकरणभाष्यकारादीनां तन्मताभावात् । आद्ये दोषान्तरमाह । वृत्तीति । ननु ज्ञानेच्छाकृतीनामन्यत्र क्रमदर्शनेन प्राथम्यमेव ज्ञानस्य तत्त्वे विनिगमकम् । अत एवोत्तरपक्षत्वेन तदुक्तम् । यद्वा इच्छात्वस्याविवक्षणेन तस्यापि शक्तित्वमिष्टम् । किञ्चाधुनिकसङ्केतस्येच्छात्वदर्शनेन तस्या एव तत्त्वमत एव मुख्यपक्षत्वेन प्राक् तदुक्तिरत एवाह । किञ्चैवमिति । एतेन तदन्यत्वव्यावृत्तिरेतेन स च सङ्केतत्वाद्विषयत्वरूपो न तद्रूप. एतदाशयेनैव शक्तिः पदार्थान्तरमित्युक्तिर्नव्यानां विषयत्वस्य पदार्थान्तरत्वादिति नव्यनैयायिकोक्तमपास्तम । बह्वपेति । सकलशास्त्रव्यवहारोच्छेद इत्यर्थः । एव तयो. पदपदार्थसम्बन्धत्वमुरीकृत्य तद्ग्रहासम्भवादिरू-

पदोषजातमुक्त्वा तयोस्तत्सम्बन्धत्वमेवायुक्तमित्याह । किञ्च प्रमाणानामिति । प्रत्यक्षादीनामित्यर्थः । जनेति । जनकत्वं तद्घटितश्चेच्छारूपो ज्ञानरूपो वा सम्बन्धस्तदुभयान्येत्यर्थः । सम्बन्धेन । संयोगादिनैव । प्रमेयेति । घटादीत्यर्थः । इह । शाब्दप्रमाणस्थले । तयो । जनकत्वतद्घटितयो. । सम्बन्धत्वेति । तत्सम्बन्धत्वेत्यर्थ. । विपक्षे दोषान्तरमाह । अन्यथेति । अतथाङ्गीकारे इत्यर्थ. । इच्छाविषयेति । विषयतयेच्छा इत्यर्थ. । एव प्रागपि । द्वितीये आह । तद्बोधेति । उच्छेद इति । इष्टापत्तिस्तु तेन कर्तुमशक्येति भाव. । इत्थ तयोः सम्बन्धत्वमभ्युपेत्योक्तम् वस्तुतस्तल्लक्षणानाक्रान्तत्वातत्त्वमेव तयोर्न सम्भवतीत्याह । किञ्चेच्छाया इति । तयोरुभयत्वाभावे हेतुमाह । विषयतायामिति । तत्सामान्ये इत्यर्थः । एवमग्रे ऽपि । ननु तयोराश्रयतानियामकत्वाभावे ऽपि सम्बन्धत्वे कि बाधकमत आह । सम्बन्धो हीति । हि यत सम्बन्धस्तादृशस्तादृशस्तादृश इत्याभियुक्तव्यवहारस्तस्य तस्य तत्त्वेनेत्यर्थ । तत्र मध्यमव्यवहारो हरे अन्यौ तु तान्त्रिकाणाम् । तथा च सम्बन्धिभिन्नत्वे सति उभयाश्रितत्वे सति विशिष्टबुद्धिनियामकत्व सम्बन्धत्वम् । अस्ति च समवायादौ रूपवानित्यादिप्रतीतेः । तत्राद्येनाभेदस्य सम्बन्धत्वनिरासः । द्वितीयेन केवलजन्यत्वादेः । तृतीयेन वृत्त्यनियामकविषयत्वादेः । एवञ्च तयोरपि सम्बन्धत्वासम्भव इति भाव । ननु, तयोस्तदनियामकत्वे एव किं मानमत आह । न हीति । तत्र तयोर्मध्ये । प्रकृताशयेनाह । इच्छेति । इच्छाया विषयो यो बोधस्तदीया या विषयता अर्थनिष्ठा तस्यामित्यर्थ । सत्त्यामिति शेषः । यद्वा तत्रेत्यस्यैव व्याख्या इच्छेति । अनेनैव हि सम्बन्धेनेच्छाविषयस्य वाच्यत्वमुक्तमिति भाव. । आदिना विषयो ज्ञानवानित्यस्य परिग्रह. । ननु सामान्यतो जनकताया जन्याश्रयतानियामकत्वाभावेन तद्सम्बन्धत्वे ऽपि पदार्थोभयवृत्तित्वेन तद्भिन्नत्वेन च पदार्थयोः सम्बन्धत्वं कुतो नेत्याह । बाधेति । सम्बन्धत्वस्य दुरुपेति । घटादिजनकत्वस्य दण्डादिसर्वनिष्ठत्वे ऽपि तस्य तेषां मिथो ऽसम्बन्धत्ववत् । नन्वत्र तस्या पदवृत्तित्वे मानाभावः, किञ्च तथा

सति तत्सम्बन्धमपि स्यादत आह । ज्ञाने इति । विषयस्यार्थस्य । कर्तु । शब्दस्य । कर्तृविषययो । सम्बन्धस्य । बोधजनकतारूपस्य । जनकत्वस्यापि न सम्बन्धत्वमिति तयोस्तत्व दूरापास्तमेवेति भाव· ॥ १० ॥

शक्ते पदतदर्थान्तरसम्बन्धरूपत्वम् । **तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया। तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम्। तच्च सङ्केतः। तस्यापि च पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहार· तस्य सम्बन्धत्वाभावात्। भेदाभेदरूपस्य तस्य तत्त्वासम्भवात् । तद्घटकभेदस्याभेदस्य वा तत्त्वादर्शनात्। अभेदस्यापि तत्त्वं खण्डयिष्यते॥ ११ ॥**

(कुं०टी०)वाच्यवाचकेति। कारणतारूपाशक्तिः शब्दे·प्रसिद्धैव अर्थे शक्तिर्वाच्यतारूपैव। अध्यासेति । अन्यस्मिन्नन्यधर्मावभासो ऽध्यासः तन्मूलकं तादात्म्यं न तु वास्तवमित्यर्थः। ननु सङ्केत एव तादात्म्यमिति व्याख्यास्तु सङ्केतग्रहानन्तरमेव तादात्म्याध्यासादिति चेन्न । देवदत्तो ऽयमिति तादात्म्यमेव सङ्केत इत्यर्थः। तस्यापीति। तादात्म्यस्यापीत्यर्थः । पदपदार्थयोरारोपिततादात्म्यस्य शक्तिग्राहकत्वात् शक्तित्वमपीति भावः । ननु तादात्म्यमेव शक्तिरस्तु किं भेदस्वीकारेणेत्यत आह। तस्येति। तादात्म्यस्येत्यर्थः । सम्बन्धत्वाभावमुपपादयति । भेदाभेदेति। वास्तविकभेदे सति आरोपिताभेद एव हि तादात्म्यं तस्य च सम्बन्धत्वं न सम्भवतीति भावः। अत्रैव हेतुमाह। तद्घटकस्येति। तादात्म्यघटकस्य भेदस्य अभेदस्य वा सम्बन्धत्वमन्यत्र न दृष्टमित्यर्थः। ननु भेदस्य सम्बन्धत्वाभावे ऽपि नीलो घट इत्यादावभेदस्य सम्बन्धत्वं दृष्टमत

आह । खण्डयिष्यत इति । सम्बन्धिभेदनियतत्वात् सम्बन्धस्येति भावः ॥ ११ ॥

(क०टी०)तदाह । तस्मादिति । सम्बन्धान्तरम् । उक्तेच्छादिभिन्नम् । तद्ग्राहकमिति । वृद्धव्यवहारादिवदिदमपि तद्ग्राहकमित्यर्थः । इतरेतरेति बहुव्रीहि । तदान्यपदार्थमाह । तच्चेति । तदात्म्य चेत्यर्थं । सङ्केत इति । भेदाभेदरूपो द्विविध' सङ्केतः । नन्वेवं तार्किकाणां कथ शक्तिव्यवहारो ऽत आह । तस्यापीति । सङ्केतरूपतादात्म्यस्यापि चेत्यर्थ' । पदनिष्ठोक्तरूपशक्तिग्राहकत्वात् भाक्तव्यवहार इति भाव । ननु मुख्य एव कुतोनेत्यत आह । तस्येति । सङ्केनस्येत्यर्थ । सम्बन्धत्वाभावादिति । तयोः सम्बन्धत्वाभावादित्यर्थ । तत्त्वमेव च शक्तिपदस्य मुख्यप्रवृत्तौ निमित्तमिति भाव । ननु तदेव कुतो नेत्यत आह । भेदेति । तस्य । तादात्म्यस्य । ननु तदपि कुतो नात आह । तद्धटकेति । तादात्म्यघटकेत्यर्थः । अदर्शनादिति । अन्यत्रेति शेपस्तथा च यद्यन्यत्र तथा स्यात्तर्हि अवयवान्यावयव्यभावेन तद्रूपतादात्म्यस्य तत्त्वेन तद्रूपस्य सङ्केततस्यापि तत्त्वान्मुख्य एव व्यवहार स्यान्न च तथाभावः । ननु तद्घटकभेदस्य तत्त्वेन तत्त्वस्यान्यत्राद्दष्टत्वे ऽप्यभेदस्य सम्बन्धत्वं नीलोत्पलादौ दृष्टमत आह । भेदेति । अपिरुक्तेच्छादे. सयोगस्य च समुच्चायकः । तत्त्वम् । सम्बन्धत्वम् । सुबर्थनिर्णय इति भाव ॥ ११ ॥

स्वोक्तौ पातञ्जलभाष्यसम्मति । तदुक्तं पातञ्जलभाष्ये सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको यो ऽयं शब्दः सो ऽर्थो यो ऽर्थः स शब्द इति । इतरेतराध्यासो रूप्यते ऽनेनेति करणे घञ् । स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम् । किञ्च पाणिन्यादिस्मार्तसङ्केतस्यैव वाचकतानियामकत्वं न त्वाधुनिकस्येत्यपि दर्शितम् । एवञ्चाधुनिकसङ्केतस्थले ऽप्यादर्शा ऽहि क्रियमाणनामस्थले लक्षणा । तत्र घटगो-

विन्दादिगुणाद्यारोपेण तन्मूलकतत्प्रवृत्तिनिमित्तारोपेण च बोधः । सम्बन्धश्च स्वशक्तसङ्केतविषयत्वम् । एतदर्थमेव सङ्केतोपयोगः ।

अत एव तस्य भाव इति सूत्रे भाष्ये डित्थादिषु प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावाद्भावप्रत्ययान्तवृत्तिर्न प्राप्नोति डित्थत्वमित्याशङ्क्य प्राथमकाल्पिकडित्थेन कृतां क्रियां गुणान् वा यः कश्चित् करोति स उच्यते डित्थत्वं ते एतत् एवं डित्था कुर्वन्ति ॥ १२ ॥

( कुं०टी० ) नन्वस्यार्थस्यायं शब्दो वाचक इत्याकारकसङ्केते शब्दार्थयोस्तादात्म्यभङ्ग इत्यत आह । सङ्केतस्त्विति । इतरेतराध्यासः । परस्परात्मकतारोपः । इतरेतराध्यासो रूप्यतेऽनेनेति करणे घञ् । इतरेतराध्यासग्राह्य इत्यर्थः । स्मृत्यात्मक इति । स्मृतौ आत्मा यस्येत्यर्थात् स्मृतिविषय इत्यर्थः । अत एव वक्ष्यति ज्ञानस्यैवेत्यादि । शक्तिबोधकत्वम् । शक्तिग्राहकत्वम् । स्मृतिपदस्यार्थान्तरमाह । किञ्चेति । त्रयी शब्दानां प्रवृत्तिरिति पक्षे संज्ञामात्रस्य व्युत्पन्नतया योगलभ्यक्रियास्तत्रारोप एव हि तत्र शक्तिरस्ति पाणिन्यादिस्मृतिप्रकाशितेश्वरसङ्केताभावात् इत्याह । एवञ्चेति । गोविन्देति । प्रसिद्धगोविन्दगुणारोपेणाधुनिकगोविन्दप्रयोग इत्यर्थः । आरोपहेतुं सम्बन्धं दर्शयति । स्वशक्तेति । गोविन्दे शक्तो यो गोविन्दस्तत्सङ्केतस्य विषय आधुनिकगोविन्दः । ननु गोविन्दादिपदानां लक्षणाश्रयणे सङ्केतानुपयोग इत्यत आह । एतदर्थमेवेति । उक्तसम्बन्धज्ञानार्थमेवेत्यर्थः ।

आरोपेण च संमतिं दर्शयति । अत एवेति । प्रत्ययार्थाभावादिति । यदृच्छाशब्दे पुरुषेच्छाया एव निमित्ततया

र्थगतस्य कस्यचित् प्रवृत्तिनिमित्तस्यानपेक्षणात्त्वप्रत्ययो न प्राप्नोतीति भावः । भावप्रत्ययान्तेति । भावार्थकप्रत्ययान्तात्प्रवृत्तिरित्यर्थः ॥ १२ ॥

( क० टी० ) तस्य तन्मूलत्वे मानमाह । तदुक्तमिति । इतरेतरेति । सङ्केतकर्तुराहार्येतरेतराभेदारोपरूपो य इतरेतराध्यासस्तद्रूप इत्यर्थः । भेदारोपे बीजं त्वविभाग एव त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । अध्यासस्वरूपमाह । योऽयमिति । ओमित्येकाक्षरं ब्रह्मेत्यादिश्रुतिषु वृद्धिरादैजित्यादिव्याकरणे कम्बुग्रीवादिमान्घट इत्यादौ लोके अमरा निर्जरा देवा इत्यादौ कोशे च योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द इत्येवमितरेतराध्यासरूपस्यैव सङ्केतस्य दर्शनात् शब्दवाच्यत्वलक्षणायां प्रमाणाभावादिति भाव. । एव भूते एव सङ्केते मुख्ये सति कथं चिद्भेदं परिकल्प्यार्थस्याय वाचक इति कदाचित्सङ्केतः यथोक्त. प्रगृह्यमिति पाणिनेरिति बोध्यम् । स्फुटीभविष्यति चेद सर्वमनुपदमेवं । अत्रेतरेत्यादिवातित्यन्तो ऽपपाठः तद्भाष्यादिविरोधात् । ज्ञातस्यैवेति । ज्ञानविषयस्यैवेत्यर्थः । नत्र स्मृत्यात्मकत्वं तृकरीत्यैव विषयविषयिणारभेदात् । एवमग्रे ऽपि । कर्मणि वा । एवेन स्वरूपतो व्यावृत्तिः । अविशेषेण विनिगमनाविरहात्तस्यान्यदपि फलमाह । किञ्चेति । पाणिन्यादिप्रणीतस्मृतिबोधितसङ्केतेत्यर्थ' । वाचकतेति । तस्य पदस्य एतावतां वर्णानामेवमानुपूर्वीकमिलनमस्यार्थस्य वाचकमिति प्रविभागरूपविषयव्यवस्थेत्यर्थः । एवव्यावर्त्यमाह । न त्विति । अनियतत्वादिति भाव । अपिरुक्तदर्शितसमुच्चायकः । आधुनिकेत्यनेनोभयसंग्रहे ऽपि स्पष्टार्थं भेदन पाणिन्यादिस्मार्तेत्युभयव्यावर्त्यमाह । एवञ्चेति । तस्यैव तत्त्वनियामकत्वेचेत्यर्थः । तत्र स्मार्तेत्यनेनाद्यव्यावृत्ति. । पाणिन्यादीत्यनेनान्त्यस्य अन्त्यभिन्नो यस्य आर्थे । लक्षणा च न शुद्धा किन्तु गौणीत्याह । तत्रेति । उभयत्रेत्यर्थः । घटेति । मुख्यघटगोविन्दादिनिष्ठगुणादीत्यर्थ. । आदिना क्रियापरिग्रह. । तन्मूलकेति । तदारोपमूलकघटत्वादिप्रवृत्तिनिमित्तेत्यर्थः । सापि

लक्षणातो नातिरिक्तेति सूचयितुमाह । सम्बन्धश्चेति । स्वेति घटाद्यर्थशक्तघटादिपदाधुनिकादिसङ्केतविषयत्वमित्यर्थः । नन्वेवमत्रोक्तसङ्केतानुपयोगः शक्त्यभावेन तद्ग्रहरूपफलाभावादत आह । एतदर्थमेवेति । उक्तरूपसम्बन्धार्थमेवेत्यर्थ । अत्रार्थे मानमाह । अत एवेति । उक्तरीत्या तत्र लक्षणाङ्गीकारादेवेत्यर्थ । डित्थादीति । सञ्ज्ञाशब्दविषये इत्यर्थः । उक्तमित्यत्रास्यान्वय ॥ १२ ॥

प्राथमकल्पिकशक्तिग्रहसमर्थनम्। प्राथमकल्पिके तर्हि कथम् । यथा तस्य काचित्कः प्रयोगस्तथावृत्तिरपीत्युक्तम् । तत्र शब्दरूपस्यार्थे आरोपात् तत्प्रकारमाश्रित्य यथा शब्दप्रयोगस्तथा वृत्तिरपीत्यर्थ इति कैयटस्तत्पक्षे कथञ्चित्पदस्य न तथा स्वारस्यम् । अन्यत्रारोपस्यानुपयोगश्च इत्यन्ये व्याचक्षते व्यक्तावेवशक्तिस्तस्या एव च विषयताद्वयेन भानमिति शक्तिग्रहप्रयोगयोरूपपत्तिस्तथा त्वत्प्रत्ययस्यापीति । एवं रीतिरन्यत्र क्वाप्यदर्शनेनात्र पक्षे कथञ्चिदित्युक्तिरत्यन्तं समञ्जसेति बोध्यम् ।

अनादित्वात् संसारस्य ततोऽपि पूर्वतनडित्थादिगुणाद्याश्रित्य प्रयोगादीति कश्चित् । तत्र तत्सङ्केतज्ञानादेव बोधः । शक्त्याद्यभावेऽपीति तु न युक्तम् । वृत्त्यन्तरत्वापत्तेः । वृत्तिजन्योपस्थितिं विना शाब्दबोधविषयत्वासम्भवाच्च । द्वादशेऽह्नि पिता नाम कुर्यादिति श्रुत्या स्मृत्या वा नामत्वेन नामबोधेऽपि तत्तद्रूपेणेश्वरेण सङ्केताकरणेन तत्रापि शक्तेर्दुरुपपादत्वात् । अत्र नामपदेन चाह्वानकरणीभूतो बोधकः शब्द उच्यते ॥ १३ ॥

( कुं० टी०) प्राथमकल्पिकेति । प्राथमकल्पिको मुख्यो यो डित्थस्तदीयां क्रियां गुणान् वा यः करोति स डित्थ इत्युच्यते

डित्था ईदृशीं क्रियां कुर्वन्ति सा च त्वयीति तव डित्थत्वमेतादृशक्रियारूपमित्यर्थः । एवञ्च डित्थसहचरितक्रियादर्शनात्तादृशक्रियागुणादिकमेव प्रवृत्तिनिमित्तमिति भावः । अत्रेदं तत्त्वम् । यस्य गुणस्य भावात् द्रव्ये शब्दाभिनिवेश इति भाष्यमते गुणो नाम भेदकः भेद्यश्च द्रव्यमित्येतदेव लक्षणमनुसरणीयम् । एवञ्च विशेष्यमात्रवाचकाद्विशेषणमात्रे गुणे भावप्रत्ययः । गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वे जातौ गोत्वमिति भावप्रत्ययः । जातिमात्रवाचित्वे तु तत्समानियते शब्दस्वरूपे भावप्रत्ययः । यद्धि स्वरूपेण परमुपरञ्जयति तद्विशेषणम् । एवञ्च स्वरूपेणार्थं प्रत्याययतः शब्दस्योपरञ्जकत्वात् स्वरूपमेव प्रवृत्तिनिमित्तं तद्रूपाध्यासेन चार्थप्रतीतिः । एवञ्च डित्थादिशब्दानामपि स्वरूप एव भावप्रत्ययः । स्वरूपाध्यासेन संज्ञाया संज्ञिप्रत्यायनात्तदेव प्रवृत्तिनिमित्तम् । तदेत्तत्वे डित्थत्वमित्यत्र तु क्रियागुणाध्यासादन्यत्र वृत्तौ डित्थत्वसहचरितयोः क्रियागुणयोर्भावप्रत्ययः । एवञ्च क्रियागुणयोरभेदाध्यासाभिप्रायं डित्थत्वमिति ।

कथमिति । प्राथमिकडित्थे आरोपासम्भवाद्वृत्तिः कथमित्यर्थः । समाधत्ते । यथेति । क्वाचित्क इति । विनयादित्वात्स्वार्थे ठक् । अवस्थाभेदात्तत्रापि जातिं कल्पयित्वा यथा तत्प्रकारको बोधस्तथा त्वप्रत्ययो पीत्यर्थः । आनन्त्यव्यभिचारयोरभावेन तत्र जातिकल्पने मानाभावान्निष्प्रकारक एव बोध उचित इत्यभिप्रायेणोक्तं कथञ्चिदिति । तत्रेति । अयं शब्द अस्मिन्नर्थे शक्तः, अस्मिन्नर्थे वृद्धैः प्रयुज्यमानत्वादित्यनुमानेन शक्तिग्रहे जायमाने धर्मितावच्छेदकस्यावश्यकत्वात् शब्दस्यार्थे आरोपाच्छब्दप्रकारको यथा बोधस्तथा

शब्दस्वरूपे प्रवृत्तिनिमित्ते त्वप्रत्यय इत्यर्थः । तत् । शब्दस्वरूपम् । प्रकारम् । प्रवृत्तिनिमित्तम् ।

तत्पक्षे इति । कैयटव्याख्याने इत्यर्थः । न स्वारस्यमिति । घटादिपदादपि शब्दप्रकारकबोधस्य दर्शनेनास्य प्रकारस्य सार्वत्रिकत्वात्कथञ्चित्पदस्य भाष्यस्थस्य स्वारस्यं न भवतीत्यर्थः । अन्यत्रेति । आधुनिकडित्थे ऽपि संज्ञास्वरूपे वाच्ये त्वप्रत्ययसम्भवात्प्राथमिकडित्थगतक्रियारोपेण प्रवृत्तिरिति भाष्यस्य निष्फलत्वापत्तिश्चेत्यर्थः । संज्ञाशब्दे शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वात्तत्रैव प्रत्यय इति व्याख्याने तु भाष्ये कथञ्चिच्छब्दप्रयोगो ऽसमञ्जस एव स्यात् । इत्यन्ये इति । इति पूर्वोक्तदोषाद्धेतोरन्ये भाष्यमन्यथा व्याचक्षते इत्यर्थः । विषयताद्वयेनेति । व्यक्तिरेवात्र डित्थशब्दार्थः तस्या एव प्रकारतया विशेष्यतया च भाने । तथा च प्रकारताविशिष्टा व्यक्तिस्त्वप्रत्ययार्थ इत्यर्थः । अस्यारीतेरन्यत्र दृष्टत्वाभावात् कथञ्चिदिति भाष्योक्तिः सङ्गतेति भावः ।

प्रयोगादीत्यादिना शक्तिग्रहभावप्रत्ययौ । अस्मदादीनां दुर्ग्रहत्वमत्रास्वरसः । तत्रेति । शक्त्याद्यभावे ऽपि बोध इत्यन्वयः । पदान्निर्विकल्पकशक्तिग्रहशाब्दबोधयोरभावात्तत्र शक्तिर्नास्तीति मतं निराकरोति । तत्तादिति । वृत्तित्वानभ्युपगमे तु दोषमाह । वृत्तिजन्येति । कथं तर्हि अनुकार्याणां बोध इति चेत्तस्य स्मरणात्मकत्वेन शाब्दबोधत्वाभावात्तथोपस्थितस्यापि पदार्थान्तरे ऽन्वयित्वं तु भूसत्तायामित्यादिनिर्देशादेव । ननु आधुनिकसंज्ञास्थले शक्त्यभावे ऽपि नामस्थले शक्तिरस्त्येव द्वादशे ऽहनीति वचनात्तथा च तत्र लक्षणेति प्रागुक्तमयुक्तमि-

स्याशङ्कामपाकरोति । द्वादशे ऽहनीति । तत्तद्रूपेणेति । चैत्रत्वादिनेत्यर्थः । अन्यथा नापभाषितवै इत्येवमपभ्रंशत्वेनोच्चारणादपभ्रंशे ऽतिव्याप्तेः । तस्मात्तत्तद्रूपेणेश्वरोच्चारितत्वमेव शक्तिमत्त्वनियामकं तच्च नामस्थले नास्तीति भावः । तत्रापीति । आधुनिकसंज्ञावन्नामस्थले ऽपीत्यर्थः । ईश्वरस्य सर्वज्ञत्वान्नामस्थले विशिष्याप्युच्चारणं कल्प्यते इत्यन्ये । ननु तत्र शक्तिसत्त्वे किं मानमस्य सुबन्तादौ प्रसिद्धत्वाद्वाचकशब्दमात्रग्रहणाद्वा अस्ति प्रकृत्यादिकल्पनया शक्तिरत आह । अत्रेति । बोधकः शब्द इति । तथा च शक्त्यभावे बोधो न स्यादिति भावः ॥१३॥

(क०टी० प्राथमेति । एतत्कल्पप्राक्तनकल्पभवेनेत्यर्थः । करोति । अस्मिन्कल्पे । प्राथमकल्पिके तर्हीत्यादिग्रन्थस्य प्रकृतानुपयुक्तत्वे ऽपि विशेष वक्तुमुक्त इति सूचयितुमाह । तत्रेति । कथ चित्क इति प्रतीके इत्यर्थः । आसङ्गात् । तादात्म्याध्यासात् । यथाशब्दस्येति । अन्यथा शब्दान्निर्विकल्पकाभावेन निर्धर्मितावच्छेदकशक्तिग्रहाभावेन च प्रयोग एव न स्यादित्यर्थः । जात्यतिरिक्तपदार्थे विशेष्यताप्रकारतयोः सावच्छिन्नत्वनियमादिति भावः । तं खण्डयति । तत्पक्षे इति । कैयटोक्तव्याख्यानपक्षे इत्यर्थः । तथा । अत्यन्तम् । नन्वध्याससापेक्षत्वादेव क्लिष्टत्वमत आह । अन्यत्रापीति । एतत्कल्पस्थडित्थादावपीत्यर्थः । इति हेतौ । अन्ये इति उक्तभाष्यमन्यथेत्यर्थः । तस्या एव च । व्यक्तेरेव । विषयतेति । प्रकारताविशेष्यताख्यविषयताद्वयेनेत्यर्थः । भाष्यस्थप्रयोगपदमुपलक्षणमित्याह । शक्तीति । इति व्याख्यानसमाप्तौ । एकदेशीयव्याख्यानमाह । अनादीति । गुणादीत्यादिना क्रियाप्रयोगादीत्यादिना त्वप्रत्ययादिः कश्चिदित्यनेन कथं चित्पदघटितोक्तभाष्यविरोधरूपा ससारस्य नानादित्वमित्याशयकप्राथमेत्यादिशङ्कासमाधानरूपसर्वभाष्यविरोधरूपाऽन्यत्र प्रतिपादितप्रलये सत्त्वेनानादित्व न तस्येत्येवं रूपा चारुचिः सूचिता । सङ्केतस्य ज्ञातस्यैवेत्युक्तस्य विशेषकथनायात्रानुवादमाह । तत्रेति । आधुनिकसङ्केतस्थले इत्यर्थः । तत्तदर्थे-

निरूपितो यः सङ्केतसमवाय· सङ्केतस्तज्ज्ञानादित्यर्थः । प्रयोगसाधुता प्राग्वत् । नन्वेव मध्ये सम्बन्धरूपाशक्ति· किमर्थमत आह । शक्त्यादीति । आदिना लक्षणादिग्रहः । वृत्त्यन्तरेति । तुर्यवृत्तित्वे इत्यर्थ । सङ्केतस्येति भाव· । ननु कार्यस्य तेनैव सिद्धे किमिति तस्य वृत्त्यन्तरत्वमत आह । वृत्तीति । पदार्थस्येति शेषः। घटादिपदादाश्रयत्वादिनोपस्थिताकाशादेः शाब्दविषयत्ववारणाय वृत्त्या पदजन्यपदार्थोपस्थितेस्तत्र कारणत्वाङ्गीकारादिति भावः। ननु सङ्केतज्ञानजन्यबोधे शक्तिजन्योपस्थितेरेव हेतुत्वमास्तां कृत वृत्तित्वनिवेशेन । किञ्च द्वादशे ऽह्नि क्रियमाणनामस्थले स्मार्तसङ्केतस्य सत्त्वेनेश्वरसङ्केतसम्भवेन तद्वत्तस्यापि वाचकतानियामकत्वमेवेति किमर्थं तत्रापि लक्षणात आह । द्वादशे इति । श्रुतित्वेमानाभावादाह । स्मृत्येति। तत्तद्रूपेण विशेषरूपेणेश्वरकृत· सङ्केत इत्यस्याबोधनन । तत्रापि । द्वादशे ऽह्नि क्रियमाणनामस्थले ऽपि। अपिस्तदन्याधुनिकसङ्केतस्य लक्षस्य गङ्गाया घोष इत्यादेश्च समुच्चायकः । तथा चात्र सर्वत्र बोधार्थं तत्त्वेन निवेश आवश्यक इति भावः ।ननु नामाख्यातेत्यादौ नामपदेन सुबन्तग्रहणवदत्रापि तथात्वे सर्ववर्णसाधारणसाध्वसाधुसाधारणशब्दग्रहणस्येष्टस्य न लाभो ऽत आह । अत्रेति । उक्तस्मृतिवाक्ये एवेत्यर्थः । आह्वानेति । यत उक्तसङ्केतज्ञानाल्लक्षणबोधक अत आह्वानकरणीभूत इत्यर्थ· । तस्मादतिरिक्तोक्तरूपशक्तिरावश्यकेति सिद्धम् ॥ १३ ॥

कौस्तुभाद्युक्तिखण्डनम्। यत्तु पदपदार्थयोर्बोध्यबोधकभावनियामिका शक्तिरेव सम्बन्ध इति तन्न । शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात् । दीपगतप्रकाशकत्वशक्त्यापि सम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात् । तदुक्तं हरिणा ।

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुण इति ।

उपकार इति । उपकार्योपकारकयोरुपकारस्वभा-

वः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वानुमीयते असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामकः सम्बन्ध इति तदर्थं इति हेलाराजः । सम्बन्धः पदे वाक्ये च । तदाह न्यायभाष्यकारः समयज्ञानार्थं चेद् पदलक्षणाया वाचो ऽन्वाख्यानं व्याकरणं वाक्यलक्षणया वाचो ऽर्थलक्षणमिति । अनेन हि पदेष्विव वाक्येष्वपि ऐश्वरः सङ्केत इति स्पष्टमेवोक्तम् । वाक्यविषये समयग्राहकमाकाङ्क्षाद्यपि समयग्रहार्थं.मित्यस्य साधूनामित्यादिः ॥ १४ ॥

(कुं०टी०) शक्तेः सम्बन्धो बोध्यबोधकनियामको भवति न तु शक्तिरित्याह । शक्तेरपीति । घटजननशक्तेरसम्बन्धोस्तीत्यत एव हि दण्डनिष्ठशक्तेर्घटजनकत्वमित्यर्थः । शक्तेस्तु पुनः शक्त्यन्तरं नास्त्यनवस्थापत्तेः । उपकार इति । यत्रोपकारस्वभावः सम्बन्धो ऽस्ति तत्र शक्त्याख्यो धर्मो ऽनुमीयते असम्बद्धानामुपकाराभावात् । न च शक्तिरेवसम्बन्धः शक्तीनामप्याधारपारतन्त्र्ये कार्यजनने च सम्बन्धस्यैव नियामकत्वात् । गुणानामपि च द्रव्याश्रितत्वनियामकः सम्बन्ध एवेति परतन्त्राणामप्युपकारकत्वादित्यर्थः ।

उपकार्यो ऽर्थः । उपकारकः शब्दः । उपकारकतात्र परस्परं द्वयोरपि । कार्यम् । उपकारश् । असौ सम्बन्ध उपकारकताख्यः । शक्तीनामपीति । सम्बन्धसत्त्वे एव शक्तेरपि कार्यजनकत्वादित्यर्थः । अर्थलक्षणम् । अर्थप्रतिपादकं शास्त्रम् । अनेनेति । वाक्यलक्षणाया समयग्रहार्थयित्यनेन वाक्ये ऽपि शक्तिसूचनार्थकत्वोक्तिरयुक्तेति भावः ॥ १४ ॥

(क०टी०) यत्त्वत्र कौस्तुभादावुक्त घटबोधजननसामर्थ्यमेव घटादिपदानां शक्तिरिति तत्खण्डयति । यस्त्विति । शक्तिरेव सामर्थ्ये विशेषः । एवमग्रे ऽपि । तदभावे तदभावात्तस्यास्तन्नियामकत्वम् । एवेन वाच्यवाचकभावापरपर्यायशक्तिसम्बन्धनिरास । अपिरुक्तसमुच्चायक । सम्बन्धस्येव । तदन्यसम्बन्धस्यैवत्यर्थ. । तत्र मानमाह । दीपेति । सम्बन्धे दीपवस्तुनोरित्यादि । कत्व दीपस्येत्यादि. । उपकारस्येति । कार्योत्पादन स्वभावो यस्येत्यर्थ' । शक्तिरूप । सामर्थ्यरूपः । एवमग्रे ऽपि । कार्यम् । बोधम । शक्तिरित्यस्यार्थमाह । उपकारक इति । गुणानाम् । रूपादीनाम् । गुण इत्यस्यार्थमाह । तदाहेति । इदम् । व्याकरणम् । वाच' सङ्केतज्ञानार्थमन्वाख्याने करणे ल्युट् व्याकरणस्य मध्यमणिन्यायेनान्वय. । वाक्यरूपवाच अर्थलक्षणम् । करणे ल्युट् । अर्थबोधजनकमित्यर्थ' । अनेन हीति । उक्तभाष्यग्रन्थेनेत्यर्थ. । अस्य सूचितामित्यत्राप्यन्वय । उक्तामिति । समयस्येत्यस्योभयत्रान्वयादिति भाव । तदभिप्रेत्य वाक्ये विषये न्यूनतां पूरयति । वाक्येति । अपि व्याकरणसमुच्चायकः । वक्ष्यमाणरीत्या सङ्केतस्यापभ्रंशेष्वपि सत्त्वात्तज्ज्ञानस्य ताभ्यामसम्भवादाह । समयेति ॥ १४ ॥

वाक्यस्फोटे नैयायिकोक्तितिरस्कार । एतेन पदार्थे सम्बन्धग्रहवन्त्यपि पदानि वाक्यार्थे सङ्गतिग्रहानपेक्षाण्येवेति वाक्यस्फोटो नैयायिकासम्मत इति परास्तम् । एतच्चोपरिष्टाद्वक्ष्यामः । पदस्यैवार्थबोधकमवयवार्थद्वारा व्याकरणमिति च सूचितम् । कः शब्दः को ऽर्थ इति प्रश्ने घट इत्ययं शब्दो घट इत्ययमर्थ इत्येकाकारोत्तरदर्शनात्तयोरध्यासप्तिद्धिः । घट इत्याकारं ज्ञानमिति व्यवहाराच्छब्दज्ञानयोरपि सः । इति शब्दस्य शब्दस्वरूपपरता तात्पर्यग्राहकत्वात् । अत एव पदं श्रुतं पदार्थं शृणु अर्थं वदतीत्यादिव्यवहारः ।

शब्दार्थयोरितरेतराध्यासादेव वृद्धिरादैच् ओमित्येकाक्षरं ब्रह्मेति शक्तिग्राहकश्रुतिस्मृत्योः सामा-

नाधिकरण्येन प्रयोगः ॥ १५ ॥

(कुं०टी०) एतेनेति । पदार्थसम्बन्धग्रहसापेक्षाण्यपि पदानि न वाक्यानि वाक्यार्थसम्बन्धग्रहसापेक्षाणि आकाङ्क्षादिवशाद्‌-शक्यस्यैव वाक्यार्थस्य प्रतीतेरित्यर्थः । परास्तमिति । पदद्व-यघटिताकाङ्क्षादिभिर्वाक्यार्थबोधे वाक्यस्फोटस्य दुर्वारत्वात् । अवयवार्थद्वारा । प्रकृत्याद्यर्थद्वारा । सूचितमिति । पदलक्षणायाः समयग्राहकमित्यनेन पदस्य वाचकत्वं सूचितमन्वाख्यानत्वो-क्त्या च प्रकृत्यादिकल्पना सूचिता । सः । अध्यासः । एतदेवो-पपादयति । इति शब्दस्येति । इति शब्देन घटशब्दस्य पराम-र्शाच्छब्दज्ञानयोरभेद इत्यर्थः । साकारवादिनस्तु पदार्थमात्रस्य ज्ञानरूपतां वदन्ति । तन्मते आकारभेदादेवभेदः । अर्थं शृणु इति । शब्दस्यैव श्रावणत्वादर्थे आरोप एवेति भावः ।

ओमित्येकाक्षरमिति । ननु यश्छन्दसामृषभो विश्वरूप-श्छन्दोभ्यो ऽध्यमृतात्सम्बभूवेति श्रुतौ यच्छन्दसामृषभ ओङ्कारः छन्दोभ्यः सम्बभूवेति उत्पत्तिश्रवणात्कथं ब्रह्मरूपत्वम् । सत्य म् । स बभूवेत्यस्य प्रत्यभात् इत्यर्थः ॥ १५ ॥

(क०टी०) एतेन । उक्तभाष्येणेत्यर्थः । पदार्थे । पदार्थेषु । यद्वा व-त्यन्पदार्थे । सङ्गति । सम्बन्धः । वाक्यवाक्यार्थयो सम्बन्धरूपशक्ति-मत्त्वं विनैव मिथ. समभिव्याहारात्ततो वाक्यार्थबोध इति भाव । परास्तमिति । नैयायिकशिरोमणेर्भाष्यकारस्येष्टत्वादिति भावः । ननु तं विनैव निर्वाहस्याचार्यतद्ग्रन्थे कृतत्वात्किमर्थ सो ऽत आह । एतश्चेति । तत्समतमावश्यकत्व च । उपरिष्टात् । शब्दनिरूपणे । ननु व्याकरणेन साक्षाद्वाक्यतदर्थयोरनुक्तत्वात्कथ तदत आह । पदे-ति । स तु तात्पर्यार्थः । अत एव तत्रान्वाख्यानमिति तत्रार्थल-क्षणमिति चोक्तमिति भावः । अवयवेति । प्रकृतिप्रत्ययाद्यवयवार्थ-बोधेनेत्यर्थ । ननु भवतु सम्बन्धस्तत्र तथापि अध्यासे एव

मानाभावेन कथ तद्ग्रहोऽत आह । क इति । तयोः । शब्दत-दर्थयोः । प्रसङ्गाहाह । घट इति । अपि शब्दार्थयो समुच्चायक. । ननु शब्दार्थयोरिवार्थज्ञानयोरेवायं कुतो नात आह । इतीति । अर्थपरसमभिव्याहृतस्येति भावः । घट इत्ययमर्थ इत्यत्र न शब्दपरसमभिव्याहृत इति बोध्यम् । नन्वेव त्रयाणामध्यासो भाष्योक्तो न सिद्ध इति चेन्न । तदभिन्नेति न्यायेन सिद्धे । अध्यास पोषयति । अत एवेति । तयोरध्यासादेवेत्यर्थः । अर्थ शृणु इत्यस्य शब्दपरत्ववारणायाह । पद श्रुतमिति । अर्थम् । तच्छ्रवणानन्तरम् । एव लोकतस्तत्पुष्टि कृत्वा तत्राप्रामाणिकत्वशङ्कायां अपि सम्भवात् श्रुत्यादितस्तत्पुष्टि करोति । शब्दार्थेति । अभ्यर्हितत्वेन श्रुतेः पूर्वनिपातेन तदनुरोधेन कल्प्यमानबोधजनकवाक्ये ओमित्यस्य प्राथम्यमिति यथासख्योपपत्ति ॥ १५ ॥

तादात्म्यनिरूपणम् ।

तदात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः । तत्र भेदस्योद्भूतत्वविवक्षया अस्यार्थस्यायं वाचकः उञः प्रगृह्यम् तस्य वाचकः प्रणव इत्यादौ षष्ठी । अभेदस्य तत्त्वाविवक्षया तु प्रथमा यथा उक्तेषु । अत एवार्थे शब्दधर्मत्वव्यवहारः । अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात् । नाप्यत्यन्ताभेदे सः । घटे स्वधर्मत्वव्यवहाराभावात् ॥

सम्बन्धशब्दे सम्बन्धो योग्यतां प्रतियोग्यता ।
समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥
सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते ।
शब्दस्यार्थे यतस्तस्मात्सम्बन्धोऽस्तीति गम्यते इति ।

अस्यार्थः यथा चक्षुरादीनां रूपादिविषयज्ञानजनने अनादिः पुरुषयत्नानपेक्षा योग्यता तज्जनकतावच्छेदकधर्मवत्त्वरूपा तथा शब्दानामर्थे अनादिः स-

म्बन्ध एव योग्यता तद्बोधजनकतावच्छेदको धर्मः सम्बन्धशब्दे योग्यतां प्रति बोधजनकतावच्छेदक-धर्मरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः सम्ब-न्धः स एव योग्यता सा स्वाभाविक्येव। अनादि-वृद्धव्यवहारपरम्परापरपर्यायास्मदादिसमयगृहीतोक्ते-श्वरसमयान्निर्णीयते। यथा मातापुत्रयोर्जन्यजनकभा-वसम्बन्धस्य व्यवहारो निश्चायकस्तद्वत्। न तु जन-कत्वमेव योग्यता एतज्जनने अयं योग्य इति व्यवहा-रात्तदाह। सतीति। यतः शब्दस्यार्थे सम्बन्धे सति तत्प्रत्ययहेतुत्वमुपपद्यते तस्मादित्यन्वयः।

अत एवैतदुपक्रमे।

ज्ञानं प्रयोक्तुरर्थस्य स्वरूपं च प्रतीयते।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः॥

इत्यादिना शब्दार्थज्ञानानामध्यासस्योपपादनं कृ-तम्। अत्र तेषामित्यस्यात इत्यादिः। अयं सास्ना-दिमानर्थो गौरित्यर्थको ऽयं गौरित्येवं लोकानां व्य-वहारादुक्तं तादात्म्यं सम्बन्ध इत्यक्षरार्थः। एतेन त-योरभेदे घटादिशब्दैर्मधुधारणाद्यापत्तिः, अग्न्यादि-शब्दोच्चारणे मुखदाहाद्यापत्तिः, अर्थे वर्णमालाद्यनु-भवापत्तिश्चेति निरस्तम्। भेदाभेदोपपादनात्॥१६॥

(कुं० टी०) ननु शब्दार्थयोस्तादात्म्ये अग्निशब्दोच्चारणे मु-खदाहापत्तिरस्यायं वाचक इति व्यवहारानापत्तिश्चेत्यत आह। तादात्म्यं चेति। तयोः। भेदाभेदयोः। तस्य वाचकः प्रणव इति। एतच्च पातञ्जलसूत्रम्। तस्येश्वरस्य प्रणव ओङ्कारो वाचक इत्यर्थः। उक्तेषु। ओमित्येकाक्षरमित्यादिषु। शब्दधर्मत्वेति।

श्रवणादीत्यर्थः ।

सम्बन्धशब्दे इति । अत्र वाच्यत्वं सप्तम्यर्थः । योग्यतां प्रतीत्यत्र लक्षणत्वसम्बन्धे कर्मप्रवचनीयता । तथा च सम्बन्धशब्दवाच्यः सम्बन्धो योग्यतैव । एतच्च योग्यतावशादेव निश्चीयते अयं शब्द एतदर्थयोग्य इति व्यवहारात् । योग्यतैव शब्दार्थयोः सम्बन्ध इत्यर्थः । अत एव च सम्बन्धशब्दो योग्यतालक्षणसम्बन्धयोग्यतयैव प्रतिपादयतीति हेलाराजो व्याख्यत् । नन्वेवं सङ्केतस्य नोपयोग इत्यत आह । समयादिति । वृद्धव्यवहारपरम्परापर्यायात्समयात्स्वाभाविक्येव योग्यता निश्चीयते । न हीयमस्य पुत्रस्य मातेति सामायिकः जन्यजनकभावः, वस्तुसिद्धस्यैव प्रतिपादनात् । सतीति । अर्थे नियते नियतप्रतीतिहेतुत्वं सम्बन्धे सत्येव युज्यते नान्यथेति यतः तस्मादर्थप्रत्यायनात्कार्यादस्तिसम्बधः शब्दार्थयोरित्यवसीयत इत्यर्थः । सम्बन्धबोधके शब्दे अस्य शब्दस्यास्मिन्नर्थे सम्बन्ध इति व्यवहारात् अयमर्थ एतद्योग्यतावानिति व्यवहाराद्योग्यतानिश्चय इत्यर्थ इति भूषणकृतः ।

अस्यार्थ इति । एतन्मते योग्यतां प्रति सम्बन्ध इत्यस्य योग्यतायाः सम्बन्ध इत्यर्थः । तथा च तादात्म्यसम्बन्धे योग्यतायाः यः सम्बन्धः स एव योग्यतेत्यर्थः । योग्यतानिरूपितस्तादात्म्यलक्षणः सम्बन्ध इति त्वपपाठः । तादात्म्यं हि योग्यताया आश्रयो न तु निरूपितम् । अस्मदादीति । वृद्धव्यवहारपरम्परापर्यायो यो ऽस्मदादिसमयस्तेन गृहीतो य ईश्वरसमयस्तेनानुमीयत इत्यर्थः । अत एव । शब्दार्थयोस्तात्म्यादेव । ज्ञानमिति । प्रयोगेणाभिव्यक्तैः शब्दैस्त्रितयमवगम्यते शब्दस्वरूपमर्थः प्रयोक्तुरभिप्रायश्च । न चैतदसति सम्बन्धनियमे

घटत इति वास्तवः सम्बन्धो न सामयिकः । समवस्थित इत्यस्य स्वभावत एव निरूढो न शास्त्रेण निवेशित इत्यर्थः । तत्रार्थशब्दयोः सम्बन्धो वाच्यवाचकभावः, प्रयोक्तृभिप्रायेण तु सह कार्यकारणभावः । तदाहुः वक्तृव्यापारविशेषो बुद्धौ यो ऽर्थः प्रकाशते तत्र शब्दानां नानार्थत्वनिबन्धनमिति । उक्तं तादात्म्यम् । अध्यस्तं तदात्म्यम् । भेदाभेदेति । वस्तुतो भेद एव आरोपितस्त्वभेद इत्यर्थः ॥ १६ ॥

(क०टी०)विशेष वक्तुमुक्ताध्यासमूलकतादात्म्यस्वरूपं स्वरूपसतस्तस्यातत्त्वमाह । तादात्म्य चेति । तथा च तादृशस्य भेदविशिष्टाभेदस्य तत्त्व सिद्धम् । नन्वेव तेजस्तिमिरयोरिव मिथः तयोर्विरोधो ऽत आह । अभेदेति । नन्वेव कथं भेदेन व्यवहारो ऽत आह । तत्रेति । तयोर्मध्ये इत्यर्थः । उद्भूतत्वेति । तदभिभवपूर्वकतद्विवक्षयेत्यर्थ. । तत्र लोकप्रयोगमाह । अस्यार्थेति । एतच्छास्त्रीयमाह । उञः प्रगृह्यमिति । योगसूत्रमाह । तस्येति । अनेन भेदरूपो ऽपि सङ्केतः सूचित. । तत्त्वविवक्षया तु । उद्भूतत्वविवक्षया तु । यथोक्तेषु । ओमित्येकाक्षरं ब्रह्म वृद्धिरादैजित्यादिषु । तत्रान्यदपि मानमाह । अत एवेति । उभयसत्त्वे ऽपि कदाचित्कस्य चित्तत्त्वविवक्षणादेवेत्यर्थ. । शब्दधर्मत्वेति । अर्थः शब्दधर्म इति व्यवहारइत्यर्थ । एवमग्रे ऽपि । अत एवेत्यस्यार्थं सूचयन्विपक्षे बाधकमाह । अत्यन्तेति । व्यवहाराभावादिति दृष्टान्ते ऽपि तत्तद्धर्मत्वव्यवहाराभाववदत्रापि तद्व्यवहाराभावापत्तेरित्यर्थः । नन्वध्यासः कर्तुरस्मरणान्निर्मूलो ऽत आह । अयमिति । आदीति । सर्गाद्यकालिकव्यवहारेत्यर्थः । एवं चेश्वर एव मुख्य आदाविति भावः । तत्र मानमाह । एतच्चेति । तस्येश्वरकृतत्वं चेत्यर्थ । स्थित इति । तस्य वाचक. प्रणव इति सूत्रे तस्येश्वरस्य प्रणवो वाचक एवमेवेश्वरेण सङ्केतकरण तस्य चेश्वरः प्रणवस्य वाच्य इति फलितमित्युक्त्वा किमस्य सङ्केतित्वात् न च स्वाभाविक वाचकत्व सङ्केतेन कृत वाच्यवाचकत्वमपि दीपप्रकाशवदवस्थितमिति प्रश्नोत्तरमिदमुक्तम् । तत्राय प्रश्नाशय. ईदृश सङ्केतो

ऽयुक्तः वाचकत्वस्य सङ्केतत्वात् । न च स्वाभाविक वाचकत्वं सङ्केतेन बोध्यते यत्र तन्नास्ति तत्र सङ्केतेनाव्यङ्गयत्वापत्ते । अविद्यमानघटस्य दीपेनाव्यञ्जनात् । कृतसङ्केतस्तु वारणे करभशब्दस्तत्प्रतिपादको दृष्ट । तस्मात्सङ्केतकृत एव वाच्यवाचकभाव । शक्तिविशेषरूप ईश्वरस्य सङ्केतस्तु अनादिवासनासिद्धस्थितमेव त प्रकाशयति । यथा विद्यमान एव पितापुत्रयो सम्बन्धो ऽयमस्य पितायमस्य पुत्र इति सङ्केतेनावद्योत्यते इति । यद्यपि पूर्वं शब्दार्थविषये ऽन्योन्याध्यासरूपः सङ्केत उक्तो भाष्यीयत्वेन तथापि राहो शिर इति वदयमस्य वाचको ऽयमस्य वाच्य इत्यपि सङ्केत इत्येतद्भाष्यात्प्रतीयते । अनेन शब्दार्थयोर्भेदाभेदौ दर्शिताविति भाव । आदिनास्य सङ्ग्रहः । प्रलये ऽपि सस्कारवशात्सर्गोत्तर पूर्ववत्तच्छक्तियुक्तानामाविर्भावात् वाच्यवाचकशक्त्यपेक्ष सङ्केत ईश्वरेणापि पूर्ववत्तथैव क्रियते इति न कदाचिदीश्वरसङ्केतभेदेनार्थभेद प्रणवस्य व्यवहाररूपसप्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इति तान्त्रिकप्रतिज्ञेत्यस्य च सङ्ग्रह । उक्ते ऽर्थे सम्मत्यन्तरमप्याह । हरिरपीति । अत्राद्यकारिका तज्जनकतैव शक्तिरित्यर्थे साधकत्वेन लिखिता दीक्षितैर्वैयाकरणमनोत्सञ्जने भूषणाकृतापि तथैव व्याख्याता तन्निरासायाह । अस्यार्थ इति । स्वविषयेष्वित्यत्र स्वरूपादिविषयो येषु ज्ञानेषु इति बहुव्रीहिः । जन्यजनकभावः सम्बन्ध जन्यस्याधिकरणत्वेन विवक्षायां सप्तमी । तदाभिप्रेत्याह । रूपादीति । वस्तुतो ऽनादित्वाभावादाह । पुरुषेति । एवमग्रे ऽपि । धर्मवत्वेति । चक्षुषादिधर्मरूपा अर्थैः सहेति शेष । तद्बोधेति । अर्थबोधेत्यर्थः । धर्म । शब्दनिष्ठ । एवेन घोत्तरटत्वादेस्तत्त्वनिरास । सम्बन्धशब्दे ऽर्शआद्यच् । योग्यतारूपसम्बन्धविशिष्टे योग्यतां प्रतीत्यभित परित इति द्वितीया षष्ठ्यर्थे स च निरूप्यनिरूपकभाव तदभिप्रेत्याह । बोधेति । समयादित्यस्यार्थमाह । सा चेति । अनादित्व वृद्धव्यवहारे प्राग्वत् । तत्पर्यायो यो ऽस्मदादिसमयस्तेन गृहीतो ऽपि उक्त कथितो ऽध्यासादिरूप ईश्वरसमयस्तस्मादित्यर्थः । योग्यता सविदित्यस्यार्थमाह । निश्चीयत इति । अनेन प्रकृतार्थलाभ । एतेन सङ्केतातिरिक्तबोधजनकत्वरूपशक्तिग्रहोपायमाह । सम्बन्धेति । सम्ब-

न्धो विषयः । योग्यतां प्रति योग्यताशब्द् प्रति योग्यता विषय इति समयाद्यवहाराद्योग्यतासम्वित् शक्तिग्रह घटपदमत्र योग्यमेतत्सम्बधीति व्यवहारात् सा ग्राह्येत्यर्थ इति भूपणोक्तमपास्तम् । तद्ध्वनयन्नाह । न त्विति । योग्यता धर्मरूपा सम्बन्धरूपे न हेतुरगृहीतशक्तिकादर्थबोधप्रसङ्गात् । नापि सामान्यतो ज्ञातः प्रमेयत्वादिना तज्ज्ञाने ऽपि बोधापत्ते । नापि सङ्कतत्वेन तज्ज्ञानहेतु' । गवादिपदेष्वीश्वरादे' सङ्केतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधेन व्यभिचारात् । न चार्थधीजनकतावच्छेदकत्वेन तज्ज्ञान हेतु' । ततो ऽपि लाघवेनार्थधीजनकत्वेनैव हेतुतायामस्मत्पक्षसिद्धेरिति भूषणोक्तमपास्तम् । पदानामनात्तसत्त्वादाह । यत इति । प्रत्यासत्तिलभ्यमाह । तत्प्रत्ययेति । अर्थज्ञानेत्यर्थ. । शब्दस्येत्यादि । ननु भूषणोक्त एवैतदर्थे. कुतो नेत्यत आह । अत एवेति । तादृशशक्तिरूपसम्बन्धस्य स्वाभाविकस्येश्वरसङ्केतग्राह्यत्वादेवेत्यर्थः । एतदुपक्रमे । एतत्कारिकाभ्य. प्राक् । प्रयोक्तुरिति शेषे षष्ठी श्रोतुरिति शेषः । घट इत्यय शब्दो घट इत्ययमर्थो घट इति ज्ञानमित्येवं प्रयोगकर्तृसम्बन्ध्युच्चारणविषयघटादिशब्दैः कृत्वा श्रोतुस्त्रितयभिन्नं प्रतीयत इत्यर्थः । स्वरूपशब्दस्वरूपं कृतमिति तस्य तद्ग्राहकत्वे तु तत्र तदुक्तिरसङ्गता स्यादनुपयोगादिति भाव । यथा श्रुते ऽनन्वयादाह । अत्रेति । हरिपद्ये । तथा च यत इति प्राक् शेषो बोध्यः । अत एव द्वितीया कारिका फलितार्थमाह । अयमिति । तदर्थमाह । सास्नादीति । अय सास्नादिमानर्थो गौरित्यर्थो यस्य तादृशो यो ऽय गौरिति व्यवहारस्तस्मादित्यर्थ । समस्तपाठः । उक्तम् । सङ्केतरूपम् । सम्बन्ध. तद्ग्राहकत्वात्तत्त्वम् । तयो' । शब्दतदर्थयोः । एतेनेत्यस्यार्थमाह । भेदाभेदोनेति ॥ १६ ॥

बौद्धार्थप्रतिपादनम् । वस्तुतो बौद्ध एवार्थः शक्यः । पदमपि बौद्धं तयोरभेदः, न च बौद्धे दाहादिशक्तिमत्त्वमित्यग्रे निरूपयिष्यामः । अत एव पुरोवर्त्तिडित्थं पश्यतो नामजिज्ञासया को ऽयमित्युत्तरे सन्निहितदेशपिण्ड-

मुद्दिश्य डित्थशब्दविधेयताप्रतीतिः सङ्गच्छते । अ-
स्यायमर्थो ऽस्यार्थस्येदं पदमित्यादौ षष्ठ्यनुपपत्त्या
तयोः स्वाभाविकयोगाङ्गीकाराच्च । असम्बद्धाना-
द्घटपटादीनामेव व्यवहाराभावात् । अस्यायं वाचक
इत्यादिव्यवहारोऽप्येवमेव । अयं वाचक एतत्सम्ब-
न्धीत्यादितदर्थात् ।

स्पष्टश्चेदमस्यायं वाचको वाच्य इति षष्ठ्या
प्रतीयते योगः शब्दार्थयोरिति हरिकारिकाव्या-
ख्यावसरे हेलाराजीये । समयः सङ्केत इति चाप्तो-
पदेशवृद्धव्यवहारपर्यायौ । अत एव न्यायभाष्य-
कृदादयः सामयिकः शब्दादर्थप्रत्यय इति सूत्रे कः
पुनरयं समयः अस्य शब्दस्येदमर्थजातमभिधेयमिति
अस्येदं नामधेयमित्यादिनियोगरूपः अस्माच्छब्दा-
दयमर्थो बोद्धव्य इत्यादिनियोगश्चेत्याहुः । नियोग-
श्चाप्तोपदेश एव । सामयिकः शब्दादर्थप्रत्यय इति
कणादसूत्रव्याख्यातृभिश्च नकुलदंष्ट्रास्पृष्टा वा का-
चिदौषधिः सा सर्पविषहन्त्रीत्याप्तोदेशस्यैव समय-
त्वमुक्तम् । अयमयमिति नियोगो ऽपि समय इति
पातञ्जलाः । उक्त ईश्वरसङ्केत एव शक्तिरिति तु
न युक्तम् । अयमेतच्छक्यो ऽत्रास्य शक्तिरित्यस्य स-
ङ्केतस्यानापत्तेः । ईदृशसङ्केतस्य लोके दर्शनेन तादृ-
शेश्वरसङ्केतस्याप्यनुमानात् शक्तिप्रकाशक एवे-
तिभावः ॥ १७ ॥

(कुं०टी०) बौद्ध एवेति । बुद्धिविषयावेवार्थशब्दौ वाच्यवाचकौ
न तु वास्तवावित्यर्थः । अत एव । शब्दार्थयोरभेदादेव । भेद-

स्य वास्तविकत्वमुपपादयति । स्वाभाविकेति । योगः । सम्बन्धः । अत एव व्यतिरेकमाह । असम्बद्धानामिति ।

योगः शब्दार्थयोरिति । एतदग्रे तत्त्वमप्यतो व्यपदिश्यत इति ग्रन्थः । अस्यार्थस्यायं वाचकः अस्यशब्दस्यायं वाच्य इति षष्ठ्यन्यथानुपपत्त्या अस्त्येव शब्दार्थयोः स्वाभाविकः सम्बन्धः । अत एव शब्दार्थयोस्तत्त्वं गौरयमित्यभेदेन व्यवह्रियत इत्यर्थः । वृद्धव्यवहारादिभिः सङ्केतग्रह इति परमतं निराकर्तुमुपक्रमते । पर्यायाविति । चतुर्णां पर्यायत्वे ऽपि तादृशव्यवहाराच्छक्तिग्रह इत्यर्थः । अर्थजातम्, अर्थ सामान्यं तेन व्यक्तिनिरासः । अज्ञातनामके पूर्वोक्तसङ्कतग्रहासम्भवादाह । अस्येदमिति । अयं चन्द्र इत्युपदेशे व्यवहारेण शक्तिग्रहासम्भवादयमपि नियोग इत्यर्थः । नियोगशब्दस्य विशेषावस्थापने प्रसिद्धत्वादाह । नियोगश्चेति ।

ननु घटः शब्दवान् घटो ऽर्थ इति प्रत्ययाभावेन शब्दार्थयोः सम्बन्धाभावादनियमेनार्थप्रत्ययापत्तिरत आह । सामयिक इति । सङ्केताधीन इत्यर्थः । तेन शब्देभ्यो ऽनियमेनार्थप्रतीतिर्न भवतीति भावः । अयमयमितीति । सास्नादिमान् गौरित्याकारक इत्यर्थः । सङ्केतस्यानापत्तेरिति । अस्य पदस्यास्मिन्नर्थे शक्तिरित्याकारक सङ्केतो न स्यादित्यर्थः । यत्तूक्तं कुसुमाञ्जलौ ।

गोमयाद्वृश्चिकोत्पत्तिर्मायावत्समयादय इति ।

यथा वृश्चिकाद्गोमयाच्च वृश्चिकोत्पत्तिः सर्गादौ केवलादृष्टात् । इदानीं तु ब्राह्मणाद्ब्रह्मणस्योत्पत्तिः । यथा मायावी मायामयं प्रयोज्यं कृत्वा घटमानयेत्यादिप्रयुज्य शक्तिं ग्राहयति तथेश्वरो ऽपि शरीरद्वयं कृत्वा शक्तिं ग्राहयतीति तद्दूषयति ।

लोके दर्शनेनेति । भवति चेश्वरस्य तादृशः सङ्केतः लोके तादृशस्यैव सङ्केतस्य दर्शनात् । तस्मात्सङ्केतः शक्तिप्रकाशक एवेति भावः ॥ १७ ॥

( क०टी० ) एवमभ्युपेत्य समाहित वस्तुतो दोषशङ्कैव नेत्याशयेन सिद्धान्तमाह । वस्तुत इति । बौद्धमित्यस्य शक्तमिति शेष । न चेति । हीत्यर्थः । कुतो नेति शङ्कायामाह। अग्रे इति । शब्दनिरूपणप्रकरणे इत्यर्थ । एतन्मतोपपत्तिरपि त त्रैव स्फुटीभविष्यति । त द्रढयति । अत एवेति । तयोर्भेदादेवेत्य र्थ । तत्राभेदेन प्रश्नोत्तरयोः सङ्गतिर्भेदेनोद्देश्यविधेयभावसङ्गति। प्रागुक्तस्वाभाविकत्व प्रतिपादयन् तत्सत्त्वे मानान्तर कथयन्प्रती तिसङ्गतौ हेत्वन्तरमाह । कस्येति । इत्यादौ । व्यवहारे । अत एव तत्र हेतुमाह । समिति । ननु एतद्व्यवहाराद्वाच्यवाचकभावापर पर्यायशक्तिरूपसम्बन्धसिद्धिरेवास्तु इति न तादात्म्यलक्षण स्वाभाविकयोगसिद्धिरतस्तत्रैव गमकान्तरमाह । अस्येति । एवम् । स्वाभाविकयोगसाधनः अस्य पूर्वेणाभिन्नत्वमाशङ्क्याह । अयमिति। हरौ अस्यायमिति व्यवहारद्वय योग इति तादात्म्यलक्षणः स्वा भाविकस्तयोरस्तीति प्रतीयत इत्यर्थः । ननु इतरशास्त्रे समय सङ्केतयोः पर्यात्वे ऽपि कथ हरि ग्रन्थे समयपदेन व्यवहारग्रहणम त आह । समेति । प्रत्येक एतावुभावुभयपर्यायावित्यर्थ । त- त्र तदीयमेव मानमाह । अत एवेति । पर्यायत्वादेवेत्यर्थ । सूत्रे गौतमसूत्रे । नियोगरूपमित्यादि यत् स समय इत्यनुषङ्गादिनान्व यः । एव वृद्धव्यवहारस्य तत्त्वमुक्त्वेश्वरव्यवहारस्य तत्त्वमाह । अ स्मादिति । नन्वेवमप्युपदेशस्य तत्त्वालाभादाह । नियोग इति । अ त एव तत्र सम्वादार्थ वैशेषिकसम्मतिमप्याह । समिति । चो ऽप्यर्थे । अयमिति । प्रागुक्तेतरेतराध्यासाकार । अस्याप्युपदेशत्वादा ह । नियोगो ऽपीति । आपिर्भेदघटितोक्तनियोगसमुच्चायकः । उक्त ईश्वरेति । अस्मादित्यादिनोक्त ईश्वरसङ्केत इत्यर्थ । एतेन सिद्धा न्तव्यावृत्तिः । शक्तिरिति । मुख्यशक्तिरित्यर्थः । इत्यस्येति । अ स्मदादिसम्बन्धिनः सङ्केतस्याभावापत्तेरित्यर्थ । इत स्पष्टतया तस्या भेदेन तत प्रतीतेरिति भाव । ननु निर्मूलत्वादिष्टापत्तिर

त आह । ईदृशेति । भेदघटितेत्यर्थः । एवमग्रे ऽपि । तथा च तयोर्भेदः प्रागुक्तः सिद्धः । एतेनाभेदरूपसङ्केतस्य प्रागुक्तस्य तादृशतत्त्ववतः भेदरूपस्यापि तस्य तादृशत्वमित्यपि सूचितम् । तथा च द्विविधतत्सङ्केतस्य प्रागुक्त भाक्त सिद्ध तत्त्वमिति भावः ॥ १७ ॥

ईश्वरसङ्केतो न शक्तिरित्यत्र वाचस्पत्यसम्वाद । अत एव न्यायवाचस्पत्ये उक्तं सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षात् कृतः सङ्केतः तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केत इति । तथा योगवाचस्पत्ये उक्तं सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्ध ईश्वरसङ्केतस्तु प्रकाशकः । अत एव नित्यः शब्दार्थसम्बन्ध इति तान्त्रिका इति । सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिज्ञानगम्य एव तेषां योगबलेनोभयरूपपराप्रत्यक्षात् । युक्तं चैतत् एकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभयरूपतया उभयोरपि तत्कार्ययोरुभयरूपत्वात् ।

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत्परेत्युक्तेः ॥

नित्यत्वं तु यावत्सृष्टिस्थित्या व्यवहारनित्यतया च बोध्यम् । श्रुतिश्च ।

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् । तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टामिति ।

अभिष्यन्दमानाम् । तत्तद्रूपेणाभिव्यक्ताम् । अन्यामिव । भेदवतीमिव । आत्मनि, चित्ते ।

प्राणायामान्तरे देवी वाग्वै नित्यं स्म तिष्ठति ।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ॥
वैखरीवाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धनी ।
केवलं बुध्युपादानक्रमरूपानुपातिनी ॥
प्राणवृत्तिमनुक्रम्य मध्यमावाक् प्रवर्तते ।
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ॥
स्वरूपज्योतिरेवातः परावागनपायिनीति भारतं च ।

एते श्रुतिभारते हरिग्रन्थे स्पष्टे । हरिवंशे ऽपि अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रय इति । योग्यतालक्षणः सम्बन्ध इत्यादेः कैयटस्य कारणतावच्छेदकधर्मरूपः सम्बन्ध इत्यर्थः । तत्त्वमस्यादिवाक्यस्याखण्डार्थेन शुद्धेनापि ब्रह्मणाध्यासिकतादात्म्यम् ॥ १८ ॥

(कुं०टी०) अत एव । सङ्केतस्य शक्तिग्राहकत्वादेव । महर्षीति । महर्ष्यादिभ्य ईश्वरेण साक्षात् सङ्केतः प्रकाशित इत्यर्थः । तत्सङ्केतः । ईश्वरसङ्केतः । ननु विद्यमानस्यैव शब्दार्थसम्बन्धस्य सङ्केतेन प्रकाशे यस्य शब्दस्य यस्मिन्नर्थे सम्बन्धो नास्ति तस्य सङ्केतो न स्यादत आह । सर्वे च शब्दा इति । इति सर्वैरर्थैरिति । इति हेतोः सर्वैरर्थैः सम्बन्ध इत्यर्थः । नित्य इति । ईश्वरकृतत्वे तु जन्यत्वेनानित्यत्वापत्तिरिति भावः । तन्त्र्यन्ते व्युत्पाद्यन्ते ऽनेनेति तन्त्रम् । उभयरूपपरेति । शब्दमात्रस्यार्थमात्रस्य च ब्रह्मोपादानकत्वेन ततो भेदाभावात् । उभयोः । शब्दशब्दार्थयोः । क्रियाशक्तिप्रधानायाः परिणतिक्रियोन्मुखायाः प्रकृतेः सकाशादित्यर्थः । तदुक्तं काशीखण्डे क्रियाशक्तिरिदं विश्वमस्य त्वं कारणं तत इति । बिन्दुरूपिण्या इति ।

चिदचिन्मिश्राया इत्यर्थः। अयम्भावः। मायानुपहितं ब्रह्म निर्गुणं मायोपहितं सगुणं तच्च ब्रह्म जगदुपादानमिति मते तदेव बिन्दुशब्दवाच्यम्, प्रकृतेरुपादानत्वे तु सैव बिन्दुः। स च बिन्दुः कारणरूपः सूक्ष्मः कार्यरूपस्तु त्रिविधः बिन्दुर्बीजं नादश्च। बिन्दुः ब्रह्मरूपः शक्तिर्बीजं तयोः क्षोभ्यक्षोभकभावरूपः सम्बन्धो नाद इति। शब्दब्रह्मेति। शब्दार्थयोरभेदात् सकलार्थस्वरूपिणो ब्रह्मणः शब्दरूपत्वमित्यर्थः। ब्रह्मात्मकशब्देन जगतो व्याप्तत्वाच्च शब्दब्रह्म जगदुपादानम्। बिन्दुश्च स्पष्टव्यञ्जनात्। नन्वेवं स्फोटस्य जन्यत्वेनानित्यत्वापत्तिरत आह। नित्यत्वाच्चेति। अर्थेनेति। अर्थेन सह न प्रविभक्तमत्यन्तं भिन्नं तत्त्वं शब्दरूपत्वं यस्या इत्यर्थः। एकामिति। स्फोटरूपायास्तस्या एकत्वात्।

प्राणापानेति। सर्वेषां प्राणापानान्तरे वाग्रूपा देवी तिष्ठति। तस्या एव वैखर्यादयो ऽवस्थाभेदाः। स्थानेषु, ताल्वादिषु। विवृते, विवर्तरूपतां प्राप्ते। प्राणवृत्तीति। प्राणवायुव्यापारेण वर्णाभिव्यक्तेः। तदुक्तं स्मृत्यन्तरे प्राणेनाप्यायिता सेयं व्यवहारानिबन्धनीति। तथा च श्रोत्रविषयत्वेन प्रतिनियतं परैः संज्ञेयं श्रुतिरूपं यस्याः सा वैखरी। मध्यमा तु बुद्धिमात्रोपादना परिगृहीतक्रमेव प्राणवृत्त्यनुगता। पश्यन्ती तु प्रतिलीनाकारा समाविष्टक्रमशक्तिः। बुद्ध्युपादानेति।

ननु नित्यः शब्दार्थसम्बन्ध इति वार्तिकव्याख्यावसरे अर्थस्यानित्यत्वात्तत्सम्बन्धस्य नित्यत्वासम्भव इत्याशङ्क्य योग्यतालक्षणः सम्बन्ध इति कैयटासङ्गतिरर्थस्यानित्यत्वे तादात्म्यलक्षणयोग्यताया अपि नित्यत्वासम्भवादत आह। कैयटस्येति। शब्दस्य नित्यतया तन्निष्ठकारणतावच्छेदक-

स्यापि नित्यत्वमितिभावः । ननु सदेव सौम्येदमग्र आसीदित्युपक्रम्य विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यावगमात् पदार्थसंसर्गरूपवाक्यार्थविषयत्वं तत्र कथमत आह । तत्त्वमस्यादीति । अखण्डार्थेनेति । तत्पदत्वं पदवाच्ययोः परोक्षत्वापरोक्षत्वविशिष्टयोः सामानाधिकरण्यासम्भवाद्विशेषणांशपरित्यागेन विशेष्यमात्रबोधादितिभावः । अत्र वेदान्तिनः । क्रियाकारकभावं पुरस्कृत्य शब्दानां प्रवृत्तिर्जायमाना धर्मधर्मिभावं पुरस्कृत्यैव वाच्या स च धर्मधर्मिभावो न ब्रह्मगोचरो, ब्रह्मणो धर्मशून्यत्वात् । अतः पदपदार्थविभागमन्तरणैव तत्त्वमसीत्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकमिति वदन्ति । वाक्यतात्पर्यविषयीभूतत्वं वाक्यार्थत्वम् । तथा चाखण्डब्रह्मणः प्रतीयमानस्य वाक्यशक्यत्त्वाद्वाक्यवाक्यार्थयोरभेद इति भावः । अत्रेदं बोध्यम् । प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकं च । वैशिष्ट्याद्यवगाहि घटं जानामीत्यादि सविकल्पकम् । संसर्गानवगाहि तत्त्वमस्यादिवाक्यजन्यं निर्विकल्पकम् । सो ऽयं देवदत्त इत्यादिवद्विषयावच्छिन्नचैतन्यस्य चाभेदात्प्रत्यक्षत्वम् । शुद्धेनापीति । यथा तत्ताविषयकज्ञानाजनकस्यापीन्द्रियस्य वा सहकारेण तत्ताविषकज्ञानजनकत्वमेवं सखण्डप्रतिपादकस्यापि वाक्यस्याखण्डार्थप्रतिपादकत्वमपीति भावः ॥ १८ ॥

(क०टी०) तदनुमाने मानमाह।अत एवेति। तेन तदनुमानाङ्गीकारादेवेत्यर्थ ।तथैवेति। महर्ष्यादिव्यवहारपारम्पर्यात्वित्यर्थ । तत्सङ्केत इति । ईश्वरसङ्केत इत्यर्थ । ईश्वरसङ्केतप्रकाश्यस्वाभाविकसम्बन्धसत्त्वे मानान्तरमपि सूचयन्नत्र मानान्तरमप्याह । तथेति । योगवाचस्पत्यवदित्यर्थ । उक्तपातञ्जलभाष्यव्याख्यानमेवेदम् । सम्बन्धः । भाविक० । अत एव । तस्य प्रकाशत्वादेव । तान्त्रिका० । वैयाकरणः ।

नन्विदमस्मदादीनां दुर्ज्ञेयं विशिष्य सकलार्थज्ञानाभावात् अत आह।सर्वैरिति। ज्ञानगम्य एव। ज्ञानविषय एव। तेषाम्। योगिनाम्। उभयेति। शब्दतदर्थोभयेत्यर्थः। परा। शब्दब्रह्म। ननु परा वाक् सा च शब्दरूपा नोभयरूपेति कथ तत्प्रत्यक्षेण तत्सम्बन्धज्ञानमत-स्तत्समर्थयते। युक्तं चैतिदिति। कुतस्तत्राह। एकेति। तत्कार्य-योः। शब्दब्रह्मकार्ययोः। उभयेति। प्रत्येकमुभयरूपत्वादित्यर्थ। ननु तदुपादानत्वे एव किं मानमत आह। क्रियेति। सर्गोत्पादनरूपाक्रि-यासामर्थ्यं प्रधान यस्या इत्यर्थ। तदर्थमेव हि सा। अन्यथा तदान-र्थक्यमेव। ईदृशी या प्रकृतिः परमेश्वरसिसृक्षात्मकमायावृत्तिता जाता बिन्दुरूपिणी अव्यक्तरूपा त्रिगुणा अस्या बीजनादबिन्दुरूपा-त्रयवत्वे ऽपि चिदंशाख्यबिन्दुस्वरूपा ततः शब्दशब्दार्थकारणं सर्वसृष्ट्युपयोग्यावस्थाविशेषरूप चेतरभिन्नं शब्दब्रह्मापरपर्यायप-रानामधेय वर्णादिविशेषरहित ज्ञानप्रधान नादमात्रमुत्पन्नमित्य-र्थः। नन्वेवं कथ नित्यत्वमत आह। नित्यत्वमिति। अर्थेनेति। अर्थेन सहाप्रविभक्त तत्त्व स्वरूप यस्याः सा। एतेन परारूपत्वमुक्तम्। ता-मेकां अन्ये नानारूपां विदुरित्यर्थः। तत्तद्रूपेण। विशिष्य शब्दार्थो-भयरूपेण। सा। वाक्। चतुर्विधा। परा पश्यन्ती मध्यमा वैखरी च तत्रादौ वैखरीस्वरूपमाह। प्राणेति सार्द्धेन। प्राणश्चापानश्च तयोर-न्तर समानश्च तेषु सदास्थितवती ततः स्थानेषु कण्ठादिषु वायौ विवृते पृथक्त्वे सति स्वीकृता वर्णपरिग्रहा प्रयोक्तृणां या प्रा-णवृत्तिः सा निबन्धनं कारण यस्याः सा वैखरी वाक् इत्यर्थः। मध्यमामाह। केवलमिति। तत्तदर्थतत्तच्छब्दविशेषोल्लेखिनी बुद्धिः उपादान शब्दब्रह्म तयोर्यः क्रमस्तद्रूपमनुपश्चात्पतति स्वी-करोति सा प्राणस्य वृत्तिवर्त्तनमनुक्रम्य मध्यमावाक् हृद-यदेशे तिष्ठतीत्यर्थः। पश्यन्तीमाह। अविभेति। यतः सर्वस्यावक्रम उक्तरूपस्संहृतो यया अत एवाविभागात् का-र्यकारणयोर्विभागरहिता पश्यन्तीत्युच्यते। परामाह। स्वरूपेति। अन्तः मूलाधारे ज्योतिःस्वरूपा अनयायिनी उक्तरीत्या सा परा-वागित्यर्थः। नन्वनयोः श्रुतिभारतयोस्तत्र तत्र नोपलम्भो ऽत आह। एते चेति। वर्णसंशय इत्यनेन पराख्यः शब्दब्रह्मरूपः स्फोट उक्त। उक्तहरीग्रन्थार्थे कैयटविरोध परिहरति। योग्यतेति। ननु श-

ब्दार्थयोस्तादात्म्यस्य तादृशस्याङ्गीकारे तत्त्वमसीत्याद्यर्थज्ञाना-भावात्तद्ग्रहे कथमस्मदादीनां बोधोऽत आह । तत्त्वमिति । अस्यो-भयत्रान्वयः ॥ १८ ॥

तादात्म्यग्रहोपाय । **तद्ग्रहश्च नेह नानास्तीत्यादिनिषेधवाक्य-मनने सति शमदमादिसम्पन्नस्यातिशुद्धचित्तस्यैवेति न दोषः । यद्वा शब्दाद्विशिष्टबोध एव, अखण्डार्थस्तु मानसबोधविषय एव । यद्वा निषेधवाक्यसहकारेण धर्मोपलक्षिते शक्तिग्रहात् तदुपलक्षिताखण्डार्थस्यैव बोध इत्यादिद्रष्टव्यम् ।**

**तादात्म्यमूलकस्य सम्बन्धत्वे अर्थभेदात्तादा-त्म्यापन्नशब्देषु भेदौचित्येनार्थभेदाच्छब्दभेद इत्युपप-द्यते । समानाकारत्वमात्रेण तु एको ऽयं शब्दो नानार्थ इति व्यवहारः । तस्य निरूपकाश्रयभेदाभ्यां भेद इत्येके ॥ १९ ॥**

( कुं० टि० ) ननु तत्त्वमसीत्यादिवाक्यश्रवणे ऽस्मदादी-नामप्यखण्डब्रह्मबोधापत्तिरत आह । तद्ग्रहश्चेति । वाक्य-मननं, वाक्यार्थमननम् । तच्च साधकबाधकप्रमाणोपन्यासरूपयु-क्तिभिरनुचिन्तनम् । शमो ऽन्तरिन्द्रियनिग्रहः । दमो बहिरिन्द्रि-यनिग्रहः । सम्पन्नस्येति ।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः ॥

इति वचनेन कर्मसहितस्यैव तत्त्वज्ञानस्य मोक्षहेतुत्वात् । ननु वाक्यजन्यज्ञानस्य कथं संसर्गानवगाहित्वमितिचेत् । सत्यम् । तात्पर्यविषयत्वमेव वाक्यजन्यज्ञाने तन्त्रम् । अस्ति चात्रापि वि-शुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमिदमेवाखण्डार्थत्वम् । ननु

ब्रह्मणो महावाक्यार्थज्ञानाविषयत्वे अदृष्टो द्रष्टा अश्रुतः श्रोतेति श्रुतिविरोध इति चेन्न । अविद्यया आवृतस्यैव स्वरूपस्य आवरणनिरासाय महावाक्यजन्यज्ञानविषयत्वात् । निरूपाधिकस्य तु आवरणाभावान्नास्ति श्रुतिजन्यज्ञानेन सम्बन्धः। ननु व्यवहारमार्गे वेदान्तिभिरपि पदार्थकल्पनावश्यमङ्गीकार्या । अन्यथा वाक्यार्थस्यापूर्वत्वेन वाक्यार्थे वाक्यसङ्केतग्रहाभावाद्बोध एव न स्यात् । तस्मादखण्डयोर्वाच्यवाचकभावो न सम्भवतीत्यस्वरसादाह । यद्वेति । अखण्डार्थत्वं, संसर्गानवगाहि यथार्थज्ञानजनकत्वम् । तत्त्वमसीत्यादिवाक्यमेव ब्रह्मप्रत्यक्षं जनयतीत्यद्वैतसिद्धान्तविरोधमाशङ्क्याह । यद्वेति ।

अर्थभेदाच्छब्दभेद इति । नन्वेवं वेदे पठितस्य शब्दस्य विनियोगकाले ऽर्थान्तरे प्रयोगाच्छब्दभेदापत्तिरिति चेदत्रोक्तं हरिणा ।

मन्त्रास्त्वविनियोगेन लभन्ते भेदमूहवत् ।
तान्याम्नायान्तराण्येव पठ्यन्ते कश्चिदेव तु ॥

इति मन्त्राणां सर्वेषां वेदत्वमेव । वेदे तु कश्चिदेव मन्त्रः पठ्यत इति तदर्थः । नन्वस्मिन्पक्षे एकः शब्दो नानार्थः अक्षाः पादा माषा इति भाष्यं कथमुपपद्यतामत आह । समानाकारत्वेति । वस्तुतो ऽर्थभेदाच्छब्दभेद इत्ययुक्तम् । कुटीभार्य इत्यत्र समानायामाकृतौ भाषितपुंस्कत्वाभावान्न पुम्वदिति भाष्यासङ्गतेः सामर्थ्यादिना ऐक्योपपादने बीजाभावात् इति चेत्सत्यम् । विषयेण तु नानालिङ्गकरणादित्यादिना भाष्यकृतैव शब्दैक्यं दर्शितम् । आन्यभाव्यं तु कालशब्दव्यवायादित्यादिना च शब्दभेदो दर्शितः । तस्य, तादात्म्यस्य । ततश्च शब्दभेदः तादात्म्यभेदश्चेति प्रथमः पक्षः । शक्तिनिरूपकः अर्थः शक्त्याश्रयः

शब्दः तदुभयभेदाद्भेद इत्यर्थः । यदुक्तं कुसुमाञ्जलौ शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रम इति । अस्यार्थः शक्तिभेदो न चो हेतौ अभिन्नो यतः शक्तिशक्तिमतोरभेदात् । ननु स्वभावादेवैकस्य नानाकार्यकारित्वं तत्रोक्तं स्वभावो दुरतिक्रम इति। कार्यजननस्वभावस्यानुवर्तमानत्वादेककारणेन कार्यान्तरस्याप्यापत्तिरिति तन्मते एकस्य दण्डस्य घटहिंसाद्यनेककार्यजनकत्वं न स्यात् । किञ्च सो ऽयमित्यत्र प्रत्यभिज्ञायां यदि सादृश्यमेव बीजं स्यात् तदा सो ऽयं ककार इत्यत्रापि तथात्वापत्तौ ककारादीनामप्यैक्यापत्तिरिति ॥ १९ ॥

(क०टी०) तद्ग्रहश्चेति । तादात्म्यग्रहश्चेत्यर्थः । तथा च तस्यैव बोधो नास्माकमिति न शङ्कोक्तदोषस्तदाह । न दोष इति । उक्तापि सूचितं सर्वसाधारण पक्षान्तरमाह । यद्वेति । विशिष्टे शक्त्यग्रहेण ततो ऽपि लाघवादाह । यद्वेति । तादात्म्यमूलकस्य वाच्यवाचकभावस्य न तु परोक्तस्य । नन्वेवमेकस्य नानार्थत्वधीः कथमत आह । समेति । तस्य । तादात्म्यस्य । क्वचित्तथैव पाठः ॥ १९ ॥

तादात्म्यभेदपक्ष । अन्ये त्वेकत्रैवाम्रफले रूपरसगन्धादीनां भिन्नानां तादात्म्यवत् एकत्रैव शब्दे ऽनेकार्थनिरूपितानि भिन्नानि तादात्म्यानीत्याहुः । परे तु निरूपकभेदे ऽपि तादात्म्यमेकमेवेति शक्त्यैक्यमेवेत्याहुः । हलोनन्तरा इति सूत्रे सरूपसूत्रे च भाष्ये सूचितमिदं पक्षत्रयम् । सर्वजातीयैः सङ्केतैरस्य सम्बन्धत्वेनैव ज्ञानं तदेव च बोधसाधनमिति बोध्यम् । न च तयोस्तादात्म्यस्वीकारे समव्याप्ततया शब्दादनुमानमेव स्यादर्थस्येति प्रमाणान्तरत्वभङ्गः । पक्षधर्मताज्ञानाद्यनपेक्षतया तस्य प्रमाणान्तरत्वात् । सिद्धिसत्त्वे इच्छां विनापि बोधदर्शनाच्च ॥ २० ॥

( कुं० टी० ) भिन्नानि तादात्म्यानीति । अर्थभेदे ऽपि न शब्दभेदः । अनन्तव्यक्तिकल्पनापत्तेस्तस्मादेकवृन्तगतानेकफलवदेकस्मिन् शब्दे नानार्थसम्बन्ध इति भावः । अस्मिन्पक्षे तद्यः सारण्यके ससीमके ग्रामशब्दो वर्तते तमभिप्रेत्योच्यते अनन्तराविमौ ग्रामाविति भाष्यं व्यक्तिभेदमारोप्य । अत्र शब्दैक्यमते पक्षद्वयं शक्यतावच्छेदकभेदे ऽपि शक्तिरेकैव शक्यतावच्छेदकभेदाच्छक्तिरपि भिन्नैवेति । शक्यतावच्छेदकं च शक्यतावच्छेदकतापर्याप्त्यधिकरणं नातः सूर्याचन्द्रमसोर्भेदात्पुष्पवन्तपदे नानार्थता । आद्यपक्षे यथा वायौ रूपसमवायसत्त्वे ऽपि रूपनिरूपितत्वविशिष्टसमवायो नास्तीति रूपवत्ता बुद्धिर्न भवति एवं तदर्थनिरूपितत्वविशिष्टशक्तिस्मरणाभावादेकार्थबोधकाले ऽपरार्थबोधः । शक्तिभेदाच्च नानार्थत्वव्यवहारः सर्वार्थनिरूपितवृत्तीनां वर्तत इत्येकशब्दोपात्तत्वादेकत्वं न्याय्यमित्याहुः । किञ्च शक्तिभेदे गौरवमित्यपि बोध्यम् । सर्वजातीयैरिति । ईश्वरकृतानामस्मदादिकृतानां च सङ्केतानां नानाविधसङ्केतानां च सङ्केतत्वेनैव सम्बन्धतेत्यर्थः ।

समव्याप्ततयेति । सहचरिततयेत्यर्थः । आनयपदं घटसम्बद्धानयनपदार्थबोधकं घटपदसम्बद्धत्वादित्येवं व्याप्येन शब्देन व्यापकस्यानुमानादिति भावः । अत एवोक्तं गौतमेन प्रदाहपाटनानुपपत्तेश्च सम्बन्धाभाव इति । अग्निशब्दोच्चारणे मुखदाहापत्तेर्न शब्दार्थयोर्व्याप्यव्यापकभाव इति तदर्थः । तार्किकमते तु शब्दस्याकाशनिष्ठतया व्यधिकरणत्वान्न तेनानुमानमिति भावः । पक्षेति । पक्षः सन्दिग्धसाध्यवान् । पक्षधर्मताज्ञानं, हेतोः पक्षवृत्तित्वज्ञानम् । अर्थव्याप्यशब्दवदिदमिति परामर्श विनापि शाब्दबोधान्न तस्यानुमितित्वमिति भावः ।

नन्वियमनुमितिर्व्याप्तिज्ञानाद्यनपेक्षा विलक्षणैव । अन्यथा भिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्या अनुमितिसामग्र्याश्च प्रतिबन्धकताद्वयकल्पने गौरवमत आह । सिद्धिसत्त्वे इति । पर्वते वह्निनिश्चयोत्तरं पर्वते वह्न्यनुमितिर्जायतामितीच्छयैवानुमितिर्भवति शाब्दबोधस्तु निश्चयसत्त्वे ऽपीच्छां विनैव भवतीति वैषम्यमिति भावः । यद्यपि शब्दार्थयोस्तादात्म्याभावे ऽपि घटमानयेत्यादिपदान्यर्थविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वादित्यनुमाने वैयधिकरण्याभावादनुमितिः सम्भवति, तथापि शब्दार्थयोस्तादात्म्ये व्याप्यव्यापकभावस्य झटित्युपस्थितिरित्यतः तत्पक्षे निराकरणमिदम् ॥ २० ॥

(क० टी०) आश्रयाभेदेऽपि निरूपकभेदादेव भेद इत्यर्थभेदे ऽपि शब्दैक्यमिति पक्षमाह । अन्ये त्विति । आदिना स्पर्शसंख्यादः । तादात्म्यवत् । तादात्म्यानीवेत्यर्थः । अन्वर्थकतादात्म्यमादाय सर्ववत्ताबुद्धिप्रसङ्ग इति भावः । पक्षद्वयादपि लाघवादाह । परेत्विति । अपिराश्रयभेदसमुच्चायकः । एकमेवेति । स्वतो भेदस्तु न गौरवात् । तत्तन्निरूपितत्वविशिष्टतादात्म्यसम्बन्धेन तद्वत्ताविरहान्नोक्तापत्तिरितिभावः । अत्र मानमाह । हलो ऽनन्तेति । तत्र हि सर्वत्रातज्जातीयक व्यवधायक भवति कथमनन्तराविमौ ग्रामाविति ग्रामशब्दो ऽय बह्वर्थ अस्त्येव शालासमुदाये वर्तते इत्याद्युक्त्वा तद्यः सारण्यक इत्याद्युक्तम् । केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्रत्यभिज्ञानं तु सामान्यनिबन्धनम् । अन्ये त्वेकशब्दत्वम् । तत्र चानेकशक्तियोगः एकशक्तित्व वेति मतविकल्पः । तत्र यदा एकशब्दत्वपक्षस्तदा तद्यः सारण्यक इति भाष्य शक्तिभेदादुपचरितभेदाश्रयम् । भेदपक्षे तु ग्रामशब्दो ऽय बह्वर्थ इति भाष्यमभिन्नसामान्यनिमित्तीकृत्वाध्यवसायाश्रयमिति कैयटेनोक्तम् । ग्रामशब्दो ऽयमित्यस्य तद्य सारण्यक इत्यस्याविरोधायाह । केचिदिति । अन्यायश्चानेकार्थ

त्वमिति तद्भावः । सामान्यं च ग्रामशब्दत्वादि । अन्ये त्विति । व्यक्तिभेदकल्पनायां गौरवमिति तद्भावः । तत्र चेति । निरूपकभेदाच्छक्तिभेद इति भाव । एकेति । समवायैकत्वनये रसो रूपवानित्यादिप्रयोगवदन्यार्थबोधकाले ऽन्यार्थबोधो वारणीयः । तदर्थसम्बन्धेन शक्यग्रहादतत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यहार इति भाव । तत्र यदेति । एकशक्तित्वपक्षे त्वर्थभेदादपचरितभेदाश्रयामिति बोध्यम् । ग्रामशब्दो ऽय बह्वर्थ इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां वर्तत इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्तनक्रिया अस्तिक्रियायाः कर्त्रीत्युद्द्योते उक्तम् । एव सरूपसूत्रे ऽपि बोध्यम । ननु तादात्म्यमूलकशक्तिज्ञानत्वेनैतज्ज्ञान न बोधजनकमत आह । सर्वेति । भेदघटितसङ्केतैरध्यासङ्केतैश्चेत्यर्थः । अस्य । तादात्म्यमूलकसम्बन्धस्य । एतेनोक्तव्यावृत्ति । एवमग्रे ऽपि । तदेवेति । तत्त्वेन ज्ञानमेवेत्यर्थः । अनुपपत्तिग्रहस्य तदभावे एव सत्त्वमिति भाव । वैशेषिकरीत्या शङ्कते । न चेति । तयो. शब्दतदर्थयोः । अनुमानमेवेति । इत्थ तत्प्रयोगः घटमानयेत्यादिपदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् घटमानयेत्यादिपदकदम्बवदिति । तथाचानेन संसर्गज्ञानसिद्धौ ज्ञानावच्छेदकतया पदार्थससर्गसिद्धि सम्भवतीति शब्दो न पृथक्प्रमाणमिति भावः । तदाह । प्रमाणन्तेति । नैयायिकरीत्योत्तरयति । पक्षेति । आदिना व्याप्त्यादिप्रतिसन्धानपरिग्रह । तथा च तदभावदशायामपि शाब्दबोधस्यानुभविकतया तदानीमनुमितिसामग्र्यभावेन तत्तदसम्भवाच्छब्दस्य प्रमाणान्तरत्वमावश्यकम् । तदाह । तस्येति । शब्दस्येत्यर्थः । ननु शब्दस्य प्रमाणान्तरत्वे सर्वत्र शाब्दबोधजनकसामग्र्यन्तरकल्पने गौरवमिति सर्वत्र शाब्दबोधस्य व्याप्त्यादिप्रतिसन्धानकल्पनमेव सम्यक् । तथा सति क्लृप्तसामग्र्यैवोपपत्तौ सामग्र्यन्तराकल्पनेन लाघवादत आह । सिद्धीति ॥ २० ॥

प्रत्यक्षसमाग्री न शाब्दबोधप्रतिबन्धिका । किञ्च पदमात्रात्पदार्थप्रत्ययस्य जायमानस्यानुमितित्वासम्भवः । परेभ्यः स्मृतिरे-

वेति तु न युक्तं तत्तानुल्लेखात् वाक्यादपितदापत्ते-श्च । किञ्च शाब्दयामीत्यनुव्यवसायान्न स्मृतित्व-मनुमितित्वं वा तज्जन्यप्रत्ययस्य । किञ्च तथानुव्य-वसायप्रयोजिकायाः शाब्दत्वजातेस्तदवच्छिन्ने आ-काङ्क्षादिज्ञानहेतुत्वस्य च कल्पनावश्यकत्वे तद्व्यत्य-नुमितित्वस्य व्याप्तिस्मृतित्वस्य च कल्पनागौरवम् । किञ्च सिद्धिसत्त्वे ऽपि शाब्दबोधोदयेनानुमितेश्चा-नुदयेन सिद्धिप्रतिबध्यतावच्छेदककोटौ शाब्दाति-रिक्तत्वविशेषणेन गौरवम् । न च तत्प्रत्यक्षादिज्ञान-नाशादेव तत्रानुमितिः अनुभवविरोधात् । सर्वत्र तथापत्तेश्चेति दिक् ॥ २१ ॥

( कुं० टी० ) ननु सिद्धिसत्त्वे ऽनुमितिरिव शाब्दबोधो ऽपि न भवति समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वेन तदन-न्तरं शाब्दबोधस्यानुपयोगादत आह । किञ्चेति । ननु पदश्रवणा-नन्तरं पदार्थस्मरणे एते पदार्थाः परस्परं संसर्गवन्तः आका-ङ्क्षादिमत्पदस्मारितत्वादित्यनुमानमस्त्वित्यस्वरसादाह । पदमा-त्रादिति । व्याप्तिस्मरणादिकं विनापीति भावः । शाब्दबोधे पदार्थस्मरणं व्यापारः तथा च पदार्थानां स्मृतिरेव नातिरि-क्तप्रमितित्वमिति तार्किकमतं निराकरोति । स्मृतिरेवेति । एक-सम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात् । ननु पदेभ्यो ऽर्थे स्मृते ततो ऽनुमितिः कस्मादित्यत आह । न युक्तमिति । कि-ञ्चैतन्मते पदार्थस्मरणमेव शाब्दबोधहेतुः तथा चावान्तरवा-क्यार्थबोधकाले तस्य नष्टत्वात्ततो महावाक्यार्थबोधो न स्यात् तस्मात्पदप्रयोज्या उपस्थितिरेव हेतुः सा चावान्तरवाक्यार्थ बोधरूपैवेत्यदोषः । तत्तानुल्लेखादिति । तत्तां बुध्या विषयीकृत्यै-

व स्मरणोद्यादिति भावः। वाक्यादपीति।तथा च वाक्यादपि स्मरणस्यैवापत्तौ अनुमितिशाब्दबोधयोरुच्छेद इत्यर्थः। न चापूर्ववाक्यार्थस्थले पूर्वमनुभवाभावात्स्मरणासम्भव इति वाच्यम्। खण्डशः प्रसिद्धाना पदार्थानां संसर्गाणां च स्मरणसम्भवात्।

तथानुव्यवसायेति। तादृशानुव्यवसायात् शाब्दत्वजातिः कल्पनीयैव तदवच्छिन्नं प्रति आकाङ्क्षादिज्ञानस्य च हेतुत्वमवश्यं कल्पनीयमेवेति किमनुमितित्वादिकल्पनयेत्यर्थः। सिद्धिसत्त्वे ऽपीति। पर्वते वह्निज्ञानान्तरमनुमितिर्न भवति शाब्दबोधस्तु शब्दप्रयोगानुपातीदुर्निवार इति भावः। ननु सिद्धिसत्त्वे ऽपि पदार्थानुमितिवत् शाब्दबोधो ऽपि सम्भवतीति चेन्न।अनुमित्सायां सत्यामेवानुमितेरुदयात्। परार्थानुमितौ पर्वतो बह्निमान्धूमात् यो यो धूमवान् सो ऽग्निमानित्येवं पञ्चावयवात्मकं वाक्यं प्रयुज्यते शाब्दबोधस्तु परप्रयुक्तात् वाक्यात्स्वस्य भवतीति भेदात्। प्रतिबध्यत्वेति। शाब्दातिरिक्तज्ञानं प्रति सिद्धिः प्रतिबन्धिकेति वक्तव्यं स्यादित्यर्थः।

नाशादेवेति।ज्ञानस्य क्षणिकत्वात् प्रत्यक्षनाशे क्षणानुमितिरित्यर्थः। ननु एकक्षणविलम्बेऽनुभवविरोधो नास्तीत्यत आह। सर्वत्रेति। सिद्धिनाशानन्तरक्षणे एवानुमितेरापत्तेस्सिषाधयिषाकाले ऽप्यनुमितिर्न स्यादित्यर्थः। अत एव यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षं ततः सिषाधयिषा तत्रानुमित्युत्पत्तये सिषाधयिषाविरहविशिष्टसिद्ध्यभावकल्पनेति तार्किकाः। ऋष्यादिव्यवहारात् शक्तिग्रह इति पूर्वमुपपादितम्। ऋष्यादिव्यवहारश्च साधुष्वेवेति साधूनामेव वाचकत्वम् ॥२१॥

(क० टी०) ननु सिद्धिप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वं निवेश्यते इति नाय दोषो ऽत आह। किञ्चेति। मात्रशब्दो ऽवधार-

णे । हेतोरुक्तस्यासम्भवादिति भावः । ननु पदात्पदार्थोपस्थितिर्नानुमितिः किन्तु स्मृतिरिति नाय दोषो ऽत आह । पदेभ्य इति । एवो ऽनुमितिशाब्दबुद्धिनिरासाय । तत्तेति । सोऽयमित्यादाविव स इत्येवमित्यर्थः । ननु तदभावे ऽपि फलानुरोधेन तदङ्गीकारो ऽत आह । वाक्यादपीति । अपि पदसमुच्चायकः । तदापत्तेश्च । स्मरणापत्तेश्च । सम्बन्धिज्ञानतयैव पदज्ञानवत्तदुपयोग इति भावः । ननु फलबलात्पदार्थोपस्थितेः पूर्वं नियमतो वाक्यार्थांशोद्बोधकासमवधानकल्पमत एव घस्नसादौ हरे ऽवेत्यादौ विशिष्टस्यैव संसर्गांशे उद्बोधकासमवधानात्प्राक् पदार्थोपस्थितिमात्र ततस्तदंशे ऽप्युद्बोधकसमवधाने तद्विषयको वाक्यार्थबोधः । अत एवापूर्वो वाक्यार्थ इति प्रवादः सङ्गच्छते । अपूर्वत्व च शाब्दबोधप्राक्क्षणवर्तिजनकशब्दजन्यस्मृत्यविषयत्वमिति न ततः स्मृतिरत आह । किञ्च शाब्देति । शाब्दयामीत्याकारकशाब्दत्वावच्छिन्नावगाहिसर्वसिद्धानुव्यवसायेन शब्दजातिसिद्धेरत एव तदवच्छिन्नवरणतया शब्दस्य प्रमाणत्वसिद्धिरिति भावः । तज्जेति । शब्दजेत्यर्थः । अत एव नानुमित न साक्षात्कृत किन्तु शब्दादेवावगतमित्यनुभवः सङ्गच्छते । ननु यथा पदार्थोपस्थितेः स्मृतित्वमते शब्दजन्यत्वमात्रेण पर तस्यामपीतरस्मृतिविलक्षण शाब्दयामीति व्यवहारः न तु वाक्यज्ञानपदार्थोपस्थितिकार्यतावच्छेदकीभूतजातिविशेषाक्रान्तता तस्यास्तथा चास्मृतावपि तद्व्यवहारो ऽत आह । किञ्चेति । तथेति । शाब्दयामीत्याकारकेत्यर्थः । तदवच्छिन्ने तद्वृत्तीति । शाब्दवृत्तीत्यर्थः । आदिना पक्षधर्मताज्ञानादि सङ्ग्रहः । ननु नेद गौरवमुक्तयुक्तिभ्यामत आह । किञ्चेति । इद गौरवं विघटयितु शङ्कते । न चेति । तत्प्रत्यक्षेति । अनुमितिविषयार्थ प्रत्यर्थः । आदिनानुमित्यादिनां सङ्ग्रहः । नाशादेवेत्येवेन सिद्धेः प्रतिबन्धकत्वनिरासः । तदानी नाशरूपकारणभावादेव तदापत्तेरभावात् । तत्र । सिद्धिस्थले । अनुभवेति । सिद्धिसत्त्वे इच्छासत्त्वे ऽपि अनुमितेरनुभूयमानत्वेन तस्यैव तद्धेतुत्वमित्यस्यानुभवविरुद्धत्वात् । ननु विसत्राद्यनुभवो नेष्टसाधकोऽत आह । सर्वत्रेति । यावत्प्रतिबध्यप्रतिबन्धकभावस्थले इत्यर्थः । तदापत्तेश्चेति । तत्तदभावस्यैव हेतुत्वापत्तेश्चेत्यर्थः । तथा च प्रतिबध्यप्रतिबन्धकभा-

यमात्रोच्छेदापत्तिरिति भाव. । किञ्चानुमितेरसम्भवात् । न च गौरस्तितावान्स्वधर्मिकान्वयबोधानुकूलाकाङ्क्षाद्याश्रयपदोपस्थापितत्वाद्याप्त्यभावग्रहदशायां गौरस्तीत्यादितो ऽन्वयबोधानापत्तेः । पदजन्या हि पदार्थोपस्थितिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते न तु ज्ञाता प्रमाणाभावात् । पदैरनुपस्थितस्यापि तदुपस्थितत्वग्रहादन्वयधीप्रसङ्गाच्च । न च गौ पदमस्तित्वद्गो ज्ञानपूर्वकोच्चारणविषय. अस्तिपदसाकाङ्क्षपदत्वात् यन्नैवं तन्नैव यथा आकाशमित्यनुमानमिति वाच्यम् । गवादिपदानां ज्ञानपूर्वकोच्चारितत्वाद्यभावनिश्चयदशायां जायमानसर्वज्ञानानुभवसिद्धबोधस्यासङ्गत्यापत्तेः । गवादिनिष्ठमुख्यविशेष्यताशालिबोधस्यैवमप्यनुपपादनाच्च । अपि च शाब्दबोधोत्तर नानुमिनोमीत्यनुव्यवसायान्न शाब्दत्वमनुमितित्वव्याप्यम् । न च तस्य व्याप्त्यादिज्ञानघटितसामग्रीजन्यानुमितित्वावच्छिन्नाभावविषयकत्वान्न दोष इति वाच्यम् । व्याप्त्यादिप्रतिसन्धानविरहदशायामपि तस्योत्पत्त्या तद्विषयकत्वासम्भवादिति दिक् । तदाह । दिगिति ॥२१॥

अपभ्रंशे ऽपि शक्तिसत्त्वम् । **सा च शक्तिः साधुष्विवापभ्रंशेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात् । व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम् । अत एव बालानां तिरश्चां च बोधः । न हि तेषां तदैव तत्सम्भव इत्यन्ये । न च साधुस्मरणात्तो बोधः ।**

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।**
**अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः ।**

**इति हर्युक्तेः । अनुमानमत्र ज्ञानं साधुविषयस्मरणं वेत्यर्थः । तद्विदां साधु विदाम् । असाधोः साधुप्रकृतिकत्वात्सादृश्येन तज्ज्ञानमिति वाच्यम् । साधुस्मरणं विनापि बोधानुभवात् । तद्वाचकसाधु-**

शब्दमजानतां बोधानापत्तेश्च । तद्वाचकत्वेन स्मरणं तु नार्थोपस्थापकं, शक्ततावच्छेदकानुपूर्व्यग्रहात् । तद्वाचकसर्वनामस्मरणाननुभवाच्च । उच्चारितस्यैव बोधकत्वेन स्मृतसाधुतो बोधासम्भवाच्च । न च शक्तिभ्रमाद्बोधः, पूर्वभ्रमाच्चोत्तरभ्रम इति पामराणां शक्त्यग्रहे ऽपि तद्रूपोपपत्तिरिति वाच्यम् । घटत्वादिविशिष्टघटादिरूपार्थनिरूपिताया घटादिपदवृत्तित्वेन गृहीताया भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च गगरीपदादौ भ्रमानुपपत्तेः । यदि तु अशक्त्या केनचिद्गगरीति प्रयुक्ते ऽम्बाम्बेत्यादाविव घट इति साधुशब्दस्मरणात्प्रयोज्यस्य बोधे तटस्थस्य गरीशब्दादेवास्य बोध इति भ्रमेण यस्य शक्तिभ्रमस्तन्मूलकश्चान्येषामपि । तदुक्तं हरिणा ।

तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशका इति । इवशब्देन तदुपगमस्य भ्रमत्वं सूचितम् । तादात्म्यस्य शक्तित्वं च स्पष्टमेवोक्तम् ॥ २२ ॥

(कुं०टी०) इदानीं मतान्तरमाह । सा चेति । ननु व्यवहारदर्शनस्य कथं शक्तिग्राहकत्वं तद्बोधकशब्दाभावादशक्तिग्रहाभावे इष्टसाधनत्वग्रहाभावात्स्तनपाने प्रवृत्त्यनापत्तेरत आह । व्यवहारदर्शनेति । व्यवहारदर्शनमुद्बोधकविधया स्मारकमेवेति लाघवं जीवनादृष्टमेवोद्बोधकमित्यर्थः । अत एव । पूर्वजन्मानुभूतस्मरणस्वीकारादेव । अन्यथा इष्टसाधनताज्ञानाभावात्स्तनपानादौ प्रवृत्तिर्न स्यात् । पश्वादीनां च जडप्रायाणां प्रतिनियतजात्यनुसारेणैव नियतैव काचित्प्रतिभा बोध्यते अतस्तेषामप्यनादिवासनैव बीजमिति भावः । तदैव । आद्यबोधकाले एव ।

तत्सम्भवः । शक्तिग्रहसम्भवः । न चेति । वाच्यमित्यत्रान्वयः। तदुक्तं हरिणा ।

असाधुरनुमानेन वाचकः कैश्चिदिष्यत इति ।

वाचक इत्यस्य बोधक इत्यर्थः । अयम्भावः न हि विद्वांसोऽपभ्रंशादेव साक्षादर्थं पश्यन्ति इति नापशब्दानामर्थेन सम्बन्धः। अपशब्दास्तु सादृश्यात्साधुशब्दमनुमापयन्ति साधुस्मरणादिति यदुक्तं तत्रैव मानमाह । ते साधुष्विति । असाधवः । साधुषु । साधुस्मरणेन । बालः अव्यक्तं भाषते साधुविदां व्यक्ते निश्चयो भवतीत्यर्थः । तज्ज्ञानम् । साधुस्मरणम् ।

विनापीति । अयम्भावः अर्थगत्यर्थं शब्दप्रयोगः । अर्थावगतेश्चापशब्देभ्योऽप्यविशिष्टत्वात्तेषामप्यर्थेन सम्बन्ध इति । एतदर्थबोधकं किञ्चित्साधुपदं भविष्यतीत्यनुमानाद्बोध इति मतं निराकरोति । नार्थेति । शक्ततावच्छेदिकाया आनुपूर्व्या ज्ञाने एव वाच्यस्योपस्थितेरित्यर्थः । तद्वाचकतदादिपदस्मरणाद्बोध इत्यपि निराकरोति । अननुभवाच्चेति । ननु पामराणां घटादिपदे शक्तिग्रहाभावात्कथं तत्सादृश्यमूलको गगरीशब्दे भ्रम इत्याशङ्क्याह । पूर्वपूर्वेति । यस्य शक्तिशब्दपूर्वको भ्रमस्तद्वदित्यर्थः । घटत्वविशिष्टेति । घटनिरूपिताया घटपदनिष्ठायाः शक्तेः गगरीपदे भ्रमो न सम्भवति वर्णभेदरूपविशेषदर्शनसत्त्वात् । न हि करचरणादिमत्त्वनिश्चयानन्तरं स्थाणौ पुरुषत्वभ्रमो भवति ।

यदि चेति । अशक्त्या गगरीशब्दोऽनेनोच्चारित इत्याद्यपुरुषेण ज्ञाते ततो द्वितीयपुरुषस्य गगरीशब्द एव बोधक इति भ्रम इत्यर्थः । तादात्म्यमुपगम्यैवेति । अपभ्रंशाः साधुशब्दैरभेदमिवापन्ना अर्थस्य प्रकाशका इत्यर्थः । तादात्म्यस्येति ।

अयम्भावः अयमर्थ इत्यभेदेन व्यवहाराद्ध्यासलक्षणे शब्दार्थयोस्तादात्म्ये स एव मुख्यः। सम्बन्धान्तरकल्पने तु तस्यापि सम्बन्धान्तरं कल्प्यमित्यनवस्थानात् । प्रतीतावर्थस्यापि विषयभावेनापेक्षणात्परत असामान्यात्सम्बन्धत्वव्यवहार इवशब्देनेति । साध्वसाध्वोस्तादात्म्यस्य तात्त्विकत्वे चासाधूनामपि बोधकत्वमागतमिति ग्रन्थकार एव आहार्धेन। तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशका इत्यर्थाभिप्रायेणाह । इवशब्देनेति । इवशब्देन शक्तेर्भ्रमः सूचित इत्यर्थः ॥ २२ ॥

(क० टी) एव शक्ति निरूप्य तदाश्रयमाह । सा चेति । वाच्यवाचकभावाख्येत्यर्थः । मतान्तरमाह। व्यवेति। चस्त्वर्थे। इद दढयति। अत एवेति । शक्तिस्मरणाङ्गीकारादेवेत्यर्थः । ननु स्मरणवद्ग्रहोऽपि तेषां भवतीति किमिति तत्पक्षत्यागो ऽत आह । न हीति। तेषाम्। बालादीनाम्। तदैव। बोधकाले एव । तत्सम्भव इति। अयोग्यत्वादिति भावः । अत्र नैयायिकाः व्युत्पन्नानां साधुस्मरणात् बोधोऽव्युत्पन्नानां शक्तिभ्रमाद्बोध इति न तेषु शक्तिकल्पनेति तत्राद्यपक्ष खण्डयति । न चेति । तत. । अपभ्रशात् । वैयाकरणस्यापीदमावश्यकमिति सूचयतितुमाह । ते साधुष्विति । यद्यपि हेतव इत्यग्रे ।

तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ।
न शिष्टैरनुगम्यन्ते पर्याया इव साधव. ॥
न यत. स्मृतिशास्त्रेण तस्मात्साक्षादवाचका. ।
इत्यग्रे ऽम्बाम्बेति हरिग्रन्थे दृश्यते तथाप्यनुपयुक्तत्वादत्रानुल्लेख. ।
एव साधौ प्रयोक्तव्ये यो ऽपभ्रशः प्रयुज्यते ।
तेन साधुव्यवहित कश्चिदर्थो ऽभिधीयत ॥

इत्यस्य निश्चय इत्यस्मादग्रिमस्यैव विवक्षितार्थस्य तावतैव लाभादिति भाव । ननु स्मरणाद्बोधे ऽनुमितिघटितहर्युक्ते कथ हेतुत्वमत आह । अनुमेति । तदसम्भवात् व्याप्तिग्रहादिविलम्बेन तस्यानियतत्वाच्च अत्र तु सर्वत्रेति भाव' । तावताप्यनुभवाद्यसम्भवादाह । साध्विति। साधुनि विषयसप्तमीत्याह । विषयेति। यदा

तादृशो बाल· अव्यक्त तत्प्रभाषते तदा तद्विदां तेनापभ्रंशेन व्यक्ते साधुशब्दज्ञाने निश्चयो भवतीत्यर्थः । तद्धृदि निधायाह । तद्विदामिति । एतेन तद्राहितानां तदभावे ऽपि न क्षतिरिति सूचितम् । अत एव तस्यात्रोल्लेख । अन्यथार्धश्लोकेनैव निर्वाहे ऽस्याधिक्य स्पष्टमेव । ननु एकसम्बन्धीति रीत्या स्मरण सति सम्बन्धे ऽत्र तु न सो ऽत आह । असाधोरिति । तथाच तद्घटकयत्किञ्चिद्वर्णादिरेव साधारणधर्म इति भाव· । तज्ज्ञानम् । साधुस्मरणम् । तत्रादौ विशेषव्युत्पन्नस्थले दोषमाह । साध्विति । ननु तादृशानुभवे एव विप्रतिपत्ति, कारण विना कार्यानुभवस्य क्वाप्यभावेन मानाभावश्च, फलबलेन तस्य नियमेन कल्पन चास्तु तत्र न दोषो ऽत सामान्यव्युत्पन्नस्थले दोषमाह । तद्वाचकेति । अपभ्रंशबोध्यार्थवाचकेत्यर्थ· । ननु व्युत्पन्ना द्विविधाः तत्तद्वाचकसंस्कृतविशेषज्ञानवन्तस्तद्विकलाश्च । तत्राद्यानां तथाबोधे ऽपि द्वितीये ऽनुपपत्तिर्दत्ता सा न युक्ता तेषां सामान्यज्ञानसत्त्वेन तदर्थज्ञापकत्वेन वस्तुतस्तद्वाचकसाधुस्मरणमित्यर्थ· । स्थापकमिति । तथाच बोधः सुतरां नेति भाव· । आनुपूर्वीग्रहस्य यथा कारणत्वमावश्यकं तथाग्रे स्फुटीभविष्यति । नन्वेवमपि सर्वनामस्मृतेस्तेषां बोध इति नोक्तदोषो ऽत आह । तद्वाचकेति । बुद्धिस्थत्वेन तद्वाचकेत्यर्थ· । नन्वननुभवे विप्रतिपत्त्यादिः प्रागुक्तदोष एवात सर्वसाधारणप्रबलदोषमाह । उच्चारितेति । इद चाग्रे स्फुटीभविष्यति । एतेन फलबलेनानुमितिसामग्र्या नियमेन कल्पनमिति तन्नव्योक्तसंस्कृतैरयमर्थो न बुद्धः किन्त्वेतदुक्तभाषयेति व्युत्पन्नव्यवहाराच्चेत्यपि बोध्यम् । तस्मात्सामान्यव्युत्पन्नस्थले दोषस्तदवस्थ एवोक्तहरिस्तु परमतानुवादक इति न तद्विरोधदोष एतद्विरुद्धस्यापि हरेर्वक्ष्यमाणत्वादिति भाव· । अथ तदुक्तद्वितीयपक्षं खण्डयति । न च शक्तीति । पामराणामिति शेष· । ननु तेषा शक्तिग्रहे कथं तद्भ्रमो ऽत आह । पूर्वपूर्वेति । चस्त्वर्थे । तादिति । शक्तिभ्रमेत्यर्थ· । सिद्धान्तमतेनाह । घटत्वेति । परमते तु तत्पदार्थघटितेश्वरेच्छाया इत्यादौ बोध्यम् । घटे ऽन्वयो ऽस्या गृहीतायाः शक्तेरिति शेष । नव्यनैयायिकोक्तयुक्तिं खण्डयितुमाह । तदुक्तमिति । तेषु साध्विति । पूर्वागमसादृश्याङ्गीकारोक्ताध-

पि शक्त्युपकारकत्वेन तद्भिन्नत्वात्कथ शक्तिभ्रमो ह्युक्तो ऽत आह । तादात्म्येति । च॰ प्राग्वत् । तथोक्त्येति भावः । अत एव तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहार इति प्रागुक्तम् ॥ २२ ॥

अत्रार्थे जैनि- निमतम् । तदुक्तं जैमिनिना तदशक्तिश्चानुरूपत्वादिति । तद्भाष्यतकृता च तत्रोक्तरीत्या शक्तिभ्रम उपपादित इत्युच्यते तदा प्रत्येकं तत्तत्संस्कृतस्य तत्तदपभ्रंशेन विनिगमनाविरहात्तेषु शक्तिः । न च सकलदेशशिष्टपरिगृहीतत्वं विनिगमकम् । शवतिर्गतिकर्मा कम्बोजेषु विकार एवैनमार्या भाषन्ते इत्यादिभाष्यरीत्या तत्तद्देशनियतसंस्कृतेषु शक्तिसिद्ध्यनापत्तेः । वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्यापत्तेश्च । तत्तद्देशीयशिष्टानां तत्तद्भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं विना भ्रमत्वायोगाच्च । अत एव स्त्रीशूद्रबालानां प्रयुक्ते साधौ अर्थसंशये तदपभ्रंशेन निर्णयः ॥ २३ ॥

( कुं टी० ) तदशक्तिरिति । तस्य साधुशब्दस्य अशक्तिरशक्त्या करणापाटवेनान्यथा उच्चारणमनुरूपत्वात्समानवर्णवत्त्वादित्यर्थः । शवतिरिति । गत्यर्थकः शवधातुः कम्बोजदेशे आर्येषु तु जनपदेषु विकारे ऽर्थे प्रयुज्यते शवो मृतक इतीत्यर्थः । वाचकस्य व्यञ्जकत्वमिति । यथा

पन्थिअ ण एत्थ सत्थरमत्थिरत्थलग्गामे ।
ओणअ पओहरं पेक्खिअ उण जइ वससि ता वससु इति ।
पथिक न अत्र संस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तदा वसेति तस्यार्थः ।

अत्र पाषाणमयग्रामे आस्तरणं नास्ति पयोधरो मेघः स्तनश्चेति श्लेषः । अत्र पयोधरशब्देनोपभोगक्षमत्वं व्यज्यते तदपभ्रंशस्य पओहरशब्दस्य तत्र वाचकता व्यवहारः । शक्तिभ्रमस्यात्यन्तमसम्भवं दर्शयति । अत एवेति । प्रयुक्ते साधौ स्त्रीशूद्रबालानामर्थसंशये इत्यन्वयः । ननु यवशब्देन दीर्घशूकविशेष एव ग्राह्यो न कङ्गुरित्येतत्प्रतिपादकतदधिकरणासङ्गतिः शब्दशक्तेरुभयत्र तुल्यत्वादत आह । इदं तात्पर्यमिति । यत्तु वसन्ते सर्वसस्यानां जायते पत्रशातनमिति वाक्यशेषान्निर्णय इति तन्न । पैलवौदुम्बरौ वैश्यस्य दण्डावित्यत्र वाक्यशेषाभावात्पीलुशब्देन हस्तिनोऽपिग्रहणापत्तौ हस्तिवदस्थिदण्डस्यापि ग्रहणापत्तेः ॥ २३ ॥

( क० टी० ) अन्यसम्मतिमप्याह । जैमिनाना चेति । उक्तमित्यस्यानुषङ्गः । तदशक्तिरिति । तेषामपभ्रंशानां न शक्तिः किन्तु शक्तिभ्रम अनुरूपत्वात्तत्सदृशत्वादित्यर्थं । ननु सूत्रस्याग्रे वक्ष्यमाणसिद्धान्तभूतार्थान्तरपरतयापि सुयोजत्वमत आह । तद्भाष्येति । शबरस्वामिनेत्यर्थः । तथा चोक्तो ऽर्थ एतदनुरोधेनेति भाव । तत्र । गगर्यादौ । भाषाणां नानात्वेन गौरवनिरासायाह । प्रत्येकमिति । सस्कृतवन्महाराष्ट्रभाषाया. सर्वत्रैकत्वात् । एतेन तासां नानात्वेन भाषान्तरैर्विनिगमनाविरहान्नैकत्र शक्तिरित्यप्यपास्तम् । सस्कृते प्रत्येक भाषाभिर्विनिगमनाविरहात् । तेषु । अपभ्रंशेषु विनिगमक सस्कृते एव शक्तौ अपभ्रंशे तदभावात् । इत्यादीत्यादिना हंमतिः सुराष्ट्रेषु रंहति प्राच्यमगधेषु गमिमेव त्वार्याः प्रयुञ्जते इत्यादिपक्षस्य परिग्रहः । अनापत्तेरिति । सकलदेशशिष्टापरिगृहीतत्वात् । एवञ्च दुश्च्यवनशब्दस्यैद्रुण्डमूकादिशब्दानां मूकबधिरादौ शक्तिरपि न स्यात् शिष्टैस्तदप्रयोगात् । अत एवाप्रयुक्तत्वदोषावसरे दुश्च्यवनादिशब्दानुदाजहार प्रकाशकृत् । न च कोशप्रामाण्येन तत्र तत्कल्पनम् । शक्तिभ्रमेण कोशकृतां तत्पाठ इत्यस्यापि कल्पयितु शक्यत्वादिति भावः ।

ननु मास्तु तत्रापि शक्तिरिति भ्रान्त प्रत्याह । वाचकस्येति ।

माए घरोबअरण णत्थिात्ति साहिअ तुमए ।

ता भण किं करणिज्ज एव जेब ण वासरो थाई ॥

मातर्गृहोपकरण अद्य खलु नास्तीति साधित त्वया ।

तत्कथय किं करणीयमेवमेव न वासर. स्थायी ॥

अत्र विहारार्थिनीति व्यज्यते । अयम्भावः न सस्कृतत्व न वा भाषात्व शक्त्यवच्छेदक किन्त्वानुपूर्वी सा च भिन्नभिन्नैव सर्वत्रेति घटकलशादिपर्यायेष्विव नैकेनापरान्यथासिद्धिरिति भाषाया शक्तिरेवेति । यद्यपि वाच्यव्यञ्जकत्वे इदमुदाहृतं तत्र तथापि तेषामशक्तावव्वाच्यत्वेन तदसङ्गतिरित्याशयेन वाचकस्येत्युक्तम् । ननु तदपि तथास्त्विति वादिनं भ्रान्त प्रत्याह । तत्तदिति । निर्विचिकित्सेति । निःसन्दिग्धेत्यर्थ । विनेति । बोधकत्वस्याबाधितत्वादिति भाव' । अत एव । अपभ्रंशे शक्त्यङ्गीकारादेवेत्यर्थ. । बालानामित्यस्य व्यवहितान्वय. । प्रयुक्ते इत्यस्यान्येत्यादि । न चैवमार्यम्लेच्छाधिकरणासङ्गतिः तेनानार्यप्रसिद्धे ऽर्थे ऽशक्तत्वप्रतिपादनादत आह । अर्थेति ॥ २३ ॥

आर्यम्लेच्छाधिकरण- तात्पर्यनिरूपणम् । **आर्यम्लेच्छाधिकरणस्य तु इदं तात्पर्यम् । तत्र यद्यपि आर्या यवशब्दं दीर्घशूकेषु प्रयुञ्जते तमेव च बुध्यन्ते म्लेच्छास्तु प्रियङ्गौ तमेव च बुध्यन्ते । म्लेच्छपदेनानार्याः । तथापि आर्यप्रसिद्धेर्बलवत्त्वाद्दीर्घशूकपरतैवेति सिद्धान्तितम् । तत्र हि शबातिर्गतिकर्मेत्याद्युक्तभाष्यात् द्वयोरपि शक्तिग्रहाद्बोधेनोभयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद्वेदे तद्बोध एवोचित इति । एवञ्चानार्यैरपि यज्ञे यवा एवोपादेयाः पूर्वयज्ञे तु अनार्यैः प्रियङ्गव एवोपादेया इति विशेषः । तदुक्तं हरिणा ।**

**शब्दतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिता इति ।**

आर्या रङ्गाशिष्टत्वात्तत्प्रसिद्धेर्बलवत्त्वमिति बोध्यं न तु अनार्यप्रसिद्धे ऽर्थे ऽशक्तत्वे ऽसाधुत्वे वा तात्पर्यम् । जैमिनिरप्याह तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यादिति । यवशब्दे उभयथा शब्दार्थावगमाद्विकल्पः स्यादित्यर्थः ।

एवं पूर्वपक्षे सिद्धान्तसूत्रं शास्त्रस्थानां तन्निमित्तत्वादिति । शास्त्रस्थानां शिष्टानां स शब्दार्थः वेद इति शेषः, तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च ते शिष्टा हि श्रुतिस्मृतिधारणे निमित्तमित्यर्थः । यत्तु दीर्घशूकेषु शक्तः सादृश्यात् प्रियङ्गुषु प्रयुज्यते पूर्वसस्यं क्षीणे द्वयोरप्युत्पत्तेः । तच्च तयोः सादृश्यमिति शबरस्वामी । अत्र वदन्ति तदा एकस्य गौणत्वमिति विकल्पपूर्वपक्षासङ्गतिः । किञ्च यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना उत्तिष्ठन्तीति दीर्घशूकसादृश्यसङ्गतिवाक्यशेषो ऽप्युक्तयुक्तिमूलक इति दिक् ॥२४॥

( कुं टी० ) उक्तभाष्यादिति । तेन तत्र शक्तिभ्रमो न शङ्कनीय इति भावः । द्वयोरपि । आर्यम्लेच्छयोरपि । उभयत्रापि । कङ्गौ दीर्घशूके च । साधुत्वेनेति । म्लेच्छदेशे कङ्गावेव यव शब्दः साधुरित्यर्थः । विकल्पेति । प्रसिद्धिद्वयेन विकल्पः स्यादित्यर्थः । अत्र यवशब्देन दीर्घशूकविशेष एवग्राह्यः यत्रान्या ओषधयो म्लायन्त इति वाक्यशेषादिति सिद्धान्तितं भाष्यकृता शबरस्वामिना । एतच्च वार्तिककारो नाभ्युपैति आर्यप्रसिद्धेर्बलवत्त्वादेव निर्णये वाक्यशेषोपन्यासवैयर्थ्यापत्तेः । तस्माद्यत्रार्याणामेव शब्दार्थाभिधानसंशयस्तत्रैव वाक्यशेषेण निर्णय इति । वस्तुतस्तु वारुणप्रघासिककरम्भपात्रेषु एव यव-

शब्दस्य दीर्घशूकपरता स्यात्तत्रैव वाक्यशेषसत्त्वात् न तु दार्शपौर्णमासिकद्रव्यविधायकवाक्ये तत्र वाक्यशेषाभावात् । तस्माद्वाक्यशेषो ऽभ्युच्चयत्वेनोक्त इत्यभिप्रेत्याह । आर्यप्रसिद्धेरिति ।

यज्ञे यवा एवेति । तेषामेवापूर्वजनकत्वात् । शब्दतत्त्वम् । शब्दविशेषार्थविशेषतादात्म्यम् । शिष्टाः । अतीन्द्रियार्थदर्शिनः। ते हि इन्द्रियव्यापारमन्तरेणापि शब्दार्थयोः सम्बन्धं पश्यन्ति तदुपदेशपारम्पर्याच्चास्मदादीनामपि सास्नादिव्यञ्जकसहकारेणार्थाभिव्यक्तिः । व्यवस्थिता इति । प्रमाणत्वेनेति शेषः । न तु अनार्येति । यवशब्दस्य कङ्गौ न शक्तत्वं नाप्यसाधुत्वमित्यर्थः। तेष्वदर्शनादिति । तथाच वार्तिकम् ।

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद्वयोरपीति ॥

शब्दार्थस्य लोकप्रमाणकत्वेन विरोधाभावात्समा विप्रति पत्तिः स्यादित्यर्थः ।

तेषाम् । शिष्टानाम् । अविच्छिन्नेति । पारम्पर्यायातेत्यर्थः । शब्देषु वेदेषु चेति । यवशब्दो दीर्घशूकविशेषस्यैव वाचकः स एव वेदे गृह्यत इत्याकारेत्यर्थः । एकस्य गौणत्वमिति । सादृश्यात्तु कङ्गौ प्रयोगे गौणत्वेन समत्वाभावाद्विकल्पाशङ्का असङ्गतेत्यर्थः । यत्रान्या ओषधय इति वसन्तकाले तथा सम्भवः । तथैव । पूर्वसस्यक्षये एव । अन्यथेति । प्रियङ्गूणामन्यथोत्पत्तिर्स्वीकारे भवदुक्तसादृश्यासङ्गतिरित्यर्थः । ननु आर्यप्रसिद्ध्या दीर्घशूकग्रहणे उक्तवाक्यशेषवैयर्थ्यमत आह । उक्तयुक्तीति । आर्यप्रसिद्धिवचनरूपेत्यर्थः ॥ २४ ॥

( क० टी० ) तत्रादौ तद्विषयमाह । तत्र हीत्यादिना । तत्र हीत्यस्य सिद्धान्तितमित्यत्रान्वयः । ननु म्लेच्छशब्देन प्रसिद्धार्थे

कभिन्नेषु । हेतुमाह । ते शिष्टा हीति । धारण च शब्दार्थनिर्णयद्वारा तदर्थानुष्ठातृत्वेन । तथाच तन्निमित्तत्वादिति बहुव्रीहिर्बोध्या । एतत्सूत्रव्याख्यानमन्यदीय खण्डयति । यत्त्विति । अयम्भावः शास्त्रस्थानां नैयायिकादीनां यः सः शब्दशक्यः प्रियङ्गौ प्रयोगस्तु तन्निमित्तत्वात् तन्निष्ठसाधारणधर्मनिमित्तकसादृश्यादिति सूत्रार्थ इति । शक्तः । यवशब्द । द्वयोरपि । प्रियङ्गुदीर्घशूकयोरपि । तच्चेति । तदेव चेत्यर्थ । तदा एकत्र शक्तिरेकत्र सादृश्यात्प्रयोगे एकस्य प्रियङ्गौ सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वादिति भाव. । इतरसङ्गतौ हेतुत्वबोधक. तुल्यार्थास्तु विकल्पेरन्निति न्यायविरोधादिति भाव । विकल्पेति । प्रियङ्गूणां ग्रहण दीर्घशूकानां चेत्येव रूपेत्यर्थः । ननु गौणत्वमुख्यत्वकृतभेदे तुल्यप्रयोजनकत्वाद्विकल्पसङ्गतिरेवात आह । किञ्चेति । यत्र । देशे । अथ तल्लक्षणानन्तर तत्रेति शेष । एते । दीर्घशूकाः । इतीत्यस्य वेद इत्यत्रान्वयः । अन्यथा तथोत्पत्त्यङ्गीकारे । नन्वस्तु तद्ग्रन्थासङ्गतिस्तथापि यत्रान्या इति वेदासङ्गतिरेव तेनोभयलाभात्, अधिकरणमते तु एकस्यैव लाभ इति विरोधश्चात आह । वाक्येति । यत्रान्या इत्यादीत्यर्थः । उक्तयुक्तीति । शिष्टार्यप्रसिद्धिबलवत्त्वरूपयुक्तिमूलक इत्यर्थः । तां युक्तिं हृदि निधाय तामेव दर्शयतीति भावः । अन्यथा तद्विरोधादधिकरणासङ्गतिरेव स्यात् । किञ्च लोकप्रयोगपरतया सो ऽपि साधारण एवास्तु । एतेनोक्तवाक्यशेषाद्दीर्घशूके शक्तिरिति निर्णय कङ्गौ तु शक्तिभ्रमात्प्रयोगः नानाशक्तिकल्पने गौरवात् हर्यादौ त्वविनिगमकान्नानाशक्तिकल्पनमिति नैयायिकोक्तमपास्तमुक्तयुक्ते । किञ्चार्यम्लेच्छाधिकरणमपि सर्वेषां शक्त्यङ्गीकारे एव सङ्गतमन्यथा म्लेच्छबोधस्य भ्रममूलकत्वेन भ्रान्तिविषयरजतज्ञानस्येव वस्त्वसाधकत्वेन कस्या बलवत्त्वमिति विचाराप्रवृत्ते । तदाह । दिगिति ॥ २४ ॥

ऋष्यार्यम्लेच्छाना तुल्य शिष्टत्वम् । न्यायभाष्यकारो ऽपि आप्तोक्तः शब्द इति सूत्रे ऽर्थसाक्षात्कारवानाप्तः स यथा दृष्टार्थबुबोधयिषया यं प्रयुङ्क्ते स प्रमाणशब्द इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणमित्याह ।

तत्र ऋषिर्वेदः म्लेच्छो ऽपशब्दवक्ता। ततः सूत्रकृता सामयिकः शब्दार्थप्रत्यय इति प्रमाणत्वेन लक्षितशब्दमात्रजप्रत्ययस्य तुल्यमेव सामयिकत्वमुक्तम्। सामयिकत्वं समयगृहीतसम्बन्धजन्यत्वमिति न ऋषीणां विरोधः। काव्ये च्युतसंस्कृतिदोषस्य दोषकताबीजं तु साधुपदसमुदायमध्ये ऽसाधुपदर्शनेन विप्रसभायां चण्डालदर्शनेनेव हृदयोद्वेगकर एवेति बोध्यम्।

साधुत्वं नापभ्रंशानां शिष्टैर्धर्मबुद्ध्या तदप्रयोगात्। न चैवं ततो बोधानापत्तिरसाधुत्वनिश्चयस्य तत्प्रतिबन्धकत्वादिति वाच्यम्। तत्सत्त्वे ऽपि ततो बोधदर्शनेन तस्य तदप्रतिबन्धकत्वात्। साधुत्वं च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदकजातिविशेषः। तदुक्तमेकः पूर्वपरयोरिति सूत्रे भाष्ये एकः शब्दः सम्यक् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीति। सम्यक् ज्ञातः सम्यक्त्वेन साधुत्वेन ज्ञातः शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणानुसंहितः सुप्रयुक्तः शिक्षोक्तरीत्या प्रयुक्तः तस्य च विशिष्टप्रयोगकोशव्याकरणाद्यनुमापकम् ॥ २५ ॥

(कुं०टी०) आप्तोपदेश इति। आप्तस्य भ्रमादिशून्यस्य य उपदेशः स शब्द इति तदर्थः। स इति। आप्तोऽस्मिन्नर्थे यं शब्दं प्रयुङ्क्ते स तत्र प्रमाणमित्यर्थः। यथेति। यथा येन प्रकारेण दृष्टं दर्शनं यस्य तादृशो यो ऽर्थ इत्यर्थः। समानमिति। तत्तदर्थबोधकतत्तच्छब्दप्रयोक्तृत्वादिति भावः। आर्यपदेन गतार्थतां निराकरोति। ऋषिर्वेद इति। प्रमाणत्वेनेति। प्रमाणत्वेन लक्षितो यः शब्दस्त-

स्माज्जातस्य प्रत्ययस्येत्यर्थः । एवं चापभ्रंशजस्यापि सामयिकत्व तुल्यमिति भावः। ननु वेदार्थस्य समयप्रकाशितत्वं सम्भवति वृद्धव्यवहारैः शक्तिग्रहे ऽपि वेदवाक्यस्य समुदायान्तरत्वादर्थेनाज्ञातसम्बन्धत्वात्तत्कल्पने सङ्केतापातात्सापेक्षत्वेनाप्रामाण्यापत्तिरत आह। समयगृहीतेति। लोकवेदयोरर्थभेदाभावाद्वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकत्वेन सङ्केतानपेक्षत्वादनपेक्षमेव प्रामाण्यम्। ऋषीणामिति।वेदवाक्यानां सामयिकार्थबोधकत्वविरोधेनेत्यर्थः। ननु दीनं त्वामनुनाथते स्तनयुगं यत्रानृतं मा कृथा इत्यत्रात्मनेपदस्यासाधुत्वे ऽप्यदोषः क्रतोर्बहिरदोषादित्यत आह। काव्ये इति।

ननु दन्त्यमध्यास्वशब्दाद्वाजिबोधादर्शनेनासाधुत्वज्ञानं प्रतिबन्धकमत आह। तत्सत्त्वे ऽपीति। असाधुत्वनिश्चये सत्यपभाषाशब्दादर्थबोधान्न प्रतिबन्धकत्वमिति भावः। अस्वशब्दस्य वाजिनि साधुत्वाभावादाह। अर्थविशिष्टेति। शिक्षोक्तरीत्येति। अम्बूकृतादिदोषराहित्येनेत्यर्थः। तस्य चेति। साधुत्वस्य चेत्यर्थः॥ २९॥

(क०टी०) नव्यनैयायिकभ्रम प्रकटयितुमपभ्रंशे शक्तौ साधकान्तरमप्याह। न्यायेति। वात्स्यायनीयेत्यर्थ। तत्रादौ पदार्थमाह। अर्थसाक्षादिति। अनेनाताहशस्य तत्प्रयुक्तस्याप्यतत्त्व सूचितम्। उपदेश इति कर्मणि घञित्याह। यमिति। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रस्योपक्रान्तत्वादाह। प्रमाणेति। तस्यैव लक्ष्यत्वादिति भाव। इतीति। सामान्यार्थेनेत्यर्थ। अन्यथा कस्य चिद्विशेषस्योपादान कुर्यादिति भावः। ननु ऋषेरार्यत्वात्कथ भेदोक्तिरत आह। तत्रेति। त्रयाणां मध्ये इत्यर्थ.। तदुक्तमृषिणेत्यादौ तथा दर्शनादिति भाव। ननु मुख्यम्लेच्छस्य प्रकृतानुपयोगो ऽत आह। म्लेच्छ इति। एवञ्च यदि भवदुक्तवैषम्य साध्वसाध्वोस्तदिष्ट स्यात्तर्हि तुल्यमेव न तुल्यप्रमाणशब्दत्व कथमुक्त तस्मा

तत्र शक्तिरेवाभिमता । एवं भाष्यसम्मतिमुक्त्वा सूत्रसम्मतिमप्याह । तत इति । एवमपभ्रंशसाधारण्येन प्रमाणशब्दलक्षणकथनादग्रे इत्यर्थः । इति । अनेन सूत्रेण । प्राग्वत् शब्दादित्यस्यार्थमाह । प्रमाणेति । मात्रशब्दः कात्स्न्र्ये । उक्तसूत्रेण प्रमाणत्वेन लक्षिता यावन्तः शब्दास्तज्जन्यज्ञानस्येत्यर्थः । उक्तमिति । तेन हि आर्यम्लेच्छानां समानमेव वाचकत्वमुक्तमन्यथोक्तरीत्या तुल्यत्वोक्तिरसङ्गतैव स्यात् । नन्वेवमपि वैयाकरणनैयायिकऋषीणां मिथो विरोधापत्तिराद्येन समयगृहीतसम्बन्धजन्यत्वमर्थज्ञाने उक्तमन्त्येन तु साक्षात्समयजन्यत्वमुक्तमत आह । सामग्रीति । नन्वपभ्रंशे शक्त्यङ्गीकारे च्युतसंस्कृतित्वादेः काव्यदूषकत्वं न स्यात्तद्बीजस्य शाब्दबोधासम्भवस्याभावादत आह । काव्य इति । पदर्शनेन । तच्छ्रवणेन । नन्वेवं तेषां साधुत्वस्याप्यापत्तिस्तुल्यत्वादत आह । साधुत्वं त्विति । शिष्टैरिति । इदं च तस्यानुमापकमित्यनुपदमेव स्फुटीभविष्यति । साधुत्वज्ञानं तु शाब्दबोधे न कारणं तदभावेऽपि बोधात्तदभिप्रेत्याह । न चेति । एवम् । तेष्वसाधुत्वनिश्चये । ततः । अपभ्रंशात् । कत्वादिति । अत एव साधुतोऽप्यसाधुत्वनिश्चये बोधो न । तदिति । असाधुत्वनिश्चयसत्त्वेऽपि संस्कृतमविदुषां प्राकृतादितो बोधेन तन्निश्चयस्य बोधाप्रतिबन्धकत्वादित्यर्थः । न च तत्र मानसो बोधः अन्यत्रापि तथात्वापत्त्या शब्दप्रामाण्योच्छेदप्रसङ्गादिति भावः । ननु किमिदं साधुत्वं यदपभ्रंशेषु नास्ति । न च व्याकरणनिष्पाद्यत्वं, नव्यनैयायिकोक्तमनुकरणे शब्दमात्रस्य व्याकरणनिष्पादित्वेन सर्वत्र साधुत्वापत्तौ साध्वसाधुविभागोच्छेदापत्तेः । न च यः शब्दो यत्रार्थे व्याकरणव्युत्पन्नस्स तत्र साधुस्तद्व्युत्पन्नत्वग्रहश्च क्वचित्स्पष्टोपलभ्यमानव्याकरणात् क्वचिच्छिष्टप्रयोगकोशादिभिरनुमानात् तस्य च बाहुलकादिना सङ्ग्रहः । यथा पुष्पवन्तपदं साहित्यावच्छिन्नोभयविषयकार्थबोधे एव साधु नैकतरार्थमात्रबोधे, यथा वा दारशब्दो बहुवचनान्त एव साधुर्नैकवचनान्तो, यथा वा वचधातुस्तिप्परः साधु नातिप्परः इति वाच्यम् । लाक्षणिकानां तत्तदर्थे व्युत्पादनाविरहेण तेषां तत्र साधुत्वानापत्तेरेतेन शक्तत्वमेव साधुत्वमित्यप्यपास्तम् । तत्त्वेऽपि साधु-

त्वव्यवहाराद्यापभ्रंशेष्वतिव्याप्तेश्च । परमते समासादौ प्रत्ययसमुदाये च शक्त्यभावेन तस्यासाधुतापत्तेश्च । प्रत्येकशक्तिमादाय साधुत्वे च बाधत इत्यादिवद्बाधतीत्यादेरपि साधुतापत्तेश्च । द्योतकेष्वव्याप्तेश्च । न चोपसन्दानिकीशक्तिरेव द्योतनेति चेन्न । उपसन्दीयत इत्युपसन्दान समभिव्याहृतपद तद्वृत्तिशक्त्युद्बोधकत्वमिति तदर्थसत्त्वेन तेषु शक्त्यभावात् । एतेन वृत्तिमत्त्व तदित्यपि परास्तम् । न च तानि विशेषस्तत्कत्वादिना साङ्कर्यापत्तेरत आह । साधुत्व चेति । चस्त्वर्थे । तस्य नित्यत्वादाह । व्यङ्ग्य इति । अश्वास्वशब्दादेः क्रमेण बाजिदरिद्रादौ साधुत्ववारणायार्थविशिष्टेति । तत्सिद्धौ मानमाह । पुण्येति । अनेन तस्य पुण्यजनने एवोपयोग इति सूचितम् । एतेन तज्ज्ञाने शाब्दबोधहेतुतायास्तदभावनिश्चये तत्प्रतिबन्धकताया वा प्राङ्निरासादीदृशसाधुत्वस्य कोपयोग इत्यपास्तम् । ननु तेन पुण्यजनने एव किं मानमत आह । तदुक्तमिति । तस्य पुण्यजनकत्वमुक्तमित्यर्थः । भाष्ये इत्यस्य पठितया श्रुत्येति शेषः । तामेवाह । एक इति । अन्विति । ज्ञात इत्यर्थः । व्याकरणपदमुपलक्षण तत्रेत्याह । तस्य चेति । साधुत्वस्येत्यर्थः । मुख्यत्वादाह । शिष्टेति । आदिना निरुक्तादिः ॥ २५ ॥

शक्यार्थेनैवलाक्षणिकपदसाधुत्वम् । लाक्षणिकेष्वपि शक्यार्थमादायैव पदस्य साधुत्वं पदान्तरसम्बन्धेऽन्वयाद्यनुपपत्त्या शक्यतावच्छेदकारोपेणैव लक्ष्यार्थबोधात् । गोपीत्यादौ प्रक्रियादशायां गोपेति प्रातिपदिकस्य गोत्वारोपेण तत्स्त्रीबोधकत्वानुमानं पुंयोगादाख्यायामिति शास्त्रनः ।

लिङ्गं लिङ्गपरिज्ञाने सूत्रं प्रत्ययशाशकम् ।
सोऽयमित्यभिसम्बन्धात्पुंशब्दे स्त्र्यभिधायिता ॥

इति हर्युक्तेः । अत एव यदिह परिनिष्ठितं तत्साधु इत्यर्थापत्तिलभ्यवाक्यात्साधुत्वबोधकं व्याकरणमिति भष्यं सङ्गच्छते । तद्बोधकं व्याकरणमद्यत्वे पाणिनी-

यमेवेत्यपि भाष्ये स्पष्टम्। एवञ्च व्याकरणव्युत्पत्ति-ज्ञानपूर्वकं साधुत्वेन ज्ञातसाधुशब्दप्रयोगाद्धर्म इति बोध्यम्। अत एव समानायामर्थावगतौ शब्दैश्चा-पशब्दैश्च शास्त्रेण धर्मनियम इति भाष्ये उक्तम्।

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।

इति हरिणाप्युक्तम्॥ २६॥

( कुं० टी० ) ननु अश्वशब्दो वाजिनि साधुरित्येव साधुताया अर्थविशेषनियन्त्रितत्वात्तीरादौ गंगादिपदस्य सा-धुत्वानापत्तिरत आह। लाक्षणिकेष्वपीति। ननु कथं तीरबोध इत्यत आह। पदान्तर इति। तत्र तीरे प्रवाहत्वमेवारोप्यते, अन्यथा शब्दार्थसम्बन्धस्यानित्यत्वापत्ति-रिति भावः। एवञ्च प्रवाहत्वप्रकारकप्रतीतिविशेष्यप्र-सिद्धार्थत्वं मुख्यत्वं तादृशाप्रसिद्धार्थत्वं च गौणत्वं बोध्यम्। ननु गोपालननिमित्तस्य गोपशब्दस्य स्त्रियां वृत्त्यभावादारोपि-तगोपत्ववत्याश्च ङीषः प्रत्युपस्थापकाभावात्कथं तदनुशासनमत आह। गोपीत्यादाविति। या हि स्वयं गाः पालयति तत्र गोप इत्येव भवति पालनक्रियारहितायां गोपभार्याया तद्धर्मलाभा-द्गोपशब्दः प्रयुज्यते। एतेन पुंयोगे अजीति वदन्तः परास्ताः। तत्र जातेरेव निमित्तत्वेन तद्धर्मलाभस्य निमित्तत्वं नास्तीति पुंयो-गासम्भवात्। ननु पूर्वं स्त्रीबोधाभावात्कथं ङीषः प्राप्तिरत आह। प्रक्रियेति। तत्स्त्रियां गोपत्वारोपेण ङीषो निमित्तं स्त्रीबोध-कत्वं प्रक्रियादशायामानुमानिकमित्यर्थः। ननु तीरादिपदवदत्र तात्पर्यग्राहकाभावादाक्षेपे किं बीजमत आह। इति शास्त्रत इति।

पुंयोगादिति शास्त्रात्स्त्रीत्वबोध इति यदुक्तं तत्र मानमाह। लिङ्गमिति। प्रत्ययशासकं पुंयोगादिति सूत्रं स्त्रीलिङ्गज्ञाने लिङ्ग-

मनुमापकमित्यर्थः । अत्रेदं तत्त्वं गोपालनरहितायां गोप्या गोपशब्दस्य वृत्तौ दम्पतिभावसम्बन्ध एव निमित्तम् । यथा हि गङ्गायां घोष इत्यत्र सामीप्यसम्बन्धात्तीरे वृत्तिः मञ्चाः क्रोशन्तीत्यत्र संयोग एव सम्बन्धः आयुर्घृतमित्यत्र जनकत्वं, तथा देवकी इत्यादौ जन्यजनकभावसम्बन्धेनैव दुहितरि वृत्तिः । निरूढश्चायं व्यवहार इति न सम्बन्धान्तरमाक्षिप्यातिप्रसङ्ग आपाद्यः । इत्थमेव जगदीशीत्यादयः प्रयोगाः । एवञ्च देवदत्तादिशब्दाना स्वत एव स्त्रियां वृत्तिसम्भवेन पुंयोगाभावाट्टाबेव । जात्यन्तरीयाया शूद्रभार्यायां शूद्रशब्दस्य प्रवृत्तौ तु शूद्रसम्बन्ध एव निमित्तमिति । पुंशब्दे पुंवाचके गोपशब्दे प्रक्रियादशायां बोधकत्वमानुमितिकमेवेत्यत्र मानमाह । अत एवेति । अयम्भावः यदि तिबादिविधावेव व्याकरणस्य तात्पर्यं तदा साध्वनुशासनत्वभङ्गः, अतः साधुत्वविशिष्टास्तिबादयो विधीयन्ते । ननु लडादीनां प्रयोगाभावात्कथं साधुत्वविशिष्टस्य विधानमिति चेदेवं तर्हि वर्तमाने लड् भवति तेन च यत् परिनिष्ठितं तत्साधु इत्यर्थ इति । अर्थापत्तीति । अर्थस्य उपपादकस्य आपत्तिः कल्पना । यथा पीनो देवदत्त इत्यत्र पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्प्यते ॥ २६ ॥

( क० टी० ) नन्वेव य शब्दो यत्रार्थे इति प्रागुक्तमेव समायातमिति लाक्षणिकाव्याप्तिरेवात आह । लाक्षणीति । शक्यसम्बन्धित्वन गृहीतार्थबोधस्यैव लक्षणाजन्यत्व शक्यार्थबाधज्ञानस्य लक्षणाजन्यबोधे कारणत्वेन च लक्षणास्थले प्रथम शक्यबोधस्यावश्यकतया तमर्थमादाय साधुत्वोपपत्ति । एव गङ्गयाव्यवहितसमीपघोषविषये प्रयोगे गङ्गायां घोष इत्यादौ गङ्गापदस्य तीरपरत्वे ऽपि स्त्रीप्रत्ययादिसङ्गतिः । पदस्य पदान्तरसम्बन्धे एव श्रोतृबोधो लक्षिणिकार्थप्रतिसन्धानेन प्रागुपस्थिततीरगाम्भीर्यमा-

दायैव शास्त्रप्रवृत्त्या णत्वस्त्रीत्वादिप्रयुक्तकार्यप्रवृत्तेर्गगयात्यन्तसमीपघोषविषये न तत्प्रयोगे गङ्गायां घोष इत्यादौ सप्तम्या औपचारिकाधारे ऽपि साधुत्वबोधन साधकतममिति तमग्रहणेनेति भावस्तदाह । पदस्येति । पदान्तरेति च । आदिना तात्पर्यानुपपत्तिपरिग्रह । मुख्यसिद्धान्तमतेनाह । शक्येति । अयमेव लक्षणेत्यग्रे स्फुटीभविष्यति । एतेन शिष्टप्रयोगादिभिस्तत्तदर्थेऽपि तेषां व्याकरणव्युत्पाद्यत्वानुमानेनादोष इति प्राचोक्तमपास्तम् । लोके पदस्य लक्षणाया लिङ्गात्यागे ऽपि तस्य प्रायिकत्व ध्वनयन्प्रातिपदिकलक्षणायां यत्र शास्त्र तात्पर्यग्राहक तत्र स्वलिङ्गत्याग एवेत्याह । गोपीत्यादाविति । तत एवाह । प्रक्रियेति । अस्य तदनुमापकत्वे मानमाह । लिङ्गमिति । अनुमापकमित्यर्थ. । प्रत्ययेति । स्त्रीप्रत्ययेत्यर्थ । लक्षणाबीजानां बहूनां तत्रोक्तत्वादाह । सो ऽयमिति । नन्वेवमपि पुण्यजनकतावच्छेदक तत्तदर्थे तत्तच्छब्दस्य व्याकरणव्युत्पाद्यत्वमेव साधुत्वमास्तां कृत. जातिविशेषाङ्गीकारेणेदमेवाभ्युदययोग्यतापदेनोच्यते अत आह । एवेति । तादृशजातिविशेषाङ्गीकारादेवेत्यर्थ । न हि व्याकरणव्युत्पाद्यत्वस्य साधुत्वे इद सङ्गच्छेत तस्य शास्त्रबोध्यत्वासम्भवादिति भाव । वाक्यादित्यनेन सूत्र तु कथमपि न तद्बोधकमित्यन्यत्र स्पष्टमिति सूचितम् । प्रसङ्गादाह । तद्बोधक चेति । फलितमाह । एवञ्चेति । तस्य पुण्यजनकत्वे चेत्यर्थः । पूर्वकमिति ज्ञानक्रियाविशेषणम् । यद्यप्युक्तश्रुतौ ज्ञानप्रयोगयोरुपादान भाष्ये ऽपि मतद्वयमुक्तं तथापि ज्ञानाद्धर्म इति मत न युक्तमित्यन्यत्र स्पष्टम् । अत एव प्रयोगस्य तदव्यवहितपाठस्तस्य व्यवहितपाठस्तदाह । ज्ञातसाधुशब्दप्रयोगादिति । अन्यथा शास्त्रेण साधुत्वबोधनस्य वैयर्थ्यं स्पष्टमेवेति भाव. । अत एवेति । उक्तमभिप्रेत्यैवेत्यर्थ. । अस्याग्रे ऽप्यन्वय । शब्दैश्चेति पूर्वान्वयि । तद्भाष्यस्थहरिमप्याह । वाचकत्वेति । शब्दापशब्दयोरिति शेष । अत एव साधूनेव प्रयुञ्जीतेति विधिर्नासाधूनिति निषेधश्च फल इति भाव ॥ २६ ॥

अपभ्रंशे शक्तिग्रह- किञ्च अपभ्रंशे शक्त्यंशे कदापि कस्यापि

स्य न भ्रमत्वम् । व्यवहर्तुर्बाधादर्शनेन न तत्र शक्तिग्रहस्य भ्रमत्वमसति बाधके प्रमात्वस्यैव न्याय्यत्वात् । किञ्चैवमृषीणामार्षज्ञानेन तदभावनिश्चयात्तेषां भ्रमासम्भवेन ततो बोधानापत्तिः। किञ्च प्रमाणानां सम्बद्धार्थबोधकत्वेन तेषामपि अर्थेन सम्बन्ध आवश्यकः। अत एव गौरित्यस्य शब्दस्यार्थे बहवो गावी गोणी गोता गोपोतलिकेत्यादयो ऽपभ्रंशा इत्यर्थकं गौरित्यस्य शब्दस्य गाव्यादयो ऽपभ्रंशा इति भाष्यमात्रस्थेन सङ्गच्छते । अत एव धर्मार्थत्वं साधूनामुक्तं भाष्ये । एतेन अर्थापत्त्येते उच्यन्ते शब्दाः न धर्मायेति शबरस्वाम्युक्तमपास्तम् ।

जैमिनिसूत्रस्याप्ययमर्थः, अपभ्रंशा अपि साधवः ते ऽपि हि साधयन्त्यर्थमिति पूर्वपक्षे अन्यायो ऽनेकसाधुशब्दत्वमिति केचिदेव साधवो न सर्वे इति मनसि निधाय तर्हि साधौ प्रयोक्तव्ये असाधूच्चारणं कथमित्याशङ्क्य शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वामिति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात् यथा शुष्के पतिष्यामीति कर्दमे पतति, तथा साधौ प्रयोक्तव्ये ऽसाधोः प्रयोग इत्युक्तम् ॥ २७ ॥

(कुं०टी०) किञ्चेति। शक्तौ रजतमिदं नेति बाधानिश्चयानन्तरं पूर्वज्ञानस्य भ्रमत्वं कल्प्यते अपभ्रंशनिष्ठशक्त्यंशे तु कस्यापि बाधादर्शनान्न भ्रमत्वसम्भव इत्यर्थः । तदभावनिश्चयादिति । ऋषीणां भ्रमाभावेन शक्त्यभावनिश्चयादित्यर्थः । प्रमाणानाम् । ज्ञायमानशब्दानाम् । तेषामपि । अपभ्रंशानामपि । अत एव । अपभ्रंशानामप्यर्थसंबन्धसत्त्वादेव । धर्मार्थत्वमिति । न तु बोधकत्वमुक्त-

मित्यर्थः । अर्थायप्रेत इति । एते शब्दा अर्थबोधाय उ-च्यन्ते इत्यर्थः। जैमिनिसूत्रस्यापीति । तत्र हि प्रयोगोत्पत्त्यशास्त्र-त्वाच्छब्देषु न व्यवस्थास्यादिति पूर्वपक्षसूत्रं प्रयोगानियमस्य अशास्त्रत्वात् मूलभूतश्रुतिरहितत्वात्साधुषु प्रयोगनियमो न स्यादित्यर्थः । सिद्धान्तसूत्रमाह। अन्यायो ऽनेकेति। शब्दे इति। प्रयोक्तव्ये इति शेषः । प्रयत्नानिष्पत्तेरपराधः प्रयत्नान्तरस्योत्प-त्तिः प्रयोग इत्युक्तम् ॥ २७ ॥

(क० टी०) समानायामित्यादिभाष्यादिप्रसङ्गात्सिंहावलोकन्या-येन पुनरप्यपभ्रंशेषु शक्तिमन्यथा साधयति । किञ्चेत्यादिना। क-दापीत्यनेन त्रैकालिकबाधाभाव उक्तः। कस्यापीत्यनेन सर्वदे-शीयतदभाव उक्तः । दोषान्तरमाह । किञ्चेति । एवम् । तत्र शक्त्य-नङ्गीकारे । आर्षेति । दिव्येत्यर्थ । निश्चये हेतुस्तस्य तत्र प्रति-बन्धकत्वादाह । तेषामिति । ऋषीणामित्यर्थः । ततो ऽपभ्रंशेभ्यस्ते-षामेवेति भावः । दोषान्तरमाह । किञ्च प्रमेति । पूर्वमाप्तत्वस्य प्र-माणत्वस्य च तुल्यत्वस्योक्तत्वादिति भाव. । अत एवास्या-त्रैव लेखो न प्राक् । बोध कत्वेन । अन्यत्र तथा दृष्टत्वात्। तेषामपि । अपभ्रंशानामपि । अर्थेनेत्यादि जातावेकवचनम् । पुनरपि तां दृढयति । अत एवेति । तत्र शक्तिसत्त्वादेवेत्यर्थः । अन्यथा तयो-र्मिथो ऽसम्बन्धात् तस्यार्थस्य शक्तिभ्रमाद्बोधका इत्येव स-म्बन्धकल्पने वक्रतया च सम्बन्धार्थे षष्ठीघटितादिमद्भाष्यास-ङ्गतिरेवेति भाव' । नन्वसाधोः साधुप्रकृतिकत्वेन तत्सम्बन्धेनैव तत्सङ्गतिरत आह । अत एवेति । प्राग्वत् । यदर्थमिद पुनरुक्तं तदाह । एतेनेति । उक्तभाष्याविरोधेनेत्यर्थः । एते । साधव । नन्वेवं तदशक्तिरिति प्रागुक्तजैमिनिसूत्राविरोध एवात आह । जैमिनीति । अयम्। वक्ष्यमाणः। ननु तद्भाष्यकृत्समतः प्रागुक्त तदर्थमेव तत्रादा-वपक्रममर्थेत आह । अपीति । साधेति । बोधयन्तीत्यर्थ ।अर्थवोधक-त्वमेव साधुत्वमिति तद्भावः । अत्र सिद्धान्तसूत्रमाह । अन्य इति । अनेन सूत्रेणोक्तमिति शेषः । तात्पर्यार्थमाह । केचिदिति। अनेके च ते साधुशब्दाश्च तेषां भावस्तत्त्वमिति सूत्रार्थ इति भाव. । अस्या-

नुक्तत्वादाह । मनसीति । अन्यथा पूर्वोत्तरग्रन्थासङ्गतिरेवेति भाव । तर्हि केषांचिदेव साधुत्वे तेषां मते शब्दस्य जन्यत्वमित्याह । शब्दे इति । हेतुलब्धमाह । प्रयत्नेति । भागित्वमित्यस्य दृश्यत्वमित्यर्थस्तदाह । दर्शनादिति । तथा च प्रमादादसाधूच्चारणमिति भाव ॥ २७ ॥

किञ्च एकस्यार्थस्यानेकसाधुशब्दत्वमन्याय्यं तस्मादेको ऽनादिरन्ये ऽपभ्रंशाः हस्तः करः पाणिरित्यादयो ऽभियुक्तोपदेशात्सर्वे साधव इत्युक्त्वाः तत्राभियुक्तोपदिष्टः साधुरित्युक्तम् । तत्रेदमाशङ्क्येत गौरिति प्रयोक्तव्ये गाव्यादीनामिव गगर्यादीनामपि प्रमादात्प्रयोगः कुतो नेति। तत्रेदं सूत्रं तदशक्तिश्चानुरूपत्वादिति । तेषामेवाशक्त्योच्चारणमनुरूपत्वात् अर्थतो ऽवयवतश्चानुरूपत्वादिति तदर्थः । तत्रार्थत आनुरूप्याग्रहणे गोयादिशब्दानामप्युच्चारणं प्रसज्येत एकदेशानुरूप्याच्च विभक्तिव्यत्यये ऽपि अश्मकैरागच्छामीति प्रयोगादश्मकेभ्य इत्यर्थावगतिर्भवति। तत्र यद्यय तदर्थे लौकिकः प्रयोगस्तदा न साधुर्वेदे तु साधुरित्यन्यत् । एवञ्च पतञ्जलिनैकवाक्यता भवति ॥ २८ ॥

(कुं० टी० ) गगर्यादीनामपीति । गोशब्दापभ्रंशतयेत्यर्थः। गोयादिशब्दानामिति। गोशब्दापभ्रंशतयेत्यर्थः ।वेदे तु साधुरिति । विभक्तिव्यत्ययादिति भावः । पतञ्जलिनेति । समानायामर्थावगतौ शब्दैश्चापशब्दैश्चेति वार्तिकं व्याचक्षाणेनेत्यर्थः॥२८॥

(क० टी०) पूर्वसूत्रस्य नोक्तार्थः किन्त्वन्य एवेत्याह । किञ्चेति । अनेकेति । बहुव्रीहिस्त्व इति भाव । अनपभ्रष्टत्वमनादित्व वा साधुत्वमित्याशयेनाह। अनादिरन्येऽपभ्रंशा इति । नन्वेव पर्यायाणा-

मप्यसाधुत्व स्यादत आह । हस्त इति । अभियुक्ता' । कोशकृत' । पर्यवसितमाह । तत्रेति । अर्थ इत्यर्थ' । तेषां मध्ये इति । एवञ्चापभ्रंशानां न साधुत्वमिति भाव. । एवमुपक्रममुक्त्वा प्रकृतमाह । तत्रेदमिति ।नान्वित्यादि । तत्र शङ्कायामुत्तरमुक्तमिति भाव. । अत एव तन्न्यायेनाह । तेषामेवेति । गाव्यादीनामेवेत्यर्थ । लक्षणयाह । उच्चारणमिति । विनिगमनाविरहात्पदद्वित्यादाविवाह । अर्थ इति । पदजन्यप्रतीतिविशेष्यतेत्यर्थ । अवेति । शब्दविशिष्टार्थयोरेकदेशत इत्यर्थ. । तदर्थ. । सूत्रस्य शाब्दो ऽर्थ । पूर्वविषयमर्थमित्यस्य तात्पर्यार्थ इत्यपौनरुक्त्य बोध्यम् । तत्राद्यस्य फलमाह । तत्रेति । तयोर्मध्ये इत्यर्थः । अवयवतस्तत्त्वस्य सत्त्वादिति भाव । आदिना गगर्यादिग्रहणम् । अपिना गाव्यादिसमुच्चय । द्वितीयसाम्येन सर्वावयवत. तथा सति तत्त्वमेव न सादृश्यमित्याह । एकेति । तद्ग्रहाच्चेत्यर्थ । अत्र विभक्त्यंशे एवाशक्त्यान्यथोच्चारण तत्र यदि इद नोच्येत तदा पदजन्यप्रतीतिविशेष्यस्यार्थपदेन ग्रहणात्तस्य चात्र भेदात्तदभावात्तदपभ्रंशाभावेन ततस्तदर्थावगतिर्न स्यात् । एतदुक्तौ तु तद्भेदे ऽपि अवयवतस्तत्सत्त्वात् मल्लग्रामादिवद्भूयसा व्यवहाराद्विशिष्टार्थैकदेशसाम्यसत्त्वाच्चास्यैव प्राबल्यमिति ततस्तत्सिद्धि' । अवयवैकदेशशब्दाभ्यां चोभयोरप्येकदेशयोर्ग्रहणमत एव सामान्येन तथोक्तमन्यथा शब्दतश्चेत्येव ब्रूयादिति भावः । अवगतीति पाठः स चार्थसमाप्तौ । विशेषमाह ।तत्रेति । द्वितीयनिवेशे सतीत्यर्थः । न साधुरिति । समाने ऽर्थे शास्त्रान्वितो ऽशास्त्रान्वितस्य निवर्तक इति ऋलृक्सूत्रभाष्योक्ते. । वेदे त्विनि । तत्र सर्वेषां व्यत्ययसत्त्वात् । एव तत्सूत्रार्थवर्णनफलमाह । एव चेति । तत्र तस्यासाधुत्वाङ्गीकारे चेत्यर्थ । सम्भवत्येकवाक्यत्व इति न्यायात् ॥ २८ ॥

अपभ्रशाना शक्तत्वे इष्टापत्ति । नन्वपभ्रंशानां शक्तत्वे ऽर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकत्वापत्तिरिति चेदिष्टापत्तेः। अत एव पस्पशायामेवं हि श्रूयते यर्वाणस्तर्वाणो नाम ऋषयो बभूवुस्ते तत्र भवन्तो यद्वानस्तद्वान इति प्रयो-

क्व्ये यर्वाणस्तर्वाण इति प्रयुञ्जते याज्ञे कर्माणि पुनर्नापभाषन्ते इत्युक्तं भाष्ये । तत्र यर्वाणस्तर्वाण इति णान्ताज्जसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम् । अत एव उत्वोत्वादि बभूवुरित्यनेन सामानाधिकरण्यञ्च । प्रकृतिप्रत्यययोरुभयोरपि शास्त्रविषयत्व एव साधुत्वं न त्वन्यतरस्य गगरीत्यादि च घट इत्यस्यैवापभ्रंश इति न ततः सुः । गगरीमित्यादिप्रयुञ्जते चेति केचित् । परे तु साध्वनुशासने ऽत्र शास्त्रे इति भाष्योक्तेः अर्थवत्त्वेन साधूनामेव संज्ञाविधावुद्देश्यत्वमिति नासाधुषु प्रातिपदिकसंज्ञा । यर्वाणस्तर्वाण इत्यादौ सुबप्यसाधुरेव । अत एव परश्चेति सूत्रे भाष्ये किमस्य द्व्यसमित्यसाधुर्वृत्तिजसादृश्ये ऽप्यवृत्तिजत्वादित्युक्तम् । प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलानामेषामसाधुत्वं बोध्यते । तत्र वृत्तिजसदृशत्वात्कश्चित्साधुरिति भ्राम्येत इति प्रत्ययः परश्चेति नियमेनास्याप्यसाधुत्वमुक्तं भाष्ये ऽर्थतः शब्दतश्च प्रत्ययजातीयः स पर एवेत्यर्थेनास्यासाधुत्वं बोध्यते । एवञ्च शास्त्रविहितत्वाभावादमीष्वसाधुत्वमित्युक्तप्रायम् ।

अस्वे अश्वशब्दस्यासाधुत्वमुक्तमन्यत्र । अत एव प्रकृतिपर एव प्रत्ययः प्रत्ययपरैव च प्रकृतिरिति नियमाकारो दर्शितो भाष्ये । साधूनामेव प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम् । खण्डशक्तिबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणमर्थवत्त्वबोधनवत् । एवञ्च भाषानुसारेण क्रियमाणनामोत्तरं विभक्तिरप्यसाधुरित्याहुः । अत एव समानायामर्थावगतौ शब्दै-

श्चापशब्दैश्च शास्त्रेण धर्मनियम इति भाष्ये उक्तम् ।

वाचकत्वाविशेषे ऽपि नियमः पुण्यपापयोरिति ।
हरिणाप्युक्तम् ॥ २९ ॥

( कुं० टी० ) यर्वाण इति । तन्नामान इत्यर्थः । ननु गगरीशब्दादिभ्यो ऽपि सोरुत्पत्त्यापत्तिरत आह । प्रकृतिप्रत्यययोरिति । शास्त्रविषयत्वे इति । शास्त्रीयोद्देश्यतावच्छेदकवत्वे इत्यर्थः । घट इत्यस्यैवेति । तथा चार्थबोधकत्वसत्त्वे ऽपि एकत्वविशिष्टार्थस्य प्रकृत्यैव क्रोडीकारान्न ततः सुरिति भावः । असाधुरेवेति । श्रुतौ तु असाध्वनुकरणस्यापि साधुत्वान्न दोष इति भावः । अर्थवत्त्वेनेति । साधव एवार्थवन्तः प्रातिपदिकसंज्ञाविषया इत्यर्थः । अत एवेति । यतो ऽनुशिष्टप्रकृतेः प्रयुज्यमान एव प्रत्ययः साधुरत एवेत्यर्थः । वृत्तिजसादृश्ये ऽपीति । एवञ्च यद्यपि केवलानामेषां साधुत्वं न प्राप्तं तथापि न केवलः प्रत्यय इत्यस्य प्रत्ययसजातीय इत्यर्थ इति भावः । नियमेनेति । ङ्याप्प्रातिपदिकादिति पञ्चमीनिर्देशादेव प्रत्ययानां परत्वे सिद्धे ऽपीत्यादिः । अस्वे । दरिद्रे । तद्बोधकम् । साधुत्वबोधकम् । धर्मनियमः । धर्मार्थो नियमः । असाधुरनुमानेन वाचकः कैश्चिदिष्यत इति पूर्वार्धेनापभ्रंशानामवाचकत्वमभिधाय हरिर्मतान्तरमाह । वाचकत्वाविशेषे ऽपीति । अस्तु वा अपभ्रंशादर्थावगमः शास्त्रेण तु पुण्यपापनियमः क्रियते साधुभिरेवार्थो वक्तव्यो नासाधुभिरेवं हि क्रियमाणमभ्युदयकारि भवतीति ॥ २९ ॥

(क० टी०) पतञ्जलिना ऋलक्सूत्रस्थेन वृत्त्यार्थबोधजनकत्वमर्थवत्त्व तत्सूत्रे निविष्टमित्याह । नन्वपेति । एकदेशिमतमाह । इष्टापत्तेरित्यादि केचिदित्यन्तेन । अत एव । प्रातिपदिकत्वसत्त्वादेव । यत्पशायामित्यस्य भाष्ये उक्तमित्यत्रान्वय. । तद्ग्रन्थमाह । एवं हीति ।

बभूवुरित्यग्रे प्रत्यक्षधर्माण य एव । अत्र विदितवेदितव्याधिगतयाथातथ्या इति मध्ये भाष्ये ऽस्ति तथापि प्रकृतानुपयोगात्तस्य त्यागः । ते ये उक्तलक्षणास्ते अतस्तत्र भवन्त पूज्याः प्रयुञ्जते प्रयुक्तवन्तो यतस्ते एतादृशास्ततो लौकिकेष्वर्थेष्वातिवैराग्येणाग्रहाभावात् यद्वास्तु न. किं प्रयोजन तद्वास्तु व' किं प्रयोजनमित्यर्थे तथा प्रयोक्तव्ये यथा तथा प्रयुक्तवन्त इत्यर्थः । याज्ञे कर्मणि तु साधूनेव प्रयुक्तवन्तस्तदाह । याज्ञे इति । सयता इति तदर्थः । इद दृढयति । अत एवेति । जस सत्त्वादेवेत्यर्थं । नन्वेव शास्त्राविषयतया साधुत्वापत्तिरिति भाष्यासङ्गतिरेवात आह । प्रकृतीति । नन्वेवं रीत्या गगरीत्यादावपि सुबुत्पत्त्यापत्तिरत आह । गगरीति । असाधूनां साधुपदप्रकृतिकत्वादित्यर्थ. । तथाच तेनैव तदर्थस्योक्तत्वान्न पुन. सुबिति भाव. । तस्य प्रथमोपस्थितित्वेनोक्तहेतोश्च तन्मात्रप्रकृतिकत्वेन कर्मत्वादेरनुक्तत्वादाह । गगरीति । आदिना तृतीयादिपरिग्रह' । केचिदिति सूचितामरुचिं प्रकटयन्सिद्धान्तमाह । परे 'त्वित्यादिना । सञ्ज्ञेति । प्रातिपदिकेत्यादि । असाधुष्विति । सम्बन्धिनो ऽधिकरणत्वविवक्षया सप्तमी । नन्वेव कथ तत्र न सात आह । यर्वाण इति । इद दृढयति । अत एवेति । तस्याप्यसाधुत्वादेवेत्यर्थः । ननु शास्त्रस्य तत्त्वे किमित्यवृत्तित्वमत आह । प्रकृतीति । तत्र प्रकृतिभावादिति भाव. । तत्र । उक्तप्रयोगे अपिरस्यैव समुच्चायकः । अनतिप्रसङ्गाय नियमस्वरूपमाह । अर्थत इति । एतदनुक्तावस्धातोरपि पूर्वप्रयोगो न स्यादत इदमुक्तम् । द्वितीयानुक्तौ कर्मशब्दस्यापि पूर्वप्रयोगो नातस्तदुक्तमत एव प्रत्ययजातीयइत्युक्त न तु प्रत्यय इत्येव । एवञ्च । तस्यासाधुत्वे च । अर्थे विशेषान्तर्भावेणैव साधुत्वमवश्य वाच्यमिति ध्वनयन्नर्थत इत्यावश्यकमिति सूचयन्नाह । अस्वे इति । अन्यथा तस्य तत्रासाधु त्व न स्यात् शब्दतस्तत्सारूप्यस्य सत्त्वात्सदृशयोरभेदादिति भाव. । उभयोः शास्त्रविषयत्व एव साधुत्व नान्यतरस्येत्यत्र मानमाह । अत एवेति । तदाशयमाह । साधूनामेवेति । ननु वाक्यस्य पदस्य साधुत्व व्याकरणबोध्य तु प्रकृत्यादीनामिति कथ साधूनामेवेत्यत आह । खण्डेति । प्रकृ-

त्यादीत्यर्थ । निर्विवादत्वेन सर्वाभिमतदृष्टान्तमाह । अर्थेति। यथा तत्तदर्थबोधनद्वारा समुदायार्थबोधन तथेति भावः । पूर्व-मतासाङ्कर्यमेवेत्याह । एवञ्चेति । तेषामेव प्रकृतित्वे चेत्यर्थ ॥ २९॥

साधुत्वस्य जातित्व न सङ्कर । ननु साधुत्वस्य जातित्वे कत्वादिना सङ्कर इति चेन्न । ययोर्जात्योः परस्परासामानाधिकरण्येनैव सिद्धिः परस्परमाश्रयभेदकता च लोकसिद्धा तयोः साङ्कर्यस्यैव दोषत्वात् । आश्रययोर्भेदभङ्ग एव हि साङ्कर्यं दूषकताबीजमतादृशजात्योर्यत्र साङ्कर्यप्रसङ्गस्तत्रोभयवैलक्षण्यं स्वीकार्यं, यथा नृसिंहे अश्वतरे वा । ययोस्तु सामानाधिकरण्येनैव सिद्धिः तयोः सामानाधिकरण्यस्य व्याप्यव्यापकभावापन्नजात्योः साङ्कर्यस्यैवादोषत्वात् ।

एवञ्च साङ्कर्यमुपाध्योरपि दोषाय यदि तत्रापि आश्रयभेदप्रसङ्ग इति स्पष्टं श्रीहर्षकृतखण्डने न तु साङ्कर्यस्य सर्वथा जात्यभावकल्पकत्वं मानाभावात् । एवञ्च भूतत्वमूर्तत्वे पृथिवीत्वशरीरत्वे च जातिरूपे एव । क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वादेरिव भूतादिपदशक्यतावच्छेदकतया भूतत्वादेरपि जातित्वात् । न हि कारणतावच्छेदकतयैव जातिसिद्धिर्न शक्यतावच्छेदकतयेति राजाज्ञास्तीति दिक् ॥ ३० ॥

( कुं० टी० ) सङ्कर इति । केवलसाधुत्वं साधुगकारे केवलकत्वमसाधुककारे उभयमित्यर्थः । ययोर्जात्योरिति । यथा-नरत्वसिंहत्वयोरेकत्र समावेशान्नरसिंहत्वं भिन्नमित्यर्थः । भेदभङ्ग एवेति । नरत्वाश्रयो ऽन्यः सिंहत्वाश्रयश्चान्य इत्येवं भेद-

स्यासिद्धिरेवेत्यर्थः । अत एव गुणगतजातौ साङ्कर्यं न दोषायेति न समाहितम् । अश्वतरे इति । तत्राश्वत्वगर्दभत्वयोः सङ्करः । ययोस्त्विति । पृथिवीत्वद्रव्यत्वयोः समावेशस्यादूषणत्वादिति भावः ।

स्पन्दसमवायिकारणतावच्छेदकतया मूर्तत्वं जातिः तत्साङ्कर्याद्भूतत्वं न जातिः भूतत्वस्योपाधित्वात्तत्साङ्कर्यं तु मूर्तत्वस्य जातित्वे न बाधकमिति तार्किकमतं निराकरोति । उपाध्योरपीति । इदं च प्राचीनखण्डनम् । दीधितिमते तु जन्यद्रव्यसमवायिकारणतावच्छेदकतया पृथिव्यादिचतुष्टयवृत्तिरेव भूतत्वं जातिः । आकाशे भूतपद्व्यवहारस्तु बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वप्रयुक्तो भाक्तः । मानाभावादिति । स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनियमस्य भङ्गप्रसङ्ग इति तदुक्तिस्तु निर्युक्तिकेति भावः । शरीरत्वे चेति । केवलपृथिवीत्वं घटादौ केवलशरीरत्वं तैजसादिशरीरे अस्मदादिशरीरे चोभयमिति साङ्कर्यात् शरीरत्वं न जातिरिति तार्किकाः । राजाज्ञास्तीति । लाघवरूपयुक्तेस्तुल्यत्वात् । अत एव जलपदशक्यतावच्छेदकतया जलत्वं जातिरिति वर्धमानः । यत्तु द्रव्यवृत्तिकपालादौ द्रव्यान्तरोत्पत्तिवारणाय तत्प्रतिबन्धकतावच्छेदकतया भूतत्वजातिरिति तन्न। मूर्तत्वमादाय विनिगमनाविरहात् ॥ ३० ॥

( कु० टी० ) चरमदोषमत्रोद्धर्तुं शङ्कते । ननु कत्वादिना सङ्कर इतीति । एवञ्च साधुत्वं जातिः कथमिति भाव । यद्यपि कौस्तुभे द्वेधान्यथा समाहितमत्र तथापि सिद्धान्तभूततृतीयप्रकारमाह । ययोरिति । घटत्वपटत्वाद्योरित्यर्थ । स्यैवेति । साङ्कर्ये हि त-

योजात्योरवैधर्म्ये तदाश्रययोर्भेदस्य भङ्गापत्ते.। तदाह। आ-श्रयेति। ननु घटत्वपटत्वाद्योस्तादृशयोरपि न क्वचित्साङ्कर्यप्रस-ङ्ग इति किमस्य लक्ष्यमत आह। तादृशेति। यत्र। आश्रये। यथेति। तथाच नृसिंहत्वमश्वतरत्व तत्र भिन्नमेव न तू-भयजात्याक्रान्तत्वमिति भाव। आद्यव्यावर्त्यमाह। ययोस्त्विति। घटत्वकलशत्वाद्योरित्यर्थ। कार्यतावच्छेदकतया। विनिगमनावि-रहादिति भाव. सामेति। परस्परेत्यादि। क्वचित्तथा पाठ एव। तयोराश्रयाभेदकत्वेन तद्भेभङ्गरूपदूपकत्वाभावादाह। तयोरिति। साङ्कर्यस्य। एकत्र समावेशमात्ररूपस्य। एवमग्रे ऽपि। स्वसमाना-धिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजाति-त्व यत्र तत्र स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाव, अस्ति चैतद्व्याप्यजातिविशिष्टव्यापकजाताविति नियमभङ्गस्य जीर्णनैयायिकै. तद्बीजत्वस्योक्तत्वेन तव तस्येष्टत्वेन दृष्टान्ततयाह। व्याप्येति। एवञ्च तादृशजात्यो' साङ्कर्यस्य प्रसक्तस्य दूषकत्वे च। उपाध्यो। तादृशोपाध्योः। अपिना तयोरेव समुच्चयः। यद्य-प्येव तथापि लक्ष्य स्वल्पमित्याशयेनाह। यदीति। आकाशत्व-कालत्वाद्योर्मिथो ऽसामानाधिकरण्येनैव सिद्धिर्मिथ आश्रयभेद-कृता च लोकसिद्धा तयोरेकत्रेश्वरे साङ्कर्येण तत्रोभयवैलक्षण्य-स्वीकारे ऽन्यथाश्रयभेदभङ्गप्रसङ्गो वैधर्म्यभेदभङ्गप्रसङ्गादिति भाव.। खण्डने। न्यायमतखण्डने। तथा च साङ्कर्यस्य जातिबाधकत्व-मप्येतदेव यत्तद्वैधर्म्यकृतभेदप्रसञ्जकत्वरूपमिति फलितम्। तदाह। न त्विति। मानेति। उक्त एवाशयः। एवञ्च। तस्य सर्वेण तद-भावाकल्पकत्वे च। आदिना कार्यतावच्छेदकपरिग्रहः। वैषम्यं परिहरति। न हीति। मीमांसकमते ऽप्यसति बाधके समनिय तधर्मान्तराभावे च लाघवाच्छक्यतावच्छेदकतयैव जातिसि-द्धिस्सुवचा। किञ्च भौतिकसृष्टिकारणतावच्छेदकतया भूतत्वसिद्धि-रेवं गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिवद्भोगका-रणतावच्छेदकतया शरीरत्वजातिसिद्धिस्तदाह। दिगिति ॥ ३० ॥

देशभाषिकानाम- देशभाषानुसारेण कृतानां कुञ्ची मञ्ची आ-

साधुत्वम्। एयकोण्डेत्यादिनाम्नामसाधुत्वमेव। टिघुभादि-

संज्ञानां तु शिष्टप्रयुक्तत्वात्साधुत्वमेव । सर्वशब्दानां सर्वार्थवाचकत्वे ऽपि वृद्धिरादैजित्यादीनामज्ञातशक्तिज्ञापकसङ्केतरूपतया विधित्वमेव । यत्तु ।

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रे ऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमो ऽभिसम्बन्धो विशेषणविशेष्यवदिति ।

तत्र सङ्केते कृते तत्तत्सङ्केतज्ञानरूपप्रकरणवशात्तस्यैवोपस्थितिर्नान्यस्येति फलितनियमपरम् ।

तदेतद्विशेषणविशेष्यवदित्यनेन सूचितम् । यथा नीलो घट इत्यनेन विद्यमान एव घटे नीलसम्बन्धः पुरुषेण बोध्यते न तु नीलादियोगः क्रियते नील एव न पीत इति नियमश्च फलति तद्वदित्यर्थात् । पाणिन्युपदेशादिरूपसङ्केतग्राह्यत्वात्तत्संज्ञात्वस्य संज्ञानामनित्यत्वव्यवहारो ऽपि । वाचकताबोधकत्वे ऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः । तेष्वेव वृद्धिपदवाच्यत्वोपदेशो वक्त्रिच्छाया एव नियामकत्वाच्च यदृच्छाशब्दत्वव्यवहारः स्वेच्छया संज्ञाः क्रियन्त इति च व्यवहारः । वेदमात्रप्रसिद्धशब्दभिन्नत्वरूपलौकिकत्वादुक्तरीत्या साधुत्वाच्च तेषां शास्त्रविषयता । किञ्च सर्वेषां सर्वार्थवाचकत्वमस्माभिर्दुर्ज्ञेयं विशिष्यसकलार्थशब्दज्ञानाभावात् । सामान्यज्ञानं तु न बोधोपयोगि । योगिदृष्ट्या तु तथा व्यवहारः शास्त्रे । स्पष्टश्चेदं सर्वमृलृक्सूत्रे भाष्ये इत्यन्यत्र विस्तरः । देशभाषया क्रियमाणनाम्नः सू-

क्त्वाकादौ सङ्कल्पादौ चौह्लेग्वस्तु बर्बराणां भ्रान्त्यैव। तस्माद्घोषवदाद्यन्तरस्थं द्व्यक्षरं वा नाम कर्तव्यं कृतं कुर्यान्न तद्धितमिति गृह्यसूत्रोक्तनाम्नैव साधुना तदुचितम्॥ ३१॥

(कुं० टी०) असाधुत्वमेवेति। शास्त्रव्यवहारमार्गेणैव नामकरणात्। ननु सर्वे सर्वार्थवाचका इति मते वृद्धिरादैजित्यादीनां नियामकतया विधित्वाभावादाधुनिकसंज्ञात्वासङ्गतिरत आह। सर्वार्थवाचकत्वेऽपीति। अयम्भावः शब्दार्थसम्बन्धो योग्यतालक्षणोऽभिप्रेतः। सर्वो हि शब्दः संज्ञात्वेन विनियुज्यमानो योग्यत्वात्सर्वत्रार्थे सम्बद्धः। शक्त्यवच्छेदमात्रे तु संज्ञाकर्तुर्व्यापारः शब्दार्थसम्बन्धस्य नित्यत्वात्। एवञ्च शक्त्यवच्छेदान्नियमत्वमज्ञातशक्तिप्रकाशकत्वाच्च विधित्वमपीति। व्यवहारायेति। क्वचित्संज्ञिनि संज्ञाया नियमो व्यवहारायेत्यर्थः। डित्थाद्यर्थे डित्थादिपदसम्बन्धो नित्य एव, गवादौ गोशब्दादीनामिवेत्यर्थः। तदिति। नियमपरमित्यत्रान्वयः।

वक्त्रिच्छाया इति। नन्वेवं शब्दार्थसम्बन्धस्यानित्यत्वापत्तिरिति चेन्न। वक्त्रिच्छया शक्तिप्रकाशनमित्यर्थात्। ऐजादिपदे कुत्वाद्यापादनं सङ्गमयति वृद्धिरादैजित्यादीनां लोकप्रयुक्तत्वरूपलौकिकत्वाभावादाह। वेदमात्रेति। लौकिकत्वादिति। लौकिकप्रयोगे शास्त्रप्रवृत्तेरावश्यकत्वादिति भावः। सूक्तवाकेति। अमुकशर्मा आयुराशास्ते इत्यादिसूक्तवाकप्रयोगो यागेषु सङ्कल्पश्च यद्यपि मानसो व्यापारस्तथापि शब्दप्रयोग एव तथैव विधानात्। अन्तरन्तस्थमिति। अन्तः मध्ये अन्तस्था यरलवा यस्य॥ ३१॥

(क० टी०) यत्तु स्वेच्छयेति पक्षे टिघुभाद्याधुनिकसंज्ञावत् आ-

ष्यकोण्डेत्यादीनामपि साध्वसाधुबहिर्भावः कथ तदर्थे ऽनादिप्रयुक्तत्वे सति शक्तिवैकल्यादिनान्यथोच्चारणविषयत्वस्यैवासाधुपदार्थत्वात् । किञ्च तदर्थे यस्य कस्यापि साधुत्वेन शास्त्रे ऽन्वाख्याने हि सो ऽन्यस्यासाधुत्व बोधयेत्, न च तथा प्रकृते ऽस्ति । एवं यो यत्रार्थे ऽनादिप्रयुक्तः सन् व्याकरणबोध्य स तत्रार्थे साधुरिति तत्त्वं बोध्यम् । अत एव सकलदेशशिष्टा यज्ञादिषु तत्तदाधुनिकसाङ्केतिकनामग्रहणे प्रत्यवाय न मन्यन्ते । अन्यथा साधूनेव प्रयुञ्जीत नासाधूनित्यादिनिषेधसद्भावात्तदापत्तिर्दुर्वारेति प्राञ्चस्तन्नेत्याह । देशेत्यादि । ननूक्तजातिविशेषस्याश्रयस्य व्याकरणसस्कृतत्वेनाप्याददाविव टिघुभादावर्थाभाव इनि तेषामप्यसाघुतापत्तिरत आह । टिघुभेति । धर्मबुद्ध्येति भावः । तथाच मुख्यमिदमेव तदनुमापकमिति तत्र व्याकरणपदमुपलक्षणम् । तेन व्याकरणसस्कारकल्पनाद्यथाश्रुतमेव वेति तत्र तत्त्वमेवेति ततो वैलक्षण्येनात्र न प्रत्यवायो यज्ञादौ तत्र त्वस्त्येवेति भावः । यत्तु उक्तसाधुत्वमाधुनिकसंज्ञासु नाव्याप्त सर्वे सर्वेति ° पक्षव्यवहारायेति नियमबोधनेन तासामप्यनादित्वेनादोषादिति प्राञ्चस्तन्नेत्याह । सर्वेति । वाचकत्वस्य गृहीतस्यैव बोधजनकतद्ग्रहस्य व्यवहारत सङ्केतेन वा जायमानत्वाद्विधित्वसम्भवे इति भाव । नन्वेव हरिविरोधो ऽत आह । यत्त्विति । अत्र केचित् क्वचित्संज्ञिनि संज्ञानां नियमो व्यवहारायेत्यन्वय । नियतव्यवहारायेति तदर्थः । ननु विधिरेव किं न स्यादत आह । नित्य एवेति । डित्थादिष्वर्थेषु डित्थादिपदानां नित्य एव सम्बन्धो गवादिपदानां गवाद्यर्थेष्विवेत्यर्थः । सर्वेति पक्षेणेदम् । सामान्येनोक्तमेवार्थ विशिष्याह । वृद्ध्यादीति । अस्मिन् व्याकरणे वृद्ध्यादीनां शब्दानां शक्तिसङ्कोचलक्षणो नियमो व्यवहारायेत्यन्वयः । अवच्छेदः । सङ्कोच । इष्टान्यार्थनिरासाय च नियमः । तत्र हेतुरकृत्रिम इति । यत इत्यादिः । कृत्रिमत्वमाधुनिकत्वम् । यथा गुणद्रव्ययोर्गुणे विशेषणत्व द्रव्ये विशेष्यत्वम् । अकृत्रिममनादिसिद्धमेव न त्वाधुनिकं तद्वत्संज्ञा संज्ञिसम्बन्धो ऽकृत्रिम एवेत्यर्थ इत्याहुः । यत्तु इद गोत्रसंज्ञाविषयमिति तन्न । सङ्कोचे मानाभावात् । वृद्ध्यादीनामिति विरोधाच्च । यदपि नियमः सङ्केतग्रह इ-

त्यर्थ इति तदपि न । उक्तत्वात्तदेतत् ध्वनयन्नन्यथा आह । तत्रेति । तत् हर्युक्त तत्र सर्वत्र तत्रेति यावत् । अत एवाह । तत्तदिति । ज्ञानेति । उभयाकाङ्क्षासहकृतेत्यर्थः । तस्यैव । तस्य तस्यैव परमिति न तु मच्छास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति शाब्दनियमपरम् । तथा सति विनिगमनाविरहादादैचो वृद्धिशब्देनैव ग्राह्या इति नियमस्याप्यापत्तावाकारादीनां स्वशब्दादिभिर्व्यवहारानापत्ते । तदस्मिन् वृद्धायेत्यादावनिष्टापत्तेश्च । अत्र पक्षे इत्थमर्थःनियम शक्तिबोधनं शक्तिस्तु नित्येत्याह । नित्य इति । एवञ्च वृद्धिशब्दस्याप्यनेकेष्वर्थेषु शक्तिरस्त्येव तद्बोधनफलक शास्त्र अज्ञातशक्तिबोधकत्वात् । अपत्य पौत्रेति सूत्रस्य कैयटोक्तनियमानुपपत्तेस्तदाह । वृद्ध्यादीनां चेति । अवच्छेदो निश्चय । शब्दार्थस्यानवच्छेदे इत्यादौ तस्य तदर्थकत्वस्य दर्शनादिति तदेतत्संबन्धविशेषणम् । अत एवात्राह । तत्त्विति । तेन । तदुक्तवाक्येन । वाक्यान्तरसंशयेनाह । नीलादीति । सामर्थ्यादाह । नील एवेति । एवञ्चेदमेवहरिसमत न तत् परिसंख्यायां चात्र शास्त्रे प्रायेण नियमव्यवहारः । अत्र मते तस्मिन्नित्यादौ न दोषः । तादृशज्ञानसत्त्वे ऽप्युभयाकाङ्क्षाया अभावात् । तत्र साहचर्येण लौकिकार्थावगतेरिति बोध्यम् । नन्वेवं न हि संज्ञानित्येति तद्धितार्थोत्तरेति सूत्रभाष्यविरोधापत्तिरत आह । पाणिन्युपेति । आदिना वार्तिककारीयादिपरिग्रहः । संज्ञाभूततत्पदवाच्यत्वज्ञानस्यैतच्छास्त्रज्ञानात्प्रागभावे नित्यत्वमिति तद्भावः । अन्यथा वैयाकरणानां शब्दस्य नित्यतया संज्ञायाश्च शब्दस्वरूपतया यथाश्रुतभाष्यासङ्गतिः स्पष्टैव । घटादौ घटादिपदवाच्यत्वज्ञान तु प्रवाहनित्यमिदं तु नेति विशेषः । नन्वेवं सिद्धे शब्दार्थसम्बन्धे इति वार्तिकादिविरोधो ऽत आह । वाचकतेति । नन्वेव ऋलृक्सूत्रभाष्यादौ यदृच्छाशब्दत्वव्यवहारासङ्गतिरत आह । तेष्वेवेति । आदैक्ष्वेवेत्यर्थः । एवेनान्यव्यवच्छेद. । इदमुपलक्षण वृद्धिपदेनादैज्वाचकत्वस्यापि । हरिव्यवहारो ऽप्येतावतैवेत्याह । स्वेच्छयेति । नन्वेवमप्यसाधुत्वात्कथं शास्त्रविषयतात आह । वेदेति । कर्णोभिर्देवास इत्यादीत्यर्थः । इदं

चान्यत्रावश्यकम् । एतेन तत्सम्बन्धस्यानादित्वेन वा सामयिकत्व-लौकिकत्वमित्यपास्तम् । नन्वेवमप्यसाधुत्वात्कथं सा अन्यथा साध्वनुशासने इति भाष्यविरोधापत्तेरत आह । उक्तेति । शिष्टप्रयुक्तत्वेनेत्यर्थः । उक्ते ऽर्थे भाष्यसमातिमप्याह । स्पष्टश्चेदमिति । सर्वघादीनां तत्त्वेन तत्त्वात्तत्त्व गाव्यादीनामसाधुत्वमशास्त्रविषयत्व च तेषां यदृच्छाशब्दत्वेन व्यवहरणं च । तद्भाष्यमनुपदमेव स्फुटी भविष्यति । इदञ्चाभ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह । किञ्चेति । ननु तथाज्ञानाभावे ऽपि सामान्यज्ञानमस्त्येवात आह । सामान्येति । अतिप्रसक्तत्वादिति भावः । ननु तर्हि स व्यवहार एव नात आह । योगीति । शास्त्रे ऽत्रपान्तजले च एतदुपपत्तिरुद्द्योतादावित्यादिन्यत्रेतिसङ्ग्रादाह । देशेति । एवञ्चेत्यादिः । वाचकत्वस्य सत्त्वेन साधुत्वभ्रान्त्यैवेत्यर्थः । तर्हि कथ कार्यमत उपसहरन् आह । तस्मादिति । तेषामसाधुत्वादित्यर्थः । घोषवानादिर्यस्य तत् । घोषशब्दो धर्मपरः । अन्तर्मध्ये ऽन्त स्थाः यणः यस्य । अन्त स्थाशब्द आकारान्तः । कृत, तदन्तमेव । अत एवाह । नेति । तद्धितम् । तदन्तम् ॥ ३१ ॥

नामदेवता-कीर्तनम् । किञ्च अग्न्यादिनक्षत्रदेवता उक्त्वा नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतमिति वेदाङ्गज्यौतिषोक्तम् । नक्षत्रनाम च तदुपयोगिनामकरणे नाक्षत्रनामनक्षत्रपादाक्षरादिकार्यमिति वृद्धाः । गृह्यपरिशिष्टे च क्वचित्तथैवोक्तम् । एतदेव जानकर्मप्रकरणे नक्षत्रनाम च निर्दिशति तद्रहस्यं भवतीत्यापस्तम्बेनोक्तम् । तदेव चाभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामौपनयनादित्याश्वलायनेनोक्तम् । एवमेव नामकरणे शिष्टानामाचारश्च । अत एव ज्यौतिषं यज्ञकर्मणीत्युक्तम् ।

तत्तन्नक्षत्रवाचकेभ्यो जातार्थप्रत्यये निष्पन्नं त-

त्तन्नक्षत्रनामेति केचित् । तत्र पुत्रस्य नाम गृह्णाति रौहिणाय तैष्यायेति बौधायनसूत्रं मूलम् । यत्त्वसावसावित्यादिश्य नामनी इत्याश्वलायनेनोक्तं तत्तु सन्दिग्धम् । यद्यपि देवत्रातेनानुराधो देवदत्त इति प्रयोक्तव्यमित्युक्तं तत्र सूत्राक्षरानुग्रहाश्चिन्त्यः । शाङ्खायनादयश्च ज्यौतिषोक्तमेवाद्रियन्ते । इदानीमाश्वलायना देवत्रातोक्त्या निर्दिशेद्यजमानस्य नाम सांव्यवहारिकं नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपीत्याश्वलायनश्रौतकारिकोक्त्या च तथैवाचार इति नामकरणे ऽपि तदेव नाक्षत्रं नामेति च वदन्ति । परेतु बौधायनादिवाक्ये रौहिण्यादिपदं तन्नक्षत्रजातत्वेन तत्तद्देवतानामोपलक्षणम् । एवं हि ज्यौतिषेण तेषामेकमूलकल्पनालाघवं भवति विकल्पस्यानौचित्याच्च । संज्ञापर्यायनामशब्देन पञ्चकादिशब्दवत् केवलयौगिकश्रावणादिशब्दानां ग्रहीतुमनौचित्याच्च । अभिवादनं प्रयोजनमस्येत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च तस्य साधारणत्वादित्याहुः ॥ ३२ ॥

( कुं० टी० ) अग्न्यादीति । अग्न्यादयो नक्षणत्राणां देवताः । एताभिरिति । अग्निदत्तेत्यादिवत् । ज्यौतिषोक्तमिति । अश्विन्यादिचरणाक्षरेण कृतं चूडामणिरित्यादिकं च नाम यज्ञकर्मोपयोगीत्यर्थः । तथैवोक्तमिति । नाक्षत्रं नाम इदमेवोक्तमित्यर्थः । प्रकरणे इति । उक्तमित्यत्रान्वयः । नाम चेति । चकारेण नामान्तरसमुच्चयः । निर्दिशति । लिखति । रहस्यमिति । अप्रकाश्यत्वात् । तदेव चेति । आश्वलायनेनाभिवादनीयं चेत्यादि

तद्देवोक्तमित्यन्वयः । व्यावहारिकं नाम कृत्वा अभिवादनीयमाभिवादनप्रयोजनं नाम उपांशु कर्तव्यं तच्च मौञ्जीबन्धनान्तं मातापितरावेव जानीयातामुपनयनकाले चानेननाम्नाभिवादयेति कुमारं प्रति वाच्यम् । नाम गृह्णातीति श्रौते कर्माणि अयं यजमानो ऽमुकशर्मणे पुत्रायायुराशास्ते इत्यादिप्रयोगात् । स च दर्शपूर्णमासयोर्वेदिमध्ये यजमानं उपविश्य पुत्राणां नाम गृह्णाति अमुकशर्मा सन्तनोतु इत्यादिप्रयुज्यते । यस्त्वसाविति । अयं यजमान इत्यस्यानन्तरं नामद्वयमुच्चार्य आयुराशास्ते इति होता ब्रूयादित्यर्थः । असावसाविति । इदं नामद्वयप्रदर्शनम् । संदिग्धमिति । कीदृशं नामद्वयमित्यनिश्चयात् । देवत्रातेनेति । असौ देवदत्त असौ आनुराध इत्येवं नामद्वयं प्रयोक्तव्यमित्याश्वलायनवाक्यार्थ इति भावः । सूत्राक्षरेति । तत्सूत्रबलात्तादृशनामद्वयस्यालाभात् । आश्वलायना इति । देवत्रातोक्तकारिकोक्त्या चाचरन्तीत्यत्रान्वयः । सांव्यवहारिकम् । व्यवहारार्थसङ्केतितम् । अत्रायमाचरः स्वकुलदेवतानुसारेणामुकभक्त इति कांस्यपात्रे नामलिखित्वा मासनाम कुर्यात् । तच्च ।

कृष्णो ऽनन्तो ऽच्युतश्चैव वैकुण्ठो ऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिरिति ॥

अत्र चैत्रादिर्मार्गशीर्षादिर्वा क्रमः । ततो नक्षत्रनाम ततो द्व्यक्षरं चतुरक्षरं चेत्यादिशर्माद्यन्तव्यावहारिकं नाम लेख्यमिति ॥ ३२ ॥

( क० टी० ) पक्षान्तरं सूचयन्नाह । किञ्चेति । कृत्तिकादिक्रमेणेति भावः । अत्र एता वै इति एतासामिति वा वाच्ये एताभिरित्युक्त्या नाम्नस्तदघटितत्वं सूचितम् । तत्त्वञ्च तत्प्रतिपा-

दकशब्दघटितत्वम् । अत एव कुलदेवतानक्षत्रसम्बद्ध पिता नाम कुर्यादिति शङ्खोक्तिः । अन्यथा मासनाम गुरोर्नाम दद्याद्बालस्य वै पितेति गार्ग्यवत् ब्रूयात् । तथाच तदपि भक्तशर्मेत्याद्य-ग्निदत्तशर्मेत्यादि वा बोध्यम् । या एता नक्षत्रदेवता उक्तास्ता-भिरेताभिर्यन्नाम तद्यजमानस्य यज्ञकर्मणि नक्षत्रज नक्षत्रात्त-दुत्पत्तेर्ज्ञातं शास्त्रज्ञैः स्मृतमित्यर्थ. । यजेत्युक्त्या ऋत्विक्कर्तृक-यजमाननामोल्लेखविषयताऽस्य सूचिता । यज्ञेत्यनेनान्यानिरा-स. । नक्षत्रमित्यनेनान्यस्य तत्त्वनिरास । नक्षत्रसम्बन्धीदमेव नामेति भाव । तर्ह्यन्यत्र कथमत एतत्प्रसङ्गादाह । नामकर-णे इति । अत्र मान सूचयन्नाह । गृह्येति । आश्वलायनेत्यादि । द्वे-च । द्वेऽपि । एकवाक्यतार्थमाह । एतदेवेति । नक्षत्रपादाक्षरादीत्य-र्थ' । जातेति । जात वात्सप्रेणाभिमृश्योत्तरेण यजुषाऽस्य आ-धायोत्तराभ्यामभिमन्त्रेण मूर्द्धन्यवघ्राणं दक्षिणे कर्णे जाप इत्य-ग्रे इत्यर्थ. । वात्सप्रो दिवस्परीत्यनुवाकः । उत्तरेण । तस्मिन्नह-मिति यजुषा । उत्तराभ्यामङ्गादङ्गादश्या भवेति द्वाभ्याम् । अनयोरे-वाग्रे उभयत्र सम्बन्ध. । जापो जपः उक्तमन्त्रान्तोक्तसावित्यव्य-वहित नक्षत्रनाम्नो जप. । सम्बुध्येति सूचयितुमव्यवहितोक्तत्व-साधर्म्याज्जातकर्माव्यवहितकालिकनामकर्माह । नक्षत्रेति । चेना-ग्रिमव्यावहारिकसमुच्चय' । निर्दिशतीति । वर्तमानसामीप्ये इति लट् । निर्देशः । व्यवहितोच्चारणम् । नन्वेतस्यैवात्र निर्देश कुतो ऽत आह । तदिति । नक्षत्रनामेत्यर्थः । रहस्यम् । सर्वाज्ञेयम् । तथाच भाविसञ्ज्ञयात्र निर्देशः । एतेन तस्याकृतत्वात्कथमत्र निर्देश इत्य-पास्तम् । अनेन वक्ष्यमाणकालवदयमपि नाम कर्मकाल इत्यु-क्त भवति । अत एवाश्वलायनेन कालान्तर नोक्तम् । जातक-र्मप्रकरणे एव तत्प्रयोगसमाप्त्युत्तर नाम चास्मै दद्युरित्याद्युक्तं च । तच्च जातकर्मानन्तरमेव वा नाम चास्मै दद्युरिति गृह्य स्थचकारस्वरसेन जातकर्मसमानकालिकता लाभादिति भ-ट्टोजिदीक्षितैर्व्याख्यात च । वृत्तिकारो नारायणो ऽप्येवम् । प्राग्व-दाह । तदेव चेति । तदेकवाक्यतापन्नयुक्तमेव चेत्यर्थ. । अभीति । आहूतादिः सन् येन नाम्ना ऽभिवादयते तत्तदभिवा-दनीयमसांव्यवहारिक तच्च समीक्षेत कुर्यात् । चेनपू

वौकसाव्यवहारिकसमुच्चयः । तदभिवादनीय मातापितरावेव विद्यातां आ उपनयनात् । तदारभ्य उपनीतस्य त्वाचक्षते अनेन नाम्नाभिवादयस्वेति भाष्यकृद्वृत्तिकारौ । आचारसवादमप्यत्राह । एवमेवेति । आचारः । आचारो ऽपि । लेखश्चेति पाठे स लेखो ऽपि । तण्डुलोपरि लेखो ऽपीत्यर्थ । अत एव । नामकरणे सर्वसम्मततया तस्यैव सत्त्वेनान्यस्याप्रप्तिरेव । मन्तातरमाह । तत्तदिति । प्रत्यये सति लुप्ते वा । दर्शपूर्णमासेष्टिप्रकरणस्थ तमाह । यस्त्वसाविति । अयं यजमानो ऽसावित्यत्रासावसाविति यजमाननामनी सांव्यवहारिकनाक्षत्रे च प्रथमान्तेनादिश्यायुराशास्ते इत्यादि होता ब्रूयादित्यर्थः । देवेति । तद्भाष्यकृतेत्यर्थ । तत्रान्याचारविरोधो ऽपि दोष इत्याह । शाङ्खेति । अत एव चः तत्रैवेति भाव । एवेनोभयव्यवच्छेदः । तत्रैवाचारभेदमाह । इदानीमिति । चरति तत्रैवेति भाव. । एवञ्च मतभेदस्तत्र सिद्धः । अतो नामकरणे ऽपि मतभेदमाह । नामकरणे ऽपीति । इम विरोध परिहरन्सिद्धान्तमाह । परे त्विति । आदिनोक्तकारिकादेवत्रातपरिग्रह । देवतानामेति । तद्तद्घटितनामेत्यर्थः । तेषाम् । बौधायनादीनाम् । ननु व्रीह्यादिवद्विकल्प एवास्त्वत आह । विकल्पेति । अष्टदोषदुष्टत्वादिति भावः । ननु तथापि अन्यत्रेवात्रापि स एवास्त्वत आह । सर्वेति । तेषु वाक्येष्वित्यर्थ' । ननु नेद सर्वं नामकर्मप्रकरणस्थमिति असति बाधके नामशब्दो वाचकसुबन्तपर एवास्तु, किञ्च वृद्ध्यादेः संज्ञात्वस्य पाणिनेर्ऋनकादेस्सञ्ज्ञात्व भगवत इष्टत्वेन कृत कुर्यादित्यादितत्सूत्रे उक्तत्वेन च तेन तद्ग्रहणे बाधकाभावादाह । अभीति । प्रागुक्ताश्वलायनीये इत्यर्थ. । अत्र हेतुमाह । तस्येति । श्रावणादेरित्यर्थः । अभिवादनकार्ये एव तस्य श्रावणत्व नान्यकार्ये इत्यस्याभावादित्यर्थः । एवञ्च तत्र तथा सुवचत्वे ऽपि नामकरणे तथा दुर्वचमिति तेषा तथाचारस्तत्रायुक्त एवेति भाव ॥ ३२ ॥

प्रकरणार्थनिष्कर्ष । अत्र तत्त्वं महान्तो विदाकुर्वन्तु । यत्तु कुश्रीत्यादीनां साध्वसाधुबहिर्भूतत्वं शास्त्राविष-

THE

# CHOWKHAMBÁ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO 192.

सर्वतन्त्रस्वतन्त्रश्रीमदुपाध्यायोपनामकश्रीनागेशभट्टविरचिता

# वैयाकरणसिद्धान्तमञ्जूषा।

श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-श्रीमद्बालम्भट्ट-
विरचितकलाटीका-इति टीकाद्वयसंवलिता।

काशिकराजकीयसंस्कृतपाठशालायामध्यापनकार्यमनुतिष्ठता
वैयाकरणाचार्यमदनमोहनपाठकेन
संशोधिता।

# VAIYÂKARANA SIDDHÂNTA MANJÚSHA

BY

ŚRÎ NAGEŚA BHATTA,
With Two Commentaries i.e. Kunjika of
Durbaláchárya and Kalá of Bálam Bhatta
Edited by Vyákaranáchárya Madan Mohan Páthak,
A Professor, Government Sanskrit College, Benares

FASCICULUS II—२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT BOOK DEPOT
BENARES
AGENTS— OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHA RAMA MUKUND JI BOMBAY
PROBSTHAIN & CO BOOKSELLER, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES

*Price Rupees one*

॥ श्रीः ॥

—०—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—१९२


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभा अमुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः ,ब्रह्मदेशीयैः ,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तबकं

६ प्रापणव्ययः पृथग् नास्ति ।

यता चेति तन्न। तृतीयकोटेरभावात्। एवं विधेभ्यो ऽन्यत्र शास्त्रविषये साध्वसाधुबहिर्भावस्य क्वाप्यदृष्टत्वाच्च। अत एव ऋऌक्सूत्रे ऌकारोपदेशे प्रयोजनं यदृच्छाशब्दे दध्यॢतकाय देहीत्युक्त्वा न्याय्यस्य ऋतकस्य भावत् तस्यैव संज्ञात्वं न्याय्यं न त्वस्येत्यादिनास्यासाधुत्वाच्छास्त्राविषयत्वेन परिहृतम्। न्याय्यस्येत्यस्य शास्त्रबोधितस्य शिष्टप्रयुक्तस्य चेत्यर्थः।

यद्यपि समाने प्रवृत्तिनिमित्ते ऽन्वाख्यातो ऽनन्वाख्यातस्य निवर्तको भवति यथा देवदत्तशदो देवदिण्णशब्दं निवर्तयतीति भाष्येण ऋतकस्य शास्त्रप्रसिद्धत्वे ऽपि क्रियाप्रवृत्तिनिमित्तकत्वेन ऌतकशब्दस्य शब्दप्रवृत्तिनिमित्तकस्य भिन्नार्थस्यास्य नासाधुत्वबोधनं लभ्यते, तथापि शब्दाप्रयुक्तत्वेनैवास्यासाधुत्वं कैयटेनोक्तम्। स्वीकृतं च शास्त्रान्वितानामपि वचन्तीत्यादीनां शिष्टाप्रयुक्तत्वेनासाधुत्वं सर्वैः। ततः पक्षान्तरैरपि परिहारा भवन्तीत्याशयेन अथीशब्दानां प्रवृत्तिर्न सन्ति यदृच्छाशब्दा इत्यादिना परिहारान्तरमुक्तं तदा ऽसाधुत्वं शास्त्रविषयत्वं च स्पष्टमेवोक्तम्। एवञ्चैतत्पक्षैकवाक्यतया अग्रे ऽपि तत्त्वमेवोचितम्। एकस्यैव पक्षभेदेन शास्त्रविषयत्वतदविषयत्वयोर्न वेति सूत्रे भाष्ये तिरस्काराच्च।

किञ्चैवं साधुत्वस्य व्याकरणव्यङ्ग्यतानापत्तिः। साध्वनुशासने शास्त्रे इत्यादिभाष्यासङ्गतिश्चेति दिक्। एवञ्च भाषाशब्दानां शिष्टैर्धर्मबुद्ध्या साधुपर्यायवद्-

**प्रयोगाद्व्याकरणलक्षणाननुगमाच्चार्थवत्त्वे ऽपि न शास्त्रविषयत्वमिति न तत्र प्रातिपदिकत्वमित्यन्यत्र विस्तरः ॥ ३२ ॥**

( कुं० टी० ) अत्र तत्त्वमिति । स्वस्वगृह्यानुसारेण प्रयोगात्सूचितः। अतएव कात्यायनेन कुमारस्य दक्षिणे कर्णे श्रावयेदित्याद्यन्यथोक्तम् । बहिर्भूतत्वमिति । ऐजादिशब्दवदस्यापि संज्ञात्वात् । तन्नेति । ऐजादिपदानां तु साधुत्वमन्यत्रोपपादितमिति भावः । ननु चतुष्टयीपक्षे अव्युत्पन्नसंज्ञानामपि सत्त्वात्कथं तासां शास्त्रबोधितत्वमतआह । शिष्टप्रयुक्तस्य चेति । अव्युत्पन्नसंज्ञाविशिष्टप्रयुक्त एवसाधुरित्यर्थः । ऌतकेति । क्रियाशब्देन ऋतकशब्देन स्वरूपपरस्य ऌतकशब्दस्य कथं व्यावृत्तिरित्यर्थः । पक्षान्तरैरपीति । यथा व्यक्तिपक्षे सरूपसूत्रारम्भं जातिपक्षे प्रत्याख्यानम् । परिहारान्तरमिति । तथाच चतुष्टयीपक्षस्य त्रयीपक्षेण प्रत्याख्याने अव्युत्पन्नस्य ऌतकशब्दस्याभावान्न ऌकारोपदेशे प्रयोजनमिति भावः । आरोपितत्वमिति । चतुष्टयीपक्षे ऽप्यसाधुत्वमित्यर्थः। अव्युत्पन्नसंज्ञासद्भावे ऽपि शिष्टप्रयुक्तानामेव साधुत्वमिति भावः । किञ्चैवमिति । व्याकरणाव्युत्पाद्यस्यापि साधुत्वे इत्यर्थः ॥ ३२ ॥

( क० टी० ) नन्वेवं यज्ञकर्माणि केषांचिदेकवाक्यतायामपि आद्युक्तमतभेद एवैव नामकरणे ऽपि मतभेद एवेति कथं व्यवस्थात आह । अत्रेति । उक्तविषये इत्यर्थः । अत्रेद तत्त्वम् । यज्ञकर्माणि ऋत्विक्कर्तृकयजमाननामोल्लेखविषये सर्वं सर्वैर्ज्योतिषोक्तमेव कार्यम् । तत्रैव स्वकर्तृकनामोल्लेखविषये केचिन्मतोक्तस्यैवादरः कार्यः । अभिवादने तु नक्षत्रपादाक्षराद्येव । व्यवहारे तु आद्यमेव । तत्रापि घोषवदादीति न नियतमाश्वलायनगृह्ये युग्मानित्येव पुंसामित्येवफलत्वेन वृत्तिभाष्यकारादिभिस्तथोक्त-

त्वात् । अत्रापि वा यस्मिन्निति वदता आपस्तम्बेनापि तदनादरः सूचितः । तथाच युग्मत्वादिकमेव नियनम् । अत एवाधिकाक्षराण्यपि नामानि सिद्धानि । अत एव स्वस्त्यस्मै देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत् नामाभिवादनीय तु पित्रोर्ह्येवोपनीतित इति नामकर्मप्रकरणे जान्वाच्य दक्षिण पादमाचार्यस्योपगृह्य च नाम्नाभिवादनीयेन शिरस्त्वस्यावनम्य चेति ब्रह्मचारिहोमप्रकरणे आश्वलायनगृह्यकारिकायामुक्तम् । सन्ध्यावन्दनादावाचारोऽप्येवमेव । नामकरणे तु नक्षत्रपादाक्षराद्येव नाक्षत्र नामेति तथा तेषामाचारो ऽयुक्त एवेति सर्वेषामविरोधेन व्यवस्थेति न को ऽपि दोषः । एतेन यज्ञातकर्मप्रकरणे नामकरणे च सुदर्शनांङ्घ्रिलाकारविद्यातीर्थचन्द्रचूडादिभिरुक्त तत्सर्वमपास्तमिति । कौस्तुभकृदाद्युक्ति खण्डयति । यत्त्विति । कूचीति चतुष्टयीपक्षे । टिघुभादीनामिति । कूचीत्यादीनामित्यर्थः । साध्विति । पुण्यजनकतावच्छेदकधर्मरूपसाधुत्वस्याभावात्तदर्थे ऽनादिप्रयुक्ते शक्तिवैकल्यादिनान्यथोच्चारणविषयत्वस्यैवासाधुत्वेन तदभावाच्च अनपभ्रंशत्वरूपसाधुत्वस्यैव शास्त्रप्रवृत्त्युपयोगित्वेनोभयबहिर्भूतत्वे ऽपि शास्त्रविषयत्वाक्षतिस्तदाह । शास्त्रेति । नन्वत्रैव सेति कुतस्तदभावो ऽत आह । एव वीति । उक्तसंज्ञाशब्देभ्यो ऽन्येषु जात्यादिशब्देष्वित्यर्थ । दुष्टत्वाच्चेति । यदि दुष्टत्व तर्हि तदनुकरणे ऽपि प्रकृतिवदनुकरणमित्यनेन शास्त्रविषये दध्य्लृतक इत्यादावाच्कार्याय लृकारोपदेशस्यानुकरणे ऽर्थतयावश्यकत्वे ऽनुकरणार्थलृकारोपदेशप्रत्याख्यानपरभाष्यवार्तिकविरोध । तत्र हि साधोरनुकरण साध्वेव अशिष्टाप्रतिषिद्धस्य तादृशमेव अर्थादसाधोरसाध्वेवेति लृकारानुकरणमसाध्वशास्त्रविषयमेवेति न लृकारोपदेशस्तदर्थं इत्युक्तम् । भाष्यकृता त्वसाध्वनुकरणस्य भिन्नार्थत्वेन साधुत्वमाश्रित्य तदर्थ स कार्य इत्युक्तमित्यन्यत् । तदेतद्ध्वनयन्नुक्तार्थे भाष्यान्तराविरोधमाह । अत एवेति । तदभावादेवेत्यर्थः । प्रयोजनमिति । लृकारोपदेशो यदृच्छाशक्तिजानुकरणस्तुत्याद्यर्थ इति वार्तिकोक्तेरिति भाव. । न्याय्यभावात्कल्पन सञ्ज्ञादिष्विति तदुक्तमेवाद्यफलखण्डनमाह । न्याय्यस्येति । भावात् । सत्त्वात् । अस्य । लृतकस्य । एवमग्रे ऽपि ।

वक्ष्यमाणोपपत्तये सिद्धान्तमाह । न्याय्येति । तन्नेत्यादिः । अत एवाद्याभावप्रयुक्ता साधुत्वाभावे ऽपि न परिहारपरभाष्यासङ्गतिरित्याह । यद्यपीत्यादिना । भाष्येणेत्यस्य लाभे हेतुत्वेनान्वयः । कत्वेनेत्यग्रे न तेनेति शेषः । बोधनमित्यग्रे इतीति शेषः । अस्यावश्यकतामाह । स्वीकृतश्चेति । आदिनानभिधानविषयपरिग्रह.। तथाचाद्यसत्त्वे ऽपि तदभावात्तदभावे ऽपि प्रकृते तत्सत्वान्न तदसाधारणतद्गमक किन्तु तत्सहकृतमेवेति तदेवासाधारणतद्गमकमाद्याभावे ऽपि तत्सत्त्वेन तत्त्वाङ्गीकारादत एवार्षत्वात्साधुतेति तत्र तत्रोक्तिरेवञ्चान्वयव्यतिरेक. तत्रैव नाद्ये इति तदभावात्तस्य तत्त्वेन परिहारभाष्य चतुष्टयीपक्षाश्रयमुक्त सम्यगेवेति भावः । ततस्तदनन्तर ये गुणक्रियाजातिप्रवृत्तिनिमित्तकास्तेपु तेष्वर्थेषु प्रसिद्धास्तेतत्तद्गुणाद्यारोपेण तेषु पिण्डेषु सङ्केत्यन्त इति ऌतकादीनां तादृशप्रसिद्ध्यभावान्न तेषां क्वचिदपि सङ्केत इति तदाशय. । एवञ्च सर्वथा तेषां न साधुत्वमिति तात्पर्यम् । तदाह । तदेति । त्रयीपक्षे इत्यर्थ । तत्र साधकान्तरमपि स्वदनयन्नाह । एवञ्चेति । त्रयीपक्षे तत्त्वसिद्धौ चेत्यर्थ । तत्त्वमेव । असाधुत्वमेव । तच्चोक्तरीत्यैव नान्यथेति इतो ऽपि तदावश्यकत्वमेवेति भाव. । ननु पक्षभेदादेवमस्त्वेकवाक्यतेति वैषम्यमास्तामिति परिहारभाष्यमेकदेश्युक्तिरेवान्यत्र तथासत्त्वे ऽप्यत्र तदङ्गीकारे भानाभाव इति कैयटो ऽसङ्गत एवात आह । एकस्यैवेति । एवञ्चानेन भाष्येण कृच्यादीनामसाधुत्व शास्त्राविषयत्व टिघुभादीनां तु पाणिन्यादिशिष्टप्रयुक्तत्वाद्येवेति बोधितमिति स्पष्टमेवेति त्वन्मते एव विरोध इति भावः । यत्त्विति मते दोषान्तरमाह । किञ्चेति । एवमुभयबहिर्भूतस्य शास्त्राविषयत्वे तस्यातिप्रसक्तत्वादिति भावः । तत्रैव दोषान्तरमाह । साध्विति । एवमित्यस्यादावनुषङ्ग. । किञ्च तस्य तथात्वे तद्घङ्घसाधुत्वस्यैवापत्तिरित्यपि बोध्यम् । तदाह । दिगिति । नन्वेवमपि भाषाशब्दानां शिष्टप्रयुक्तत्वमस्त्येवेति प्रागुक्तासङ्गतिरेवात आह । एवञ्चेति । तन्मतस्यायुक्तत्वे चेत्यर्थ. । आद्यमपि नेत्याह । व्याकरणेति । असाधुत्वेनेति पाठ. । इत्युक्तमिति । तथाच तद्दार्ढ्याय पुनः स्मारितमिति भावः ॥ ३३ ॥

शक्तेस्त्रैविध्यम् । शक्तिस्त्रिधा रूढिर्योगो योगरूढिश्च । शास्त्रकल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वं तत्पदे सा तदर्थनिरूपिता रूढिः । यथा मणिनूपुरादौ । शास्त्रकल्पितावयवार्थमात्रबोधे योगशक्तिः । यथा पाचकादौ । अश्वगन्धापदमौषधिविशेषबोधे रूढम् । अश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम् । इदं यौगिकरूढमित्युच्यते । रूढिर्योगापहारिणीति तु प्रकरणाद्यभावे इति बोध्यम् ।

यत्र मण्डपपदादिभ्यो मण्डपानकर्त्रादेः रूढ्यर्थमण्डपादिगुणवत्त्वेन बोधस्तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थत्यागेन योगरूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः । यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदायबोधकत्वं सा योगरूढिः । यथा पङ्कजादिपदे । तत्र पङ्कजनि कर्तृपद्ममिति बोधात् । पद्मस्यानुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना बोधान्न तत्र लक्षणावसरः । क्वचित्तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः । भूमौ पङ्कजमुत्पन्नं कह्लारकैरवमुखेष्वपि पङ्कजेष्वित्यादौ । स्पष्टश्चेदमाहोदिति सूत्रे भाष्ये ॥ ३४॥

( कुं० टी० ) रूढिरिति । समुदायार्थमात्रबोधकपदे शक्ती रूढिरित्यर्थः । ननु प्रकृतिप्रत्ययविभागस्यापारमार्थिकत्वात्कथं रूढ्यरूढिविभाग इत्यत आह । शास्त्रकृत्कल्पितेति । तदुक्तं हरिणा ।

वाक्ये त्वर्थान्तरगते सादृश्यपरिकल्पने ।
केषाञ्चिद्रूढिशब्दत्वं शास्त्र एवानुगम्यते इति ॥

अस्यार्थः। वृत्तिवाक्ययोः सादृश्ये कल्पिते केषाञ्चिच्छब्दानां विग्रहे ऽर्थान्तरप्रतीतेरूढिशब्दत्वम् । मण्डपशब्दे हि मण्डपानकर्ता विग्रहार्थो विद्यते सर्वश्चैतदवयवविभागादिकं कल्पितमेव। यदर्थेति । यादृशार्थेत्यर्थः । मणीति । मण्यते इति मणिः । मणशब्द इति । नुवति स्तुवति पुरं नूपुरः । नन्वश्वगन्धाशब्दे कथं यौगिकार्थबोधः पङ्कजपदात्कुमुदबोधवारणाय रूढेः प्रतिबन्धकत्वस्वीकारादत आह । योगापहारिणीत्विति । अवयवार्थानुसन्धानमूलकयौगिकार्थापेक्षया रूढ्यर्थस्य प्रथमोपस्थितत्वमेव बलवत्त्वे बीजम्। यत्र तु यौगिकार्थस्य प्रथममुपस्थितिस्तत्र तस्यैव बलवत्त्वम्। यथा वाजिभ्यो वाजिनमित्यत्र वाजिशब्देन नाश्वस्य बोधः किन्तु वाजमन्नमामिक्षारूपमस्ति येषामिति योगाद्विश्वेदेवानामेव ग्रहणमिति आमिक्षाविकरणसङ्गतिः । प्रकरणाद्यभावे इति । यत्र प्रकरणादिवशाद्यौगिकार्थस्य प्रथममुपस्थितिस्तत्र तद्बोधो भवत्येवेत्यर्थः । यत्तु नानार्थविषयाद्यौगिकार्थबोधवारणाय रूढेः प्रतिबन्धकत्वमावश्यकमिति तन्न । ग्राह्याभावानवगाहितया तस्य प्रतिबन्धकत्वासम्भवात् । मणिमन्त्रादिन्यायेन तत्कल्पने च गौरवात् । मण्डपानकर्त्रादेरिति । वस्तुतो यो मण्डपानकर्ता चैत्रादिस्तस्य मण्डपानकर्तृत्वेन न बोधः किन्तु मण्डपो गृहविशेषस्तत्सादृश्येन बोधः । तत्र रूढिमूलिकाया लक्षणाया बलवत्त्वाल्लक्षणयैव बोध इत्यर्थः । प्रथमप्रतीतेति । पङ्कजपदात्समुदायशक्त्या उपस्थिते पदे पङ्कजनिकर्तृत्वस्यान्वयात्प्रथमप्रतीतत्वम्। अत एव न केवलयोगेन कुमुदादिबोधः। बलवत्त्वेनेति। रूढेर्योगापहारित्वादिति भावः । यत्रेति। यत्रावयवशक्तिलभ्या समुदायशक्तिस्तत्रेत्यर्थः । तत्र हि पङ्कजनिकर्तृत्वान्वितं विशेष्यपदम् । अत्रेदं चिन्त्यते । योगरूढिस्थले योगार्थ-

स्यापि शाब्दबोधविषयत्वे पङ्कजपदात्पङ्कजानिकर्तृपद्ममिति बोधापत्तिः । न त्वेतदनुभवसिद्धं स्थलपङ्कजमिति प्रयोगानापत्तेः पङ्कजं पङ्कजमिति प्रयोगानापत्तेश्चेति । ननु पङ्कजपदादपि कदाचिल्लक्षणया कुमुदबोध इष्यत एव । तथाच सर्वसाधारणी शक्तिरेवास्तु पदरूपविशेषपरतायां तु लक्षणैवास्त्वित्यत आह । पद्मस्येति । केवलरूढ्यर्थबोधमुदाहरति । भूमौ पङ्कजमिति । अत्र योगार्थस्य बाधः । कल्हारेति । कुमुदादौ प्रयोगो ऽवयवार्थमादायैवेत्यर्थः । कल्हारम् । ह्रस्वकमलम् । कैरवम् । कुमुदम् । एतत्प्रभृतिषु । पङ्कजेष्वित्यर्थः ॥ ३४ ॥

[ क० टी० ] एवञ्च तत्स्वरूपे निरूपिते विशेषजिज्ञासायां तद्भेदमाह । शक्तिरिति । तत्राद्यामाह । शास्त्रेति । तत्रेत्यादि० । इदमात्र शब्दव्यवच्छेद्यस्वरूपकीर्तनम् । ननु तदन्तर्गत लक्षण तु यदर्थेति तन्मात्रे बोधकत्व च तद्घटकावयवानां स्वार्थानुपस्थापकत्वेनेति भावः । शास्त्रेति । यत्पदीयेत्यादिबोधे इत्यस्य तत्पदे तदर्थनिरूपितेति शेष. । कादौ । तत्पदे । अर्थभेदाच्छब्दभेद इति मते उक्तान्तर्भावसम्भवान्न तुरीयो ऽतिरिक्त शब्द इति चतुर्धा तद्विभागो ऽयुक्त इतिसूचयन्नाह । अश्वेति । अर्थभेदे ऽपि शब्दैक्यमिति मतेनाह । इदमिति । ननु रूढिर्योगापहारिणीति प्रवादः रूढिज्ञान योगार्थबोधप्रतिबन्धकमिति तदर्थस्तथाच कथ तत्र योगार्थबोधो ऽत आह । रूढिरिति । उभयत्र प्रकरणादावुभयबोधस्येष्टत्वादाह । ग्रभावे इति । तत्र रूढ्यर्थस्य शीघ्रोपस्थितिकत्वेन बलवत्तया योगापहारकत्वम् । तथाच यत्र योगार्थे एव प्रकरण तत्र तत्सान्निध्याद्योग एव बलवानिति नोक्तदोष इति भाव । एव मण्डपादिपदे ऽपि बोध्यम् । तस्य क्रियाजातिशब्दत्ववत्सञ्ज्ञाशब्दत्वस्यापि सत्त्वात् । तत्र विशेषमाह । यत्रेति । यत्र त्वित्यर्थ. । मण्डपो मण्डपो ऽभवदित्यादावित्यर्थ' । अत एव मण्डपानेति वस्तुतस्तत्त्वे ऽपि तेनाबोधात्सञ्ज्ञाशब्दस्थरीत्याह । रूढ्यर्थेति । तत्राधुनिकसङ्केतसत्त्वेन शक्त्यभावस्य प्रागुक्तत्वादाह ।

तत्रेति । पदे इत्यर्थः । ननु तत्र योगार्थबोध एव कुतो नात आह । योगादिति । ननु रूढेस्ततो बलवत्त्वे ऽपि न लक्षणा या अत आह । रूढीति । तत्र हेतुरुक्त । प्रथमेति । तत्र यो बोध' स लक्षणयैवेत्यर्थ' । अतो न पौनरुक्त्यम् । अत एवाकाशपद स्याकाशात इति योगमनादृत्याकाशगुण विभुत्वादियोगेन ब्रह्माणि निरूढलक्षणारूपा लक्षणैवादृता दहराधिकरणे । बोधादिति । तथाच तादृशाविशिष्टबोधकताया समुदाये स्वीकार आवश्यक' । अन्यथा ततो नियमेन तदुपस्थितिर्न स्यादिति भाव । ननु पङ्कजपदस्य पद्मत्वविशिष्टे लक्षणैवास्तु किं समुदायशक्त्यात आह । पद्मस्येति । तत्कारणसमवधानेति भाव. । विशेष्यभूतेति । अर्थविशेपणेन राजपुरुषादिपदानां योगरूढित्वनिरास । अश्वगन्धादिपदवादितो ऽपि प्रत्येकमात्रबोधापत्तिस्तु उक्तयुक्त्यैव नेति भाव । नन्वेव क्वचित्प्रत्येकबोधो ऽत्रापीष्टो न स्यादत आह । क्वचिदिति । यथाक्रममुदाहरणे आह । भूमाविति । अत एव दृष्ट्वा सहस्रनयनो न वृषापि तृप्त इत्यादावपौनरुक्त्यम् । तथाच तत्पदसमभिव्याहाराय तत्तात्पर्यग्रहस्य तत्तदर्थबोधे प्रतिबन्धकत्वस्य स्वीकारान्न दोष इति भावः । अत्र मानमप्याह । स्पष्टमिति । तत्र हि परिमाणशब्दस्य सर्वतो माने प्रस्थादौ योगरूढिरित्युक्त्वा तदस्य परिमाण सख्याया सज्ञेति सूत्रे सख्यापरिमाणयोर्विशेष्यविशेषणभावानुपपत्तिमाशङ्क्य वचनादियती विवक्षा भविष्यतीत्युक्तम् । रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यत इत्यर्थ इति । अत एव शब्दार्थस्येति जातावेकवचनम् । सन्देहे इति सति सप्तमी । तथाचास्य तत्र निमित्तत्व फलति ॥ ३४ ॥

शक्तिनियामकनिरूपणम् । सैषा शक्तिः संयोगादिभिर्नानार्थशब्देषु नियम्यते । तदुक्तं हरिणा ।

> संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
> अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
> सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
> शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति ॥

एते संयोगादयः शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरणद्वारेण विशेषस्मृतिहेतवो निर्णयहेतव इत्यर्थः। उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका इति भावः। संख्यासंज्ञासूत्रे भाष्ये ऽपि स्फुटमेतत्।

अत्र सामर्थ्यमेवैकं मुख्यं निर्णायकं संयोगादयस्तद्व्यञ्जकप्रपञ्चः तैः सामर्थ्यस्यैवाभिव्यक्तेरिति परे। सवत्सा धेनुरवत्सा धेनुरिति संसर्गविप्रयोगयोरुदाहरणे। रामलक्ष्मणावित्यत्र साहचर्येणोभयोर्युगपदेव नियमनमिति नान्योन्याश्रयः। साहचर्यं सादृश्यं सदृशयोरेव सहप्रयोगनियमात्। रामार्जुनगतिस्तयोरित्यत्र विरोधेन तत्। अञ्जलिना जुहोति अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोत्यादिपदार्थवशादञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्।

सैन्धवमानयेत्यादौ प्रकरणेन तत। अक्ताः शर्करा उपदधातीत्यादौ तेजो वै घृतमिति घृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनाञ्जनपरत्वम्। रामो जामदग्न्य इत्यादौ जामदग्न्यपदसन्निधानेन रामः परशुरामः। अभिरूपाय कन्या देयेत्यादौ अभिरूपतरायेति सामर्थ्यात्प्रतीयते। यश्च निम्बं परशुनेत्यादौ औचित्यात् परशुनेत्यस्य च्छेदनार्थत्वम्। भात्यत्र परमेश्वर इत्यत्र राजधनीरूपदेशात्परमेश्वरपदं राजबोधकम्। चित्रभानुर्भातीत्यादौ रात्रौ वह्नौ दिवा सूर्ये। व्यक्तिर्लिङ्गम्। मित्रो भाति अत्राद्ये सूर्यो ऽन्त्ये सुहृत्। स्थूलपृषतीमित्यादौ

स्वरान्ततत्पुरुषबहुव्रीह्यर्थनिर्णयः । आदिनाषत्वसत्व णत्वादि । सुसिक्तमित्यत्र पूजार्थः सुः कर्मप्रवचनीयः सुषिक्तमित्यत्रोपसर्गो ऽन्यार्थः । प्रणायके प्रणयनक्रियाकर्ता णत्वात् । प्रनायके प्रगतनायकदेशबोध इति पुञ्जराजः । क्वचित्प्राकरणिकार्थबोधोत्तरं वक्तृबोद्धव्यवैशिष्ट्यप्रतिभादिसहकारेण द्वितीयार्थबोधो ऽपि । यथाशालकादिप्रयुक्तात् सुरभिमांसमित्यादेर्द्वितीयाश्लीलार्थबोधः ॥ ३५ ॥

( कुं० टी० ) नानार्थेति । नानार्थत्वे चार्थभेदाच्छब्दभेद इति पक्षे नानार्थप्रतिपादकसदृशशब्दत्वम् । अनेकेषामिति । अनेको जना इति प्रयोगस्य ग्रन्थकृतैव व्यवस्थापयिष्यमाणत्वात्तद्विरुद्धमेतत् ।

सामर्थ्यमेवेति । कारणत्वमेवेत्यर्थः । संयोगादयः सामर्थ्यस्यैव व्यञ्जका इत्यर्थः । सवत्सेति । धेनुशब्देन नवप्रसूता सर्वापि गृह्यत इति मते इदम् । अवत्सेति । निषेधस्य प्राप्तिपूर्वकत्वादवत्सापि गौरेवोच्यते । नान्योन्याश्रय इति । अन्यथा रामसाहचर्याल्लक्ष्मणो दाशरथिः लक्ष्मणसाहचर्याच्च रामो दाशरथिर्ग्राह्य इत्यन्योन्याश्रयः । साहचर्यं न सह चरता दीधीवेवीटामित्यादावसम्भवादित्याह । सादृश्यमिति । रामार्जुनेति । अत्र रामार्जुनयोरिव तयोर्गतिरिति कस्य चिदुपमायां सदृशलक्षणया विरोधात् भार्गवकार्तवीर्ययोर्बोधः । अत्र केचित् । रामादिपदस्य भार्गवादावभिधानियमे विरोधः विरोधाच्चाभिधानियमनामित्यन्योन्याश्रय इति तन्न । तयोरिति तत्पदस्य परस्परविरोध्यर्थप्रतिविम्बनेन तदानीमेव रामार्जुनयोरित्यत्रापि विरोधस्फूर्तेः । अञ्जलिनेति । होमसामर्थ्यात्तदनुकूलाचारो

गम्यते । अञ्जलिनोपतिष्ठत इत्यत्र त्वन्य एवेत्यर्थः । तथाचार्थशब्दः प्रयोजनवाची । सैन्धवमिति । भोजनकाले नाश्वबोध इत्यर्थः। मृत्तिकामिश्रा क्षुद्रपाषाणप्रायाः शर्कराः । यद्यपि अक्ता इत्यत्र न विशेषः शब्दार्थः नापि तेजो वै घृतमित्यत्र विधिरस्ति तथापि यः स्तूयते स विधीयत इति न्यायेनाक्ता इत्यत्र विधिरपि कल्प्यः। एताश्च अग्न्याधानार्थाः परिस्थाप्यन्ते । लिङ्गादिति।संयोगातिरिक्तसम्बन्धेन सम्बद्धो व्यावर्तकधर्मो लिङ्गम् । यथा कुपितो मकरध्वज इत्यत्र समुद्रव्यावृत्तात्कोपात्कामे। यत्तु लिङ्गं चिह्नमिति तन्न। असाधारणधर्मो हि चिन्हं न च कोपः कामस्य तादृशः। सन्निधिः । सामानाधिकरण्यम् । तेन सशङ्खचक्रो हरिरित्यत्र नातिव्याप्तिः । शङ्खचक्रसामानाधिकरण्याभावात् । परशुनेति । अत्र च छिनत्तीति गम्यते। मित्रो भातीति पुल्लिङ्गस्य सूर्ये प्रयोगः क्लीबस्य सुहृदि । स्थूला पृषती गौः स्थूलानि पृषन्ति च यस्या इति वा सन्देहः । पूर्वपदप्रकृतिस्वराद्बहुव्रीह्यर्थावगमः ।

आदिपदार्थमन्यमाह । वक्त्रीति । क्वचिद्वक्तृवैशिष्ट्यं क्वचिद्धि द्रव्यस्य वैशिष्ट्यम् । यथा ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्।
श्रमखेदसलिलनिश्वासानिस्सहा विश्राम्यामि क्षणमिति ॥

अत्र वक्त्री कामिनी तस्या दुःशीलत्वादिरूपवैशिष्ट्यं विजानता चौर्यरतगोपनं व्यक्तीभवति । बोद्धव्यस्य यथा ।

औन्निद्र्यं दौर्बल्यं चिन्ता अलसत्वं सनिश्वसितम् ।
मम मन्दभागिन्याः कृते अह ह सखि त्वामपि परिभवति॥

तस्याश्च दुःश्रेष्ट्या वैशिष्ट्येन कामुकोपभोगो व्यज्यते । नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा सैव वामनेत्युच्यते तस्यामेव सत्यां व्यङ्ग्यप्रतीतेः । तदाहुः ।

सवासनानां नाट्यादौ रसस्यानुभवो भवेत् ।
निर्वासनास्तु रङ्गादौ वेश्मकुड्याश्मसन्निभा इति ॥

सुरभिमांसमिति । सुरभि यन्मांसमिति सुरभेर्गोर्मांसमिति चार्थः।द्वितीयार्थबोधो ऽपीति। अत्र संयोगादिभिरभिधायां नियमितायां द्वितीयवाच्यार्थबोधो ऽपि व्यञ्जनयैवेत्यालङ्कारिकाः। अत एव साक्षात्सङ्केतवान्वाचक इत्यपहाय साक्षात्सङ्केतितं यो ऽर्थमभिधत्ते स वाचक इति लक्षणं कुर्वन्ति। अश्लीलेति। अश्रीरस्यास्तीति सिध्मादित्वाल्लच् कपिलकादित्वाद्रस्य लः। अश्लीलश्च व्रीडादिदायकः॥ ३९॥

(क० टि०) नन्वेवमेतत्सत्त्वे तेषां तत्त्वं बाधितमत आह। तदपेति। विशेषो ऽर्थः। स्मृत्यर्थमाह। निर्णयेति। नन्वेवमपि तदेव कथमादावत आह। उपेति। मध्य इति शेषः। अल्पाच्तरमिति वत्स्वार्थे तरप्। द्वारेति। तदपाकरणद्वारेति शेषः। तथाच तादृशबोधजननमेव नियमनं नानार्थशब्दजबोधे तात्पर्यनिर्णयस्य हेतुत्वात्। तथाच सत्यपि सम्बन्धग्रहे संयोगादिज्ञानस्य तज्जन्यप्रथमार्थतात्पर्यग्रहस्य वा प्रतिबन्धकत्वान्न द्वितीयार्थज्ञानमिति भावः। अत्र मानान्तरमप्याह। सख्येति। तत्र हि वतुसाहचर्यात्तद्धित एव डतिर्न तु पातेर्डतिरित्युक्तम्। नन्वेतेषां व्यधिकरणत्वात्कथं वक्तृतात्पर्यनिर्णायकत्वमतः सिद्धान्तमाह। अत्रेति। एषां मध्ये इत्यर्थः। एकमित्यस्यैव व्याख्या मुख्यमिति। मुख्येति पाठे मुख्यस्य विशेषार्थतात्पर्यस्य निर्णायकमित्यर्थः। मुख्यमित्यनेन गौणं तेषामपि सम्भवतीति न हरिविरोध इति सूचितम्। तदाह।संयोगादय इति।तदिति। सामर्थ्येति। तद्व्याख्याकृदुक्तानि एतेषां क्रमेणोदाहरणान्याह। सवत्सेत्यादिना पुञ्जराज इत्यन्तेन। धेनुशब्दो धानकारकस्त्रीव्यक्तिमात्रबोधकः। उभयोरित्यस्य मध्यमणिन्यायेनान्वयः। यत्तु साहचर्यं सहचरता एकत्र कार्ये प्रसिद्धपरस्परसापेक्षत्वमिति काव्यप्रकाशकृदादयस्तन्नेति ध्वनयन्नाह। सादृश्यमिति। सहचरस्य भावः साहचर्यं सहचरणं च प्रायेण सदृशयोरेव लोके दृष्टमिति साहचर्यशब्देन साह-

श्यमुच्यते । नन्वेव प्रकृते साहचर्यस्योक्तस्य सत्त्वे ऽपि सादृश्याभावात्कथमिष्टसिद्धिरत आह । सदृशयोरेवेति । सदृशार्थयोः शब्दयोरेव द्वन्द्वेन सह प्रयोग इत्युत्सर्गादित्यर्थः । सदृशयोरेव सहविवक्षासत्त्वात्तथाचात्रापि तदेव तन्नियामकम् । अत एव कर्मप्रेति सूत्रभाष्ये सदृशानामेव प्रयोगे सहायत्वमित्युक्तम् । अत एवैतत्कारिकाव्याख्याने यं यम्पपाठ यारिभिरिति साहचर्ये उदाहृतं हेलाराजेन वर्जनार्थापसाहचर्यात्तदर्थस्यैव परेः कर्मप्रवचनीयस्य ग्रहणमिति चोक्त भाष्ये ऽप्येवमेवोक्तमिति भावः । रामार्जुनेति । अत्रापि प्रकरणसहकारेण द्वयोरपि पदयोर्मिथो विरोधिद्वये युगपदेव तात्पर्यग्रह । एतेन द्वयोरपि नानार्थत्वात्परस्पराश्रयग्रस्तमिदमित्यपास्तम् । असङ्कीर्णोदाहरण तु रामरावणावित्यादि । एवं प्रागपि बोध्यम् । अर्थपदार्थमाह । पदार्थेति । तान्नियमनम् । एव प्रागपि । इतिवाक्यशेषे । घृनेति बहुव्रीहिद्वयम् । अर्थस्य ते तु तत्सांनिध्याभावे तथेति भेद इत्याह । पदसान्निति । तस्य साधारणस्य सर्वत्राविशिष्टत्वात्तदुक्तिसामर्थ्यादाह । तरायेतीति । परशो' कारकत्वेनानेकक्रियासन्देहे योग्यतयाध्याहारेण छेदनान्वयित्वमित्याह । छेदनेति । देशात् । अत्रेति । परामृष्टात्परमेश्वरपदस्य विष्णुत्वेनापि शक्तेर्नानार्थत्वम् । एव रीत्या सर्वत्र बोध्यम् । अर्थान्तरनिरासायाह । लिङ्गमिति । तस्यापि व्यङ्ग्यत्वाद्व्यञ्जकत्वाच्चेति भाव । ह्यर्थेति । एतदन्यतरार्थेत्यर्थ । इदञ्च वेदे एव बोध्यमिति प्रकाशसम्मतम् । प्रदीपस्तु चिन्त्य एवेति स्पष्टं तदुद्द्योते । सु पुजायामित्युक्तेराह । पूजेति । यत्तु नियमन नामैकस्य प्राक् शाब्दबोधस्तदनन्तरमन्यस्यापीति शक्त्यैव निर्वाहे तत्र व्यञ्जना व्यर्थेति तन्नेति ध्वनयन्नाह । क्वचिदिति ।

वक्तृबोद्धृव्यकाकूनां वाक्यवाक्यार्थसन्निधे ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥

इत्यादिप्रकाशोक्तेराह । वक्त्रीति । तत्राद्योदाहरणमाह । यथेति । शालेति । न पुत्रादिप्रयुक्तादिति भावः । अश्लीलेति । गोमांसेत्यर्थ. । तथाच तत्र व्यञ्जनैव । न च सयोगादिना शक्तेरिव व्यञ्जनाया अपि नियमनमिति वाच्यम् । सयोगादिकमतिक्रम्य बोधकत्वेनैव तत्सिद्धेः । अन्यथा सुगन्धिमांस भोजनप्रकरणे सुरभिमासं भुङ्क्ते

इत्याभिधाने गोमांसानुपस्थितौ विदग्धस्य जुगुप्सानापत्तेरिति भाव । बोध इत्यग्रे इतीति शेष । इति शक्तिनिरूपणम् ॥ ३५ ॥

लक्षणानिरूपणम् । **ननु सर्वेषां सर्वार्थवाचकत्वे लक्षणोच्छेद इति चेन्न । योगिनां सर्वार्थवाचकत्वज्ञाने सत्यप्यस्मदादीनां तदभावात् । किञ्च अन्वयाद्यनुपपत्तिज्ञानपूर्वकशक्यत्वेन गृहीतार्थसम्बन्धज्ञानेनोद्बुद्धशक्तिसंस्कारबोधे लक्षणेति व्यवहारात् । तच्छक्तिसंस्कारश्चेदृशे स्थले जन्मातरीणोऽपि । वस्तुतस्तात्पर्यानुपपत्तिरेव तद्बीजम् । अन्यथा गङ्गायां घोष इत्यादौ घोषादिपद एव मकरादिलक्षणापत्तिस्तावताप्यन्वयानुपपत्तिपरिहारात् । एवं रूढिप्रयोजनान्यतरदपि तत्कारणमनुभवबलात् ॥ ३६ ॥**

( कुं० टी० ) शक्यत्वेनेति । अन्वयानुपपत्तिज्ञानपूर्वकं यत् शक्यसम्बन्धस्मरणं तेनोद्बुद्धो यः संस्कार इत्यर्थः । व्यञ्जनायामतिव्याप्तिवारणाय शक्यत्वेनेति । मुख्यस्याप्यभिधारूपसम्बन्धेन प्रतिपादनं सम्भवतीति अन्वयानुपपत्तीत्याद्युक्तम् । ननु गङ्गापदस्य प्रवाहमुपस्थाप्य निवृत्तौ प्रवाहसम्बन्धेन तीरोपस्थितावपि गङ्गापदस्य वृत्तिर्न स्यादिति चेत्सत्यम् । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या साक्षात्सम्बन्धिनो बाधात्सम्बन्धिसम्बन्धिनोऽपि ग्रहणमिति भावः । एतेन तीरांशेऽनुभवाभावात्संस्कारासम्भव इत्यपास्तम् । गङ्गापदसम्बन्धस्य तत्रापि सत्त्वात् । व्यवहारादिति । भगवदिच्छायाः सन्मात्रविषयत्वात्तीरादावपि वस्तुतः शक्तिरेवेति भावः । एतेनानन्तस्थलेऽतिरिक्तकल्पनापेक्षया क्लृप्तायां शक्यसम्बन्धरूपलक्षणायां लाघवमित्यपास्तम् । यत्तु केवलगङ्गापदात्ती-

रबोधाद्घोषपदमेव तीरबोधकम् । अत एव लाक्षणिकं नानुभावकमिति प्रवाद इति तन्न । गङ्गायामिति सप्तम्यर्थस्य तत्रान्वयानापत्तेरप्रकृत्यर्थत्वात् । यत्तु शक्तिर्नेश्वरेच्छारूपा अपभ्रंशे ऽपि सत्त्वात् किन्त्वतिरिक्तैवेति न सा तीरादौ क्लृप्तेति तन्न । अपभ्रंशानामपि वाचकत्वस्यैवौचित्यात् ।

शक्तिसंस्कारः । शक्तिजन्यः संस्कारः । जन्मान्तरीणो ऽपीति । बालानां स्तनपानादाविष्टसाधनताज्ञानस्य तथैव सम्भवात् । अन्वयानुपपत्तेर्लक्षणाबीजत्वं दूषयति । वस्तुतस्त्विति । ये त्वाहुरन्वयानुपपत्तिरेव लक्षणाबीजमस्ति च यष्टीः प्रवेशयेत्यादावपि भोजनविषयकप्रवेशान्वयस्य यष्टिष्वनुपपत्तिरिति तद्दूषयति । अन्यथेति । किञ्च अन्वयानुपपत्तेर्लक्षणाबीजत्वं न तज्जनकत्वं शक्यसम्बन्धरूपाया लक्षणायास्तदजन्यत्वात् । नापि लक्ष्यार्थतात्पर्यग्राहकत्वं प्रकरणादिनापि तत्परत्वसम्भवात् । नापि लक्ष्यार्थबोधहेतुत्वं यष्टीः प्रवेशयेत्यादौ व्यभिचारात् । घोषादिपदे इति । न विधौ परः शब्दार्थ इति न्यायात् गङ्गापदे एव लक्षणेत्यन्ये । रूढीति । कुशल इत्यत्र रूढिरेव गङ्गायां घोष इत्यत्र शैत्यादिप्रतीतिरित्यर्थः । यथाहि गङ्गायां घोष इति वाक्यात्पावनत्वं प्रतीयते तादृशं गङ्गातीर इति वाक्यात् । एवञ्च मुख्यार्थबाधः शक्यार्थसम्बन्धो रूढिप्रयोजनान्यतरच्चेति हेतुत्रयं बोध्यम् ॥ ३६ ॥

( क० टी० ) सिंहावलोकनन्यायेन लक्षणां निरूपयति । नन्वित्यादिना । उच्छेद । अतिरिक्ततद्वृत्तिस्वीकारनैष्फल्यमित्यर्थ । तत्र समाधिं प्रागुक्तमेव तावदाह । योगिनामिति । नन्वेतावता तेषां तदुक्त्यैवान्येषां तदभाव एवेति लब्धं परं तु तेषामपि तद्व्यवहारस्य क्वाचित्कत्वेन कुत्र स. । किञ्चान्येषां मते तत्स्वरूप किमतो योगिनः तादृशवैयाकरणसिद्धान्ताभिमानियावच्छ-

ब्दार्थज्ञानं तथा तत्सर्वं वाचकत्वज्ञानमस्मत्पदवाच्यवैयाकरण-साधारण्येन तत्तावत् अभ्युपेत्य प्राचीनदीक्षितादिमतेनाह। कि-ञ्चेति। आदिना तात्पर्यग्रहः। एतदन्यतरानुपपत्त्येत्यर्थः। अर्थेति। प्रसिद्धेत्यादि। बोधे इति। तस्मिन्सति तज्जनकतादृशसंस्कारे तच्छक्तौ वा लक्षणेति व्यवेत्याद्यर्थ। व्यवेत्यनेन द्वितीयपक्ष-स्यैवेष्टत्वं सूचितं लाघवाद्दोषलेशाभावाच्च। नन्वेवं यत्रैहिक-शक्तिग्रह एव न घटादौ तस्यान्त्याना तत्र तस्यैवाभावेन तस्य सुतरामभावाद्बोधाभावापत्तिरत आह। तच्छक्तीति। स चासौ शक्तिसंस्कारश्चेत्यर्थः। घटादिपदशक्तिसमित्याद्यर्थो वा। न तूद्बुद्ध शक्त्येत्याद्यर्थ। कारणस्य कार्याव्यवहितपूर्वक्षणवृत्तित्वावश्यकत्वा-दनातिप्रसङ्गायाह। ईदृशेति। लक्ष्यार्थबोधविषये इत्यर्थः। अपिरै-हिकसमुच्चायकः। अनेन तदनभिमान्यस्मत्पदवाच्यवैयाकरणानाम-गतिः सूचिता। तत्र योगिनामैहिक एव तदभिमानिनां द्विविधो ऽपि तदनभिमानिनां जन्मान्तरीण एव फलबलकल्प्य इति बोध्यम्। प्रागुक्तं सर्वं युक्तमन्वयनिवेशमात्रं तत्रानुचितमित्याह। वस्तुत इति। एवेन तद्व्यवच्छेदः। तस्यान्यत्रावश्यकत्वादाह। तद्बी-जमिति। सर्वत्र सत्त्वादिति भावः। यद्यपि लक्षणाजन्यबोधे ऽन्व-यव्यतिरेकाभ्यां मुख्यार्थबाधज्ञानं मुख्यार्थसम्बन्धज्ञानं च कारणं तद्बाधश्च समभिव्याहृतपदतात्पर्यविषये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थासंसर्गरूपः तेन छत्रिणो यान्ति कुन्तान्प्रवेशय काकेभ्यो दधि-रक्ष्यतामित्यादौ छत्र्यादिमुख्यार्थानां समभिव्याहृतक्रियासु कर्तृ-त्वादिभिरन्वयाबाधे ऽपि तत्तात्पर्यविषये मुख्यच्छत्र्यच्छत्रिगमनभो-जनार्थप्रवेशदध्युपघातकावधिकरक्षणेषु मुख्यार्थतावच्छेदकरूपेण तदन्वयबोधो ऽस्त्येवेति तत्र च्छत्रिपदमेकसार्थप्रविष्टच्छत्रिसमु-दाये लाक्षणिकमेवमन्यत्रापीति सापि सर्वत्रास्ति। तथाप्याह। अन्यथेति। अन्यथानुपपत्तिज्ञानस्यैव तद्धेतुत्वे इत्यर्थः। हि यतः। एवेन तद्व्यवच्छेदः। एतेन क्वचित्सा क्वचित्सेत्यपि निरस्तं गौ-रवात्। अत एव समुच्चयो ऽपि निरस्तः। हारादित्यग्रे इति बोध्यमिति शेषः। एवम्। उभयज्ञानवत्। अत्रान्वयव्यतिरेकयोर्दु-र्वचत्वादाह। अनुभवेति। तथाच ततः द्वितीयपक्षादरो ऽगत्या तृणारणिमणिन्यायेनाद्यपक्षादरो वेति भावः॥ ३६॥

तात्पर्याग्रहो ल- क्षणाबीजम्। अत्रेदं बोध्यम्। शक्यार्थोपस्थितौ तद्विषयकान्वय बोधे जाते तस्मिन्वक्तृतात्पर्याविषयत्वेनाप्रामाण्यग्रहे सति लाक्षणिकार्थबोधः। शक्यार्थान्वयबोधं विना तत्र तात्पर्याविषयत्वग्रहासम्भवात्। संसर्गविषयज्ञानस्यैवान्वयबोधत्वात्। प्रसिद्धनानार्थविषयकबोधजनकत्वमेव नानार्थत्वमिति नातिप्रसक्तं नानार्थत्वम्। सम्बन्धज्ञानं तरिसम्बन्धि प्रवाहबोधकमिदमिति गङ्गापदशक्यप्रवाहसम्बन्धितीरमिति वा। सम्बन्ध एव लक्षणेत्यन्ये। अत्र पक्षे ऽपि संयोगसंयुक्तवृत्तित्वरूपसम्बन्धद्वयरूपा एका लक्षणा। लक्षणेति जातावेकवचनम्। एवञ्च लक्ष्यतावच्छेदके ऽपि लक्षणाभवत्येवेति बोध्यम्। विशेषणे संयोगरूपो वा। लक्ष्यतावच्छेदके न लक्षणा। उभाभ्यामनारोपितैकसम्बन्धस्यासम्भवात्। विशेष्यगतसम्बन्धज्ञानस्य लक्ष्यतावच्छेदकप्रकारकलक्ष्यबुद्धित्वं कार्यतावच्छेदकमित्यलक्ष्यस्यैव भानमित्यन्ये। तादृशसम्बन्धज्ञानजन्या तदुपस्थितिरेव लक्षणा। स्वविषयसम्बन्धिवाचकत्वेन चैषा पदनिष्ठा। वृत्तित्वं तु शाब्दबोधजनकपदपदार्थसम्बन्धत्वमिति परे। तन्मते ऽपि स्फुटमेव लक्ष्यतावच्छेदके लक्षणा। पदादपि शाब्दबोध एव न स्मृतिरिति तेषामाशयः। यत्र कमलानि कमलानीत्यादौ सौरभविशिष्टकमलबोधस्तत्रापि विशिष्टे लक्षणा॥ ३७॥

(कुं० टी०) अप्रामाण्यग्रहे सतीति। शक्यार्थान्वयानुपस्थितौ तत्रानुपपत्तिप्रतिसन्धारासम्भवादिति भावः। बोधं विनेति। अ-

धिकरणानालिङ्गिताभावबोधासम्भवात् । ननु गङ्गापदात्प्रवाहस्योपस्थितावपि तदन्वयबोधे मानाभाव इत्यत आह । संसर्गेति । पदार्थान्तरसम्बन्धोपस्थितिरेवान्वयबोध इति भावः । ननु हर्यादिपदवद्गङ्गादिपदानामपि नानार्थत्वापत्तिरत आह । प्रसिद्धेति । गङ्गापदात्तीरबोधे ऽपि तस्याप्रसिद्धत्वान्न नानार्थत्वमिति भावः । ननु घोषसम्बन्धिना मत्स्यादीनामपि बोधापत्तिरतो ऽर्थसम्बन्धज्ञानेनेत्यत्र सम्बन्धज्ञानाकारमाह । सम्बन्धज्ञानमिति। तथाच तीरादिविषयकबोधजनकत्वमेव लक्षणेति भावः । ननु गङ्गापदस्यैव तीरबोधकत्वे लाक्षणिकं नानुभावकमिति प्रवादासङ्गतिरिति चेत्सत्यम् । उद्देश्यविधेयभावेनान्वयाभावे तात्पर्यात् । अत एव न विधौ परः शब्दार्थ इति प्रवादः । शाब्दिकमते तु प्रवाहत्वेनैव तीरबोधान्न कापि शङ्का । तार्किकमतमाह । सम्बन्ध एवेति । न तु पूर्वोक्त उद्बुद्धसंस्कारः । ननु तीरतीरतीत्वयोरेकस्य प्रवाहसम्बन्धस्याभावात्तार्किकमते तत्र वाक्यसम्बन्धरूपा लक्षणा न स्यादत आह । अत्र पक्षे ऽपीति । अ-अपिना प्रथमपक्षे ऽपि लक्ष्यतावच्छेदके लक्षणा सूचिता । एतेन शक्यादशक्योपस्थितिरूपा लक्षणा शक्यतावच्छेदके ऽप्यस्ति शक्यसम्बन्धरूपा तु नास्तीत्यपास्तम् । ननु संयोगसम्बन्धस्तीरे तीरत्वे तु संयुक्तवृत्तित्वमिति तयोर्भेदात्सम्बन्ध इत्येकवचनानुपपत्तिरत आह । जाताविति । सम्बन्धत्वेनैकत्वादिति भावः । वस्तुतस्तु पदपदार्थयोरभेदाध्यासेनैकत्वाद्गङ्गापदमेव सम्बन्धिज्ञानविधया तीरस्मारकमस्तु । अविनाभूतत्वात्तीरत्वस्मृतावपि तत्र गङ्गापदवृत्तिकल्पने बीजाभावः । लक्ष्यतावच्छेदके ऽपीति । अन्यथा शक्यतावच्छेदके ऽपि शक्तिर्न स्यात् । ननु तीरत्वं गङ्गाया इति सम्बन्धग्रहाभावान्न तत्र लक्षणेति

चेत्। घटो नेत्यादौ यथा घटत्वे प्रतियोगितावच्छेदकत्वं संसर्गमर्यादया भासते एवं तीरत्वे ऽपि सामीप्यावच्छेदकत्वरूपपरम्परासम्बन्धसत्त्वात्।

विशेषणे। तीरत्वादौ। दीधितिकारमतमाह। लक्ष्यतावच्छेदके न लक्षणेति। उभाभ्याम्। तीरतीरत्वाभ्याम्। विशेष्येति। तीरादीत्यर्थः। तीरत्वप्रकारकतीरविशेष्यकशाब्दबोधं प्रति तीरनिष्ठसम्बन्धज्ञानं कारणमित्यर्थः। एतन्मते वृत्त्येति नियमभङ्ग इत्यस्वरसः। मीमांसकमतमाह। तादृशेति। शक्यादशक्योपस्थितिर्लक्षणेति तत्सिद्धान्तात्। गङ्गापदेन प्रवाहस्मरणं प्रवाहेण च तीरस्मरणम्। तदेव च बोधहेतु। अत एव गङ्गापदस्य तीरोपस्थापकत्वाभावल्लाक्षणिकं नानुभावकमिति प्रवादः। ननु तीरोपस्थितेः पदजन्यत्वाभावात्कथं शाब्दबोधविषयतेति चेन्न। शक्यार्थबोधे एव तथा नियमेन लक्ष्यार्थबोधे पदार्थोपस्थितेरेव नियामकत्वात्। एतन्मते तीरस्य गङ्गापदार्थत्वाभावात्तत्र सप्तम्यर्थान्वयानापत्तिः। किञ्च उपस्थिति हेतुर्वृत्तिर्न तूपस्थितिरेव वृत्तिः। ननूपस्थितेरर्थनिष्ठत्वाल्लक्षणायाः शब्दधर्मत्वानापत्तिरत आह। स्वविषयेति। लक्षणाविषयतीरसम्बन्धिप्रवाहवाचकत्वसम्बन्धेनेत्यर्थः। ननु शक्तेरिच्छारूपतया लक्षणायाश्च बोधरूपतया भिन्नजातीयत्वाद्वृत्तित्वासम्भव इत्यत आह। वृत्तित्वं त्विति। पदपदार्थेति। गङ्गापदस्य यः प्रवाहे सम्बन्धः यश्च तीरे सम्बन्धः स वृत्तिरित्यर्थः। तथाच तीरसम्बन्धस्यैव वृत्तित्वे ऽपि लक्षणाहेतुत्वात्तस्यापि लक्षणात्वव्यवहार इति भावः। ननु शाब्दबोधजनकेत्याद्ययुक्तं पदेन पदार्थस्मरणस्यैवोदयादत आह। पदादपीति। आशय इति। अन्यथा अवान्तरवाक्यार्थबोधकाले पदार्थ-

स्मरणस्य नष्टत्वान्महावाक्यार्थबोधो न स्यात् । कमलानीति । एकं कमलपदं सौरभविशिष्टस्य बोधकम् । एतेन विशिष्टवाचकपदानां विशेष्ये न लक्षणा शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेत्युक्तेरिति तार्किकोक्तमपास्तम् । तत्प्रवादस्य निर्मूलत्वात् ॥ ३७

( क० टी० ) मुख्यार्थान्वयानुपपत्तिज्ञान तदुपक्षीणमेव सम भिव्याहृतपदार्थासंसृष्टमुख्यार्थकत्वेन भ्रमादिरूपदोषरहिताप्तपुरुषोच्चारितत्वविशिष्टेन मुख्यार्थपरत्वाभावानुमानपूर्वकसामान्यतात्पर्यग्रहसहकारेण तदन्यपरत्वग्रहजननात् । तदेतत् ध्वनयन्नाह । अत्रेदमिति । तावन्मात्रेणानिर्वाहादाह । तदितरेति । अत एव तस्या एव तद्बीजत्वमुक्तम् । ननु तदुपस्थितिरेवास्तां कृत मध्ये ऽन्वयबोधेनात आह । शक्यार्थेति । तत्र । बोधे । अयमन्येषामप्यावश्यक इत्याह । संसर्गेति । इयमपि तेषां न स्वरूपसती हेतुः किन्तु ज्ञातेति भाव । त्वादिति । इतीति शेष । नन्वेवं नानार्थत्वादक्षादिपदवदर्थसन्देहापत्तिः, किञ्च नानार्थजबोधे तात्पर्यज्ञानकारणत्वावश्यकत्वेन गङ्गायां काष्ठमस्तीत्यादिवाक्ये प्रवाहबोधे ऽपि तात्पर्यज्ञानस्य त्वन्मते कारणत्वकल्पने गौरवमत आह । प्रसिद्धेति । एव तृतीयमते ऽपि स्वशक्यसम्बन्धेन स्वशक्यान्तरस्यैवोपस्थितिस्तस्याः शक्तेस्तादृशस्थले एवोद्बोधकस्वीकारात्तथाच नाति प्रसङ्ग इति बोध्यम् । कारणवश्यकतज्ज्ञानस्वरूपमाह । सम्बन्धेति । इदम् । गङ्गापदम् । नन्वत्र यस्य न विशेष्यतया प्रकारतया वा तज्ज्ञान तद्घटकतया तु प्रवाहे तीरसम्बन्धज्ञाने ऽपि न तीरे तत्सम्बन्धज्ञान लक्षणानिविष्टमार्थिक चेत् कृतमनेन गौरव चात आह । गङ्गापदेति । अथादिपदग्राह्यनैयायिकादिमतमाह । सम्बन्धेति । शक्येत्यादि । आवश्यकत्वाल्लाघवाच्च स च ज्ञातो हेतुर्न स्वरूपसन्निति भावः। अत्र पक्षे दोषमुद्धरति। अत्रेति। अपिना पूर्वपक्षसमुच्चयस्तत्र विशिष्टे एव शक्तिग्रहात्। शक्तिभेदवल्लक्षणाभेदे ऽपि दोषादाह । एकेति । नन्वेव सम्बन्धत्वस्य प्रत्येकपर्याप्तत्वाल्लक्षणासङ्गतिरत आह । लक्षणेति। तत्फलमाह । एवञ्चेति । त-

था स्वीकारे चेत्यर्थः । प्रकारतयेति भावः । अत्र मते गौरवादत्रैव लघुभूतमतमाह । विशेषणे इति । तत्र सम्बन्धो यथाकथञ्चिन्निविष्ट इति भावः । अत्रैवेतो ऽपि लाघवान्मतान्तरमाह । लक्ष्यतेति । उक्तरीत्यासम्भवनिरासायानारोपितैकेति तीरेण सम्बन्धः । तीरत्वेन तु संयुक्तसमवायः । अधुनात्वंशे आरोपितत्वमेव । लक्षणे ऽपि तथैव निवेशः । अन्यथातिप्रसङ्गापत्तेस्तथा सम्बन्धद्वयनिवेशे प्रागुक्तगौरवाद्वेति भावः । नन्वेवमलक्ष्यस्य भाने ऽतिप्रसङ्गापत्तिरत आह । विशेष्येति । अथालङ्कारिकादिमतमाह । तादृशेति । तदनुपपत्तिपूर्वकं शक्यत्वेन गृहीतप्रसिद्धार्थसम्बन्धज्ञानजन्येत्यर्थः । तदुपेति । शक्यादशक्योपस्थितिरित्यर्थः । एकसम्बन्धिज्ञानाविधया शक्तिप्रयोज्यपदजशक्यज्ञानजन्या शक्यतानवच्छेदकावच्छिन्नोपस्थितिरिति यावत् । गङ्गापदेन प्रवाहोपस्थितौ मुख्यार्थबाधज्ञानसहकृतैकसम्बन्धिज्ञानात्प्राक् गृहीतसम्बन्धकस्योपस्थितस्य तीरादेः शाब्दबोधे भानं, तत्र च पदप्रयोज्यैवोपस्थितिस्तत्र न तु पदजन्यैवेति नियम इति न दोषः । इयं च स्वरूपसती हेतुः । आकाशपदशक्यस्याप्याकाशस्य पदादेव समवायेनोपस्थितिस्तत्सम्बन्धाच्चान्योपस्थितिस्तस्य शाब्दे ऽन्वयवारणाय शक्तिप्रयोज्येति । घटरूपार्थदर्शनेन शक्तिसम्बन्धादुपस्थितघटाकाशस्य शाब्दे ऽन्वयवारणाय पदजन्यपदात्समवायेनोपस्थिताशक्यज्ञानजन्येति । सामान्यशब्दस्य विशेषे । लक्षणास्थले । उपस्थितविषयस्य विशेषप्रकारावच्छिन्नस्यार्थस्य शक्यार्थभिन्नत्वाभावात्तत्संग्रहाय शक्यतानवच्छेदकावच्छिन्नेति । एवञ्च शक्यतानवच्छेदकविशेषरूपावच्छिन्नत्वात्सङ्ग्रहः । न चैवं तादृशोपस्थितेः स्वरूपतो न मुख्यार्थबाधाधीनत्वं सम्बन्धिज्ञानादिरूपोद्बोधकसत्त्वे ऽपि तमनपेक्ष्यैव संस्कारेण मुख्यार्थस्येव तस्याप्युपस्थितेः सम्भवात् । तथाच लक्षणाया मुख्यार्थबाधाधीनत्वव्यवहारानुपपत्तिरिति वाच्यम् । तज्जन्यशाब्दानुभवस्य तदधीनत्वेन तस्या अपि तत्त्वव्यवहारादिति भावः । एवेन मतद्वयव्यवच्छेदः । एवं प्रागपि । नन्वेवमपि कथमस्या पदनिष्ठत्वमत आह । स्वेति । अत एव लाक्षणिकं पदमिति व्यवहारः । चस्त्वर्थे । एवं मध्यपक्षे ऽपि स्वप्रतियोगिवाचकत्वेन

पदनिष्ठत्वं बोध्यम् । नन्वेवमपि वृत्तिभूतलक्षणाया नेदं लक्षणं योग्यमुपस्थितिहेतुर्हि वृत्तिर्न तूपस्थितिरत आह । वृत्तित्वं त्विति । लक्षणान्तरमपि प्रागुक्तम् । सिद्धान्तमतेन एकवाक्यत्वायाह । तन्मते ऽपीति । विशेषे एव प्राक्सम्बन्धग्रहात् जात्यन्यस्य निर्धर्मिकभानाभावाच्चेति भावः । शक्तिप्रयोज्येति विशेषणलब्धमेवाह । पदादपीति । अन्यथा पदप्रयोज्यापि सा नेति प्रागुक्तदोष एवेति भावः । न च मध्यमपक्षवत्कार्यकारणभावद्वयकल्पनागौरवम् । विशेषकार्यकारणभावानामावश्यकत्वेन तत्कल्पने मानाभावादिति तात्पर्यम् ॥ ३७ ॥

लक्षणाभेदाः । सा द्विधा । गौणी शुद्धा च । स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी । तदतिरिक्तसम्बन्धेन तत्प्रतिपादिका शुद्धा । प्रकारान्तरेणापि सा द्विविधा । अजहत्स्वार्था जहत्स्वार्था च । शक्यार्थापरित्यागेनेतरार्थलक्षणमाद्या । तदपरित्यागश्च शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिनान्वयित्वम् । तेन च्छत्रिणो यान्ति कुन्तान्प्रवेशय काकेभ्यो दधि रक्ष्यतामित्यादौ न दोषः । अच्छत्र्यादिसाधारणद्योतकतया काकादेश्च लक्ष्यार्थान्वयिक्रियाविशेषणत्वात् ।

स्वार्थपरित्यागेनेतरार्थलक्षणमन्त्या । परित्यागश्च शक्यार्थस्य केनापि रूपेण लक्ष्यार्थान्वयिनानन्वयित्वम् । अतो गां बाहीकं पश्येत्यादौ न दोषः । अत्र गोसदृशे लक्षणायामपि न गोस्तदन्वयिदर्शनक्रियान्वयित्वम् । एवं रीत्यान्ये ऽपि प्रकारा ऊह्याः । त्वगादिशब्दानां त्वचा ज्ञातमित्यादौ त्वगिन्द्रिये निरूढलक्षणा । असति प्रयोजने शक्यार्थबाधप्रतिस-

न्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढलक्षणेति व्यवहारो ऽन्यथा रूढिशक्तिरेवेति बोध्यम् । प्रयोजनवती तु कुन्ताः प्रविशन्तीत्यत्र भीतिपलायमानवाक्ये कुन्तानां तात्पर्यविषयप्रवेशो ऽन्वयबाधात्कुन्तपदस्य तत्संयुक्ते पुरुषे लक्षणा कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनम् ।

गङ्गायां घोष इत्यत्र प्रवाहे घोषाधिकरणत्वबाधात् गङ्गापदेन स्वसम्बन्धि तीरं लक्ष्यते गङ्गागतशैत्यपावनत्वप्रतीतिः प्रयोजनम् । गौर्बाहीक इत्यत्र गोसादृश्यं लक्ष्यतावच्छेदकं गवाभेदप्रत्ययः फलम् । व्यञ्जनाजन्यबोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एवञ्चाहार्यशाब्दजन्यभेदकधर्मोपस्थितिकालिकत्वात् । गङ्गायां घोष इत्यादौ च गङ्गागतशैत्यादिप्रतीतये मध्ये तीरादौ गङ्गाभेदप्रतीतिः । उपकृतं नामेत्यादौ लक्ष्ये उपकारे ऽनुपकाराभेदप्रतीतिद्वारैव साधुत्वं व्यङ्ग्यम् ।

केचित्तु गौर्बाहीक इत्यादौ साधारणधर्माश्रयो जडादिर्जडत्वेन लक्ष्यस्तत्र गवाभेदप्रतीतिद्वारा गोवृत्त्यसाधारणजडत्वप्रतीतिः फलम् । न च गौर्बाहीको जड इत्यादौ पौनरुक्त्यम् । लक्ष्यतावच्छेदकान्तरव्युदासे तस्य तात्पर्यात् । सदृशत्वेन लक्षणेति वादिनापि सादृश्यस्य विशिष्यसाधारणधर्मप्रतीतिं विना पर्यवसानाभावेन प्रसिद्ध्यादिना तात्पर्यावसानं वाच्यमित्यन्यथानुपपत्त्या प्रसृताया लक्षणायाः साधारणधर्मविशिष्टे एवौचि-

त्यात् । एतेन गौर्वाहीक इत्यादौ गोशब्देन स्वशक्यगतजाड्यादिगुणसदृशजाड्यादय एव लक्ष्यन्ते तैश्च जातिशक्तिनये व्यक्तिलाभवत्स्वाश्रयव्यक्तिलाभ इति परास्तमित्याहुः ।

ग्रामो दग्धः पुष्पितं वनमित्यादौ दग्धादिपदान्यर्श आद्यजन्तानीत्यर्थवत्सूत्रभाष्योक्तेस्तत्र लक्षणैव नेति बोध्यम् । ईदृशेषु जहदजहल्लक्षणेत्यन्ये ॥ ३८ ॥

( कुं० टी० ) स्वनिरूपितेति । स्वं शक्यम् । सादृश्यसम्बन्धेन यः शक्यसम्बन्धस्तत्प्रतिपादिका गौणीत्यर्थः । सा । शुद्धा । यत्तु जातिपक्षे गौरनुबन्ध्य इत्यत्र स्वार्थपरित्यागेन व्यक्तिबोधाल्लक्षणेति तन्न । तत्र हि अविनाभावात् व्यक्तिराक्षिप्यते न तु शब्देनाभिधीयते रूढेः प्रयोजनस्य वाऽभावेन लक्षणासम्भवात् । लक्षणम् । बोधनम् । ननु छत्रिपदाच्छत्रिबोधे कथमन्यबोधः, अच्छत्रिबोधे च स्वार्थस्य परित्याग एवेत्यत आह । तदपरित्यागश्चेति । तथाच उभयसाधारणरूपेण शक्यलक्ष्ययोरेकत्रान्वये सेत्यर्थः । येन केनापीति । विशेष्यतया विशेषणतया वा । छत्रिणो यान्तीति । अत्रैकसार्थवाहित्वेनाच्छत्रिणामिव च्छत्रिणामपि गमने ऽन्वयः । यत्र स्वार्थस्य विशेष्यतया क्रियान्वयः सा अजहत्स्वार्था । यष्टीः प्रवेशयेत्यादौ तु जहत्स्वार्थैवेति तार्किकोक्तं निराकर्तुमाह । कुन्तवदिति । कुन्तिनि पुरुषे कुन्तो विशेषणम् । तथाच कुन्तिनामिव विशेषणतया कुन्तानामपि प्रवेशे ऽन्वयः । तीक्ष्णत्वं च साधारणो धर्मः । काकेभ्यो दधीत्यादेरजहत्स्वार्थत्वोपपादनेन तृतीयप्रकारत्वं निराकरोति । दध्युपघातकतयेति ।

अत्रेति । गोसदृशे लक्षणाया गोरपि विशेषणत्वे ऽपीत्यर्थः । ननु गोत्वमेव बाहीके आरोप्यत इति मते कथं स्वार्थस्य त्याग

इति चेत्प्रत्येकं जातीनां व्यापकत्वे ऽपि यत्राभिव्यक्तास्तत्रैव कार्यसाधका इति वक्ष्यमाणत्वेन तद्रीत्या स्वार्थत्यागात् । ननु कुशलादिपदे ऽपि स्वार्थबोधपूर्वकपदार्थो भवति विवेचकत्वे च सम्बन्धो ऽप्यस्तीति निरूढलक्षणात्वापत्तिरत आह । असति प्रयोजने इति । यथा हि शैत्यपावनत्वादिप्रतीतये गङ्गापदेन तीरं लक्ष्यते नैवं रूढिस्थले इत्यर्थः । अन्वयेति । तथाच कुशलशब्दे ऽवयवार्थानुसन्धाने निरूढलक्षणाननुसन्धाने तु रूढिरेव । ननु कथं शुद्धैव द्विधा गौण्या अपि भेदद्वयसम्भवात् । तथाहि गौर्बाहीक इत्यत्र जहत्स्वार्था गोबाहीकोभयतात्पर्यके एते गाव आनीयन्तामित्यादावजहत्स्वार्थेति चेत्सत्यम् । अत्र सम्बन्धः सादृश्यमन्यो वा । आद्ये शक्यसादृश्यस्य शक्यावृत्तितया कथं शक्यस्य लक्ष्यत्वं येनाजहत्स्वार्थता स्यात् । द्वितीये तु सादृश्यसम्बन्धाभावे गौणीत्वमेव न स्यात् । कुन्तानामिति । तात्पर्यविषये कुन्तिप्रवेशे कुन्तानामन्वयबाधादित्यन्वयः ।

गोसादृश्यमिति । उपमितसमासे एव सादृश्यं लक्ष्यतावच्छेदकमित्यन्ये ननु गवाभेदस्य बाधितत्वात्कथं तत्प्रतीतिरत आह । व्यञ्जनाजन्येति । बाधज्ञानं तु निश्चयात्मकमेव प्रतिबन्धकं बाधसंशयानन्तरमपि विशेषदर्शने तद्वत्ताबुद्धेः अप्रतिबन्धकत्वे बीजमाह । एवञ्चेति । अनाहार्यज्ञानस्यैव प्रतिबध्यत्वादिति भावः । भेदकेति । गोत्वबाहीकत्वयोर्भेदकत्वात् । मध्ये इति । वाक्यार्थबोधात् प्रागित्यर्थः । तटादीनां प्रतिपादने कृते तत्प्रतीत्याभेदे सति पावनत्वादिलाभ इति भावः ।

उपकृतमिति । उपकृतं बहु नाम किमुच्यते सुजनता प्रथिता भवता परमित्यत्रापकारिणं प्रति उपकृतमित्यपकारं लक्षयति । गोशब्दस्य जाड्यादिपरत्वे गोर्जाड्यमिति प्रतीत्यापत्तिर्नामा-

र्थयोरभेद इति न्यायविरोधश्चेत्यभिप्रेत्याह । केचित्त्विति। अय-म्भावः गवाभिन्नो बाहीक इति बोधे अभेदस्य बाधितत्वाद्गो-शब्देन गोसदृशं लक्ष्यम् । गोसादृश्यं च गोगतजाड्यमान्द्यादि। तथाच जडाभिन्नो बाहीक इति बोध इति । अत एव शङ्कते । पौनरुक्त्यमिति । शक्यादशक्योपस्थितिर्लक्षणेति मते तु लाक्ष-णिकं नानुभावकमिति प्रवादः । तथाच गङ्गापदात्तीरानुपस्थितौ तत्र सप्तम्यर्थान्वयानापत्तिः प्रत्ययानां प्रकृत्यर्थान्वितेति न्या-यात् । तार्किकाणामय प्रवादः कथमिति चेत् । उद्देश्यविधेय-भावेन लाक्षणिकं नानुभावकमिति तदर्थः । अत एव न विधौ परः शब्दार्थ इति प्रवादः । परे तु कुमतिः पशुरित्यादौ सर्व-लाक्षणिके ऽन्वयदर्शनाल्लाक्षणिकं नानुभावकमिति प्रवादो ऽसङ्गत एवेत्याहुः । ननु साधारणधर्माश्रये लक्षणायामाल्हाद-यति मुखेन्दुरित्यत्र पौनरुक्त्यापत्तिरिति चेदत्राहुरिन्दुपदस्य इन्दुवृत्तिधर्मवति लक्षणेति ।

सदृशत्वेन लक्षणेति। सदृशे लक्षणेत्यर्थः। सादृश्यस्येति। जडत्वे एव सादृश्यपर्यवसानात्तेनैव रूपेण लक्षणास्त्वित्यर्थः। स्वशक्यगतेति । गवादिपदार्थगोत्वादिसहचारिणो जाड्यादयो लक्ष्यन्त इत्यर्थः । नन्वेवं गौर्बाहीक इत्यत्र सामानाधिकर-ण्यानुपपत्तिरत आह । जातिशक्तिनये इति । तथाच द्विगुणसदृ-शजाड्याक्षिप्तं प्रवृत्तिनिमित्तीकृत्य गोशब्दो बाहीके वर्तत इत्यर्थः। परास्तमिति।साधारणं जाड्यादिलक्ष्यतावच्छेदकमाश्रित्य तदा-श्रय एव लक्षणाया उचितत्वात् । अन्यथा लक्ष्यमाणव्यधिकरण-त्वमशक्यस्य बाहीकस्य गोशब्देन प्रतिपादनासम्भवश्च । तदाहुः लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति। लक्ष्यमाणा ये जाड्या-दयस्तैरेव यदि शक्यसम्बन्धस्तदा गौणी वृत्तिरित्यर्थ इति भावः।

ग्रामो दग्ध इति। अवयवधर्माणां समुदायेऽत्रारोप इति न युक्तम्। दग्धपदस्यैव दग्धगृहवद्वाचकत्वादिति भावः। जहदजहदिति। दग्धस्य तद्वतश्च बोधात्॥ ३८॥

(क० टी०) मतान्तरासाङ्कत्यध्वननाय प्राग्वद्विभजते। सेति। यत्तु गौणी न लक्षणान्तर्गता विशिष्टबुद्धियोग्यसम्बन्धे सत्येव लक्षणाप्रवृत्ते.। न हि सयोगेन दण्डी चैत्र इति वत्सादृश्येन सिहवान् चैत्र इति भवतीति मीमांसकास्तत्र विशिष्टबुद्धियोग्यत्वे ऽपि विपरीतलक्षणास्थले स्वनिरूपितविरोधाधिकरणत्वसम्बन्धे ऽप्यस्याः सत्त्वात्। तदेतत् ध्वनयन्नादौ तामाह। गौणीति। स्व शक्यो ऽर्थः। अत एव लाघवेनाह। तदतीति। तदौ प्रक्रान्तपरामर्शकौ। अपि. पूर्वसमुच्चये। सा। लक्षणा। तथाच द्विधापि सा द्विविधेत्यर्थ.। लक्षणमित्यत्र करणे ल्युट्। सामान्ये नपुसकम्। ननु शक्यार्थपरित्यागस्य क्वाप्यभावेन विशेषण व्यर्थमत आह। तदपरीति। शक्यार्थापरीत्यर्थ। तेनेत्यस्यार्थमाह। छत्र्यादीति। आदिना छत्रिण.। तादृशरूप चैकसार्थप्रविष्टत्वम्। अत इत्यस्यार्थमाह। अत्र हीति। हि यतः अत्रोदाहृतयोराद्या शुद्धा अन्त्या गौणी। उपसंहरति। एवमिति। सारोपात्वसाध्यवसानात्वरूढिमतीत्वप्रयोजनवतीत्वादिरूपा इत्यर्थः। तेषामेव दिक्प्रदर्शन कुर्वन्नाह। त्वगादीति। इय शुद्धा जहत्स्वार्था। ननु रूढि. प्रसिद्धिस्तथाचैषामर्थाना प्रसिद्धत्वे शक्तिरेवास्तु अश्वगन्धादिपदानामिवौषधिविशेषादावत आह। असतीति। इदञ्च प्रयोजनवत्यतिप्रसङ्गनिरासाय। एतेन यदि कुशलादिपदे शुकादिपदे च तत्पूर्वक दक्षादेर्गुणिनश्च बोध. प्रामाणिकानुभवसिद्धस्तदा लक्षणा विवेचकत्वरूप सादृश्यम्। विवेचकत्व च सतो ग्रहणमसत परित्यागरूपं कुशग्राहिणि दक्षे च वर्तते। तत्राप्याद्ये जहत्स्वार्थान्त्येऽजहत्स्वार्था ऽन्यथारूढिशक्तिरेवेति सूचितम्। युक्तश्चान्त्यपक्षः दक्षत्वादे प्रवृत्तिनिमित्तत्वात्। व्युत्पत्तिनिमितस्य च झटित्यप्रतीतेर्बाधप्रतिसन्धान विनापि तत्प्रतीतेः। कुशे कलजित्यादिना तत्साधनाच्चेति बोध्यम्। शन्तीति पूर्वान्वयि। कुन्तगतेति। लक्ष्येष्वित्यादिः। इयं शुद्धाऽजहत्स्वार्था पुरुषविशेषणतया कुन्तानां प्रवेशान्वयात्।

इमाम् । शुद्धाम् । जहत्स्वार्था न उक्तयुक्तेः । गोवाहीकोभयपरे गाव एते समानीयन्तामित्यादौ गोबाहीकसमुदाय छत्रिन्यायेन लक्ष्यते न तु गोसदृशत्वेन स्वस्मिन्भेदघटितसादृश्याभावादिति प्राञ्च. । यत्तु मुख्यार्थविशेषणिका लक्षणाऽजहत्स्वार्था सा च गौण्यपीति तन्न । चित्रगुरित्यादावपि परमते ऽजहत्स्वार्थात्वापत्ते॰ । काकेभ्य इत्यादौ मुख्यार्थस्य विशेषणत्वाभावेन तदसङ्ग्रहाच्च । यदा यत्किञ्चिद्गोसदृशत्वेन गोबाहीकसमुदायप्रतिपिपादयिषया गाव एते यान्तीति प्रयुक्त तदा गौण्यप्याद्या दुर्वारैवेति नव्या. । तदेतत् हृदि निधाय प्रयोजनवतीं गौर्णीं जहत्स्वार्थामुदाहरति । गौरिति । वाहीके गोत्वबाधात् गोसदृशलक्षणादिति भाव॰ । सादृश्यमहिम्ना भिन्नधर्मप्रकारकोपस्थितावपि गोपदशक्याभेदप्रतीतिर्व्यञ्जनया वाहीके ऽत्रेत्याह । गवेति । ननु बाधज्ञानसत्त्वात्कथ तथापि सो ऽत आह । व्यञ्जनेति । बाधितार्थबोधकतयैव तस्या धर्मिग्राहकमानसिद्धत्वादिति भावः । यत्तु आहार्यत्व भेदस्योपस्थितेस्तदसम्भवेनेच्छयैव तदुत्पत्तेरिति तन्न । विषयविषयिपदाभ्यां तत्तद्धर्मप्रकारेण तयोरुपस्थितौ तयोरन्वयबाधात् । प्रसिद्धत्वादिना झटिति तत्सादृश्योपस्थितौ लक्षणया सदृशप्रकारकबोधे सादृश्यमहिम्ना गोत्वबाहीकत्वयोः सामानाधिकरण्यसम्भावनया जातस्यापि भेदज्ञानस्य निरोधनात् । उक्तहेतोश्च । तदेतत् ध्वनयन्नन्यथा तत्त्वमाह । शब्दजन्येति । कत्वात् । तन्मात्रत्वात् । अयं शुद्धायामप्यावश्यक इत्याह । गङ्गायामिति । इत्यादावपीत्यर्थः । मध्ये । लक्ष्यार्थव्यङ्ग्यार्थबोधयोर्मध्ये । तथाच गौण्यां स एव प्रयोजन शुद्धायां तु उद्देश्यतया चमत्कारितया च प्रधानस्य प्रयोजनात्तस्य सत्त्वात्स चाङ्ग न तु सर्वथा तत्र तदभाव । तदुक्त मम्मटेन तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ प्रतिपिपादयिषितप्रयोजनसम्प्रत्यय इति । तत्त्वेत्यस्य मुख्यगङ्गाद्यभेदेत्यर्थ. । न च लक्षणामूलतया गङ्गासम्बन्धप्रतीत्या तत्सिद्धि । गङ्गातटे घोष इत्यतो ऽपि तत्प्रतीत्यापत्ते. । तदप्युक्त तेनैव गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाल्लक्षणाया. को भेद इति ।

उपकृत बहु नाम किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्व तत. शरदां शतम् ॥

एतच्चापकारिणं प्रति विपरीतलक्षणया कश्चिदुक्तिः । अपकृतं दुर्जनता शत्रो दु खित शरदां वर्षाणामिति बोध्यम् । नन्वेवमुपकृतमित्यादावप्यभेदबुद्धि स्यादत इष्टापत्तिमाह । उपेति । गौण्यां मम्मटादिमतमाह । केचित्त्विति । जडादि । बाहीकादि॰ । जडत्वेन । तदादिना । साधारणेन । जाड्यत्वाद्यवच्छिन्नेनेति यावत् । तथा च जडो बाहीक इत्यादिवाक्यार्थ इति भाव. । तत्र । बाहीके । अत्रान्यथा आह । लक्ष्यतेति । ननूपस्थापकाभावेन तस्यानुपस्थित्या कथ तद्विशिष्टे लक्षणात आह । सदृशेति । वाच्यमिति । तथाच गौरवमिति भाव. । अत एव लाघवादाह । इतीति । शङ्कानिरासायाह । अन्यथेति । मीमांसकमत खण्डयति । एतेनेति । पौनरुक्त्यापत्तेस्तत्रापि सादृश्यस्य तावता तथात्वेन तथा वाच्यमिति तथौचित्याच्चेत्यर्थ । एवेन गुणिव्यवच्छेदस्तेषां बाहीकशब्दादेव लाभादिति भाव. । सामानाधिकरण्यानुपपत्तिरूपप्रदीपोक्तदोषोद्धारमाह । तैश्चेति । तथाच गोनिष्ठजाड्यसजातीयजाड्यवदभिन्नो बाहीक इति बोधः । अत्रारुचिबीज परे त्वित्यादिना व्यक्तीभविष्यति । मतान्तरासाङ्गत्यध्वननायादौ सिद्धान्तमाह । ग्राम इति । तत्र । ग्रामादिपदे । तदेवमतान्तरमाह । ईदृशेष्विति । ग्रामादिपदस्य स्वार्थैकदेश परित्यज्य तदेकदेशे वृत्तेस्तथाच तृतीयोऽय भेद. दग्धभूयस्त्वादिद्योतनं च फलमिति भाव । अन्ये इत्यरुचिबीजं तूक्तरीत्या तत्र तदभाव एव । किञ्च तत्त्वमसीत्यादौ तत्सत्त्वेऽपि द्वितीयभेदेनैवास्यासङ्ग्रहः । स्वार्थैकदेशत्यागेऽपि तत्त्यागसत्त्वात् । आद्येन तु न सङ्ग्रहः नञ प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्वादिति ॥ ३८ ॥

स्वज्ञाप्यसम्बन्धो लक्षणा । केचित्तु ज्ञाप्यसम्बन्धेनोद्बुद्धशक्तिसंस्कारतो बोधो लक्षणा । गभीरायां नद्यां घोष इत्याद्यनुरोधात् । तथाहि न तावद्गभीरपदं तीरलक्षकं नद्यामित्यनन्वयापत्तेः । न हि तीरं नदी । अत एव न

नदीपदे ऽपि। गभीरपदार्थानन्वयात्। न हि तीरं गभीरम्। न च पदद्वये प्रत्येकं सा। विशिष्टनदीतीराप्राप्तिप्रसङ्गात्। न च नदीपदेन गभीरनदीतीरं लक्ष्यते गभीरपद तात्पर्यग्राहकमिति वाच्यम्। विनिगमनाविरहात्। न च नदीपदस्य द्रव्यवाचकतया साक्षात्सम्बन्धानुरोधेन तत्रैव सेति वाच्यम्। गभीरपदस्यापि नित्यगुणिबोधकतया तेनापि साक्षात्सम्बन्धस्यैव सत्त्वात्। अतः समुदाये साङ्गीकार्या। अत एवार्थवादवाक्यानां प्राशस्त्ये लक्षणासिद्धिः। अपभ्रंशे तु लक्षणेष्टैव। अत एव लक्ष्यस्य व्यञ्जकतायां साहेतीत्याद्युदाहरणं प्रकाशकारैर्दत्तं तस्यापि शक्तत्वाच्च। ज्ञापकत्वं चार्थबोधकतापर्याप्त्यधिकरणत्वमिति न प्रत्येकं वर्णेषु सा। लक्ष्यतावच्छेदकत्ववल्लक्षकतावच्छेदकत्वस्यापि गुरुभूतायां पदघटितानुपूर्व्यां स्वीकारे बाधकाभावः। ज्ञापकताशरीरे ज्ञानं च शाब्दबोधरूपमेव निविष्टमिति न समवायेन घटादिपदज्ञाप्याकाशसम्बन्धिनो ऽप्युपास्थितस्य शाब्दबोधविषयत्वम्। अत एव च्छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वेन च्छत्र्यच्छत्रिसमुदाये लक्षणेति समासादिवृत्तौ विशिष्टशक्तिमनङ्गीकुर्वन्तो ऽपि वृद्धा इत्याहुः॥ ३९॥

(कुं० टी०) स्वज्ञाप्यसम्बन्धो लक्षणा। भवति च वाक्यार्थो ऽपि वाक्यज्ञाप्यस्तेन वाक्यस्य लक्षणेति मीमांसकमतेनाह। ज्ञाप्येति। गभीरायां नद्यामिति वाक्यस्य बोध्यो गभीराभिन्नानदी तत्सम्बन्धस्तीर इति भावः। न हि तीरं नदीति।

गभीरतीरे नद्यामित्यर्थासम्भवात्। न नदीपदे ऽपीति। नदीपदे-न नदीतीरग्रहणे गभीरसामानाधिकरण्यासम्भव इत्यर्थः। पदद्वये। गभीरपदे नदीपदे च। प्रत्येकमिति। गभीरपदस्य गभीरतीरे नदीपदस्य नदीतीरे इत्यर्थः। विशिष्टेति। गभीरनदीतीरबोधानापत्तेरित्यर्थः। यत्तु गभीरपदं नदीपदं चेत्युभयमपि गभीरनदीतीरलक्षकं तत्रैकपदादर्थबोधे ऽपरपदं तात्पर्यग्राहकमिति तन्न। एवमपि समुदायशक्तौ पर्यवसाने तस्या एव न्याय्यत्वात्। विनिगमनाविरहादिति। गभीरपदस्यैव लक्षणास्त्वित्यर्थः। गभीरत्वविशिष्टनदीसंयुक्तत्वस्य सम्बन्धत्वे गौरवाल्लाघवान्नदीपदमेव लक्षकमिति युक्तम्। गभीरपदं गभीरत्वगुणे शक्तमित्याशयेन शङ्कते। न चेति। गुणीति। शुक्लादिशब्दवत्। अत एव। समुदाये लक्षणास्वीकारादेव। अर्थवादवाक्यानामिति। अर्थस्य प्रयोजनस्य वदनं विध्यर्थप्रशंसापरं वचनम्। वायुर्वै क्षेपिष्ठा देवता इति वाक्यस्य वायुदेवताकं कर्म प्रशस्तमित्यर्थलक्षकत्वात्। परे तु सर्वत्र विशेष्यपदस्यैव लक्षणा इतरपदानां तात्पर्यग्राहकत्वाच्च वाक्यलक्षणाप्रवाद इत्याहुस्तन्न। विश्वरूपो वै त्वाष्ट्र इत्यादौ विशेष्यपदानामप्यनेकत्वेन कस्य लक्षणेत्यत्र विनिगमकाभावात्।

नन्वेवमपभ्रंशे ऽपि स्वबोधसत्त्वाल्लक्षणापत्तिरतः शक्यसम्बन्धरूपैव लक्ष्मणेष्टव्येति तार्किकमतं निराकरोति। इष्टैवेति। अपभ्रंशे ऽपि लक्षणास्तीति दर्शयति। साहेतीति।

साहेती सहि सुहअं खणे खणे दूमिआसि मज्जकए।
सम्भावणेहकरणिज्जसरसिअं दाव विरइअं तुमए॥

इति प्राकृतम्।

साधयन्ती मयि सुभगं क्षणे क्षणे दूनासि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥

इति संस्कृतम् । मदर्थं नायकं वशीकुर्वन्ती त्वं हे सखि मदर्थं क्षणे क्षणे दूपितासि सद्भावस्नेहाभ्यां सदृशं यत्करणीयं तत् त्वया कृतमिति तदर्थः । अत्र मत्पतिं रमयन्त्या त्वया शत्रुत्वमाचरितमिति व्यज्यते । यत्तु ज्ञाप्यत्वं न स्वजन्यबोधविषयत्वम् । घटशब्दात्समवायेनाकाशस्याप्युपस्थितेः । नापि स्वजन्यशब्दबोधविषयत्वम् । गङ्गापदात्प्रवाहस्यावोधेन लक्षणानापत्तेः । तस्मात् शक्त्या स्वजन्यबोधविषयत्वमेव ग्राह्यमिति तन्न । प्रवाहसम्बन्धित्वेनैव तीरबोधात् । अपभ्रंशे ऽपि शक्तिस्वीकारात् । शक्यसम्बन्धो ऽपि तत्रास्तीत्याह । तस्यापीति ।

न प्रत्येकमिति । बोधकतायाः पदादावेव पर्याप्तत्वात्तत्रैव लक्षणेत्यर्थः । पदघटितेति । वाक्यलक्षणायामित्यर्थः । शाब्दबोधरूपमेवेति । घटादिपदादाकाशोपस्थितिस्तु सम्बन्धिज्ञानविधया स्मरणरूपैव । समुदायलक्षणायां तार्किकादीनामपि सम्मतिमाह । छत्रिणो यान्तीति । ननु समुदायशक्त्यनङ्गीकारे छत्रीति समुदायस्याशक्तत्वात् कथं तस्य लक्षणेति चेदत्राहुः । छत्रपदस्यैव एकसार्थवाहे लक्षणा । मतुवर्थश्च सम्बन्धः । तथाच एकसार्थसम्बन्धवन्तो गच्छन्तीत्यर्थः । छत्रिपदस्य लक्षणेति प्रवादस्तु स्वज्ञाप्यसम्बन्धसत्त्वादित्यभिप्रायेण । एकसार्थवत्त्वेन च च्छत्रस्याप्यन्वयादजहत्स्वार्थत्वमिति । अनङ्गीकुर्वन्तो ऽपीति । ये समुदाय शक्तिं नाङ्गीकुर्वन्ति ते ऽपि समुदायलक्षणां वदन्तीत्यर्थः । छत्रिशब्दस्य शक्त्यभावे ऽपि स्वज्ञाप्यसम्बन्धरूपा लक्षणा भवत्येवेति भावः ॥ २९ ॥

[ क० टी० ] उक्तमतानां मध्ये मतद्वयं न युक्तं किन्त्वाद्य-

मेवेति सूचयितुं तत्र शक्येत्यत्र ज्ञाप्येति निवेश्य तदेव परिष्कुर्वतां व्यपेक्षादिवादिनां मतमाह। केचित्त्विति। तदनुपपत्तिपूर्वकं स्वज्ञाप्यत्वेन गृहीतप्रसिद्धार्थसम्बन्धज्ञानेनेत्यर्थः। नन्वत्रैकपदलक्षणोक्तमतेनैव सिद्धेति वृथायं प्रयासोऽत आह। तथा हीति। पदेऽपि लक्षकत्वमिति शेषः। अत एवेत्यस्यार्थमाह। गभीरेति। उभयथानन्वयमुद्धरति। न चेति। उक्तमतेनैवेति भावः। एवमग्रेऽपि। इयमप्युद्धरति। न चेति। एवमग्रेऽपि। अतः विनिगमनाविरहसत्त्वात्। कार्येति। तत्र च शक्त्यभावेनोक्तमतेनानिर्वाहादिदमावश्यकमिति भावः। मीमांसकसम्मतमपीदमित्याह। अत एवेति। ज्ञाप्यत्वनिवेशादेवेत्यर्थः। नन्वेवमपभ्रंशेऽपि लक्षणापत्तिः पूर्वमते तु न तस्यावाचकत्वादत आह। अपेति। तदशक्तत्ववादिनां पूर्वमतेन स्यादित्यनिष्टमेवेति तत इदमेव वरमिति वैलक्षण्यसूचकस्तु। तत्र सम्मतिमाह। अत एवेति। तत्र तदिष्टत्वादेवेत्यर्थः। तायाम्। विषये।

साहेंति सहि सुहअ खणे खणे दूमिआसि मज्झकए।
सम्भावणेहकरणिज्जसारिसिअ दाव विरइअ तुमए॥
साधयन्ती सखि सुभग क्षणे क्षणे दूनासि मम कृते।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यते तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्। एवं परमतेनोक्त्वा सिद्धान्तमतमाह। तस्यापीति। अपभ्रंशस्यापीत्यर्थः। एवञ्च पूर्वमतेऽपि सा तत्र दुर्वारैवेति भावः। नन्वेवमपि बोधकत्वस्य घटकतया वर्णेषु सत्त्वेन तत्रातिप्रसङ्ग एवात आह। ज्ञापकेति। सा। पदादिनिष्ठत्वेन स्वीक्रियमाणा लक्षणा। नन्वेवमपि लक्षकतावच्छेदकगौरवान्न वाक्यनिष्ठत्वमस्या उचितमत आह। लक्ष्यतेति। दध्युपघातकत्वादिस्तत्त्वत्वादित्यर्थः। नन्वेवमन्यथा ज्ञाप्यत्वमादायातिप्रसङ्ग एवात आह। ज्ञापकेनेति। ज्ञाप्यत्वस्य स्वनिष्ठज्ञापकतानिरूपितत्वादिति भावः। स्थितस्य। शब्दादेः। शाब्देति। लक्षणाजन्येत्यादि। तस्या एवाभावात्तत्र तस्येति भावः। निर्विवादलक्ष्यदर्शनद्वारा सर्वसम्मतिमाह। अत एवेति। ज्ञाप्यत्वनिवेशादेवेत्यर्थः। पूर्वमते तु नेति सूचयन्नाह। समासादीति। आदिना

तद्धितादि। अपिना तत्समुच्चयः। तथाच तदेकवाक्यतया तेषामिदमावश्यकमिति भावः। अनेनात्रारुचिबीजमपि सूचितम्, वृत्ताविव वाक्ये ऽपि शक्त्यङ्गीकारादिदं वृथेत्येवम्॥ ३९॥

हर्यादिसिद्धान्तनिगर्व परे तु आरोपितशक्यतावच्छेदकरूपेण शक्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः। छत्रिणो यान्तीत्यादावप्यच्छत्रिषु साहचर्याच्छत्रित्वारोपः। काकेभ्यो दधीत्यादावपि दध्युपघातकमात्रे काकत्वारोपः। कमलानि कमलानीत्यादौ कमलत्वेनैव व्यक्तिविशेषबोधः। त्वामस्मि वच्मीत्यादौसम्बोध्यत्वादिनैवोपदेश्यत्वावस्थाविशिष्टतत्तद्व्यक्तिबोधो लक्षणया। अत्र पौनरुक्त्याद्विशेषानाधायकत्वाद्वा तात्पर्यानुपपत्तिः सामान्यविशेषभावः सम्बन्धः। अत एव पुंयोगादाख्यायामिति सूत्रे भाष्ये गोपीत्यादौ गोपसम्बन्धिस्त्रीत्वेन लक्षणायां तस्येदमिति शास्त्रेण तादृशेर्थे ऽण्प्रत्ययान्तस्यैव वा साधुत्वनियमादसाधुत्वापत्तिं दूषणमभिधाय नावश्यमथमेवाभिसम्बन्धो भवति तस्येदमिति किन्तु तन्मूलकः सो ऽयमित्यप्यभिसम्बन्धो ऽस्तीत्युक्त्वा चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति तात्स्थात् ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्यात् मञ्चा हसन्ति सिंहो माणवकः गङ्गायां घोषः यष्टीः प्रवेशयेत्युक्तम्। सो ऽयमित्यपीत्यादेः सो ऽयमित्यपि विशेष्यविशेषणभावो ऽस्तीत्यर्थः। न च गङ्गायां घोष इत्यादावारोपितगङ्गात्वेन बोधे ऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथाभ्रमत्वेन ग्रहाच्च

तदुत्तरं गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपं फलं न सिध्येत् । अत एव शुक्तिरजतज्ञाने भ्रमत्वज्ञानवतो न प्रवृत्तिरिति वाच्यम् । मध्ये व्यञ्जनया मुख्यगङ्गापदार्थाभेदस्यापि प्रतीतेः । व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इत्यदोषात् ॥ ४० ॥

( कुं० टी० ) अर्थमात्रं विपर्यस्तशब्दः स्वार्थे व्यवस्थित इति हर्यादिसिद्धान्तमाश्रित्याह । परे त्विति । वाच्यत्वेन प्रसिद्धो यः प्रवाहस्ताद्भिन्नस्य तीरस्य प्रवाहत्वरूपेण शक्त्यैव बोध इत्यर्थः । प्रवाहत्वमेव तीरे आरोप्यत इति भावः । व्यक्तिविशेषेति । सौरभत्वविशिष्टेत्यर्थः । सामान्यस्यैव वाच्यतया विशेषस्याशब्दार्थत्वादिति भावः । एतेन शक्यादन्येन रूपेण ज्ञातत्वाभावात्तत्र लक्षणा नेति तार्किकोक्तमपास्तम् । आरोपे बीजं दर्शयति । छत्रिणो यान्तीत्यादि । व्यक्तिविशेषेति । यथा एकं कमलपदं सौरभत्वविशिष्टबोधकम् ।

त्वामस्मीति ।

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमाधाय स्थितिमत्र विधेहि तत् ॥

अत्रास्मीत्यहमित्यर्थेऽव्ययम् । अत्र वच्मीत्यनुपयुक्तार्थम् । तदनुपादानेऽपि वचनक्रियाप्रतीतेरतस्तत्र वचनमुपदेशरूपतां लक्षयति । हितसाधनत्वं चात्र व्यङ्ग्यम् । एवं त्वामस्मीति पदेऽप्यनुपयुक्तार्थे सम्बोध्यतयैव युष्मदर्थस्य वचनकर्मताप्रतीतेः । वच्मीत्युत्तमपुरुषेणैवास्मदर्थस्य तत्कर्तृताप्रतीतेरतस्ताभ्यामुपदेश्यत्वाप्तत्वे लक्ष्येते । व्यक्तिबोधो लक्षणयेति । शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति तु निर्मूलमिति भावः । सामान्येति । अस्मदर्थसामान्यं •शक्यमाप्तत्वविशिष्टोऽस्म-

दर्थस्तु लक्ष्यः तयोश्च सामान्यविशेषभावः सम्बन्ध इति भावः । अत एव । आरोपेण बोधादेव । वाक्यस्यैवेति । तद्धितस्य वैकल्पिकत्वात् । गङ्गाया घोष इति । यत्तु तीरत्वेन बोधे जहत्स्वार्था गङ्गातीरत्वेन बोधे त्वजहत्स्वार्थेति तार्किकास्तन्न । तीरत्वेन बोधे शैत्यपावनत्वादीनां प्रतीत्यनापत्तेः ।

ननु गङ्गापदार्थाभेदस्य बाधितत्वात्कथं तदर्थस्याबाधितत्वमत आह । बाधज्ञानेनेति । यत्तु मुखं चन्द्रो गौर्वाहीक इत्यादौ लक्षणां विनैवाभेदबोधः, बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वस्य निवेशात् । वह्निना सिञ्चतीत्यादौ तु योग्यताविरहान्न बोधः । इह तु इष्टचमत्कारसिद्धये आहार्ययोग्यताज्ञानस्य सत्त्वादिति तन्न । आहार्याभेदेनैव सिद्धौ शाब्दान्यत्वनिवेशस्य योग्यताज्ञानहेतुत्वस्य च निष्फलत्वात् । आहार्यं प्रात्यक्षिकमेवेति नियमे तु मानाभावः । ये तु मुखचन्द्र इत्यादौ सारोपलक्षणां वदन्ति तन्मतेऽप्यत्र वाच्ययोरेवाभेदान्वयो वाच्ये न तु वाच्यलक्ष्ययोः । अन्यथा राजन्नारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरमित्यत्रोपमितसमासमूलकोपमाभ्युपगमे लक्ष्मीकर्तृकालिङ्गनस्यासामञ्जस्यमित्यालङ्कारिकसमयो व्याहन्येत । किञ्चोपमानवाचकस्य चन्द्रादिपदस्य रूपके उपमानसदृशे लक्षणेत्यालङ्कारिकाः । तत्र समानधर्मरूपं सादृश्यं लक्ष्यतावच्छेदकम् । स च धर्मो लक्ष्यांशे सामान्यरूपेण प्रतीयते, सुन्दरत्वादिविशेरूपेण वा । नाद्यः सादृश्यस्य शब्दोपात्तत्वेनोपमात्वापत्तेः । नान्त्यः सुन्दरं मुखं चन्द्र इत्यत्र पौनरुक्त्यापत्तेः । न च सादृश्यस्य वाच्यतायामेवोपदेशः । नलिनप्रातिपक्षमाननमित्यादौ तदभावापत्तेः । यदि तु सुन्दरं मुखमित्यादौ धर्मोत्तरेण सादृश्यमित्यु-

च्यते । एवमपि विद्वन्मानसहंसेत्यत्र रूपके श्लेषानिमित्ताभेदाऽध्यवसानेन मानसवशित्वरूपभूपहंसयोः सादृश्ये सिद्धे सदृशलक्षणामूलकस्य भूपे हंसरूपकस्य सिद्धिः । तत्सिद्ध्यै च सरोमनोरूपार्थद्वयाभिधानलक्षणस्य श्लेषस्य निष्पत्तिरित्यन्योन्याश्रयः । तस्माद्रूपकेऽभेदान्वय एव युक्तः । न च रूपके सदृशलक्षणाया एव फलं ताद्रूप्यप्रतीतिरिति वाच्यम् । तत्सदृश इति शब्दादपि तादृशप्रत्ययापत्तेः । यत्तु वदन्ति रूपके लक्षणा नास्तीत्ययुक्तम् । तथाहि । साधारणधर्मानुपस्थितिदशायां नास्ति रूपकनिष्पत्तिरिति सर्वसिद्धान्तः । तत्र साधारणधर्मवत्त्वरूपसादृश्यस्य रूपके प्रवेशाभावे विशेषधर्मानुपस्थितिदशाया कथं रूपकं पर्यवस्येत् । राजा नारायणमित्यत्रापि विशेषणसमासे उत्तरपदार्थप्राधान्यान्नारायणत्वेनोपस्थिते लक्ष्मीकर्तृकस्यापि न विरोध इति । अत्रोच्यते । उपमितसमासस्थले भेदघटितसादृश्यविशिष्टोपमेये उपमानशब्दस्य निरूढलक्षणा । इदमेवेवादीनां द्योतकत्वम् । सदृश इत्यत्र तु लक्षणाया अभावान्न ताद्रूप्यप्रत्ययः । एवञ्च लक्षणायाः फलं ताद्रूप्यप्रत्यय इतिप्राचां ग्रन्था इत्यलम् ॥ ४० ॥

( क० टी० ) अथ सर्वत्रारुचिसूचक सिद्धान्तमाह । परेत्वित्यादिना वदन्तीत्यन्तेन । नानार्थत्वनिरसायाह । तत्पदेति । तेन य. प्रसिद्धस्तदन्वेत्यर्थ. । तत्रारोपानुपयोगादाह । अन्येति । नाय नियम इत्याह । व्यक्तिविशेषेति । व्यवस्थितविकल्पीयो बोधस्तु य धर्म धर्मितावच्छेदकीकृत्य शक्तिग्रहस्तदारोपेण शक्त्यैव । सर्वत्र शक्तिग्रहोपस्थितिशाब्दबोधानां समानप्रकारकत्वेन कार्यकारणभावान्नात्र शक्तिग्रहापेक्षा नाप्यतिप्रसङ्गः । एवञ्च न पृथक्कार्यकारणभावादिकल्पनमपि । तदारोपे च शक्यसम्बन्धो निमित्तमित्येतावता शक्यसम्बन्धो लक्षणेत्यप्युपपन्नम् । एवेन तस्या अतिरिक्तत्वनिरास इति भावः ।

तदेतद्ध्वनयन् सर्वत्रारोपमाह । छत्रिण इत्यादि । अनेनास-म्भवो वारित । अपि• प्रसिद्धस्य गङ्गायां घोष इत्यस्य समुच्चायक । अत एव तत्त्यागमात्रं कात्स्र्न्येन द्ध्युपघा-तकत्वसादृश्यादिति भाव• । एवमाद्योदाहरणद्वयमुक्त्वा द्वि-तीयोदाहरणद्वयमाह । कमलानीति । व्यक्तिविशेषेति । सौरभ-विशिष्टकमलव्यक्तीत्यर्थ ।

ताला जाअन्ति गुणजाला ते सहिअए हि घेष्यन्ति ।
रइकिअणाणुगाहि आइ होंति कमलाइ कमलाइ ॥
तदा तामन्ते गुणा यदा ते सहृदयैर्गृह्यन्ति ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अत्र पुनरुक्तकमलशब्द सौरभादिगुणाविशिष्टे सङ्क्रमितः सौरभातिशयो व्यङ्ग्य । इत्यादौ । इत्यादावपि ।

त्वामस्मि वच्मि विदुषां समवायो ऽत्र विद्यते ।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ॥

विद्वत्सभां गच्छन्तमाप्त प्रति कस्य चिदुक्तिरियमत्र वचनाद्युपदेशादिरूपतया परिणमति तदाह । सम्बोध्यत्वे इति । आदिना स्वतन्त्रोच्चारयितृत्वादि । अग्रे तेनाप्तत्वासाधारण-ज्ञानवत्त्वैकवाक्यतापन्नसमुदायत्वाप्रतार्यत्वसावधानस्थितित्वपरि-ग्रह• । अत्रावश्यवाच्यहिताहितत्वानुलङ्घनीयाज्ञत्वादिव्यङ्ग्यम् । नन्वनुपपत्तिज्ञानाभावेन कथमुभयत्र लक्षणात आह । अत्रेति । उभयत्रेत्यर्थ । तत्राद्ये आह । पौनरुक्त्यादिति । द्वितीये आह । विशेषेति । उभयत्राप्याह । सामान्येति । अत्र सम्मतिमाह । अत एवेति । तत्र तदारोपादेवेत्यर्थ• । स्त्रीत्वेन । तदादिना । तादृशेति । तदर्थकेत्यर्थ• । तथा समासस्येव वेत्यपि बोध्यम् । पुंयोगादाख्यायां तद्धितवुग्वचनमित्यस्य कण्ठत उक्तत्वादाह । अभिसन्धायेति । हृदि निधायेत्यर्थ• । वक्ष्यमाणतो लब्ध शेषमाह । किन्त्विति । चतुर्भिरिति । कथ पुनरतस्मिन्स इत्ये• तद्भवतीति शङ्कायामित्यादि यद्यपि भाष्ये जटी ब्रह्मदत्त इत्युक्तं तथापि तत्सजातीयमाह । सिंह इति । भाष्ये क-ण्ठत आरोपानुक्तेराह । कैयटो ऽपीति । आरोप्येति । तत्र च तात्स्थ्यादयो हेतव• । शक्यतावच्छेदकप्रकारक एव ल-

क्ष्यार्थबोधः । तत्प्रकारकप्रतीतिविशेष्यप्रसिद्धार्थत्व मुख्यत्व, तादृशाप्रसिद्धार्थत्व च गौणत्वमिति भाव । हसन्तीति । मुख्यमञ्चपदार्थस्याचेतनत्वे हसनकर्तृत्वासम्भवादित्यर्थ । अभेदस्य सम्बन्धत्वस्य खण्डयिष्यमाणत्वादाह । सो ऽयमित्यपीति । साहचर्यं चोक्तान्यसम्बन्धमात्रोपलक्षणमिति बोध्यम् । न चेति । गङ्गासम्बन्धितीरलक्षणायां तूक्तदोष एवेति भावः । स्वरूपतस्तस्याप्रतिबन्धकत्वादाह । शाब्देति । आदि पूर्वादिसङ्गृहीतलक्ष्यान्तराभिप्रायक. । न सिद्ध्येदिति । प्रमात्मकज्ञानस्यैव कार्यसाधकत्वेन तस्यातत्त्वादिति भाव. । इदमावश्यकमित्याह । अत एवेति । उक्तो ऽर्थ. । तत्रादौ प्राग्वदेवाह । मध्ये इति । प्राग्वत् । नन्वेवमपि बाधज्ञानेन तत्राप्रामाण्यग्रह इति प्रोक्तदोष एवेत्याह । व्यञ्जनेति । अत्र बीजमुक्तम् ॥ ४० ॥

बाधज्ञानसत्त्वे ऽपि कुत्र चित् नाप्रामाण्यम् । वस्तुतस्तु शब्दानुपपत्तिमूलकारोपितार्थबोधे बाधज्ञानेन नाप्रामाण्यग्रहो जन्यते। अत एव पचतीत्यादिजबोधे नाप्रामाण्यग्रहः । तथा सत्यनुपपत्तिपरिहाराभावादित्यग्रे निरूपयिष्यामः। कुन्ताः प्रविशन्तीत्यादौ कुन्तसंयोगविशिष्टपुरुषाणां कुन्तत्वेन प्रतीतिरित्यजहत्स्वार्थत्वोपपत्तिः। कैयटो ऽप्याह आरोप्यते ताद्रूप्यं न तु मुख्यं बालेषु मञ्चत्वारोपान्मञ्चपदप्रवृत्तिर्हसन्तीत्यादिपदान्तरयोगाद्विज्ञायते इति। शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति तु कस्य चित्प्रमादोक्तिः। यद्वा शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीते ऽर्थे लक्षणा शक्यतावच्छेदकारोप इति तदर्थः। यथा तीरत्वविशिष्टस्य गङ्गात्वेन बोध इति।

अत एव गङ्गायां मीनघोषौ स्त इत्याद्युपपद्यते।

अन्यथा द्वन्द्वाद्यर्थस्यैकधर्मावच्छिन्ने ऽन्वयस्यैव वाजां ग्रामे नयति अजाविधनौ देवदत्तयज्ञदत्तावित्यादौ यथासंख्यान्वये द्वन्द्ववारणाय पयः पयो नयतीत्यादावेकशेषवारणाय चावश्यकत्वेन पररीत्या च मीनस्य नीरत्वावच्छिन्ने ऽन्वयेन घोषस्य तीरत्वावच्छिन्ने ऽन्वयेन द्वन्द्वो ऽसाधुः स्यात् । मम तु गङ्गात्वेनैव तीरबोधादेकधर्मावच्छिन्ने ऽन्वयसत्त्वेन न क्षतिः । युगपद्वृत्तिद्वयविरोधो ऽप्यत एव न दोषाय, दूषकताबीजाभावाच्च । अन्वयानुपपत्त्या च युगपदेव गङ्गात्वेनैव नीरतीरयोरुपस्थितिः । काकेभ्यो दधीत्यादावप्येवमेव ॥ ४१ ॥

( कुं॰ टी॰ ) ननु तद्वत्ता निश्चयं प्रति तदभाववत्ता निश्चयस्य प्रतिबन्धकत्वात्कथं तज्ज्ञानस्य प्रमात्वं शङ्खः पीत इत्यादिबुद्धिवदित्याशङ्क्याह । वस्तुतस्त्विति । अनाहार्यस्यैव प्रतिबध्यत्वादिति भावः । पचतीत्यादिजेति । अत्राख्यातार्थैकत्वादः क्रियायामारोपादेकवचनादि । तत्र शब्दस्यैकवचनाद्यप्रयोगस्यानुपपत्तिर्मूलम् । परिहाराभावादिति । एकत्वे एकवचनमित्यादौ एकत्वादिप्रकृत्यर्थगतमेव न्याय्यं सुबन्तादिस्थलवत् । गुणीभूतकर्त्रादावेकत्वान्वयासम्भवाच्च । तार्किकादीना प्रत्ययानां प्रकृत्यर्थान्वितेति न्यायविरोधश्च स्यात् । मतान्तरे तु क्रियायामेकत्वस्यान्वयाभावात् स्थाली पचतीत्यादौ व्यापारसमुदायस्य पचत्यादिवाच्यस्यैकदेशे आरोप इति दृष्टान्तो बोध्यः । यथेति । तीरत्वेन ज्ञाते तीरे प्रवाहत्वेन बोधाल्लक्षणेत्यर्थः ।

अत एव । प्रवाहत्वेन रूपेण प्रवाहतीरयोर्बोधादेव । अ-

न्यथा । प्रवाहत्वेन बोधाभावे । द्वन्द्वादार्थस्येति । यत्र समुदायार्थस्यैकधर्मावच्छिन्ने ऽन्वयस्तत्रैव द्वन्द्वस्वीकारस्यावश्यकतयात्र द्वन्द्वो न स्यादित्यर्थः । अन्वयस्यैवेति । आवश्यकत्वेनेत्यत्रान्वयः । एतन्नियमस्य फलमाह । अजां ग्राममिति । अत्राजाग्रामयोर्न द्वन्द्वः । ग्रामस्य संयोगे अजायाश्च व्यापारे ऽन्वय इति भेदात् । अजावीति । अजाधनो देवदत्तः अविधनो यज्ञदत्त इति भेदात् । दूषकताबीजाभावाच्चेति । अत एव तार्किका अपि चित्रगुधनमित्यत्रोत्तरपदस्यान्यपदार्थे लक्षणया तत्सम्बन्धिनि तत्पुरुषलक्षणायां च लक्षणाद्वयाद्बोधमभ्युपेत्योक्तनियमं निराचक्रुः । अत एव न । प्रवाहत्वेन बोधादेव न । एवमेवेति । दध्युपघातके विडालादौ काकत्वमारोप्यत इत्यर्थः ॥४१॥

( क० टी० ) अत्र पक्षे तेनैव निर्वाहे मध्ये ज्ञानान्तरं नाङ्गीकार्यमिति लाघवेन सिद्धान्तमाह । वस्तुतस्त्विति । शुक्तिरजतज्ञानादिनिरासायाह । शब्देति । अस्यावश्यकत्वमाह । अत एवेति । तत्र तेन तद्जननादेवेत्यर्थः । बोधे । समूहरूपारोपेणाधिश्रयणाद्यवयवमात्रबोधे । गङ्गादिपदजन्यतटादिशाब्दबोधस्यैव प्रयोजनप्रतीतिनियामकत्वेन गङ्गातटे इत्यादितस्तदभावोपपत्तिरिति भाव. । नन्वेवमपि कुन्तत्वेन पुरुषमात्रबोधे छत्रिकाकादिवदजहत्स्वार्थत्व न स्यादत आह । कुन्ता इति । अत्र वक्ष्यमाणरीत्या तत्तदुपपत्तिस्तेषां स्वतस्तदन्वयासम्भवादत आह । कुन्तेति । कुन्तादियुक्तपुरुषाणामित्यर्थ । अत एवात्र न मतुबिति नासाधुत्वापत्तिरिति बोध्यम् । कुन्तत्वेन । तदादिना । तेषु चोक्तरीत्योक्तप्रयोजनसिद्धेरुपपत्तिः विशेषणतया तस्य तदन्वयात् । नन्वेवं प्रवृत्तिनिमित्ते ऽपि शक्ते. शक्यतावच्छेदकादन्यरूपेण ज्ञानविपयविषये लक्षणा भवतीत्यर्थकेन तत्र तदन्यरूपेण भानमित्याशयकेन शक्यादन्येनेत्यनेन विरोधापत्तिरत आह । शक्यादिति । तस्या अपि नोक्तो ऽर्थो ऽपि तु मदुक्त एवेत्याह ।

यद्वेति । ज्ञाने इति भावेक । शक्यादन्यस्यार्थस्य स्ववृत्तिध-र्मादन्येनार्थान्छक्यतावच्छेदकरूपेण ज्ञाते लक्षणा तद्व्यवहारो भवतीत्यर्थ क्लिष्टत्वादपेक्ष्यान्यथा आह । शक्यतेति । उक्तरीत्या लब्धमिदम् । उदाहरणेन तत्तात्पर्यं प्रकटयति । यथेति । अस्य फलमनुपदमेव स्फुटीभविष्यति । भाष्याद्यारूढोक्तसिद्धान्त पोषयति । अत एवेति । उक्तरूपलक्षणाङ्गीकारादेव चेत्यर्थ । विपक्षे बाधकपुरःसरमुपपत्तिमुपपादयति । अन्यथेति । पूर्वमताङ्गीकारे इत्यर्थ । सहविवक्षा द्वन्द्वादिनिमित्त तत्र चोभयोर्निवेश इत्याह । तादृशस्येति । एव पूर्वत्राप्यन्वेति । तत्राद्यफलमाह । अत्रामिति । द्वितीयफलमाह । अजेति । चोऽव्युत्क्रमे, अन्वयेन चेत्यर्थ । आर्थिकेनेति भाव । एवञ्च द्वितीयविषयो ऽयमतो ऽपि तदुक्ति । अत एवेत्यस्यार्थमाह । मम त्विति । नन्वेवमपि विरोधेन शक्यार्थाबोधेन तदन्वयासम्भवेनासाधुत्व तदवस्थमेवात आह । युगपदिति । अत एव उक्तप्रयोगान्यथानुपपत्त्यैव । इदमपि तस्य तत्त्वमभ्युपेत्य वस्तुतस्तदेव नेत्याह । दूषकतेति । तेजस्तिमिरादिवदिति भाव । नन्वेवमपि बुद्धे क्रमिकत्वेन युगपदनुपस्थित्योक्तदोषस्तदवस्थ एवात आह । अन्यथेति । उक्तप्रयोगान्यथानुपपत्त्येत्यर्थ । तन्त्रेणेति भाव । काकेभ्यश्छत्रिण इत्यादावजहत्स्वार्थत्वोपपत्तिरपि युगपदेव तेन तेन रूपेणोभयबोधादित्याह । काकेभ्य इति ॥ ४१ ॥

अत्रार्थे गौतम सम्मति । **गौतमो ऽप्याह सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणबालकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावे ऽपि तदुपचार इति । तस्य भावस्तद्धर्मस्तदभावे ऽपि तदुपचारस्तच्छब्दव्यवहार इत्यर्थः । स च तमद्धारोपेण । आरोपनिमित्तानि च सहचरणादीनि । यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, वीरणेष्वास्ते, अयं राजा यमः, प्रस्थः सक्तुः, चन्दनतुला, गङ्गायां**

घोषः, कृष्णः शकटः, अन्नं प्राणाः, कुलस्य राजा इत्युदाहरणानि। यष्टित्वारोपो ब्राह्मणे साहचर्यात्। मञ्चत्वारोपो बालेषु तात्स्थ्यात्। कटेषु वीरणत्वारोपस्तादर्थ्यात्। राज्ञि यमत्वारोपो वृत्तात्। गौर्बाहीक इत्यादावपि साधारणधर्मजडत्वादिरूपेण निमित्तेन बाहीकस्यारोपितगोत्वेन बोधः। ततो व्यञ्जनया मुख्यगवाभेदप्रतीतिः प्रयोजनम्। तत एव चमत्कारः। आद्यबोधे तु न चमत्कारः। तस्मिन् भ्रमत्वज्ञानात्। अत एव गौर्बाहीको जड इत्यादौ न पौनरुक्त्यम्। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेत्यस्य यद्गुणज्ञानपूर्वकं बाहीके गोशब्दप्रयोगस्तैर्ज्ञायमानगुणैर्योगात्तद्गुणरूपात्सम्बन्धादित्यर्थः। प्रकृत्यादित्वात्तृतीया। यद्वा प्रथमत एव तत्र नामार्थयोरभेदबोधः। बाधज्ञानस्यानुपपत्तिजलक्षणाजन्यशाब्दबोधेऽप्रामाण्यग्रहजनकत्वस्याभावात्। सक्तौ प्रस्थत्वारोपस्तन्मानकत्वात्। चन्दने तुलात्वस्य तद्धार्यत्वात्। गङ्गायां नीरधर्माधारत्वारोपः सामीप्यात्। कृष्णगुणयोगाच्छकटे तद्धर्मकृष्णत्वारोपः। प्राणसाधनत्वादन्ने प्राणत्वारोपः। कुलाधिपत्वेन पुरुषे राजत्वारोप इति तद्व्याख्यातारः। न्यायवार्तिककारोऽपि साहचर्यं नाम यष्टिकया सम्बन्धः तत्सम्बन्धात्तु यष्टिकावानित्येव स्यान्न तु यष्टिकेति। यष्टिकावानिति तु मुख्य एव। तस्मादुपचारबीजमन्यद्वक्तव्यम्। उच्यते यष्टिकायां तावदयं यष्टिकाशब्दो यष्टिकात्वजातिनिमित्तकः। तत्र सत्युक्तसमवेतां जातिं ब्राह्म-

णे समवायेनाध्यारोप्य ब्राह्मणं यष्टिकेत्याहेत्याह । भावप्रधानो निर्देश इत्यस्याप्ययमेवार्थः । घटादिपदप्रवृत्तिनिमित्तस्य घटत्वादेस्तत्रैव भेदसम्बन्धेनाहार्यारोपात् घटत्वादिप्रकारकं घटत्वादिबोधो घटादिशब्दाल्लक्षणयेति । अत्रं प्राणाश्चन्दनं तुलेत्यादावाहार्यारोपस्यैव लक्षणात्वादिति बोध्यम् ॥ ४२ ॥

[ कुं० टी० ] अतद्भावे ऽपि तच्छब्दाशक्यत्वे ऽपि तदुपचारस्तच्छब्दव्यपदेश इति व्याख्यानं तु न युक्तं, व्यपदेशे ऽपि निमित्तस्यैव वाच्यत्वादित्याह । स चेति । सहचरणं संयोगविशेषः। कटेष्विति। कटं करोतीत्यादौ कटानां सिद्धत्वेन कारकत्वासम्भवादिति भावः । सर्वत्र प्रवृत्तिनिमित्तमारोप्यत इत्याह । साधारणेति । साधारणधर्म जडत्वादिकं निमित्तीकृत्य आरोपितत्वेन बोधादित्यन्वयः । तथाच जडो बाहीक इति बोधानन्तरं गवाभिन्नो बाहीक इति बोधः । गोत्वेनेति । एतेन युगपद्वृत्तिद्वयविरोधो ऽपास्तः । व्यञ्जनयेति । गोत्वारोपेण गोशब्दप्रवृत्तौ ततो ऽभेदबोधे ऽतिजडत्वप्रतीतिरिति भावः । अत एवाह। तत एव चमत्कार इति । आद्यबोधे त्विति । प्रथमत एव गवाभेदबोधे त्वित्यर्थः। तस्मिन्। गवाभेदज्ञाने । भ्रमत्वज्ञानादिति । गवाभेदज्ञानस्य भ्रमात्मकत्वान्न चमत्कार इत्यर्थः । अत एव । आरोपितत्वप्रत्ययादेव । गोशब्दस्य तत्सदृशजडत्वादिपरत्वे तु पौनरुक्त्यापत्तिरित्यर्थः। ननु गोत्वारोपे लक्ष्यमाणगुणैर्योगादिति प्रवादासङ्गतिरत आह। लक्ष्यमाणेति। तथाचारोपहेतुभूतत्वेन ज्ञायमानगुणैर्योगादित्यर्थः।

गवाभिन्नो बाहीक इति बोधे ऽतिजडत्वप्रतीत्या चमत्कारातिशय इत्यभिप्रेत्याह। यद्वेति। ननु लक्षणातः प्राक् कथमभेद-

बोधस्तस्य बाधितत्वेनाप्रामाण्यापत्तेरत आह । बाधज्ञानस्येति । अनुपपत्तिजेति । अनुपपत्तिजा या लक्षणा तज्जन्येत्यर्थः । वस्तुतस्तु बाधज्ञानं न प्रतिबन्धकं न वा तदभावकारणं बाधस्थले विशेष्यतावच्छेदकप्रकारकनिश्चयाभावादेव विशिष्टबुद्ध्यनुत्पत्तेः । न्यायवार्तिकेति । उक्तानुक्तदुरुक्तचिन्ताकरं वाक्यं वार्तिकम् । ननूपनिषद्वार्तिकाना कथं दुरुक्तचिन्ताकरत्वं तत्र दुरुक्ताभावात् । सत्यम् । तत्रापिदुरुक्तत्वभ्रान्तिसम्भवात् । ननु सामानाधिकरण्यरूपसाहचर्यस्य यष्टितद्धारिणोरसम्भव इत्यत आह । साहचर्यं नामेति । सम्बन्धात्विति । यष्टिकासम्बन्धाद्यष्टिकाशब्दप्रयोगे त्वित्यर्थः ।

उपचारेति । भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः । संयुक्तसमवेताम् । ब्राह्मणसंयुक्तयष्टिसमवेताम् । तत्रैव । घटत्वादावेव । भेदसम्बन्धेन आश्रयाश्रयिभावेन । अत एवाह । घटत्वादिप्रकारकेति । तथा च घटत्वविशिष्टस्य घटत्वस्यैव प्रतीतिः। लक्षणयेति । घटत्वविशिष्टघटे शक्तस्य घटत्वाविशिष्टे घटत्वे लक्षणेत्यर्थः ॥ ४२ ॥

(क० टी०) मध्यमपक्षवादिनामज्ञानं प्रकटयन् तन्मूलसम्मतिमप्याह । गौतमो ऽपीति । प्राग्वत् तद्याख्यातग्रन्थमाह । तस्येति । एतेन न सस्तस्याभावे ऽपीति व्याख्यानमपास्तम् । उभयथापि भावपदवैयर्थ्यापत्तेः । दीनि दश वीरणानि तृणविशेषाः । राज्ञि । प्रकृते । वृत्तमाचरणम् । तुलाया साक्षात्स्वतो ऽमानत्वादाह । तद्धार्यत्त्वादिति । तीरधर्मस्तीरत्त्व तस्याप्यनारोपादाह । आधारत्वेति । तद्धर्मेति । कृष्यगुणधर्मेत्यर्थः । अत्र सहचरणं न मुख्यमसम्भवात् किन्तु सम्बन्धमात्रोपलक्षण रथानादि तस्यैव प्रपञ्चः । महाभाष्येप्येवम् । अत एव न तेनास्य विरोध इति सूचयितुमाह । न्यायवार्तिकेति । उद्द्योतकारो ऽपीत्यर्थः । साहेति । न चेत्यादिः । तत्र । तस्मिन् सति । अत्र पक्षे गौण्याद्युपपत्ति-

माह । गौर्वाहीक इति । अपि पूर्वसमुच्चये । साधारणेति । जड-त्वावच्छिन्नेत्यर्थ । वाहीकेति । तदादेस्तदादिनेत्यर्थः । प्राग्व-दादावाह । तत इति । तस्या आनर्थक्य परिहरति । तत एवेति । आद्येति । लक्ष्यार्थबोधेनेत्यर्थ । गोत्वावच्छिन्नो वाहीक इत्यनेनेति यावत् । तस्मिन्ज्ञाने वा ज्ञानेनेति भाव । अत [illegible] । जडत्वस्य तन्निमित्तत्वेनालक्ष्यत्वादेव । रुक्तम् । तच्छङ्कापि । नन्वत्र पक्षे प्र-काशादिसम्मतलक्ष्यमाणेति भट्टोक्तिविरोध अभिधेयाविनाभूत-प्रतीतिर्लक्षणोच्यत इत्यस्य पूर्वार्धम् । अविनाभावो ऽत्र सम्बन्ध-मात्र न तु व्याप्ति मञ्चा क्रोशन्तीत्यादावभावात् । तद्ग्रहश्च लोके धर्मिण्येवेति तद्भाव । एतेन गौण्यतिरिक्ता वृत्तिरित्य-पास्तम् । प्रतीतिरित्यत्रापरियनेलक्षणात्वे भावे क्तिन् । पक्षान्तरं तु करणे । लक्ष्यतावच्छेदकगुणयोगात्तद्रूपसम्बन्धाच्चाद्यत्वम् । तथा च गुणलक्ष्यतावच्छेदकिका लक्षणा गौणीति भाव इत्यत आह । ल-क्ष्येति । लक्ष्यमाणेत्यस्यार्थो ज्ञायेति । ननु तृतीयासत्त्वे कथमुक्ता-र्थो ऽत आह । प्रकृत्यादित्वादिति । एतेन साधारणगुणाश्रयेणेति प्रकाशस्यापि तद्रूपसम्बन्धेनेत्यर्थ इति न तद्विरोधो ऽपीति सू-चितम् । प्राग्वदत्रापि सिद्धान्त ततो विलक्षणमाह । यद्वेति । पूर्व भेदेनान्वये ततो व्यञ्जनया अभेदप्रतीतिर्वाच्या, स एव न ना-मार्थयोरिति व्युत्पत्तेस्तदाह । प्रथमत इति । अत्र पक्षे प्रयोजन त्वनुपदमेव वक्ष्यति । नन्वेवमपि तत्र गौर्न वाहीक इत्यादि-बाधज्ञानेन भ्रमत्वग्रहात्कथ तत्सिद्धिरित्यत आह । बाधज्ञानस्येति । शुक्तिरजतनिरासायाह । अनुपपत्तीति । लक्षणाविशेषणमन्यथा तदा-नर्थक्यापत्तेरिति भाव । एतेन रूपके न लक्षणा समानविभ-क्तिकत्वेन नामार्थयोरभेदान्वयोपपत्त्या लक्षणाफलाभावादित्याद्य-प्पय्यदीक्षिताद्युक्तमपास्तम् । तथासति तत्राप्रामाण्यग्रहेण शुक्तिर-जतज्ञानवत्प्रयोजनासिद्धिप्रसङ्गात् । तत्सादृश्यज्ञानस्य तद्बाधज्ञान-जन्याप्रामाण्यज्ञान प्रति प्रतिबन्धकत्व स्वीकृत्य प्रसिद्धत्वादि-नोपस्थितसादृश्यमहिम्ना अप्रामाण्यज्ञानानास्कन्दिताभेदबुद्धिरि-त्युक्तौ तु तदनुपस्थितौ दोषो गौरव चात बोध्यम् । प्रका-रान्तरासाङ्गत्यसूचनायान्यत्रापि मदुक्तरीत्यैव निर्वाह इत्याह । भावेति । तमेवाह । घटादीति । तत्रैव । घटत्वादावेव । तथा सर्वत्र

बोधादाह। भेदेति। अत एवाह। आहार्येति। प्रकारान्तरे तु तदसङ्गतिं स्पष्टैवेति भावः। नन्वाहार्यारोपस्य तत्त्वं न दृष्टमत आह। अनामिति। तथा च क्वचिदनाहार्यं क्वचिदाहार्यं इति न दोषः॥ ४२॥

व्रीहीन् प्रोक्षतीत्यादौ निर्वाहप्रकारः। व्रीहीन्प्रोक्षतीत्यादावपूर्वसाधनीभूतव्यक्तीनामेव तात्पर्यवशाद्व्रीहिपदेन व्रीहित्वेन भानम्। एवं तत्प्रतिनिधिष्वपि व्रीहित्वमारोप्य व्रीहित्वेनैव तात्पर्यवशादपूर्वसाधनीभूततत्प्रतिनिधिव्यक्तीनां भानं न त्वपूर्वसाधनत्वेन भानम्। अत्र सर्वत्र तत्तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोपः। अत एव कचतत्त्वस्यति वदनमित्यादौ कचत्वादिना राहुत्वादिविशिष्टस्य बोधान्न व्रासाद्यन्वयानुपपत्तिः। हरिरप्याह।

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य गम्यते॥
सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः।
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपचर्यते इति॥

गौणमुख्यार्थबोधकः शब्द एक एव। युगपत्सर्वार्थप्रकाशने तु न प्रकरणादिरूपनिमित्तभेदात्। सर्वशक्तेरित्यस्य व्याख्यानमनेकधर्मण इति। गोशब्दो गोत्वजातौ प्रसिद्ध इति तत्र मुख्यः वाहीके त्वप्रसिद्ध्या गौण इति तदर्थः। नन्वेवं शब्दार्थसम्बन्धस्यानित्यत्वं स्यादत आह।

गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते।
अर्थमात्रे विपर्यस्तः शब्दः स्वार्थे व्यवस्थित इति॥

केश्चित् । शब्दार्थसम्बन्धनित्यत्ववादिभिः । निमित्तात् । जाड्यादेः । शब्दस्तु गोत्वमेवाभिधत्ते गौरित्यत्र मुख्यं गोत्वं बाहीके तूपचरितम् । शब्द एव प्रवृत्तिनिमित्तमिति पक्षेऽस्ति। कदाचित् गोत्वजाताव-नुषज्यते कदाचिद्बाहीके इति तन्मते ऽपि प्रसिद्ध्यप्रसिद्धिमूलको गौणमुख्यविभागः । अर्थो ऽत्र विशेष्यभूतः । स्वार्थे प्रवृत्तिनिमित्ते। तदेव शब्दशक्यमित्येकार्थ एव शब्द इति तद्भावः । गौर्बाहीक इत्यादौ लक्षणाफलं तु सादृश्यप्रतीतिः। मुख्यार्थसाक्षात्सम्बन्धमूलारोपान्मुख्यार्थवृत्तिगुणसमानगुणवत्त्वरूपपरम्परासम्बन्धमूलारोपो जघन्य इति गौण्या अतिजघन्यत्वं बोध्यम् ॥ ४३ ॥

[ कुं० टी० ] व्रीहीन्प्रोक्षतीत्यादावपूर्वसाधननीवारेषु व्रीहित्वमारोप्यत इति प्रतिपादयितुमाह । व्रीहीन्प्रोक्षतीति । अयम्भावः । केषां चित्साहचर्येण जातिः शक्त्युपलक्षणमिति हर्युक्तरीत्या व्रीहित्वजात्युपलक्षिता शक्तिरेव क्रियासाधनत्वेनापदिश्यते । एवञ्च जातिक्रिययोरेव विभक्तिप्रापितः श्रौतः सम्बन्धः निराश्रयायाश्च जातेरभावाद्द्रव्यमाक्षिप्यते । तथा च नीवारेषु सदृशत्वाद्व्रीहित्वजातेरनपायात् सिद्धं प्रतिनिधेः श्रौतत्वम् ।एतच्च जातिपक्षे एव सम्भवति । व्यक्तिपक्षे तु साक्षाद्द्रव्यस्यैव क्रियासाधनत्वेन प्रधानत्वात्तत्त्यागे प्रतिनिध्युच्छेद एव स्यादिति । अपूर्वेति । एतेन ईप्सिततमे कर्मणि व्रीहीनिति द्वितीयाविधानात्प्रधानस्य प्रतिनिध्यसम्भव इत्यपास्तम् । अत्र प्रोक्षणादेः प्रधानाङ्गत्वेनादृष्टद्वारा प्रधानापूर्वफलत्वं न्याय्यं न तु व्रीहिफलार्थत्वम् । अत एव कृष्णलेषु वितुषीभावरूपद्वारलोपना-

दत्वाघातनिवृत्तावपि प्रोक्षणम् । व्रीहित्वेनैवेति । तेन व्रीह्यभावे नीवाराणां ग्रहणम् । प्रकृतापूर्वसाधनत्वान्नीवाराणां ग्रहणमिति मतं निराकरोति । न त्वपूर्वेति । अन्यथा यवानामपि प्रोक्षणप्रसङ्गः ।

ननु प्रवृत्तिनिमितारोपे ऽनेकार्थत्वाभावात्संयोगादिना विशेषस्मृतिरिति पूर्वोक्तग्रन्थासङ्गतिरित्यतः प्रथमं तत्रैव सम्मतिं दर्शयति । एकमाहुरिति । सर्वेषामर्थानां गोशब्द एक एव वाचकः । अर्थप्रकरणाभ्यां शब्दान्तरेण योगाद्वा एकमेवार्थं प्रकाशयन्ति न सर्वार्थम् । निमित्तभेदात् प्रसिद्ध्यप्रसिद्धिवशात् । सर्वार्थत्वं भिद्यते नानाविधं भवति । क्वचिद्गौणं क्वचिन्मुख्यम् । यद्यपि गोशब्दः सास्नादिमन्तामिव बाहीकमप्यभिदधाति तथापि बाहीके अप्रसिद्धत्वाद्गौणः ।

इदानीं प्रवृत्तिनिमित्तारोपपक्षे सम्मतिं दर्शयितुमुपक्रमते । नन्वेवमिति। गोशब्दस्य बाहीके आरोपे शब्दार्थसम्बन्धस्यानित्यत्वापत्तिरित्यर्थः । विपर्यस्तम् । भिन्नाधिकरणेष्वारोपितं गोत्वमेव सर्वत्रार्थः तस्यैव तु भेद इत्याह । गौरित्यत्रेति । अर्थो द्विविधः गोत्वादि स्वरूपश्च । तत्राद्यं व्याख्याय द्वितीयमाह । शब्द एवेति । सः । शब्दः । अनुषज्यते । विनियुज्यते । नन्वर्थविपर्यासे नानार्थत्व दुर्वारमत आह । अर्थो ऽत्रेति। तथा च विशेष्यस्य भेदे ऽपि प्रवृत्तिनिमित्तस्य न भेद इति भावः । ननु जडो बाहीक इत्येव प्रयुज्यतां किं गौर्बाहीक इति प्रयोगेणेत्यत आह । लक्षणाफलं त्विति । लाक्षणिकशब्दप्रयोगफलं त्वित्यर्थः । सादृश्यप्रतीतिः । अतिजडत्वप्रतीतिः । मुख्यार्थेति । मुख्यार्थस्य यः साक्षात्सम्बन्धस्तन्मूलकारोपापेक्षयेत्यर्थः । गौण्यामेवेति । न चैवं गौण्या लक्षितलक्षणात्वापत्तिः ।

लक्षितलक्षणाया ग्रन्थकृतैव निराकरिष्यमाणत्वात् । लक्षणयैव शैत्यपावनत्वादीनां प्रतीतेर्न व्यञ्जनावृत्त्यन्तरमिति तार्किकमतं निराकुर्वता प्रकाशकारादीनां सम्मतिं दर्शयति । प्रयोजनं न लक्ष्यमिति । शैत्यपावनत्वादौ शक्यसम्बन्धाभावाल्लक्षणा न सम्भवतीत्यर्थः ॥ ४३ ॥

( का० टी० ) स्वमते ऽन्यत्रापि निर्वाहमाह । व्रीहीनिति । आदिना व्रीहीनवहन्त्यादि । परैरपि तत्रैव लक्षणाङ्गीकारादाह । अपूर्वेति । यथा दध्युपघातकेष्वेव काकत्वारोपो नान्यत्र तद्वदिति भावः । एवमुपात्तापूर्वसाधनव्यक्तिवत्तत् । प्रतीति । व्रीह्यादित्यर्थः अपूर्वसाधनत्वरूपधर्मतौल्यात्तद्वदिति भाव । एवञ्च तत्र सर्वथा न तदावश्यक तदाह । न त्वपूर्वेति । फलप्रदर्शनाय शक्यादित्यत्र दिक्त्वेनोक्तमन्यत्राप्याह । अत्रेति । लक्षणास्थले चेत्यर्थ । फलमाह अत एवेति । विशिष्टे तदारोपादेवेत्यर्थ । आदिना ।

वदनात्कुचमण्डल त्रसति मध्याद्बिभेति नयनम् ।
नयनादधर समुद्विजति—

इत्यस्य परिग्रह । आदिना चमत्कार । एतेन कचत्वादिना बोधे त्रासकरत्वानुपपत्ती राहुत्वादिना बोधे च चमत्कारानुपपत्तिरित्यपास्तम् । कचत्वविशिष्टो राहुरित्यादिबोधेन तदुपपत्ते सिद्धान्ते हरिसम्मतिमप्याह । हरिरपीति । नेद प्रसिद्धनानार्थपरमित्याह । गौणेति । अन्ये । परीक्षका पातञ्जला अनेकार्थे शब्दमेकमेवाहुरित्यन्वय इति भाव । अत एव तत्रैवात्रापि युगपदेवानेकार्थबोधः कुतो नेति शङ्का निराचष्टे । युगपदिति । सार्वार्थ्यशब्दस्तदबोधकत्वपर इत्याह । एकेति । नन्वेव कथ गौणमुख्यविभागो ऽत उक्तम् । सर्वशक्तिरिति । तत्र पौनरुक्त्य परिहरति । सर्वेति । प्रसिद्धिभेदादित्यत्र समाहारद्वन्द्वात्पञ्चमी भेदशब्देन कर्मघञन्तेनाप्रसिद्धिस्तदाह । गोशब्द इति । एव तथा ऽनेकार्थत्वाङ्गीकारे आह । स एव गोत्वेति । गोत्वसम्बन्ध इत्यर्थ वादिभि । पातञ्जलैः । नन्वन्यधर्मस्यान्यत्र कथ सबन्धो ऽत आह । निमित्तादिति । मात्रमवधारण । उत्तरार्थफलितार्थमाह । श

ब्दस्त्विति। अत एव पूर्वं गोजानावित्युक्तम् । एवमपि गौणमुख्यत्वमाह । गौरिति । गौशब्दस्य सञ्ज्ञाशब्दत्वमिति पक्षे आह । शब्द एवेति। अनेन शङ्कासमाहिता । अत एव रूपके उपमाव्यङ्ग्येत्यालङ्कारिकसमय इति दीक्षित । नन्वत्र मते पूर्वमेवाभेदप्रतीत्या फलाभावो ऽत आह । गोरिति । तत्कृत एव चमत्कार इति भाव । नन्वेवमप्यत्र पक्षे आरोपतोल्येन जघन्यशुद्धलक्षणातो गौण्या अतिजघन्यत्व न सिध्येदत आह। मुख्यार्थेति । जघन्य । अतिजघन्य. ॥ ४३ ॥

व्यञ्जनाया अवतरणबीजम्।

गौण्यामेव च परम्परासम्बन्धो लक्षणाबीजं नान्यत्र । अत एव प्रयोजनं न लक्ष्य सम्बन्धाभावादिति प्रकाशादावुक्तम् । एवञ्च गवादिशब्दानां व्यञ्जनया जाड्यादिरूपगुणबोधकत्वाद्गुणवचनत्वे ऽपि ततः प्राक् गुणवचनत्वाभावात् प्रकारे गुणवचनस्येति न द्वित्वमिति न तत्सूत्रस्थभाष्यविरोधः । गङ्गायां घोष इत्यादौ गङ्गादिभिर्घोषस्यात्यन्तसामीप्ये गङ्गादौ तीरधर्माधारत्वारोपो गौतमोक्तः । गङ्गादिना घोषस्य व्यवहितसामीप्ये तीरे गङ्गात्वारोपः पतञ्जल्युक्तः । आद्यो ऽपि स्वरितेनाधिकार इति सूत्रे पतञ्जल्युक्तः । यत्र तु प्रकृतिप्रत्यययोर्लोपानुशासनं तत्र इयान् गर्गा इत्यादौ प्रकृतिगर्भे ऽर्थे प्रत्ययस्य गर्गापत्यरूपे ऽर्थे प्रकृतेः साधुत्वं लोपानुशासनबलादिति वदन्ति । द्विरेफपदं तु रूढिशक्त्या भ्रमरबोधकम् । अवयवार्थप्रतीतिस्तु नास्त्येव रथन्तरादिपदवत् । यद्वा पदनिष्ठरेफद्वयस्यार्थे आरोपात्तत्सम्बन्धित्वेनैव भ्रमरबोधः । अत एव भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु

पाठः। बाधप्रतिसन्धानं विनैव द्विरेफपदाद्भ्रमरबोधे न लक्षणेत्ययुक्तम्।

किञ्च द्विरेफपदेन रेफद्वयसम्बन्धित्वेन भ्रमरपदोपस्थितावपि भ्रमरेति शक्ततावच्छेदकानुपूर्वीरूपेणोपस्थित्यभावाद्बोधानापत्तिः। न च द्विरफपदाल्लक्षणया तदुपस्थितिः, अत एवात्र लक्षितलक्षणेति व्यवहारः, प्रत्ययार्थान्वये च प्रकृतिप्रयोज्योपस्थितिः कारणमिति वाच्यम्। एवमपि तस्यानुच्चारितत्वेनोच्चारितस्यैव च बोधकत्वेन ततो बोधानापत्तेः। उच्चारितस्यैव बोधकत्वमित्यणुदित्सूत्रे भाष्ये स्पष्टम्। पुस्तकदर्शनस्थले ऽपि मानसजपवत् सूक्ष्मतरताल्वादिव्यापारेण सूक्ष्मतरस्योच्चारणमस्त्येवेति न दोषः। जपे मन्त्राणां त्रैस्वर्येणैव ज्ञानस्यावश्यकतया तस्य च तत्तत्स्थानेषूच्चदेशाद्युपलभ्यमानत्वरूपतया जपे सूक्ष्ममुच्चारणमित्युच्यते। तथा च भारद्वाजः।

सूतके मृतके कुर्यात्प्राणायाममन्त्रकम्।
तथा मार्जनमन्त्रो ऽस्तु मनसोच्चार्यमार्जयेत्॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेदिति।

किञ्च मानसजपलक्षणे।

धिया यदक्षरश्रेणिवर्णस्वरपदात्मिकाम्।
उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जप—

इत्यस्मिन्नुच्चरेदित्युक्तम्। अत एव ऋगित्युक्ते तात्पर्यवशाद्विशिष्टसन्निवेशाया अग्निमीले इत्यादिकायास्ततो बोधे ऽपि ततो नार्थप्रत्ययः। गामानयेत्याहेत्यादावनुकरणेनानुकार्यप्रतीतावपि न ततो

ऽर्थबोध इत्यनुभवः । किञ्च अनीतानागतानां पदानां वृत्त्यनाश्रयतया वृत्त्याश्रयत्वेन ज्ञानस्य दुरुपपादत्वात् । पदेष्वतीतत्वादि चोच्चारणक्रियानाशादिना नष्टत्वम् । अनुत्पन्नत्वं च नष्टाभिव्यक्तिकत्वमनुत्पन्नाभिव्यक्तिकत्वं वा । यथा च घ्राणेन्द्रियगृहीतस्यैव गन्धस्य सुखादिजनकत्वं न स्मृतस्य, यथा च महतः पटहादिशब्दस्य कर्णपीडाजनकत्वं श्रुतस्यैव न स्मृतस्य, तथा पदानां बोधजनकत्वं श्रुतानामेव न यथाकथञ्चित्प्रतीतानाम् । यथा तत्र सुखादिजनकतावच्छेदकवैजात्येन तेषां नान्यतो ग्रहस्तथा प्रकृते ऽपि । अत एव परोक्षे लिडिति सूत्रे परोक्षे इति न धातोर्विशेषणं शब्दरूपस्य तस्य परोक्षत्वासम्भवादिति भाष्यकैयटयोरुक्तम् । न च स्वबोध्यपदवाच्यत्वसम्बन्धेन द्विरेफपदं भ्रमरं बोधयतीति युक्तम् । अनुपपत्तिप्रतिसन्धानं विनापि बोधात् । गौणातिरिक्तस्थले साक्षात्सम्बन्धस्यैव लक्षणाबीजत्वादिति दिक् ॥ ४४ ॥

( कुं० टी० ) ननु गवादिपदानां व्यञ्जनया जाड्यादिपरत्वे प्रकारे गुणवचनस्येति द्वित्वापत्तिः । प्रकारः सादृश्यम् । सादृश्ये वर्तमानः सन् यो गुणवचन इत्यर्थादित्याशङ्क्याह । प्राग्गुणवचनत्वेति । अयम्भावः । गुणवचनः सन् यः प्रकारे वर्तते तस्य द्वित्वमित्यर्थः । यथा पटुरित्यस्य पटुसदृश इत्यर्थः । इत्येवं रीत्यैव भाष्यशङ्कोत्तरे योज्येते न तु गोशब्दस्य सादृश्यलक्षकत्वेन गुणवचनत्वं सादृश्यनिमित्तकाभेदोपचाराद्गोपशब्दो गोप्यां वर्तत इति पुंयोगादिति सूत्रस्थभाष्यविरोधा-

दिति भावः । गङ्गादिभिः । प्रवाहादिभिः । सामीप्य इति । सतीति शेषः । गौतमोक्त इति । सहचरणस्थानेत्यादिना गौतमेनापि धर्मारोप उक्त इत्यर्थः । पतञ्जल्युक्त इति । चतुर्भिः प्रकारैरित्युपक्रम्य सामीप्याद्गङ्गाशब्दो वर्तत इति प्रागुक्तत्वात् । आद्यो ऽपीति। साधकतममिति तमप् ग्रहणेन गौणाधारस्यापि ग्रहणज्ञापनाद्यत्रात्यन्तसामीप्यात्प्रवाहे घोषाधिकरणत्वारोपस्तत्र सप्तमी सिद्धेति भाष्यम् । ननु गर्गा इत्यादौ गर्गापत्ये गर्गशब्दस्य कथं साधुत्वं पूर्वोक्तप्रकाराणामभावादत आह । यत्र त्विति । शास्त्रे क्वचित्प्रकृत्यर्थः प्रत्ययेनाभिधीयत इति हर्युक्तेः । एव नक्षत्रे च लुपीति सूत्रमपि उक्ते ऽर्थे मानम् । रथन्तरं साम अभित्वा शूर नोनुम इत्यस्यां गीतम् । लक्षणेत्ययुक्तमिति । बाधप्रतिसन्धानं विनापि बोधाल्लक्षणा न युक्तेत्यर्थः । तार्किकैकदेशिनो लक्षितलक्षणा वृत्त्यन्तरमित्याहुः । तथा हि द्विरेफपदे रेफपदस्य रेफद्वयसम्बन्धिनि भ्रमरपदे लक्षणा भ्रमरपदस्य च भ्रमरे इति तान्निराकरोति । लक्षितलक्षणेति । ननु द्विरेफपदलक्षितेन भ्रमरपदेन शक्त्यैव भ्रमरबोधाल्लक्षणाव्यर्थेति चेन्न । द्विरेफपदवृत्त्यभावे प्रत्ययानां प्रकृत्यार्थान्वितेति न्यायविरोधापत्तेः । एवञ्च द्विरेफपदस्यैव लक्षितलक्षणावृत्तिः । तथा च लक्षितस्य लक्षणेति शब्दार्थः । परे तु शक्यसम्बन्ध एव लक्षणा न तु शक्यस्य साक्षात्सम्बन्धो लक्षणा गौरवात् । तथा च परम्परासम्बन्धेन भ्रमरोपस्थापकत्वाद्द्विरेफपदस्य भ्रमरे वृत्तिः । तथा च लक्षितपदघटितलक्षणा लक्षितलक्षणेत्यर्थ इत्याहुः । ननु प्रत्ययानां प्रकृत्यर्थान्वितेति न्यायविरोधो ऽत आह । प्रकृतिप्रयोज्येति । जप इति । यज्ञकर्मण्यजपन्यूङ्खसामस्वित्येकश्रुतिनिषेधात् ।

वस्तुतस्तु अदृष्टार्थशब्दोच्चारणमात्रं जप इति यज्ञविषये पारिभाषिको भिन्न एव जपशब्दः। त्रैस्वर्येणेति। यथाप्राप्तैस्त्रिभिरपि स्वरैरित्यर्थः। मनसोच्चार्येति। एतेन मानसमनुसन्धानमित्यर्थो निराकृतः। यद्यपि।

जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा।
वाचिकोपांशु उच्चैश्च द्विविधः परिकीर्तितः॥
मानसाच्च जपाद्ध्यानं सहस्रगुणमुच्यते॥

इति याज्ञवल्क्योक्त्या उच्चारणाभाव एव लभ्यते तथापि मानसे ऽपि बुद्धिकल्पितमुच्चारणमस्त्येवेति भावः।

न ततो ऽर्थबोध इति। अनुकार्यस्यानुच्चारितत्वान्नार्थबोधकत्वमित्यर्थः। द्विरेफपदेन स्मृतं भ्रमरमर्थं बोधयतीत्यत्र दोषान्तरमाह। किञ्चेति। अतीतानागतानामिति। तेषामेव हि स्मृतत्वमिति भावः। तस्मात्तच्छ्रुतमेव बोधकमिति भावः। ननु पदानां नित्यत्वात्कथमतीतत्वाद्युच्यत इत्यत आह। अतीतत्वादि चेति। नाशादिनेति। उच्चारणक्रियानाशादिना अतीतत्वादिव्यवहार इत्यर्थः। अथवा अभिव्यक्तिनाशादिना नष्टत्वादिव्यवहार इत्याह। नष्टत्वमित्यादिना। नष्टाभिव्यक्तिकत्वमित्यारभ्य पक्षान्तरमित्याहुः। वैजात्येन। कारणतावच्छेदकजातिशून्येन। तेषाम्। सुखादीनाम्। नान्यत इति। यथा स्मृतगन्धादेर्न सुखादिज्ञानं सुखादिजनकतावच्छेदकस्य भिन्नत्वादेवं भ्रमरपदे ऽपीत्यर्थः। अत एव। उच्चारितस्यैव बोधकत्वादेव। अनुच्चारितस्यापि बोधकत्वे तु धात्वर्थस्य परोक्षत्वसम्भवाद्भाष्यासङ्गतिरिति भावः। तस्य। भूतानद्यतनक्रियावृत्तेर्धातोः॥ ४४॥

(क० टी०) नन्वेव शुद्धाभेदत्वेन केषाञ्चित्संमतलक्षितलक्षणा-

याप्यतिजघन्यत्वापतिस्तत्रापि परम्परासम्बन्धादत आह । गौण्यामेवेति । चो ह्यर्थे । अत्र मानमाह । अत एवेति । शुद्धायां तदसत्त्वादेवेत्यर्थः । अन्यथा तदसङ्गति स्पष्टैवेत्यन्यत्र प्रपञ्च । नन्वेवमपि प्रकारे गुणेति सूत्रस्थभाष्यविरोधस्तत्र हि गुणेति किं अग्निर्माणवकः सर्वेऽपि शब्दा प्रकारे वर्तमाना गुणवचनाः सम्पद्यन्ते तेन कृते ऽपि तस्मिन्प्राप्नोत्येव । एव तर्हि गुणवचनग्रहणसामर्थ्यात्प्रकारे वृत्ते प्राग्यो गुणवचनस्तस्य भविष्यतीत्युक्तम् । तेन हि सादृश्य लक्ष्यमिति स्पष्टमेव लभ्यत इति चेन्न । गुणेत्यस्याभावे सादृश्यस्य मुख्यतया प्रकारवृत्तित्वादतिव्याप्तिर्दत्त्वा तत एव गुणवत्त्वेनापि वारणमुक्त्वा प्रकारव्यञ्जकत्वात्प्राग्यो गुणवचन इत्युत्तर दत्तमिति तदाशयेनादोषात् । लक्षणापरकैयटव्याख्यानन्तु न युक्तमन्यथा पुयोगादिति सूत्रस्थभाष्यविरोधो ऽपीति स्पष्टमन्यत्र । तदेतदभिप्रेत्याह । एवञ्चेति । पुयोगादिति सूत्रस्थस्यान्यसम्मतत्वे सोपपत्तिकत्वे आवश्यकत्वे ऽदुष्टत्वे चेत्यर्थ । धर्मरूप सादृश्यमिति मतेनाह । जाड्येति । अतिरिक्तसादृश्यमिति मतेनाह । आदीति । तत । व्यञ्जनात । नन्वेवमप्यारोपांशे पतञ्जलिगौतमयोर्विरोध एवात आह । गङ्गायामिति । एवञ्चोभयोरुभयमपीष्ट निमित्तभेदेनेति विरोध इति भाव । इदमेव ध्वनयन्नस्यावश्यकत्वमाह । आद्यो ऽपीति । तत्र हि यथाश्रुतसूत्रस्याफलत्वमुक्त्वाधिक कार्यमित्यर्थकत्वमुक्त्वा तदुदाहरणावसरे गौणमुख्याधारौ प्रदर्शितौ तिलषु तैलं दध्नि सर्पिः गङ्गायां गाव कूपे गर्गकुलमिति । क्वचित्तु भेदेन सम्बन्धेन बोधे ऽपि साधुत्वबोधकशास्त्रसत्त्वेनासाधुत्वाप्रसक्त्या लक्षणाया नावसर इति तत्र शक्तिरेव । एवञ्च तत्र लक्षणेति मतमश्रद्धेयम् । तदाह । त्विति । मतान्तरयोः खण्डयिष्यमाणत्वेन नान्यत्रेत्युक्त प्रपञ्चयन् सिद्धान्तमाह । द्विरेफेति । न योगरूढमित्याह । अवयवेति । तत्र तस्या सत्त्वात्साधुत्वार्थं व्युत्पादनं त्वसताप्यवयवार्थेन तदाह । रथन्तरेति । भ्रमरत्वेनैव बोध इति भावः । यथाकथञ्चिदवयवार्थप्रतीतिसम्भवे तस्यागानौचित्याद्योगरूढिमाह । यद्वेति । एवो ऽप्यर्थे । तेन रूढ्यर्थतावच्छेदकभ्रमरत्वसमुच्चय । तथा च पूर्वमते जह-

त्स्वार्थात्र मते पङ्कजादितुल्यत्वेनाजहत्स्वार्था। शुद्धयौगिकत्व तु नकरादावतिप्रसङ्गात्केवलयौगिकस्य तत्पर्यायेषु पाठासङ्गतेश्च । यदि तु कोशप्रामाण्यात्तत्रैवारोपो नान्यत्रेत्युच्यते तदा शुद्धयौगिकमेवास्तु तेनैव तद्बोधो ऽस्तु। यद्वा तदेवोभयार्थताव-च्छेदकमस्तु तदेतत् ध्वनयन्नाह । अत एवेति । सर्वथा रूढ्यङ्गीकारादेवेत्यर्थ । न हि लाक्षणिकानां कोशेषु पाठ. पर्यायेषु क्वापि दृश्यत इति भाव.। ननु द्वितीयपक्षे आरोप-सत्त्वेन लक्षणा कुतो नात आह । बोधेति । नन्वेव पदे एव यौगिकमिदमास्तां तेनोपस्थितेन तद्बोध इति किमर्थ तत्रापि योगरूढिरत आह । किञ्चेति । कोशप्रामाण्यादिति भावः । यत्तु जीर्णनैयायिका लक्षितलक्षणाख्यो ऽपि भिन्नो ऽस्या भेद। इद तल्लक्ष्य लक्षितेन पदेन लक्षणा बोध इति तदर्थ । द्विरेफपद च बहुव्रीहिणा रेफद्वयसम्बन्धिन्यर्थे शक्तम्। तत्त्व च यद्यपि क्रूरादिपदे ऽप्यस्ति तथापि रूढ्या भ्रमरपद-मेव तत्त्वेन बोधयति । तत्र भ्रमरत्वजातिविशिष्टशक्ततावच्छेद-कभ्रमरत्वानुपूर्व्यारोपेणोपस्थित्यर्थ द्विरेफपदस्य लक्षणा। एव लक्षणयोपस्थित भ्रमरपद स्वार्थ बोधयतीति न किञ्चित्युक्तदोष इति तत् खण्डयति। न चेति। तदुपेति। भ्रमरपदोपेत्यर्थ । तत्र शक्तिरपि न कल्प्येति भाव । नन्वेव द्विरेफं पश्येत्यादौ प्रत्ययार्थान्वयस्तत्र न स्यात्तत्र तदन्वये प्रकृतिजन्योपस्थितेः कारणत्वादत आह। प्रत्ययेति। च तु अपिना तज्जन्योपस्थितिसमु-च्चयः। तथा च तत्र जन्यत्व साक्षात्परम्परासाधारणं तत्र निविष्ट-मिति भाव.। एवमपि। उक्तरीत्या निर्वाहेणोक्तदोषाभावे ऽपि। तत्र मानमाह । उच्चारितेति। प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशादि-त्यादिनेति भाव । एतेन तत्र तदर्थ लक्षणापि मास्तु अनतिप्रस-ङ्गायास्वीक्रियमाणरूढिरेवानुपूर्वीरूपेण न तु तद्रूपेणाति रूढ्यर्थ तावच्छेदिका सैवेतीतो ऽपि लाघवमित्यप्यपास्त तस्मात्तत्त्वेन बोधानापत्ते.। पुस्तकदर्शनस्थले केनचिदुक्त व्यभिचारमुद्धरति। पुस्तकेति। अस्या दृष्टचरत्वनिरासायाह। मानसेति। स्वाञ्चेति। स्वमात्रश्राव्योच्चारणमित्यर्थ ।अत एव तत्त्वम्। दृष्टान्ते एव तद्-सिद्धिरिति शङ्कानिरासाय तत्र तदुपपादयति। जपे इत्यादि-

नोक्तमित्यन्तेन । जपे । जपत्वावच्छिन्ने । तस्योपांशुप्रयोगरूपत्वात् । णैवेति । अजपेत्त्याद्युक्तेरिति भावः । तस्य च । तेषां तथा ज्ञानस्य च । वाह्यजपाशयेनाह । सूक्ष्ममिति । एव च मानसजपे ऽपि सूक्ष्मतर तदावश्यकमित्यर्थात्सिद्धम् । तदाह । इदमेवेति । सूक्ष्मतर-मेवेत्यर्थ । सूनके । जननाशौचे मृतके । शान्ताशौचे । तथा किञ्च सम्यक् परश्रव्यतया । नन्वेवमपि तस्य जपत्वे किं मानमत आह । किञ्चेति । इद तन्त्रसारे गौतमीयत्वेनोक्त जपः स्या-दक्षरावृत्तिर्मानसोपांशुवाचकैरित्यादि । जिह्वोष्ठौ चालयेत् किञ्चिद्दे-वतागत मानस किञ्चिच्छ्रवणयोग्य. स्यादुपांशु. स जप स्मृ-तः । मन्त्रमुच्चारयेद्वाचा वाचिकः स जप स्मृत इत्यन्त. । धिया । मनसा । अर्थज्ञानस्य कर्मणि सर्वत्र कारणत्वात्तज्ज्ञान-पूर्वकोच्चारणे एवादृष्टमित्याह । अर्थस्येति । तदुक्त नार-सिंहे ऽपि ।

वाचिकश्च उपांशुश्च मानसश्च त्रिधा जप. ।
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तर. ॥
यदुच्चनीचस्वरितै. स्पष्टशब्दवदक्षरै ।
मन्त्रमुच्चारयेद्यक्त जपयज्ञ स वाचिक. ॥

स्पष्टत्व चात्मान प्रत्येव पर प्रति स्पष्टस्य नोच्चैर्जप्य बुधः कुर्यात्सावित्र्यास्तु विशेषत इति शब्देन निषेधात् ।

शनैरुच्चारयेन्मत्रमीषदोष्ठौ च चालयेत् ।
किञ्चिच्छब्द स्वय विद्यादुपांशु स जपः स्मृत. ॥
किञ्चिदिति तथा तद्ध्वनिं जानीयादिति ।
अपि पादाक्षर श्रेण्योर्वर्णाद्वर्ण पदात्पदम् ।
शब्दार्थचिन्तनाभ्यास स उक्तो मानसो जप. ॥

इति भाष्ये । उक्तार्थे ऽनुभवमपि प्रमाणयति । अत एवेति । उच्चारितस्यैव बोधकत्वादेवेत्यर्थ. । अनुभवे त्वयो ऽस्य ततो ग्नि-मित्यादितः । द्वितीयानुभवमाह । गामिति । नैयायिकमते दोषा-न्तरमाह । किञ्चेति । वृत्त्यनेति । आश्रयस्यैवाभावादिति भाव. । पदज्ञानस्य कारणत्वस्य परैरपि स्वीकारात्प्रागुक्तकार्यकारणभा-वानुरोधेनाह । वृत्त्याश्रयेति । अन्यथातिप्रसङ्गापत्तिस्तदवस्थै-वेति भाव. । ननु शब्दनित्यतावादिनामिद कथमत आह । पदे-

ष्विति। परम्परया तत्त्वमिति भाव.। ततो लाघवादाह। न-ष्टेति। भाष्याद्युक्तं दृष्टान्तपूर्वकमुपपादयति। यथा चेति। आदिना दु.ख.। एवव्यवच्छेद्यमाह। नेति। एवमग्रे ऽपि। प्रकृते न त-थेति शङ्कानिरासाय प्रकृतविषयमेव दृष्टान्तमाह। यथा च म-हत इति। प्रकृतसङ्गहायाह। यथेति। नन्वेव सामान्यकारण-मात्रव्यभिचारो ऽत आह। यथा तत्रेति। गन्धादावित्यर्थः। तेषाम्। गन्धादीनाम्। उक्तभाष्योक्तार्थे भाष्यान्तरमपि मानमाह। अत एवेति। उच्चारितस्यैव बोधकत्वादेवेत्यर्थः। तत्र हि परोक्षे काले इति न वै कालाधिकारो ऽस्तीति खण्डय धातुरिति वर्तते धातौ परोक्षे इत्यस्य खण्डनायोक्त धातुर्वै शब्द न च शब्दस्य प्रत्यक्षपरोक्षताया सम्भवोस्तीति भाष्ये उक्तम्। तयोर्वि-शेषणतायामिति। तदर्थं प्रत्ययप्रकृतिशब्दस्योच्चार्यमाणस्यानुभूत-त्वात्परोक्षत्वासम्भवस्ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य वि-विशेषण न सम्भवति एव परोक्षत्वमप्यसम्भवादविशेषणमित्यर्थ इति कैयटः। यत्तु गुरव स्वबोध्यपदबोध्यत्वसम्बन्धेन द्विरेफपद-मेव भ्रमरत्वजातिविशिष्टमुपस्थापयतीति लक्षणैवैषा रूढिमती न तु लक्षितलक्षणाख्यस्तद्भेदो ऽस्तीति तत्खण्डयति। न चेति। पदम्। पदमेव। अत एव प्रयोजन लक्ष्यसम्बन्धाभावादिति प्रकाशादावुक्तम्।

लक्ष्य न मुख्य नाप्यत्र न च शब्द स्खलद्गति।
एवमप्यनवस्थास्याद्या मूलक्षयकारिणी॥
प्रयोजनेन सहित लक्षणीय न युज्यते।
ज्ञानस्य विषयो ह्यन्य' फलमन्यदुदाहृतम्॥
विशिष्टे लक्षणा नैव विशेषाः स्युस्तु लक्षिते।

इत्यन्तेन। तस्माच्छक्तिविशेष एव लक्षणा न त्वतिरिक्ता सेति। तथा वदन्तो निखिलतान्त्रिका उक्तमहाभाष्याद्यनवधाननिबन्धनत्वे-नायुक्ता एवेति बोध्यम्। तदाह। इति दिगिति॥ ४४॥

व्यञ्जनानि-रूपणम्। **मुख्यार्थबोधग्रहनिरपेक्षबोधजनको मुख्या-र्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थवि-षयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कार-**

विशेषो व्यञ्जना । अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता । द्योतकत्वं च क्वचित्समभिव्याहृतपदीयशक्तिव्यञ्जकत्वमिति वैयाकरणानामप्येतत्स्वीकार आवश्यकः । एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र तथैवानुभवात् । वक्त्रादिवैशिष्ट्यादिज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः ॥ ४५ ॥

( कु० टी० ) लक्षणयैव व्यञ्जना गतार्थेति तार्किकमतं निराकर्तुमाह । मुख्यार्थेति । निश्शेषच्युतचन्दनं स्तनतटमित्यादौ मुख्यार्थबाधाभावे ऽपि अधमपदार्थपर्यालोचनया व्यङ्ग्यार्थप्रतीतेर्व्यञ्जना वृत्त्यन्तरमेवेति भावः । सम्बद्धेति । मुख्यार्थसम्बन्धाभावाद्रूढ्यादेरभावाच्च न लक्षणेत्यर्थः । वक्त्रादीति । वक्त्रादीना वैशिष्ट्यस्य ज्ञानेन प्रतिभया च उद्बुद्धः संस्कार इत्यर्थः । व्यञ्जकत्वलक्षकत्वयोर्वैलक्षण्यं दर्शयति । अत एवेति । निपानातामिति । तेषां मुख्यार्थाभावेन लक्षणाया असम्भवात् व्यञ्जकतारूपा द्योतकतैवेत्यर्थः । स्फोटस्येति । लक्षणायास्तु तत्र न सम्भवः । क्वचिदिति । यथा प्रजयतीत्यत्र प्रकृष्टजयबोधकत्वम् । प्रादेशं विलिखतीत्यत्र प्रादेशं विनिर्मायेत्यर्थेन क्रियाक्षेपकत्वादुक्तम् क्वचिदिति । वैयाकरणानामिति । न केवलं कवीनामेव किन्तु वैयाकरणनामपि व्यञ्जना आवश्यकी यतो व्यञ्जकत्वमेव द्योतकत्वमित्यर्थः । लक्षणाव्यञ्जनयोर्वैलक्षण्यान्तरमपि दर्शयति । एषा चेति । लक्षणा पदनिष्ठा व्यञ्जना तु एकदेशादिनिष्ठापीत्यर्थः ॥ ४५ ॥

( कु० टी० ) अथ व्यञ्जनां निरूपयति । मुख्यार्थेति । क्वचित्तु सम्बन्धग्रहापेक्षासत्त्वात्तन्निरपेक्षत्वमात्रं विवक्षितं नोक्तः । तच्च बोधविशेषणम् । तदेवाह । मुख्यार्थेति । एतदुभयसाधारणः प्रसिद्धाप्रसिद्धान्यतरो यो ऽर्थस्तद्विषयक इत्यर्थः । वक्त्रादीति ।

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥
यो ऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।

इति प्रकाशादय । वक्ता कविस्तन्निबद्धश्च बोद्धव्यः प्रतिपादनीयो जनः । अन्तर्भावितण्यर्थत्वात् । अतो न वाच्येनाभेद । काकुः । शोकभीत्यादिभिर्ध्वनेर्विकारः उच्चारयितुः शोकाद्यनुमापको जातिविशेष । वाक्यवाच्याभ्यां सहितो ऽन्यसन्निधिरिति समासेन निमित्तत्रयम् । अन्यो ऽत्र वक्तृबोद्धव्यभिन्नः । प्रस्ताव प्रकरणम् । देशो विजनादिः । कालो वसन्तादिः । आदिना चेष्टालीलादिहावपरिग्रहः । वैशिष्ट्यं वैलक्षण्यम् । तच्च वक्त्रादिषु प्रत्येकं सम्बध्यते । पञ्चम्यर्थः सहकारिरूपहेतुत्वम् । तच्च तदभावे व्यञ्जनानुदयाद्बोध्यम् । प्रतिभत्यनेनेदं प्रतिपादितं नवनवोन्मेषशालिनी बुद्धिः प्रतिभा । तदुक्तम् ।

प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेति ।

नवनवोन्मेषो जन्मान्तरीयतद्बीजनकत्वज्ञानजन्यसंस्कारोद्बोधः । वक्त्रादिवैशिष्ट्यसहकारेण तज्जानिका च बुद्धिः प्रतिभेति फलितम् । या वामनेत्युच्यते तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वे ऽपि व्यङ्ग्यप्रतीतिरिति । एवञ्च शक्तिरतज्जन्मगृहीतैवार्थबोधिका व्यञ्जना तु जन्मान्तरगृहीतापीत्यपि शक्तेरस्याभेदकत्वम् । इदमेवाभिप्रेत्य व्यञ्जना स्वरूपसती हेतुरिति प्रवादः । अर्थस्य । त्रिविधस्य । अत्र तु कस्य चिदेव अन्यो ऽर्थो वाच्यलक्ष्यभिन्नः । व्यक्तिर्व्यञ्जना करणव्युत्पत्तेः । एवेन शक्तिलक्षणा निरासः सङ्केताद्यभावादिति तदर्थः । प्रतिभादीत्यादिना निपुणतादि । कचित्तद्रहितपाठ एव । अत्रेदं बोध्यम् । व्यञ्जनासामान्यलक्षणं अर्थविषयकः प्रतिभाद्बुद्धः संस्कारविशेष इत्येव अनतिप्रसक्तत्वात् । दीक्षिताद्युक्ताद्यलक्षणामते ऽनतिप्रसङ्गाय मुख्यार्थेति । मध्यमं तु स्वरूपकीर्तनम् ।

तृतीयं तु सहकारि। एवञ्च मियन्त्रितार्थविषयकधी-जनकत्व शब्दव्यञ्जना। वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वमर्थव्यञ्जना। अर्थस्येत्यनेन शब्दव्यञ्जनानिरास। एतेषां न प्रत्येकमेव व्यञ्जकत्व किन्तु मिलितानामपीति। अत एव। व्यञ्जनाया अङ्गीकारादेव। स्फोटस्येति। अनेकव्यक्तीत्यादिनेति भावः। ननु तत्रोपयोगे ऽपि द्योतकत्वस्यान्यादृशत्वान्न तत्रोपयोगो ऽत आह। द्योतकत्वं चेति। अन्यादृशस्याप्यत्र वक्ष्यमाणत्वादाह। क्वचिदिति। प्रजयतीत्यादावित्यर्थः। अत एव पूर्वं प्राकृतस्योल्लेखः। अत एव केवलानां तेषां प्रयोगो ऽसाधु। उपसर्गन्नाह। इति वैशेति। अपिना नैयायिकादिसमुच्चय। तैरपि केषां चित्त्वाङ्गीकारादिति भाव। नैषा पूर्ववत् शब्दप्रवृत्तिरेवेत्याह। एषा चेति। शब्दो वाक्यैकदेशः प्रकृतिप्रत्ययादि। रचना आकृति। आदिना लीलादिहावा। अनतिप्रसङ्गादाह। वक्त्रादीति। वैशिष्ट्यज्ञान चेति पाठ। चेति प्रतिभासमुच्चयः। यत्त्वर्थस्य न व्यञ्जकत्व किन्तु शब्दस्यास्यास्तन्मात्रवृत्तित्वादिति तन्न।

रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम्।
रसाकुला छादयते दक्षिण नयनं हरेः॥

इत्यादौ हरिपदेन दक्षिणनेत्रस्य सूर्यात्मकत्वं तत्सङ्कोचेन सूर्यास्तस्तेन पद्मसङ्कोचस्तेन पितामहस्य गमन तेनाप्रतिबद्ध रतिविलसितमिति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थस्यापि व्यञ्जकत्वावश्यकत्वात्।

पश्यात्र नलिनीपत्रे बलाका दृश्यते ऽचला।
रम्ये मारकते पात्रे शुक्तिरेव च निर्मला॥

इत्यत्रापि वक्तृतात्पर्यविषयीभूतवाच्यार्थबाधाभावे ऽपि तज्ज्ञानाभावे ऽपि निश्चलत्वेन शुक्त्युपमया चास्तत्व तेन तस्य निर्जनत्व तेन तदेवावयोः सङ्केतस्थानमित्यादिक्रमेण तत्तदर्थव्यङ्ग्यप्रतीतेर्मुख्यार्थबाधज्ञानसत्त्वे तदप्रतीतेश्च। अत एवाद्य विशेषण पदस्य च तत्तत्स्वार्थबोधने उपरतत्वात् पुन पुनरनुसन्धाने गौरव तदननुभवात्। गतो ऽस्तमर्क इत्यादेः शिष्येण सन्ध्यावन्दनादेः कर्तव्यस्याशयेन गुरुं प्रति प्रयुक्ताद्वक्तृतात्पर्याभावे ऽपि

प्रातिवेश्यादीनामभिसरणोपक्रमादिबोधस्य वाच्यार्थधीपूर्वकस्य वाच्यार्थबाधज्ञाने ऽजायमानस्य लक्षणयापपादयितुमशक्यत्वाच्च । यत्तु गतो ऽस्तमर्क इत्यादौ न व्यञ्जना एकसम्बन्धिदर्शनादपरसम्बन्धिस्मरणवदुपपत्तेरिति तन्न । गतो ऽस्तमर्क इत्यादिश्रवणोत्तरं सन्ध्यावन्दनकर्तव्यत्वं मया स्मृतमित्यनुव्यवसायाभावात् ततानुल्लेखात् इदं पदमेतदर्थस्य न वाचकं नापि लक्षकं नापि स्मारकमपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेणातिरिक्तत्तत्सिद्धेः । असम्बद्धस्यापि व्यङ्ग्यत्वाच्च । एतेन तदर्थानां वक्त्रादिवैशिष्ट्यज्ञानप्रतिभासहकृतमनसैव विशिष्टधीसम्भवात् चमत्कारं प्रति शाब्दस्यैव मानसस्यापि चेष्टानुरोधेन हेतुतायाः क्लृप्तत्वाच्च व्यञ्जनासत्त्वे न मानम् । प्रतिभा च तत्पदार्थविषयसंस्कारोद्बोधको बुद्धिविशेष इत्यपास्तम् । व्यङ्ग्योऽर्थो ऽनुमेय इति त्वयुक्तमेव । विरुद्धानैकान्तिकेभ्यो व्याप्तिपक्षधर्मतादिनिर्णयाभावे ऽपि व्यङ्ग्यार्थप्रतीतेः । किञ्च सिद्धिसत्त्वे ऽपि व्यङ्ग्यार्थबोधदर्शनेन तत्प्रतिबध्यतावच्छेदककोटौ तद्भेदनिवेशे ऽतिगौरवापत्त्या तज्जन्यबोधस्यातिरिक्तत्वे एव लाघवात् । अन्यथा शब्दप्रमाण्योच्छेदापत्तेरिति दिक् । अनया कटाक्षेणाभिलापो व्यञ्जित इति सर्वजनप्रसिद्धेरस्यां चेष्टावृत्तित्वमप्यावश्यकम् । बोधकत्वस्य चेष्टायां सत्त्वे ऽपि तन्निष्ठबोधकत्वं न शक्तिश्चेष्टा शक्तिरिति प्रामाणिकव्यवहाराभावात् । किन्तु तज्जन्यबोधे तज्ज्ञानस्य कारणत्वं बोध्यम् । यत्तु तत्तद्वाचकशब्दज्ञानद्वारा चेष्टया बोध इति तन्न । चेष्टया जडमूकादिव्यवहारानापत्तेः । तस्यापि जन्मान्तरीणशब्दस्मरणमित्यन्ये इति दिक् । तदाह । इत्यन्यत्रेति । गुरुमञ्जूषादावित्यर्थः । इति व्यञ्जनानिरूपणम् ॥ ४५ ॥

शब्दस्वरूपनिरूपणे शङ्का । **ननु को ऽसौ शक्त्याश्रयः शब्दः । न च वर्णाः प्रत्येकम् । तथा सति द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः । नापि संहताः । उच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात् । उत्पत्तेरभिव्यक्तेर्वा क्षणस्थायित्वात् ।**

क्षणशब्देन तदाधारः कालः । मुख्यक्षणस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वापत्तेः । उच्चरितप्रध्वंसित्वं चोच्चारणाधिकरणकालोत्तरकालवृत्ति ध्वंसप्रतियोगित्वम् । एवञ्चायं पूर्वो ऽयं पर इति प्रत्यक्षविषयेदंशब्दघटिताभिलापाभिलप्यमानपौर्वापर्यज्ञानस्यैको यणित्याद्युपयोगिनो ऽसम्भवः । नष्टस्य प्रत्यक्षविषयेदमा परामर्शायोगात् । पदप्रत्यक्षस्याप्येवं क्रमावगाहिन एव परः सन्निकर्ष इति सूत्रोक्तभाष्यकृदनुभवसिद्धस्यानुपपत्ति । न च पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिः । पूर्ववर्णनाशोत्तरं यत्नान्तरेण वर्णान्तरोत्पत्तेः । यावदुकारे वाग् वर्तते न तावदोकार इति येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्नस्तस्मिन्वर्ण उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्तते इति तत्रैव सूत्रे भाष्ये उक्तत्वात् । न चोत्तरवर्णप्रत्यक्षकाले संस्कारवशादव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्त्वं तदुत्तरवर्णे गृह्यते, एवं तदुत्तरवर्णप्रत्यक्षकाले संस्कारोपस्थितविशिष्टतद्वर्णत्वं तदुत्तरवर्णे गृह्यत इति तज्ज्ञान सुलभं सरो रस इत्यादौ विशेषश्च । यद्वा पूर्वपूर्वजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव भवन्तीति न पदप्रत्यक्षानुपपत्तिरिति वाच्यम् । अयं पूर्वो ऽयं पर इत्याभिलापासम्भवात् । नष्टाविद्यमानयोः सम्बन्धिनोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यत्वाच्च । एवं पदप्रत्यक्षोपपादने ऽपि पदस्याविद्यमानत्वेन त-

त्र वृत्त्याश्रयत्वग्रहानुपपत्तेश्च । अविद्यमाने आश्रयत्वाङ्गीकारे नष्टो घटो जलवानित्यादेरापत्तिः । अविद्यमानयोरपि जलघटयोराश्रयतानिरूपकत्वस्याश्रयत्वस्य च त्वद्रीत्या बाधाभावात् तज्ज्ञानस्य प्रमात्वापत्तिः । किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः । तदुक्तम् ।

अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् ।

इति पदसमुदायात्मकवाक्यस्येव वर्णसमुदायरूपपदस्याप्यभावात् । उभयोरन्यथा सम्भवादिति तदर्थः । किञ्चैवं पदमिति बुद्धेस्तदेवेदं कृष्णपदमिति बुद्धेश्चानुपपत्तिः पक्षद्वयेऽपि । न चैकजातीयबुद्धिविषयत्वौपाधिकी एकबुद्धिविषयत्वौपाधिकी च सेति वाच्यम् । तज्जातीयमिदं पदमिति व्यवहारस्यापत्तेः । तदेवेदं पदमिति नियमेन व्यवहाराच्च । एतेन पूर्वनखादिनाशोत्तरं पुनरुत्पन्ननखादौ तदेवेदं नखं त एव इमे केशा इति वत् सादृश्येन प्रत्यभिज्ञेत्यपास्तम् ।

अवयवैरेकबुद्धिविषयैरेकः पट इत्यादिबुद्ध्युपपत्तावयविनोऽप्यतिरिक्तस्य तदसिद्ध्यनापत्तेश्च । किञ्चैवमुच्चारणभेदाद्भिन्नेषु शक्तिग्रहासम्भवो व्यक्तिवाद इवानन्त्यव्यभिचारात् । व्यभिचारश्च गृहीतशक्तिकस्यैव बोधकत्वमिति सर्वसिद्धो नियमो बोध्यः । आनुपूर्वी तु तत्कालघटितत्वेनाव्यवहितोत्तरत्वाननुगमात् प्रत्युच्चारणं भिन्नेति तस्या अपि शक्ततावच्छेदकत्वे सैव दुरवस्था । तादृशाव्यवहितोत्तर-

त्वेनानुगमो ऽपि तादृशत्वस्य दुर्ज्ञेयत्वादयुक्त एव । व्यवधानाभावे सति यज्ज्ञानध्वंसविशिष्टयज्ज्ञानविषयत्वमेवानुपूर्वी तत्परिच्छेदश्च मनसैवेति पक्षे ऽपि ज्ञानव्यक्तिभेदेनानुपूर्व्यनन्तैव । न च चरमवर्णव्यङ्ग्यस्तत्तत्पदवृत्तयो ऽनन्ता जातयः शक्ततावच्छेदकत्वेन कारणतावच्छेदकत्वेन च कल्प्यन्त इति न दोष इति वाच्यम् । अनन्तजातिकल्पने गौरवात् । उक्तरीत्या वृत्त्याश्रयत्वासम्भवाच्च । पदानामसत्त्वेन तत्र जातेरप्यसम्भवाच्चेति ॥ ४६ ॥

( कुं० टी० ) ननु को ऽसाविति । अखण्डपक्षे आभ्यन्तरः स्फोटो जातिव्यक्ती बाह्यस्फोटाविति त्रीणि वाक्यलक्षणानि । सखण्डपक्षे तु नियतसाधन आख्यातशब्दपदक्रमो वा पदसङ्घातो वा आद्यमेव पदं वा सर्वाणि पदानि वेति पञ्च वाक्यलक्षणानि । तत्रैषु अष्टसु पक्षेषु कः पक्षो युक्त इति विचारः । तथा शङ्काश्रयाः । शब्दानां नित्यत्वमभिप्रेत्याह । अभिव्यक्तेरिति । क्षणशब्देनेति । क्षणो नाम शब्दतन्मात्रद्वारा प्रकृतेः परिणामविशेषः क्षणधारारूपकालस्य परमापकर्षावधिः । स च न प्रत्यक्षः । अतिसूक्ष्मत्वात् । किन्तु तत्समूहरूपः काल एव । यथा परमाणौ स्वीय ऊर्ध्वनभोदेशत्यागोपलक्षितः कालः क्षणः । ननु उच्चारणप्रध्वंसयोर्यौगपद्यमयुक्तमत आह । उच्चरितप्रध्वंसित्वं चेति । प्रत्यक्षविषयेति । प्रत्यक्षविषयो य इदं शब्दस्तद्विषयो यो ऽयं पूर्व इत्यादिरभिलापस्तद्विषयस्य पौर्वापर्यस्य ज्ञानं न सम्भवतीत्यर्थः । पदप्रत्यक्षस्यापीति । भाष्यकृदनुभवसिद्धस्य क्रमावगाहिनः पदप्रत्यक्षस्योपपत्तिरित्यन्वयः । यावदिति । एकैकवर्णवर्ति वागिन्द्रियमेकमेव वर्णमुच्चा-

श्यति न द्वौ वर्णौ उच्चरितश्च वर्णस्तदानीमेव नष्ट इति पौर्वापर्यसंहितयोरसम्भव इत्यर्थः। वागिति। वागिन्द्रियमित्यर्थः। तेनैव यत्नेन विच्छिन्ने नष्टे उपसंहृत्य तं यत्नं त्यक्त्वा।

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभव एव तावद्वर्णगोचरां स्मृतिं जनयतीति तार्किकोक्तं शङ्कते। न चेति। उपस्थितेति। उपस्थितो विशिष्टो यो वर्णस्तद्वत्वं तृतीयवर्णे गृह्यत इत्यर्थः। शब्दजशब्देति। यथा वीचिरुत्पन्ना तरङ्गान्तरमुत्पादयतीति वीचीतरङ्गन्यायेनैकैकशब्दाच्छब्दान्तरोत्पत्तिः ततः श्रोत्रमागतो गृह्यत इति तार्किकाः। अव्यवहितोत्तरत्वसम्बन्धेनेत्यादिकां प्रथमामाशङ्कामुद्धरति। अभिलापासम्भवादिति। पदवाक्ययोरभावेनेति। वर्णानां समुदायस्यासम्भादिति भावः। तथा भवेदिति। पदार्थो ऽपि अशाब्दः स्यादित्यर्थः। यत्तूक्तं लीलावत्यां एकं पदमिति बुद्धिरेकसुप्तिङन्तत्वावच्छेदेनेति तन्न। सुप्तिङन्तयोरनुगतस्यैकस्य पदावच्छेदकस्य वक्तुमशक्यत्वात्। एकत्वबुद्धेरौपाधिकत्वे सर्वत्र तदुच्छेदापत्तेश्च। पक्षद्वये ऽपीति। संस्कारवशादिति पक्षे पदा अनन्ताः शब्दा इति पक्षे चेत्यर्थः। न चैकेति। घकारटकारयोर्भेदे ऽपि घकारटकारबुद्धेरेकजातीयत्वादेकपदत्वव्यवहार एवं दिनभेदेनोच्चारिततोर्घटपदयोरेकबुद्धिविषयत्वात्तदेवेदमिति व्यवहार इत्यर्थः। किञ्चैवमिति। एकघटपदे शक्तिग्रहे ऽप्यन्यघटपदे शक्तिग्रहाभावात्। ननु सकलघटपदे आनुपूर्वीसाम्यात् शक्तिग्रह इत्यत आह। तत् कालेति। तत्तत्कालघटितस्याव्यवहितोत्तरत्वस्यैकस्याभावादित्यर्थः। सैव। शब्दान्तरस्य बोधकत्वानापत्तिरूपैव। आनुपूर्वी त्विति। भिन्नैवेत्यत्रान्वयः। तत्तत्पदवृत्तयस्तत्पदनिष्ठाः। अनन्ता इति। पदभेदात्॥ ४६॥

( क० टी० ) अथ वाचकशब्दं निरूपयति । नन्वित्यादिना । वर्णस्फोटवादिमतं द्वेधा खण्डयति क्रमेण । न च वर्णा इत्यादिना । तथा पर्याप्तिसम्बन्धेन शक्त्याश्रय. । पत्तेरिति । किञ्च घन वनमित्यादौ मलोपाद्यापत्ते. । किञ्च प्रत्येकं दीर्घबोधापत्ते. । न च प्रत्येकं वर्णैरर्थस्मरणम।न जन्यते चरमेण पुन स्पष्ट जन्यते प्रत्यक्षे एव स्मरणे ऽपि वैजात्यस्वीकारे बाधकाभावा द्वाच्यम् । प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वाद्गुरुत्वाच्चेत्यपि बोध्यम् । सहता इति । न च प्रत्येकावृत्ते कथ समुदित-वृत्तित्व द्वित्वादिवदुपपत्तेरिति भाव । उच्चारितेति । प्रत्येक व-र्णानामित्यादिः । ननु उच्चरितप्रध्वंसित्वमेव कुतो ऽतो नि त्यत्वपक्षे आह । अभीतीति । जन्यत्वपक्षे आह । उत्पत्ते रिति । नन्वेवं वर्णप्रत्यक्ष न स्यात्क्षणस्यात्प्रत्यक्षत्वादत आह । क्षणेति । तच्छब्देनान्यतरपरामर्श. । क्षणसमूहरूपः प्रत्यक्षयोग्य इत्यर्थः । अयमेवोच्चारणाधिकरणकाल । नन्वेवमपि प्रत्यक्ष त्व नोच्चारणाधिकरणकालिकध्वसप्रतियोगिस्वरूपतत्त्वाङ्गीकारा-दत आह । नष्टस्येति । तथा च प्रक्रियोच्छेदापात्तिरिति भा-व' । यदि कालिक पौर्वापर्य तदा ऽसम्भव । पूर्वापरयो र्युगपत्स्थित्यभावात् । अत एव न दैशिकमपि । आद्यमपि यु-गपदवस्थितेष्वेव गृहीतु शक्य न तु नष्टविद्यमानयोरय ज्यष्ठो ऽय मध्यमो ऽय कनिष्ठ इति व्यवहारवदय पूर्वो ऽय पर इति व्यवहारस्यापि नष्टविद्यमानयोरसम्भव. तयो सम्बन्धस्य निरूपयितुमशक्यत्वात् । घकारः पूर्वमुत्पन्नस्ततो ऽकारस्ततो ऽन्य इत्येव कालिकपौर्वापर्यग्रह सम्भवन्नपि न तदुपयोगीति तात्पर्यम् । लौकिक दोपमाह । पदेति । एवेन तस्यातत्त्वव्यव-च्छेद. । पर इति । एकैकवर्णवर्तिनो वा न द्वौ युगपदुच्चा-रयति गौरिति यावद्गकारे वाग्वर्तते नौकारे न विसर्जनीये च यावदौकारे न गकारे न विसर्जनीये यावद्विसर्जनीये न गकारे नौकारे इति तत्र भाष्यम् । वाक् शब्देन वागिन्द्रियम् । यथा परः प्रयुज्यते न वर्णो वर्णस्य सहाय इति च भाष्यम् । पूर्ववर्णध्वंसानन्तर यद्यप्यपर. प्रयुज्यते तथापि स पौर्वापर्या-दिव्यवहारे वर्णस्य पूर्वनष्टस्य न सहायः नष्टविद्यमानयोः सम्ब-

न्धाभावान्न तद्व्यवहारप्रयोजक इत्यर्थ । एवञ्च तज्ज्ञानाभावेन ततो बोधोच्छेदापत्ति । एवञ्चोपलम्भो न युगपत् नापि वास्तवी सत्तेति दोषद्वयमिति भाव । उभयमुद्धरति । न चेति । पूर्ववर्णजनको यस्तेनैव द्वितीयादिवर्णोत्पत्तिरित्यर्थ । खण्डयति । पूर्वमिति । एकेन यत्नेन वर्णे उच्चारिते तस्मिन्नष्टे तज्जनकयत्ने च नष्टे यत्नान्तरोत्पत्त्यनन्तर द्वितीयवर्णोत्पत्तेरित्यर्थः । अत्र मानमाह । यावदिति । विच्छिन्ने । नष्टे । न यत्नमिति । पूर्वयत्न त्यक्त्वेत्यर्थ । अन्यमिति । यत्नान्तरमित्यर्थ । तत्रैव । पर सन्तीत्यत्रैव । परमत खण्डयति । न चेति । यत्तु प्रत्येकवर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णप्रत्यक्षसामग्र्या स्मृतिप्रत्यक्षविषया सञ्जातसहभावा वाचका । एवञ्च सदसदनेकविषया पदप्रतीतिः स्मृतिप्रत्यक्षात्मिकेति तत्र क्रमाविपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्ते । क्रमस्य संस्काराविषयत्वेन स्मृत्याविषयत्वात् । न चानुभवक्रमोपहितानामेव तेषा स्मृत्या विगाहनात् क्रमव्युत्क्रमयोरविशेष इति देवताधिकरणे मिश्रोक्तरीत्या निर्वाह इति वाच्यम् । अनुभवक्रमस्य स्मृतिक्रमे ऽनियामकत्वात् । दृश्यते ह्यपूर्वेद्युरनुभूतमस्मृत्यापूर्वेद्युरनुभूतस्य स्मरणम् । किञ्च तत्तानुल्लेखान्न तत्र स्मरणत्व युक्त तदेतदभिप्रेत्याह । उत्तरेति । तज्ज्ञानम् । पौर्वापर्यज्ञान पदज्ञान च । सर इति । आनुपूर्वीलाभादिति भाव । आदिना नदी दीनेत्यादि परिग्रहः । अन्यत्रावश्यकयुक्ति लाघवादाह । यद्वेति । अत एवाह । चरमेति । पदेति । इदमुपलक्षण पौर्वापर्यज्ञानस्यापि । यासम्भवादिति । तस्य कालदेशान्यतरव्यवहितत्वेनाद्ये एककालवृत्तित्वेन तदसम्भवादित्यर्थ । एवञ्च पौर्वापर्यज्ञान नेति भाव । पदज्ञानमपि नेत्याह । नष्टेति । तस्य तद्घटितसन्निवेशापेक्षत्वादित्यर्थ । द्वितीय आद्य दोषोद्धारे ऽप्याद्यसाधारण द्वितीये दोषमाह । एवमिति । उक्तरीत्येत्यर्थ । स एव च बोधोग्योगीति प्रागुक्तम् । ननु तत्राप्याश्रयत्वमस्त्वत आह । अविधेति । यथासंख्यमाह । आश्रयेति । त्वया तत्रैव तत्रापि तद्धर्माङ्गीकारादिति भावः । नापीत्यत्र दोषान्तरमाह । किञ्चेति । एवम् । तेन तदाश्रयत्वेनोक्तरीत्या तयोरुपपादने । अभावेन । फलाभावादतिरिक्ततदस्वीकारेण । तदुक्तमिति । हरिणेति शेष । यद्यपि तुल्ययुक्त्या

वाक्यस्य वाक्यार्थशक्तिसाधको ऽय तथापि तत एव तात्पर्यार्थमाह । पदेति । अर्थासम्बन्धादिति । तयोरशाब्दत्वापत्तिरिति शेष । दोषान्तरमाह । किञ्चेति । पक्षेति । तेषां प्रत्येक सहतानां वा तत्त्वमिति पक्षद्वये ऽपीत्यर्थः । व्युत्क्रमेणोभयत्रोपपत्तिमाह । न चेति । तथा चारोप इति भावः । आद्ये दोषमाह । तज्जातीयमिति । अपिना तस्यैव सङ्ग्रहः । इष्टापत्तावाह । तदेवेदमिति । एतेन । उक्तदोषद्वयेन । आदिग्राह्यमाह । त एवेमे इति । द्वितीये दोषमाह । अवयवैरिति । पक्षद्वयसाधारणमेव दोषान्तरमाह । किञ्चैवमिति । उक्तो ऽर्थे । आनन्त्येति । समाहारद्वन्द्व. । मध्यमपदलोपि समासो वा । ननु यस्य शक्तिग्रहस्तस्मादेव बोध इति क्व व्यभिचारो ऽत आह । व्वभीति । यस्य शक्तिग्रहस्तस्मान्न बोध इत्यादावेवोक्त यस्माद्बोधस्तस्य न स इति व्यभिचारइत्यर्थ । नन्वानुपूर्वीरूपावच्छेदकैक्येन तेषामनुगमान्नोक्तदोषाविति तत्सम्भवो ऽत आह । आनुपूर्वीति । भेदे ऽननुगमो हेतुस्तत्र तद्घटितत्व स्वकालोत्तरकालिकत्व हि सेति भावः । अपिर्व्युत्क्रमे । तस्या शक्ततावच्छेदकत्वे ऽपीत्यर्थ । अनुगमो ऽपीति । आनुपूर्व्या इति भावः । ननु तस्या कालाघटितत्वेनाय दोषो ऽत आह । व्यवेति । इदं चाव्यवहितोत्तरत्वलाभार्थम् । वैशिष्ट्य च ज्ञाने कालिकसामानाधिकरण्येन । एवेनोक्तव्यवच्छेदः । शब्दतो ऽसम्भवादाह । मनसैवेति । एव मौनिश्लोके लिपिक्रमेण ज्ञानक्रमो ऽनुमेय. । घचटेत्यादिवारणाय सत्यन्तम् । कदम्बगोलकन्यायेनोत्पन्नटकारान्तराविषयकत्वोच्चारणाविषयाद्यज्ञानध्वसविशिष्टटकारप्रत्यय इत्यर्थः । ज्ञानेति । ज्ञानरूपव्यक्तीत्यर्थः । तैवेति । तथा चोक्तदोष एवेति भाव. । प्रकारान्तरेण तयोरभावमाह । न चेति । चरमेति । तथा च पूर्वं तदनभिव्यक्तेर्न बोध इति भाव । अत एवाह । अनन्ता इति । कल्पकमाह । शक्तेति । अत्राविश्वस्त प्रत्याह । कारणतेति । बोधेत्यादि न दोष इति । तद्दोषद्वयाभावात्तदसम्भवरूपदोषो नेत्यर्थ. । नन्वन्यथानुपपत्त्या गौरवमिष्टमेवात आह । उक्तेति । पदादेरसत्त्वेन यथा तत्र तदभावस्तथात्रापि तदुपपादने ऽपि तेषामसत्त्वे तत्त्वाच्चेत्यर्थः । तथा च तदसम्भव एवेति भावः । तुल्ययुक्त्या

दोपमाह। पदानामिति ॥ ४६ ॥

शब्दस्वरूपशब्दानिरास। अत्रोच्यते। प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षयाल्लीनसर्वजगत्का माया चेतने ईश्वरे लीयते। लयश्चायमपुनःप्रादुर्भावफलको नात्यन्तिकः। नाशादुत्तर सर्गानुपपत्तेः। नापि सर्वथा अभानम्। प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनो ऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति कार्यप्रवृत्त्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलाद्भासमानाप्यभानप्रायैव। ततो ऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतो ऽबुद्धिपूर्विका सृष्टिर्मायापुरुषावाविर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रो ऽशो नादः, चिदंशो बिन्दुरित्यचिच्छब्देन शब्दार्थोभयसंस्काररूपा अविद्योच्यते ॥ ४७ ॥

(कुं० टी०) स्फोटस्यैव वाचकत्वं दर्शयितुमाह। अत्रोच्यत इति। प्रलये। भौतिकादिप्रलये। महाप्रलयस्वीकारे तु सर्वकर्मणामेव नाशो भवति, ततश्च शेपकर्माभावे पुनः शरीरारम्भानापत्तेः। अत एव यदिह रमणीयचरणा ततः शेषेणेत्यादि श्रूयते। नियतेति। नियतकालं परिपाको भोगो येषाम्। लीनसर्वजगत्केति। भुक्तभोग्यानां प्राणिनां मायायां लयः तस्याश्चेश्वरे इत्यर्थः। एवञ्च कारणनाशात्कार्यनाश इति तार्किकोक्तमयुक्तम्। तथा च रज्जूरगादिवदपृथग्भूतानामात्मन्यध्य-

स्ताना वियदादीनां शुद्धे ब्रह्मणि लयो भवति । स च न मृदि घटस्येवानुपलब्धिरूपः किन्तु रज्वामहेरिव । तत्र बुद्धिवृत्तेरपि लीनत्वादेव न कश्चिद्वेद । स च लयः कालविशेषावधिसापेक्षः सुप्तनाप्नोति तस्यामवस्थायाम् । यथा जतुकाष्ठसंयोगेषु पृथङ्न दृश्यते, यथा वा जलसैन्धवरसौ एकलीभूतौ पृथक्त्वेन नानुभूयेते तथात्र न स्मृते ऽन्यत् ज्ञायते रज्वामिव सर्पबाधे तदतिरिक्तवत् । अत एवाहङ्कारशून्यत्वान्न ममाता । साक्ष्यभावान्न द्रष्टा । साक्षिवृत्तेरपि लयान्न ज्ञाता । चरमान्तःकरणवृत्त्या ब्रह्मविद्याख्यया प्रपञ्च विषयी करोति । एवञ्च सर्व जगदुपसंहृत्य शुद्धचिन्मात्ररूपेणावतिष्ठते । तदुक्तं हरिणा ।

प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः ॥

इति ।

मूलप्रकृत्या ब्रह्मणा वा ये जगत एकत्वमभेदेन पश्यन्ति तेषां मते निरन्वयविध्वंसाभावान्महासामान्यरूपे तस्मिन्मूलकारणे लयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं शक्तियोगः द्रव्यात्मना तदानीमपि जातीनां सत्त्वं द्रव्यान्तरस्याभावात् । ईश्वरे इति । यथा स्फटिके जपाकुसुमसन्निधानाद्रक्तत्वावभासस्तत्रैव स्फटिकांशप्रभोषे यद्वगनत्वावभास एवं शुद्धायां चिति मायोपाधिसान्निध्यादीश्वरत्वाध्यासः । सो ऽयमात्मा आवरणविक्षेपशक्त्या अविद्याया आश्रयः । तत्रावरणांशेन शुद्धरूपतिरोधानं विक्षेपांशेन ईशादिस्थूलदेहान्तानां प्रतिभासः । तयोर्निवृत्तौ शुद्धचित्स्वरूपेणावतिष्ठते । लयश्चायमिति । नात्यन्तिक इत्यत्रान्वयः । अत एव सहस्रयुगपर्यन्तं लयः । आत्यन्तिकलयस्तु मुक्तावेव । प्रतिभासमात्रेति । रज्जौ सर्पावभासवदद्वैतनये

मिथ्याभूतस्य प्रपञ्चस्य अनादिमिथ्यावभासनिमित्तकल्पनयैव सत्त्वात्। मायाकल्पितत्वमपि हि व्यवहारदृष्ट्यैव न वस्तुतः। प्रातीतिकतद्रूपेणैव व्यवहारस्योत्पन्नत्वात्। तदभावस्येति। आत्यन्तिकस्येति शेषः। सुप्तेवेति। कार्याजनकत्वात्सुप्ता इव तिष्ठन्तीत्यर्थः। प्रधानांशतमस्समुद्रेकेणान्यानवभासो हि स्वापः। तथा च कर्मविक्षेपसंस्कारसहितलक्षणाविधावशेषतासाम्येन स्वापसादृश्यं लयस्य तत्र ह्यन्तकरणादयो ऽविद्यायां सूक्ष्मरूपेण शक्तिरूपेण वासनाभिः सहावतिष्ठन्ते। एवञ्च सूक्ष्मरूपेण स्थिता शक्तिः स्थूलरूपेण विवर्तते। एतेन शक्तिमिश्रितादूब्रह्मणः पुनः शक्तेः कथमुत्पाद इत्यपास्तम्। स्वप्रतिष्ठेति। स्वरूपमात्रे प्रतिष्ठितस्येश्वरप्रकाशस्येत्यर्थः। प्रकाश्यप्रकाशकहीनस्येति यावत्। अनौपाधिकचैतन्यं हि तस्य स्वरूपम्। विषयविषयिणोर्भेदाभावाद्धर्मान्तरस्य चाभावादिति भावः। अत्यन्तेति। तार्किकप्रसिद्धनिर्विकल्पकधर्मधर्मिविषयं ब्रह्मात्मकं तु ज्ञानं निर्विषयमेव। प्रातिपदिकार्थमात्ररूपेणावस्थितं निर्विकल्पकमविद्याकृतभेदानिवृत्तौ शुद्धरूपेणावस्थानात्। अभानप्रायेवेति। मायायाः भाने तु चितेः सविकल्पकत्वापत्तौ निर्विकल्पकत्वं भज्येत। अपरिपक्केति। अभुक्तेत्यर्थः। संस्कारस्यानादित्वाच्च न पूर्वसर्गकर्मशेषविरोधः। नन्वीश्वरस्यानादित्वे तदैक्षत बहुस्यां प्रजायेयेति सृष्टिसमये आगन्तुकमीक्षणं कथमुपपद्यतामिति चेत्सत्यम्। यथा विषयेन्द्रियसन्निकर्षाज्जीवोपाध्यन्तःकरणवृत्तिभूताया मायायां वृत्तिभेदादिदमिदानीं स्रष्टव्यमित्याकारिका जायन्ते। प्राप्तपरिपाकैः। उपस्थितपरिपाकैः। प्राणिकर्मपरिपाकवशेन सिसृक्षावशादेको ऽहं बहु स्यामिति भगवतो बुद्धिर्भवति। अबुद्धिः। अविद्यापरस्येश्वरस्य

स्वभावो लीलेति चोच्यते । नन्वसङ्गोदासीनस्य परमार्थतो निरतिशयस्य शक्तिशक्तिमतोरभेदेन शक्तेरप्यभावाच्च स्रष्टृत्वा-सम्भव इत्यत आह । मायापुरुषाविति । तदुक्तं सूतसंहितायाम् ।

ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् ।

इति । शक्तिमिश्रितात् । मायोपहितात् । मायाशक्तिशबलादि-ति यावत् । अयम्भावः । अद्वितीयस्य ब्रह्मणः क्रीडाया असम्भ-वादिच्छोत्पद्यते । सैव माया । तदुक्तं काशीखण्डे ।

यदेकलो न शक्नोति रन्तुं स्वैरञ्चरप्रभो ।

तदिच्छा तव योत्पन्ना सेव्याशक्तिरभूत्तव ॥

त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः ।

इति । कार्यरूपविन्दोस्त्रैविध्यमाह । बीजमिति । शक्तिरित्य-र्थः । चिदचिन्मिश्रः । तत्सम्बद्धः । चिदंशः । ब्रह्मरूपः ॥४७॥

(क० टी०) वाचकस्वरूप वक्तुमादौ लयस्थितिपूर्विकां सृष्टिप्र-क्रियामाह । प्रलय इत्यादिना । नियतेति हेतुगर्भ विशेषणम् । सर्वत्व प्राणिविशेषणम् । ईश्वरे । ब्रह्माणि । आत्यन्तिक इत्यस्य व्याख्या पुनरिति । तस्य च धाता यथा पूर्वमित्यादिश्रुत्या सिद्धत्वा-दिति भाव । मात्रपदेन व्यावहारिकत्वव्यवच्छेदः । अभानमिति । सर्वथेत्यादि । इष्टापत्तावुक्त एव दोषः । लयादेवाह । सुप्तेवेति । न तु सुप्ता तदसम्भवादिति भावः । अत एवाह । कार्येति । अभा-तत्वे हेतुरयम् । तदानीमपि तत्सत्त्वायाह । अत्यन्तेति । प्राग्वदेवाह । प्रायेवेति । तत । प्रलयानन्तरम् । स्वफलेति । स्वस्वकर्मफलेत्यर्थः । एतेन वैषम्यादिनिरासः । तत्र स्वस्य फलाभिसन्धेरभावादाह । अबुद्धीति । तयो प्रकाशरूपा सृष्टिरित्यर्थः । अनेन कर्मणो माया-याश्चानादित्वमुक्तम् । तत । उभयप्रादुर्भावानन्तरम् । तत । मा-यावृत्त्युत्पत्त्यनन्तरम् । त्रिगुणम् । सत्वरजस्तमोगुणात्मकम् । अ-स्यावश्यकतामाह । इदमेवेति । ईश्वरस्येति भावः । त्रिगुणत्वं सफलयति । तस्येति । व्युत्क्रमेणेति भावः । अचिच्छब्देन न माया तस्या एतद्नशंत्वादाह । आचिदिति । तत्स्वरूपमाह । शब्देति ॥४७॥

पराया वाचो निरूपणम्। अस्माद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषराहित्यं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानं रवपरादिशब्दैर्व्यवह्रियते।

बिन्दोस्तस्माद्भिद्यमानाद्रवो ऽव्यक्तात्मको ऽभवत्।
स एव श्रुतिसम्पन्नं शब्दब्रह्मेति गीयते॥

इत्युक्तेः। एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्य पवनसंस्कारः तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं परावागित्युच्यते। तदुक्तं हरिणा।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्तते ऽर्थभावेन प्रक्रिया जगतो यत इति॥४८॥

( कुं॰ टी॰ ) रवपरादीति। रवशब्देन पराशब्देन चोच्यत इत्यर्थः। तस्मात्पराद्बिन्दोः अव्यक्तो रवो ऽभूदित्यर्थः। मूलाधार इति। षण्णवत्यङ्गुलो देहायामः। तत्राष्टचत्वारिंशत्तममधस्तादुपरि च परित्यज्य मध्ये मूलाधारः। तदाहुः।

पाय्वन्ताद्‌द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते इति॥
नवाङ्गुलो ऽर्ध्वतस्तस्मादस्थिकन्दो ऽण्डसन्निभः।
चतुरङ्गुलविस्तारस्तन्मध्यं नाभिरुच्यत इति॥

कुण्डलिनी मूलप्रकृत्यात्मिका महदादिभिर्वेष्टिता सर्पवत्तिष्ठति मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोतीति पातञ्जले स्पष्टम्।

सङ्गीतरत्नाकरे ऽपि।

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥
आधाराद्द्व्यङ्गुलादूर्ध्वं मेहनाद्द्व्यङ्गुलादधः ।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभामिति ॥
पवनस्योत्पत्तिश्च मूलाधारे भवति । तदुक्तम् ।
देहे ऽपि मूलाधारे ऽस्मिन्समुद्यति समीरण इति ।

अत एव तस्य मूलाधारे व्यञ्जकत्वम् । सर्वगतमपि । सर्वत्र व्याप्तमपि । पवनसंस्कार इति । इच्छया जातेन प्रयत्नेन मूलाधारस्थः पवनो युज्यत इत्ययमेव संस्कार इत्यर्थः । शब्दब्रह्मेति । अयम्भावः । यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणवृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिभेदा जायन्ते इति । एतेन पूर्वोक्तप्रक्रियायां ब्रह्मणो निमित्तकारणत्वावगमादेतस्मादात्मन इति श्रुतौ जनिकर्तुरित्यपादानलक्षणपञ्चम्यनापत्तिरित्यपास्तम् । स ऐक्षत एको ऽहं बहु स्यामिति श्रुतौ ईक्षितृत्वश्रवणेन निमित्तत्वाद्बहुवचनश्रवणेन चोपादानत्वस्यापि स्वीकारात् । तथा च हेताविति निमित्तपञ्चम्यपि तन्त्रेण बोध्या । एवञ्च शुद्धब्रह्मणो निर्विकारत्वमेव । ऋग्वेदे ऽपि वागेव विश्वा भुवना जज्ञे वाचक इत्सर्वममृतं यच्च मर्त्यमिति । छन्दोभ्य एव प्रथममेतद्विश्वं विवर्तत इति च । स्वप्रातिष्ठतयेति । आधारान्तरनिराकरणायैतत् । निष्पन्दम् । शून्यम् । पश्यन्त्या स्पन्दसामान्यमेवास्ति स्पन्दविशेषस्तु मध्यमायाम् । अनादीति । आदिनिधनरहितं शब्दोपग्राह्यतया शब्दतत्त्वं स्थितिप्रवृत्तिप्रविभागादिशब्देन क्रियते । तच्चाक्षरनिमित्तत्वादक्षरं प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेः अर्थभावेन विवर्तते तत्वादप्रच्युतमेकं भेदानुकारेणासत्यानेकरूपतां

नान्नारम्भवादः परिणामवादो वा विवक्षितः किन्तु विवर्तवादः। यथा रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते। कारणस्वरूपाविरोधे च कार्यप्रतिभासः। अतो ब्रह्मणो निर्विकारत्वान्न नित्यत्वविरोधः ॥ ४८ ॥

( क० टी० ) अत एवाह । अस्मादिति । रजस प्रवर्तकत्वादिति भाव । शब्दार्थयोः सामान्यतो गुणाभावादाह। ज्ञानेति। मात्रपदेनांशान्तरव्यवच्छेद । सृष्ट्युपयोगित्व विशदयति। एतदिति । तथा च श्रुति वागेव विश्वा भुवनानि जज्ञे इति। आदिना शब्दब्रह्मादिपरिग्रहः। आचार्योक्तिमाह । बिन्दोरिति। उक्त हि प्रपञ्चसारे।

प्रकृति पुरुषश्चैव नित्यौ कालश्च सत्तम ।
इत्युपक्रम्य प्रकृतिमुपवर्ण्य कालभेदमुक्त्वा ।
प्रकृतश्च क्वचित्कालो विकृति प्रतिपादयेत् ।
सा तत्त्वसञ्ज्ञा चिन्मात्रज्योतिष सन्निधेस्तदा ॥
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ।
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ॥
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ।
स बिन्दुर्नादबीजत्वभेदेन च निगद्यते ॥

इत्युक्तोक्त तैर्बिन्दोरिति उभयत्र रव इति पाठ । भिद्येति हेतुगर्भ विशेषणम् । अशनययुक्तादित्यर्थ । वर्णादिविशेषरहितत्वादाह। अव्यक्तेति। अत एवाह। सर्वेति। एतेनैतदवस्थात्रयस्येश्वरशक्तिरूपत्वेन व्यापकत्वे ऽपि तत्तत्स्थानयोग्यादेराभिव्यक्तेस्तत्तत्स्थानस्येत्युच्यते इति सूचितम् । मूलेति । कुण्डलिन्यामित्यर्थः। जातेन तत्रैव नादिति । पवनचलनेन तत्रैवाभिव्यक्तमित्यर्थः। अक्षरम् । व्यापकम्। विवर्तत इत्यनेन पश्यन्त्यादयो ऽप्यस्या विवर्ता एवेति सूचितम् । अर्थभावेन। अर्थरूपेण । ननु तस्य पश्यन्त्यादिविवर्तसम्भवे ऽपि तेन रूपेण कथ विवर्तो विरुद्धत्वादत आह। प्रक्रियेति। यतो यस्माज्जगत उत्पत्तिरित्यर्थ। शब्दार्थोभयसस्काररूपाविद्यामिश्रितत्वेनाविरोधादिति भाव। शक्ति-

शक्तिमतोरभेदादिय चेतनैव । अत एव शारदादावित एव सर्वसृष्टिः स्पष्टमेवोक्ता अस्याश्चेननत्व च । एवञ्चैतद्विवर्तभूत पश्यन्त्याद्यवस्थात्रयमपि चेतनमिति बोध्यम् । इत्थ हि तत्रोक्तम् ।

सच्चिदानन्दविभवात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादात् बिन्दुसमुद्भवः ॥
परशक्तिमयः साक्षात्त्रिधा ऽसौ भिद्यते पुन. ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिता' ॥
बिन्दु. शिवात्मको बीज शक्तिर्नादस्तयोर्मिथ. ।
समवायः समाख्यातः सर्वागमविशारदैः ॥
रौद्रीबिन्दोस्ततो नादात् ज्येष्ठा बीजादजायत ।
वामा ताभ्य. समुत्पन्ना रुद्रब्रह्मरमाधिपा. ॥
सञ्ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिण ।
भिद्यमानात्परात् बिन्दोरव्यक्तात्मा ततो ऽभवत् ॥
शाब्दब्रह्मेति त प्राहुः सर्वागमविशारदा ।

इति। समवाय. सम्बन्ध क्षोभ्यक्षोभकरूप. सृष्टिहेतुः। भिद्यमानादिति। पराबिन्दोरित्यनेन व्यक्त्यवस्थारूपो य. प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादिविशेषरहितो ऽखण्डो नादमात्र एव उत्पन्न । तत्स्वरूपमेवाह। शाब्देति। तदुक्तमाचार्यैं ।

स रवः श्रुतिसम्पन्नै शब्दब्रह्मेति कथ्यते ।

इति। उक्त च क्रियांशात्परामिति ईश्वरप्रत्यभिज्ञायां यत इच्छति तज्ज्ञातु कर्तुवा स्वेच्छया अनन्तरं हि तत्कार्यज्ञानदर्शनशक्तिना ज्ञानशक्तिस्तदर्थ हि यो ऽसौ स्थूलः समुच्चयः सा क्रियाशक्तिरुदिता तत. सर्व जगत्परामिति पदार्थादर्शे। तदेव। पराख्यशब्दब्रह्मैव ॥४८॥

पश्यन्त्या निरूपणम्। तदेव नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्तं मनो विषयं पश्यन्तीत्युच्यते । एतद्द्वयं सूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानाविषयमित्युच्यते ।

मध्यमाया निरूपणम्। ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशे ऽभिव्यक्तत्तदर्थविशेषतत्तच्छब्दविशे-

षोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वागित्युच्यते। स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा सेत्याहुः। एतदवस्थात्रयमपि सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम्।

वैखर्या निरूपणम्। सैव चास्यपर्यन्तं गच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या वैखरी वागित्युच्यते। प्रणव एव व्यानोदानाभ्यां वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग् विषय इत्युक्तम्।

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्॥

इति। एतत्। व्याकरणम्। अनेकतीर्थेति। श्लिष्टव्यक्तवर्णरूपा प्राप्तसाधुभावापभ्रष्टा दुन्दुभिवेणुवीणादिशब्दरूपा चेत्यर्थः॥ ४९॥

(कुं० टी०) तदेव। शब्दब्रह्मैव। सूतसंहितायामपि।
सो ऽहं ब्रह्म न संसारी न मत्तो ऽन्यत्कदाचन।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तित इति॥
निर्विकल्पकेति। तत्त्वं च चिन्मात्रविषयकत्वम्।
समाधिस्तुसमाधानं जीवात्मपरमात्मनोः॥
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मन इति।

योगिनामित्युक्त्या न बुद्ध्या निश्चयात्मिकया हिरण्यगर्भदेवत्या तद्रूपप्रणवरूपत्वेन वोपास्यता दर्शिता। निराधारस्य

चोपासनासम्भवादाधारो ऽप्युक्तश्चेतनाधिष्ठानमन्तरेणाचेतनानां प्रकाशकत्वासम्भवादधिष्ठातृदेवताकीर्तनम् । व्यानोदानाभ्यामिति । तथा च श्रूयते अथ यः प्राणापानयोः सन्धिः स व्यानः यो व्यानः सा वागिति । तथा योगशास्त्रे ऽपि ।

हानोपादानचेष्टादिर्व्यानकर्मेति चोच्यते ।

उदानकर्म तत्प्रोक्तं देहस्योन्नयनादि यदिति ॥

श्लिष्टव्यक्तेति । व्यक्तवर्णा अव्यक्तवर्णा च साधुश्चेत्यादिकेत्यर्थः । अन्त्यवर्णाभिव्यक्त इति । तदाहुः सकृत्प्रपद्यमानो नावधार्यते अभ्यासेन तु स्फुटावभास इति । प्रथमाक्षरेण हि आभासमात्रं जन्यते तदुत्तरोत्तरवर्णकलापेन तु स्फुटतरपरिच्छेदः । संस्कारविशेषोत्पादनद्वारेणाभिव्यक्तिविशेषस्य रजतत्वादौ दृष्टत्वात् । रूषिता । छुरिता । तथा च व्यञ्जकभेदोपाधिकः स्फोटभेद इति भावः । जपाकुसुमादीति । तदुक्तं हरिणा ।

यथा रक्तगुणे तत्त्वं कषाये व्यपदिश्यते ।

संयोगिसन्निकर्षात्तु वस्त्रादिष्वपि गृह्यते ॥

यथारक्ते गुणैर्विद्यमानं तत्त्वं रक्तत्वं स्वाश्रयसमवायात्कषाये रक्तद्रव्ये व्यवह्रियते तथा सम्बन्धिनोः सम्बन्धाद्वस्त्रे ऽपि रक्तत्वं व्यवह्रियते इत्यर्थः । ननु उपसमीपवर्तिनि स्वीयं धर्ममादधातीति उपाधिरिति व्युत्पत्या जपाकुसुमोपाधिको लोहितः स्फटिक इति प्रत्ययो ऽस्तु स्फटिकलौहित्ये जपाकुसुममुपाधिरिति प्रयोगः कथमिति चेत् । सङ्क्रामकत्वमेव तत्र सप्तम्यर्थः । समर्पकाः । आपादकाः । समाधत्ते । सहस्रदीपेति । ननु जपाकुसुमाद्युपाध्यभावे ऽपि स्फटिकबोधवत् केवलस्फोटस्यापि व्यक्त्यापत्तिरत आह । उपाधिभिन्नेति । येन क्रमेणेति । ध्वनिसमानाकारैव स्फोटाभिव्यक्तिरिति भावः । चित्तभितौ । चित्तदेशे ।

ननु टकारव्यञ्जनदशायां घकारस्य नष्टत्वात् कथं तदुत्तरत्वग्रह इत्यत आह । दैशिक एवेति । ननु घटाकारस्फोटस्याभिव्यक्तत्वात्सर्वदा तदर्थबोधापत्तिरत आह । तदुपरागेति । उपरागोऽवभासस्तद्बोध्यो यो ऽर्थस्तदाकारा या वृत्तिस्तदतिरिक्तवृत्तिरित्यर्थः । अयम् । स्फोटः । आन्तरत्वादिति । अयम्भावः स्फोटो द्विविधः आभ्यन्तरो वाह्यश्च । तत्राभ्यन्तरो बुद्ध्यनुसंवृत्तिरूपः । वाह्यस्तु जातिव्यक्तिभेदाद्द्विविधः । सङ्घातवर्तिनी जातिरेव वाचिकेत्याद्यः । एको ऽनवयवः शब्द इति व्यक्तिस्फोटः ॥ ४९ ॥

( क० टी० ) वायुनेति । नाभिदेशे इति शेष । मनोविषय इति पाठ । तस्याजहल्लिङ्गत्वात् । एवमग्रे ऽपि । उपाधेः प्रत्याख्यानात्सूक्ष्मतमे ऽपि सूक्ष्मतरत्व नानुपपन्नम् । अत एव वक्ष्यति सूक्ष्मतमेत्यादि । यथाक्रममाह । निर्वीात । व्यक्तेति । पश्यन्त्येवेत्यर्थ । बुद्ध्या । अन्त करणेन । परेति । एतदाशयेनैव शब्दतत्त्वविद्भि शब्दस्यावस्थाचतुष्टयमाम्नातम् ।

वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ।
उद्यतार्था च पश्यन्ती सूक्ष्मावागनपायिनीति ॥

अश्रुतिगोचरेति च्छेद । सा श्रुतिगोचरा न किं त्वन्तःकरणग्राह्या वैखर्यैव श्रुतिग्राह्येत्यर्थ । तत्फलमाह । स्वयमिति । तुर्वैलक्षण्ये । निमित्तान्तरमाह । सूक्ष्मेति । एतासां क्रमेण स्वरूपाण्याह । एतादिति । सैव च । मध्यमेव च । परावृत्त्येति । मुखदेश प्राप्येति शेष । अपिना स्वश्रोत्रम् । अपञ्चीकृतभूतकार्यसमष्टिः सूक्ष्मशरीरोपहितो हिरण्यगर्भ । पञ्चीकृतभूतकार्यसमष्टि स्थूलशरीरोपहितो विराट् । एतदुभयभिन्न ईश्वर अधिदैवमेतानि त्रीणि रूपाणि । ननु वैखर्यां किं स्वरूपमत आह । प्रणव इति । सूक्ष्मेत्यादि । सहेति । तेनाभिव्यक्ताविति शेप । अत एव । पराया वर्णादिविशेषरहितत्वेनाव्यक्तत्वादेव । तमेवाह । वैखर्या इति । अनेकतीर्थभेदायास्त्रय्या वैखर्या मध्यमाया पश्यन्त्याश्च वाच एतत्पर पद स्थानमित्यद्भुतमि-

स्यर्थः । तीर्थमुपायः प्रकार इति यावत् । तदाह । श्लिष्टेति । वर्णांशे भेदद्वयम् । पदाद्यंशे तदाह । आप्तेति । ध्वन्यंशे आह । दुन्दुभीति । रूपा चेति । या तस्या इति शेषः । व्याख्यातमिदं व्याख्यातृभिः । तत्र स्वपरोभयश्रोत्रविषया वैखरी मध्यमा हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । पश्यन्ती तु लोकव्यवहारातीता । योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति परायां तु नेति त्रय्या इत्युक्तम् ।

स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥

इत्युक्तेः । आह खल्वपि चत्वारि वागिति । ऋङ्मन्त्र इति । स चेत्थं चत्वारि वाक्परिमितापदानि तानि सूक्ष्मतरसूक्ष्मस्थूलस्थूलतररूपाः परा पश्यन्ती मध्यमा वैखर्याख्या अवस्था एव चत्वारि पदानि यानि मनीषिणोऽध्यात्मकुशला ये ते विदुस्तासां मध्ये त्रीणि पदान्यवस्था गुहायामाधारनाभिहृदयेषु निहिता निहितानि नेङ्गयन्ति सर्वेषां ज्ञानविषया न भवन्ति चतुर्थं वैखर्याख्यं मनुष्या वदन्ति मनुष्यवदने प्रकटीभवतीत्येव ऋक्भाष्ये माधवेन नृसिंहोत्तरतापनीभाष्ये गौडपादैश्च व्याख्यातः । श्रीपतञ्जलिना तु नामाख्यातोपसर्गनिपाताश्चत्वारि पदानीत्यादिना पदचतुष्टयज्ञानसाध्यमनीषित्वसम्पत्तिरूपव्याकरणप्रयोजनपरतया व्याख्यातः । उभयत्राप्यस्य तात्पर्यमभियुक्तव्याख्यानबलादवगम्यते । एवमन्येष्वपि निरुक्तादिव्याख्यानेष्विति बोध्यम् । नन्दिकेश्वरकाशिकायामपीदमुक्तम् ।

अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्त्येन संयोगादहमित्येव जायते ॥
इकारादिर्ऋकारान्ता वर्णाः समनवन्ततः ।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम् ।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥
वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपीति ॥

वैखरी तु।

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदो ऽत्र प्रवादेष्वनवस्थितः॥

इति हर्युक्तेः। पातञ्जलभाष्ये व्यासेनापि तथोक्तेश्च। आख्यातोपयोग इति सूत्रे पतञ्जल्युक्तेश्च। बाधादिपरिणामरूपा कण्ठताल्वाद्यभिघातजन्यैवेति बोध्यम्। वायोः। प्राणादिरूपस्य। अणूनाम्। शब्दतन्मात्रपरमाणूनाम्।

आभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः।
इति हर्युक्तेः॥ ५०॥

(कु० टी०) व्यञ्जकेति। व्यञ्जकसमानाकारस्यैव व्यङ्ग्यस्य सङ्केतग्रह इत्यर्थः। अर्थबोध इति। अप्रसिद्धपर्यायश्रवणे ऽर्थबोधो नेत्यर्थः। वायोरिति। कैश्चिद्वायोः कैश्चिच्छब्दतन्मात्रपरमाणूनां कैश्चिज्ज्ञानस्य शब्दत्वमिष्यत इति मतभेदः। तत्र शुद्धाविति समष्ट्यहङ्कारेण ईश्वरो ऽस्मीति भावितवतो ऽपि स ईश्वरो द्वितीयेन सङ्कल्पेन छिद्रमभूत् तदाकाशम्। स ईश्वरः पुनः सङ्कल्पान्तरेण तस्मिन्नाकाशे वायुवेगसहायः शब्दरूपेण परिस्पन्दो ऽभूत्। वाय्वनुग्रहादेव हि संयोगविभागहेतुर्गतिर्भवति। तथा च कात्यायनसूत्रं शब्दस्तादिति। वाय्वात्मकः शब्द इति तदर्थः। तस्मिन् छिद्रे अन्तरं लब्ध्वा वायोर्वृद्धेरिति स्पष्टं हरिवंशे। आकाशरूपाद्ब्रह्मणः सकाशात्स्पर्शतन्मात्रापरपर्यायः सूक्ष्मो वायुः स्वकारणेन शब्देन स्वगुणेन स्पर्शेन च गुणवानिति वेदान्ते। केचिदज्ञानस्य शब्दत्वं वदन्ति।

अथायमान्तरो ज्ञाता सूक्ष्मो वागात्मनि स्थितः।
व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्तते॥

इति । अन्तःकरणमेव मनोवाय्वादिद्वारा शब्दत्वेन विवर्तत इति भावः । पतञ्जल्युक्तेश्चेति । तत्र हि आख्यातोपयोग इति सूत्रं नारब्धव्यमपक्रामति हि तस्माज्ज्ञानं यथा ज्वालारूपे ज्योतिरविच्छेदेनोत्पद्यमानं सन्ततं तथोपाध्यायज्ञानानि भिन्नशब्दरूपतापन्नानि सन्ततानीति स्पष्टम् । प्राणादिरूपस्येति । यद्यपि वाह्यवायावपि शब्दो ऽनुभवसिद्धस्तथापि न तस्येहोपयोग इति भावः । चरमाणूनाम् । परमाणूनाम् । आम्राणीव । आम्रफलानी व प्रचीयन्ते वर्धन्ते । शब्दाख्या इति । ते परमाणवः शब्दाख्याः शब्दनामानो भवन्तीत्यर्थः । वायोः शब्दत्वं हरिरेवाह ।

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥

वक्तुरिच्छेत्यनेनैकस्यैव वायोरनेकशब्दरूपत्वोपपत्तिरुक्ता । आम्राणीवेत्यस्य पूर्वार्धं तु ।

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।

इति ॥ ५० ॥

( क० टी० ) एव सृष्टिप्रक्रियामुक्त्वा प्रकृतमाह । तत्रेति । एतादीनां मध्ये इत्यर्थ. । परापश्यन्त्योर्योगिज्ञानविषयत्वादाह । मध्यमायामिति । नादांश' चेतन । अत एवाह । स्फोटात्मन इति । अक्षतिः । प्रागुक्तानन्त्यव्यभिचारप्रयुक्तशक्तिग्रहासम्भवादिदोषाभाव' । नन्वेव तस्य स्वरूपसतो वाचकत्वे सर्वदार्थबोधापत्तिरत आह । स चेति । नादांश इत्यर्थ' । उक्तहेतोरेवानुवदति । एकोऽखण्ड इति । अपिर्व्युत्क्रमे अखण्डो ऽपीत्यर्थ. । ननु समुदितानां व्यञ्जकत्वे तद्धेतोरिति न्यायेन तत एव बोधोपपत्त्या तद्वैयर्थ्यापत्त्या प्रागुक्तरीत्या समुदायासम्भवेन चाह । एकैकेति । तथा च न सर्वदार्थप्रतीतिरिति भाव । अत एवाह । तथापीति । अन्त्यवर्णबुद्धिरपि पू-

र्वपूर्ववर्णानुभवाहितसंस्कारसहकृतैव तद्व्यञ्जिकेति बोध्यम्। व्यक्ताव्यक्त एव। न चैव एकेनैव तद्व्यञ्जने इतरवैयर्थ्यमिति वाच्यम्। यथा हि रत्नतत्त्वस्य प्रतीन्द्रियसन्निकर्षमभिव्यक्तावपि द्वाभ्यां तिसृभिश्च जनितसंस्कारसहकृतपरिपाकरूपसहकारिसम्पत्त्या जनिते चरमप्रत्यये विशदं चकास्ति रत्नतत्त्वं न प्राक्षु प्रत्ययेषु तथा स्फोटः प्रत्येकमभिव्यक्तो ऽपि चरमवर्णजाभिव्यक्तिजसंस्कारसहकृतपरिपाकवन्मनःपरिणामे चकास्ति। एवञ्च तदनन्तरमेवार्थधीर्न तत प्राक् तदाह। अत इति। नन्वेवमपि तस्यैकत्वेन सकृदभिव्यक्तात्सर्वार्थबोधापत्तिरत आह। तत्र चेति। स्फोट इत्यर्थः। वस्तुतो नानात्वाभावस्य वक्ष्यमाणत्वादाह। नानात्वमिवेति। तद्दूषितो ऽभिव्यक्तिस्त्वित्थमविभागमपि पदं वाक्यं च नानेव भागवदिवावयविप्रतीत्यनुसारेण व्यञ्जयन्ति वर्णाः स्वोपरागवशादिति। अत एव स्फुट्यते वर्णैः स्फुटत्यर्थो ऽस्मादिति द्विविधं स्फोटशब्दनिर्वचनं कृतम्। अत्रासम्भववारणायानेकदृष्टान्तपूर्वमाह। यथेत्यादिना। ननु वर्णानां युगपदसत्त्वात्कथं तेषां प्रतिबिम्बो ऽत आह। प्रतीति। ननु तेषामपि नष्टत्वमत आह। ते चेति। ते त्वित्यर्थः। यावत्कार्यमिति भावः। एवम्। तेषां तत्र प्रतिबिम्बाङ्गीकारे कालचारवारणायेति भावः। दीपेति। पर्यायेणेति भावः। जपेति। नीलपीतादिद्रव्यसन्निधानेनानेकविधतया गृहीतस्य चेत्यपि बोध्यम्। नानात्वेति। वास्तवेत्यादि। नन्वेवमपि प्रतिबिम्बने क्रमाभावात्सरो रस इत्यादौ दोष एवात आह। येनेति। चस्त्वर्थे। उच्चारणक्रमसत्त्वादिति भावः। अनुभवक्रमस्य बाधात्स्मृतिक्रमे च नियामकत्वे ऽप्यत्र तदभावादाह। तेनैवेति। नन्वेवमपि कालैक्येन तद्वदत्रोत्तरत्वग्रहासम्भवेन कथमविशेषवारणमत आह। तत्र चेति। प्रतिबिम्बरूपे चेत्यर्थः। एवेन तद्व्यावृत्तिः। अत एव भित्तावित्युक्तम्। एकप्रदेशस्थघटपटकुड्यादिवत्। नन्वेवमपि तदुत्तरं सर्वदा तद्बोधापत्तिरत आह। तदुपेति। तत्प्रतिबिम्बेत्यर्थः। तत्र चेत्याद्युक्तिमुपपादयन् अस्य श्रोत्रग्राह्यत्वं निराचष्टे। अयं चेति। उक्तः स्फोटश्चेत्यर्थः। हृदयदेशस्थत्वादाह। अन्तरेति। तत्र तत्त्वं च येन तदुल्लेखस्तत्त्वम्। अत एव प्राक् बुद्धेस्तद्विशेषणम्। एवेन श्रोत्रग्राह्यत्वव्यवच्छेदः। नन्वेवमपि पर्यायशब्देष्वेकघटक-

ल्शादिपर्यायाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसो ऽप्रसिद्धप- दश्रवणे ऽप्यर्थप्रत्ययापत्ते' प्राक् गृहीतशक्तिकस्यैव स्फोटस्य त- नाभिव्यञ्जनात्। न च तत्तत्पर्यायाभिव्यक्तस्फोटे शक्तिग्रहस्तत्तत्प- र्यायश्रवणे ऽर्थधीहेतुरिति वाच्यम्। एव हि प्रतिपर्याय शक्ति- ग्रहावश्यकत्वे तत्तत्पर्यायगतशक्तिग्रहहेतुताया एव युक्तत्वात्। तव तु तत्तत्पर्यायाभिव्यक्तगतशक्तिग्रहत्वेन हेतुत्वे गौरवात्। अत आ- ह। व्यञ्जकेति। स्फोटे कस्मिन्। नार्थेति कारणाभावात्। न नु वैखर्या एव वाचकत्व कुतो न। किञ्च सा किमिति श्रोत्रग्रा- ह्यात आह। वैखरी त्विति। अग्रे ऽन्वयो ऽस्य। तथोक्तेश्चेति। इत्थं हि तत्। वागिन्द्रिय वर्णेष्वेवार्थवत् श्रोत्र च ध्वनिपरिणाममा- त्रविषयमिति ध्वनिर्नाम वागिन्द्रियादावुदानवायोरभिघाताज्जा- यमान उदानवायोराकाशस्य परमाणूनां वा परिणामभेद.। स च वर्णरूपो ऽप्यवाचकत्वात् ध्वनिरिति तद्व्याख्यातार.। तथा च- ध्वनिरूपपरिणाम इत्यर्थ। अत्र विशेषो ऽग्रे व्यक्ती भविष्यति। पतञ्जलीति। सूत्रखण्डनायोपाध्यायादपक्रान्तमधीयमानशब्दजात- मुपादत्त इत्यर्थेनापक्रमजविश्लेषाश्रयत्वादपादानत्व ससाध्य शब्दानामपक्रमण न युक्तमन्यथा सर्वथा तदापत्तिरिति शङ्कायां सन्ततत्वादित्यनेन शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमा- ना भिन्ना अपि सादृश्यात्तत्त्वेनाध्यवसीयमानां श्रोतुः पुन पुन- रुत्पाद्यमानत्वेन सन्ततत्वमिति पुन पुनः श्रोत्रप्रदेश गच्छतं स्फोटरूप शब्दमभिव्यञ्जयन्तीत्याशयकेन समाधायाथवा ज्यो तिर्वत् ज्ञानानि भवन्तीति हि तत्रोक्तम्। यथा प्रतिक्षणं वि- नश्यदपि ज्वालारूपज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वे- नाध्यवसीयमान सन्ततमिति व्यवहारविषयस्तथैवोपाध्यायज्ञाना- नि भिन्नानि शब्दरूपतामापद्यमानानि सन्ततान्युच्यन्ते ज्ञान- स्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकृत इति कैयट। आ- दिना अणुज्ञानाकाशपरादिसङ्ग्रह। अस्यास्तात्त्विकत्वात्समसत्ताक- त्वाच्चाह। परीति। अत एव पूर्वविरोधो न। एवेन नित्यत्वनिरासः। हरौ कैश्चिदन्त्यस्य प्रत्येकं त्रिषु सम्बन्धात्कैश्चित् वायो कै- श्चिदणूनां कैश्चित् ज्ञानस्य शब्दत्वप्राप्तिरिष्यते इत्यर्थस्तदाह। वायोरिति। औपाधिकं तस्य नानात्वमिति विनिगमनाविरहादाह।

प्राप्त्यादीति। अत एवोक्तं तेनैव।

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥

इति। वक्तुरिच्छेत्यनेनैकस्यैव वायोरनेकशब्दत्वोपपत्तिरुक्ता। शब्दतन्मात्रादिरूपपरमाणूनामिति। आदिना स्पर्शतन्मात्रादि। अत्रापि तदुक्तिमेवाह। अम्राणीवेति। इदम्। अभ्रिमाभ्रिमम्। तत्र। स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिता इत्यस्य पूर्वार्धम्। तस्याम्। तस्यां सत्यां तेन प्रेरिताः परमाणवः आभ्रवत्प्रचिताः सन्तः शब्दाख्यास्तद्रूपताप्राप्त्या तद्वाच्या इत्यर्थः। उभयत्र मानमिदम्॥ ५०॥

छायातपादिष्वप्येष क्रमः। छायातपतमांस्यप्येवम्।

अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः।
छायातपतमःशब्दभावेन परिणामिनः॥

इति तदुक्तेः। ज्ञानस्य। वक्तृज्ञानस्य। पराशक्तिसाहित्येन च तत्परिणाम इति बोध्यम्। कैश्चिदित्यनेन पराशक्तिरेव मध्यमावत्परिणामविशेषो ऽन्येषां मते वैखरीति सूचितम्। तदाह। प्रवादेषु। शास्त्रेषु। अत्र विषये दर्शनभेदः सिद्धान्तभेदो ऽनवस्थित इति।

आत्मा बुद्ध्या समेत्यर्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते—

इति शिक्षायामपि मारुत एव नाभेरूर्ध्वमुच्चरन् मूर्ध्न्यभिहत आत्मानं तत्त्वेनाभिव्यनक्तीत्यर्थः। आत्मान्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्वप्र-

त्या समेत्य विषयीकृत्य तद्बोधनेच्छायुक्तमनोऽभिहतकायाग्निप्रेरितो वायुर्मूधपर्यन्तं गतस्ततः प्रतिनिवृत्तो वक्राभिघातेन वर्णान् जनयत इत्यक्षरार्थः॥८१॥

(कुं॰टी॰)छायातमसोस्तेजोभावरूपतां तार्किका वदन्ति तान्निराकरोति। छायातपेति। यत्तु तेजोऽभाव एव तमः न हि तस्य गुणाश्रयतास्तीति तन्न। न ह्यस्मन्मते गुणाश्रयो द्रव्यमिति लक्षणमस्ति। किञ्च तमसस्तेजो ऽभावरूपत्वे रूपादावप्यन्धकारप्रत्यक्षापत्तिः। अणव इति । परमाणव एव सर्वशक्तिमत्वाद्भेदसंसर्गरूपा वृत्तिर्येषां कार्यभेदस्य सम्बन्धमाधातुं प्रवृत्ताः शब्दादिरूपेण परिणमन्त इत्यर्थः। परमाणूनां विलक्षणसम्बन्धाद्विभिन्नकार्योत्पत्तिरिति भावः । ननु दुग्धपरमाणुजन्यत्वस्य दध्नः स्वीकारे दध्नो ऽपि दुग्धत्वापत्तिरतस्तज्जनकपरमाणूनां भेद एवोचित इति चेन्न। शक्तिभेदादेव कार्यभेदात्। यत्तु द्रव्यत्वव्याप्यजातिः परमाणौ नास्तीति तार्किकाः तन्न। तथा सति द्रव्यत्वव्याप्यं यन्मूर्तत्वं तद्व्याप्यस्य पृथिवीत्वादेरपि तत्रानापत्तेः। वक्तृज्ञानस्येति। घट इति जानामीत्यादौ ज्ञानशब्दयोरभेददर्शनादिति भावः।आत्मा बुद्ध्येति। सः। वायुः। उदीर्णः। उद्गतः। वक्त्रमिति। शिरःकपालेनावष्टब्ध ऊर्ध्वगतिमलभमानस्ततः प्रत्यावृत्य वक्त्रमेव प्राप्येत्यर्थः। सङ्गीतरत्नाकरे ऽपि।

आत्मा विवक्षमाणो हि मनः प्रेरयते मनः।
देहस्थं वन्हिमाहन्ति स प्रेरयति मारुतम्॥
ब्रह्मग्रन्थिस्थितः सो ऽथ क्रमादूर्ध्वपथे चरन्।
नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिमिति।

विवक्षमाणः वक्तुमिच्छन् आत्मा अन्तःकरणं मनस्संज्ञकं

प्रेरयति तं मनः देहस्थमग्निं ताडयति स वह्निर्वायुं प्रेरयति स वायुरूर्ध्वं गच्छन् आघातेन मुखादिषु ध्वनिं जनयति। असङ्गो ह्ययं पुरुष इति श्रुतेरकर्तृस्वरूपस्यात्मनः प्रयोजकत्वासम्भवादाह । अन्तःकरणमिति । अन्तःकरणपरिणामपराद्वत्तिरूपा बुद्धिरिति भावः । वाक्यविषयस्यान्तःकरणगतत्वाभावादाह । संस्काररूपेणेति । एतदभिप्रायेणैव सूक्ष्मरूपेणावस्थानमित्युच्यते । एकाङ्गुलं देहमध्यमग्निस्थानं ततो नवाङ्गुले चतुरङ्गुलो देहस्य कन्द इति ब्रह्मग्रन्थिरिति चोच्यते । उद्यन् । उद्गच्छन् ॥ ५१ ॥

( क० टी० ) अत एव द्वितीये ऽन्यामपि तदुक्तिं वक्तुं तद्घटकतया प्रासङ्गिकमाह । छायेति । एवम् । अणुपरिणामरूपाणि । तत्र बीजमाह । सर्वेति । अत एवाह । भेदेति । भेदससर्गरूपावृतिर्येषां ते । छायेति। चतुर्णां द्वन्द्वस्य भावशब्देन षष्ठीतत्पुरुष । तदुक्ते.। हर्युक्तेः। प्रागुक्ताविरोधायाह । परेति । तत्तदिति । वाद्यादीत्यर्थः । प्रकारान्तरेणाप्यविरोधायाह । कैश्चिदिति । मतान्तरासत्त्वे एतदुक्तिरधिकेति स्पष्टमेव । षण्णां तत्त्वस्य निर्विवादत्वादाह । मध्यमेति । कर्मणि यत्रित्याह । शास्त्रेष्विति । इतिस्तदर्थसमाप्तौ । किञ्च ।

अथायमान्तरो ज्ञाता सूक्ष्मो वागात्मना स्थितः ।
व्यक्तये स्वस्वरूपस्य शब्दत्वेन विवर्तते ॥

ज्ञानावृत्तिविशिष्टमन्त.करणं समनोभावमापद्य तेजसा पाकमागततेजसा जाठरेण पाकं दाकं वायुमाविशति प्राणमथासौ समुदीर्यते असौ सवृत्तिमनोयुत प्राणः । तदाह ।

अन्त करणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसा सो ऽपि पच्यते ॥

तद्धर्मेण दाहेन दाहवशादेव विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूप. पृथग्विधेति श्रुतिरूपैर्ध्वनिरूपै. स्नेहेति शेषः । प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयत इति तेनोक्तम् । प्राण. सवृत्तिकमनोरूपान्तःकरणयुत । एतावतैव ज्ञानस्य शब्दत्वौभेति बोध्यम् । आह । आत्मेति तत्प्रयार्थम् । आदावविरोधायाह । मारुत ेति ।

युक्तम्। प्रेरितम्। मूर्द्धेति। वेगात् वृत्तः वक्त्रं प्राप्येति शेष। वक्त्रेति। उक्तयत्नसहायेन जिह्वाग्रादिस्पर्शपूर्वकतत्तत्स्थानाभिघातेनेत्यर्थः॥ ५१॥

वर्णेषु पौर्वापर्यं बौद्धम्। तदुक्तं परःसन्निकर्ष इति सूत्रे भाष्ये उच्चरितप्रध्वस्तानां सन्निकर्षः पौर्वापर्यं चानुपपन्नमित्याशङ्क्य बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यं। बुद्धिविषयमेव शब्दाना पौर्वापर्यम्। य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थे ऽयं शब्दः प्रयोक्तव्यः अस्मिंश्च शब्दे ऽये तावद्वर्णास्ततोऽयं ततोऽयमिति। तन्वन्नीतिः सकलविषयव्यापिनी बुद्धिः धीरः पण्डितः कर्ता बुद्धौ अन्तःकरणे चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यशब्दान् प्रतिबिम्बितान् कृत्वा शब्देन सहितान् तद्वाच्यानर्थान् बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः। बुद्धिविषयमित्यस्य बुद्धिस्थशब्दविषयमेवेत्यर्थः। तत्र वक्त्रुद्देशेनैव शास्त्रप्रवृत्तेस्तस्यैव धर्मफलश्रवणाच्च वक्तृबुद्धिस्थत्वमुपपादयति। य इति। अस्मिन्नर्थे इति। एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तम्। श्लोके पौर्वापर्यमित्युपलक्षणम्। अयमिति बुद्ध्युपारूढस्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः। अन्यथा इदमः प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः। शब्दः प्रयोक्तव्यः परप्रत्यक्षयोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यङ्क्तव्य। अस्मिन् शब्दे इत्यस्य व्यञ्जनीये इति शेषः। यत्तु बुद्धिगतपौर्वापर्यं वर्णेष्वारोप एतद्भाष्यार्थ इति तन्न। तद्वदेव त-

दूबुद्धीनामप्युत्पन्नविनाशिनथा प्रत्यक्षपरामर्शकेद्-मादिघटिताभिलापाभिलप्यमानस्य पौर्वापर्यस्य तत्रा-प्यसम्भवात् । प्रकृतिविकृतिभावो ऽप्यन्तःकरणस्थे-कारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इति स्था-निवत्सूत्रे भाष्ये स्पष्टम्। अयं च शब्दस्तत्तत्प्राणिहृद्-यदेशावच्छिन्नाकाशदेशस्थः सर्वसमष्टेर्विराजो हृदय-रूपवाह्याकाशदेशस्थश्च । स च लाघवादेक एव वि-भुः। यथैकत्र श्वेतद्रव्ये रूपं व्यापकं तथास्याप्याकाश-देशस्थस्य तथात्वमुचितम्। एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो सर्वयागेष्वङ्गं भवतीति सरूपसूत्रे भाष्यात्। प्रादुर्भूतो ऽभिव्यक्तः। स एव कत्वादिनाभिव्यक्तः श्रोत्रग्राह्यः पदादिरूपेण तु बुद्धिग्राह्य इत्यणुदित्सूत्रे भाष्ये स्पष्टम् । तत्र हि श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेश इत्युक्तम् ॥ ५२ ॥

( कु०टी० ) उच्चरितेति। क्रमोत्पन्ना अपि वर्णा यदि ति-ष्ठेरन् तदा स्यात्पौर्वापर्यमत उक्तं। प्रध्वस्तानामिति। उच्चरितप्र-ध्वंसित्वं चोच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्व-म् । नष्टविद्यमानयोः सम्बन्धासम्भवात्सन्निकर्षो न सम्भवति नापि संहितेति भावः। ननु पूर्वकालोत्पन्नः पूर्वः परकालोत्पन्नः पर इति न कथं चित् पौर्वापर्यम्भव इति चेत्सत्यम्। यदि कालिकं पौर्वापर्यं गृह्येत तदा पूर्वपरयोर्युगपत्स्थित्यभावादिको यणची-त्यादिसंहिताकार्यासम्भवः। बुद्धिकल्पित एव सर्वः पौर्वापर्यस-न्निकर्ष इत्याह। बुद्धौ कृत्वेति। बुद्धौ अन्तःकरणे। चेष्टाः। शब्दान् कृत्वा । प्रतिविम्बितान् कृत्वा । अन्तःकरणस्य स्वच्छतया वा स्वशब्दरूपापत्त्यान्तःकरणवृत्तित्वेन प्रतिभानादिति भावः । श

ब्देन सह वाच्यानर्थान् बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः । तत्त्वन्नीतिरिति । तननं तत् सा अस्ति यस्या सा तत्वन्ती सकलविषयव्यापिनी एतादृशी नीतिर्बुद्धिर्यस्य स तत्त्वन्नीतिः । क्वचित्तन्वन्नीतिरिति पाठ । तत्र तन्वती सकलविषयव्यापिनी बुद्धिर्यस्येत्यर्थः । भाष्यकारः कारिकार्थमाह । बुद्धिविषयमिति । तदेवोपपादयति । य एष इति । सदसद्विवेचनी बुद्धिः प्रेक्षाबुद्धिः । अन्तःकरणे इति । अन्तःकरणमेव निश्चयरूपवृत्तिदशायां बुद्धिसंज्ञां लभते। प्रतिबिम्बितानिति।अन्तःकरणवृत्तित्वमप्रतिभातानित्यर्थः । तत्रैव । बौद्धशब्दे एव । बुद्धिपौर्वापर्यस्य निराकरिष्यमाणत्वादाह । बुद्धिस्थेति । वक्त्रु देशेनैवेति । वक्तृबुद्धिस्थमुद्दिश्यैवेत्यर्थः । बाह्यशब्दे प्रक्रियाया असम्भवादिति भावः । तस्यैव । वक्तुरेव । धर्मफलश्रवणादिति । शास्त्रफलधर्मश्रवणादित्यर्थः । एतदर्थमिति । शब्दप्रगोगस्यार्थविशेषनियन्त्रितत्वाद्बुद्धौ अर्थदर्शनमप्युक्तमित्यर्थः । उपलक्षणमिति । पूर्वोक्तस्य बोध्यबोधकभावस्यापीत्यर्थः । अयमितीति । बुद्ध्युपारूढत्वेनैव श्रवणीयं यत्सूक्ष्ममुच्चारणं तेन व्यङ्ग्यः शब्दो भाष्यस्थेनेदंशब्देन परामृश्यत इत्यर्थः । अन्यथेति । बौद्धशब्दपरामर्शे इत्यर्थः । परेति । परबोधानुकूलोच्चारणेन व्यञ्जनीय इत्यर्थः । व्यञ्जनीये इति । वर्णाना शब्दव्यञ्जकत्वमेवेति भावः । तद्वदेवेति । वर्णवदेव वर्णबुद्धीनामप्यानित्यतया प्रत्यक्षपरामर्शकेनेदंशब्देन विषयीकरणासम्भवादित्यर्थः । मन्मते तु व्यङ्ग्यशब्द इदमा परामृश्यत इति भावः । ननु इकारादीनां बुद्धिस्थत्वे कथं तस्य यकाराद्यादेशबुद्धिरत आह । प्रकृतिविकृतिभावो ऽपीति । सत्कार्यवादे कार्यकारणयोरभेदाद्बुद्धिस्थत्वेन रूपेण प्रकृतित्वं बाह्यरूपेण विकृतित्वं तथेहापि स्पष्टमिति का-

र्येविपरिणामादिति तत्र समाहितत्वात्। कार्या बुद्धिः तस्या विपरिणाम इत्यर्थः।

अयं च शब्द इति। ध्वनिव्यङ्ग्यतया वाचकत्वेन स्वीकृत इत्यर्थः। समष्टेरिति। वनमित्याकारिका एकताबुद्धिः समष्टिः मायादिभुवनान्तविराट्पुरुषस्य शरीरं स्थूलदेहसमष्ट्या विराडुच्यते विराजो हृदयदेश एव ह्याकाश उच्यत इत्यर्थः। देशस्थश्चेति। व्यापकत्वादुभयदेशस्थ इत्यर्थः। स चेति। शब्दश्चेत्यर्थः। यथैकत्रेति। यत्र तु भिन्नावयवावच्छेदेन रूपभेदस्तत्र रूपमव्याप्यवृत्त्येवेति भावः। एतेन तदर्थं चित्ररूपस्वीकारोऽपास्तः।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।

इति स्मृतिविरोधात्। किञ्चैवं सुरभ्यसुरभिकपालारब्धघटस्य निर्गन्धत्वमेव वाच्यम्। तथा च गन्धम्प्रति पृथिवीत्वेन हेतुत्वस्य व्यभिचारः। तथेति। रूपादिवच्छब्दस्यापि व्याप्यवृत्तित्वं न्याय्यम्। यथा हि व्यापकस्यापि रूपस्य चक्षुस्संयोगसमानाधिकरणस्यैव प्रत्यक्षमेवं देशान्तरे शब्दप्रत्यक्षतेति भावः। इन्द्रशब्द इति। मीमांसकैश्चतुर्थ्यन्तशब्दातिरिक्तया देवताया अस्वीकारात्। शाब्दिकमतेऽपि शब्दार्थयोरभेदाद्देवतारूपत्वं मन्त्रस्य विग्रहवत्त्वं स्वीकृत्य तु देवतानां कर्माधिकार उक्त उत्तरमीमांसायां शब्दानामर्थपरत्वस्यौत्सर्गिकत्वात्प्रयोगसमवेतार्थस्मृतावेव तात्पर्यं नाज्ञातदेवताविग्रहादावपीति तु मन्त्राधिकरणस्याशयः। भाष्यादिति। जातिरेव शब्दार्थ इत्युपक्रम्य एक एवेन्द्रशब्दः सर्वेषु यागेषूपकरोतीत्युक्तत्वात्। एतच्च शब्दस्य व्यापकत्व एव युज्यते। कत्वादिनेति। ध्वनिगतकत्वादेस्तत्रारोपात्। पदादिरूपेणेति। पदे वर्णाभावाद्बुद्धिपरिकल्पितपदत्वमिति भावः। भाष्ये कथमिदं स्पष्टमत आह। तत्र

हीति । श्रोत्रोपलब्धिरिति । श्रोत्रे एवोपलब्धिर्यस्येत्यर्थः । श्रोत्रोपलब्ध्या च शब्दस्याकादेशत्वं प्रतिपादितम् । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वादाकाशदिशो नातिरिक्तत्वमित्याभिप्रायेण देशशब्दप्रयोग आकाशे बोध्यः । यदि तु शङ्खादीनामेव गुणः स्यात्तदानिष्क्रियस्य शब्दस्य श्रोत्रपर्यन्तं गमनं न सम्भवति श्रोत्रस्य वा तत्पर्यन्तं गमनं न सम्भवतीति श्रोत्रसम्बन्धाभावात्प्रत्यक्षं न स्यात् । भाष्यस्थविशेषणत्रयेण रूपत्रयं दर्शयति । तत्रेत्यादिना । तार्किकमतं दूषयति । अन्यथेति । कदम्बपुष्पवत् दशदिक्सञ्चारिणो दश शब्दा उत्पद्यन्ते ते च श्रोत्रेण सम्बद्धा गृह्यन्त इत्यर्थः । आदिना वीचीतरङ्गन्यायः । तद्यथा वीचिः प्रथममुत्पन्ना वीच्यन्तरं जनयति एवं शब्दो ऽप्याद्यः शब्दान्तरं जनयति, तदपि शब्दान्तमित्येवं श्रोत्रसम्बन्धो भवति । तत्प्रत्यक्षानुपपत्त्येति । आद्यशब्दस्य श्रोत्रसम्बन्धाभावादिति भावः । ननु एकशब्दत्वे अतिदूरस्थस्यापि प्रत्यक्षापत्तिरत आह । तत्रेति । यथा तार्किकमते अतिदूरपर्यन्तं न शब्दोत्पत्तिस्तथास्मन्मते ऽभिव्यक्तिरपि नेत्यर्थः । अत एव । शब्दस्य व्यापकत्वादेव । स्वं श्रोत्रं तेन श्रोत्रेण ॥ ५२ ॥

(क० टी०) प्रागुक्तपूर्वपक्षसिद्धान्तभूतार्थे सर्वत्र मानमाह । तदुक्तमिति । प्रागुक्त सर्वमित्यर्थः । कथमुक्तमित्याशङ्कायां विशेषमाह । उच्चरीति । सन्निकर्ष. सहितासञ्ज्ञोपयोगिपौर्वापर्यमकालव्यवायम् । सहितेति न्यासान्तरे तदुपयोग्यःशङ्क्येति एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वसित्वाच्च वर्णानां एकैकवर्णवर्तिनी वाक् न द्वौ युगपदुच्चारयति गौरिति यावदुकारे वाग्वर्तते नौकारे न विसर्गे च यावदौकारे न गकारे न विसर्गे च यावद्विसर्गे न गकारे नौकारे न्ये ऽच्चोच्चरितप्रध्वसिनः खल्वपि वर्णा उच्चरितः प्रध्वस्त इति अथापर. प्रयुज्यते वर्णो वर्णस्य सहाय इत्य

मेनेति शेष.। अथ तद्वर्णध्वंसानन्तरमपरो वर्ण प्रयुज्यते तावतापि स पौर्वापर्यादिव्यवहारेण वर्णान्तरस्य सहाय इति शेषशेषार्थ । उक्तामिति शेष.। किं तदाह। बुद्धाविति। तन्वन्निति । तन्वती विषयान्व्याप्नुवती नीतिर्यस्य स । तत्त्ववदिति पाठे तनन तत् सास्ति यस्याः सा तत्त्वती सकलविषयव्यापिनी नीतिर्बुद्धिर्यस्य स इति स एवार्थ । ये गत्यर्थास्ते ज्ञानार्था इति । नीतिर्बुद्धिस्तदुभयसाधारणमर्थमाह। सकलेति। रणाद्युपयोगिवैर्यानुपयोगादाह । य पण्डित इति। कर्त्ता। प्रयोक्ता श्रोता च। अनेककाला अनेका क्रिया इत्यर्थे पौनरुक्त्यात् तज्जन्यत्वात्ताच्छब्द्यमित्याह। कण्ठेति। अत एव तत्कर णासम्भवात् । कृत्वेत्यस्य लक्ष्यार्थमाह। प्रतीति। शब्देनेत्यस्यानर्थक्यादेराह। सहेति। आर्थिकमाह। तदिति। बुद्धावित्यस्यार्थमाह। बुद्धीति। अन्त.करणेत्यर्थः । अत्र मध्यमणिन्यायेनान्वय इत्याह। तत्रैवेति। तद्देशे एवेत्यर्थः। प्राग्वदाह। व्यवेति। तदनन्तर तेषां शब्दानामर्थानां चैत्तच्छब्दोत्तरमय शब्द एतद्वर्णोत्तरमय वर्ण एतत्क्रियोत्तरमिय क्रियेत्येव रूप त शास्त्रे लोके च कुर्यादित्यर्थः। । नन्वेव बुद्धिविषयमिति व्याख्यानमनुपपन्न षष्ठीतत्पुरुषे पुंस्त्वौचित्यात्, बहुव्रीहौ तस्य शब्दे विषयकत्वेन बाधादत आह। बुद्धीति। तात्स्थ्यात्ताच्छब्द्यमिति भाव । बुद्धे साकाङ्क्षत्वादाह। तत्रेति। शब्देष्वित्यर्थः। विशेषग्रहणे बीजमाह। वक्तृदेशेनैवेति। तस्यैव। वक्तुरेव। शास्त्रस्य धर्मरूपस्य फलेत्यर्थः। एक' शब्द इत्यादिश्रुतेरिति भाव । नन्विदमाधिक श्लोके पौर्वापर्यस्यैवोक्तत्वादत आह। एतदर्थमेवेति। अन्यथा तदानर्थक्य स्पष्टमेव। अपिना शब्ददर्शनसमुच्चयः। नन्वेवमग्र न्यूनतात आह। श्लोके इति । अत एव सन्निकर्षोपपत्तिरपीति भावः। इति'। इत्यनेन । मात्रपदेन परव्यवच्छेदः। तथाच मध्यमास्थनादाश एव विवक्षित.। अन्यथा। परादिस्थग्रहणे। अथ पौर्वापर्यमाह। अस्मिन्निति। अत एवाह। व्यञ्जेति। प्राचोक्त खण्डयति। यास्विति। तद्वदेव । वर्णवदेव। पूर्वहेतुना भाष्ये युगपदुपलम्भस्यापि निरस्तत्वात बुद्धिरत्र प्रत्यक्ष नान्तःकरणमित्याह । न बुद्धीनामिति । आदिना देशादि । तत्रापि। बुद्धिष्वपि। अपिर्वर्णस्यै-

व समुच्चये। एव प्रागपि। नन्वेव कथमिको यणित्यादौ वर्णानां प्रकृतिविकृतिभावो ऽत आह। प्रकृतीति। एवञ्च न वर्णनाशः किन्तु बुद्धिवि ारिणाममात्रमिति भाव । स्थानिवदिति । सर्वे सर्वपदादेशा इत्यादिनेति भाव । वक्ष्यमाणभाष्याविरोधाद्यर्थमाह । अयञ्चेति। प्रागुक्त स्फाटात्मेत्यर्थः। तत्तत्प्राणीति। अनेन हिरण्यगर्भस्यापि सङ्ग्रह । विनिगमनाविरहादाह। सर्वेति । अनेन ध्वन्यात्मकशब्दस्यापि सङ्ग्रह । तस्य प्रत्यक्षत्वायाह। स चेति। तदुभ प्रदेशस्थशब्दश्चेत्यर्थ । लाघवमुभयत्र हेतु । नन्वेवमनेकत्वापत्तिरिति कथ प्रागुक्तमेकत्वमत आह। एक एवेति। नानात्वे गौरवस्यकृत्वे दोषाभावस्य चोक्तत्वादिति भाव। युक्तं च विभुत्वमित्याह। यथैकेति। सर्वसम्बन्धादिति भाव । व्यापकम्। तद्व्यापकम्। आकाशदेशेति बहुव्रीहि । सर्वसम्बन्धादाश्रयस्य व्यापकत्वाच्चेत्यर्थः। अत्र भाष्यसम्मतिमप्याह। एक इति। यद्यपि भाष्ये एकस्यानेकाधिकरणस्य युगपदुपलम्भे दत्तमादित्यदृष्टान्तमेककर्तृकस्य तस्यासम्भवात्सखण्ड्यैव तर्हीन्द्रवद्विषयस्तद्यथा इन्द्रो ऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्राङ्ग भवति एवमाकृतिर्युगपत्सर्वत्र भविष्यतीत्युक्त तथापि इतीन्द्रेत्यत्र साकाङ्क्षत्वाद्वाक्यस्यैइन्द्र इत्यादेरिन्द्रशब्द आहूत. प्रादुर्भूतः सर्वत्राङ्गमिति विशेष इति युगपत् शब्दप्रादुर्भावे ऽव्ययीभावे कृते वतिप्रत्यय. कस्याप्यनेक इति वाक्यशेष.। एकस्यापीन्द्रशब्दस्य यथानेको यागोऽङ्गित्वेन विषय एकबोद्धृज्ञानविषयश्च एकदेशावच्छिन्नानेकयागेषु तथा दर्शनसम्भवात्, तथा एकस्या अपि जातेरनेको विषय आश्रयतयेत्यर्थ.। इन्द्रशब्दस्य प्रादुर्भाव इत्यर्थेन प्रादुर्भावविषयेन्द्रशब्दरूपा तद्बोध्या वैका देवता व्रीह्यादिद्रव्यवदङ्गतां प्रतिपद्यत इत्यर्थ इत्यभिप्रेत्याह। इन्द्रशब्द इत्यादि। शतशब्दोबहुपर.। आह्वानफलमाह । प्रादुरिति । नित्यत्वादाह। अभीति। अयञ्चेत्याद्युक्तार्थे भाष्यान्तरमपि मानमिति सूचयन्नाकाशदेशत्वे मानमाह। स एवेति। आकाशदेशस्थ एवेत्यर्थ.। आदिना वाक्यम्। बुद्धिरन्त करणमेव । उक्तामिति। अस्य ह्स्वावित्याद्यकारस्य वर्णसमाम्नायस्थाकारतो भेदेनानण्त्वात्सवर्णाग्राहकत्वमाशङ्क्याव-र्णस्यैकत्वात्सिद्धमिति समाधिप्रघट्टके एकत्वे एकस्य पुंसो यु-

गपदनेकदेशेषूपलम्भो न स्यात् उपलभते त्वकारमेको द्रष्टानेकाधिकरणस्थमादित्यदृष्टान्तेनेति एकत्वानित्यत्वे एवेत्याशङ्क्योक्तरीत्यादित्यदृष्टान्तं सखण्ड्य शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमेवायुक्तमित्याशयेनाकारमप्यनेकाधिकरणस्थं नोपलभते किं कारण यत इत्युक्तोक्तमित्यर्थः। अत एव तदग्रे एक च पुनराकाशमित्युक्तम्। तत्र श्रोत्रेत्यस्य श्रोत्रे एवोपलब्धिर्यस्येत्यर्थः। करणक्तिनन्तेन समानाधिकरणबहुव्रीहिर्वा। एतद्विशेषणफलं तु शब्दस्याकाशदेशत्वप्रतिपादनम्। न च दिश एव श्रोत्रत्वात्कथं तत्रोपलब्ध्याकाशदेशत्वसिद्धिरिति वाच्यम्। कर्णशष्कुल्यवच्छिन्ननभस आकाशप्रदेशविशेषस्य श्रोत्रत्वात्। चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वावश्यकत्वात्। दिगनतिरिक्तमेवाकाशमिति तत्त्वात्। नन्वेवमप्यनेजोशगतमठादिरूपस्य तेजश्चक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्व किमसम्बद्ध तद्ग्राहक सम्बद्ध वा। नाद्य। रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणापत्तेः। अन्त्ये ऽपि किं श्रोत्रस्य विषयदेशगमनात्सम्बन्ध उत शब्दस्य श्रोत्रदेशगमनात्। नोभयम्। उभयोरपि निष्क्रियत्वेनागमनात्। दूरदेशस्थशब्दाग्रहण तु दूरत्वादिदोषस्य प्रतिबन्धकत्वाच्छ्रोत्रदेशे अभिव्यक्तेस्तथाच तस्माकाशदेशदृशत्वमभ्युपेयम्। तथासति तद्वदेव तस्यापि व्यापकत्वेन श्रोत्रदेशे ऽभिव्यक्तस्य तेन ग्रहः। नन्वेवमनेनैव बुद्धिविषयत्वरूपबुद्धिनिर्ग्राह्यत्वमिति तत्पुनरुक्तमिति चेन्न। आश्रुतिरोधीयमानानेकवर्णवत् घटकलशादिशब्दग्रहणसम्भवदर्शनाय तदुक्ते। तस्य च पूर्वपूर्वध्वन्युत्पादिनाभिव्यक्तिजनितसस्कारपरम्परासहकृतान्त्यवर्णबुद्ध्या निःशेषत. स्वरूपतो ऽर्थतश्च ग्राह्य इत्यर्थ.। एवञ्च तादृशसस्कारविशिष्टान्त करणसंयुक्तेन तादृशसंस्कारविशिष्टन श्रोत्रेणान्त्यवर्णसम्बद्धेन वर्णसमुदायप्रतिविम्बवदखण्डस्फोटरूपपदादिप्रत्यक्षमिति तात्पर्यम्। नन्वेव सर्वदा शब्दोपलम्भः स्यादत उक्तम्। प्रयोगेणेति। प्रयुज्यते इति प्रयोगो वर्णस्तेनानाभिव्यक्त इत्यर्थ.। अत एवोक्तमाकाशेति। एक चेति। एवञ्चैकत्राम्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वाच्चद्गन. शब्दो ऽप्येक एव तत्रैव तस्योपलम्भ इति भिन्नदेशोपलम्भ एवासिद्ध इति तात्पर्यम्। नन्वेकत्वे ऽय पूर्वो ऽय परो ऽय देवगृहो ऽय

राजगृह इत्यादिभेदावभासः कथमिति चेन्न। देशभेदेन प्रतिभासस्य भिन्नदेशावस्थितपुरुषोदीरितव्यञ्जकवर्णकृतत्वादौपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे बाधकः। एवं संसर्गानित्यतापि तस्येवास्यापि न बाधिका। तस्यापि नील नभ इत्यादिससर्गानित्यताप्रतीतेरिति तात्पर्यम्। अत्र शब्द इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्व च ध्वनितम्। तदेतत्सर्वमभिप्रेत्य निष्कृष्टमाह। तत्रेति। तयोर्मध्ये इत्यर्थः। अन्यथा तत्स्थस्य विभोस्तस्यानङ्गीकारे सर्वत्र भेदस्यौपाधिकस्यैव सत्त्वेन तस्यैव च व्यवहारोपयोगित्वेनौपाधिकभेदेन भेदस्य दुर्वारत्वेन पृथिव्या सुम्नादिदेशभेदेन भेदवदाकाशस्यापि घटादिभेदेन भेदादाविति यावत्। आदिना वीचीतरङ्गन्यायः। तत्रेति। शब्देत्यर्थः। ननु विभुत्वे रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणापत्तिरत आह। तवेति। फलबलकल्प्यत्वरूपयुक्तेरन्यत्र दूरत्वस्य प्रतिबन्धकत्वस्य च तुल्यत्वादिति भाव। उक्त पोषयति। अत एवेति। तत्स्थत्वेन तत्त्वादेवेत्यर्थः। स्येति। अन्यथातिप्रसङ्ग उक्त एव। उक्तन्यायेन तदुपपादनेऽपि तत्र तत्त्वाभाव एवेति भावः॥ ५२॥

१*तत्र श्रोत्रोपलब्धित्वं कत्वादिनाभिव्यक्तत्वम्। पादादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्। स च प्रयोगेण वैखरीरूपेणाभिज्वालितः स्वरूपरूषितः कृत इत्यर्थः। अन्यथा कदम्बमुकुलादिन्यायेनानन्तशब्दजशब्दानां तत्प्रागभावध्वंसानां च तत्प्रत्यक्षानुपपत्त्या कल्पने गौरवं स्यात्। तव किञ्चिद्दूरदेशपर्यन्तमुत्पत्तिवन्ममाभिव्यक्तिरपि तावद्दूरपर्यन्तमेवेति न दोषः। अत एव कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रेण तद्ग्रहः। स्वसमवेतशब्दस्यैव तेन ग्रहात्॥ ५२॥*

आकाशस्य शब्दगुणकत्वसाधनम्। नन्वाकाशदेशः शब्द इत्यसङ्गतम्? आकाशसत्त्वे मानाभावात्। न च शब्दगु-

१** एतच्चिन्हान्तरितो ग्रन्थः १९२ पृष्ठे १४ पङ्क्त्यग्रे योजनीयः।

णितया तत्सिद्धिः । शब्दस्याकाशगुणत्वासिद्धेः । स्पर्शवद्द्रव्यविशेषगुणत्वस्यैव शब्दे ऽङ्गीकारात् । न चायाद्द्रव्यभावितयाश्रयादन्यत्रानुपलम्भापत्तिः, तादृशनियमानङ्गीकारात् । तत्राप्यन्यदेशावच्छिन्नाकाशाश्रयस्य कर्णशष्कुल्यवच्छिन्न उपलम्भात् । न च द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणयोगित्वमेव स्पर्शवत्त्वमिति वाच्यम् । तस्य नियमस्य स्ववासनाकल्पितत्वात् । अत एव भाष्ये ऽप्याकाशदेश इत्येवोक्तं न त्वाकाशगुण इति चेन्न ।

आधारशक्तिः प्रथमा सर्वसंयोगिनामयम् ।
इदमत्रेति भावानामभावानां च कल्पने ॥
व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते ।
कालात् क्रियाविभज्यन्ते आकाशात्सर्वमूर्त्तयः ॥
एतावानेव भेदो ऽयमभेदोपनिबन्धनः ।

इति हरिणैव समाधानात् । इदं नक्षत्रचक्रमत्र तिष्ठति अत्रैतदभाव इति निर्दिष्टवस्तुविषये पृथ्व्यादेराधारसम्भवेन तदाधारस्यैवाकाशसंज्ञकत्वात् । एवं च पृथ्व्यादीनामपि परमाणुद्वारा स एवाधार इति सर्वभावानामाधारशक्तिराकाशाश्रया । आधारशक्तिरयमिति तु शक्तिशक्तिमतोरभेदादुक्तम् । एवं चाधारशक्त्यैवान्यथानुपपन्नयाकाशसद्भावावगमः । इदमाकाशस्याधारत्वं सिद्धस्वभाववस्तुविषयम् । साध्यस्वभावक्रियाविषयं तु कालस्याधारत्वमित्याह । कालादिति । जन्मास्थितिनिरोधेषूपकुर्वन् कालः क्रियाधार इति । एतच्चोपरिष्टा-

स्स्फुटीभविष्यति । मूर्तिपदं क्रियातिरिक्तसर्वपदार्थबोधकम् । अयम्भेदः आकाशः काल इति भेदः । एतावानेव व्यावहारिक एव । ननु किं तर्ह्ययं निर्निबन्धन एव नेत्याह । अभेदेति । भेदरहितं यद्ब्रह्म तदुपनिबन्धनं वस्तुभूतं यस्य स इत्यर्थः । ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञां लभत इत्यर्थः ।

अखण्डः काल इति मते तस्यातिरिक्तत्वखण्डनमिदं बोध्यम् । एवं च सर्ववस्त्वाधारदेशत्वेन शब्दस्यापि तद्देशत्वे श्रोत्रोपलब्धिगुणेन भाष्ये उक्तम् । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वेनेन्द्रियाणामसम्बद्धविषयाग्राहकतया तत्तद्भूतसम्बद्धगुणस्य च तत्तदिन्द्रियग्राह्यतया चाकाशदेशस्थत्वमेव शब्दस्येत्याशयात् ॥ ५३ ॥

(कुं टी.) शब्दाश्रयतयातिरिक्तं द्रव्यमाकाशमिति तार्किकमतं निराकरोति । न चेति । असिद्धेरित्यत्र हेतुमाह।स्पर्शेति । स्पर्शवतः पृथिव्यादिचतुष्टयस्य विशेषो वायुस्तस्य गुणः शब्द इत्यर्थः । पृथिव्यामनुष्णाशीतस्पर्शस्वीकारस्तु त्वाचप्रत्यक्षे स्पर्शस्य हेतुत्वानुरोधात् । अत्र वैशेषिकाः । शब्दो न स्पर्शवतो विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वककत्वात्, यो हि पृथिव्यादेर्गुणः सोऽग्निसंयोगजन्यः, अथवा समवायिकारणगुणपूर्वकः न च शब्दस्तथा । नापि वायुगुणः आश्रयनाशजन्यनाशप्रतियोगित्वाभावादिति वदन्ति । तान्निराकरोति । न चायावद्द्रव्येति । यावद्द्रव्यं सकलद्रव्यम्, तथाच पृथिव्यादिगुणस्य स्वाश्रयमात्रवृत्तितयान्यत्र प्रत्यक्षानापत्तिरित्यर्थः । तादृशेति । गुणिनिष्ठत्वमेव पृथिव्यादिगुणस्येति नियम-

इत्यर्थः । अनङ्गीकारादिति । पुष्पसौरभस्य वायुनानयनदर्श-नात् । न च तत्र पुष्पावयवो ऽप्यायातीति वाच्यम् । पुष्पस्य लघुत्वापत्तेः।आश्रयात्।वायोः।अन्यत्र।आकाशे। यावद्द्रव्यभावितयेति त्वपपाठः । आश्रयनाशजन्यनाशप्रतियोगित्वं यावद्द्रव्यभावित्वमिति हि तार्किकाणां प्रसिद्धिस्ततश्चाश्रयादन्यत्रेत्यक्षरास्वारस्यम् । भाष्यस्थविशेषणत्रयेण रूपत्रयं दर्शयति। तत्रेत्यादिना । तार्किकमतं दूषयति । अन्यथेति । कदम्बपुष्पवद्दशदिक्सञ्चारिणो दश शब्दा उत्पद्यन्ते ते च श्रोत्रेण सम्बद्धा गृह्यन्त इत्यर्थः । आदिना वीचीतरङ्गन्यायः । तद्यथा वीचिः प्रथममुत्पन्ना वीच्यन्तरं जनयत्येवं शब्दो ऽप्याद्यः शब्दान्तरं जनयति तदपि शब्दान्तरमित्येवं श्रोत्रसम्बन्धो भवति तत्प्रत्यक्षानुपपत्त्येत्याद्यशब्दस्य श्रोत्रसम्बन्धाभावादिति भावः । नन्वेकशब्दत्वे ऽतिदूरस्थस्यापि प्रत्यक्षापत्तिरत आह । तत्रेति । यथा तार्किकमते ऽतिदूरपर्यन्तं न शब्दोत्पत्तिस्तथास्मन्मते ऽभिव्यक्तिरपि नेत्यर्थः । तवापीति । देशान्तरे उत्पन्नस्य शब्दस्य देशान्तरे ऽप्युपलम्भात्तार्किकाणामपि गुणमात्रनिष्ठत्वानियमो नेत्यर्थः । द्रव्यग्राहकेति । चक्षुषा घटग्रहणानन्तरं संयुक्तसमवायेन तद्गुणप्रत्यक्षाद्गुणिनोः समानेन्द्रियग्राह्यत्वमेवेत्यर्थः । स्ववासनेति । श्रोत्रेणाकाशस्याग्रहणे ऽपि तद्गुणस्य शब्दस्य ग्रहणादिति भावः। आकाशदेश इति । आकाशदेशावच्छेदेत्यर्थः । आधारशक्तिरिति । अस्य पूर्वार्धं तु ।

आकाशमेव केषा चिद्देशभेदप्रकल्पनात् ।

इति । केषां चिन्मतं संयोगिभेदेनाकाशस्य नानात्वादाकाशमेवाधिकरणमित्यर्थः । सर्वसंयोगिनामिति । अयम्भावः । यथा नक्षत्रादीनामधिकरणमाकाशं तथा पृथिव्यादिस्थानां

रथादीनामपि मुख्यमधिकरणमाकाशं, समवायिनां तु स्वाश्रयद्वारा परमाणौ विश्रामः, परमाणूनां चाकाशमेवाधिकरणमित्ययमाकाशः सर्वेषामाधारशक्तिमान्। अत्रैव लोकप्रसिद्धिमपि प्रमाणयति। इदमत्रेतीति। इह पक्षी नेह पक्षीति प्रतीत्या आकाशस्यैवाधारत्वात्। यत्तु आकाशस्यातीन्द्रियतया इह नक्षत्रमिति प्रतीतेर्विषय आलोक एवेति तन्न। इहालोक इति प्रतीत्यनापत्तेः। व्यपदेश इति। अयं यो व्यवहारस्तस्य निमित्तमाकाशमित्यर्थः। आकाशस्य सर्वाधारत्वं यदुक्तं तत्सिद्धविषयं साध्यस्वभावविषयं तु कालस्याधारत्वमित्याह। कालादिति। काल एव क्रियाया भेदक इत्यर्थः। कालाकाशादिभेदो व्यवहारिक एव वास्तविकस्त्वभेद एव। निबन्धनम्। निमित्तम्। विभज्यते इति। भेदेन व्यवाह्रियत इत्यर्थः। सर्वमूर्तयः। सर्वपदार्थाः। पदार्थसत्तासत्तयोर्विभाजक आकाश एवेत्यर्थः। निर्दिष्टेति। निर्दिष्टं यन्नक्षत्रादि तन्निरूपितमाधारत्वं पृथिव्यादेर्न सम्भवतीत्यर्थः। सर्वाधारत्वं घटयति। एवं चेति। पृथ्व्यादीनामेव परम्परया परमाणौ विश्रान्तिः परमाणूनां चारधार आकाश एवेत्यर्थः। इदमिति। पूर्वोक्तव्यवहारसिद्धमित्यर्थः। साध्यस्वभावेत्यस्य विवरणं क्रियेति। जन्मस्थितीति। आद्यक्षणसम्बन्धो जन्म तत्र काल एव निमित्तमित्यर्थः। निरोधो नाशः।

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥

इति। केचित्क्रियात्मकं कालमिच्छन्ति तन्निराकरोति। क्रियाधार इति। अयं घटो भवतीत्यादिप्रतीत्या कालस्यैवाधारत्वं न तु सूर्यपरिस्पन्दादेः सूर्यनिष्ठस्य तस्याधारत्वासम्भवादिति भावः। मूर्तिशब्दस्य मूर्तधर्म एव तार्किकाणां प्रसिद्धत्वादाह। मूर्तिपदमिति।

व्यावहारिक एवेति । अत एवोक्तं दीधितौ दिक्कालौ नेश्वराद-तिरिच्येते मानाभावादिति । इदानीं घटस्तदानी घट इति व्य-वहारभेदस्तु भवतामिव ममाप्यौपाधिक इति भावः । ईश्वर ए-वेति । श्रोत्रमिति। कर्णशष्कुल्यवच्छिन्न ईश्वर एवेति भावः । कार्य-मात्र प्रति ईश्वरस्य कारणता क्लृप्तैव तत्र समवायित्वमात्रं स्वी-क्रियत इति।न चेश्वरे शब्दसमवायस्वीकारे मनस्संयुक्तेश्वरसमवा-यसत्त्वात्तन्मानसापत्तिरिति वाच्यम् । परकीयज्ञानादिप्रत्यक्षवा-रणाय विजातीयसयोगस्य हेतुतया ईश्वरे तदभावात् । न चा-काशशरीरं ब्रह्मेति श्रुतेराकाशस्यातिरिक्तत्वाभावे कथं ब्रह्मणो ऽवस्थानमिति चेत्सत्यम् । यथाकाशान्तरमन्तराकाशस्य स्थितिरेवं ब्रह्मणो ऽपि । श्रुतौ तु आकशवच्छरीरमस्येति विवक्षितम् । अ-खण्ड इति।क्षणमासादिरूपस्तु कालो व्यवहारभेदान्यथानुपपत्त्या औपाधिकः कल्प्यत इति भावः । खण्डनमिति । क्षणातिरिक्तो ऽख-ण्डः कालो नास्तीत्यर्थः । सर्वेति । सर्ववस्तुन आधारो य आ-काशस्तदधिकरणकत्वादित्यर्थः । अथवा आकाशरूपो देशः सर्ववस्तुन आधारभूत इत्यतः शब्दस्यापि तद्देशत्वमित्यर्थः। क-र्णशष्कुल्यवच्छिन्नेति । आकाशगुणत्वादाकाशरूपश्रोत्रसम्बद्धस्य शब्दस्य ग्रहण सिद्धमित्यर्थः । तत्तद्भूतेति।तत्तदिन्द्रियात्मकतत्त-द्भूतेत्यर्थः । एवम् । शब्दस्याकाशाधर्मत्वेसत्येवाकाशात्मकश्रोत्र-सम्बद्धग्रहणं सम्भवतीत्यर्थः। अत्र बौद्धाः चक्षुर्गोलकादौ सति घटाद्युपलम्भाद्गोलकमेव चक्षुरादीत्याहुः । तत्र सांख्याः गोलकं नेन्द्रियं तस्य घटादिदेशे गमनासम्भवात् किं तु तदतिरिक्तम्।तच्च न भौतिकम् । चक्षुषा हि न्यूनपरिमाणं न महत्परिमाणं गृह्यते। न च न्यूनेन महतो व्यापनं सम्भवति न चाप्यग्रहण सम्भवति अत आहङ्कारिकाणीन्द्रिन्याणीत्याहुः । एतच्चेद्भूतविकारत्वश्रु-

तिविरुद्धम् । गोलकनिष्ठा शक्तिरिन्द्रियमिति मीमांसकोक्तिरप्ययुक्ता । गोलकविरहिणां सर्पादीनामपि शब्दानुभवात् । अणुत्वमप्ययुक्तम् । सर्वशरीरव्यापिशैत्योपलम्भात् । विभुत्वे सर्वेषां युगपद्ग्रहणप्रसङ्गान्मध्यमपरिमाणम् ॥ ५३ ॥

( कु० टी० ) प्रसङ्गादइउण्सूत्रस्थभाष्योक्तौ शङ्कते । नन्वित्यादिना । नैयायिकमतमाह । न चेति । शब्दगुणतयेति पाठः । गुणितयेति पाठे नीलरूपवदिति वत्प्रयोगः । वस्तुतस्तु शब्दस्य गुणितयेत्यर्थः । शब्दनिष्ठगुणतानिरूपिता या गुणिता तयेति यावत् । शब्दो गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् । घटादावव्यभिचाराय चक्षुरिति । आत्मन्यव्यभिचाराय बहिरिति । रसत्वादावव्यभिचाराय जातिमदिति । इति तत्र गुणत्वे सिद्धे शब्दो विशेषगुण लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वात् रूपवत् । प्रभात्वेनाव्यभिचाराय गुणत्वेति । गुरुत्वत्वेनाव्यभिचारायायाद्यसत्यन्तम् । सख्यात्वेनाव्यभिचाराय द्वितीयसत्यन्तमिति विशेषगुणत्वसिद्ध्याग्रिमानुमाने स्वरूपासिद्धिनिरासे सिद्धे, शब्दः समवेतः गुणत्वात्तद्वदिति, तत्र समवेतत्वे सिद्धे परिशेषानुमाने हेतौ विशेष्यासिद्धिनिरासे सिद्धे विशेषणासिद्धिनिरासाय स्वीक्रियमाणेन शब्दो न स्पर्शवाद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवाणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । इति पृथिव्यादिचतुष्टयाश्रितत्वे निरस्ते न स दिक्कालमनो गुणः विशेषगुणत्वात् रूपवदिति कालादित्रितयाश्रितत्वे निरस्ते, न स आत्मविशेषगुणः बहिरिन्द्रिययोग्यत्वातद्वत् । अत्र मनोभिन्नेन्द्रिय बहिरिन्द्रियम् । एतेनात्मगुणग्राहकेन्द्रियत्व तत्त्व, तच्च मनस्यपि तेनापि रूपादिग्रहणादित्यपास्तमित्यात्माश्रयत्वे निरस्ते ऽर्थान्नवमस्य शब्दाधिकरणस्य द्रव्यस्याकाशा-

स्यस्य, शब्द वाय्वाद्यष्टद्रव्यान्यद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादिति परिशेषानुमानेन सिद्धिरिति भावः। असिद्धेरिति । उक्तानुमानस्य बाधस्वरूपासिद्धिभ्यां पराहतत्वात् । तथाच विशेषगुणत्व सुतरां नेति भाव । तदेवाह । स्पर्शवद्द्रव्येति । पवनेत्यर्थ । पवनावयवेषु सूक्ष्मशब्दक्रमेण पवने कारणगुणपूर्वकशब्दोत्पत्तेरवचन प्रागुक्ते ऽनुमाने स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वेन तदभावसाधने बाध इति भावः । कारणेत्युक्त्या तदघटितहेतोरसिद्धि' सूचिता । अत्र बाधकमाह। न च यावद्द्रव्येति । स्वाश्रयनाशजन्यनाशप्रतियोगित्वेनेत्यर्थः । आश्रयात् । वायोरन्यत्राकाशे । दृष्ट चेत् । गन्धादौ । तादृशेति । आत्मविशेषगुणेषु आश्रयादन्यत्रानुपलम्भे ऽपि यावद्द्रव्यभावित्वाभावात् । एतेनायावद्द्रव्यभावित्वेन वायुविशेषगुणत्वासम्भव इति नैयायिकोक्तमपास्तम् । बाधकान्तरमाह । न च द्रव्येति । स्पर्शवद्द्रव्येत्यर्थलभ्य वाक्यादित्रयग्राहकत्वक्चक्षुर्ग्राह्यत्वस्य तदीयरूपस्पर्शयोर्वायुग्राहकत्वक्ग्राह्यत्वस्य तदीयस्पर्शे सत्त्वेन शब्दस्य वायुविशेषगुणत्वे त्वक्ग्राह्यत्वस्य तत्राभावान्न तस्य तद्गुणत्वमिति तथैव वाच्यमिति भावः । तस्येति । आत्मन्यपि तस्य सत्त्वात्तद्ग्राह्यगन्धादिविशेषणयोगित्वस्यापि तत्र सत्त्वाच्चेति भाव' । तस्य तत्त्वे भाष्यविरोधो ऽपीत्याह । अत एवेति । तस्य तद्गुणत्वादेवेत्यर्थ. । एवव्यावर्त्यमेवाह । न त्विति । असाधरणान्यथानुपपत्तिप्रदर्शनाय व्युत्क्रमेणास्यार्थमाह । इदमित्यादिना । भावांश प्रदर्श्याभावांशमाह । अत्रैतदिति । आकाशप्रदेशविशेषे नक्षत्रचक्राभाव इत्यर्थ । वस्तुनक्षत्रचक्र प्रथममाह । एव चेति । तदन्यथानुपपत्त्या तत्सिद्धौ च प्रथमेत्यस्यार्थमाह । परमेति । एवेनाधारान्तरकल्पतद्व्यवच्छेदः । सर्वसामित्यस्यार्थमाह । सर्वेति । सर्वपदार्थानामित्यर्थ. । आकाशेत्यस्य लिङ्गव्यत्ययेनान्वयादाह । आकाशेति । एवेन सर्वसयोगिनां प्रथमाधारशक्तिराकाशनिमित्तेति इदमत्रेत्यनेन यो भावानां सतामभावानां च व्यपदेशः कल्पते त तु तमपि आकाशनिमित्तं तन्निमित्तक प्रचक्षते मुनयः कथयन्तीति वाच्यार्थ. सूचितः । नन्वेवमस्येत्युचितमत आह । आधारेति । प्रकृत तात्पर्यार्थमाह। एव चेति । तस्या अन्याधारत्वाभावे चेत्यर्थ. । निरोधो नाशः । अत एव ततः क्रियाविभागः । उपरि-

ष्टात्। धात्वर्थवादे। अनेन कथं तस्य तत्त्वमिति शङ्का समाहिता। ननु परिच्छिन्नपरिमाणानामेव मूर्तित्वेन प्रागुक्तविरोधस्तत्राह। मूर्तीति। खण्डनामिति। न त्वाकाशातिरिक्तत्वखण्डनामिति भाव। भाष्याभीष्टपरमप्रकृतमाह। एव चेति। आकाशसिद्धौ चेत्यर्थः। आधारदेशत्वेनेति कर्मधारयः। तद्देशत्वमिति बहुव्रीहिः। श्रोत्रोपेति। श्रोत्रजन्योपलम्भरूपतन्निष्ठगुणेनेत्यर्थः। भाष्याशयमाह। कर्णेति। वक्ष्यमाणादिपरमेत्वेनाह। तत्तादिति। गन्धादौ तत्तत्सम्बद्धे पार्थिवघ्राणेन्द्रियादिग्राह्यत्वस्य प्रसिद्धत्वादिति भाव. ॥ ५३ ॥

श्रोत्रस्या ह- केचित्तु तन्न श्रोत्रं तस्य सच्छिद्रे नित्यतया रोङ्कारिकत्वम्। गादिना नाशाभावेन बाधिर्यानापत्तेः। न च धर्मविशेषविशिष्टनभः श्रोत्रं तस्य च धर्मस्य रोगादिनाभिभव औषधेन च तदुद्भव इति वाच्यम्। लाघवेन नभोधिष्ठानकधर्मविशेषस्यैवाहङ्कारिकस्य श्रोत्रत्वौचित्वात्। एवमन्यान्यपि घ्राणादीनि तदैक्यरूप्याय पृथ्वीजलवायुतेजोधिष्ठानकान्येव। अत एव योगीन्द्रियाणामत्यन्तदूरदेशस्थविषयोपलब्धिजनकत्वं पृथ्व्यादिविकाराणां तावद्दूरदेशगमनासम्भवात्। अहङ्कारस्य तु अन्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनातिबहुदूरदेशगमनानुभवात् तद्विकाराहङ्कारविकाराणां तत्सम्भवात्। योगस्तु प्रतिबन्धकतमोनिवर्तक एवेत्यग्रे निरूपयिष्यामः। तत्तद्ग्राह्यगुणाधिष्ठानानि च तानि भूतानि। तेषु च ते गुणा अनुद्भूताः। तत्तद्गुणसामानाधिकरण्यात् पृथ्व्यादिगतगुणग्रहणमिन्द्रियैः। एवं च श्रोत्रमेव चित्तवृत्तिसहकृतं स्ववृत्तिपरम्परया शब्ददेशमागतं शब्दं गृह्णाति। अत एव तत्तद्देशवृत्तित्वेन शब्दप्रतीतिः।

यद्वा अणूनां सर्वशक्तीनां सर्वदेशव्यापितया तेजो-नभ आदिपरमाणूनां विषयदेशपर्यन्तं तत्तादिन्द्रियस्य तत्तद्विषयौन्मुख्ये तत्तदिन्द्रियरूपेण परिणामात्तत्तद्देशे प्रत्यक्षमिति वदन्ति ॥ ५४ ॥

(कुं०टी०) तन्न श्रोत्रमिति। श्रोत्रस्य नभोरूपत्वे रोगादिना नाशो न स्यादित्यर्थः । लाघवेनेति । धर्मिकल्पनायामुभयकल्पने गौरवादिति भावः । नभोधिष्ठानकेति । कर्णशष्कुल्यवच्छिन्ननभो-निष्ठेत्यर्थः । धर्मविशेषेति । शब्दग्रहणयोग्येत्यर्थः । आहङ्कारिक-स्येति । सात्विकाहङ्कारादिन्द्रियाणीति सांख्यमते इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वात् श्रोत्रोपलब्ध्या शब्दस्याका-शदेशत्वम् । घ्राणादीति । नासिकावच्छिन्नपृथिवीधर्मो घ्राण-मित्यादिरीत्येत्यर्थः । यत्तु गन्धग्राहकत्वाद्घ्राणं पार्थिवमिति तार्किकास्तन्नेत्याह । आहङ्कारिकाण्येवेति । अयम्भावः घ्राणा-दिना न्यूनपरिमाणेन महापरिमाणं गृह्यते न महतो व्यापनं स-म्भवति अव्याप्यग्रहणे चातिप्रसङ्गस्तस्माद्भौतिकादतिरिक्तमि-न्द्रियमिति । अत एवेति । घ्राणस्य पार्थिवत्वेन देशान्तरे गमना भावात्प्रत्यक्षं न स्यादित्यर्थः । तावद्देशेति । अत एव गोलकमेव च क्षुरिति बौद्धमतमपास्तम् । अहङ्कारो ऽहमिति प्रथमाध्यासः स्वप्नावस्थायां नरस्य व्याघ्रत्वाभिमाने सति न नरो ऽहमित्य-भिमानो भवति। अतस्तन्नियमाय नियतविषयव्यापको ऽहङ्कारः स्वीकार्यः स च बुद्धितत्त्वस्य परिणामः । जाग्रत्स्वप्नसुषुप्तिषु श्वासप्रश्वासदर्शनात्सव्यापारं यदनुवर्तते तद्बुद्धितत्त्वम् । अ-न्तःकरणपरिणामत्वादिति । मनोबुद्धिरहङ्कारश्चित्तं चेति च-त्वारि अन्तःकरणानि गर्वरूपवृत्तिविशेषादहङ्कारसंज्ञां लभन्ते ।

तद्विकारेति। अन्तःकरणविकारो यो ऽहङ्कारस्तद्विकाराणामिन्द्रियाणामित्यर्थः। ननु न योगीन्द्रियाणां दूरदेशगमनं किन्तु योगजधर्म एव प्रत्यक्षे सहकारीत्याशङ्क्याह। योगस्त्विति। तमो निवर्तक इति। सुषुप्तौ तमसो वृत्तिप्रतिबन्धकत्वदर्शनात्। ततश्च योगिनामपि इन्द्रियसम्बन्धादेव प्रत्यक्षभूतभविष्यतोरपि सूक्ष्मावस्थासन्निकर्षेण प्रत्यक्षम्। इन्द्रियाणामन्तर्बहिर्भावस्य व्यवस्थितानां स्थिरा अविचालिनो धारणैकाग्र्यलक्षणो योगः। नन्विन्द्रियाणां गुणाश्रयत्वे चक्षुरादिना गन्धादीनामपि प्रत्यक्षापत्तिरत आह। तत्तद्गुणेति। श्रोत्रग्राह्यस्य शब्दस्याश्रय आकाशः शब्दश्चानुभूत इति न सर्वदा प्रत्यक्षं किं तु श्रोत्रशब्दयोः सम्बन्धे सति प्रत्यक्षमित्यर्थः। अनुद्भूत इति। तेन चक्षुरादौ न रूपादिप्रत्यक्षम्। ननु घ्राणस्य सम्बन्धो योगो द्रव्ये ऽस्ति न तु गन्ध इत्यत आह। सामानाधिकरण्यादिति। श्रोत्रमेवेति। अन्तःकरणमेवेन्द्रियद्वारा विषयदेशे गत्वा गृह्णातीत्यर्थः। तार्किकमते मनः संयोगस्यापि ज्ञानहेतुत्वादुक्तं चित्तवृत्तीति। एतन्मते वृत्तिरेवेन्द्रियसन्निकर्षः। अत एवेति। यदि हि श्रोत्रदेशे एव प्रत्यक्षं स्यात्तदा ग्रामान्तरे शब्दः श्रूयत इति प्रतीतिर्न स्यादित्यर्थः। यद्यपि कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रस्य देशान्तरगमनं न सम्भवति तथापि श्रोत्रं परिच्छिन्नपरिमाणमित्युक्तमेव। वीचीतरङ्गादिन्यायेन श्रोत्रगतं शब्दान्तरं गृह्यत इति तु न युक्तम्। भेरीशब्दो मया श्रुत इत्यनुभवविरोधात्। भ्रमादिकल्पने बीजाभावात्। सर्वशक्तीनाम्। सर्वशक्तियुक्तानाम्। नभ आदीति। नभः परमाणूनामेव शब्ददेशे श्रोत्रत्वेन परिणाम इत्यर्थः। परमाणूनामिति। तत्तदिन्द्रियरूपेण परिणामादित्यत्रान्वयः। ननु परमाणूनामेवेन्द्रियत्वे अस-

न्निकृष्टस्यापि प्रत्यक्षापत्तिरत आह । विषयदेशेति । प्रत्यक्षविषयदेशेत्यर्थः ॥ ५४ ॥

(क० टी०) सांख्यमतेन मतान्तरमाह । केचिदिति । तत् । नभ । तस्य । नभसश्छिद्रे । प्रदेशधर्मविशेषेति । तत्तद्रूपविकारेत्यर्थः। अत एव विशेषपदम्। नैव प्रागुक्तदोष इत्याह । तस्य चेति । लाघवेनेति। विशिष्टे तत्त्वकल्पनापेक्षया विशेषणमात्रे तत्त्वकल्पनस्य लघुभूतत्वात् । उक्तभाष्यादेवाह । नभोधीति । तस्य विकारत्वेन वक्ष्यमाणदोषात्साख्यमतमाह । आहङ्कारीति । तत्परिणामस्येत्यर्थः । प्रसङ्गादाह। एवमिति । ननु तत्र तथैवास्तामत आह । तदेकेति। श्रोत्रैकेत्यर्थ । सम्भवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वादिति भाव । आहङ्कारिकत्वे हेतुरयम् । इद द्रढयति । अत एवेति। तत्रादौ विपक्षे बाधकमाह । पृथ्वादीति । अस्यान्यथेत्यादिस्तत्र स्यादित्यन्तश्च अन्यत्र तथाऽदृष्टत्वादिति भाव । अत एवेत्यस्यार्थमाह । अहङ्कारस्येति । ननु तन्मते ऽपि तेषां योगजधर्मप्रत्यासत्त्याऽलौकिक प्रत्यक्षमित्युक्तमेवेति न दोषो ऽत आह । योगस्त्विति । एवेन तस्य प्रत्यासत्तित्वव्यवच्छेदो गौरवापत्तेस्तदाह । इत्यग्रे इति । नन्वत्र पक्षे भूतत्व केषां गन्धादीनां गुणत्व च केषामत आह। तत्तदिति। पृथ्व्यादिरूपभूतानीत्यर्थ. । अत्र मते इन्द्रियाणा स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वनियमादिति भाव' । नन्वेवमिन्द्रियाणामपि पार्थिवत्वादिसिद्ध्या तेष्वपि तत्तद्गुणावश्यकत्वेन तेषामपि प्रत्यक्षत्वापत्तिरत आह। तेषु चेति । इन्द्रियेष्वित्यर्थः। अनतिप्रसङ्गायोक्तप्रकारमेवाह । तत्तदिति । नन्वत्र पक्षे श्रोत्रस्य जन्यत्वेन नित्यत्वे एकत्वाविभुत्वाभावेन 'कथं दूरस्थशब्दप्रत्यक्षमत आह । एव चेति । तस्यान्त करणपरिणामाहङ्कारपरिणामत्वे चेत्यर्थः । केवलस्ववृत्तिपरम्परायां मानाभावादाह। चित्तवृत्तीति। तत्र तथात्वादिति भाव' । अनेन बाधिर्यापत्तिनिरासः। आगत सदिति शेष । नन्वेवं को विशेषो नैयायिकमतादत आह । अत एवेति। तदागमनस्य तत्रैवाङ्गीकारादेवेत्यर्थः । तन्मते तु तथा प्रतीतिर्न स्यादिति भावः । नाहङ्कारपरिणामत्वमिन्द्रियाणां तथा सति तेषां तत्तदधिष्ठानकत्व क्लेशसाध्यमिति गौरवमित्यतो ला-

यवादणुपरिणामत्वमेव तेषामिति मतमाह 'यद्वेति। सर्वशक्तानीम्। तत एव सर्वस्थूलसृष्टेरणूनां शब्दतन्मात्रादिरूपाणाम्। अणव सर्वशक्तित्वाद्भेदससर्गवृत्तय इति प्रागुक्तहर्युक्ते। अत एवाह। सर्वेति। तत्तदधिष्ठानत्वसिद्ध्यर्थमाह। तत इति। तज्जनकानां तेषामित्यर्थः। तत एव तदुत्पत्तेरिति भावः। तत्तान्द्रियरूपेण परिणामादित्यत्रान्वय.। अत एव व्यापकत्वादाह। विपयेति। अनतिप्रसङ्गायाह। तत्तदिन्द्रियस्येति। तत्तादिन्द्रियत्वेनाभिमतस्येत्यर्थः॥ ५४॥

(आकाशदेशत्वसिद्धि) तन्मतेऽप्युक्तयुक्त्याकाशदेशत्वमेव। किञ्चानन्तश्रोत्रवृत्तिकल्पनापेक्षयानन्तपरमाणुपरिणामकल्पनापेक्षया च तस्यैकस्य कल्पने लाघवम्। तत्तद्देशव्याप्याभिव्यक्तिमतश्च तेन ग्रहणमिति तत्तद्देशवर्तित्वानुभवो न विरुद्धः। यथा चैकस्याप्याकाशस्य घटाकाशो मठाकाश इत्यौपाधिकभेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानां च परस्परं भेद एवमौपाधिकभेदं लोकसम्मतमाश्रित्याकृतिग्रहणादिति तत्सूत्रे भाष्ये उक्तम्। किञ्च जातिरपि मास्तु रूपसामान्यादेव स्थूलकृशाल्पमहद्ध्रस्वदीर्घगोघटादिषु गौरित्यादिवत्सर्वत्रैकाकारव्यहारः। अन्यथा संस्थानभेदादनुगतसंस्थानव्यङ्ग्याजातिरपि तत्र न स्यादित्याशयेन रूपसामान्याद्वा सिद्धमिति तत्रैव भाष्ये उक्तम्। रूपसादृश्यादिति तदर्थः। एतेन वर्णानां गृहीतसङ्केतानां व्यञ्जकत्वमगृहीतसङ्केतानां वा। आद्ये तैरेवोपपत्तौ कि तेन। नान्त्यः। सर्वस्यार्थबोधापत्तेः। तदुक्तं सांख्यसूत्रे प्रतीत्यप्रतीतिभ्या न स्फोटात्मकः शब्द इति। यदि वर्णसमुदायेन तत्प्रतीतिस्तदोक्तरीत्या तद्वैयर्थ्यम्।

अथ न प्रतीयते तदा ज्ञातस्याप्यप्रत्यायकत्वाद्व्यर्था तत्कल्पनेति तदर्थं इति सांख्योक्तं तदनुसार्युपवर्षोक्तं च स्फोटखण्डनमपास्तम् ॥ ५५ ॥

( कुं० टी० ) क्रमेण दूषयति। किञ्चेति। ननु श्रोत्रस्यैकत्वे दूरवर्तित्वानुभवो न स्यादत आह। सव्यापीति। अभिव्यक्तिरेव दूरदेशं व्याप्नोतीत्यर्थः। ननु सकलदेशस्थस्य शब्दस्यैकत्वे तत्र जात्यभावादाकृतिर्गृह्यत इति भाष्यासङ्गतिरत आह। यथा चेति। नभसो जन्यत्वं तैत्तिरीयके प्रसिद्धम्। छान्दोग्ये तु नित्यत्वमुक्तम्। विरोधपरिहारो गौणमुख्यव्यपदेशाभ्यां शारीरकभाष्ये व्यक्तः। जीवेश्वरेति। अन्तःकरणसाहित्यराहित्याभ्यां जीवेश्वरयोर्भेदात्। औपाधिकमिति। ध्वनिगतभेदस्य वर्णेष्वारोपात्। आकृतिग्रहणादिति। अइउण् इत्यादावकाराद्याकृतिर्गृह्यत इत्यर्थः। अन्यथा। सकलसादृश्यग्रहणे। तैरेव। वर्णैरेव। किं तेन। किं स्फोटेन। सर्वस्येति। अगृहीतसङ्केतस्यापीत्यर्थः। यदीति। स्फोटस्य बोधको यदि वर्णसमुदायस्तदा सोऽर्थस्यैव बोधकोऽस्तु किं स्फोटेन, यदि च स न स्फोटबोधकस्तदा अज्ञातस्य स्फोटस्यार्थबोधकत्वासम्भवात् स्फोटो व्यर्थ इत्यर्थः ॥ ५५ ॥

( क० टी० ) ननूक्तसिद्धान्तविरुद्धमिह मतद्वयं किमित्याभिहितमत आह। तन्मतेऽपीति। केचिन्मतेऽपीत्यर्थः। उक्तेति। इन्द्रियाणा स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वानियमरूपेत्यर्थः। एवं च तावन्मात्रांशैक्यमेवेति तद्द्रढयितुमुक्तमिति भावः। नन्वेवमपि केचिन्मतरीत्यापि प्रत्यक्षाद्युपपत्तौ किमिति तत्पक्षत्यागेन तत्पक्षस्वीकारोऽत आह। किञ्चेति। आद्ये आह। अनन्तेति। तस्य। वाचकस्य शब्दस्य। नन्वेव तस्य श्रोत्रसम्बन्धेन तत्र प्रत्यक्षे तत्तद्देशवर्तित्वानुभवविरोधापत्तिरित्यगत्या गुरुभूततत्पक्षाश्रयणमेव

युक्तमत आह । तत्तदिति । फलवत्त्वेनावश्यकाभिव्यक्तेस्तथैव कल्पनादिति भावः । नन्वेवमानन्त्यव्यभिचारयोरभावे जात्यनुपयोगेनाणुदित्सूत्रभाष्याविरोधापत्तिरत आह । यथा चेति । लोके तथा प्रतीतेराह । लोकेति । एतेन निर्मूलत्व निरस्तम् । तत्सूत्रे। अणुदित्सूत्रे। इद चाभिप्रेत्योक्तम् । वस्तुत' सापि मास्त्विति लाघवमेवेत्याह । किञ्चेति । रूपेति । यत इत्यादि । अर्थदृष्टान्तमाह । स्थूलेति । सर्वत्र । ह्रस्वादिवर्णादिषु । विपक्षे बाधकमप्याह । अन्यथेति । तदनङ्गीकारे इत्यर्थः । एतेनेति । प्रागुक्तसम्भावितसर्वदोषेण पदप्रत्यक्षासम्भवस्योक्तत्वेन चेत्यर्थ । गृहीतेति । तदर्थविशेषणेत्यादिः । व्यञ्जकत्वमित्यस्य स्फोटेत्यादिः । किं तेनेति । तत एवार्थबोधोपपत्त्यातिरिक्ततत्स्वीकारवैयर्थ्यादित्यर्थः । सर्वेति । तद्भिन्नस्यापीत्यर्थ' । स्फोटाभिव्यक्तेः सत्त्वादिति भावः । यदीति । सङ्केतग्रहादिति भावः । तदर्थः । सांख्यसूत्रार्थ. ॥ ५५ ॥

( अगृहीतसम्बन्धैरपि स्फोटव्यञ्जनम् । ) अगृहीतसम्बन्धैरपि तस्य व्यञ्जनमस्त्येव । अत एवागृहीतार्थकेऽप्येकं पदमित्यनुभवः । अत एव वाचस्पतिमिश्रास्तत्त्वबिन्दौ गकारादतिरिच्यमानमूर्तेः ककारस्याभावादिति स्फोटवादिमतमुपन्यास्थन्नित्यलम् । परे तु अवर्णादीनामेकत्वं नित्यत्वं विभुत्वं च तदवयवकपदादेरपि तत्त्वम् । कण्ठताल्वाद्यभिघातस्तद्व्यञ्जकः। देशभेदेऽपि पटादीनां देशघटितसन्निवेशाभेदवत्कालभेदेऽपि तद्घटितानुपूर्व्या अभेदः ।

प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् ।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥

इत्युक्तेः ॥ ५६ ॥

( कुं० टी० ) अगृहीतेति । सङ्केताग्रहेऽपि पदत्वानुभवादित्यर्थः । अवर्णादीनामिति । सर्वत्राकारो विभुत्वादेक एव

एवं वर्णान्तरमपीत्यर्थः । तदवयवकेति । आकारादिघटितपदस्यानि[illegible]त्वादित्यर्थः । नन्वकारादेर्नित्यत्वे सर्वदा तदुपलभम्भः स्यादत आह । कण्ठताल्वादीति । देशभेदे ऽपीति । यथा ऊर्ध्वाधोदेशावच्छिन्नस्याकृतिविशेषस्य संस्थानतया प्रतिव्यक्ति देशभेदे ऽपि न संस्थानभेद एवं पदे कालघटितानुर्व्या न भेद इत्यर्थः । प्रत्यक्षप्रत्यभिज्ञानात् । सो ऽयं ककार इति प्रतीतेः ॥ ९६ ॥

( क० टी० ) नन्वेवमपि तदुक्तकोटिमते काभिमता सापि दुष्टेत्वात आह । अगृहीतेति । वर्णैरित्यर्थः । अपिना तत्परिग्रहः । एवञ्चोभयमपि सम्मतम् । तस्य । स्फोटस्य । नन्वेव प्रागुक्तदोषापात्तिरेवान्यथा नैष्फल्यमपि व्यक्तेरत आह । एवेति । तैस्तस्य व्यञ्जनसत्त्वादेवेत्यर्थः । एतेन काव्यादिश्रवणे तत्तदर्थैरगृहीतसम्बन्धस्यापीदमेक पदमिदमेक वाक्यमित्यादिस्फोटप्रतीत्यापत्तेरन्त्यपक्षो न युक्त इत्यपास्तम् । तैरेव यथा नोपपत्तिस्तथा प्रागुक्तमेव । एव यत्राद्यस्वीकारस्तत्र पदादिप्रत्यक्षमर्थावबोधश्च यत्र द्वितीयस्वीकारस्तत्र भावे ऽपि तस्य तत्सङ्केतग्रहे उभयमन्यत्र पदादिप्रत्यक्षमात्रमेवेति न प्रागुक्तदोषो नापि नैष्फल्यमिति भाव । एव साधिते वेदान्तिसम्मतिमप्याह । अत एवेति । स्फोटस्यातिरिक्तस्य सत्त्वादेवेत्यर्थः । स्यादेतत्, अनवयवमेव वाक्य वाचकमित्युक्त्वा वर्णा एवानुभूयन्ते न तदतिरिक्तं पदादीत्याशङ्क्य पद वाक्यमिति चानुसहारबुद्धावभिन्नस्य वस्तुन उपारोहात्तदतिरिक्तमिति समाधाय नेयमभिन्नबुद्धिर्नानावर्णगोचरा एकत्वनानात्वयोरेकत्रासमवायादिति तदुपपाद्य न चावर्णात्मनो ऽतत्समवायिनो वा वाक्यस्य कुतस्तदुपरागवती प्रख्येति वाच्यम् । तदतिरिच्यमानमूर्तीना परमार्थसतां वर्णानामभावादिति तत्र तैरुक्तम् । किञ्च प्रागुक्ताइउण्सूत्रभाष्ये शब्द इत्येकवचनोक्तिस्वारस्यैनैकस्यैवाद्यध्वनिमारभ्यान्तजातध्वन्यन्तेन व्यञ्ज्यता लभ्यत इति स्फोटस्याखण्डत्वमेकत्व च लभ्यते इति स्पष्टमेवाक्षरमार्मिकाणाम् । न च तत्प्रागुक्तमतासिद्धातिरिक्तपदविषयकमिति भ्रमितव्यम् । अकारमपि नोपलभते इत्युपक्रमविरोधादिति

दिक् । तदाह । इत्यलमिति । वाह्यवैखरीरूपमखण्डस्फोटपक्षमाह । परे त्विति । अन्ये । मीमांसकानुसारिण इत्यर्थः । एकत्वमिति । प्रत्येकमिति भाव । तावन्मात्रेण विवादादाह । तदेति । तत्त्वम् । धर्मत्रयाक्रान्तत्वम् । कण्ठाद्यभिघातरूपजनकत्व तस्या न तु तज्जनकत्वमिति भावः । ननु वर्णानामेकत्वे ऽपि न पदादेरेकत्व कालघटितानुपूर्वीभेदात् तथाचानन्त्यव्यभिचारसत्त्वमेवात आह । देशेति । तत्र हरिसम्मतिमाह । प्रत्यक्षेति । समाहारद्वन्द्व । तच्चेत्यादितृतीयवाक्यार्थः । चेन वाक्यसमुच्चयः । तदभेदात् । वर्णाभेदात् । तथाचास्य तत्र तात्पर्यमिति भाव ॥ ५६ ॥

(शब्दानित्यत्वम्) **दिनान्तरानुभूते ऽधुनानुभूयमानस्य सो ऽयमिति प्रत्यभिज्ञया तावत्कालं स्थिरत्वसिद्धेस्तावत्कालं स्थिरं वैनं कः पश्चान्नाशयिष्यतीति न्यायात्पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम् । सर्वदेशेषु तदुपलम्भाद्विभुत्वम् । लाघवाच्चैकत्वम् । आनुपूर्वीघटकमव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञानविषयत्वम् । यथात्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वं तद्वत् ज्ञानामप्येतद्विषये स्थिरः ॥ ५७ ॥**

( कुं० टी० ) व्यतिरेके । अभावे । ननु वर्णानां विभुत्वनित्यत्वे च घकारे तादृशाव्यवहितोत्तरक्षणोत्पत्तिकत्वरूपानुपूर्वी कथमत आह । अव्यवहितोत्तरत्वेति । स्वज्ञानेति । उत्पत्त्यनवच्छिन्नो घकारज्ञानाधिकरणीभूतो यः कालस्तत्कालोत्पत्तिकटकारज्ञानम् । प्रथमक्षणस्यापि घज्ञानाधिकरणत्वादुक्तमुत्पत्त्यनवच्छिन्नेति । ननु तृतीयक्षणे ज्ञानस्य नाशात्तृतीयादिवर्णाधिकरणकालस्य कथं पूर्वज्ञानवत्त्वमत आह । ज्ञानानामपीति ।

अयम्भावः धारावाहिकबुद्धिस्थले न ज्ञानभेदः किन्तु यावद्घटस्फुरणं तावद्घटाकारान्तःकरणवृत्तिरेकैव न तु नाना । स्वविरोधिवृत्त्युत्पत्तिपर्यन्तं वृत्तेः स्थिरत्वाभ्युपगमात् । तत्फलितचैतन्यं घटादिज्ञानात्मकमपि तावत्कालिकमेवेति । किञ्च ज्ञानधाराकल्पने अनधिगतार्थविषयकज्ञानत्वं प्रमात्वमिति लक्षणस्याव्याप्तिः ॥ ५७ ॥

( क० टी० ) ननु तेषामेकत्वादावेव किं मानमतो व्युत्क्रमेणाह । दिनान्तरेति । प्रत्यभिज्ञायामन्वयाभेदप्रतीत्वेति तदर्थ । व्यावहरिकनित्यत्वे ऽपि वास्तवानित्यत्वाभावादाह । पर्यवेति । नन्वेव कथमुत्पत्त्यादिघटितमव्यवहितोत्तरत्वमत आह । आनुपूर्वीति । ननु पूर्ववज्ज्ञानभेदे ऽपि तदघटितानुपूर्व्या अभेदे ऽपि ज्ञानस्य क्षणिकत्वेन तदाधिकरणकालोत्पत्तिकत्वं ज्ञानान्तरे बाधितमेवेतीदमपि दुर्वचमत आह । यथेति । प्रासादे सा दिशि दिशि वसायथेत्यादाविति भावः । ज्ञानानामपि । स्वभिन्नानामपि । अनतिप्रसङ्गायाह । एतदिति । वर्णादिविषये इत्यर्थः ॥ ५७ ॥

( शब्दस्य स्थिरत्वम् ) शब्दबुद्धिकर्मणां क्षणिकत्वमिति तु न युक्तम् । इदानीं जानामि उच्चारिता इति व्यवहारात् । अन्यथा क्षणस्यातीन्द्रियतया इदानीमिति ज्ञानासम्भवः । परस्य तूत्पत्त्यादीनां भेदव्याप्यानां विरोधिनां सत्त्वेन प्रत्यभिज्ञानुत्पत्त्यापत्तेः । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयः। द्वयोर्घटयोरपि सो ऽयमिति प्रत्यभिज्ञापत्तेः । प्रत्यभिज्ञाया व्यक्तिविषयकत्वे बाधकाभावात् । न च गकार उत्पन्न इति प्रतीतिर्बाधिका । श्यामो नष्टो रक्त उत्पन्न इति प्रतीतेः रूपगतोत्पत्तिविनाशारोपेण परम्परासम्बन्धेन वोपपत्तिवत् ध्वनिनिष्ठोत्पत्तेरारोपेण परम्परासम्बन्धेन वा तदुपपत्तेः । वर्णोच्चारणस्थले ऽपि तत्स्थाने

जिह्वाया ईषदन्तरपाते वर्णानुपलब्धेर्ध्वन्युपलब्धे-श्चानुभवेन हसितरुदितादौ जिह्वाभिघातवायुकण्ठ-संयोगादेस्तज्जनकत्वस्यावश्यकत्वेन च वर्णोत्पत्तौ तदनङ्गीकारे प्रतिबध्यप्रतिबन्धकभावकल्पनागौरवेण च तत्सत्त्यावश्यकत्वात् । अत एव बहुषु शब्दमु-च्चारयत्सु महान् ध्वनिः श्रूयते इति प्रतीतिः । यदि तु स एवायं शङ्खध्वनिरित्यादिप्रत्यभिज्ञया ध्वनीना-मपि नित्यत्वं तर्हि तज्ज्ञानकरणीभूतवायुसंयोगनि-ष्ठं तत् तत्रारोप्यते परम्परया बुध्यत इति वा बो-ध्यम् । एवमेव शब्दं कुर्वित्यादिव्यवहार उच्चारयेति तदर्थो वा । लोहितः स्फटिक इत्यादावप्यारोप एव न तु परम्परया तत्प्रतीतिः । उक्ते स्वसमवायिसं-युक्तत्वं सम्बन्धः । स्फटिकस्य लौहित्यमित्यत्र स्व-संयुक्तसमवेतत्वं सम्बन्ध इत्युभयोः सम्बन्धत्वक-ल्पने गौरवात् । वस्तुतः सर्वत्रारोप एवोचितः रसो रूपवानित्याद्यप्रतीत्या परम्परासम्बन्धस्य विशिष्ट-बुद्ध्यनियामकत्वात् । एवमुदात्तत्वादिकमपि तन्निष्ठ-मेव तत्रारोप्यत इति नोदात्तादिगुणभेदादनेकत्वं वर्णानाम् । किञ्च प्रागनुपलभ्यमानत्वे सत्युपल-भ्यमानत्वादिरूपेणोत्पन्नविनष्टसादृश्येन तत्रोत्पत्ति-विनाशयोरारोपः । किञ्च प्रागसत्त्वे सति सत्त्वरू-पाया उत्पत्तेर्न वर्णेष्वनुभवो वर्णमुच्चारयतीत्येव प्रत्ययात् । उच्चारितत्व च कण्ठताल्वाद्यभिघा-तजन्याभिव्यक्तिविशिष्टत्वम् । स्त्रीशुकाद्यनुमापकं तज्जन्यतावच्छेदकवैजात्यं च ध्वनिनिष्ठं वायुसं-

योगनिष्ठं वा वर्णेष्वारोप्यत इति तदुपपत्तिः । तारत्वाद्यपि तन्निष्ठमेव । अत एव भामत्यां तारत्वादिवायुनिष्ठं वर्णेष्वारोप्यत इति देवताधिकरणे ऽभिहितम् । यद्वा तारत्वादयो गुणाः शब्दनिष्ठास्तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम् । आकाशरूपद्रव्याश्रयत्वाद्गुणत्वं च । कस्य चित् कश्चिद्वायुसंयोगस्तारत्वव्यञ्जक अपरस्य तु मन्दत्वव्यञ्जकस्तयोर्विरोधव्यवहारो ऽपि येन वायुसंयोगेन यं प्रति तारत्वं व्यज्यते तम्प्रति मन्दत्वाव्यञ्जनमूलकः परैस्तु कण्ठताल्वाद्यभिघातोत्पन्नस्य केन चिन्मन्दत्वेन ग्रहणं केन चित्तारत्वेन ग्रहणमित्यत्र बीजं निर्वक्तुमशक्यम् । एतदुच्चैरित्यत्र भाष्ये स्पष्टम् । शुकसारिकानरनार्याद्युच्चारणव्यङ्गेषु तत्तदुच्चारितत्वानुमापकानि वैजात्यान्यपि वर्णनिष्ठानीति विजातीयवायुसंयोगव्यङ्ग्यान्येव । प्रकृतिविकारभावस्तु बुद्धिविपरिणामेनैवोक्तरीत्या निर्वाह्यः । अन्यगतोत्पत्तेरन्यत्रारोपे बीजं तु अन्तःकरणस्य रागादिदोष एव । सेयं दीपकलिकेत्यादौ मानान्तरेण नाशसिद्धेः सेयमित्यंशे भ्रमत्वम् । न च नित्यत्वे वायुसंयोगादेः ककारादिप्रत्यक्षत्वं कार्यतावच्छेदकं वाच्यं मम तु कत्वमेवेति लाघवमिति वाच्यम् । अनन्तप्रागभावध्वंसादिकल्पनापेक्षया लघुत्वात् प्रत्यक्षत्वावच्छिन्नविषयतया कत्वस्यैव तत्कार्यत्वावच्छेदकत्वाच्च । न चैवं घटाद्यपि नित्यं स्यात् कपालसंयोगादिकं च व्यञ्जकं भविष्यतीति वाच्यम् । वर्णवादित्यत्र तदग्रहविपरीतग्रहयोरभावेनो-

त्पत्तिप्रतीतेर्विना बाधकं भ्रमत्वायोगात् । किञ्चैतत्कुलालादिव्यापारानन्तरमनुभूयमानस्य तद्व्यापारतः प्रागननुभूतेन पटेन नाभेदप्रत्यभिज्ञा, अत्र त्वेतत्कण्ठताल्वादिव्यापारानन्तरमनुभूयमानस्य ततः प्रागनुभूतेनैवाभेदप्रत्यभिज्ञेति विशेषात् । नित्यत्वं चैषां सृष्ट्याद्यकालोत्पत्तिकत्वं प्रलयकालनाश्यत्वं चेत्येतावदेव । अत एवौत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इत्युक्तं जैमिनिना । औत्पत्तिकशब्देनेदमेव नित्यत्वं वक्तुं शक्यं नान्यादृशम् । एवं मन्त्राधिकरणे उक्तेन शब्दार्थसम्बन्धनित्यत्वेन वेदस्य निरपेक्षबोधकत्वरूपप्रामाण्यं समर्थ्य शब्दार्थसम्बन्धनित्यत्वमयुक्तं शब्दानामनित्यत्वादिति तदाक्षेपसमाधानाय शब्दनित्यतासिद्धान्तकं शब्दाधिकरणमारब्धम् । तच्च वाचकनित्यतापर्यन्तं तात्पर्यमवगमयति न तु वर्णनित्यतामात्रे इति बोध्यम् । अत एवानेककर्तृकोच्चारणविषयेऽप्येकमिदं घटपदमिति प्रत्ययः । एक इन्द्र शब्दोऽनेकेषु क्रतुष्वाविर्भवतीत्यादिना सरूपसूत्रे भाष्ये स्फुटमेतत् । न हीयमेकत्वधीर्वर्णविषया तेषामनेकत्वात् । वनराश्याद्यप्यतिरिक्तमेव । न चैकार्थबोधहेतुत्वेनैकत्वम् । तेनैकत्वमेकत्वेन चैकार्थधीहेतुतेत्यन्योन्याश्रयापत्तेः । किञ्चार्थबोधाभावेऽप्येकं पदमित्यादेरप्रसिद्धार्थपदश्रवणे दर्शनादेकबुद्धिविषयत्वेन तु न तत्त्वम् । सर्वोच्चारणविषयेन्द्रशब्दानामेकज्ञानविषयत्वासम्भवात् । न चैकजातीयबुद्धि-

विषयत्वम् । विषयैक्ये बुद्धीनामेकजातीयत्वं तदेकजातीयत्वे न च विषयैक्यमित्यन्योन्याश्रयात् । किञ्चैवमेकः पट इति व्यवहारस्याप्येकबुद्धिविषयतया तत्समूहेनैवोपपत्तौ तत्राप्यतिरिक्तावयव्यसिद्ध्यापत्तिः । यदि तत्रैक इति व्यवहारात्सिद्धिः तर्हि प्रकृतेऽपि समम् । न चैकशब्द इत्यस्य एकजातीय इत्यर्थः । तावच्छब्दकल्पनं तत्र चैकजातिकल्पनमित्यपेक्ष्य तदेकत्वस्यैवौचित्यात् । घटत्वजात्यैक्येन दशसु घटेषु एको घट इति प्रतीत्यापत्तेश्च । एकजातीय इन्द्रशब्द इत्यव्यवहाराच्च । तच्चेह पदं प्रकृतिप्रत्ययविभागवत् प्रकृत्यादिकमपि नित्यमेव यद्वा अखण्डमेव तत् । अन्यथा वर्णानामपि तस्यादित इति शास्त्रबलात् ऋकारादिषु च रेफलकाराकारेकारादिभागानामनुभवसिद्धत्वाच्च भागवत्त्वे भागानामपि तुल्यन्यायादवयवकल्पनायां परमाणुतुल्यानामवशेषः स्यादिति यैव घटादीनामवयवसमुदायरूपत्वे दुरवस्था सैवात्रापि । एवञ्च पदपदार्थव्यपदेशराहितं निरीहमेव जगत्स्यात् । सावयवत्वे नित्यताभङ्गश्च । वाक्यमपि पदविभागरहितमखण्डमेव वाक्यादपोद्धृत्य पदान्वाख्यायन्त इति भाष्यात् । तत्र क्वचिद्वाक्यस्यैव विभज्यान्वाख्यानं क्वचित्पदस्यैवेति लक्ष्यानुरोधाद्व्यवस्था । न च वर्णेषु नावयवास्तदवभासस्तु तत्तदुच्चारणविशेषव्यङ्गतत्तद्वर्णसमानाकारक्रमिकध्वनिविशेषोपरागोपाधिरिति वाच्यम् । पदे वर्णावभासस्य वाक्ये पदावभास-

स्याप्येवमेवोपपत्तेः । शास्त्रं तु रेखागवयन्यायेने-त्याहुः ॥ ५८ ॥

(कु०टी०) योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविभुविशेषगुणनाश्यत्वमिति तार्किकपरिभाषां निराकरोति । शब्देति। यथा द्वित्वप्रत्यक्षानुरोधादपेक्षाबुद्धेः क्षणत्रयावस्थायित्वं तार्किकैरपि स्वीक्रियते तथेहापीति भावः । इदानीमिति । इदानीं जानामी-दानीमुच्चारिता इति सम्बन्धः । अन्यथेति । इदानीं जाना-मीत्यादेरेतत्क्षणावच्छिन्नज्ञानवानहमित्यादिरर्थः । तथाच क्षणस्येव तन्मात्रवृत्तिज्ञानादेरपि प्रत्यक्षं न स्यादित्यर्थः। यावता समयेन चालितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुप-सम्पद्येत स कालः क्षण इति पातञ्जलभाष्यम् । तस्य च क्षण-स्यातिसूक्ष्मत्वादतीन्द्रियत्वम् । निमेषस्य चतुर्थो भागः क्षण इति टीकाकृतः । कर्म तज्जनितविभागादिश्च तदुपाधिः । तदुक्तं बल्लभाचार्य्यैः ।

रवेः स्पन्दक्षणस्तस्य नानाक्षणविशिष्टता ।
क्रमो नानाविधोपाधिसम्बन्धः परिकीर्त्यते ॥

इति । विभागप्रागभावाद्युपाधिविशिष्टो रवेः स्पन्दः क्षणः केवलस्पन्दस्यानेककालवृत्तित्वादित्यर्थ इति वर्धमानः । ननु-रविस्पन्दे कथं क्षणचतुष्टयस्थायित्वव्यवहारः स्वस्य स्वावृत्ति-त्वादत आह । तस्येति । क्रमवद्विभागाद्युपाधिचतुष्कसम्बन्धात्तत्र क्षणव्यवहार औपचारिक इत्यर्थः । यत्तु क्रियात्मक एव काल इति तन्न । महाप्रलये क्रियाभावेन महाप्रलयोत्पत्तिव्यवहा-रानापत्तेः । परस्य त्विति । परमते तूक्तैव व्यक्तिभेदेनैवास-म्भवात्सो ऽयमिति प्रतीतिर्न स्यादिति भावः । गत्वावच्छि-

श्चेति। भिन्नव्यक्तौ तु तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो ऽस्ति न सामान्यधर्मावच्छिन्नप्रतियोगिताको ऽपि गकारत्वस्य तत्रापि सत्त्वादिति भावः। द्वयोर्घटयोरिति। तत्रापि घटत्वेन रूपेण भेदाभावादिति भावः। व्यक्तिविषयकत्वे इति। भवन्मते जातिविषयप्रत्यभिज्ञा स्यादिति भावः। श्यामो नष्ट इति। रूपनाशे धर्मिणो ऽपि नाशव्यपदेशात्। जिह्वासंयोगादीनां ध्वनिहेतुत्वं दर्शयति। वर्णोच्चारणेति। यत्र जिह्वासंयोगाद्वर्णस्य नाभिव्यक्तिस्तत्र ध्वन्युत्पत्तिदर्शनाद्वर्णस्थले ऽपि ध्वनिः स्वीकार्य इत्यर्थः। तज्जनकत्वेति। ध्वनिजनकत्वेत्यर्थः। वर्णोत्पत्ताविति। वर्णोत्पत्तिस्थले ध्वनेरनङ्गीकारे तादृशजिह्वासंयोगादीनां ध्वन्युत्पत्तिप्रतिबन्धकत्वं च कल्पनीयं स्यादित्यर्थः। तत्सत्त्वेति। ध्वनिस्वीकारेत्यर्थः। तत्त्रारोप्यत इति। वायुसंयोगनिष्ठमुत्पत्त्यादिकमारोप्यत इत्यर्थः। शब्दं कुर्विति। अत्रापि ध्वनिगतोत्पत्तेः शब्दे आरोप इत्यर्थः। ननु गुणचाक्षुषे चक्षुःसंयुक्तसमवायस्य हेतुतया तदभावात्कथं लोहितः स्फटिक इति प्रत्यय इत्यत आह। आरोप एवेति। परम्परामेव दर्शयति। उक्त इति। लोहितः स्फटिक इत्यत्र लौहित्यसमवायिनी या जपा तत्संयोगः स्फटिके। वर्णेष्वप्युत्पत्त्यादिरारोप्यत एव न तु परम्परयेत्याह। वस्तुत इति। रसो रूपवानिति रससमवायिसमवेतत्वस्य रूपे सत्त्वात्। अनियामकत्वादिति। एनेन विशिष्टप्रतीतिनियामकविशेषत्वं सम्बन्धत्वमित्यपास्तम्। किञ्चेति। प्रथमोपलम्भवत्त्वेनोत्पत्तिव्यवहार इत्यर्थः। इत्येव प्रत्ययादिति। उत्पादयतीति प्रतीत्यभावादिति भावः। ननूच्चारणे नित्यत्वापत्तिरत आह। उच्चारितत्वं चेति। स्त्रीशुकेति। स्त्रीशुकाद्युच्चारितत्वानुमापकमित्यर्थः। तज्जन्य-

तावच्छेदकेति। स्त्रीशुक्रादिजन्यतावच्छेदकेत्यर्थः। तदाश्रयत्वादिति। तारत्वाद्याश्रयत्वाच्छब्दस्य द्रव्यत्वमित्यर्थः। नन्वेवं शब्दस्य गुणत्वव्यवहारः कथमत आह। आकाशरूपेति। परैस्त्विति। एतस्य वक्तुमशक्यमित्यत्रान्वयः। मानान्तरेणेति। प्रत्यक्षेण नाशदर्शनादित्यर्थः। गत्वस्यैवेति। प्रत्यक्षविषय ताया उत्पादादिति भावः। तद्ग्रहेति। उत्पत्त्यग्रहेत्यर्थः। विपरीतग्रहः। नित्यत्वग्रहः। प्रत्यस्याद्यगम्यत्वात्कथं धर्मस्य बुद्धिरित्याशङ्क्योक्तम्। औत्पत्तिकस्त्विति। औत्पात्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चार्थे ऽनुपलब्धेस्तत्प्रमाणं वादरायणस्यानपेक्षत्वादिति सूत्रम्। अस्यार्थः शब्दार्थयोः सम्बन्ध औत्पत्तिकः उत्पत्तिर्भावस्तेनावियुक्तो नित्यः ज्ञायते ऽनेन ज्ञानमुपदिश्यते ऽनेन उपदेशः तस्य धर्मस्य ज्ञाने निमित्तमुपदेशो विधिवाक्ये शब्दो ऽस्य ज्ञानस्यार्थे ऽव्यतिरेको व्याभिचाराभावः प्रकारान्तरेणानुपलब्धेस्तद्विधिवाक्यं धर्मे प्रमाणं ज्ञानान्तरे तस्यानपेक्षत्वात् बादरायणस्यापि सम्मतमेतादिति। शब्दार्थसङ्केतरूपस्य पौरुषेयत्वाद्विधिवाक्यानां तत्सापेक्षत्वेनाप्रामाण्यमिति तत्र पूर्वः पक्षः। शब्दार्थसम्बन्धस्यानादित्वान्न सापेक्षत्वेनाप्रामाण्यमिति सिद्धान्तः। इदमेव। प्रवाहानादित्वरूपमेव। एवमत्रेति। अस्मिन्नधिकरणे एवमुक्तेन नित्यत्वेनेत्यन्वयः। ननु वृक्षसमूहे वनमिति वदेकत्वप्रत्ययस्तत्राह। वनराश्यादीति। अन्यथा भवन्मते ऽप्यवयवापेक्षयाऽवयविनोतिरिक्तत्वं न स्यादिति भावः। विभागवदिति। विभागविशिष्टमित्यर्थः। तत्। पदम्। वर्णानामपीति। भागवत्त्वे इत्यत्रान्वयः। अवशेष इति। परमाणौ विश्रान्तिः स्यादित्यर्थः। दुरवस्थेति। परमाणुपुञ्जात्मकस्य घटस्योत्पाद्यत्वाभावादिति

भावः । किञ्च परमाणूनां निरवयत्वे ऽवयवसंयोगाभावाद्द्व्यणुकाद्युत्पत्तिर्न स्यात् । तदुक्तं हरिणा ।

भागानामनुपश्लेषान्न वर्णो न पदं भवेत् ।
तेषामव्यपदेश्यत्वात्किमन्यदुपदिश्यतामिति ॥

अस्यार्थः वर्णभागानामनुषश्लेषान्न वर्ण एकः कश्चित्स्यात्तदभावे पदं न स्यात् पदाभावे वाक्यं न स्यादिति किं तदेकं वाचकत्वेन व्यवह्रियतेति । पदवद्वाक्यमप्यखण्डमित्याह । वाक्यमपीति । एवं चाखण्डस्फोटलक्षणः शब्दो वाक्यमिति लक्षणं बोध्यम् । अपोद्धृत्येति । कल्पनया प्रविभज्येत्यर्थः । वाक्यस्थपदानामपोद्धारेण च वाक्यस्याखण्डता दर्शिता । नन्वेवं वाक्यसस्कारपक्षासम्भव इत्यत आह । क्वचिदिति । इदमत्र चिन्त्यते । कानि सन्तीत्यादौ युगपत्संस्कारो नोचितः युगपत्सर्वेषां बुद्धिविषयत्वस्यानुभवविरुद्धत्वात् । तस्माद्वाक्यस्य प्रविभज्यान्वाख्याने वाक्यसंस्कार इत्येवारोपो युक्तः । तदवभासस्त्विति । रेफसदृशध्वन्युपरागात् रेफावभास इत्यर्थः । पदे वर्णेति । वर्णावयववत् पदे वर्णावभासः कल्पित इत्यर्थः । ननु पदानां नित्यत्वे शास्त्रवैयर्थ्यमत आह । शास्त्रं त्विति ॥ ५८ ॥

(क०टी०) विरुद्ध नैयायिकमत खण्डयति।शब्देति।अन्यथा। तेषामस्थिरत्वे। अत एव तत्र क्षणेति विहाय कालेत्युक्तम् । तस्मात्तेषां तत्त्वासिद्धम। इदमेव द्रढयितु तदुत्पत्तिवादिमते दूषणमाह। परस्येति। आदिना नाशादिः। तदुक्तप्रकारं खण्डयति। नन्विति। जातिविषयत्व तस्या इति भाव' । यद्यप्यत्र पक्षे तदतिरिक्तजात्यनङ्गीकारान्नेद सुवचम् । न चैव गत्ववान् ग इति न स्यात् गुणगुणिनोरभेदे ऽपि रूपवान् घट इति वदुपपत्तेस्तथाप्यभ्युपेत्य तत्त्वमाह। द्वयोरिति। अत्र तदभावस्य सत्त्वात् । तथाच व्यक्तिभेदस्यैव तत्र विषयत्वमावश्यकमिति भाव.। सो ऽय ग इत्यादृस्वारस्येनाह। प्रत्यभीति। इतीति। इत्यादीत्यर्थ.।

श्यामो घट इत्यादौ भ्रमत्वमुक्त्वा प्रमात्वमाह । परम्परेति।उत्पत्तेस्तदादेः परम्परया वर्णनिष्ठत्वाभ्युपगमान्न भ्रमत्व साक्षात्सम्बन्धांशे भ्रम इत्यवशिष्यते तदपि सोऽयमित्यत्र तव व्यक्त्यभेदांशे भ्रमत्ववत्तुल्यम् । ननु वर्णस्थले ध्वनिसत्त्वे एव मानाभावः शङ्काद्यभावेन तदुत्पत्त्यसम्भवश्चात आह । वर्णोच्चारणेति । तत्सत्त्वेत्यत्रान्वय. । ध्वनिसत्त्वेति । तद्विषये इत्यर्थ । इद दृढयति । अत एवेति । तदुच्चारणमपि वर्णानुपलब्धिसाधकमिति भाव. । अन्यथात्र दोषमाह । यदि त्विति । युक्तितौल्यादिति भाव' । तथापि निर्वाहमाह । तज्ज्ञानेति । तत् । उत्पत्त्यादिकम । तस्यास्तद्विषयत्वे बाधक दोषान्तरमुद्धरति। एवमेवेति। आरोपादिनैवेत्यर्थ । कृधातो' क्रियासामान्यार्थकत्वेन वक्ष्यमाणरीत्या आह। उच्चारेति। नन्वेव लोहित स्फटिक इत्यादावाद्ये भ्रमत्वे द्वितीयरीत्या प्रमात्वमपि स्यात्तच्च लोकादिविरुद्धमत आह । लोहित इति। एवव्यावर्त्यमेवाह । न त्विति । उक्ते । लोहितः स्फटिक इत्यत्र । सिद्धान्तमाह । वस्तुत इति । सर्वत्र प्रकृतेऽपि बुद्धिनियामकत्वाभावात्।बुद्ध्या नियामकत्वादिति पाठान्तरम् । तत्र। तद्विषये। बाधक दोषान्तरमुद्धरति। एवमिति। आदिना उदात्तत्वादि ह्रस्वत्वादि च । तन्निष्ठमेव । ध्वन्यादिनिष्ठमेव । ननु तन्निष्ठमेव तत्तत्रारोप्यते इति को ऽय कुलधर्म. अन्यघटादिनिष्ठस्याप्युत्पत्त्यादेस्तत्रारोपसम्भवादित्याह। किञ्चेति। आदिनैतद्वैपरीत्यपरिग्रहः। सादृश्येनेति । सर्वत्रारोपे ऽस्यैव बीजत्वादिति भाव । इद च सर्व तेषां परीत्योत्पत्तिमभ्युपेत्योक्तम् । वस्तुत सैव नेत्याह । किञ्चेति । एवेन वर्णमुत्पादयतीति प्रत्ययव्यवच्छेद । ननूच्चरितत्वमपि कण्ठाद्यभिघातजन्योत्पत्तिविशिष्टत्वमेवेति तावतापि किमत आह । उच्चारीति । नन्वेव स्त्रीप्रभवो ऽय शुकप्रभवो ऽयमित्यादिप्रतीतिस्तच्छ्रवणाच्छुकाद्यनुमान च न स्यात्तस्य तज्जन्यतावच्छेदकवैजात्यधीनत्वादत आह । स्त्रीति । त्य च । त्यमपि। तदुपेति । तदनुमानाद्युपेत्यर्थ' । प्राग्वदेवाह । तारेति । तन्निष्ठमेव । ध्वन्यादिनिष्ठमेव । तत्रारोप्यते इति । अत्रतरसम्मतिमप्याह । अत एवेति।तेषां तन्निष्ठत्वादेवेत्यर्थ' । एव तारत्वादिर्विरुद्धत्वमभ्युपेत्योक्तम्। वस्तुनस्तदेव नेत्याह ।यद्वेति। निष्ठा । निष्ठा. एवाविरुद्धत्वात् । तदेवाह । कस्य चिदिति। यत इत्यादि । नन्वेव नयोर्विरोधव्य-

वहार. कथमत आह । तयोरिति । तारत्वमन्दत्वयोरित्यर्थ. । वर्णो-त्पत्तिवादिमते दूषणमाह । परैस्त्विति । नन्वेकेनैव वायुसंयोगेन श्रोतृभेदेन तथा व्यञ्जने ऽपि किं मानमत आह । एतदिति । तत्र ह्युच्चैः श्रूयमाण उदात्त इत्यर्थाभिमानेनोच्चनीचस्यानवस्थितत्वात्सञ्ज्ञाऽप्र-सिद्धिरिति वार्तिकोक्तशङ्कायाः इदमुच्चनीचमनवस्थितपदार्थक तदेव हि क चित्प्रत्युच्चैर्भवति क चित्प्रति नीचै एव हि कश्चित्क चिदधीयानमाह किमुच्चै रोरूयसे शनैर्वर्ततामिति तमेव तथाधी-यानमपर आह किमन्तर्दन्तकेनाधीषे उच्चैर्वर्ततामिति एवमुच्चनीच-मनवस्थितपदार्थक तस्यानवस्थितत्वात्सञ्ज्ञाया अप्रसिद्धिरित्युपपा-दन भगवता कृतम् । एतेनोदात्तत्वादिकमपि तथैवेति सूचितम् । स्त्रीशुकादिशब्दे ऽपि एतदनारोप इत्याह । शुकेति । उच्चारणेति । क-ण्ठताल्वाद्यभिघातेत्यर्थः । ननु तन्मते तज्जन्यतावच्छेदकतया सि-द्धवदत्र तत्सिद्धिरेव कथमत आह । विजातीयेति । तेषा स्वत एव भेदात् । व्यङ्ग्यान्येव । व्यङ्ग्यतावच्छेदकान्येव । विशिष्टव्यङ्ग्यत्वाशय-वान् । नन्वत्र पक्षे इको यणचीत्यादौ कथ वर्णानां प्रकृतिविकृतिभा-वो ऽत आह । प्रकृतीति । उक्तेति । अन्त करणस्थेकारबुद्धिमपहाय यकारबुद्धिकरणादित्यर्थ । एवं चेद् तुल्यमेवोभयो' उत्पत्त्यादेस्तु सर्वथा आरोप एवेति ध्वनयन्ननतिप्रसङ्गायाह । अन्येति । सादृश्य-द्वारेति भाव. । नन्वभेदप्रत्यभिज्ञया तत्त्वेतिप्रसङ्गापत्तिरत आह । से यमिति । मानान्तरम् । प्रत्यक्षम् । सिद्धान्ते शङ्कते । न चेति । वर्णाना-मिति शेष. । आदिना जन्यत्वपक्षे ध्वनिपरिग्रह । कत्वमेव । कत्वा-दिकमेव । आदिना वर्णपरिग्रहः । इद च गुरुधर्मस्यावच्छेदकत्वमभ्यु-पेत्य । वस्तुतो ऽत्र तदपि नेत्याह । प्रत्यक्षत्वावाच्छिन्नेति । तत्पक्षे तथै-व सत्त्वादेवमुक्तम् । उपलक्ष्यत्वं तृतीयार्थ । तदुपलक्षितकत्वादेरि-त्यर्थः । तथाच तदुपलक्षणं न तु विशेषणमिति न तस्य तत्त्वमिति भाव । तत्रैव शङ्कते । न चैवमिति । तया नित्यत्वेन वायुसयोगस्याभिव्यञ्जकत्वे इत्यर्थ । स्यादिति सम्भावनाया प्रत्यभिज्ञाया अत्रापि सत्त्वादिति भावः । वर्णवदिति वैषम्ये दृष्टान्त. । नन्वत्र तदभाव स्ववासनाकल्पित एवात आह । किञ्चेति । अनुमानेन नष्टेन चिरकालस्थायित्वेन विद्य-मानविषये एव तत्र तत्प्रतीतेर्लोकनिरूढत्वादिति भावः । त्वया

क्षणिकत्वस्यैवाङ्गीकारेणाह। नैवेति। नष्टेनैवेत्यर्थः। एवं चान्यथानुपपत्त्या तयात्र तत्सिद्धिस्तत्र तु देशान्तरकालान्तरदृष्टस्य तत एव पुनर्दर्शनसम्भवेन तदुपपत्त्या न तया तत्सिद्धिरिति भावः। नन्वेषां पारमार्थिकनित्यत्वे ततो द्वैतापत्तिरत आह। नित्यत्वं चैषामिति। एतावदेव। व्यावहारिकमेव। मीमांसकैरपि स्वीक्रियमाणं सम्बन्धानित्यत्वमिदमेव नान्यादृशमिति तत्सम्मतत्वान्न तद्विरोधो ऽपीत्याह। अत एवेति। अस्यार्थं सूचयन्नाह। औत्पत्तिकेति। पारमार्थिकनित्ये एव व्यवहाराभावाज्जगदुत्पत्तिकालकृत इति तदर्थः। नन्वेवमपि शब्दनित्यत्वं न तेषामभिमतमत आह। एवमिति। उक्तप्रकारेणेत्यर्थः। अत्र सम्बन्धाधिकरणे तयोः सम्बन्धस्य नित्यत्वादेवेत्यनेनेत्यर्थः। एवमग्रे ऽपि। ननु तावता वर्णानां भवतु नित्यत्वं पदादेस्तु कुतस्तत्त्वमत आह। तच्चेति। अन्यथेष्टतत्प्रामाण्यासिद्ध इदमावश्यकमित्याह। अत एवेति। वाचकस्य नित्यत्वादेवेत्यर्थः। अत्र प्रागुक्तमेव दार्ढ्यायाह। एके इति। अर्थानुवादो ऽयं भाष्ये। अत एवेत्याद्युक्तमुपपादयति। न हीयमिति। नन्वेवं कथमेकं वनमित्यादिप्रतीतिरत आह। वनेति। ननु तत्रैकदेशावच्छिन्नत्वस्योपाधेरेकत्वेनौपाधिकी सा प्रतीतिरिति किमर्थं तत्र तत्त्वाङ्गीकार इति चेदस्तु तथा प्रकृते तु नोपाधिसम्भव इत्याह। न चैकेति। तेन एकार्थधीहेतुत्वेन असावयं दोषः। दोषान्तरमाह। किञ्चेति। अप्रसिद्धार्थपदश्रवणे सति सङ्केताग्रहादर्थबोधाभावे ऽप्येकं पदमित्यादेर्दर्शनादित्यर्थः। आदिना एकं वाक्यमेको ऽनुवाक इत्यादिपरिग्रहः। तस्यार्थबुद्ध्युत्तरकालं ग्राह्यत्वादिति भावः। उपाध्यन्तरं निराचष्टे। एकेति। समूहालम्बनात्मकैकधीगोचरघटपटादेरपि तत्त्वापत्तिरिति तु न आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायात्। अत आह। सर्वोच्चारेति। ज्ञानानां तत्र भेदात्। अभ्युपेत्येति। आद्ये सिंहावलोकनन्यायेन दोषमाह। किञ्चैवमिति। तत्र तत्प्रतीतेस्तथोपपादने इत्यर्थः। तत्समूहेन। तन्तुसमूहेन। उक्ताशयेनैवाह। यदीति। तत्सिद्धिः। अतिरिक्तावयविसिद्धिः। भाष्यस्यान्यथोपपत्त्या नेष्टार्थसाधकत्वमित्याह। न चैक इति। दोषान्तरमाह। घटेति। इदं द्वयमभ्युपेत्योक्तम्। वस्तुतस्तदेव नेत्याह। एकेति। तत्त्वे तु गौणवन्मुख्यो ऽप्युचित इति भावः। अत्रैव शास्त्रानुरोधेन सखण्ड-

त्वमाह । तच्चेदमिति । नित्यमेकं व्यापकं चेत्यर्थः । नन्वेवमनित्यत्वाद्यापत्तिरत आह । प्रकृत्यादीति । लाघवादखण्डत्वमाह । बुद्धेति । प्रकृतिप्रत्ययविभागशून्यमेवेत्यर्थः । विपक्षे बाधकमप्याह । अन्यथेति । वर्णानामित्यस्य भागेत्यत्रान्वयः । दुरवस्था । तदप्रतीत्यादिरूपा । इष्टापत्तावाह । एव चेति । तदसिद्धौ चेत्यर्थः । कस्याप्यभावादिति भावः । भाष्यादिति । अन्यथापोद्धृत्येति न वदेत् । अपोद्धरणं च कल्पनं तदा तु तेषां स्वरसत एव सत्त्वमिति भावः । तदपि द्वेधेति । तत एव लब्धमित्याह । तत्रेति । अन्वाख्येये इत्यर्थः । क्वचिदिति । कानि सन्तीत्यादावित्यर्थः । क्वचित् । घटमानयेत्यादौ । नन्वेव वर्णानामप्यखण्डत्वासिद्धौ शास्त्रानुभवविरोधापत्तिरत आह । न चेति । तदेवेत्यनेन विरोधोद्धारः । आदिना प्रकृतिप्रत्ययपरिग्रहः । एतच्छून्यपाठ प्रचुरः । नन्वेव शास्त्राप्रमाण्यमसङ्ग पदवाक्ययोरखण्डत्वात् शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां व्युत्पादनपरत्वादत आह । शास्त्रमिति । उपपन्नमिति शेषः ॥ ५८ ॥

आकाशवृत्ते स्फोटस्य श्रोत्रग्राह्यत्वम् । तन्न अनेकवर्णध्वनिकल्पने मानाभावात् । अवर्णानामैक्यमवर्णककारादीनां चानेकत्वमित्यर्धजरतीयस्यान्याय्यत्वात् । तस्मादुक्तरीत्याकाशवृत्तिरेकः स्फोट एव श्रोत्रग्राह्यः । अत एव एको गकार इति प्रत्ययः । कत्वादिकं चाभिव्यञ्जकवायुनिष्ठतत्तत्स्थानाभिघातव्यङ्ग्यम् । कत्वादिवैजात्याक्रान्तैः स्वरूपरूषितस्य भाने तदनाक्रान्तैस्तु ध्वनिरूपेण ककार उत्पन्न इत्यादिप्रत्ययस्तु प्राग्वदेव ज्ञाननिष्ठोत्पत्त्याद्यारोपेण । न च वायुनिष्ठकत्वादेः श्रोत्रेण ग्रहे येन यस्य धर्मो गृह्यते तेन तदपीति न्यायेन वायूनामपि श्रोत्रेण ग्रहणापत्तिरिति वाच्यम् । यद्वृत्तितया धर्मग्रहणं तस्यैव धर्मिणस्तेन ग्रहणस्य चक्षुरादौ क्लृप्त-

त्वात्। स्फोटवृत्तितया च तस्य श्रोत्रेण ग्रहणं न वायुवृत्तितया। रसनादौ रसादिमात्रग्राहकताया दृष्टत्वाच्च। व्यञ्जकगतवैजात्यमादायैव ककारहकारयोर्भेदः। अद्वैतसिद्धान्तविषयसम्बन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे भेदव्यवहारवत् विशेष्यांशमादायाभेदे ऽपि तत्प्रतीतिर्निरुपाध्या। उपाध्यनालिङ्गिततत्प्रतीत्यभावात्। देशकालभेदप्रत्ययो ऽप्यौपाधिक एव। स एव च पदादिरूपेणापि व्यङ्ग्य इति बोध्यम्। अत्रापि काल्पनिकः प्रकृतिप्रत्ययविभागः पदे वाक्ये च पदविभागः। भेदेन कल्पिता अपि ते पदवदेव नित्याः। तदुक्तमाद्यन्ताविति सूत्रे भाष्ये नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमिति। वर्णशब्देन प्रकृतिप्रत्ययागमादयः। यद्वा अखण्डान्येव पदानि वाक्यानि च। रेखागवयन्यायेन तदन्वाख्यानार्थं कल्पिते पदादौ प्रकृत्यादिविभागकल्पना पदविभागकल्पना च। इदमप्याद्यन्तावित्यत्र भाष्ये। स्फोट एव कत्वादिना व्यज्यत इत्येओैजिति सूत्रेभाष्ये ध्वनितम्। तत्र हि नरसिंहवज्जात्यन्तरत्वाद्वर्णैकदेशानां वर्णग्रहणेनाग्रहणमिति पक्षे क्लृप्त इत्यत्र कृपो रोल इति लत्वाप्राप्तिमाशङ्क्य अथवोभयतः स्फोमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवतीत्युक्तम्। तस्यायम्भावः वस्तुतो रत्वादिमान्न कश्चित् किं तु अन्यगततत्तद्रूपेण स्फोटस्यावभासमात्रम्। एवं च कल्पत इत्यादावस्याप्रवृत्तिः स्यात्। अतो रेफावभासिस्फोटप्रसङ्गे लकारावभासः स्फोट इत्यर्थः। एवं च सर्वत्र

मिद्धं कृपावपि रेफावभाससत्त्वात् । आकारादौ तु नैव ह्रस्वावभास इति न तत्र ह्रस्वाकारावभासप्रयुक्तं कार्यम् । यत्तु कैयटेन अन्तर्भूतानन्तर्भूतसाधारणी जातिर्निर्दिश्यत इति व्याख्यातं तन्न । तादृशजातिसत्त्वे मानाभावात् । नरसिंहवद्वर्णान्तरमिति स्वोक्तिविरोधाच्च । सादृश्यात्तु प्रत्यभिज्ञेति स्वोक्त्यसङ्गतेश्च । श्रुतिपदास्वारस्याच्च । रजातेर्लजातिरित्यनुक्तेश्च । तादृशी जातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणमिति पक्षस्यैव सिद्ध्या ग्रहणपक्षमुक्तमथवा न गृह्यन्त इति पक्षे तत्समाधानपरभाष्यासङ्गतेश्च । अत एवाष्टमे रषाभ्यामिति सूत्रे कैयटः यथाच नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः एवं वर्णवर्णैकदेशयोरपीति स्फोटपदस्य च तत्तद्वर्णपदादिरूपेण ताल्वाद्यभिघाताज्ज्ञानविषयो मध्यमावस्थोऽर्थ इत्यलम् ॥ ५९ ॥

( कुं०टी० ) परे तु वर्णादीनामेकत्वमित्यारभ्योक्तमतं दूषयति । तन्नेति । अवर्णानामिति । आकाराणां परस्परमैक्यमकारककारयोस्तु परस्परं नैक्यमित्यत्र बीजाभाव इत्यर्थः । ननु वायुनिष्ठं कत्वादि कथं व्यज्यते तत्राह । तत्तत्स्थानेति । कत्वादीति । कत्वादिवैजात्यवता वायुना शब्दस्वरूपस्य भानमित्यर्थः । प्राग्वदेवेति यदुक्तं तत्स्फुटयति । ज्ञाननिष्ठेति । येनेति । इन्द्रियेणेति शेषः । वायूनामपीति । गुणगुणिनोः समानेन्द्रियग्राह्यत्वादिति भावः । रसादिमात्रेति । न तु जलस्यापीत्यर्थः ।

मात्रशब्देन द्रव्यवच्छेदः । रसनादिना रसत्वादेरपि ग्रहणात् । ककारेति । समानस्थानत्वे पीत्यादिः । विषयसम्बन्धेति । अन्तःकरणवृत्तिवैचित्र्यात् ब्रह्मात्मकसुखे ऽपि वैचित्र्यमित्यर्थः । अन्तःकरणस्य सुखात्मना परिणामे तत्तादात्म्यादहं सुखीति प्रत्यय इत्यर्थः । विशेष्यांशेति । कत्वादिविशिष्टतया गृहीतस्य स्फोटस्यैकत्वेऽपीत्यर्थः । तत्प्रतीतिः । ऐक्यप्रतीतिः । ननूपाध्यग्रहे ऐक्यबुद्ध्यापत्तिरत आह । उपाध्यनालिङ्गितेति । स एव । स्फोट एव । पद इति । पदे प्रकृतिप्रत्ययविभागः कल्पित इत्यन्वयः । पदवदेवेति । प्रकृत्यादयो ऽपि नित्या इत्यर्थः । उभयत इति । स्थानिन्यादेशे चेत्यर्थः । शब्दानामनित्यत्वे ऽपि तद्गता जातिर्नित्या सैव स्फोट इति मतेनाह । रश्रुतेरिति । न कश्चिदिति । वर्णा इति शेषः । अन्तर्भूतानन्तर्भूतेति । कृपो रोल इत्यत्र स्वतन्त्रास्वतन्त्ररेफसाधारणी रत्वजातिः स्थानित्वेनाश्रीयत इत्यर्थः । स्वोक्तिविरोधाच्चेति । दृष्टान्तासङ्गतेरिति भावः । श्रुतिपदेति । श्रवणस्य व्यक्तिविषयकत्वात् । इत्यनुक्तेश्चेति । अन्यथा भाष्यकार इत्थमेवावक्ष्यदित्यर्थः । समाधानपरेति । रश्रुतेर्लश्रुतिर्भवतीत्याकारकेत्यर्थः । पुरुषमृगराजाभ्यामिति । नरसिंहावयवानामित्यनुकृष्टव्यम् । मृगराजः । सिंहः । रपीति । आहेति शेषः । ननु स्फोटे वर्णविभागाभावात् रश्रुतेरिति पूर्वोक्तभाष्यासङ्गतिरत आह । स्फोटपदस्य चेति ॥ ५९ ॥

(क०टी०)आद्ये दोषमाह । अनेकेति । उभयसाधारणं दोषमाह । अवर्णानामिति । प्रागुक्तसिद्धान्तमुपसंहरति । तस्मादिति । ननु विलक्षणवायुसयोगा एव श्रोत्रेन्द्रियग्राह्याः सन्तु किमेकस्याप्यतिरिक्तस्य कल्पनयात आह । अत एवैक इति । तस्यैकत्वादेवेत्यर्थ । नन्वेव कथमेकत्वमत आह । कत्वादिक चेति । स्फोटाभिव्यञ्जकेत्यर्थः । तस्यापि

नित्यत्वमाह। तत्तदिति। नन्वेव कथ स प्रत्ययो ऽत आह। कत्वादीति। विजातीयैर्वायुभिरित्यर्थ•। तदनेति। अत एव विजातीयैस्तैरित्यर्थ•। रूषभूषायाम्। तस्य स्फोटस्यैव रूपेण भानमित्यस्यानुषङ्ग। दार्ढ्याय प्रागुक्त स्मरति। ककार इति। पूर्वतो विशेषमप्याह। ज्ञानेति। आदिना नाश। एव प्रागपि। यद्वृत्तीति। येनेति शेष•। च स्त्वर्थे। एव क्लृप्तनियमेन त नियम निरस्याद्यव्यभिचारात्स नियम एवनेत्याह। रसनादाविति। नन्वेवमपि ककारहकारयोरैक्यप्रत्ययापत्तिर्भिन्नत्वप्रतीत्यनापत्तिश्चात आह। व्यञ्जकेति। अद्वैतेति। विषयवाह्येन्द्रियाणां मिथो य सम्बन्ध सयोगादिस्तज्जन्य यत्तत् वृत्तिवैचित्र्य तेनेत्याद्यर्थ। अन्त•करणस्य मूलावच्छिन्नचैतन्य प्रमाता मध्यावच्छिन्न चैतन्यं प्रमाण अग्रावच्छिन्न चैतन्य वृत्ति• विषयसुखनिरासाय स्वरूपपद ब्रह्मस्वरूपसुखे इति तदर्थः। अत एव तन्नित्यमेकविषयसुख तु स्रगादिविषयसम्पर्केण सत्त्वावच्छिन्नान्त करणे चेतनप्रतिबिम्ब•। अत एव तस्य ज्ञानत्वमनित्यत्व च सैव च वृत्तिरिति भाव। अभेदे ऽपीत्यनेन तस्येष्टत्व सूचितम्। तादिति। वर्णेत्यर्थ•। अन्यदपि बाधक निराचष्टे। देशेति। नन्वेव कथ पदादिप्रतीतिरत आह। स एव चेति। अपिना कत्वादिसमुच्चय•। एकैकविजातीयवायुभि कत्वादिनैव तस्य व्यञ्जन क्रमोत्पन्नैर्बहुभिस्तु तत्तत्पदादिरूपेण व्यञ्जनमिति भाव•। सिद्धान्ते सखण्डपक्षमाह। अत्रापीति। सिद्धान्तपक्षे ऽपीत्यर्थ•। नन्वेव तस्यानित्यत्वापत्तिरत आह। भेदेनेति। ननु तत्र वर्णानां तत्त्वमुक्त न प्रकृत्यादेरत आह। वर्णेति। वर्णस्फोटस्य तत्स्वरूपत्वात्। अथाखण्डपक्षमाह। यद्वेति। नन्वेव शास्त्राप्रामाण्यमत आह। रेखेति। तत्। अखण्ड पदादि। आदिना वाक्यम्। अत एव यथासख्यमाह। प्रकृत्येति। अत्रापि प्राग्वत् सम्मतिमाह। इदमपीति। तत्र हि अनागमकानां सागमका इति द्वेधा उपपाद्याथवा एकया आनुपूर्व्या अय शब्दान्तरमुपदिशति प्रकृतिस्ततो बलाद्यार्धधातुक तत पश्चादिकार यस्मिस्तस्यागमबुद्धिर्भवतीत्युक्तम्। एतदाह। अस्ति स्त• एधीति। तत्त्वतो रूपार्थान्वयाभावात्काल्पिताभ्यामन्वयव्यतिरेकाभ्यामेवार्थवत्तामाश्रित्यासत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्येति कैयट•। अत्र पक्षे वाचकस्यैवानया प्रनाड्या व्यु-

त्पादनम् । उत्तरपक्षे तु कल्पितस्यानेन साक्षात् बोधन तेन च बोधकस्याखण्डस्य बोधनमिति भेद इत्युद्द्योतश्च । उक्तार्थे सिंहावलोकन्यायेन सम्मतिमाह । स्फोट एवेति । जात्यन्तरेति । समूहस्येति भाव । कैयटोक्तिरियम् । आशङ्क्य । कृप उः र ल इति च्छेदेन समाधायेति शेष. । वस्तुन इति । तेषामनङ्गीकारात् । एवम् । केवलावभासे च । एव च सूत्रवैयर्थ्यापत्तिरिति भाव. । अतिप्रसङ्गो ऽत्र पक्षे नेत्याह । आकारादाविति । कार्यम् । वाचा तरतीत्यादौ ध्यज्लक्षणष्ठनादिकम् । तत्रत्यकैयट खण्डयति । यत्त्विति । ननु सर्वतो बलीयसीति न्यायेन तत्स्वीकारो ऽत आह । नरेति । अथवा पुनर्न गृह्यन्ते इति प्रतीक धृत्वेति भाव. । तत्रत्यामेवाह । सादृश्यादिति । आदिना तत्त्वासिध्या पृथगनुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वमित्यस्य परिग्रहः । तत्समेति । तत्र सत्त्वाप्रासिशङ्कासमाधानपरोक्तभाष्येत्यर्थ । कैयटस्यापि तत्र न निर्भर इत्याह । अत एवेति । मदुक्तस्य तदभीष्टत्वादेवेत्यर्थ । यत्तु प्रागुक्तरीत्या पदादिरूपेणाभिव्यक्तस्यार्थप्रत्यायकत्वात्स्फोटत्वव्यवहार इति तन्नेत्याह । स्फोटेति । तथाच न केवल स्फुटत्यर्थो ऽस्मादिति स्फोटो ऽपि तु स्फुट्यते य सो ऽपि स इति भाव. । न चैव वायुसयोग एव वाचको ऽस्त्वस्तु शृणोमीत्याद्यनुभवेनातिरिक्तस्य श्रोत्रग्राह्यस्यावश्यकत्वादित्याद्यन्यतो ऽनुसन्धेयम् । तदाह । इत्यलमिति ॥ ५९ ॥

आन्तरस्फोटे भाष्यसम्मति । किञ्चैवं द्रुतमध्यविलम्बितासु प्रयत्नभेदेन चिराचिरकालोच्चारणजन्यत्वाद्भिन्नकालत्वभेदयोरापत्तौ ह्रस्वाकारस्यापि भेदे भिन्नकालत्वे चान्यतमवृत्तौ तपरकरणे ऽन्यतमवृत्तावतो भिसो ऽनापत्तेः । स्फोटाङ्गीकारे तु न दोषः । तदभिव्यक्त्यनन्तरं जायमानेन चिरकालेन वैकृतध्वनिना तस्य चिरकालमुपलब्धावपि स्फोटे कालभेदाभावात् । तमेवायं द्रुतमुच्चारितवानन्यो विलम्बितमिति प्रत्यभिज्ञास-

त्वात् । ह्रस्वदीर्घादौ तु नैवमभेदप्रत्यभिज्ञा । एतेन ह्रस्वदीर्घप्लुतैरभिव्यक्तस्फोटे तदुपरागवशाद्यथा तावत्कालत्वारोपस्तथात्रापि स्यादिति परास्तम् । ह्रस्वदीर्घादीनां परस्परमैक्यप्रत्यभिज्ञाभावेन तत्कालत्वारोपेऽप्युच्चारयित्रालस्यादिकृतस्यास्य वैकृतगतस्य कालत्वोपलब्धिचिराचिरत्वकरस्यारोपे मानाभावात् । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायात् । अत एव तिसृष्वपि ह्रस्वो मकार इत्यादिरनुभवः । जन्यत्वे तु वर्णानां क्षणस्थायित्वाभ्युपगमात्कस्य चिरमुपलब्धिः स्यादिति बोध्यम् । तदुक्तं तपरसूत्रे भाष्यकृता वृत्त्यन्तरे ऐसो नापत्तिस्तत्तद्वृत्तिजनकयत्नभेदेन वर्णानां तत्तत्कालत्वस्यैवौचित्यादित्याशङ्क्य एवं तर्हिस्फोटः शब्दो ध्वनिः शब्दगुणः कथं यथा भेर्याहन्ता भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति कश्चित्त्रिंशत्कश्चिच्चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः ।

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥

इति । स्फोटः शब्द इति श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थः शब्दः ध्वनिस्तदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपः शब्दस्य चिराचिरोपलब्धिकरत्वाद्गुण उपकारकः । भेरीमाहत्येत्यस्य तं शब्दमुपलभमान इति शेषः । ध्वनिरूपेणापि स्फोट एव गृह्यत इति दृष्टान्तिकोभयसाधारणमाह । स्फोटस्तावानेव-

ति। ध्वनिकृता। वैकृतध्वनिकृता। ध्वनिः स्फोटश्च स्त इति शेषः। शब्दानां सम्बन्धीध्वनिः। वैकृतध्वनिस्तु केषां चिदल्पो ऽल्पकालमुपलब्धिजनकः केषां चिन्महान् बहुकालमुपलब्धिजनको लक्ष्यते। तत्र प्रमाणमाह। उभयं तत्स्वभावतः। सिद्धमिति शेषः। तदुक्तं हरिणा।

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः।
स्वभावतस्तु नित्यत्वाद्ध्रस्वदीर्घप्लुतादिषु॥
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते।

अभिन्नकालत्वोपकारकं स्वभावतस्तु नित्यत्वादिति। प्राकृतध्वनिशब्देन स्फोटव्यञ्जकमत्रोच्यते।

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।

ग्रहणे अभिव्यक्तौ।

स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते।

स्थितिभेदे चिराचिरोपलब्धिविशेषे।

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥

इति। शब्दस्याभिव्यक्तेरूर्ध्वं वैकृता ध्वनयो जायन्त इति शेषः। ते तु वृत्तिभेदे द्रुतादिवृत्तिभेदे समुपोहन्ते तत्र कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यत इति तदर्थः। वैकृतत्वं चैषामालस्यादिकृतत्वात्। कैयटो ऽप्यत्र व्यञ्जकशब्दो वैकृतध्वनिपरस्तस्याप्युपलब्धिजनकत्वेन व्यञ्जकत्वव्यवहार इति दिक्। एवं च पदादिरूप आन्तरः स्फोटो वाचक इति सिद्धम्॥ ६०॥

(कुं० टी०) वर्णभेदे दोषान्तरमाह । किञ्चैवमिति । भिन्नकालत्वेति । कालभेदवत्त्वे वर्णभेदश्च स्यादित्यर्थः । वैकृतेति । स्फोटस्वरूपमभिव्यज्य पुनःपुनरविच्छेदेन दीर्घकालमुपलभ्यमानो ध्वनिर्वैकृतः । एतेनेति । यथा ह्रस्वाद्यभिव्यक्तः स्फोट एकमात्रादिस्तथा वृत्तिभेदादपि भेदः स्यादित्यर्थः। प्लुतैरिति । ध्वनिरिति शेषः । अत्रापि । वृत्तिभेदेऽपि । उच्चारयितुरालस्यमिति समासः । वृत्तित्रये ऽपि स एवायमिति प्रत्यभिज्ञानान्नारोपसम्भव इति भावः। आरोपे सतीति। गौर्वाहीक इत्यारोपे जडत्वं निमित्तम् । वृत्त्यन्तर इति । यद्वृत्तिमाश्रित्य-पाणिनिना सूत्रितं तदन्यवृत्तावित्यर्थः। भेर्याहतेति। यथा प्रयत्नविशेषादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते कश्चिच्चिरकालं तथा वृत्तिष्वुपलब्धीनां कालभेदो विषयस्य तन्नभेद एव । ध्वनिः स्फोटश्चेति। व्यञ्जको व्यङ्ग्यश्च शब्दानां व्यङ्गानां सन्बन्धव्यञ्जकत्वेन वैकृतो ध्वनिः स एव महानल्पश्च केषां चिदिति व्यक्तवाचामेवोभयं व्यञ्जकरूपं गृह्यते अव्यक्तवाचान्तु ध्वनिरेव तत्स्वभावतः तत्स्वरूपेणैवेत्यर्थः । ननु ध्वनेरपि शब्दत्वात्कथं शब्दगुणत्वमतो ऽर्थमाह। उपकारक इति। शेष इति तु न तदीयशब्दस्याल्पकालाचिरकालाभ्यामुपलम्भात् दृष्टान्तता । ननु भेर्याघातस्थले स्फोटाभावात् स्फोटस्तावानेवेति दृष्टान्तासङ्गतिरत आह। ध्वनिरूपेणापीति। तत्रापि स्फोट एव उच्यत इत्यर्थः। तावानेवेति। नियतकालमेवेत्यर्थः। वैकृतध्वनिकृतेति । चिरकालमुच्चारणात् ध्वन्युपलब्धीनामेव वृद्धिरित्यर्थः। शब्दानां सम्बन्धी ध्वनिरित्यस्यैवार्थमाह। वैकृतध्वनिस्त्विति। इति शेष इति। तथा च स्वरूपतः सिद्धत्वेन प्रमाणान्तरात्तथेष्टत्वं सूचितं न योगिप्रत्यक्षगम्यं चैतदिति भावः । स्फोटस्याभिन्नत्वे ऽपि ध्वनिका-

लभेदेनैव कालभेद इत्याह। स्फोटस्याभिन्नेति। इह आत्मतत्त्वस्य नित्यत्वात् स्फोटानां स्थितौ कालपरिमाणवृत्तेः स्वल्पो ऽपि व्यापारो नास्ति ध्वनिना तु संसृष्टं तस्य स्फोटस्य स्वरूपमुपलभ्यते तस्मात् ध्वनिकालः स्फोटोपलब्धिरूपः परिर्तते। नन्वेवं ह्रस्वदीर्घप्लुतादिष्वपि ध्वनिरेव कालहेतुरितिदीर्घप्लुतयोरपि तपरस्तत्कालस्येति तत्कालताप्रसङ्ग इत्यत आह। स्वभावतस्त्विवति। कैयटे ऽपीति। ध्वनिःशब्दगुण इति भाष्यमुपादाय शब्दस्य गुण उपकारको व्यञ्जकत्वेनेत्यर्थः। इति कैयटे इत्यर्थवैकृतेति अन्यथाध्वनिकृता वृद्धिरिति भाष्यासङ्गतेः। तस्यापीति। प्राकृतध्वनिना उपलब्धस्य स्फोटस्योत्तरकाले वैकृतो ध्वनिरुपलम्भको भवतीति भावः। एवं चेति। स्फोटो द्विविधः आन्तरो वाह्यश्च। तत्रान्तरस्य मुख्यं वाचकत्वमित्यर्थः। वाह्यस्तु जातिव्यक्तिभेदेन द्विविधः॥ ६०॥

(क०टी०)तदेवमान्तरस्यैव वाचकत्व न वाह्यस्य वैखरीरूपस्य जन्यस्य शब्दस्येति व्यवस्थापितम्। तदेव सिंहावलोकनन्यायेन तत्र दृष्टदोषदानपुरस्सर भाष्यसम्मत्या द्रढयति। किञ्चेत्यादिना बोध्यमित्यन्तेन। एवम्। वाह्यशब्दस्यैव वाचकत्वम्। द्रुतेति। एवं भाष्यवार्तिकप्रयोगात्पूर्वत्र ह्रस्व।

अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बतेति॥

द्रुतायां वृत्तौ तदुच्चारयति वक्तरि ब्रह्माण्डसम्बद्धा सामृतबिन्दुस्राविणीति योगिप्रसिद्धेर्यस्याः सुषुम्णारब्धनाडिकाया नवपानीयबिन्दवः स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादशबिन्दवः स्रवन्ति विलम्बितायां वृत्तौ षोडशबिन्दवः स्रवन्तीति पूर्वपूर्वतस्त्रयो भागा अग्रे अधिका इत्यर्थ.। चिराचिरेति। तत्तत्कालावच्छिन्नताल्वोष्ठपुटव्यापारजन्यत्वादित्यर्थः। वर्णानामिति शेष.। आपत्ताविति। ह्रस्वदीर्घादिवादिति शेषः। अत इति। सूत्रानु-

करण भेदाविवक्षा च अनापत्तिरिति पाठः । अनापत्तेरिति पाठे तत्र तदनापत्तेस्तस्य न तत्त्व किन्त्वान्तरस्यैवेत्यर्थः । तदेवाह । स्फाटाङ्गीति । स्फोटेत्यर्थः । एवमग्रे ऽपि । चिरेति बहुव्रीहि । ननु तत्रापि कुतो न कालभेदो ऽत आह । तमेवेति । दृष्टान्तं विघटयति । ह्रस्वेति । तदिति । ह्रस्वादीत्यर्थ. । वर्णोपरागाभिव्यक्तिजनकयत्नीय-कालोपरागेणैव स्फोटस्य भानादित्यर्थ । एतेनेत्यस्यार्थमाह । ह्र-स्वेति । वैकृतत्वस्य व्याख्यानमाह। स्यादिति । वैकृतगतस्य । वैकृत-ध्वनिनिष्ठस्य कालस्य । ननु तत्सत्त्वे कुतो नारोपो ऽत आह । आरोपे इति। ननु तद्वदेतदवच्छिन्नत्वेनापि कुतो न स्फोटोपलब्धि-रत आह । अत एवेति । तदनारोपादेवेत्यर्थः । अन्यथा ह्रस्वाकार ए-वायमिति प्रत्यभिज्ञा न स्यादिति भाव । ननु त्वत्पक्षे ऽपि चिराचिरकालोच्चारणजनकत्वाज्जायमानवैकृतध्वनेरुपलब्धीनामेव कालभेदात्रैविध्य वर्णास्तु वृत्तिभेदे ऽप्येकरूपा एवेति कुतो नात आह । जन्यत्वे त्विति । अयम्भावः । उत्पत्तिवादिनो वर्णो-त्पत्तिं प्रत्युच्चारणव्यापारस्य कारणत्वात्तत्कालावच्छिन्नोच्चारणे-न ह्रस्वदीर्घादेरिव द्रुतावत्कालस्यैवोत्पत्तिः स्यात् । न चा-नुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इति वाच्यम् । वि-निगमनाविरहादिति । इदमेव एवं तर्हीत्यादिभाष्योक्तसमाधेर्नि-त्यातिरिक्तस्फोटाङ्गीकाराश्रयणस्य बीजम् । एव चात्र परिदृश्य-मानकालभेद उपलब्धिवर्ति एवेति तात्पर्यम् । अत्र भाष्यसम्म-तिमाह । तदुक्तमिति । प्रागुक्त सर्वमित्यर्थः । स्वभावत इतीत्यन्तो भाष्यग्रन्थः । तत्तादिनि । चिराचिरकालोच्चारणकजनकयत्नभेदेने-त्यर्थ. । तत्र तेनेत्याशङ्क्येति । उक्तमित्यन्वयः । प्राकृतध्वनेरत्र तत्त्वासम्भवादाह । तदभीति । स्फोटाभीत्यर्थः । ननु ध्वनिरपि शब्दविशेष एवेति कथ स शब्दगुणो ऽत आह । शब्दस्येति । वक्ष्य-माणभाष्यादाह । तं शब्दमिति । ननु भेर्याघातस्थले स्फोटाभावात् स्फोटस्तावानेवेत्यनुपपन्नमतो दार्ष्टन्तिकाभिप्रायमिदमुपलब्धिसा-मान्ये दृष्टान्तः । यथा तत्र तस्य ध्वनेस्तावत्तावत्कालमुपलम्भ-स्तथेहापि तत्तद्वृत्तौ तावत्काल तत्तदभिव्यञ्जकरूपरूषितत्वे तत्परिच्छिन्नस्यैव स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः । न चैतावता स्फोटभेद इति तात्पर्यमन्यथा दृष्टान्ते ध्वनेरुपलभ्य-

मानस्य भेदो न तथेह वर्णस्य द्रुतादिष्विति वैषम्यात्तदसङ्गतिरेवेति। कैयटासाङ्गत्यं ध्वनयन्नन्यथा व्याचष्टे *ध्वनीति। भेर्याघातस्थलेऽपि स्फोट एव भेरीताडनाभिव्यक्तः श्रोत्रग्राह्य इत्यर्थः। अत एव 'तदनाक्रान्तैस्तु ध्वनिरूपेण' इति प्रागुक्तम्। एवेन तदन्यतद्व्यवच्छेदः। *वैकृतेति। तत्कृतोपलब्धिकालवृद्धिरित्यर्थः। किं तत इत्यत आह *शब्दानामिति। केषांचिदित्यस्यावृत्त्योभयत्रान्वय इत्याह–*केषांचिदिति। अल्पत्वमचिरकालत्व, महत्त्व चिरकालत्व, तेषां चिराचिरोपलब्धिकरालपत्वमहत्त्ववान् वैकृतध्वनिरेवाल्पत्वादिना लक्ष्यते इत्यर्थः। तत्र *वैकृतध्वनिस्फोटयो। *शेष इति। न तु तत्र प्रमाणान्तरापेक्षेति भाव। योगिप्रत्यक्षसिद्ध चैतदुभयमिति तात्पर्यम्। कैयटासाङ्गत्येनोक्तार्थे हरिसम्मतिमाह *तदुक्तमिति। *अभिन्नेति। तथाच स्वभावतो नित्यत्वादभिन्नकालस्यापि स्फोटस्य ध्वनिकालानुपातिनः सत.। ध्वनिरत्र द्विविध। तत्र प्राकृताशयेनोक्तम् *ह्रस्वेति। तत्त्वेन भेदाद्ध्रस्वादिषु तद्विषये भेद इत्यर्थः। तत्त्वमेवोक्तम् *प्राकृतेति। तस्य यः काल. स एव शब्दस्य काल इति व्यवह्रियते इत्यर्थ। आरोपेणेति भावः। ननु ध्वनीनामपि प्राक् नित्यत्वं प्रतिपादितमत आह *प्राकृतेति। तदेवाह *स्फोटस्येति। वर्णाद्यात्मकस्फोटस्येत्यर्थः। *अभीति। तत्तत्कालकत्वेनेति भावः। शब्दस्य-तदात्मकस्फोटस्य। तुस्वारस्याद्वाक्यभेदमाह *ते त्विति। वैकृतध्वनयस्त्वित्यर्थ। नन्वेव कथमेषां वैकृतत्वमत आह *वैकृतत्व चेति। नन्वेव कैयटविरोधस्तेन हि "शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जकत्वेन यो ध्वनि. स एव महान्" इत्यादि व्याख्यातमत आह *कैयटोऽपीति। अत्र *भाष्यपद्यव्याख्यावसरे। ननु तस्य तत्त्वमेव बाधितमत आह *तस्यापीति। वैकृतध्वनेरपीत्यर्थ। जनकत्वेन *उपलब्धिपौनःपुन्यकारणत्वेन। तदुपक्रमेणैव भाष्यप्रवृत्तेः। पौन.पुन्यं चाकरोक्तमत्राविच्छेदेनोपलब्धिधारामात्रेण न तु विच्छिद्य विच्छिद्योपलब्ध्या। तथाचोभयमित्यावृत्त्या योजनीयम्। गृह्यत इति शेषः। तेन व्यक्तवाचामुभयम्, अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थ। ध्वनिपदेन प्राकृतवैकृतावुभावप्युच्येते। ग्रहणकर्मभूतमुभय तु प्राकृतध्वनिस्फोटरूपम्। वैकृतस्याल्पत्वादि चिराचिरोपलब्ध्यनुमेयमिति बोध्यम्। तदाह *इति दिगिति। समस्तप्रकरणार्थमुपसंहर-

ति *एव चेति । तत्र पक्षे उक्तदोषे चेत्यर्थः ॥ ६० ॥

शक्यार्थस्य बौद्धत्वम् । एवं शक्यो ऽर्थो ऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताविष्टः । घट इत्यत एव सत्तावगमेन घटो ऽस्तीति प्रयोगे गतार्थत्वादस्तीति* प्रयोगानापत्तेः । सत्तया विरोधात् घटो नास्तीत्यस्यानापत्तेश्च । मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय 'अस्ति' 'नास्ति' इति प्रयोगः । किञ्च, शशशृङ्गं नास्ति, अङ्कुरो जायतइत्यतो बोधानापत्तिः । मम तु बुद्धिसन्नङ्कुरो जायत इत्यर्थः । सा सत्तापि शब्दवाच्येति तद्भावः । किञ्च, इच्छादीनामन्तःकरणनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्ताऽऽवश्यकी । यत्तु वैशेषिकाद्यनुसारिणो विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणमिति वदन्ति । तन्न । तदीयतादात्म्यस्य वृत्त्यनियामकतया सामानाधिकरण्यानिर्वाहकत्वात् । अतीतानागतस्थले सतोरेव सम्बन्धेनैवं सम्बन्धस्य वक्तुमशक्यत्वाच्च । घटादिसामग्र्या अप्यवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतया देशविशेषे सामानाधिकरण्यं द्रष्टव्यम् । 'शिरसि मे वेदना,' 'अत्र घटः' इत्यादिव्यवहारादाधारतानियामकत्वम् । अवच्छेदकत्वं सप्तम्यर्थ इति तु चिन्त्यम्, अनुशासनाभावात् । सुप्विभक्तौ लक्षणाऽभावादस्य भवदीयसम्मतत्वाच्च । द्रव्यरूपादीनामपि द्रव्यदेश एव देश इति बोध्यम् । भ्रमेऽधिष्ठानत्वमपि बौद्धस्यैव न बाह्यस्येति सर्वं समञ्जसम् । अत एव 'उ-

पदेशो ऽजनुनासिकः'इति सूत्रे भाष्ये उक्तं 'को देवदत्त' इति प्रश्ने 'अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्त' इति । तव तु एकव्यक्तौ भेदाभावादीदृश इत्यस्यासङ्गतिः । मम तु एतैः शब्दैर्यादृशो ऽर्थो बुद्धौ प्रतिभासते तादृशो बाह्य इत्यर्थः । अत्रेदृशतादृशशब्दाभ्यां तत्त्वेन प्रत्यभिज्ञाविषयत्वमुपलक्ष्यत इति बोध्यम्। 'हेतुमति च' इति सूत्रे, 'पङ्क्तिविंशति'इति सूत्रे, मतुप्सूत्रे च भाष्यकैयटयोः स्पष्टमिदम् । गौतमो ऽप्यसत एवोत्पत्तिकर्तृत्वं कथमित्याशङ्क्य सूत्रितवान् 'बुद्धिसिद्धं तु तदसद्' इति । तद् कार्यमुत्पत्तेः प्राक् नाशोत्तरं चासदपि बुद्धिविषयतया सिद्धमिति तदर्थः ॥ ६१ ॥

( कुं० टी० ) *एवं शक्यो ऽर्थो ऽपीति । यथा आन्तरः स्फोटो निर्विभागो वाचकः एवं वाच्योऽप्यान्तरो निर्विभागः स एव वाक्यार्थः,स च प्रतिभारूप इत्यर्थः। *बुद्धिसत्तेति । बौद्धसत्तायुक्त एवेत्यर्थः। *घट इत्यत एवेति। अत एवोक्तं मतुप्सूत्रे भाष्ये "सर्वो हि पदार्थो न सत्तां व्यभिचरति"इति।तत्र हि भूतभविष्यतो-'र्गोमानासीद्', 'गोमान् भविता' इत्यादौ न बाह्यसत्तास्ति किन्तु बुद्धिकल्पितैव, एवं च तद्व्युदासाय बाह्यसत्तापरिग्रहार्थमस्तीतिविशेषणं युक्तमिति भावः। *शशशृङ्गं नास्तीति। अत एव 'अत्राभावज्ञाने आहार्यमेव प्रतियोगिज्ञानं कारणम्' इति लीलावतीशिरोमणौ स्पष्टम् । 'अन्यथा नीलं सरोजं भवत्येवेत्यादौ नीलत्वायोगस्य सरोजे अप्रसिद्धत्वात्तद्व्यवच्छेदो न लभ्येत' इति स्पष्टन्तत्रैव। *सामानाधिकरण्येनैवेति। कार्यकारणयोः समानदे-

शस्थत्वानियमादन्तःकरणवर्तिन्या सामग्र्या तत्रैव कार्योत्पादनं युक्तमित्यर्थः । सिद्धे पाकादाविच्छादेर्विरहादसिद्धस्यैव पाकादेरिच्छां प्रति हेतुताया वाच्यतया बुद्धावेव हेतुहेतुमतोः सामानाधिकरण्यमुपपादनीयमिति भावः । *आवश्यकीति । अवश्यभवितरि आवश्यकशब्दः ठगन्तो निपातनात् । वुञन्तस्य तु आवश्यिकेति स्यात् । वाक्यस्यैव हेतुतामभ्युपगच्छतस्तार्किकान्निराकरोति *यत्त्विति । *विषयतासम्बन्धेनेति । अयम्भावः—विषयतासम्बन्धेन चाक्षुषं प्रति चक्षुःसंयोगः कारणं न तु घटचक्षुःसंयोगः । विषयभेदेनानन्तकार्यकारणभावापत्तेः । एवं च घटचक्षुस्संयोगदशायां पटस्यापि चाक्षुषापत्तिः, अतो विषयाणामपि तादात्म्येन हेतुत्वमावश्यकम् । एवं च यदा घट एव चक्षुस्संयोगः तदा पटवृत्तिविषयतासम्बन्धेन विषयघटितचक्षुस्संयोगरूपसामग्र्याः कुत्राप्यभावान्नोक्तदोष इति भावः । वस्तुतस्तु विशेषणज्ञानादिरूपकारणबलादात्मनि समवायेन व्यक्तिवृत्तिविषयतासम्बन्धेनेश्वरज्ञानसाधारणज्ञानत्वेनैव हेतुत्वं कल्प्यते, अन्यथा घटत्वादिप्रत्यक्षस्थले घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपघटत्वत्वादिना हेतुत्वकल्पने गौरवादिति बोध्यम् । *तदीयेति । तैः स्वास्मिन्नेव स्वतादात्म्याभ्युपगमात् । *वृत्त्यनियामकतयेति । न हि 'घटो घटवानिति' प्रत्ययो ऽस्ति । *सामानाधिकरण्येति । कार्यकारणघटकस्य तादात्म्यसम्बन्धेन सामानाधिकरण्यस्य प्रत्यासत्तित्वानिर्वाहकत्वादित्यर्थः । *असङ्गतिरिति । कुण्डल्यादिपदैर्देवदत्तस्यैवाभिधानाद्वस्तुद्वयविषयकस्य ईदृशशब्दस्य प्रयोगो ऽसङ्गतः । स्वमते तु अङ्कुर्यादिशब्दैर्बौद्धाङ्कुर्यादेरुपस्थानात्तादृशो बाह्य इति द्वयोरभेद इत्यर्थः । *गौतमो ऽपीति । तत्र हि—"नासत्सद्" इति पूर्वपक्षसूत्रम् । अस्यार्थः—उत्पत्तेः

प्राक् कार्यं नासत्, असत उत्पत्तौ शशशृङ्गादेरप्युत्पत्तिप्रसङ्गात्। स्याच्च सिकतादावपि तैलम् । नापि सत्, सत उत्पत्तिविरोधादिति। इदानीं घट उत्पन्न इत्यादिप्रत्ययादसत एवोत्पत्तिः । सतस्तूत्पत्तौ पुनरुत्पादप्रसङ्ग इति तत्र समाधिः। ननु असत उत्पत्तावनियमप्रसङ्ग इत्याशङ्क्य समाधत्ते *बुद्धिसिद्धं तु तदसदिति। तदसत्कार्यं बुद्ध्या विषयीकृतं, तथाहि—इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्त्तते, सिकतादौ तु पटो भविष्यतीति न ज्ञायत इति न प्रवर्तते ॥ ६१ ॥

(क० टी०) एवं वाचकं निरूप्यान्तरत्वप्रसङ्गादाकाङ्क्षितत्वाच्च वाच्यं निरूपयति *एवमिति। वाचकवदित्यर्थः। एवव्यवच्छेद्यमेवाह *न त्विति। *सत्त्वेति। बाह्यसत्त्वेत्यर्थः। बाह्यसत्त्वावदिति द्वन्द्वः। यथासङ्ख्यमन्वयः। न च बाह्यसत्त्वोपलक्षितस्य वाच्यत्वम्, अतो वर्तमानकालविशिष्टसत्त्वाबोधनाय अस्तीतिप्रयोगस्तादृश्या एवाभावबोधनार्थं च नास्तीतिप्रयोग इति वाच्यम् । तदुपलक्ष्यस्याभावेनास्य वक्तुमशक्यत्वात्। दोषान्तरमाह *किञ्चेति। *इत्यतः—इत्यादितः। क्वचित्तथैव पाठः। आद्ये विरोधः द्वितीये बाधः, सत्ताया द्वितीयभावविकारत्वात् । *इत्यर्थ इति । एतेन बुद्धिसत् शशशृङ्गं बाह्यरूपेण नास्तीति तदर्थोऽपि सूचितः। *सा—बौद्धी । *तद्भावः—बुद्धिस्थपदार्थाङ्गीकर्त्राशय । युक्त्यन्तरमाह *किञ्चेच्छेति। आवश्यकेति पाठो मतुप्सूत्रे "नैतयोरावश्यकः समावेशः" इति भाष्ये। अवश्यं भाव आवश्यकः। मनोज्ञादेराकृतिगणत्वाद्, आवश्यक इति निपातनाद्वा वुञ्प्रत्ययः। अव्ययानांभेति टिलोपः। आवश्यकमस्मिन्नस्तीत्यावश्यकः। अर्शआदेराकृतिगणत्वादजिति कैयटात्। अन्यत्र क्वचित्तथोक्तत्वादाह *तदीयेति। अन्यत्रापि तयोः सामानाधिकरण्यायाह *घटादीति। सामानाधिकरण्यार्थमाह *अवच्छेद्येति । मिथ इति भावः । ननु सप्तम्यर्थत्व एवाधारस्य प्रागुक्तसङ्गतिस्तदेव न, मानाभावादत आह *शिरसीति। शिरोनिष्ठाधारतानिरूपिका वेदनेत्यादिबोधः। सिद्धान्ते तु अवच्छेदकतासम्बन्धस्याधारतानियामकत्वान्न दोष इत्यग्रे स्फुटीभ-

विष्यति । अन्यत्राप्युक्तरीत्यैव सामानाधिकरण्यमाह *द्रव्येति । तत्र युक्त्यन्तरमप्याह *भ्रमे इति । *बौद्धस्यैव–रजतस्य । बौद्धपदार्थाङ्गीकारे भाष्यसम्मतिमाह *अत एवेति । बौद्धपदार्थसत्त्वादेवेत्यर्थ ।*क इति। देशान्तरस्थ स कीदृश इत्यर्थः। वृत्तबाहुरित्यग्रे लोहिताक्षस्तुङ्गनासो विचित्राभरण इति शेष । तत्र तावत्परमते दोषमाह *तवत्विति । तदनङ्गीकर्त्तुरित्यर्थ । अत एवेत्यस्यार्थमाह *ममत्विति । तदङ्गीकर्तुरित्यर्थ.। कैयटोक्तिमाह*एतैरिति । *बाह्य इति । लोके दृश्यमान इत्यर्थः । एतेन बौद्धार्थस्यैव शाब्दबोधे भानमिति दर्शितम् । गुणै प्रापणमित्यस्योदाहरणत्वेनोक्तमिदम्। तत्र तत्तात्पर्यमाह *अत्रेदृशेति । एव व्यवहारोऽन्यत्रापीति सूचयन्नाह*तादृशेति। दार्ढ्यायानेकभाष्यसम्मतिमाह *हेतुमतीति । तत्र हि–"इह तु कथं वर्तमानकालता कसङ्घातयति बलिं बन्धयतीति चिरहते च कसे चिरबद्धे च बलौ ?। अत्रापि युक्तैव,कथ? ये तावदेते शौभिका नाम एते प्रत्यक्ष कस घातयन्ति प्रत्यक्ष च बलिं बन्धयन्ति।चित्रेषु कथम्?। चित्रेष्वप्युद्गूर्णनिपतिताश्च प्रहारा दृश्यन्ते कसस्य च कृष्णस्य च।ग्रन्थिकेषु कथम्?। यत्र शब्दग्रन्थगडमात्र लक्ष्यते । तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद्दृद्धीर्व्याचक्षाणा सतो बुद्धिविषयान्प्रकाशयन्ति" इत्युक्त भाष्ये । "चिरहत इति। चिरप्रवृत्तत्वाद्वध्यघातकभावस्य प्रयोजकव्यापारस्य वर्तमानत्वासम्भवाद् । उपसङ्ख्यानारम्भे तु न दोषः । आख्यातस्य वर्तमानत्वादित्यर्थ । शौभिका इति–कसाद्यनुकारिणां नटानां व्याख्यानोपाध्याया । कसानुकारी नट सामाजिकैः कसबुद्ध्या गृहीत कंसो भाष्ये विवक्षितः । ग्रन्थिकेष्विति । कथकेष्वित्यर्थ । तेऽपीति । तदुक्त हरिणा—

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कसादीन्साधनत्वेन मन्यते ॥ इति" इति कैयट ।

"ननु चिरहते कसे इत्युक्त्या प्रयोजकव्यापारस्य वर्त्तमानकालत्वाभावो नोक्त इत्यत आह—चिरप्रेति । कसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भाव । कसाद्यनुकारिणां–कसादिसदृशानाम् । भाष्ये–प्रत्यक्षमिति । 'तादृशेनैव–वासुदेवेनेत्यर्थः। उद्गूर्णा –उद्यताः। गुरी उद्यमने इत्यस्य

रूपम्। एवं च चित्रलेखका अपि चित्रस्थ कंस तादृशेनैव(कृष्णेन)घातयन्ति। ग्रन्थिकपदे अत इनीति ठन्। शब्दः कथकमुखोच्चार्यमाण.,ग्रन्थस्तद्धस्तस्थपुस्तकरूपः,गडो मनुष्यसङ्घात । न तत्र कश्चिदपि कंसादिबुद्धिविषय । ते ऽपि-ग्रन्थिका अपि। तदृद्धीः-तदैश्वर्याणि। तानि कथयन्तो ग्रान्थिकाः स्वबुद्धिविषयान्सतो विद्यमानान् कंसादीन् प्रकाशयन्ति। श्रोतृबुद्धौ समर्पयन्तीत्यर्थः" इत्युद्द्योत.।एतेन हन्तेस्तद्धननाभिनये तत्प्रतिपादकग्रन्थकथने वा लक्षणा हन्यते कस इत्यादावित्यपास्तम्। *पक्तीति। तत्र हि आरम्भपक्षे प्रागुक्तदोषद्वयपरिहाराय-"समुदाये विंशत्यादयो भविष्यन्ति। किं वक्तव्यमेतद् ? न हि। कथमनुच्यमान गस्यते?। सङ्घ इति वर्तते। सङ्घ समूहः समुदाय इत्यनर्थान्तरमिति" भाष्ये उक्तम्। "अस्येत्यनुवृत्त्या परिमाणिमात्रप्रत्ययलाभो न तु तद्विशेष इत्याह-किमिति । वर्त्तते इति। पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि सङ्घशब्दस्यैव स्वरितत्वादिहानुवृत्ति.। ननु प्राणिसमूहः सङ्घस्ततश्च वृक्षाणां विंशतिरिति न प्राप्नोतीत्याह—सङ्घः समूह इति। सामान्येन प्राणिनामप्राणिनां च समुदायः सङ्घ इत्यर्थ । ननु चोक्त परिमाणिनि चेत्पुन' स्वार्थे प्रत्ययविधानमिति । नैष दोषः, द्रव्यसङ्घयोर्दशतोः सङ्घे प्रत्ययो निपात्यते न तु द्रव्यसङ्घे। इह द्रव्याणा द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च पारमार्थिको भेदो नास्ति केवल बुद्ध्या परिकल्प्यते। बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति" इति कैयटः। *मतुप्सूत्रे चेति। तत्र "अथास्तिग्रहणं किमर्थम्। सत्तायामर्थे प्रत्ययो यथा स्यात्। नैतदस्ति प्रयोजनम्। न सत्तां पदार्थो व्यभिचरति। इद तर्हि प्रयोजन सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूद् गावो ऽस्यासन् गावो ऽस्य भवितार इति" इति भाष्ये उक्तम्। "अथास्तिग्रहणमिति। सम्भवे व्यभिचारे च विशेषणविशेष्यभावो भवति-यथा नीलोत्पलमिति। सत्तां तु पदार्थो न व्यभिचरति तामन्तरेण पदोच्चारणासम्भवात्तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्न'। सत्तायां प्रत्ययो यथा स्यादिति। सत्तायां वर्तमानात्सत्तोपाधिकार्थाभिधायिन प्रत्ययो यथा स्यादित्यर्थ.। न सत्तामिति। यावत् बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावस्तस्मात् बुद्धिसत्तासमाविष्टो ऽर्थो विधिनिषेधज-

ननादिभि. सम्बध्यते- वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायते इति। अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः। तस्मात् बुद्ध्यारूढोपचारिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थ'। सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतया भासते। यदि तु वृक्षादीनां बाह्यसत्तासमाविष्ट वस्तु वाच्य स्यात्तदा वृक्ष इत्यत सत्ताऽवगमादस्तीत्यस्य गतार्थत्वात्प्रयोगो न स्याद्। नास्तीत्यस्य च सत्ताविरोधात्प्रयोगाप्रसङ्गः। अङ्कुरो जायते इति च प्रयोगो न स्यात्। सतो जन्मविरोधात्। उपचारसत्तायान्तु एते दोषा नावतरन्ति बाह्यसत्तासमाविष्टस्य बहि. सत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति जायते इति प्रयोगाद्" इति कैयट'। अस्तीति प्रकृत्यर्थविशेषणम्। तत्र प्रश्नाशयमाह *सम्भवे इति। तामन्तरेणार्थबोधाय पदोच्चारणासम्भवात्। *तस्या एव। बुद्धिसत्ताया एव। *प्रवृत्तौ-प्रयोगे। न सत्ता प्रकृत्यर्थ इति सत्ताया वर्तमानादित्ययुक्तमतस्तदर्थमाह *सत्तोपेति। प्रकृतेस्तदर्थावृत्ताविति भाव.। ननु वर्तमानार्थशत्रन्तप्रकृतिकसत्तापदार्थो न भूतभविष्यतोरिति कथ पदार्थसत्ता न व्यभिचरतीत्यत आह *यावदिति। *सम्बध्यते-बहिःसत्त्वासत्त्वादिप्रतिपादनायेति शेषः। नन्वत्यन्तासतः शशविषाणादेः सत्ता व्यभिचरतीत्यत आह *अत्यन्तेति। *उपेति। बौद्धसत्ताया एव मुख्यत्वात्। ननु तस्या न शब्दजबोधविषयत्व तद्विशिष्टस्य नयनाद्यसम्भवादत आह *सैव त्विति। बहिःसत्तासत्त्वे तु तत्समानाधिकरणतया असत्त्वे तु केवलायास्तस्या एव बहीरूपत्वेन भानम्। अत एव घटशून्यादपि गेहाद् घटमानयेत्युक्ते आनयने प्रवर्तते, पश्चात्तदभावनिर्णये वक्तृज्ञानस्यासत्त्व कल्पयतीति भाव। अन्त.करणस्य रागादिदोषवशेन तस्या एव तत्त्वेन भानमिति तात्पर्यम्। बाह्यसत्ताया एव प्रयोगनियामकत्वे दोषमाह *यदि त्विति। *सतो जन्मेति। सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्मेतिमते ऽप्यङ्कुरशब्दोपात्तस्थूलरूपावच्छिन्नस्य सत एव जन्मेति भाव.। *उपचेति। उपचारसत्तायां शब्दप्रयोगनिमित्तत्वाश्रयणे त्वित्यर्थः। नन्वेव बुद्धिसत्तायाः सर्वत्र भानेऽस्तीत्यस्य प्रयोगो न स्यादत आह *बुद्धीति। तया च बाह्यसत्त्वाभावस्य जननस्य चाविरोधादिति भावः। अत एवात्र कैयटोल्लेखः। नैयायिक-

सम्मतमपीदमित्याह *गौतमो ऽपीति । *कथमिति । असत उत्पत्तौ 'तन्तुष्वेव पट' इत्यादिनियमश्च कथमित्यपि बोध्यम् । *सूत्रितवानिति । चतुर्थाध्याये फलपरीक्षायामिति भाव । त्वर्थमाह *अपीति।*तदर्थ इति।एव च बुद्धिविषयतया कर्तृत्वमुपपन्नम्।तन्तुष्वेव पटस्य भविष्यत्त्वेन बुद्धिविषयत्वान्नियमो ऽप्युपपन्न । तत्रैव बुद्धिविषयता कुत इति चेत्कारणत्वादित्यादि तद्व्याख्याने स्पष्टमिति बोध्यम् ॥ ६१ ॥

जन्मादिसूत्रे वाचस्पतिरप्याह—"चेतनो हि नामरूपे बुद्धावालिख्य घट इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति । निर्वर्त्यस्यापि घटस्यान्तः सङ्कल्पात्मना सिद्धस्य कर्मकारकत्वं घटं करोतीति । यथाहुः—'बुद्धिसिद्धं तु तदसद्' इति" इति ।

तथा—

चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणामः इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात्तत्तद्विषयाकारेण परिणमते । न तु तस्यां संयुक्तबाह्यविषयप्रतिबिम्बः ।स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासम्भवात् । तथाच स्मृतिः—

विप्र पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥ इति ।

भ्रमे ज्ञानाकारस्यैव विषये आरोप इति सिद्धान्तात् । सन्निकृष्टं ज्ञानाकारं विहायासन्निकृष्टदूरस्थरजताद्यारोपे मानाभावात् । 'तदा दृष्टमधुना नास्ति' इति स्वरूपतो बाधानुभवस्यानुपपत्तेश्च । चाकचक्यादिविषयदोषवशाच्च चित्तवृत्तेस्तथा परिणामः ॥ ६२ ॥

*जन्मादिसूत्रे इति "जन्माद्यस्य यत" इति सूत्रे इत्यर्थः। अस्य जगतो यतो जन्मादि तद्ब्रह्मेत्यर्थः। ननु संसारस्यानादित्वात्कथ जन्मन आदित्वमिति चेत्। वस्तुस्वरूपकथनमेतत्। सर्व हि वस्तु जनित्वैव स्थित्वा लीयते। *नामरूपे इति। कर्मपदम्। *आलिख्य—विषयीकृत्य। *संकल्पेति। स च मिथ्याज्ञानं तच्चेष्टसाधनताज्ञानम्। *कर्मकारकत्वमिति। अन्यथा अनुत्पन्नस्य फलाश्रयत्वासंभव इति भावः। "एवं च जगतोऽपि नामरूपाभ्यां व्याकृतत्वात्तत्कर्त्ता चेतनः परमात्माऽस्तीत्यनुमीयते" इति तद्ग्रन्थः। यत्तु क्रियानिमित्तत्वादेव घटस्य कारकत्वं विषयताश्रयत्वादेव च कार्यत्वमिति। तन्न। अविद्यमाने आश्रयत्वस्याप्यसम्भवात्। घटादीनां बुद्धिस्थत्वमुपपादयति *चित्तस्येति। अयम्भावः—यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा अन्तःकरणमपि चक्षुरादिद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमते स एव परिणामो वृत्तिरित्युच्यते। तथाच वृत्तिघटयोरेकदेशस्थत्वाद्घटांशे प्रत्यक्षम्। ज्ञानावच्छेदकत्वाच्च वृत्तेरपि ज्ञानत्वव्यवहारः। नन्वन्तःकरणस्य निरवयवतया कथं परिणामरूपा वृत्तिरिति चेन्न। अन्तःकरणस्य द्रव्यत्वेन सावयवत्वात्। *द्रव्यरूप इति। द्रव्यसमानाकार इत्यर्थः। एवं शुक्तिरजतादिस्थले ऽप्यविद्यैव रजताकारेण परिणमते। कथं तर्हि नेदं रजतमित्यनेन लौकिकपरमार्थरजतं निषिध्यत इति वेदान्तिग्रन्थ इति चेत्। पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाल्लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रये ऽपि लौकिक-

---

१ अर्थानुकरणमेतद् नतु शब्दानुकरणम् एतादृशानुपूर्व्यास्तद्ग्रन्थेऽनुपलम्भात्।

(कु०टी०)परमार्थरजतमिदं न भवतीति निषिध्यत इति तदाशयात्। आन्तरस्य चित्तस्य बहिर्निर्गमनाभावाच्चक्षुरादिद्वारा तद्दर्शयति*इन्द्रियेति। नच अन्तःकरणस्य बहिर्गमने देहस्य निर्जीवत्वापत्तिः। चक्षुरादेरिवान्तःकरणस्य विषयदेशगमने ऽपि देहसम्बन्धाविरोधात्। नन्वेवम् 'अहं सुखी'इतिवद् 'अहं रजतवान्'इतिप्रत्ययः स्यादितिचेन्न। 'अहमिहैवास्मि'इति प्रत्ययस्य विशेष्यतावच्छेदकीभूतैतच्छरीरावच्छेदेनैतद्देशमात्रसंयोगावगाहित्ववदुक्तप्रत्ययस्यापि तत्तावच्छेदेन रजतत्वावगाहित्वेन भ्रमत्वात्। ननु वृत्तेरात्मसमवायितया कथमात्मासमवेतद्रव्यस्य तद्रूपत्वमितिचेन्न। शरीरावच्छेदेन ज्ञानादेरिव शुक्तीदन्त्वादिविशिष्टावच्छेदेन रजतादेरात्मसमवाये बाधकाभावात्। *संयुज्येति। चित्तमिति शेषः। *परिणमत इति। नन्वन्तःकरणस्यापीन्द्रियत्वात्कथं प्रत्यक्षमिति चेन्न। मनस इन्द्रियत्वे मानाभावात्। 'इन्द्रियेभ्यः परं मनः' इति पृथगुपादानात्। 'मनःषष्ठानीन्द्रियाणि' इति गीतावचनं तु 'यजमानपञ्चमा(इडां)भक्षयन्ति'इतिवद्विजातीयेनाप्युपपद्यते। ननु इन्द्रियजन्यत्वाभावात्प्रत्यक्षत्वानापत्तिरिति चेन्न। न हीन्द्रियजन्यत्वं प्रत्यक्षत्वे प्रयोजकम् ईश्वरप्रत्यक्षे ऽव्याप्तेः, किन्तु विषयचैतन्यप्रमातृचैतन्ययोरभेद एव। सांख्यास्तु 'अन्तःकरणस्य स्वच्छत्वात्तत्र घटादीनां प्रतिबिम्बे घटादिबुद्धिर्भवति यथा दर्पणे मुखादि गृह्यते न तु तत्तत्रास्ति, एवं चैतन्यमपि जडेष्वन्तःकरणादिषु सङ्क्रान्तमिव दृश्यते। तत्सङ्क्रमविशिष्टान्तःकरणवृत्तौ सर्वार्थाकारसमर्पणं तादृग्वृत्तेरेव' इति वदन्ति, तान्निराकरोति*न तु तस्यामिति। तस्यां—वृत्तौ। *संयुक्तेति। इन्द्रियसंयुक्तेत्यर्थः। *स्वप्नादाविति। सिद्धान्ते तु स्वप्नोपलब्धरथादीनामागन्तुकानिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम्।

ननु स्वप्ने पूर्वानुभूतरथादेः स्मरणमेवास्त्विति चेन्न । 'रथमद्राक्षम्' इत्यनुभवविरोधेन स्मृतिरूपत्वासम्भवात् । रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकमेव, तदा सर्वेन्द्रियाणामुपरमात् । *चित्तस्थमिति । १'स्वप्नादावसन्नेव विषयो यथा चित्तस्थः एवमन्यदाऽपीत्यर्थः । प्रत्यस्तमितत्वेऽपि बाह्येन्द्रियवृत्तेर्मनोमात्रेणैव यदाऽऽत्मनो भोक्तृत्वं तदा स्वप्नः । विप्रपृथिव्यादीत्युक्तिर्जडाजडसङ्ग्रहाय' । अन्तःकरणचैतन्यस्यैवानाद्यविद्यावशात्स्वरूपतिरोधाने बाह्यरूपेण भानम् । तदाहुः—

अन्तःकरणधर्मस्य भागा बहिरवस्थिताः । इति ।

२'अन्तःस्थितस्य करणव्यापारो यस्य तद् अन्तःकरणं चैतन्यं तस्य धर्मा आन्तरपदार्थास्तेषामेव भागा बाह्या इत्यर्थः' । 'न तु बाह्यविषयप्रतिबिम्बः' इति यदुक्तं तदुपपादयति *भ्रमे इति । ३'ज्ञानमत्र चित्तवृत्तिः । तस्या आकारो नाम रजततुल्यपरिणामता सा च सत्यस्थले इव भ्रमस्थलेऽपि भवति । तत्रासतो रजतस्य वृत्तिविषयत्वासम्भवात्प्रातिभासिकरजतमुत्पद्यते । शुक्तिरजतयोस्तादात्म्यमपि च प्रातिभासिकमेव । तथाहि—तत्र देशान्तरीयबाह्यरजतस्येन्द्रियसन्निकर्षाभावान्नाध्याससम्भवः । नापि तत्र रजतोत्पत्तिः सम्भवति रजतावयवानामभावाद् । अतः काचादिदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगाद्रज४ताकाराऽन्तःकरणवृत्तिरुदेति । तथाच काचादिदोषसमवहिता अविद्या रजतादिरूपेण परिणमते इति वेदान्ते । *ज्ञानाकारस्य-

१ अय पाठः कपुस्तके नास्ति ।
२ अयमपि पाठ कपुस्तके नास्ति ।
३ कपुस्तके अत्र 'शुक्तिरजतादिस्थले बाह्य-'इति पाठो दृश्यते ।
४ कपुस्तके उद्भूतेति पाठ. ।

रजताकारज्ञानस्य। *विषये—शुक्त्यादौ। "बौ१द्धरजतस्य पुरोवर्तिनि ग्रहः" इत्यस्यायमेवाशयः, पुरोऽवस्थितवस्तुसंयोगेऽन्तःकरणवृत्तेः रजताकारेण परिणामात् । एवं च रजताद्याकारज्ञानस्य शुक्त्यादावारोप इत्यस्यापि वा परिणाम एव पर्यवसानं बोध्यम् । *सिद्धान्तादिति । एतेन 'सन्निकर्षेणापि 'रजतम्' 'इदम्' इत्याकारकशुक्तिरजतयोर्ग्रहणस्मरणात्मकं ज्ञानद्वयमेव जायते न तु शुक्तौ रजतत्वप्रकारकम्(एकं ज्ञानम्)। रजतत्वप्रकारकज्ञानमात्रस्य रजतान्यविशेष्यतानिरूपितप्रकारताकत्वाभावनियमस्य विना बाधकं त्यक्तुमशक्यत्वात् । रजतत्वप्रकारेण शुक्तिविषयकप्रवृत्तावपि नेदन्त्वावच्छिन्नशुक्तिधर्मिकरजतत्वप्रत्यक्षत्वेन हेतुता किन्तु रजतत्वोपस्थितिविशिष्टेनेदन्त्वप्रकारकशुक्तिविशेष्यकत्वेन । इदंधर्मिकरजतत्वप्रत्यक्षं प्रति रजतासंसर्गाग्रहस्य प्रतिबन्धकत्वाच्च । 'नेदं रजतम्' इति प्रत्यक्षसत्त्वे रजतत्वप्रकारकशुक्तिविशेष्यकप्रवृत्त्यापत्तिः,इति प्राभाकरोक्तमपास्तमिति भावः। *सन्निकृष्टमिति। तत्र रजतस्योत्पत्तिर्वा ज्ञानं वा न सम्भवतीति प्रागेवोक्तत्वात्। *रजताद्यारोपे इति । असन्निकृष्टरजतभानस्वीकारे इत्यर्थः ।२ 'ननु दोषस्वभावादेव देशान्तरीयमपि रजत भासते इत्यस्वरसादाह *तदादृष्टमिति'। *स्वरूपतः—रजतत्वस्वरूपभ्रमे बाह्यरजतस्यैव विषयत्वे तस्य विशेषदर्शनदशायामपि सत्त्वेन 'इदानी रजतं नास्ति' इति रजताभावावगाहिप्रत्ययो न स्यादित्यर्थः । ननु 'रजतं नास्ति'इत्यस्य रजतबुद्धिर्नास्तीत्यर्थ इति चेद् तर्हि सिद्धं बुद्धेरारोप इति । ननु विषयाभावे कथं चित्तवृत्तेस्तथा परिणाम

१ अय पाठः खपुस्तके नोपलभ्यते ।
२ अय पाठः कपुस्तके नास्ति ।

इत्यत आह *चाकचक्यादीति । चाकचक्यादिकमेव भ्रमहेतुरित्यर्थः । अत एवोक्तं परमार्थसारे 'रज्ज्वां भुजङ्गहेतौ नच कारणमस्ति' इति । भुजङ्गभ्रमहेतौ (रज्ज्वां)कारणान्तरं नास्ति किन्तु अन्यथाभानात्मिका अविद्यैवेति तदर्थः ॥ ६२ ॥

(कु०टी०)वेदान्तिसम्मतमपीदमित्याह। *जन्मादीति।* चेतनो हीति। नामरूपात्मक जगत् चेतनकर्तृकमित्यादिः।अत एवेद तल्लक्षणम्। अस्य दृश्यस्य प्रपञ्चस्य वा जन्मादि जन्मस्थितिनाशा यतो यस्मात् येन यस्मिश्च तद्ब्रह्मेत्यनुकर्षः । यत इति सर्वविभक्त्यन्ततसन्तानां तन्त्रेण निर्देशः । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसविशन्ति' इतिश्रुत्यनुरोधात् । श्रुतौ तृतीयवाक्ये यदिति लुप्तसप्तमीकम् । प्रयन्ति प्रेर्यमाणानि यस्मिन्नभिसविशन्तीति तदर्थ इति सूत्रार्थ. । अस्यावश्यकतामाह *निर्वर्त्येति । न तु विकार्यस्य नापि प्राप्यस्येत्यर्थ. । *अत एवेत्यादि । बुद्धावालेखादेवेति तदर्थ । अन्यथा असत. कर्तृत्ववत्कर्मत्वमपि न स्यादिति भाव. । अत एवाह *यदाहुरिति । इतीति पाठ. । एतेन स्वभावो जगत्कारणमित्यपास्तम्, श्रुतिविरोधात् । य एव कदाचित्सुखी स एव कदाचिद् दु खीत्यस्य दर्शनाच्च । स्वभावानन्त्यकल्पनापेक्षया चेतनकल्पनस्यैव युक्तत्वादिति भावः । ननु कथ बाह्यरूपेण निष्पत्तिर्बौद्धस्यात आह *तथा हीति। पातञ्जलनये प्रत्यक्षस्थले चित्तवृत्तिरिति शेष. । *विपयेण–तत्त्वाभिमतेन। वेदान्तिमत खण्डयति *न त्विति । *तस्या–वृत्तौ। अनतिप्रसङ्गायाह *सयुक्तेति । *विप्रेति। योगवासिष्ठ उपशमप्रकरणे गाधिं प्रति विष्णूक्तिरियम् । व्याख्यात च गङ्गाधरसरस्वतिना 'हे विप्र पृथिव्यादि जाग्रद्रूप चित्तस्थ चित्तस्यैव जगन्निदानत्वाद् बहिस्तु नासीदित्यर्थ । अयञ्चार्थः स्वप्नावस्थायां भ्रमावस्थायां मदावस्थायां च सर्वैरनुभूयत एव, स्वप्नादिषु चित्तगतस्यैव प्रपञ्चस्य परिस्फुरणादिति' । ननु स्वप्नादौ तथा सत्त्वेऽपि भ्रमे कथ ? तत्र बाह्यस्यैव समारोपस्य परैरङ्गीकारात तथैवानुभवाच्च । अत आह *भ्रमे इति । भ्रमस्थले इत्यर्थः । अयम्भाव.–'इद रजतम्' इति भ्रमे बौद्धरजतस्य पुरोवर्त्तिनि

ग्रहः। तथाहि—चक्षुर्द्वारा निर्गतान्त करणवृत्तेः सावयवद्रव्यरूपतया रजतसंस्कारवत्या. पुरोऽवस्थितवस्तुसम्बन्धे तच्चाकचक्याद्दुद्बुद्धसंस्कारवशाद्विषयदेशावच्छेदेन रजताकारः परिणाम. । तमादाय च तस्या वृत्ते. सन्निकर्षवशाद्रजताकारविशिष्टदमाकारता भवति । अग्रे तद्बाधाच्चास्य रजतांशे भ्रमत्वग्रहः। स्पष्टश्चेद पातञ्जलसूत्रे इत्यग्रे स्फुटीभविष्यतीति । एवव्यवच्छेद्य दर्शयन् परमते दोषमाह *सन्निकृष्टेति। अनुभवसिद्धेत्यादि. । प्रत्यासत्त्यनङ्गीकारे ऽप्याह *तदेति। ननु विशेषदर्शनात्तदुपपत्तिरिति चेन्न। तावतापि तव तादृशस्वरूपाबाधात्। ननु चित्तवृत्तेस्तथा परिणाम एव कथम्? असंसर्गाद्।अत आह*चाकेति। विषयेत्यनेनेन्द्रियसंस्कारदोषयोर्निरास। चस्त्वर्थे। प्रतिपादितमिदमनुपदमेव। बौद्धरजताकारस्यास्य बहिरसत्त्वान्नृशृङ्गतुल्यतयाऽत्रासत्ख्यातिरिति केषां चिद्व्यवहार कणादसूत्रसम्मत एव। परन्त्विदमयुक्तमित्यग्रे स्फुटीभविष्यति ॥ ६२ ॥

**एतेन ज्ञानलक्षणासन्निकर्षेण दृष्टे ऽनुभूतरजतप्रकारिका शुक्तिप्रतीतिरित्यपास्तम् । अन्यथोपपत्तेः । तत्तदनुयोगिताप्रतियोगिताऽविशिष्टसम्बन्धस्य कदाप्यनुभवाभावाच्च । सम्बन्धस्य द्विष्ठत्वस्वरूपतया तत्तदनुयोगित्वादिरहितसम्बन्धभानस्यायुक्तत्वात्। तत्तदनुयोगितादिवैशिष्ट्येन ज्ञातस्यैव प्रवृत्त्याद्युपयोगित्वाच्च ॥ ६३ ॥**

( कुं० टी० ) ननु लौकिकचाक्षुषं प्रत्येव चक्षुःसंयोगादेर्हेतुतया अलौकिकचाक्षुषं ज्ञानलक्षणयैव सिद्धम् । तथाहि—'घटो नास्ति' इत्यत्राभावांशे घटस्य, 'सो ऽयम्' इतिप्रत्यभिज्ञायां तत्तांशस्य, 'सुरभि चन्दनं पश्यामि'इति(उपनीतभाने)सौरभांशस्य भानं न सम्भवति इन्द्रियसम्बन्धाभावात्, अतस्तद्विषयकज्ञानमेव सम्बन्धः, अस्ति च बाह्यरजतज्ञानं शुक्तावपीति मतं निराकरोति *ज्ञा-

नलक्षणेति । 'रङ्गं रजतत्वेन जानामि' इतिप्रतीतेरन्यथाख्यातिः स्वीकार्या, तन्निर्वाहार्थं च ज्ञानलक्षणापि स्वीकार्या, इति तार्किकाः। तन्न। संस्कारस्य तज्ज्ञानजनकता, तज्जनकज्ञानघटितसन्निकर्षहेतुत्वम्, अतिरिक्तसन्निकर्षकल्पना चेति गौरवात्। *अपास्तमिति। अयम्भावः-तत्र 'सौरभं पश्यामि' इतिप्रत्ययानामभावात् विषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नाधिकरणता न सम्भवति तत्कथं तच्चाक्षुषोपपत्तये ज्ञानलक्षणास्वीकारः। 'सौरभं स्मरामि' इतिप्रतीत्या विषयतासम्बन्धेन स्मृत्यधिकरणताया एव तत्र स्वीकर्तुमौचित्यात् । युगपज्ज्ञानद्वये मानाभावे ऽप्येकस्मिन् ज्ञाने स्मृतित्वचाक्षुषत्वोभयसत्त्वे बाधकाभावात् । 'इदं रजतं पश्यामि' इति प्रतीत्या भ्रमस्थले ऽपि लौकिकविषयतास्वीकारस्यावश्यकत्वाच्च । अथ सन्निकर्षादीनामिव दोषस्याप्यन्वयव्यतिरेकाभ्यां प्रत्यक्षहेतुत्वमिति चेत् । एतदपेक्षया तदाकारपरिणामस्यैव लघुत्वात् । ननु विषयगतदोषस्य चित्तवृत्तिनियामकत्वे ऽभ्रान्तपुरुषस्यापि तादृशशुक्तिदर्शने भ्रान्तत्वापत्तिरिति चेन्न । तत्पुरुषीयत्वं निवेश्यैव हेतुहेतुमद्भावस्वीकारात् । जपाकुसुमलौहित्यस्य तु सर्वान्प्रत्येकरूपत्वान्न तत्पुरुषीयत्वनिवेशः । *अन्यथोपपत्तेरिति । चित्तवृत्तिपरिणामेनैव गतार्थत्वात् । किञ्च ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादिप्रत्यक्षोपपत्तावनुमितेरुच्छेदापत्तिः । *तत्तदनुयोगीति । यथा घटभूतलयोः संयोगो घटप्रतियोगिको भूतलानुयोगिको, न तथेहानुभवो ऽस्तीत्यर्थः । घटत्वसामान्यलक्षणा देशान्तरीयघटज्ञानं जनयति ज्ञानलक्षणा तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः। तथा च रजतत्वज्ञाने प्रतियोगित्वादिप्रतीत्यभावात्सम्बन्धत्वासम्भव इतिभावः। 'सम्बन्धसम्बन्धो न विशिष्टज्ञानविषय'

इति तार्किकमतं निराकरोति *'१सम्बन्धेनेति । संयोगरूपसम्बन्धस्य तुल्यतया 'कुण्डे बदरम्'इतिवत् 'बदरे कुण्डम्'इतिप्रतीतिवारणाय बदरादौ संयोगप्रतियोगित्वादिस्वीकार आवश्यकइति भावः'। * वैशिष्ट्येनेति । यथा भूतलानुयोगित्वेन ज्ञातः संयोग एव प्रवृत्तिहेतुरित्यर्थः ॥ ६३ ॥

(क० टी०) अन्यथाख्यातिरित्यर्वाचीनन्यायवैशेषिकविदुक्तिं खण्डयति*एतेनेति। चक्षुर्जन्यज्ञाने विषयतासम्पादकसंस्कारजनकज्ञानविषयत्व संसर्ग इति तदाशयः । एतेनेत्यस्यार्थमाह *अन्यथेति । ननु विनिगमनाविरह उपायस्योपायान्तरादूषकत्वं चात आह *तत्तादिति। अविशिष्टेतिच्छेद । *सम्बन्धस्य–प्रकृते शुद्धज्ञानस्वरूपस्य । ननु कुतो नानुभवो ऽत आह *सम्बन्धत्वस्येति । तथाच तदभावादेव स नेति भाव• । दोषान्तरमाह *तत्तादिति । *ज्ञातस्यैव– सम्बन्धस्य ॥ ६३ ॥

वस्तुतो ज्ञानलक्षणा प्रत्यासत्तिरेव न।अविद्यमानस्य प्रत्यासत्तित्वायोगात्।न च ज्ञानविषयत्वं प्रत्यासत्तिः। ज्ञानविषयोभयस्वरूपा विषयतेतिमते ज्ञाननाशे तस्या वक्तुमशक्यत्वात् । तस्मात् स्मृताविव संस्कार एव प्रत्यासत्तिः । एवं च मदुक्त एव पर्यवसानम् ।

'सुरभि चन्दनं' 'सो ऽयम्' इत्यादि च संस्कारचक्षुस्सन्निकर्षाद्युभयजन्यं ज्ञानान्तरमेवेति न स्मृतित्वानुभवत्वयोस्तत्र सङ्करः ॥ ६४ ॥

(कुं० टी०) ज्ञायमानं सामान्यं न प्रत्यासत्तिरिति मतं निराचष्टे *अविद्यमानस्येति । शुक्तावविद्यमानस्य रज-

---

१ इदं कपुस्तके न दृश्यते केवलं 'तत्तादिति' इति प्रतीकमात्रमेतत्स्थाने वर्तते ।

तस्य सन्निकृष्टत्वाभावेन प्रत्यासत्तित्वासम्भवादिति भावः । अख्यातिवादिनस्त्वत्र ग्रहणस्मरणात्मकं ज्ञानद्वयं वदन्ति, तथाहि–इदमिति पुरोवर्त्तिद्रव्यग्रहणं दोषवशाच्च शुक्तित्वाग्रहे सादृश्यात्संस्कारोद्बोधे दोषवशात्प्रमुष्टतत्ताका रजतस्मृतिः भिन्नयोरपि ज्ञानयोर्भेदस्य विषययोरसंसर्गस्य चाग्रहाद्विशिष्टज्ञानकार्यप्रवृत्तिरेकज्ञानत्वव्यवहारश्चेति । तन्न । प्रवृत्तिं प्रति स्वरूपतो विषयतया संसर्गाग्रहकालिकामिष्टसाधनतावच्छेदकाविशिष्टं विषयस्मृतिविशिष्टं पुरोवर्तिविषयकं ज्ञानं कारणं वाच्यमिति गौरवात् । ननु सामान्यलक्षणेत्यादेः सामान्यविषयकं ज्ञानमित्यर्थः । तथाच तद्विषयत्वमविद्यमानेऽप्यस्तीत्याशङ्कते *न चेति । यत्तु रजतत्वादिना शुक्त्याद्युपनीतभानानुरोधेन ज्ञानलक्षणास्वीकारः, तत्र शुक्तित्वस्य भानाभावेन सामान्यलक्षणया शुक्त्यादिभानासम्भवादिति । तन्न । तत्र दोषस्यैव शुक्त्यादिभासकत्वात् । यदपि सौरभांशे इन्द्रियसन्निकर्षं विना सौरभत्वसामान्यलक्षणया तद्भानासम्भवाज्ज्ञानलक्षणेति । तदपि न।सौरभादिविषयकोपनीतभानसामग्र्या एव तत्रापि हेतुत्वकल्पनात् । *ज्ञानेति । क्षणिकस्य ज्ञानस्य प्रत्यासत्तित्वासम्भवादिति भावः। *ज्ञानविषयोभयेति। विषयताया ज्ञानस्वरूपत्वे 'घटवद् भूतलम्' इति ज्ञानानन्तरं 'घटविशेष्यकज्ञानवानहम्' इत्यनुव्यवसायापत्तेः। विषयस्वरूपत्वे 'घटवद्भूतलं' 'घटभूतलसंयोगाः' इति ज्ञानयोरवैलक्षण्यप्रसङ्ग इत्याभिप्रेत्योक्तम् *उभयस्वरूपेति । *संस्कार एवेति । रजतवासनारूप इत्यर्थः। नातः संस्कारजन्यत्वेन स्मृतित्वापत्तिः । वस्तुतस्तु विषयत्वरूपत्वे ऽपि 'घटभूतलसंयोगा' इत्यत्र संयोगत्वेन संयोगो भासते न तु 'घटवद् भूतलम्' इत्यत्रेत्यत एव वैलक्षण्यम् ।

स्वप्रकारतानिरूपिततज्ज्ञानरूपविशेष्यताया अभिन्नतया तज्ज्ञानस्य घटत्वप्रकारतानिरूपितघटनिष्ठविशेष्यताशालित्वात्[१]। विषयस्वरूपा चेद् 'घटभूतलसयोगसम्बन्धा' इत्याकारकसमूहालम्बनीयघटादिनिष्ठविषयतानां 'घटवद् भूतलम्' इत्यादिविशिष्टधीनिरूपिततन्निष्ठतासां च तत्तत्स्वरूपत्वेनावैलक्षण्येन तयोर्धियोर्भेदानुपपत्तिरित्यत आह * ज्ञानविषेति। तथाच नोक्तदोषजातमिति भाव'। तस्यास्तदतिरिक्तत्वे तु गोरव दोष' स्फुट एव। तद् ध्वनयन्नाह *तस्मादिति। अन्यथाऽनिर्वाहादित्यर्थः। तस्य च तत्त्वमावश्यकमिति सूचयन्नाह *स्मृताविवेति। भ्रमादावपीति भावः। *एव च-तस्या एव प्रत्यासत्तित्वे च। *मदुक्ते एव-बौद्धपदार्थसत्त्वेन तस्यैव तत्र भाने एव।

नन्वेव 'सुरभि चन्दनम्' इति धियि स्मृतित्वानुभवत्वयोः साङ्कर्यापत्तिः प्राभाकरमतप्रवेशात्। तथाहि-'इद रजतम्' इत्यत्र 'इदम्' इति पुरोवर्तिद्रव्यग्रहण दोषवशेन तद्गतशुक्तित्वाविशेषाग्रहणम्। तज्ज्ञाने च दोषवशतः प्रमुष्टपूर्वानुभवत्वरूपतत्ताका रजतस्मृति। तत्र यथा वास्तवरजतविषयम् 'इद रजतम्' इत्यत्र 'इदम्' इति ज्ञानमिदपदार्थरजतत्वयोरससर्गं न गृह्णाति (तयोः) ससृष्टत्वेनाससर्गाभावात्, ज्ञानस्यैकत्वाच्च न स्वगतं भेद गृह्णाति, तथा तत्साहश्यादेते भिन्ने अपि ज्ञाने स्वगतभेद विषययोरससर्गं च न गृह्णीत इति विशिष्टज्ञानकार्यप्रवृत्तेरेकज्ञानत्वव्यवहारादेश्च निर्वाहः, अत आह *सुरभीति। अयम्भाव -प्रागुक्तरीत्या ग्रहणात्मकमिदमेकमेव ज्ञानम्। संस्कारस्यापि सहकारितामात्रेण स्मृतित्वव्यवहारमात्र न तु सा स्मृति, पूर्वानुभूततारूपतत्तानुल्लेखात्। अत एव तत्र 'पश्यामि' इत्येवानुव्यवसायो न तु 'स्मरामि' इत्यप्यशे। चक्षुर्द्वारा निर्गतवृत्तावेव संस्कारवशात्सौरभाकारताया अपि जायमानत्वेन तस्य चाक्षुपत्वात्। 'सोऽयम' इत्यत्रापि पूर्वानुभूततारूपतत्तोल्लेखे ऽप्यन्यत्सर्वं प्राग्वदवेति तस्याप्राधान्यान्न तथेति ॥ ६४ ॥

अत एव 'स्त्रियाम्' इतिसूत्रे खट्वादौ स्तनकेशाद्य-

---

१ इत आरभ्य मूलस्य कुञ्जिकाटीकया राहित्य वर्तत । तथाप कलाटीकाऽनुरोधेनेदमुपन्यस्तमत्र । उपलब्धमूलसहितकुञ्जिकाटीकापुस्तकद्वितये इद मूलमपि नास्ति ।

दर्शनेन लिङ्गाभावात्तापो ऽनुपपत्तिमाशङ्क्य—

"असत्तु मृगतृष्णावद् गन्धर्वनगरं यथा ।

असत्तु श्वद्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसल्लिङ्गं शक्यं द्रष्टुम्? मृगतृष्णावत् । तद्यथा मृगास्तृषिता अपां धाराः पश्यन्ति न च ताः सन्ति, यथा गन्धर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते "इति भाष्ये उक्तम् । अनेन हि स्पष्टमेव भ्रमे बहिस्तद्देशे असत एव भानमुक्तम् ।

हरिणाऽप्युक्तम्—

'यथा सलिलनिर्भासो मृगतृष्णासु जायते ।

जलोपलब्ध्यनुगुणाद्बीजाद्बुद्धिर्जलेऽसति' ॥ इति ।

'बीजं पूर्वपूर्वमिथ्याज्ञानजन्यवासना' इति तद्व्याख्यातारः । व्यवहारदशायां कदापि केनापि तन्मात्रे बाधाननुभवात् "असतो लिङ्गस्य भानम्" इत्येतन्निराकृतमित्यन्यत् ।

भ्रमे यावद्विशेषदर्शनं बहिः सत्त्वेन प्रतीतिस्तु तत्राधिष्ठानगतसत्त्वारोपात् । अत एव "सदसत्ख्यातिर्बाधाबाधाभ्याम्" इति साङ्ख्यसूत्रे उक्तम् । यावद्विशेषदर्शनमबाधस्तदुत्तरं च बाधोऽस्ति ।

प्रपञ्चो ऽप्येवमेव । मृगतृष्णादिदृष्टान्तेन प्रपञ्चस्य शास्त्रे वर्णनात् । तदुक्तं परमार्थसारे शेषनागेन—

'मृगतृष्णायामुदकं, शुक्तौ रजतं, भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवद् भ्रान्तमखिलं जगद्रूपम्' ॥ इति ।

भ्रान्तं भ्रमविषय इत्यर्थः ॥ ६५ ॥

(क०टी०) भाष्यविरुद्धमपि नैयायिकाद्युक्तमित्याह *अत एवेति। तदनङ्गीकारेणोक्तरीत्या निर्वाहादेवेत्यर्थः। आदिना वृक्षादिलौकिकलिङ्गमाह *स्तनेति। व्यञ्जकाभावेन व्यङ्ग्यस्याभाव इत्याह *लिङ्गाभावादिति। *आचार – तत्तल्लिङ्गव्यवहारादिः । *पश्यन्तीति। न च ताः सन्तीति शेषः । अत एवेत्युक्तं स्पष्टयति *अनेन हीति। भाष्येणेत्यर्थः । अन्यदेशे सत्त्वादाह *तद्देशे इति । यद्देशे भासते तद्देशे इत्यर्थः । एतेन सतो भाननिरासः । परमते ऽन्यत्र सत एव भानेनैतद्भाष्यासङ्गतिः स्पष्टैव। तस्मादुक्तरीत्या बौद्धस्यैव भानमिति सिद्धम् । तत्रत्यहरिरपि तथैवेत्याह *हरिणापीति। ननु जलाभावे तत्र तन्निर्भासः कथम्? अत आह *जलोपेति। तस्मिन्नसत्यपि तादृशाद् बीजाद् बुद्धिरित्यर्थः। नन्वत्र किं तद्बीजमत आह *बीजमिति। "असतो न भानम्" इत्येव न निराकृतं किन्त्वन्यथेति तद् अभिमतमेव भगवत इति नाग्रिमविरोध इत्याह *स्पष्टेति। *तन्मात्रे–लिङ्गमात्रे। रजतत्वांशे इव। *बाधाननुभवादिति। शेषषष्ठ्या समासः। *निराकृतम्–भगवता । तथा च लौकिकलिङ्गाश्रयणेन तत्राप्यन्यत्रेव वास्तव एव तन्निर्वाह इति भावः। नन्वस्तु तत्रान्यथानिर्वाहस्तथापि भ्रमादौ बहिरसत एव भानं दृष्टान्तसिद्धं भगवत्सम्मतमिति कथं तत्र विशेषदर्शनतः प्राग्बहिः सत्त्वेन प्रतीतिरत आह *भ्रमे इति। तत्तत्रावच्छिन्ने इत्यर्थः। *यावद्विशेषदर्शनम्–तत्पर्यन्तम्। एवमग्रेऽपि। *तत्र–भ्रमविषये। इदं समूलयति *अत एवेति। *तत्र–तावत्तदारोपादेवेत्यर्थः। विरोधेन द्वयोर्यौगपद्यासम्भवादुक्तरीत्यैवाह *यावदिति। प्रसङ्गादाह *प्रपञ्चोऽपीति । *एवमेव–सदसत्ख्यातिरेव । तत्राऽदृष्टचरत्वनिरासायाह *तदुक्तमिति । ननु प्रतीयमाना धर्मादयः कथं न सन्तीत्युच्यत इत्याशङ्क्य न तत्प्रतीतिमात्रेण सत्यत्वं शुक्तिरजतादिषु तत्रासतामसत्यानामपि प्रतीतिदर्शनादित्याह *मृगेति । उषरभूमावूर्ध्वाधरभावेन सूर्यमरीचिसम्बन्धो मृगतृष्णा, तत्राधिष्ठानभूतायामुदकं यथा वासनावशाद्भासमानमपि भ्रान्तं मिथ्या तत्रासदेव, एवं शुक्त्यादावपि। *तैमिरिकः–तिमिराख्यनेत्रव्याधियुक्तस्य चन्द्रे यथा द्वित्वमसदेव भासते एवं ब्रह्मण्यखिलं जगद्रूपं पूर्वपूर्ववासनावशादसदेव भासते इति सर्वं भ्रमविषयो ऽसदेव जगदित्यर्थः। मिथ्यात्वे विप्रतिपन्नं प्रति विश्वासार्थं

बहुदृष्टान्तोपन्यास । भावकप्रत्ययाभ्रमायाह *भ्रमविषयेति ॥ ६५ ॥

व्यासो ऽपि 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तेः' इति स्वप्नप्रपञ्चस्य मायामात्रत्वं न तु बाह्यसर्गतुल्यत्वमाह । तत्रैव यद्यपि जाग्रत्प्रपञ्चस्यापि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति सूत्रेण मायामात्रत्वमुक्तम्, तथापि 'प्राग् ब्रह्मात्मदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितः स्वाप्नस्तु प्रतिदिनं बाध्यत इति विशेषः' इति भाष्ये उक्तम् । तस्य प्रपञ्चस्यान्यवस्तुत्वाभावः, 'वाचारम्भणं विकारो नामधेयम्' इतिश्रुतेरिति सूत्रार्थः । वाचैव केवलमारभ्यते यतो नाममात्रं न तु वस्तुत इति श्रुत्यर्थः ॥ ६६ ॥

(क०टी०) न केवल तत्सम्मतमेवेत्याह *व्यासोऽपीति । 'सन्ध्ये सृष्टिराह हि' इत्यनेन पूर्वसूत्रेण तृतीयद्वितीयपादस्थेन जाग्रत्सुषुप्त्योः सन्धौ भव सन्ध्यम् । दिगादित्वाद्यत् । स्वप्नः । तत्र सृष्टिर्व्यावहारिकीव, हि यत', श्रुतिरेवमाह 'अथ रथान् रथयोगान्पथ. सृजते' इतीत्यर्थकेन कृतपूर्वपक्षनिरासमाह * मायेति । तु' पूर्वपक्षनिरासार्थ. । स्वप्नसृष्टिर्मायामात्र शुक्तिरजतादिवत्। *कात्स्न्र्येन—उचितदेशकालादिसम्पत्त्या वा वाभावेन वा । अनभिव्यक्तस्वरूपत्वादिति पाठ. । न हि रथादीनामुचितो देश. स्वप्ने सम्भवति, देहान्तर्नाडीप्रविष्टमनोऽवच्छिन्नसाक्षिभिन्नस्य (तदानीम्) असत्त्वात्, नाप्युचित. कालोऽस्ति, घटिकामात्रवर्तिनि स्वप्ने ऽनेकसंवत्सरसाध्यससरणस्य दर्शनात् । तस्मात्प्रातिभासिक एव स्वप्नप्रपञ्च इत्यर्थ. । तुतात्पर्यमाह *स्वप्नस्येति । मात्रव्यावर्त्यमेवाह *नत्विति । नन्वेतावता तस्य तत्त्वे ऽपि बाह्यस्य तत्त्व नाभिमत, तस्य किञ्चित्त्वोक्तिविरुद्धमपीदमत आह *तत्रैवेति ।व्यासीये एवेत्यर्थ'।*उक्तमिति। एव चाद्यदोषोद्धारे ऽपि द्वितीयदोषः (तदवस्थ. ) एवेति भावः । तमप्युद्धरति

*तथापीति। *ब्रह्मात्मदर्शनात्–ब्रह्मस्वरूपदर्शनात्। *विशेष इति। तथाचैतन्मात्रकृतो भेद इति न मिथो विरोधोऽपीति भाव।ननु ब्रह्माभेदेऽपि जगति लोकदृष्टान्तेन विरोधपरिहारे लौकिकयो· कार्यकारणयोरिव ब्रह्मप्रपञ्चयोरपि समानसत्ताकत्व स्यादत उक्तम् *तदनन्यत्वमिति। तस्य प्रपञ्चस्य ब्रह्मणो ऽनन्यत्वमारम्भणशब्दादिभ्य·। एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाय 'सोम्यैकेन मृत्पिण्डेन सर्व मृन्मय विज्ञात स्याद्वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' इत्युक्तम्। मृत्पिण्डो मृज्ज्ञानाकारमाह। *वाचेत्यादि। विकार· सर्वो ऽपि वाचाऽऽरभ्यते 'राहो· शिर·' इतिवत् यद्वा वाचः शब्दस्याऽऽरम्भणहेतुर्न तु तत्त्वतो ऽस्ति यतो नामधेयमात्रमेतत्। अत्र नामधेयशब्देन तत्कारणको व्यवहारो लक्ष्यते। व्यवहारमात्रमेतदित्यर्थ। मृदादिकारणेभ्यो भेदाभेदाभ्यामनिर्वचनीयत्वात्, भेदे सत्कार्यवादहानिः,अभेदे कारणव्यापारवैयर्थ्यम्,उत्पत्ते पूर्वमसत्स्वभाव नरविषाणवत्पश्चात्तु सदित्यस्याप्ययुक्तत्वान्नीलरूपस्य पीतरूपत्वे इवैकस्योभयस्वभावत्वे विरोधात्, मृदित्येव सत्यम्। सत्यत्व च मृदः स्वविकारापेक्षया। तथा सत्यज्ञानादिरूपत्वेन ब्रह्मणि ज्ञाते विकारो ऽप्यसत्यो ब्रह्मैव सत्यमिति ज्ञानम्। एव ज्ञाने ऽपि यथा मृदपेक्षया विकारमिथ्यात्वज्ञानेऽपि व्यवहाराय तदुपादान भवति,एवं व्यवहाराय सर्वोपादानमिति बोध्यम्· अन्यथाऽसगतिः। न हि मृन्मात्रज्ञानात्तत्तद्वैशेषिकरूपेण सर्वज्ञान भवति। एतेन तत्तद्वैशेषिकरूपेण सर्वज्ञानमिति वेदान्त्येकदेश्युक्तमपास्तम्। आदिना 'ऐतदात्म्यमिदं सर्व यदयमात्मा' 'ब्रह्मैवेद सर्वम्' इत्यादिश्रुतिपरिग्रह। आसां च श्रुतीनां न ब्रह्मप्रपञ्चयोरभेदे तात्पर्य सदसतोरभेदायोगात् किन्तु प्रपञ्चे भिन्नतत्त्वाभाव एवेति बोध्यम्। अनेकतत्त्वत्वे एकविज्ञानेन सर्वविज्ञान न केनापि रूपेणोपपादयितु शक्यम्। वेदान्ताना ब्रह्मणि तात्पर्य न वेति सन्देहः,प्रवृत्तिनिवृत्त्यविषयत्वान्नेति पूर्वपक्षः,प्रवृत्याद्यविषयत्वेऽपि षड्विधलिङ्गवशादस्त्येव तात्पर्य तत्रेति सिद्धान्त इति। तदेतदभिप्रेत्याह *तस्येत्यादि। समुच्चयद्योतकतया एवकेवलयो· प्रयोगः। सर्वथा तस्यातत्त्वाय तदाश्रयणम्। अत एव मात्रमित्यादि। एतदेव सर्व बोधयितुं श्रुतौ ब्रह्मणो जगदुपादानत्वेन व्यवहारो मृदादिदृष्टान्तेन। कार्यापेक्षया कारणस्यैव सत्यत्व कार्य तु व्य-

वहारमात्रमिति बोधयितु श्रुतौ दृष्टान्तो ऽप्यनुमानप्रमाणसिद्ध एव न लोकसिद्ध । आद्यन्तयोर्मृद एवोपलब्धेस्तस्यास्तद्धिकारात्सत्यत्वानुमितिर्बोध्या । इदमनुपदमेव स्फुटीभविष्यति ॥ ६६ ॥

अत एव च 'अनन्यत्वेपि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वम्' इति "न तु दृष्टान्तभावाद्" इति सूत्रे भाष्ये । कार्यस्य वस्तुत्वाभावादिति तदाशयः । मायामात्रमिति मात्रपदेनानिर्वचनीयोत्पत्तिवादमपि निराकरोति । न च "न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान्पथः सृजते" इति स्वप्नविषयश्रुत्युक्तसृष्ट्यसंगतिरिति वाच्यम् । 'उपक्रमे रथाद्यभावः श्रुत्योक्त इति सृष्टिवचनं भाक्तम्' इतिभाष्येणैव समाधानात् । किंच 'नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति रथादिनिर्वर्तने वा कुतो निमेषमात्रेण सामर्थ्यं दारूणि च न सन्ति तस्मान्मायामात्रं स्वप्नदर्शनम्' इति, 'तादृशमपीष्टानिष्टसूचकम्' इति च भाष्ये स्पष्टम् । अत्रान्तःकरणपर्यन्तं नष्टवृत्तिकत्वाचक्षुरादीनि न सन्तीत्युक्त्वा विशिष्टज्ञानाध्यासो दर्शितः । सामग्रीव्यतिरेकाचानुत्पत्तिं वदता शुक्तिरजतादिस्थले ऽप्यनुत्पत्तिः सूचिता ॥ ६७ ॥

(क० टी०) भाष्यसम्मतमपीदमेवेत्याह *अत एव चेति । तस्यान्यवस्तुत्वाभावादेवेत्यर्थः । इतीत्यस्योक्तमिति शेषः । द्वितीयाद्यपादस्थमिदम् । तत्रैव 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' इति पूर्वसूत्रेण सतो ब्रह्मणः कारणत्वमप्यसमञ्जसम् अपीतौ प्रलये तद्वद् कारणवद् कार्याणामपि सत्त्वप्रसङ्गादित्यर्थकेन कृतपूर्वपक्ष-

दूषकम् । *न त्विति । उक्तं तु न युक्तम् । सत असदुत्पत्तौ दृष्टान्तसत्त्वादिति सूत्रार्थः । उक्तामापत्तिं प्रतिबन्द्या समाहितवान् "स्वपक्षे दोषाच्च" । असत्कारणतावादे ऽपि दोषो ऽय समानः । कालादेः सहकार्यन्तरस्याऽऽश्रयणेन परिहारो ऽपि समान इत्यर्थः ।अत्रान्यथा व्याख्यानं तु तृतीयसूत्रासामञ्जस्यादयुक्तमिति बोध्यम् । भाष्याशयमाह *कायस्येति । सौत्रमात्रपदसाफल्यमाह *मायेति । *वाद्मपि-वेदान्तिसम्मतम् । *निर्गेति।व्यास इति शेष.।इद त्वनुपदमेव स्फुटीभविष्यति। *नचैवम्–तस्य मायामात्रत्वे। *रथयोगा –तद्ग्राहका. । *सृष्ट्यसमिति । सृजत इत्युक्तेत्यर्थ.।*श्रुत्योक्तः–श्रुत्यैवोक्त. । अयम्भाव – एषा स्वाप्नसृष्टिर्माया एव केवलम्,जाग्रद्विषयसर्वपुरुषसाधारण्येनार्थक्रियाकारित्वेन स्थिरत्वेन चानभिव्यक्तस्वरूपत्वात् ।यद्यपि व्यवहारसृष्टिरपि मायैव तथापि दृष्टोत्पादकविनाशकसामग्रीकल्पनाद्वारैवैषा. मायाशक्ति. द्वितीया तु मनआदिसापेक्षतच्छक्तिरिति । ते च स्वाप्नाः पदार्था मनःपरिणाम. । बाहिरनुपलभ्यमानाकारा बुद्धिवृत्तिरेव भ्रम' व्यवहारदशायाम् । शुक्तिरजतमपि शुक्त्यवच्छिन्नान्त.करण परिणाम एव । स चोक्तरूप. । अस्य सूत्रस्य च स्वाप्नवत् जाग्रत्प्रपञ्चे ऽपि ब्रह्मापेक्षया तुच्छत्वप्रतिपादन फलम् । स च स्वप्नः शुक्तिरजतं यथा सत्यहर्षादिजनकम् एव व्यावहारिकशुभाशुभसूचक । एवमेव व्यावहारिकं श्रुत्यादि परमार्थसत्यब्रह्मबोधकमिति बोध्यम् । जातस्वप्नसृष्टेर्नाशे परमेश्वरस्याभिध्यानसङ्कल्प एव सुषुप्तिकाले बोध्य इति । भाष्यान्तरमप्यत्र साधकत्वेनाह *किञ्चेति । लौकिकज्ञानसामग्र्यभावमाह *नास्येति । उत्पत्तियोग्यकालो नेत्याह *रथादिनिर्वर्तनेवेति।उत्पादकसामग्र्यपि नेत्याह *दारूणि वेति। नन्वेव स्वप्नस्य सत्यशुभाशुभसूचकत्व कथम् ? अत उक्तम 'सूचकश्च हि श्रुतेराचक्षते तद्विद' इति। रजतस्य सत्यहर्षादिजनकत्ववदसत्यस्यापि तस्य सूचकत्वमविरुद्धमिति तात्पर्यम्। तदाह *तादृशमपीति भाष्योक्तेरिति पाठ'। तत्सूचितमन्यदप्याह *अत्रेति। स्वप्ने इत्यर्थः । अत एवादिपद सार्थकम् । तत्र तदाह *चक्षुरादीति । अन्यदप्याह *सामग्रीति । कालादीत्यर्थ. ॥ ६७ ॥

तथा चतुर्थे ऽपि भाष्ये 'मृत्पिण्डादिदृष्टान्तैर्हि

सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य चानृतत्वं प्रतिपादयति शास्त्रम् अतः सृष्टिवाक्यानि नोत्पत्त्यादिपराणि किं त्वैकात्म्यावगमपराणि' इति। सत इत्यस्याद्यन्तयोः सत्त्वेन मध्ये ऽपि सत्त्वानुमानेन कालत्रयाबाध्यत्वरूपं सत्यत्वम्, प्रपञ्चस्य त्वाद्यन्तयोरसत्त्वेन मध्ये ऽपि असत्त्वानुमानेन कालत्रयबाध्यत्वरूपमनृतत्वमित्यर्थः । मध्ये कदाचित्सत्त्वेन प्रतीतिस्तु भ्रम एवेति तदाशयः । उत्पत्त्यादीनां भ्रमविषयाणामेव तत्रानुवाद इति विकारत्वादिप्रतीतिरपि भ्रम एवेति तत्तात्पर्यम् ।

मृत्पिण्डादिदृष्टान्तस्य चायमर्थः–एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावादि मृदात्मकमिति विज्ञातं भवतीति ।

"यथा च तक्षोभयथा" इतिसूत्रेऽपि भाष्ये "स्वाप्नो विकारो वासनामय एव न तु पारमार्थिको ऽस्ति" इति । यथा तन्त्रान्तरे घटादिप्रपञ्चस्य पारमार्थिकत्वं तथा तत्रापि न स्वाप्नस्येत्यर्थः । अस्माकं तु व्यावहारिको ऽपि प्रपञ्चो दीर्घस्वप्न एवेति बोध्यम् ।

"तदनन्यत्वम्–" इतिसूत्रे भाष्यम् "यथा च मृगतृष्णोदकादिनामूषरादिभ्यो ऽनन्यत्वं दृष्टादृष्टस्वरूपत्वात् एवमस्य प्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावः" इति । "सर्वव्यवहारस्य प्राग् ब्रह्मात्मविज्ञानात्सत्यत्वं स्वप्नव्यवहारस्येव प्राक् प्रबोधाद्" इति च, "अविभागे ऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो-

ऽपि भागव्यवहारः स्वप्नवद्व्याहतः" इति चान्यत्र भाष्ये ॥ ६८ ॥

(क०टी०) अन्यदपि तन्मानमाह *तथेति । *इत्यस्य–इत्यादेः । *सत्यत्वम्—ब्रह्मण. । अत एवाह *कदाचिदिति । दोषवशादिति भावः । *तदाशयः—भाष्याशय. । एकमग्रे ऽपि । *तत्र–सृष्टिबोधकासु 'आत्मन आकाश. सम्भूत' इत्यादिश्रुतिषु । प्रागुक्तरीत्यैव *मृत्पिण्डादीति । *अर्थ –अभिप्राय' । परमार्थत्व विकारापेक्षया । अन्यदपि मानमाह *यथाचेति । नन्वेवमसङ्गत्वे कर्तेत्युक्तकर्तृत्वासङ्गतिरिति शङ्कानिरासार्थमिदं सूत्रं द्वितीयाध्यायद्वितीयपादस्थम् । यथा तक्षा वास्याद्युत्कर्षापकर्षादिभिरुत्कर्षादिमान्, यथा वा तत्सन्निधाने तक्षणादिक्रियावान् तदभावे तदभाववान्, एव जीवो बुद्धिरूपोपाधिवशात्कर्ता स्वतस्त्वकर्तेत्यर्थं ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तार स पश्यति ॥ इति स्मृतेः ।

'अकर्ता चैतन्यम्' इत्यादिश्रुते, 'कामादिक मन एव' इति श्रुतेश्चेति भाव । औपाधिककर्तृत्वेनापि शास्त्रार्थवत्त्वमुपपन्नमेव । तदश्लिष्टबुद्धेरपि कर्तृत्वाभावात्केवलाया बुद्धेरकर्तृत्वोक्तिरिति बोध्यम् । ननु स्वमते तत्त्वाप्रसङ्ग एवेति व्यर्थेयमुक्तिरत आह *यथेति । *तन्त्रान्तरे–न्यायादिमते । *तत्रापि–तन्मते ऽपि । एतत्तात्पर्यमाह *अस्माक त्विति । अन्यदपि तदाह *तदेति । *अदृष्टेति । स्वरूपस्यैवादर्शनादित्यर्थः । अन्यान्यपि तान्याह *सर्वेत्यादि । *ब्रह्मात्मेति । ब्रह्मस्वरूपेत्यर्थं । स्वप्नप्रपञ्चस्य प्रबोधो जागरण ब्रह्मविज्ञानं च । *अविभागे इति । बहुव्रीहि' । वस्तुत इति भाव ॥ ६८ ॥

यत्त्वनिर्वचनीयं सदसद्विलक्षणं जलादि मृगतृष्णादावुत्पद्यते एवं ब्रह्मणि प्रपञ्चो मृदादौ घटादिः स्वाप्नश्चेति । तन्न । तादृशानिर्वचनीयस्याप्रसिद्ध्या तद्भेदस्य वक्तुमशक्यत्वात् । किञ्च, तस्य सद्भिन्नत्वादसत्त्वम् असद्भिन्नत्वात्सत्त्वमापततीति उभयरूपत्वमे-

बाधाति, तत्र सत्त्वमारोपितमिति भेदाभेदयोरिव तयोर्न विरोधः । धर्मद्वयानाक्रान्तस्य लोकव्यवहारेऽभावाच्च ॥ तदुक्तं सांख्यसूत्रे "नासतः ख्यातिर्नृशृङ्गवत्" । "नानिर्वचनीयस्य तदभावात्" । "नान्यथाख्यातिः स्ववचोव्याघातात्" इति । असतः ख्यातौ नृशृङ्गवच्छुक्तिरजतादेरप्यभानापत्तिः । न च नृशृङ्गमित्यादिशब्दतो बोधात्तद्वासनाऽऽवश्यकत्वेन तत्र तेषामपि सत्त्वेन प्रत्यक्षापत्तिः । तद्वासनायाः फलबलेन शाब्दबोधमात्रजनकत्वेन तदापत्त्यभावात् । नानिर्वचनीयस्येत्यस्यार्थ उक्त एव ।

यद्यप्यन्यथाख्यातिः सौत्रान्तिकस्य, बाह्यशुक्त्यादौ ज्ञानधर्मरजतादेरध्यास इति तेनाङ्गीकारात्, तथापि हट्टस्थरजतादेरारोप इति रीत्या वैशेषिकैः स्वकीयैः साऽऽद्दता, तदुभयमपि न । तत्र तदसत्त्वेन तद्रूपस्य सन्निकर्षाभावेन 'असन्न भासते सन्निकर्षाभावाद्' इति स्वसिद्धान्तव्याघातात् । किंच, विशेष्यविशेषणानुयोगिकत्वप्रतियोगिकत्वविशिष्टसंबन्धस्य त्वयाप्यसत एव भानाङ्गीकारात्तदग्रहेऽसंसर्गाग्रह एव पर्यवसानमिति विशिष्टभ्रमवाचकस्यान्यथाख्यातिरितिवचसो व्याघातात् ।

किञ्च ।

ज्ञानस्यार्थव्यभिचारित्वे ज्ञानेनार्थसिद्धिरिति स्ववचोव्यघातादिति दिक् ॥ ६९ ॥

(क०टी०) वेदान्तिमतं खण्डयति *यस्त्विति । अन्यादृशस्येष्टत्वस्य वक्ष्यमाणत्वादाह *सदसदिति । 'यतो वाच' इति श्रुते-

ब्रह्मणि तत्त्वाभावादाह *अनिर्वचनीयेति । ननु सत्त्वेन ब्रह्म असत्त्वेन नृशृङ्गादि तत् प्रसिद्धमेव अत आह *किञ्चेति । यत इति शेषः । *तस्य—जलादेः सर्वस्य । ननु विरोधादिद दुर्वचमेवेति तथैव वाच्यम् अत आह *तत्रेति । तयोर्मध्ये इत्यर्थः । तादृशपदार्थस्यान्यस्य सत्त्वेऽत्र सर्वत्रैव सुवच तदेव नेत्याह *धर्मेति । अत्र मानमाह *तदुक्तमिति । *अभानेति । अप्रत्यक्षेत्यर्थः । *तत्र–बुद्धौ । *तत्–प्रत्यक्षम् । एतेन दृष्टान्तासङ्गतिः परिहृता । 'नान्यथा'–इति व्याचष्टे *यद्यपीत्यादि । वेदबाह्योक्तत्वात्तदप्रमाणमेवेति न तत्खण्डनोपयोग इति शङ्काशय । प्रकारभेदमाह *दृष्टस्थेति । *स्वकीयैः–वैदिकैः । *सा–तादृशी । एव च तत्खण्डनोपयोगस्तदाह *तदुभेति । वच शब्देन सिद्धान्त इत्याह *तत्रेति । ज्ञाने रजतासत्त्वेन रजतरूपसन्निकर्षाभावेत्यर्थः । वच प्रसिद्धमित्याह *किञ्चेति । *तदग्रहे–तादृशसम्बन्धग्रहे । एवेन विशिष्टबुद्धिनिरासस्तदाह *विशिष्टेति । ननु तस्यापि स एवार्थोऽस्तु अत आह *किञ्चेति । तत्रैवेति भावः । एतेन ज्ञानसन्तानस्यैवात्मत्वमिति, ज्ञानरूपात्माकारस्य रजतस्य ख्यातिरित्यर्थकात्मख्यातिरिति वैभाषिकादिमतमप्यपास्तम् । तदाह *दिगिति ॥ ६९ ॥

परमार्थसारेऽपि ।

त्रिगुणा चैतन्यात्मनि सर्वगतेऽवस्थितेऽखिलाधारे ।
कुरुते सृष्टिमविद्या सर्वात्मा स्पृश्यते तया नात्मा ।

सृष्टि तद्भ्रममित्यर्थः । तदप्युक्तं तत्रैव ।

रज्ज्वां भुजङ्गहेतौ प्रभवविनाशौ यथा न स्तः ।
जगदुत्पत्तिविनाशो न च कारणमस्ति तद्वदिह ॥ इति ।

भुजङ्गहेतौ, भुजङ्गभ्रमहेतौ । नच कारणमस्तीति । किं त्वन्यथाभानात्मिकाऽविद्यैव सेत्यर्थः । किंच, अनिर्वचनीयोत्पत्तौ घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्तिः । भ्रमविषयेण तु न विकारित्वम् । कामुककृतैः कान्ताविषयैः—

सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्—

इति विकल्पैः कान्ताया विकारित्वाभावात् ।

वस्तुतो मृदि घटादिविकारो भ्रम एव न तु कोऽपि पदार्थ इति "तदनन्यत्वम्—" इति सूत्रेणोक्तम् । किञ्च । प्रसिद्धसामग्रीव्यतिरेकेऽपि यया सामग्र्या शुक्त्यादौ रजताद्युत्पत्तिस्तया सामग्र्या विषयासत्त्वेऽपि तदसन्निकर्षेऽपि ज्ञानाङ्गीकारेऽपि न बाधकम् । किञ्च, अनिर्वचनीयोत्पत्तौ तस्य तस्य तादृशरजतत्वाद्याश्रयत्वेन तज्ज्ञानस्य भ्रमत्वानापत्तिः, तस्य तद्वृत्तिधर्मप्रकारकत्वाभावात् । न च रजतत्वमेवानिर्वचनीयम् आश्रयस्तु शुक्तिरेवेति न दोषः । त्वयाऽपि जातेर्वारं वारमुत्पत्त्यनङ्गीकारात् । किञ्च जातेरिव तदाश्रयत्वस्यापि तादृशस्य शुक्तौ सत्त्वेन पूर्वोक्तदोषतादवस्थ्यम् । तदुक्तं योगसूत्रे "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति । विपर्ययइति लक्ष्यम् मिथ्याज्ञानमिति लक्षणम्, तद्विवरणमतद्रूपेति, तद्रूपप्रतिष्ठत्वाभाववत् । यद् ज्ञानप्रतिभासि रूपं रजतत्वादि तदाश्रयत्वाभाववद्विशेष्यकमित्यर्थ इति मिश्राः ॥ ७० ॥

(क०टी०) भगवतो ऽपि भेद. सम्मत इत्याह *परेति । ननु त्रैगुण्यसङ्गबद्धश्चेदात्मा तर्हि विकारी स्यादत आह *त्रिगुणेति । सत्त्वरजस्तमोभिस्त्रिगुणा अविद्या सृष्टि सृष्टिभ्रम कुरुते जनयति । क ? *अखिलधारे–समस्तप्रपञ्चाधिष्ठाने । *सर्वगते–। पूर्णे अपरिच्छिन्ने । *अवस्थितेनित्ये । 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतेः । अत एव सर्वात्मा आत्मा तया भ्रमविषयसृष्ट्या न स्पृश्यते इत्यर्थः । तेन न विकारित्व-

प्रसक्तिरिति भाव । "नात्मान स्पृशति" इति श्रुते । उपयुक्तमाह *सृष्टिमिति। *तदपीति। भ्रमविषय एव सृष्टिर्न तु सत्त्व तस्या इतीत्यर्थः। रज्ज्वां भुजङ्गभ्रमहेतौ उत्पत्तिविनाशौ यथा न स्तो भुजङ्गस्यैवाभावात् तद्वदिह परमार्थविचारे जगत उत्पत्तिविनाशयोर्न किञ्चित्कारणमस्तीत्यर्थः। कारणत्वमपि भ्रमविषय एव सत्यत्वादिवदिति भाव । भ्रमविषयकारणत्वमेव "यतो वा इमानि" इति श्रुत्यादयो ऽनुवदन्तीति न तद्विरोधः। तत्तात्पर्यमाह *किन्त्विति। सिंहावलोकनन्यायेन तत्र दोषान्तरमाह *किञ्चेति। *ब्रह्मणो ऽपीति। प्रपञ्चेनेति भाव.। सिद्धान्ते तु नायं दोष इत्याह *भ्रमेति। *विषये –विषयके'। *सुप्तेति। इदमप्यभ्युपेत्योक्तमित्याह *वस्तुत इति। *नन्विति। एव च तद्दृष्टान्तेनात्र तत्त्वापादनमयुक्तमेवेति भाव.। तद्रीत्या दोषान्तरमाह * किञ्चेति। *तया–तयैव। दोषान्तरमाह *किञ्चानिर्वचनीयेति। *तस्य-रजतभुजङ्गादे' । तदसम्भवादाह *तादृशेति। अनिर्वचनीयेन्द्रियार्थ' । व्यावहारिकतद्वृत्तिविशिष्टस्यैवोत्पत्तेः । अन्यथा तत्पदवाच्यतापि न स्यादिति भाव.। *तस्य–ज्ञानस्य। *तद्वृत्तीति। शुक्त्याद्यवृत्तीत्यर्थ । इमं दोषमुद्धरति *न चेति। *त्वयापि–अनिर्वचनोत्पत्तिवादिना वेदान्तिनापि। तन्मते ब्रह्मातिरिक्तस्य जन्यत्वादाह *वार वारमिति। भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेनाह *किञ्च जातेरिति। *तादृशस्य–अनिर्वचनीयस्य। पूर्वत्र रजतत्ववत्। *पूर्वोक्तेति। तस्य भ्रमत्वानापत्तिरूपेत्यर्थ । पतञ्जलिसम्मतमपि नेदमित्याह *तदुक्तमिति। भ्रमनिरासायाह *विपर्येति। "प्रमाणविपर्ययविकल्पनिद्रास्मृतय." इति प्रागुद्देशात्। तत्र प्रकृतोपयोगान्मिश्रोक्तमेव व्याख्यानमाह *तद्रूपेति। अश्राद्धभोजीतिवत्तस्य तद्रूपाप्रतिष्ठमित्यर्थेनेद लब्धम्, तदर्थमाह *यदिति। वस्तुतस्तु अतद्रूप' अस्वसमानाकारो यो बाह्यो विषयस्तत्प्रतिष्ठ तद्विशेष्यकमित्यर्थः। भ्रमस्थले ज्ञानाकारस्यैव सदसद्रूपस्य विपये समारोप इत्यादि प्रागुक्तमिति बोध्यम्।

केचित्तु मिथ्यात्वे हेतुगर्भविशेषणमतद्रूपेत्यादि–न विद्यते तद्रूपस्य ज्ञानाकारस्य प्रतिष्ठा चिरस्थितिर्यत्र अग्रेतनबाधज्ञानबाध्यत्वादित्यर्थः । तेन विकल्पतो ऽस्य भेदो ऽप्युक्त.। स च 'शब्द ज्ञानानुपाती' इत्यादिना तत्रैवोक्तः। शब्दः शब्दप्रयोगस्तज्जन्य

ज्ञान च ते अनुपातिनी यस्य स॰। बाधावाधककालाविशेषेण तदुभय-जनको वस्तुशून्य॰ प्रत्ययो विकल्प इति तदर्थ॰। विपर्ययस्तु नैवम्, 'नेद रजतम्' इति बाधोत्तर शब्दप्रत्यययोरभावादित्याहु ॥ ७० ॥

व्यासस्यापीदमेव च मिथ्याज्ञानमभिप्रेतम्, तेनान्यतल्लक्षणानुक्तेः। सांख्यदूषितानिर्वचनीयख्यातेरपि तत्सूत्रानारूढत्वाच्च। तेन सांख्योक्तसदसत्ख्यातेरेव तदभिमतत्वं लक्ष्यते। किञ्च, शुक्तिरजतस्थले ऽधिष्ठानज्ञानेन तन्नाशो वाच्यः। न च तस्य वस्तुनाशकता दृष्टा। अत एव गौतमादिभिरुत्पत्तिस्तत्र नोक्ता। अन्यथा घटादिवत्तत्राप्युत्पत्तिमेव वदेयुः। शुक्त्यादि समवायिकारणं चाकचक्यादि असमवायिकारण दोषो निमित्तकारणमिति वक्तुं शक्यत्वात्। अन्यथाख्यातिरित्येव चोक्तं तदीयैः। अन्यथाख्यातिरित्यनेन प्रकारस्यान्यत्र सत्त्वं सूचितम्। तत्सम्बन्धो ऽप्येवमेव, तदनुयोगिकत्वमप्येवमेवेति सूचितम्। संयोगसमवाययोः सम्बन्धत्वस्यानुयोगित्वादिभानानियतत्वात् ॥ ७१ ॥

(क॰टी॰)व्याससम्मतमपीदमित्याह *व्यासेति। *इदमेव–योगसूत्रलक्षितमेव। अनिर्वचनीयोत्पत्त्या तत्स्वरूपमपि तस्य नेष्टमित्याह *साख्येति। तत्ख्यातेन न्यायेन यत्त्वित्यत्र दोषान्तरमाह *किञ्चेति। *न च–नहि। अवस्त्वज्ञाननाशकत्वसत्त्वादाह *वस्त्विति। गौतमादिसम्मतापि सा नेत्याह *अत एवेति। उक्तदोषगणादेवेत्यर्थः। *गौतमादिभि॰–तैरपि उत्पत्तिवादिभि। तदेवाह *अन्यथेति। दोषगणो यदि न स्यादित्यर्थ॰। *तत्रापि–शुक्तिरजतादावपि। ननु न दोषगणसत्त्वहेतुका तदनुक्तिः किन्तु कारणसामग्र्यभावमूलिकेत्यत आह *शुक्त्यादीति। ननु तद्वदनुक्त्याऽन्यदपि तेषामनिष्टमत आह *अन्यथेति। तथोक्तेस्तात्पर्यमाह *अन्यथेति। *अन्यत्र–भातदे-

शादन्यत्र हट्टस्थरजतादौ । तथाच नासत एव ख्यातिर्नाप्यनिर्वचनीया ख्यातिरिति तदाकूतम् । किञ्चिदप्यत्रानिर्वचनीय नेत्याह *तत्सम्बन्धइति। प्रकारसम्बन्धोऽप्यन्यत्र सन्नेवेत्यर्थ । एवं सम्बन्धसम्बन्धेऽपीत्याह *तदन्विति । अन्यत्र सन्नेवेत्यर्थ. । नन्वेतद्भाने न मानमत आह *सयोगेति ॥ ७१ ॥

बुद्धिसद्वा तद्, भ्रमप्रकारत्वमेव मिथ्यात्वम् । 'रजतं पश्यामि' इत्यनुव्यवसायोऽपि दोषवशाच्चाक्षुषत्वांशे भ्रम एव । न च दोषस्य रजतज्ञानत्वं त्वया कार्यतावच्छेदकं वाच्यं तद्वरं रजतत्वमेव लाघवात्तथोचितमिति वाच्यम् । उत्पत्तिनाशकल्पनापेक्षया प्रमास्थले क्लृप्तस्य तस्यैव तत्त्वौचित्यात् । अत एव "ब्रह्मदृष्टिरुत्कर्षाद्" इत्यधिकरणे भाष्ये "प्रत्येत्येव हि केवलं शुक्तिकां रजतमस्ति" इत्युक्तम् । 'मुग्धेऽर्द्धसम्पत्तिः' इति सूत्रे भाष्येऽपि 'न हि स्वच्छः स्फटिकोऽलक्तकसंयोगादस्वच्छो भवति भ्रमत्वादस्वच्छत्वाभिमानमात्रस्य' इत्युक्तम् । तव व्यावहारिकप्रातिभासिकयोः सदसद्विलक्षणत्वाविशेषेण भेदस्य वक्तुमशक्यत्वात् । विशेषदर्शनबाध्यत्वमपि तुल्यम् । तदुक्तं परमार्थसारे ।

ज्वलनाद् धूमोद्गतिभिर्विविधाऽऽकृतिरम्बरे यथा भाति।
तद्वद्विष्णौ सृष्टिः स्वमायया द्वैतविस्तरा भाति॥ इति ।

अत्र भातीत्येवोक्तं न तूत्पद्यते इति । आकाशे जलरेखावद्, शिलायामङ्कुरवद् विविधाकृतेस्तत्र स्व-

---

१ इद भाष्यं "न स्थानतोऽपि परस्य-" इति सूत्रे विद्यते सामीप्यात् "मुग्धे-" इति सूत्रस्थत्वेन व्यपदेश इति बोध्यम् ।

**रूपायोग्यत्वेनासम्भवात् । स्वमायया वासनास्वरूपया ॥ ७२ ॥**

एवं तत्खण्डनप्रसङ्गेन परमतमुक्त्वा प्रागुक्तमेव सिद्धान्तमतं तत्राह *बुद्धीति । *तत्-रजतत्वादि । अत्र बीजमुक्तमेव । नन्वेवं कथं मिथ्यात्वमत आह *भ्रमेति । नन्वेवं तद्व्यवसायस्तद्वदत्र न स्यात्तस्याभावादत आह *रजतमिति । अनिर्वचनीयोत्पत्तिवादी शङ्कते *न चेति । *अपेक्षयेति । लाघवेनेति शेषः । अक्लृप्तकल्पनाप्रयुक्तगौरवमपि नेत्याह *प्रमेति । *तस्यैव-ज्ञानत्वस्यैव । इदमेव भगवत्सम्मतं न तदित्याह *तदुक्तमिति । नन्वेवं विश्वादीनां भ्रमत्वमुक्तं तत्किमधीनकोऽयं भ्रम इत्यत आह *ज्वलनादिति । ज्वलनहेतुकधूमोद्गमनैर्नानाविधा आकृतिर्नीलश्वेतादिरूपाऽम्बरे पुरोवर्त्याकाशेऽसत्यपि यथा भाति तद्वद् विष्णौ सृष्टिर्द्वैतविस्तरा नामरूपादिविस्तरा सत्त्वस्थिरत्वादिरूपेण भातीत्यर्थः । *नत्विति । तथा चेदमेवाभिमतं न तत् । तत्रान्यदृष्टान्ते पूर्वहेतुमाह *आकाशे इति । *तत्र-आकाशे । *असम्भवादिति । उत्पत्तेरसम्भवादित्यर्थः । तेन तस्या असत्त्वं सूचितम् । प्राग्वदाह *वासनेति । एतेन विष्णुसंज्ञकशुद्धचैतन्यमेवाधिष्ठानमित्युक्तम् । स्वमाययेत्यस्य स्वस्मादुद्गतमाययेत्यर्थः । दृष्टान्तबलेन तथैव लाभात् । अन्यथा विष्णुमायया कः सम्बन्धः स्याद्येन विष्णुमायेत्युच्येत । न चाश्रयाश्रयिभावस्तस्यासम्बन्धत्वात् । सम्बन्धमूलको हि सः । तन्मूलकसम्बन्धान्तराभावाच्च । न च स्वस्वामिभावः सम्बन्धः । 'चतुर्भिः प्रकारैः स्वं भवति क्रयणादपहरणाद्याच्ञाया विनिमयाच्च' इति "षष्ठीशेषे" इति सूत्रे भाष्योक्तेस्तदन्यतमाभावेन तदसम्भवादिति दिक् ॥ ७२ ॥

**श्रीहर्षेणाप्युक्तम् 'परकीयरीत्येदमुक्तम्—'अनिर्वचनीयत्वं विश्वस्य पर्यवस्यति' इति । वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापननिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भारमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधकदूषणव्यव-**

स्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमो न साध्वीयं भवतां विचारव्यवस्था । भवत्कल्पितव्यवस्थयैव व्याहतत्वादिति' ।

'सत्त्वासत्त्वव्यवस्थेति । तदन्यतरव्यवस्थेत्यर्थः । भारम्, प्रातिभासिकप्रपञ्चभारम् । अनिर्वचनीयत्वं निर्धार्य सत्त्वासत्त्वान्यतररूपेणानिर्वचनीयत्वं न तु सदसद्विलक्षणत्वम्' इति तद्व्याख्यातारः ॥

अत एव भागवते उक्तम्—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ इति ।

यद् विनाप्यर्थमात्मन्यधिष्ठाने प्रतीयेत, यच्चात्मरूपे न प्रतीयेत तत् प्रत्ययाप्रत्ययरूपमात्मनो मायां विद्यात् । यथा आभासो द्विचन्द्रादिः, यथा च तमो राहुर्ग्रहमण्डले सन्नपि न प्रतीयते इत्यर्थः । असदर्थप्रकाशनस्यैव मायात्वादेवमेव युक्तम् ।

यदुक्तं बृहन्नारदीये—

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी ॥ इति ।

तस्यायमर्थः—व्यवहारकाले सत्त्वेन प्रतीतेर्न केवलमसद्रूपा । प्रतिक्षणं परिणामितया प्रतीतेर्बाधदर्शनाद्विशेषदर्शनबाध्यत्वाच्च न केवलं वास्तवसद्रूपा । अत एव वास्तवोभयरूपा ऽपि न, विरोधाच्च । अत एवानिर्वाच्या सत्येवासत्येवेति निर्धार्य वक्तुमशक्या । तर्हि किमुभयविलक्षणा ? नेत्याह—मिथ्याभूता, प्रतिभासमात्रविषयत्वात् । सनातनी—भ्रमपरम्पराज-

नकपरम्पराकवासनारूपेणेति । तस्मादारोपितं सत्त्वं परमार्थतस्त्वसत्त्वमित्येव युक्तम् ।

तदुक्तम्—

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् । इति ॥७३॥

(क०टी०) श्रीहर्षस्यापि न सा सम्मतेत्याह *श्रीहर्षेणापीति । किमुक्त तदाह *अनिर्वचनीयत्वमिति । सदसद्विलक्षणत्वमित्यर्थः । विरोधाद्बाधेनोभयव्यवस्थापनासम्भवादाह *तदन्यतरेति । *केवले–शुद्धे । तस्याप्यर्थमाह *अनिर्वचनीयत्वमिति । प्रपञ्चस्येति शेष । अवलम्ब्येत्यस्यार्थः *निर्धार्येति । अनिर्वचनीयत्व व्याचष्टे *सत्त्वासत्त्वेति । अन्यदपि तदाह *अत एवेति । तदभावादेवेत्यर्थः । *भागवते–तत्रापि द्वितीयस्कन्धे चतुःश्लोक्याम् । आत्मरूपमधिष्ठानरूपम् अधिष्ठानभूतम् । *आत्मनो–मम । विधिं प्रति भगवदुक्तिरियम् । अर्थं विना प्रतीतौ दृष्टान्तमाह *यथा आभास इति । सतो ऽप्रतीतौ तमाह *यथा चेति । नन्वनेन मायानिरूपणं क्रियते "यथात्ममायायोगेनेत्यनेन तस्या अपि पृष्टत्वाद्वक्ष्यमाणोपयोगित्वाच्च" इति श्रीधरोक्तेः कथं प्रकृतोपयुक्तत्वमत आह *असदर्थेति । एवेनान्यव्यवच्छेदेन द्वितीयपरिग्रहोऽपि सूचितः । भवन्मते त्विदमसङ्गतमेव स्यात्तदाह *एवमेवेति । उक्तसिद्धान्तविरोधात्परिहरति *यदुक्तमित्यादिना । परमार्थतस्तदभावादाह *व्यवेति । वक्ष्यमाणोपपत्तये आह *केवलमिति । एवमग्रेऽपि । पररीत्या आह *प्रतीति । स्वरीत्या आह *बाधेति । नाशादिनेतिभावः । तत्त्वमाह *विशेषेति । ब्रह्मसाक्षात्कारेत्यर्थ । व्यावहारिकसद्रूपत्वे इष्टापत्तेराह *वास्तवेति । एवमग्रे ऽपि । *अत एव–प्रत्येक तत्तद्रूपत्वाभावादेव । तत एव दोषान्तरमाह *विरोधाच्चेति । *अत एव–उक्तदोषादेत्र । ब्रह्मवदतत्त्वादाह *भ्रमेति । तत्परम्पराजनिका परम्परा यस्या वासनायास्तद्रूपेणेत्यर्थ । तत्तात्पर्यं ब्रुवन्नुपसहरति *तस्मादिति । तस्य तादृशोभयरूपत्वे मानान्तरं स्फुटमाह *तदुक्तमिति । मनुनेतिशेष । यत्तादिति । *अव्यक्तं–प्रधानम् ।

तद्विसृष्ट स पुरुषो लोके ब्रह्मेति कीर्त्यते । इति ।

अस्योत्तरार्धे । तद्विसृष्टस्तेन प्रधानेन विसृष्ट' तन्मयत्वात्तच्छ- रीरस्य तद्विसृष्ट इत्युच्यते इति मेधातिथि ॥ ७३ ॥

"ईश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये" इति भाष्यस्याप्ययमेवार्थः । अविद्याऽत्र वासनारूपा । "प्रकृतैतावत्त्वं हि प्रतिषेधति" इति सूत्रे "अथात आदेशो नेति" इति श्रुतिव्याख्यावसरे "पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति उत्तरो वासनाराशिम्" इति भाष्योक्तेः। ईश्वरस्यात्मभूते इत्यनेनारोपितसत्त्वेत्युक्तम्। अविद्याकल्पिते इत्यनेनासत्त्वमुक्तम् । एवमेव "अविद्याकल्पितेन नामरूपलक्षणेन भेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदं पारमार्थिकेन रूपेण सर्वव्यवहारातीतम्" इति भाष्यमपि व्याख्येयम् । तत्र अविद्या पूर्वतनसंस्काररूपा । व्याकृतं स्थूलम्। अव्याकृतं तज्जन्यसंस्कारः अस्थूलम् । "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति सूत्रे भाष्ये "जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्को ऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते" इति । तत्र पूर्वप्रज्ञाशब्देन प्रतिपत्तव्यदेहविषय उद्बुद्धसंस्कारः । वक्ष्यति तत्रैव "कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयते" इति । कर्मोपस्थापितः स्वकृतोद्बुद्धसंस्कारेण बुद्धिविषयः कृत इत्यर्थः । एवमेव एवजातीयकमन्यदपि भाष्यं व्याख्येयम् ।

कौर्मे ऽपि—

विप्र पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥ इति ।

अत्र न कदाचनेत्युक्त्या व्यवहारदशायामपि तथात्वमेवोक्तम् । चित्तशब्देन ईश्वरोपाधिरपि । "नेह नानास्ति किं चन"इत्याद्या श्रुतिरपि बहिः सर्वप्रकारसत्तामनारोपितां निषेधति ॥ ७४ ॥

(कृ०टी०) भाष्यान्तरविरोध परिहरति *ईश्वरस्येति । इवेन वस्तुतोऽतत्त्व सूचितम् । *अन्यत्वम्–अतत्त्वम् । *अयमेव–प्रागुक्त एव । नन्वविद्या जीवोपाधित्वेन प्रसिद्धा न च तत्कल्पिते ते, अत आह *अविद्येति । अत्रत्यनेनान्यत्रान्यथात्वमपि सूचितम् । अत्र मानमाह *प्रकृतैतेति । नन्वीश्वरश्चैतन्यमात्रमित्ययुक्तम्, "अथात आदेशो नेति नेति" इति श्रुत्या तस्यापि निषेधावगमादिति शङ्कानिरासार्थं तृतीयाध्यायद्वितीयपादस्थमिदम् । "ततो ब्रवीति च भूय" इति सूत्रशेष । "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" इत्युपक्रम्य तदुक्ते । प्रकृत यन्मूर्ताद्युपाधिरूप तदेतावत्त्व तदवच्छिन्नत्व सा श्रुति प्रतिषेधति, न तु चैतन्यरूपमपि । मूर्त तेजोऽबन्नात्मक भूतत्रय स्थूल प्रत्यक्षम्, अमूर्त वाय्वाकाशात्मक भूतद्वय परोक्षम्, इतिशब्दस्य नेतिनेतीत्यत्रत्यस्य प्रकृतपरामर्शकत्वात् । च यतः । ततो निषेधानन्तरम् । भूय पुनर्वदति श्रुति –"प्राणा वै सत्यं तेषामेष सत्य स वा एष महानज आत्मा ऽजरो ऽमृतो ब्रह्मेति" इत्यर्थः । यदि सर्वथा ऽभाव एव स्यात् तदा तस्य सत्यत्वमात्मत्वं चायुक्त स्यात्, अभावस्यासत्तारूपत्वात् ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ॥

इत्यात्मलक्षणाभावाच्चेति भाव । स च "यतो वाचो निवर्तन्ते" इत्यादिश्रुत्या ऽव्यक्तत्वेन कथनाल्लौकिकबुद्धिवृत्त्यविषय इति बोध्यम् । श्रुतौ वावशब्द एवार्थ । रूपद्वयोपन्यासानन्तर्यमथशब्दार्थः । ब्रह्म-

णो वक्तव्यत्वेन परिशेषोऽत'शब्दार्थ' । *आदेशः उपदेशः । सूत्रे हिः प्रसिद्धौ । वीप्सादिनिरासायाह *पूर्वेति । प्राग्वदाह *एवमेवेति । विशेष वक्तु प्रागुक्तमपि स्मर्तृभेदादाह *कोर्मेऽपीति । व्याख्यातमिदम् । तमेव विशेषमाह *अत्रेति । *तथात्वमेव-चित्तस्थस्फुरणमेव । न्यूनतां निराचष्टे *चित्तेति । मायेत्यर्थ' । श्रुतिविरोधं परिहरति *नेहेति । आन्तरनिरासायाह *बहिरिति । सूक्ष्मस्थूलरूपतया भेदादाह *सर्वेति ॥ ७४ ॥

अत एव वाचस्पतिमिश्रा अपि अध्यासभाष्यव्याख्यायामाहुः—

'मृगतृष्णाजलादि न सत्, नासत्, नापि सदसत्, विरोधादित्यनिर्वाच्यमेव मरीचिषु तोयमास्थेयम् । असच्च परमार्थतोयमिव भासते । अत एव पूर्वदृष्टमिव । तत्त्वतस्तु न तोयं न च पूर्वदृष्टं किंत्वनिर्वाच्यमनृतम् । देहादिप्रपञ्चोऽप्यनिर्वाच्योऽपूर्वोऽपि मिथ्याप्रत्ययोपदर्शित एव चिदात्मन्यध्यस्यते । चिदात्मा तु श्रुत्यादिगोचरः सत्त्वेनैव निर्वाच्य 'इति ।

अस्यार्थः—न सत् बाधयोगात् । नासत् असतश्चाक्षुषाद्यनुभवविषयत्वाभावात् । नापि सदसत्, अनारोपितोभयात्मकम् अनारोपितोभयरूपत्वस्य विरुद्धत्वात् । अनिर्वाच्यमेव—आरोपितसदसत्त्वान्यतरधर्मेण निर्धार्य वक्तुमशक्यम् । तदाह—अनृतमनिर्वाच्यमिति । अनृतम्—असत् । अनिर्वाच्यत्वमुक्तरीत्याऽनृतत्वेनैव निर्धार्य वक्तुमशक्यत्वात् । यद् अध्यस्यते तद् अनृतमनिर्वाच्यमित्यर्थः । अपूर्वः—ज्ञानात्पूर्वमविद्यमानः । तदाह—मिथ्याप्रत्ययोपदर्शित एवेति । मिथ्याप्रत्ययशब्देन तज्जन्यः सं-

स्कारः। अत एवाध्यस्यत इत्येवोक्तं न तूत्पद्यते इति। अध्यस्यत इत्यस्य इत्युच्यते इति शेषः। उपदर्शनस्यैवाध्यासत्वात्। निर्धार्य वाच्यत्वाभाव एवानिर्वाच्यत्वमिति ध्वनयन्नाह—सत्त्वेनैव निर्वाच्य इतीति।

सदसद्विलक्षणत्वस्यानिर्वाच्यत्वपदार्थत्वे तदुत्पत्त्यङ्गीकारे चापूर्व इत्युक्त्यसंगतिः, अत्रैवकाराधिक्यं च। एवं चासत एवारोपितसत्त्ववतः पुरोवर्तिनि कल्पनात्संनिकर्षो ऽपि तादृशः सूपपादः। सन्निकर्षादिना चित्तादिदोषवशाज्ज्ञानमित्युपपादितम्।

एवमध्यासो ऽपि अनिर्वाच्य एव। तदुक्तं तैरेव—"तं केचिदन्यत्रान्यधर्माध्यास" इति भाष्यावतारणे 'स चायमध्यासो ऽनिर्वचनीयः सर्वेषामेव संमत' इति। "नानिर्वचनीयस्य ख्यातिः" इति सांख्योक्तं तत्खण्डनं तु सदसद्विलक्षणमुत्पद्यते ऽनिर्वचनीयमिति वाद्येकदेशिमतसिद्धस्य न तूक्तानिर्वचनीयवादस्य। इदमेवानिर्वचनीयत्वं सदसत्ख्यातिशब्देन तेनोक्तमिति बोध्यम्॥ ७५॥

(क०टी०) आरोपितायाः स्वीकारादाह *अनारोपीति। तदुक्तहेत्वर्थमाह* अनारोपीति। स्वरीत्या आह *आरोपितेति। बहुव्रीहिः। पाठक्रमादार्थक्रम इति न्यायेनाह *अनृतमनिर्वाच्यमिति। तथैव व्याचष्टे *अनृतमिति। नन्वेव निर्वाच्यत्वमेवायातमत आह *निरिति। *उक्तेति। चाक्षुषाद्यनुभवविषयत्वेनेत्यर्थ। तात्पर्यार्थमाह *यदध्यस्यत इति। साक्षात्तदभावादाह *तज्जन्यइति। *अत एव—तदुपदर्शितत्वादेव। उक्तरीत्यैवाह *इत्युच्यते इतीति। *निर्धार्येति। अन्यतररूपेणेत्यादिः। इतिरर्थसमाप्तौ। इतीनीति पाठः। तस्य तदनभिमतत्वमाह

*सदसदिति । इत्याद्युक्तीत्यर्थः । क्वचित्तथैव पाठः । अत्र सत्त्वेनैवेत्यत्र व्यावर्त्याभावात्तस्योभयविलक्षणत्वात् । नन्वेवं तेनासन्निकर्षात्कथं ज्ञानमतआह *एवञ्चेति । तस्य सदसद्रूपत्वे चेत्यर्थः *तादृशः—सदसद्रूपः । तस्य फलमाह *सन्निकर्षादिना—आदिना तत्सन्निकर्षपरिग्रहः । प्रसङ्गादन्यदप्याह । *एवमिति । प्रपञ्चादिवदित्यर्थः । *अनिरिति । उक्तरूपतत्त्ववानेवेत्यर्थः । अत्रमानमाह *तदुक्तमिति । तदप्युक्तमित्यर्थः । *तैरेव—वाचस्पतिमिश्रैरेव । तत्राध्यासभाष्यव्याख्यायां *न—स्मृतिरूप परत्र पूर्वदृष्टावभास पूर्वोक्तम् । अध्यास इत्यस्य इति वदद्भिरिति शेषः । नन्वेवमनिर्वचनीयत्वेष्टत्वे सांख्योक्तनत्खण्डनविरोधोऽत आह *बाह्येति । श्रुत्यादिबाह्येत्यर्थः । अत एव तेनैकवाक्यतापीत्याह *इदमेवेति । उक्तमेवेत्यर्थः । *तेन—"सदसत्ख्यातिर्बाधाबाधाभ्याम्" इति सांख्यसूत्रेण ॥ ७५ ॥

परमार्थसारे ऽपि ।

सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन ।
तं प्रणिपत्योपेन्द्रं वक्ष्ये परमार्थसारमिदम् ॥ इति,
प्राणाद्यनन्तभेदैरात्मानं संवितत्येन्द्रजालमिव ।
संहरति वासुदेवः स्वविभूत्या क्रीडमान इव ॥ इति च।

कृतमित्यस्य दर्शितमित्यर्थः । संवितत्येत्यस्य दर्शयित्वेत्यर्थः । अन्यथाऽऽत्मनो विकारित्वापत्तिः । स्वभूत्या वासनारूपया । सत्यमिवेतीवेन तस्यारोपितत्वं स्पष्टमेवोक्तम् । यद्वा पूर्वपूर्ववासनावशात्तत्त्वेनापि प्रतीतिः । व्यवहारकालमात्रे तत्प्रतीतेः सत्यमिवेत्युक्तम् ।

एतेनासतो भाने बौद्धमतप्रवेश इत्यपास्तम् । तेन तत्रारोपितसत्त्वस्याप्यनङ्गीकारात् । आत्मनस्तेनानित्यत्वाङ्गीकाराच्च ॥ ७६ ॥

( कृ० टी० ) अन्यदपि प्रमाणमाह *परमार्थेति । अथ शास्त्रस्य प्रचयगमनादिफलाय स्वेष्टदेवतायाः स्मरणरूपं मङ्गलमाचरन् परमार्थसाराख्यं ग्रन्थं वक्तुं प्रतिजानीते *नत्वा राममिति । *कृतम्—अनेन जगति सत्त्वस्थिरत्वादिकमपि भ्रम इति दर्शितम् । एतल्लक्षं भगवतोऽन्तर्यामिणः सत्यसङ्कल्पतया सङ्कल्पमात्रेणोत्पन्नम् । "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः । "विष्णोर्माया जगद्रूपम्" इति च वक्ष्यति भगवान् । परमोऽर्थो ब्रह्मात्मैकत्वलक्षणः । मुमुक्षुप्रार्थ्यत्वात् । स एव सारः, आनन्दरूपत्वात् । "रसो वै सः" इत्युक्तेः । *प्राणाद्य—आदिना सूक्ष्मपञ्चमहाभूतपालकमन्त्रतृणसर्वपर्यन्तसाधनादि । तद्रूपैरनन्तभेदैरात्मानं स्वस्वरूपं सङ्कुचितविस्तारेण दर्शयित्वा परिपाल्य तद्दर्शनमुपसंहरति, यथा ऐन्द्रजालिकः पुरुषो मन्त्राक्षरादिभिः स्वशक्तिभिरात्मानमेव अजगरादिरूपेन्द्रजालरूपेण दर्शयित्वा पुनः संहरति आत्मानं प्रापयति तद्वत् । "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेः । ईयते इत्यस्य ज्ञायते इत्यर्थः । *स्वभूतया—अविद्यया । *क्रीडमान इव—यथा बालकः प्रयोजनाभावेऽपि यत्किञ्चिन्निर्माय पुनः संहरति तद्वत् । तदुक्तं व्यासेन "लोकवत्तु लीलाकैवल्यम्" इति । एवञ्च भ्रमाधिष्ठानतया वासुदेवः सिद्धः, आवश्यकश्चेति भावः । *लीलास्वभावः—अत्राविद्यावासुदेवस्वभावः । कृतमित्यादेस्तत्पक्षसाधकत्वादाह *कृतमिति । विपक्षे प्रागुक्तमेव बाधकमाह *अन्यथेति । तथात्वे चेत्यर्थः । *तस्य—सत्यत्वस्य । आरोपाभावेनैवाह *यद्वेति । *तत्त्वेनापि—सत्यत्वेनापि । नन्वेवम् इवासङ्गतिरत आह *व्यवहारेति । मात्रपदेन परमार्थकालव्यवच्छेदः । आश्रयत्वस्यापि तथैव भानमिति भावः । एतेनेत्यस्यार्थमाह *तेनेति । *तत्र—प्रपञ्चे । अपिर्वास्तवसत्त्वसमुच्चायकः । भेदकान्तरमाह *आत्मन इति । *तेन—बौद्धेन ॥ ७६ ॥

परमार्थसारेऽपि—

अमलः सकृद्विभातश्चैतन्यात्मा खवद्व्यापी ।
सर्वविकल्पनहीनः शुद्धो बुद्धोऽजरोऽमरः शान्तः ॥

इत्यात्मरूपमुक्तम् । श्रुतिषु च स्पष्टमेव तथोक्तम् । विकल्पनं नामरूपे । इदमुपलक्षणम् । उत्पत्तिविनाशबहिष्ठ्वादिकमपि सत्यत्वेनारोपितमीश्वरेण, तस्य सत्यसङ्कल्पत्वात् । सृष्ट्याद्यकाले चैष सङ्कल्पस्तस्य । यद्वा तत्तत्सामग्रीभ्रमस्तत्तद्विषयभ्रमे कारणमिति तद्गतकार्यकारणभावस्य तद्विषये ऽनादिवासनावशादारोपितावेवोत्पत्तिनाशावारोपितत्वमपलप्य काणादसांख्याभ्यामुक्तौ । तत्र सांख्यस्यापि सूक्ष्मतन्मात्रेभ्यः परमाण्वादिक्रमेणैव स्थूलभूतोत्पत्तिरभिप्रेतेति योगवृत्तौ स्पष्टं निरूपितम् ।

तस्माद् भ्रमरूपा स्थूला ऽविद्या, वासनारूपा चाव्यक्तपदवाच्या सूक्ष्माऽविद्या । व्यवहारकाले स्थूलाविद्यायाः सा कारणमिति तस्या एव कारणत्वेन निर्देशः 'अव्यक्तं कारणम्' इत्यादौ ।

एतत्सृष्टौ तज्जन्मानुपलम्भात्तस्या नित्यत्वोक्तिर्ज्ञेया ॥ ७७ ॥

( क० टी० ) नन्वत्रेष्टापत्तिरतआह *परमार्थेति । देहादेरनात्मत्वं यथा तथा दर्शयति *अमल इति । न विद्यते मलमज्ञानकार्यलक्षणं यस्य सः । "आदित्यवर्णं तमसः परस्तात्" इति श्रुते । *सकृद्विभातो-विभात एव । "सकृद्विभातम्" इति श्रुते । *चैतन्यात्मा-चैतन्यस्वरूपः । "प्रज्ञानं ब्रह्म" इति श्रुतेः । *खवद्व्यापी-तद्वदपरिच्छिन्नः । विकल्पन्ते यैस्ते विकल्पना विशेषास्तैर्हीनि । "निर्विकल्पं निरञ्जनम्" इति श्रुते । तेन निर्विकल्पकज्ञानरूपप्रमाविषय । सविकल्पकं तु भ्रम एवेति भावः । एतेन भेदवादः सत्य इति परास्तम् । *शुद्धः-पापरहितः । "शुद्धमपापविद्धम्" इति श्रुतेः । *बुद्धः-बोधस्वरूप । "विज्ञानं ब्रह्म" इति श्रुते. । दुर्वि-

ज्ञेयत्वेन दार्ढ्याय पुन पुन. कथनान्न चैतन्यबुद्धशब्दयो पुन-रुक्तिदोष' । *अजरोऽमर इति भावविकाररहितत्वोपलक्षणम् । *शान्त.–निष्प्रपञ्च. । "शिवमद्वैतम्" इति श्रुते. । पौनरुक्त्याभावः पूर्ववदित्यर्थ. । अपिसमुच्चेयमेवाह *श्रुतिषु चेति । उक्तरूपा-स्वित्यर्थ. । *तथोक्तम् नित्यात्मस्वरूपमुक्तम् । चेन स्मृतिपुरा-णादिसमुच्चय. । न्यूनतां निराचष्टे *इदमिति । सत्यत्वस्यारो-पितत्वमित्यर्थ. । प्रपञ्चे इति शेष । उक्तरीत्या वस्तुतस्तत्र त-दसत्त्वादिति भाव । तत्र बीजमाह *तस्येति । सर्वत्र वस्तुनोऽस-त्त्वायाह*सृष्ट्याद्येति । प्रागुक्तपक्षान्तररीत्यैव मतान्तरमाह *यद्वे-ति । स्वमते एतत्सत्त्वादाह *तत्तदिति । *तद्गतेति । भ्रमगतेत्य-र्थ । तस्यानादिवासनावशाद् भ्रमविषये आरोपितावेतावित्याद्यर्थः । ननु सांख्येन नैवमुक्तमत आह *तत्रेति । तयोर्मध्ये इत्यर्थ । *परे-ति । तस्यापि तन्मते जन्यत्वादिति भावः । उक्तमेव विशदयन्नु-पसहरति *तस्मादिति । *सा–सूक्ष्मा ऽविद्या । अत्र मानमाह *त-स्या एवेति । सूक्ष्माविद्याया एवेत्यर्थ । व्याख्यानमिदम् । नन्वेव कथ नित्यत्व तस्या अपि जन्यत्वादित्याह *एतदिति । तदीयसृ-ष्टावित्यर्थः ॥ ७७ ॥

उपनिषद्भाष्ये "अजाम्–" इति श्रुतौ अजा मित्यस्य यौगिकत्वेन जन्माभावपरतया व्याख्यानम-प्येवमेव नेयम् । संस्काराणामपि त्रिगुणत्वात् लोहितशुक्लकृष्णगुणत्वम् तस्याः, समूहाभिप्रायेण चैकवचनं बोध्यम् । वासनारूपैव च सा मूलप्रकृति-रित्युच्यते ।

अनिर्वचीयोत्पत्तिवादिभिरपि स्वसमानाधि-करणस्यावच्छिन्नवृत्तिकान्यात्यन्ताभावस्य प्रति-योगित्वरूपं मिथ्यात्वं वदद्भिः स्वीकृतमेव वस्तु-नोऽसत्त्वम् । अन्यथाऽभावपदे विरोध्यर्थत्वान्नञः प्रतियोगिसामानाधिकरण्यं तस्य वक्तुमशक्यम् ।

प्रतियोग्यसामानाधिकरण्यस्यैव तत्र विरोधपदार्थत्वात् ।

इदं तु स्वप्रतिभाससमानाधिकरणेत्याद्युक्तमेव भ्रमाविषयत्वं मिथ्यात्वम् ।

ध्वनितं चेदं देवताधिकरणे कल्पतरुणा—

"भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः ।
अविद्याऽनादिभावात्मा मता वाचस्पतेरिह" ॥

इत्यनेन । अत्र वाचस्पतेर्मतेत्यनेन सूत्रभाष्यकृतोर्भ्रमतत्संस्काररूपैवाविद्येति मतं सूचितम् । इह—देवताधिकरणे । अनेन वाचस्पतेरप्यन्यत्र तत्पक्षाभिनिवेशः सूचितः ।

वस्तुतो यथा मण्डूका मृदो निःसरन्तीत्युदाहरणमपि वासनासमूहस्याविद्यात्वेन समूहादेकैकस्य निःसरणेनोपपन्नम् ॥ ७८ ॥

(कु०टी०) एवमन्यत्रापि न तद्विरोध इत्याह *उपेति । *एवमेव—एतत्सूत्रे तज्ज्ञानुरलम्भेनैव । ननु सा चेदियमेव तर्ह्यस्याः संस्काररूपत्वेन कथं त्रैवर्ण्यं श्रुत्युक्तमत आह *संस्कारेति । नन्वेवं तेषां बहुत्वात्कथं तत्रैकवचनमत आह *तस्या इति । उक्तरूपाविद्याया इत्यर्थः । संख्याविरोधमाह *वासनेति । एवेन द्वितीयाव्यवच्छेदः । *सा—अविद्या । अनिर्वचनीयत्वस्वरूपभेदेऽपि मदुक्तप्रपञ्चाद्यसत्त्व तेषामपि सम्मतमेवेति न तदंशे भेद इति तदंशे ऐक्यमेवेत्याह *अनिर्वचेति । अस्य हेतुगर्भं विशेषणमाह *स्वेति । प्रतियोगीत्यर्थः । अधिष्ठानावच्छिन्ना वृत्तिर्यस्यैदृशम्, यत्त तोऽन्यतदभावस्येत्यर्थः । अनिर्वचनीयोत्पत्त्या वस्तुत्वेऽपि असत्त्वमित्यर्थः । कथमित्याशङ्कायामाह *अन्यथेति । तस्यासत्त्वानङ्गीकारे इत्यर्थः । *नञ इति पूर्वान्वयि । *तस्य—अभावस्य । ननु भयमप्य-

स्वन आह *प्रतीति । *नञ-अभावघटके नञि । ननु तर्हि मि थ्यात्वभेदो ऽपि तत्र स्वमतादन आह *मम त्विति । स्वस- मानाधिकरणेतिपूर्वोक्तलक्षणे स्वपदार्थमाह *स्वप्रतिभासेत्या- दि । यत्तदुक्त तदेव भ्रमविषयन्वरूप मिथ्यात्वमिति तदशो- ऽपि न भेद इत्यर्थ. । वासनारूपैवाविद्येत्यत्र तदीयसमति मप्याह *ध्वनितमिति । *इदम्-सैवासत्यन्येतत् । *भ्रमात्-सस्का- रजात् । अत एवाह *सस्कारतो ऽपि । अविद्यातः प्रपञ्चोद्भवे मृदो मण्डूकभवन दृष्टान्त. । तेन यथैकस्या एव मृदो ऽनेकमण्डूकास्तथा- अविद्यात प्रपञ्च । इदं च तस्या अतिरिक्तत्वे एव संगच्छते । भ्रमा- णां चानेकत्वादेकतो ऽनेकस्य प्रत्येक भवनासंभवादिति भावः । ध्वनितत्व विशदयति *अत्रेत्यादिना । *रूपैवेति । एतदन्यतररूपै- वेत्यर्थ । *अन्यत्र -एतदधिकरणभिन्ने । *तदिति । उक्तेत्यर्थ. । इदमप्यैभ्युपेत्य । वस्तुतो ऽत्रापि न तदुपयोग इत्याह *वस्तुत इति । प्रत्येकं तथात्वे तत्त्वासंभवादाह *समूहस्येति ॥ ७८ ॥

सनत्सुजातीयभाष्ये भगवत्पादैरप्युक्तं 'मोहो- मृत्युः' इति पद्ये "मोहो मिथ्याज्ञानमनात्मन्यात्मा- भिमानः । अनेनाग्रहणान्यथाग्रहणात्मिका ऽविद्या सू- चिता" इति । अग्रहणमात्मस्वरूपाग्रहणं तन्मूलक- मिथ्याज्ञानात्मिकेत्यर्थः ॥ ७९ ॥

(क०टी०)तस्यास्तत्त्वे मानान्तरमप्याह *सनदिति । *पद्ये इति । तद्धटितपद्ये इत्यर्थ. । तच्चैवम्—

उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्यु' संमतो य कवीनाम् ।
प्रमाद वै मृत्युमह ब्रवीमि सदा प्रमोदामृतत्व ब्रवीमि ॥ इति ।

अस्यार्थ -अन्धप्रश्ने सनत्सुजातोक्तिः-ये प्रागुक्ते मृत्योरस्तित- त्वनास्तित्वे उभे हे क्षत्रिय आद्यप्रवृत्ते य आदिसर्गस्तमारभ्य प्र- वृत्ते । यद्वा क्षत्रियाद्य क्षत्रियप्रधान प्रवृत्ते प्रवर्त्यमाने । ननु कथ त- योर्मिथो विरुद्धयो. सत्यत्वमत आह-मोहो मृत्युरिति । भवेदय वि- रोधस्तयोर्यदि परमार्थरूपो मृत्युः स्यात् किन्तु यो मोहो मिथ्याज्ञा-

ज्ञानमनात्मन्यात्माभिमान स मृत्युः केषां चित्कवीनां समतः, अहं-मिथ्याज्ञानस्यापि कारणमात्मानवधारणमात्माज्ञान मृत्यु जनन-मरणादिसर्वानर्थबीजमह ब्रवीमि । तथा सदा प्रमोदं स्वाभाविकरूपेणावस्थानममृतत्व ब्रवीमि इति ।

एतेन "क्षत्रियैतस्य विद्धि मोहान् मृत्युः संमत"ति पाठ धृत्वा ऽन्यथा व्याख्यान नीलकण्ठीयमपास्तम् ।

केषां चित्समतं तत्स्वरूपमाह *अनात्मनीति । भाष्यवाक्ये द्वन्द्वभ्रमनिरासायाह *अग्रहणमिति ॥ ७९ ॥

द्युभ्वाद्यायतनाधिकरणे च "देहादिष्वनात्मसु 'अहमस्मि' इत्यात्मबुद्धिरविद्या" इति भाष्ये उक्तम् । अध्यासभाष्ये ऽपि "विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतस्तयोरध्यासो मिथ्येति भवितुं युक्तम्" इत्यनेन मिथ्याभूतेनालीकेनाध्यासेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं कृत्वा "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य "अहमिदम्" "ममेदम्" इति नैसर्गिको ऽयं लोकव्यवहारः" इति सिद्धान्तितम् । तस्यैव चाध्यासस्य प्रहाणायाध्यात्मशास्त्रमिति तदर्थः । एतच्चाग्रे भाष्ये एवोपपादितम् । अध्यस्येत्यस्यैव विवरणं सत्यानृते मिथुनीकृत्येति । सत्यं ब्रह्म । न ऋतमनृतमसत् । ए-

---

१ इत आरभ्य अग्रे " योगसूत्रेऽप्युक्तम् " पर्यन्तं पाठः केवलमूलपुस्तके खसञ्ज्ञके नास्ति ।

**तत् पदार्थमात्रे । तत्र, सत्यं ब्रह्म विशेष्यम्, अनृतमुपाधयो विशेषणम् ॥ ८० ॥**

(क०टी०) मानान्तरमाह *द्युभ्वेति । प्रथमाध्यायतृतीयपादाद्यसूत्रम्—"द्युभ्वाद्यायतनं स्वशब्दात्" इति । द्यौश्च भूश्च द्युभुवौ ते आदी यस्य । "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" इत्याथर्वणिकश्रुत्युक्तस्य तस्यायतनं ब्रह्मैव। "स्वशब्दात्"। स्वस्य परब्रह्मणो वाचको य आत्मशब्दस्तस्मात् । "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः" इति तदुत्तरार्द्धश्रुतावात्मशब्दश्रवणादित्यर्थः । *च–अपि । नित्यानुभवविषययुष्मदर्थो विषय, विषयी त्वस्मदर्थो नित्यानुभवस्वरूप. तयोर्दाह्यदाहकवन्मिथो विरुद्धयोर्जातिव्यक्तित्वादेरभावान्न तादात्म्यं तदाह *तम इति । विरोधफलमाह *इतरेतरेति । भावस्तत्तादात्म्यं तयोरप्रतीतावित्यर्थः । नन्वेवमपि चैतन्यजाड्यादीनामितरेतरभावः स्यात्तथा च तद्धर्मप्रमित्या तत्संस्कारात्तदध्याससिद्धिरत आह *तद्धर्माणामपीति । विरोधादन्यत्रादृष्टत्वाच्चेति भाव. । *इति–अभेदप्रमित्यभावात् । *अतः–तत्फलाभेदसंस्काराभावात् । *तयोरध्यास इति । अस्मत्प्रत्ययगोचराविषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषये ऽध्यास इत्यर्थ. । पूर्वपक्षतात्पर्यमाह* मिथ्येति । अत एवाह* आलोकेनेति । *तथापीति । असङ्गस्वप्रकाशात्मनि अध्यासायुक्तत्वस्यालङ्कारत्वे ऽपीत्यर्थः । अनेन प्राक् यद्यपीति शेषः सूचित । अध्यासस्वरूपलक्षणमाह *अन्यो ऽन्यस्मिन्निति । जाड्यचैतन्यादिधर्माणामत्यन्ताविवेकाद्धर्मिणोरपि तत्सिद्धिरिति, तेषां यौ धर्मिणौ तादृशावहंकारात्मानौ तयोरितरेतरभेदाग्रहेणान्योन्यस्मिन्नन्योन्यतादात्म्यमन्योन्यधर्मांश्चाध्यस्येत्यर्थ. । अत. सो ऽयमिति प्रमाया नाध्यासत्वम्, तत्र कालभेदेन कल्पितभेदे ऽप्यत्यन्तभेदाभावात् । एतदर्थमेवात्यन्तेत्युक्तम् । अन्यस्मिन्नन्यावभास इत्युक्ते प्रतिमायां देवतादृष्टेरपि तत्त्वापत्तिरतः अन्योन्यस्मिन्नित्युक्तम् । नच धर्मितादात्म्याध्यासेन धर्माध्यासे सिद्धे धर्मांश्चेति व्यर्थमिति वाच्यम् । अन्धत्वादेरिन्द्रि-

यद्धर्मस्य धर्म्यध्यासास्फुटत्वे ऽप्यन्यो ऽहमिति स्फुटो ऽध्यास इति ज्ञापनार्थत्वात् । तृतीयया तस्य तत्र कारणत्वमुक्तमिति न तद्भावप्रयुक्तस्तदभावः । अभावप्रयुक्तत्वाभावायाह* अयमिति । अज्ञः कर्ता मनुष्योऽहमित्याद्यनुभवजत्वादध्यासो ऽस्ति । *इत्यतो–ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वादित्यर्थः । *तदर्थः–सिद्धान्ततात्पर्यार्थे । *एतच्च–प्रागुक्तं च सिद्धान्तरूपम् । अपौनरुक्त्यायाह* अध्यस्येत्येति । एतेनान्यथात्रानन्दगिरिरामानन्दादिव्याख्यानमपास्तम् । अनृतशब्दस्य प्रसिद्धवाक्परत्वनिरासायाह *न ऋतमिति । *एतत्–असत्त्वम् । विवरणफलमाह* तत्रेति । मिथुनीकरणे इत्यर्थः ॥ ८० ॥

ऐतरेयोपनिषदि "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च" इत्यादिना "यच्च स्थावरम्" इत्यन्तेन स्पष्टमेवैतदुक्तम्। एष प्रज्ञानात्मे[ति] व्याख्यानम्। विशेष्यांशस्यैव च नामधेयं भवति। न हि 'घट' इति घटत्वस्य नामेति कश्चिदभ्युपैति।

श्रुत्यन्तरे ऽपि–"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतद्" इत्यत्र भोग्यजडवर्गस्य ब्रह्मत्वमुक्तम् । तच्चोक्तरीत्यैव ।

"तदनन्यत्वम्" इति सूत्रे ऽपि भाष्ये उक्तम्–"प्राक् चात्मावगतेरव्याहतः सर्वो लोकव्यवहारः सत्यानृतविषय" इति । इदं च "मिथ्याज्ञाननिमित्त" इति प्रतीके 'मिथ्याज्ञानमध्यास' इति व्याचक्षाणैः "लोकव्यवहार" इति प्रतीके 'लोकानां व्यवहारः स चायमहं ममेदम्' इति च व्याचक्षाणैर्वाचस्पतिमिश्रैः स्पष्टीकृतम् । सर्वानर्थमूलत्वाद्

"इदं मम" "अहमिदम्" इत्येव व्यवहारः साक्षादुक्तः। स च व्यवहारमात्रस्योपलक्षणम्। नैसर्गिक इत्यनेन पूर्वपूर्वभ्रमजन्य उत्तरोत्तरः संस्कारस्ततश्चोत्तरभ्रम इति सूचितम् । तत्र देहादावहमित्यध्यासः शुद्धविषय एव,'जडचेतनयोर्विषयविषयिणोरन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्य'इति भाष्योक्तेः। न चाध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तिः। अध्यासविषयस्य मिथ्यात्वमित्येव नियमात्। स च क्वचिदध्यस्यमानस्य क्वचिदधिष्ठानस्य तत्त्वेनोपपपन्नः।

यत्त्वेतद्दोषभिया संसृष्टात्माध्यास इति कैश्चिदुक्त तन्न। उक्तभाष्यास्वारस्यात् ॥ ८१ ॥

(क०टी०) अत्र मानमाह* ऐतरेयोपेति। *एतानीति। "सञ्ज्ञानमाज्ञान विज्ञान प्रज्ञान मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूति स्मृतिः संकल्प क्रतुरसु. कामो वश" इति अव्यवहितप्रागुक्तानीत्यर्थः । एता अन्त करणवृत्तय उपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधजनितगुणनामधेयानि भवन्ति न स्वत साक्षादिति भाव । *इत्यादीति। आदिना "पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतीषीत्येतानि इमानि च क्षुद्रमिश्राणीव बीजानि इतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेद प्राणि जङ्गमं च पतत्रिच" इत्यस्य सग्रह.। एष इत्यस्य व्याख्या*प्रज्ञेति। तद्रूप आत्मेत्यर्थ.। अनेन नानात्वं वारितम् । नन्वेतावतापि कथ तत्स्पष्टत्वमतआह *विशेष्यांशेति। विशेषणांशे मानमाह *श्रुत्यन्तराणीति। तदेवाह *भोक्तेति। *मत्वा–बुद्ध्यारूढ कृत्वा। *अत्रभाष्योक्तश्रुतौ। *उक्तेति। तत्र विशेषणत्वादेवेत्यर्थः । तत्समत्य-

न्तरमाह* तदन्येति । तस्यैव तद्विवरणं न पृथगित्यत्र मानमाह* इदञ्चेति । व्याख्यानव्याख्येयभावरूपं चेत्यर्थ । अन्यथा तस्यापि निमित्तत्व वदेत् । ननु व्यवहारानेकत्वादयमेव किमित्युदाहृतो ऽत आह *सर्वानर्थेति । तत्रापि बीज सूचयन्नाह *साक्षादिति । न्यूनतां निराचष्टे* सचेति । *ततश्च–तस्माच्च । *तत्र–तेषां मध्ये । प्रागुक्तमेवाह *अन्योन्यस्मिन्निति । द्वितीये शङ्कते* नचेति । तस्याप्यध्यासाङ्गीकारात् । *विषयस्य–विषयविषयिणोरित्युक्तघटकस्य । एवेन विषयिव्यवच्छेद । *स च–अनियमश्च । द्वितीये आह *क्वचिदिति । आद्ये आह *क्वचिदिति । *तत्त्वेन–मिथ्यात्वेन । वेदान्तिमतं दूषयति *यत्त्विति । *एतत्–मिथ्यात्वेति । तथा च तत्त्व इष्टापत्तिरिति भावः । *उक्तेति । अन्योन्यस्मिन्नितीत्यर्थः । ततोऽक्षरमर्यादया तदप्रतीतेरिति भावः ॥ ८१ ॥

यत्तु अध्यासः किंनिमित्तकस्तत्राह–मिथ्याज्ञाननिमित्त इति । मूलकारणाविद्यारूपभावपदार्थनिमित्तक इत्यर्थः । तच लोकव्यवहार इत्यस्य विशेषणम् । लोक्यते 'मनुष्यो ऽहम्' इति मन्यत इति लोकः ज्ञानोपसर्जनो ऽर्थाध्यासः तद्विषयो व्यवहारः । अध्यस्यमानार्थविषयो व्यवहार इति ज्ञानाध्यासो ऽत्र व्यवहारः । स चोक्ताविद्यानिमित्तक इति, सा चाविद्या संस्कारकालकर्मादिरूपेण परिणताऽध्यासनिमित्तमिति ।

तन्न । त्रयाणामप्यध्यासपदार्थत्वेनाध्यस्य मिथुनीकृत्येति क्त्वाप्रत्ययानुपपत्तेः । न च वस्तुतो ऽभेदे ऽप्यपौर्वापर्ये ऽपि विशेषणभेदेन वस्तुभेदं परिकल्प्य तत्प्रतिपत्तिक्रमेण पौर्वापर्यं च परिकल्प्य तदुपपत्तिरिति वाच्यम् । भेदकविशेषणानुपलम्भात् । प्रतिपत्तिक्रमाननुभवाच्च । रूढेर्योगा-

पहारकत्वेन लोकव्यवहारपदयोर्यथाकथंचित्स्वाभिमतयोगेनाध्यासपरतया व्याख्यानस्यानौचित्याच्च । तादृशव्याख्यानं विना भाष्यानुपपत्तेरभावाच्च । किं च ज्ञानाध्यासो यथा-प्रतिमादौ देवताद्यध्यासो, यथा वा ऽसन्निकृष्टे पर्वतादौ भ्रमात्मकवन्ह्यनुमितौ विषयस्यासत्त्वेन यो ऽध्यास इति वदन्ति नव्याः । तर्हि सर्वत्र तथैवास्तु किमनेन द्वैविध्येन । किं चातिरिक्ताविद्याया अपि संस्कारादिरूपेण परिणामद्वारा कारणत्वेन लाघवात्, क्लृप्तसंस्कारादृष्टैरेवोपपत्तौ तत्कल्पने मानाभावाच्च ॥ ८२ ॥

आनन्दगिरिरामानन्दाद्युक्तिं खण्डयति *यस्त्विति । मिथ्या च तद् अज्ञानं चेत्यर्थ. । बहुव्रीहिरग्रे । तदाह *मूलेति । तस्योपादानत्वेऽपि सस्कारकालकर्मादिनिमित्तपरिणामित्वेनाध्यासनिमित्तत्वमिति निमित्तपदम् । स्वप्रकाशासङ्गात्मनि कथमविद्यासङ्ग इति शङ्कानिरासार्थं मिथ्यापदम् । *तच्च—उक्तार्थकपद च । *व्यवहार.–अभिमान' । तदाह *ज्ञानेति । अर्थोपसर्जनेत्यादिः । तथा चानेन द्विविधोऽध्यासो दर्शितः । निमित्तपदलब्धमुक्तमेवाह *सचेति । द्विविधश्च । *त्रयाणाम्—अध्यासमिथुनीकरणलोकव्यहारपदानाम् । *अध्यासेति । बहुव्रीहि' । आद्योक्तिं खण्डयति *नचेति । *तदिति । क्त्वाप्रत्ययस्येत्यर्थः । अभ्युपेत्याप्याह *रूढेरिति । रथन्तरादौ दृष्टेनेति भावः । स्वरसतस्ततस्तदलाभादाह *यथेति । अत एव रूढेरिति न्यायसचार. । एतेन वैषम्यात्तदप्राप्तिरित्यपास्तम् । ननु सर्वतो बलीयसीत्यन्यथानुपपत्तिरिति न्यायात्तथा अत आह *तादृशेति । ज्ञानाध्यासस्यार्थोपसर्जनत्वमेव नेत्याह *किञ्चेति । पूर्वमधिष्ठानसनिकर्षताऽग्रे तु सापि नेत्याह *यथा वेति । एतेनाध्यासव्यक्तिभेदात् पूर्वपूर्वस्योत्तरोत्तर प्रति सस्कारद्वारा तत्त्वात्तदुपपत्तिरिति रामानन्दोक्तमप्यपास्तम् । अत्र तत्खण्डनस्य युक्तत्वे ऽपि कश्चिदंशो न युक्तः । अत एव तत्रास्वीयत्वध्वननाय *व-

दन्ति नव्या इत्युक्तम् । तस्य च दीक्षितादय इत्यर्थः । अतः स्वसिद्धान्त प्रतिपादयितु प्रसङ्गात्तत्रापि दोषमाह *तर्हीति । अतिरिक्तायास्तस्यास्तत्त्वस्वीकार इत्यर्थः । *सर्वत्र-अध्यासे ऽपि । नन्वेव निमित्तपदघटितभाष्यविरोधो ऽतो द्वैविध्ये दोषान्तरमाह *किञ्चेति । *सस्कारादीति । आदिना कालादिपरिग्रहः । एव च साक्षात् तस्या नैव कारणत्वमन्यत्रापीति भावः । इदमप्यभ्युपेत्योक्तम् । वस्तुतः सैव नेत्याह *कल्पतेति । एतेन वैपरीत्य निरस्तम् । *नत्कल्पने-अतिरिक्ताविद्याकल्पने ॥ ८२ ॥

मिश्रव्याख्याने तु अध्यस्येत्यनेनानन्तर्यलाभे ऽपि तस्य निमित्तत्वालाभात् तदुक्तिः । भ्रमरूपाध्यासेन कथं व्यवहार इति शङ्कापनयनाय च तदुक्तिः । मिथ्याज्ञानविषयेण रज्जुसर्पादिना भयपलायनादिव्यवहारवत् सर्वो ऽपि व्यवहारस्तन्निमित्तक इत्याशयः । किं च सर्वसंमताध्यासविषये "को ऽयमध्यासो नाम, स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति प्रश्नोत्तरवत्सर्वासंमताविद्याविषयप्रश्नोत्तरानुपलम्भेन सा न भाष्यसंमता । पूर्वदृष्टस्य परस्यावभास इत्यर्थः । परत्रेत्युक्तेः परस्येति लब्धम् । अवसन्नो भासो ऽवभासः । उत्तरकालिकबाधेन तस्यावसादात् । पूर्वदृष्टत्वं च संस्कारद्वारोपयोगि, तच्च जन्मान्तरीयमपि । तदाह—स्मृतिरूप इति । स्मृतिसदृश इत्यर्थः । संस्कारजन्यत्वेन च तत्साहश्यं न तु स्मृतिरेव, पूर्वानुभूतत्वरूपतत्ताऽनुल्लेखात् । एतच्च विवेचयिष्यते । अनेन च संस्कारो ऽध्यासनिमित्तमित्युक्तमेवेति तदाकाङ्क्षाऽभावेन तदंशे ऽपि प्रश्नोत्तराभावः ॥ ८३ ॥

नन्वेव सिद्धान्ते तद्विशेषणवैयर्थ्यमेवात आह *मिथ्ये-ति । *प्रागुक्ते—मिथ्याज्ञानमध्यास इत्यत्रेत्यर्थः । ननु शब्दतो ऽलाभे ऽप्यर्थतो लाभ एवात आह *भ्रमेति । *तदुक्ति—मिथ्येतिविशेषणोक्तिः । तत्तात्पर्यमाह *मि थ्येति । अकारच्छेदेन तदतिरिक्तत्वे तदसङ्गतिरूपमेव दोषा-न्तरमितः सा तदभिमतेति शङ्कानिरासायाह *किञ्चेति । स-र्वसमतेत्यादिविशेषणद्वयेन वैपरीत्यमुचितमिति सूचितम् । *सा-अतिरिक्ताऽविद्या । एवमग्रे ऽपि । तद्दर्शनमाह *पूर्वेति । स चे-त्पूर्व एव तर्हि नाध्यासत्वमत आह *परस्येति । ननु तस्य लाभ एव नेति तथैवास्तु अत आह *परत्रेति । मध्यमपदलोपिस-मासमुक्त्वाऽर्थदार्ढ्यायान्याग्रहणाय चाह *अवेति । अवसादो ना-शः । दर्शनस्य तदानीमसत्त्वादाह *पूर्वेति । विनिगमनाविर-हादाह *तच्चेति । *तदाह—संस्कारद्वारकत्वमेवाह । इवगर्भ-बहुव्रीहिलब्धार्थमाह *स्मृतिसदृश इति । यथाश्रुतार्थं खण्डयति *नत्विति । रूपशब्दोऽभेदार्थः । तस्य निमित्त तन्निमित्तम् ॥ ८३ ॥

अग्रे चाध्यासातिरिक्ताऽविद्या न का चि-दिति सूचयितुमेव "तमेतमेवंलक्षणमध्यासं प-ण्डिता अविद्येति ब्रुवते" इत्युक्तम् । भावरूपायाः कारणाविद्याया अतिरिक्ताया भाष्यसंमतत्वेऽध्यास-मपीति ब्रूयात् । "तमेतमेवंलक्षणम्" इत्यक्षरस्वारस्ये-नात्र "अहं मम" इत्यध्यास एवाविद्या । "वासुदेवः स-र्वम्" इति विद्यायां तस्यैव विरोधित्वात् । रागद्वेषमो-हादिवासनास्तु वासनापदेनैव वाच्याः । मायात्वं तु साधारणम् । तत्राप्यविद्यापदप्रयोगस्तु अध्यासत्व-सामान्याद्गौण इति लभ्यते । अत एव "उपपद्यते चो-पलभ्यते च" इति सूत्रे भाष्ये उक्त ईश्वरस्य वैषम्य-कारणत्वमित्यर्थः । "न चाविद्या केवला वैषम्यकार-

णम् । तस्या एकरूपत्वात् । रागद्वेषवासनाक्षिप्तकर्मापेक्षत्वे तु तस्या ईश्वरस्यापि तदपेक्षत्वाद्वैषम्यहेतुत्वमुपपन्नमिति । एकरूपत्वादित्यस्य "अहं मम" इत्यध्यासरूपाविद्यायाः सर्वेषामेकरूपत्वादित्यर्थः । तत्तत्प्राणिकर्मवशाद् बीजाङ्कुरन्यायेनानादिपूर्वपूर्ववासनयैव घटादिभ्रमरूपां सृष्टिं स करोतीति बोध्यम् ॥ ८४ ॥

अन्यदपि मानमाह *अग्रे चेति । उक्तमित्यत्रान्वयः। *एव लक्षणामिति । आक्षिप्य समाहितमुक्तलक्षणलक्षितमित्यर्थ । *कारणेति।मूलेत्यादिः । अत एव पण्डिता इत्युक्तिरपि सफला । ततो ऽन्यदपि किञ्चिल्लभ्यते इत्याह *तमेतमिति। अस्य लभ्यते इत्यत्रान्वयः। *अत्र-साध्ये । तत्पदस्य योगरूढत्वमित्याह *वासुदेवइति । *तस्यैव-'अह मम' इत्यध्यासस्यैव। एवेनेतराध्यासनिरासः । नन्वन्यत्रापि तत्त्वस्येष्टत्वादेवासङ्गतिरत आह *रागेति । एवेनाविद्यापदनिरास । नन्वेव मायात्वमपि तत्रैव स्यात्तच्च नेष्टम् अविद्यापदप्रयोगादत आह *मायेति । अध्यासवासनासाधारणमित्यर्थः । अविरोधायाह *तत्रापीति । तद्वासनास्वपीत्यर्थ. । *अत एव— तस्यैव तत्त्वस्य मुख्यत्वादेवेत्यर्थः । ननु "न कर्माविभागादिति चेन्नानादित्वाद्" इति पूर्वपक्षसूत्रोक्त ससारस्यानादित्व कुतो ऽत आह *उपेति । ससारस्यानादित्वमुपपद्यते अन्यथाऽकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात् , पूर्वसृष्टिसादृश्यानुपपत्तेश्च तस्य तत्त्वं श्रुतिस्मृत्योरुपलभ्यते चेत्यर्थ सूत्रस्य परैरुक्तस्तन्निरासायाह । *ईश्वरेति । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति" इति तत. प्रागुक्तत्वादिति भावः । इदमुपपादयति *नचेति । *तस्याइति पूर्वान्वयि । नन्वेव कथ भेदो ऽत, आह *तत्तदिति । अनवस्थानिरासायाह *बीजाङ्कुरेति । *स –ईश्वर । तदन्यवासनानामपि तत्त्वे तु तासामनेकरूपत्वात्तदसङ्गति स्पष्टैवेति भावः ॥ ८४ ॥

किं च "तत्तु समन्वयाद्" इति सूत्रे "साध्यश्चे-

न्मोक्षो ऽभ्युपगम्येत अनित्य एव स्याद्" इति भाष्ये उक्तम् । तत्रानित्यत्वं नाश्यत्वमेव । तव तु अजन्याया अविद्याया नाश्यत्ववज्जन्यस्यापि मोक्षस्याविनाशित्वे किं बाधकम् । जन्यत्वनाश्यत्वयोः परस्परव्याप्तेरेव लोके दृष्टत्वाच्च । एवं च जन्याऽविद्या नाश्या चेत्युक्तमेव ॥ ८५ ॥

मानान्तरमप्याह *किञ्चेति । *तत्त्विति । तुः पूर्वपक्षव्यावृत्त्यर्थ । *तत्-ब्रह्म, साक्षात् वेदान्तप्रतिपाद्यम् । *समन्वयात्-साक्षादेवोक्ततात्पर्यवत्त्वात् । उपासनस्य मोक्ष प्रति हेतुत्वानभ्युपगमादुपास्तिविधिशेषत्वेन प्रतिपादने मानाभावादित्यर्थ. । तदेवाह *साध्यइति । *तत्र—भाष्ये । अन्यादृशस्य तस्याभावादाह *नाश्येति । विपक्षे बाधकमाह *तवत्त्विति । एव च भाष्यमसङ्गतमेव स्यादिति भाव । इदमप्यभ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह *जन्यत्वेति । तत्पर्यवसित स्वेष्टमाह *एवंचेति । अनित्यत्वोक्तौ चेत्यर्थः ॥ ८५ ॥

योगसूत्रे ऽप्युक्तम् । "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति ।

व्याससूत्रे ऽपि एतद्विलक्षणाविद्यानुक्तेस्तस्यापीदमेव संमतमिति लक्ष्यते ।

अत एव "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते"इति सूत्रे "परमतमप्रतिषिद्धमनुमतं भवति"इति न्यायेन योगशास्त्रप्रसिद्धाः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपा मनसः पञ्चवृत्तयः परिगृह्यन्ते" इति भाष्ये उक्तम् ॥ ८६ ॥

अन्यदप्याह *योगेति । *अनित्येति । अनित्यादिचतुष्टये क्रमेण नित्यादिबुद्धिरित्यर्थ. । तत्र कालनिष्ठाभावप्रतियोगित्वरूपानित्यत्ववति कार्ये नित्यत्वज्ञानम्-यथा ध्रुवा पृथिवी

ध्रुवा सचन्द्रतारका द्यौरमृता दिवौकसः इति । तथा अशुचावप-वित्रे परमबीभत्से काये शुचित्वख्याति.। तथा दु खे सुखख्यातिः प्रसिद्धा । अनात्मन्यात्मख्यातिर्यथा–बाह्यस्वदेहस्योपकरणेषु पुत्रध नादिषु चेतनाचेतनेषु अहबुद्धिर्ममताबुद्धिर्वा । एतत्कार्यमेव प्रपञ्च' अह कर्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वारा ऽखिलजगद्धेतुत्वा दिति भाव' । वेदान्तिसूत्रमूलसमतापीयमेवेत्याह *व्यासेति । *त-स्यापि–व्यासस्यापि । ननु कथमन्योक्तमन्यस्य सम्मत गमकाभावे ऽत आह *अत एवेति । तस्यापि तत्समतत्वादेवेत्यर्थः । *मनोवद् इति । सूत्रार्थ स्पष्टः । *प्रमाणेति । "प्रत्यक्षानुमानागमा प्रमाणा-नि" "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" "शब्दज्ञानानुपाती व स्तुशून्यो विकल्प" 'अभावप्रत्ययालम्बनवृत्तिर्निद्रा" "अनुभूत-विषयासम्प्रमोप. स्मृतिः" । एतेनान्यथा व्याख्यान वृत्त्यादीनाम-पास्तम् ॥ ८६ ॥

"परमार्थसारे ऽपि ।

रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ।
तद्वद् द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ॥
एतत्तदन्धकारं यदनात्मन्यात्मताभ्रान्त्या ।
न विदन्ति वासुदेवं सर्वात्मानं जना मूढाः ॥ इति।

एतद्–भ्रान्तिरूपम् । उत्तरार्द्धेन न विदन्त्यनयेति अविद्यापदव्युत्पत्तिर्दर्शिता । एवं च सिद्धं भ्रमस्तत्सं-स्काररूपा चाविद्येति । सा च जन्यैवेति नैकविज्ञा-नेन सर्वविज्ञानप्रतिज्ञाभङ्गः ॥ ८७ ॥

अन्यदप्याह *परेति । नन्वात्मावस्थाश्चेदेतास्तर्हि तद्वत्सत्याः स्युरत आह *रज्ज्वामिति । रज्जु. कालत्रये ऽपि भुजङ्गो न भवति कदाचित् तद्दर्शनाद्भय भवति तत् केन हेतुना भ्रमरूपाविद्ययेति चेत् तद्वद् आत्मनि *द्वैतविकल्पभ्रान्तिः–अन्तर्याम्यादिभ्रान्तिराविद्या नै तत्सत्यमित्यर्थः । तत्राविद्यापदप्रवृत्तौ निमित्तमाह *एतदिति।भ्रम-रूपवस्त्वेव । अन्धकारम्–रूपकमेतत् । *यदनात्मन्यात्मताभ्रान्त्या।

*सर्वात्मानम्–सर्वस्वरूप वासुदेवं परमात्मानं न विदन्ति। एवं च-न विदन्त्यनयेत्यविद्यापदयोगो दर्शित । तथा च श्रुति· "नीहारेण प्रावृता" इति "मायां तु प्रकृतिं विद्यान्मायिन तु महेश्वरम्" इति च । सनत्सुजातभाष्ये आचार्योक्तिश्च "अग्रहणान्यथाग्रहणात्मिका अविद्या" इति । इय स्थूलाविद्या अग्रहणजनकान्यथाग्रहणस्वरूपेति तदर्थ । अन्यथाग्रहणजनक तु पूर्वपूर्वभ्रमज सस्कारजाल तत्तत्प्राणिनां भोगजनकमदृष्ट चेति बोध्यम् । तदाह *सङ्क्षेपणैतदिति । पर्यवसितमाह *एवञ्चेति । उक्तमानसत्त्वे चेत्यर्थ· । *भ्रम·–प्रपञ्च· । प्रागुक्तमेवाह *सा चेति ॥ ८७ ॥

परमार्थसारे ऽप्युक्तम्—

हिमफेनबुद्बुदा इव जलस्य धूमोद्गमो यथा वह्नेः ।
तद्वत्स्वभावभूता मायैषा कीर्तिता विष्णोः ॥
एनां द्वैतविकल्पभ्रमस्वरूपां विमोहिनी मायाम् । इति।

स्वभावभूता तज्जननस्वभावत्वात्तस्य, जलादेः फेनादिजनकत्वस्वभाववत् । आध्यासिकसंबन्धेन तस्या नित्यसंबद्धत्वाद् विष्णौ तत्स्वभावारोप इति बोध्यम् । विमोहिनीमुपाधिस्थस्य स्वस्य ।

तदुक्तं तत्रैव—

विमोहयतीवात्मानं स्वमायया द्वैतरूपया देव इति ।

वास्तवमोहाभावात् इवेति । तेनारोपित एव मोह इति बोध्यम् । अत एव तृतीये "सामान्यात्तु" इतिसूत्रे भगवत्पादैरुक्तम्–"नहि ब्रह्मातिरिक्तं किञ्चिद् अजं संभवति 'सदेव सोम्येदमग्र आसीद्' 'एकमेवाद्वितीयम्' इत्यवधारणात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च" इति । अत एव "न वियदश्रुतेः" इत्यधि-

करणे वियदादीनामजन्यत्वे "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य" इति सूत्रेण एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्ग आपादितः। मृत्पिण्डादिदृष्टान्तेन कारणज्ञानेन कार्यस्यासत्यत्वज्ञानमिति हि ततोलभ्यते। तदुक्तम् "अव्यतिरेकाच्छब्देभ्य" इति। "शब्दाच्च" प्रकृतिविकृतिन्यायेनाव्यतिरेकात्प्रतिज्ञासिद्धिरवगम्यत इति तदर्थः। एतेनाकाशस्याजन्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गापादनमभ्युच्चयः, अविद्यानुरोधेन सर्वपदसंकोचस्यावश्यकत्वेनाकाशातिरिक्तपरत्वेनापि तत्संकोचादित्यपास्तम्। किञ्च, तत्रैव "यावद्विकारं तु विभागो लोकवद्" इतिसूत्रेण कार्यत्वस्य भेदव्याप्यत्वबोधकेनाकाशस्येवाविद्याया अतत्त्वबोधनात्। विकारः कार्यं विभागो भेदः। अस्ति ह्याकाशे पृथ्व्यादिभेदः। एवमविद्यायां शुद्धब्रह्मभेदसत्त्वात्कार्यत्वमापतति, ब्रह्मणि तु न किंञ्चिन्निरूपितो भेदः अधर्मकत्वेन वैधर्म्यसम्भावनाऽभावात्। "एष एव हि भेदो भेदहेतुर्वा यद्वैधर्म्यम्" इति प्रकाशकाराद्युक्तेः। नच अजन्यं सद् यदविनाशि तदन्यत्वरूपमत्र कार्यत्वं साध्यं पराधीनसत्ताकत्वरूपं वा कार्यत्वं साध्यम्, अविद्याया अजन्यत्वेऽपि ब्रह्मण्यध्यस्तत्वेन पराधीनसत्ताकत्वम्, विनाशित्वाचाद्यमपि तत्रेति वाच्यम्। सामान्यप्रवृत्तसूत्रस्य सङ्कोचेन व्याख्याने मानाभावात्। अविद्याया अजन्यत्वबोधकसूत्रान्तराभावाच्च। आकाशस्याप्यध्यस्तत्वेनान्त्ये तत्रापि जन्यत्वं न सिद्ध्ये-

त् । "अजामेकाम्" इति श्रुतिरविद्याया अनादित्वबोधिका,

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा" ॥ इति—

भाष्योक्ता संप्रदायविदुक्तिश्च तस्या अजन्यत्वे न मानम् । आद्याया रूपकेणोपपत्तेः । अत एव "अजामेकाम्" इति श्रुतौ 'तेजोऽबन्नानामव्याकृतनामरूपा प्रागवस्था अजारूपकेण निर्दिष्टा' इति भाष्य उक्तम्। अनादित्वमपि परम्परानादित्वेनेति वक्ष्यामः। "अक्षरात्परतः परः" इति श्रुतावविद्याया अक्षरत्वश्रुतेश्च तद् यदि यथाकथं चित् तत्त्वज्ञानात्प्रागनिवृत्तेः, तर्हि अनादित्वमपि तथैवास्तु । नच तस्या जन्यत्वे मूलकारणे ऽनवस्थापत्तिः, ब्रह्मणस्तूपाधिसहकारं विना न जनकत्वम्, अत एव परमाण्वादीनां नित्यत्वं परैः स्वीकृतमिति वाच्यम् । वासनारूपाविद्यासहकारेण स्थूलाविद्यायास्तत्सहकारेण च सूक्ष्माविद्याया ब्रह्मजन्यत्वेनानवस्थापत्त्यभावात् ॥ ८८ ॥

"अन्यदप्याह *परेति । अविद्यास्वरूपमेवाह *हिमेति । हिमाद्यो यथा जलस्य स्वभावा जलेन सम्बद्धा', धूमोद्गमो धूमोद्गमहेतुता यथा वह्नेः स्वभावस्तद्वत विष्णोर्माया विष्णुस्वभावभूता विष्णुना स्वभाववन्नित्यसम्बद्धेवेति । *कीर्तिता—एतत्तदन्धकारमित्यत्रेति शेषः । *द्वैतम्—नामरूपे । *विकल्पा.—भेदा. । तद्विषयभ्रमजनिकां जीवान् विमोहयन्तीं *मायाम्—असदर्थप्रकाशिकां वासनारूपाम् । अस्योत्तरार्द्धेन "उत्सृज्य सकलनिष्कलमद्वैत भावयेद् ब्रह्म"

इत्यनेन "भ्रमविषयद्वैतकल्परूपां तत्कारणवासनारूपां चोत्सृज्य "नेह नानास्ति किञ्चन" इति श्रुतिबलादसत्त्वेन निश्चित्य, सकलेत्यत्रानुस्वारलोपश्छन्दोऽनुरोधात्, सकल दृश्यं निष्कलमद्वैतं ब्रह्मैवेति भावयेत् आदरनैरन्तर्याभ्यां तथा भावनां कुर्यात्" इत्यर्थकेन तन्निवर्तिका भावनोक्ता । प्रकृताऽनुपयोगादत्र तदनुल्लेखः । तदाह *स्वभावेति । नन्वेव कथ सा स्वभावभूता अत आह *आध्येति। *नित्येति । व्यावहारिकेत्यर्थ । उपाधिस्थस्य विमोहनमाह *तदुक्तमिति । *तत्रैव-परमार्थसार एव । तदेव दर्शयति * विमोहेति । द्वैतं नामरूपे तदेव स्वरूप यस्यास्तया स्वमायया आत्मान उपाध्यवच्छिन्नम् आत्मान जीवादिक मोहो मिथ्याज्ञान तद्वन्तमिव करोति । वस्तुतस्तदभावादिवेति । तेन च स्वस्वरूपाज्ञानं तेषामुपलभ्यते । स्वयमेव ग्रहायां पुरुषमात्मानमित्यस्योत्तरार्द्धं बोध्यम्। तदाह *वास्तवेति । *अत एव-तस्या जन्यत्वादेव । *तृतीये-तद्द्वितीये "परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य " इति पूर्वपक्ष सूत्रेण "अथ य आत्मा स सेतु." इति श्रुत्या ब्रह्मण सेतुव्यपदेशेन ब्रह्म सद्वितीय सेतुत्वात् रामसेतुवद् इत्यनुमानेन ब्रह्मण. परं वस्त्वस्तीत्युक्तौ समाधिमाह *सामान्यात्त्विति । तुः पूर्वपक्षनिरासार्थ । सेतुशब्दो मृद्दार्वादिमये लोके रूढो नहि तादृशसेतुत्व ब्रह्मणः किन्तु स यथा जलव्यवस्थापक एव ब्रह्मणोऽपि सर्वजगन्मर्यादाव्यवस्थापकत्वेन तत्सादृश्यात्तद्व्यपदेश इत्यर्थः । *एकेति । तस्यास्तत्त्वे तु एतद्विरोध स्पष्ट एव । *अतएव-तस्या जन्यत्वादेव। *न वियदिति । उत्पद्यत इति शेष. । वियद् गगनादि नोत्पद्यते अश्रुतेः छान्दोग्ये भूतसृष्टौ तदश्रवणात् । यद्यपि "आत्मन आकाशः सम्भूतः" इतिश्रुतिरास्ति तथापि सा गौणार्थबोधिकेति पूर्वपक्षसूत्रार्थ. । *इत्यधिकरणे-आकाशाधिकरणे । आकाशपद तत्रोपलक्षणमित्याह *वियदादीनामिति । अजन्यत्वे तेनैव सूत्रेण पूर्वपक्षिते सादि तदग्रिमपञ्चमसूत्रमात्रमाह *प्रतिज्ञेति । हानिरिति पाठो न त्वहानिरिति । *भङ्ग इति । एतेनाहानिरिति पाठ कल्पयित्वाऽन्यथा व्याचक्षाणा वृत्तिकारादय परास्ताः। अविद्याया जन्यत्व एवैतत्सङ्गति । अन्यथा तत्र प्रतिज्ञाभङ्गस्यावश्यकत्वेनादोषत्वेनात्र तदापादनासङ्गति. स्पष्टैव । एकविज्ञानेन सर्वविज्ञानं प्रागुक्तरीत्या नत्वन्यथेति

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त )

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मज भट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीमत्सदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् (वेदान्त ) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम् — बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त ) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्यो प्रत्यक्षानुमानमाथुर्यो व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहित-श्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणि-व्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा — संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

( ) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित । ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्मामृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ३

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहनपुरण्याख्यव्याख्ययातथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता । ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका श्रीमद्बालम्भट्टविरचितकलाटीका-इति टीकाद्वयसवलिता । ३

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । ४

(४८) वीरमित्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । १

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलकृत । १

पत्राद्रिप्रेषणस्थानम्



हरिदासगुप्तः,
चौखम्बा बनारस सिटी ।

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 212.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-
कुञ्जिकाकलाह्वटीकाद्वयसंवलिता ।
गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनमवलम्बमानेन
शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा
संशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU MANJUSHÂ

BY

MAHAMAHOPADHYAYA SRI NAGESA BHATTA,
With Two Commentaries, i.e. Kunjika of
Durbalâchârya and Kalâ of Bâlam Bhatta
Edited by Pandit Parvatiya Nityananda Panta
with the assistance of Sitarama Sastri Shende

FASCICULUS IV—४

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT BOOK-DEPOT BENARES
AGENTS—
OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAM MUKUNDAJI BOMBAY
PROBSTHAIN & CO BOOKSELLERS LONDON
Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press
BENARES

Price Rupee one

॥ श्रीः ॥

—.०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२१२

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्ट्यो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिम मूल्यम्—मुद्रा ७आनका ८

५ अन्यैर्देयं प्रतिस्तवकं

६ आपणव्ययः पृथग् नास्ति ।

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृत १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहित तत्त्वत्रयम् । विशिष्टाद्वैत-दर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाश सहित सम्पूर्णम् (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचित १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्री-गागाभट्टविरचिता । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविर चिता सम्पूर्ण (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्त-सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्या ख्यानम् । सम्पूर्ण । (वेदान्त) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१० ) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामु-नमुनिभिर्विरचितम् । सम्पूर्ण (वेदान्त) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टार-काचार्यसंगृहीतः । आचार्यचित्सुखमुनि-विरचित व्याख्योपेत (वेदान्त) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि सप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायविरचित सम्पूर्ण (न्याय) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसो-मेश्वरविरचिता । (मीमांसा) १६

स्वनयन्नाह *मृत्पिण्डादीति । *ततः–आपादकसूत्रात् । कथमित्याह *तदुक्तमिति । पूर्वखण्डस्यैव तदापादकत्वमव्येति तु सिद्धान्तखण्ड इत्याह *अव्येति । तदाह *शाब्दाबेति । चस्त्वर्थे । *अव्येति । ब्रह्मप्रपञ्चयोः, सच 'सदेव' इत्यादिः । "तदैक्षत तत्तेजोऽसृजत" "ऐतदात्म्यमिदं सर्वं" इत्यादिश्च । अनुवृत्तं तत्साकारप्रश्लेषमित्याह *प्रतिज्ञासिद्धेरिति । वेदान्तिमतं दूषयति *एतेनेति ।उक्तरीत्या तस्यास्तत्त्वेनेत्यर्थः । अन्यथाह *किञ्चेति । *तत्रैव–आकाशाधिकरण एव । यावादीतिसूत्रार्थमाह *कार्यत्वेति । *भेदनिष्ठव्यापकतानिरूपितव्याप्यत्वेत्यर्थः । सूत्रात्तथैव प्रतीतेः । तच्चान्यूनानतिरिक्तवृत्तित्वरूपं बोध्यम् । यावद्विकारजातं विभागो दृश्यते लोके घटादेर्विकारस्येवेति । *तत्त्वेति । कार्यत्वेत्यर्थः । ननु तयोरेवानुल्लेखात्कथमुक्तः सूत्रार्थो ऽत आह *विकारः कार्यमिति । यद्यपि समनियतत्वं तयोस्तथापि कार्यत्वस्य संदिग्धत्वात् भेदस्य प्रत्यक्षत्वात्तेन तदनुमानमित्याशयेनोक्तमुपपादयति *अस्तिहीत्यादि । यथा लोके कार्यकारणभेदः घटे मृद्भेदः मृद्वृत्तिघटत्ववत्त्वेन वैधर्म्यसत्त्वात्, मृदि तु न घटभेदः घटे ऽपि मृत्त्वसत्त्वेन मृदि घटवैधर्म्याभावात्तथाह *एवमिति । शब्दतोऽनुक्तेराह *आपततीति । वैपरीत्यातिप्रसङ्गं निराचष्टे *ब्रह्मेति । *अधर्मेति । "निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्" "अमृतस्य परं सेतुम्" इति, 'साक्षी चेता केवलो निर्गुणश्च' इत्यादि, 'कारणं परमेशानो यः शुद्धो ह्युपचारत' इति च श्रुतिस्मृतिभ्यां तथा बोधनादिति भावः । अभावादित्यकारप्रश्लेषः । तस्य तत्त्वासम्भवादाह *भेदहेतुर्वेति । *प्रकाशेति । काव्येत्यादिः । वेदान्तिमतमाह *नचेति । वृत्तिकारादिमतमाह *परेति । तथा च आकाशादयः तदन्ये पराधीनसत्ताका वा स्वसमानसत्ताकभेदवत्त्वात् घटशरावादिवद् इतिप्रयोगो बोध्यः । सङ्कोचकमपि नेत्याह *अविद्याया इति । अन्ये दोषान्तरमप्याहु *आकाशेति । किञ्चेत्यादि । ब्रह्मणीति शेष । एवं च प्रकृतासिद्ध्या सूत्रासङ्गतिश्चेति भाव. । ननु तद्बोधकसूत्रान्तराभावे ऽपि श्रुत्यादिकं तथास्तीति तत्सङ्कोच आवश्यक इत्यत आह *अजामिति । श्वेताश्वतरोपनिषत्स्थेयम् । तत्तात्पर्यबोधकं हेतुगर्भं विशेषणमाह *अवि-

द्येति । स्वाप· आवरणमेव । प्रबोध तद्भङ्ग· । निद्रा गाढावरणम् । स्वप्नो ऽल्पावरणम् । यदा "तत्त्वमसि" इत्युपदेशकाले प्रबुध्यते मायानिद्रां त्यजति तदा जन्मलयास्थित्यवस्थाशून्यमद्वैतमीश्वरमात्मतत्त्वेनानुभवतीत्यर्थः । *सा–सा च । तस्यास्तत्त्वे न मानमित्यर्थ· । *आद्याया·–श्रुते । अभिहितस्तदर्थ । अत्र भाष्यसमतिमाह *अत एवेति । तस्यात्रान्यथोपपत्त्या तद्गमकत्वादेवेत्यर्थः । *तेज इति । तेजोजलपृथिव्यादीनां न व्याकृते नामरूपे यया सा प्रागवस्थेत्याद्यर्थ । उक्ताशयेनैवाह *अजेति । द्वितीयोपपत्तिमाह *अनादित्वमपीति । कार्यजननसमर्थस्थूलरूपाविद्याया· प्रलये ऽभावो न अवश्य तत्परपराभ्युपगमात् । सूक्ष्मरूपमादाय तत्त्वे घटादेरप्येवमनादित्वापत्तिर्नेचेद् तवेष्टमिति भावः । तस्यास्तत्त्वे दोषान्तरमाह *अक्षरादिति । परत इत्यनेन पुरुषः पर इत्यनेन शुद्ध ब्रह्म । एव च नाशस्याप्यभावे द्वैतमोक्षाभावयोरापत्तिरिति भाव· । अत एवाह *तद्यदीति । अक्षरत्वमित्यर्थः । उच्यते इति शेष । अक्षरमर्यादया ऽलाभादाह *यथेति । वचने ऽस्यान्वय । सिद्धान्ते तदुक्तदोष खण्डयति *न चेति । तथा च तद्भिया तस्या अजन्यत्वमिति तदाशय । ननु केवलब्रह्मण एव तत्त्वमास्तामिति न सा अत आह *ब्रह्मेति । शक्तिहीनस्य प्रवृत्त्यनुपपत्तेस्तथा च सा दोष एवेति भाव· । *अतएव–अनवस्थाभयादेव । सांख्यादिमतसंग्रहायाह *आदीनामिति । *तद्–स्थूलाविद्या । एव च सोपाधिकस्य तस्यैव मूलकारणत्वेन सा नेति भावः ॥ ८८ ॥

अत एव "प्रकाशादिवन्नैवं परः" इति सूत्रे भाष्ये " मूलप्रकृत्यनभ्युपगमे ऽनवस्थाप्रसङ्गाद्या मूलप्रकृतिरभ्युपगम्यते तदेव नो ब्रह्म" इत्युक्तम् । तत्र त्वजन्याविद्यायामपि तत्सत्त्वात्तदेव नो ब्रह्मेत्यस्यासङ्गतिः स्पष्टैव । अत्र कार्यत्वमात्रं साध्यं न तु यद्भेदस्तत्कार्यत्वम् । तेन घटानां परस्परं कार्यत्वाभावे ऽपि परस्परं भेदव्यवहारोपपत्तिः । आरोपितघ-

र्भवति भेदो विकारत्वं चास्त्येव। रज्जूरगस्थले आरोपितोरगत्वेनैव रज्जुविकारत्वव्यवहारात् ।

किञ्च,

सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः ।
संसारं तन्निवृत्तिं च करोत्यविरतोदयम्" ॥ इति-
स्मृतौ शक्तिमण्डलत्वेन मायोक्ता ॥

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगद्" ॥ इति-
श्रुतौ चाविद्यायाः सावयवत्वमुक्तम् । तेन जन्यत्वमावश्यकम् घटादिवत् । अस्यावयवेत्यत्र सन्धिरार्षः। यद्वा अस्य महेश्वरस्य, मायावयवानामेव च तदवयवत्वम् तद्विशिष्टस्यैव महेश्वरत्वात् । किञ्च सत्तास्फूर्त्यनुरोधेन तस्या ब्रह्मकार्यत्वमावश्यकम् । वासनासमूहरूपाविद्याया अपि योगिनां सत्त्वेन स्फूर्तिसत्त्वात् । किञ्च, चतुर्थपादस्याद्याधिकरणे "तद्धेदं तर्ह्यव्याकृतमासीद्" इति श्रुतेः "इदं व्याकृतं नामरूपं विभिन्नं जगत् प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमित्यर्थं दर्शयित्वा "परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते। अर्थवती च सा। न तया विना परमेश्वरस्य स्रष्टृत्वं संभवति। शक्तिहीनस्य प्रवृत्त्यनुपपत्तेः। "अविद्यात्मिका हि सा बीजशक्तिः परमेश्वराश्रया" इति भाष्ये उक्तम् । तत्तत्कार्यबीजशक्तीनामानन्त्येऽपि बीजशक्तिरित्येकवचनं जात्यभिप्रायेण । अनेन

हि वासनानामेवाविद्यात्वं स्पष्टमेवोक्तम् । "प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणोऽविद्यया सर्वशक्तियोगः "सर्वज्ञं सर्वशक्तियोगं महामायं च तद्ब्रह्म" इत्यन्यत्रोक्तम् । अत्राविद्ययेत्यस्य पूर्वैताद्विधमिथ्याज्ञानजन्यवासनयेत्यर्थः । शक्तिसमूह एव च महामायेति बोध्यम् । एतेनाविद्याऽजन्या कश्चिद् भावपदार्थो वासनाश्रय इत्यपास्तम् । अतिरिक्तनत्कल्पने मानाभावात् । अत एव प्रपञ्चस्यैककारणकत्वप्रवादनिर्वाहः । स्वजन्यातिरिक्तसहकार्यनपेक्षत्वात् ॥८९॥

अत्र मानमाह *अत एवेति । तादृशस्य तस्यैव तत्त्वाङ्गीकारादेवेत्यर्थः । ननु जीवस्येश्वरांशत्वे जीवगतदुःखेन तस्यापि दुःखित्वापत्तिः पादादिगतदुःखेनाङ्गिनो दुःखित्ववदत आह *प्रकाशादीति । यथा जीवो दुःखी नैवं परमात्मा । यथा सौरश्चान्द्रो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृत वक्रभावमापन्नो ऽपि वस्तुतो न तत्त्ववान्, यथा वा घटादिषु गच्छत्सु गच्छन्निवाकाशो वस्तुतो न तथा तद्वदिति सूत्रार्थः । *मूलेति । अनादिभूतेत्यर्थः । *तत्सत्त्वात्–मूलप्रकृतित्वसत्त्वात् । तदर्थमेव तदङ्गीकारात् मम तु ब्रह्मण्येव तादृशे तत्त्वमिति । एतेन घटकतया तथाप्यापत्तिरेवेत्यपास्तम् । सामान्यरूपेणानुगतयोस्तयोः सहकारित्वेन तत्राप्यदोषाच्च । तयोर्निमित्तकारणत्वेनादोषाच्च । ननूक्तरीत्या तादृशकार्यत्वस्यैवासाध्यत्वे ऽपि प्रत्यासत्त्या विशेषकार्यस्य साध्यत्वस्य लाभात्सकोचावश्यकत्वमेवेति तथैवास्तामतआह *अत्रेति । तत्साध्यकानुमाने इत्यर्थः । *मात्रम्–कात्स्न्यें । साधकस्य तथैव सत्त्वात् । तत्फलं कथयन् तदेवाह *तेनेति । व्यक्तिभेदमादायेति भावः । ननु तेषां निर्धर्मकत्वेन कथ सोऽत आह *आरोपितेति । प्रपञ्चे इत्यर्थः । अन्यदप्याह *किञ्चेति । *अर्वाति संसारविशेषणम् । *मण्डलत्वेन–तत्समूहत्वेन । तथा च सावयवत्वं लब्धम् । स्पष्ट तद्वो-

धिकां श्रुतिमाह *मायामिति । *तेन–सावयवत्वेन । नन्वेवमस्या अवेत्युचितमत आह *अस्येति । एतद्दोषभियैवाह *यद्वेति । ननु न साऽवयवो ऽत आह * मायेति । तत् मायामायिनमित्युक्तेः । अन्यदप्याह *किञ्चेति । अविद्यायामिति शेष. । ननु तत्सत्त्वे एव न मानमत आह *वासनेति । अपिना स्थूलाविद्यापरिग्रहः । अन्यदप्याह *किञ्चेति । तस्यैवार्थमाह *विभिन्नामिति । अव्येत्यस्यार्थमाह *परीति । तत्स्वरूपमाह *बीजेति । नन्वधिष्ठानसत्त्वेऽपि फलाभावो ऽत आह *अर्थेति । फलवती चेत्यर्थ । तदेवाह *न तयेति । तन्नाम कथयन्नुपसहरति *अविद्येति । *सा–प्रागवस्था । *अनेन–भाष्येण । ननु तस्य प्रागुक्तश्रुत्यादिभि शुद्धत्वप्रतिपादनात्कथं तस्यास्तदाश्रयत्वमत आह *प्रतीति । सर्वशक्तीति महेति च बहुव्रीही । *अन्यत्र—भाष्यान्तरे । ननु तासामेवाविद्यात्वेन कथं भेदोक्तिरत आह *अवीति । ननु विशेषणद्वयेन भेदस्तयो स्यादत आह *शक्तीति । तथा च व्याख्यानव्याख्येयभावस्तयोरिति भेद इति भाव । वेदान्तिमतं खण्डयति *एतेनेति । अस्यार्थमाह *अतीति । उक्तरीत्यैव तदुपपत्तेरिति भाव. । *अत एव–अतिरिक्तदभावादेव । ननु सिद्धान्ते ऽपि प्रपञ्चजनने तत्सहकारापेक्षणात्तद्ध्रङ्ग एव अत आह *स्वजन्येति । सा च स्वकल्पितैव, मायालये इव तज्जनने ऽपि सहकार्यन्तरानपेक्षणात् । आविर्भावतिरोभावयोरेवोत्पत्तिविनाशपदार्थत्वात् ॥ ८९ ॥

यत्तु "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रे भाष्ये च "ब्रह्मैवोपादानकारणं निमित्तकारणं च" इत्युक्तम् । तस्य स्वसमकक्षनिमित्तकारणाभावे तात्पर्यम् । इतो ऽपि अविद्यायां जन्यत्वमावश्यकम् । अन्यथा प्रतिज्ञादृष्टान्तोपरोधः स्यादेवेति बोध्यम् । अत एव विष्णुपुराणे—

प्रजापतिपतिं विष्णुमनन्तमपराजितम् ।
प्रधानपुंसोरजयोः कारणं कार्यभूतयोः ॥ इति–

स्मर्यते । अजयोरिति रूपकं स्वातन्त्र्यनिरासाय। तद्ध्वननार्थैव कारणं कार्यभूतयोरित्युक्तम् । यद्वा, एतत्सृष्टौ तज्जन्मानुपलम्भादजत्वं, पूर्वकल्पान्ते जन्यत्वमादाय कार्यभूतयोरित्युक्तम् । "यत्तत्सूक्ष्ममविज्ञेयम्" इति प्रकृत्य "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति, "अव्यक्त पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते" इति च भाष्योदाहृतस्मृत्यन्तरविरोधश्च । एतदुपबृंहणेन सूत्रस्वरसेन चोक्तजातीयश्रुतीनां मदुक्तव्याख्यैवोचिता । तदुक्तं चरके पतञ्जलिना—"आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम्" इति । "प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च" इति प्रघट्टके गीतायां वासनासमूहरूपाविद्याया अव्यक्तशब्देन क्षेत्रत्वोक्तेः ॥ ९० ॥

नन्वेवं स्वजन्यसापेक्षत्व लब्धं तच्च सूत्रभाष्योभयाविरुद्धमत आह *यत्त्विति । ब्रह्म प्रकृतिरुपादान चकारान्निमित्तकारणमिति प्रतिज्ञादृष्टान्तयोरनुपरोधात् अगौणार्थत्वात् । छान्दोग्ये "येनाश्रुत श्रुत भवत्यमत मतमविज्ञात विज्ञातम्" इति प्रतिज्ञा, तदुपपादकदृष्टान्त "सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयम्" इत्यादिः प्रामुक्त । निमित्तस्योपादानाद्भेदे तदसङ्गति स्पष्टैवेत्यर्थः । इदमपि प्रकृतिसाधकमित्याह *इतोपीति । अस्मात्सूत्रात् भाष्यादपीत्यर्थः । *उपरोध—असामञ्जस्यम् । *अत एव—तस्या जन्यत्वादेव । नन्वजयो कार्यभूतयोरिति मिथो विरुद्धमत आह *अजयोरिति । सादृश्येन पराधीनत्वप्रतिपादनादाह *स्वातन्त्र्येति । नन्वेव न पुष्टिरपरस्य, किञ्च वैपरीत्यमेवास्त्वत आह प्रागुक्तरीत्या *यद्वेति । तस्या अजन्यत्वे स्पष्टन्दोषान्तरमाह *यत्तदिति । तस्मादित्यस्यार्थसूचनायेदम् । उत्पत्तिवत् लयो ऽपि तत्रेत्याह *अव्यक्तमिति । अत्र स्पष्टमुत्पत्तिलयावुक्ताविति तत्त्वमेव सिद्धम्, तदाह *एतदिति ।

एतत्पोषणेनेत्यर्थः । *सूत्रेति । प्रकृतिश्चेत्यादिसूत्रेत्यर्थः । *उक्तेति । अजापदादिघटितानामित्यर्थः । "अजामेकाम्" इत्यत्रापि पूर्वार्द्धे इवोत्तरार्धेऽप्येवमेव जडत्वोपाधिविशिष्टस्यैव जीवत्वेनोपाधेश्च जन्यत्वेन विशिष्टे ईदृशाजन्यत्वस्यैव वाच्यत्वादिति भावः । तत्र समाप्तिमाह *तदुक्तमिति । तत्पारम्पर्यमनादि न तु तदिति परम्परानादित्वेनैवानादित्वं न त्वजन्यत्वरूपमित्यर्थः । आत्मातिरिक्तत्वेनाविद्याया अपि क्षेत्रत्वेन तत्रापि पारम्पर्यस्यैवानादित्वं युक्तम् उक्तयुक्तेरिति भावः । नन्वेवमपि क्षेत्रस्य तत्त्वं लब्धं न त्वविद्याया अत आह *प्रकृतिमिति । *अव्यक्तेति । तदर्थकप्रतिशब्देनेत्यर्थः । प्रकृतिरूपं क्षेत्रं पुरुषरूपं क्षेत्रज्ञमिति तदर्थं तद्व्याख्यातारः ॥ ९० ॥

किं च ब्रह्माण्डपुराणे तस्या ब्रह्मणि लय उक्तः ।

स्थूलं विलाप्य करणे करणं निदाने
तत्कारणं करणकारणवर्जिते च ।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र
तं त्वां हरिं विमलबोधघनं नमामः ॥ इति ।

करणं महद् । निदानं प्रकृतिः । तत्कारणं प्रकृतिरूपकारणम् । करणकारणवर्जिते ब्रह्मणि । अनेनापि तदतिरिक्तस्य करणकारणसाहित्यं सूचितम् । विलाप्येत्यनेन समूलमुन्मूलनमुक्तं न तु प्रलये इवाविभागेनावस्थानम् । अत्र ब्रह्मणि लयोक्त्या तस्य तदुपादानत्वमुक्तम् । उपादानकारणे एव लयस्य "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति श्रुत्या बोधनात् । "यस्य हि यत उत्पत्तिस्तस्य तत्र लयो न्याय्यो मृदीव शरावस्य । न च मनसो वागुत्पद्यते" इति शां-

करभाष्याच । किञ्च,अनुत्पत्तिकत्वे तस्या नाशानापत्तिः । तदुक्तं न्यायभाष्ये वात्स्यायनेन—"नचानुत्पत्तिधर्मकं किं चिद्व्ययधर्मकं प्रतिज्ञातुं शक्यम्" इति । प्रागभावस्यापि न नाशः । उत्पत्त्यनन्तरं तत्प्राक्कालाभावेन तद्व्यवहाराभावोपपत्तेः । एवं जीवानामप्युपाधिवैशिष्ट्येन जन्यत्वमावश्यकम् । अत एव श्रुतौ लोहस्थाग्नेर्विस्फुलिङ्गा इव जीवा इत्युक्तम् ।

परमार्थसारे ऽपि ।

"एकस्मात् क्षेत्रज्ञाद् बह्व्यः क्षेत्रज्ञजातयो जाताः ।
लोहस्थादिव दहनात्समंततो विस्फुलिङ्गकणाः" ॥

इत्युक्तम् । 'क्षेत्रोत्पत्तिरेव तदुत्पत्तिः' इति तद्व्याख्यातारः । विशेष्यांशमादाय तेषां नित्यत्वोक्तिरपि । किं बहुना घटादेरप्येवमेव जन्यत्वम् । तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात् ॥ ९१ ॥

(क० टी०) अन्यदप्याह *किञ्चेति । *महद्—आदिप्रकृतिविकृतिरूपम् । *अनेनापि—करणेत्यादिनापि । *तत्—ब्रह्म । *प्रलये—तदादौ । स्वाशयमाह *अत्रेति । तत्रैव लये भाष्यसंमतिमप्याह *यस्यहीति । *न चेति । नहीत्यर्थः । तथाच न तस्यास्तत्र लय इति भाव. । अन्यदप्याह *किञ्चेति । तस्या इत्यस्य मध्यमणिन्यायेनान्वय । अविद्याया इति तदर्थः । व्ययो नाश. । नन्वेव प्रागभावस्याजन्यस्य नाशस्यार्वाचीननैयायिकैरङ्गीकारात्ताद्विरोधो भाष्यस्य अतो भाष्याशयमाह *प्रागिति । आकाशादिवत्तस्य नित्यत्वात् । नन्वेव घटाद्युत्पत्तावपि तत्प्रतीत्यापत्तिरत आह *उत्पत्तीति । घटादीत्यादिः । *उपपत्तेरिति । अस्य 'इति तदाशय.' इति शेषः । प्रसङ्गादाह *एवमिति । अविद्यावदित्यर्थ. । *अत एव—तेषां जन्यत्वादेव । अस्योभयत्राप्यन्वयः । जीवभेदो ऽप्येवमेवेत्याह *एकस्मादिति । यथा हन्यमानाल्लोहगताद्वन्हेः समतत. स-

मन्तदेशोपाधिका विस्फुलिङ्गा कणाः पृथगिव जाता इव अ भान्ति, तथा एकस्मात् क्षेत्रज्ञाद् अन्तर्यामिणः क्षेत्रज्ञजातयो ब्रह्मादिस्थावरान्ता जाता इव भान्तीत्यर्थ । "यथाऽग्ने क्षुद्रा विस्फुलिङ्गा' स्फुरन्ति एवमेवैतस्मादात्मन. सर्व एवात्मानो व्युच्चरन्ति" इति श्रुते. । श्रुतावपि इवेति शेष । तदभिप्रेत्याह *क्षेत्रोत्पत्तिरिति । *तत्–श्रुतीत्यर्थः । अविरोधायाह *विशेष्यांशेति । *तेषाम्–जीवानाम् । उपसंहरन् सर्वत्रैवमित्याह *किं वाह्निति । *एवमेव–उपाधिजन्यत्वेनैव ॥९१॥

तदुक्तं परमार्थसारे ।

"यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु ।
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा ॥ इति ।

भाति, विशेष्यतयेत्यर्थः । अत एव "द्रव्यं नित्यम्" इति महाभाष्ये उक्तमित्युपरिष्टाद्वक्ष्यामः । उपाधिसन्निवेशादिशब्दैश्च ब्रह्मैव । पूर्वपूर्ववासनावशात्परमात्मन एवोपाध्यादिरूपेण तद्वैशिष्ट्येन भानात् । अत एव "सर्वशब्दानां ब्रह्मैव वाच्यं वाचकं च" इति हरिणा सिद्धान्तितं संगच्छते । अत एव हिरण्यगर्भस्य कार्यब्रह्मेति व्यवहारः । तथा च "सामीप्यात्तु तद्व्यपदेशः" इति सूत्रे "ब्रह्मसामीप्यादपरब्रह्मण्यपि ब्रह्मशब्दः, कार्यमेव हि ब्रह्म विशुद्धोपाधिसंबद्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमितिस्थितिः" इति भाष्ये उक्तम् । अविद्याया जन्यत्वादेव "सर्वं खल्विदं ब्रह्म तज्जलान्" इतिश्रुतिर्द्वन्द्वगर्भा ब्रह्मातिरिक्तसर्वत्वावच्छिन्नविषये एकरूपा भवति ।

विष्णुपुराणेऽपि ।

ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते।
ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते परम्॥
विद्याविद्ये च मैत्रेय ज्ञानमेवोपधारय। इति।

निरुपाधिब्रह्मैव विद्या, सोपाधि तदेवाविद्येति। तदुक्तमाचार्यैः "द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम्" इति। अत्रावगम्यते इत्युक्त्या व्यवहारमात्रे ब्रह्मणो विशेष्यत्वमुक्तम्। अन्त्यं तु योगिभिः समाधावगम्यत इति बोध्यम्॥ १२॥

(क० टी०) अत्रमानमाह *तदुक्तमिति। ननु लोके सुखादिवैचित्र्यादनुभवसिद्धमात्मनानात्वम्, गौतमादितन्त्रेषु च तथैवोक्तं तत्कथ सर्वगतमेकं ब्रह्म तदेवात्मनेत्युक्तमित्याशङ्क्य तन्नानात्वमपि भ्रम एवौपाधिकं चेत्याह *यद्वदिति। यथा एक एवाकाशस्थो दिनकरस्तत्तज्जलेषु प्रतिहतचक्षुषा उपाधिभेदात्पूर्ववासनावशाच्च नानात्वेन गृह्यते तद्वत्सकलोपाधिष्ववस्थित एक एवात्मा नानात्वेन भातीत्यर्थ। अत एव सुखादिवैचित्र्यमुपपन्नम्।

"यथा स्वयंज्योतिरात्मा विवस्वानपो ऽभिन्नो बहुधैको ऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देव. क्षेत्रेष्वेवमजो ऽयमात्मा"॥

इति श्रुते।

"यथा भिन्नजलेष्वेक आदित्यो भासते पृथक्।
एक आत्मा शरीरेषु भिन्नवद्भासते तथा"॥ इति—

व्यासस्मृतेश्च। तदाह *भातीति। *अत एव—तस्य विशेष्यतया सर्वत्र भानादेव। *उक्तम्—सिद्धेशब्देतिवार्त्तिकव्याख्यावसरे। *उपरिष्टात्—अत्रैव जातिस्फोटानिष्कर्षप्रस्तावे। ननु तत्तदाकारादिरूपोपाध्यादेस्ततो भेदलाभेन द्वैतापत्तिरत आह *उपेति। श्रुत्यादिस्थैरिति शेष। उच्यत इति शेषः। नन्वेवं तस्य नित्यत्वापत्तिरत आह *पूर्वेति। तथा च तत्कृतमेव तस्य द्वैविध्यमिति तस्य न तस्वमिति

भाव । *अत एव–सर्वबोध्यत्वस्य ब्रह्मण्येव सत्त्वादेव । *अत एव–विशेषणांशमादाय तस्य जन्यत्वादेव । कुत्रासौ अत आह *तथाचेति । तदभिप्रेत्यैव चेत्यर्थः । ननु नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्कथमपरस्मिन्प्रयोगो ऽत आह *सामीप्यादिति । तु: शङ्कानिरासे । परमेव ब्रह्म सत्यकामत्वादिगुणयुक्तं कार्यब्रह्मेत्युच्यते । तथा च तत्सामीप्यात्तद्व्यपदेशः, मुख्यासम्भवाल्लक्षणया प्रयोग इत्यर्थः । *ब्रह्मेति । परेत्यादि । किं तद्परमित्यत आह *कार्यमेवेति । शुद्धस्योपासनासम्भवात् सर्वस्य ब्रह्मरूपत्वे प्रमाणभूतश्रुत्या अविद्याया जन्यत्वमपि बोधितमित्याह *अविद्याया इति । अत्र सर्वमिति प्रकृतिसाधकं, तज्जेति तत्साधकम् । ज च ल च अन् च जलान् तस्य जलान् । ततो जात तेन जीवित तत्र लीनामित्यर्थः । तदाह *द्वन्द्वेति । अन्यथाऽविद्यान्यविषयतया सङ्कोचनीया स्यादिति भाव । तस्य सर्वत्र विशेष्यत्वे मानान्तरमप्याह *विष्णुपुराणे ऽपीति । स्वाशयमाह *निरुपेति । एवमर्थे मानमाह *अत्रेति । अन्येषामनधिकारादाह *अन्त्यमिति ॥ ९२ ॥

परमार्थसारे ऽपि—

विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः ।
व्यवहारस्थस्यात्मन एते ऽवस्थाविशेषाः स्युः ॥ इति।

यद्यपि विज्ञानं ब्रह्मैव तथापि नामवैशिष्ट्येनावस्थावत्त्वमुक्तम् । विपरीतं ज्ञानं मायापि विज्ञानमत्र । एते विज्ञानादय आत्मनो भ्रमरूपाः प्रतिभासमात्रविषया अवस्था इत्यर्थः । अनेन सर्वोपाधीनां तद्विशेष्याणां च ब्रह्मरूपत्वमुक्तम् । तदप्युक्तं तत्रैव–

रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ।
तद्वद्द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ॥ इति

तदुत्तरार्यया । इदं विज्ञानादि अविद्या वासना-

रूपाविद्यामूलकम् । वासनारूपसूक्ष्मोपाधिवैशिष्ट्येनापि ब्रह्मभानं मननादिपरिपाकवतामस्त्येव । अविद्यायाश्चाध्यासिकसम्बन्धेन परमात्मैवाश्रयस्तवातिरिक्ताविद्याया इव । तदप्युक्तं तत्रैव "त्रिगुणा चैतन्यात्मनि" इति पूर्वोक्तार्यया । भ्रमाधिष्ठानत्वमेव तद्विशेष्यत्वरूपविवर्तोपादानत्वम् । अत एव रज्जौ भुजङ्गो जात इत्यप्रत्ययः । रज्जौ भुजङ्गभ्रमो जात इत्येव च प्रत्ययः । अनादिनिधनं ब्रह्मेत्याद्यश्लोके हरिग्रन्थेऽपि स्पष्टमेतत्, "तत्त्वादप्रच्युतस्य वस्तुनो भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्त्तः स्वप्नविषयप्रतिभासवद्" इत्यादिना। "तत्त्वात्, स्वस्वरूपाद्। असत्यं वस्तुनो बाहिरसत्त्वात् । आविभक्तम्, तदधिष्ठानेन। अन्यद्, वैधर्म्योपलम्भात् । तादृशरूपोपग्राहिता, तद्रूपप्रकारकज्ञानविशेष्यता । तदाह–स्वप्नविषयेति" इति तद्व्याख्यातारः । पयसो दधि तु न विवर्त्तः । तत्त्वात्प्रच्युतेः । स्वर्णादेः कुण्डलादि तु विवर्त एव ॥ ९३ ॥

( क० टी० ) अत्र मानान्तरमप्याह *परेति । तान् अवस्थाभेदानेवाह *विज्ञानेति । *ब्रह्मैव–शुद्धं ब्रह्मैव । "विज्ञान ब्रह्म" इति श्रुते । एवेन तस्यावस्थावत्त्वनिरासः । *नामेति । विज्ञानपदवत्त्वेन सोऽप्यवस्थाविशेष इत्यर्थ । *विपरीतमिति । ज्ञानविरोधीत्यर्थः । *माया-अविद्या। *अपिः पूर्वसमुच्चये। *अन्तर्यामी-शुद्धसत्त्वगुणमायारूपाविद्योपाधि. । "एष ते आत्मान्तर्याम्यमृत" इति श्रुतेः। *प्राण.–गुणत्रयोपाधिको ब्रह्मविष्णुरुद्रसञ्ज्ञ. उत्पत्तिस्थितिसंहारकृत् । यद्वा प्राणः सूत्रात्मा लिङ्गशरीरसमष्ट्यभिमानी हिरण्यगर्भः । "वायुर्वै गौतम तत्सूत्रम्" इतिश्रुते. ।

प्राणस्तु प्रणवे ज्ञेयो जीविते परमात्मनि ।

इन्द्रिये वायुभेदे च बलान्तर्यामिनोरपि ॥ इति-

कोशाच्च । स्थूलशरीरसमष्ट्यात्मको विराट् देवस्तत्राभिव्यक्तः "सहस्रशीर्षा" इत्यादिश्रुतिप्रतिपाद्यः । *-जातिः-देव वा स्थावरा-न्ता । *पिण्डा समष्टिव्यष्टिदेहास्तत्राभिव्यक्ता विश्वशब्दवाच्या जीवास्तदुपाधयश्च ।

अन्तो व्यवस्थिते मृत्यो स्वभावे निश्चये ऽन्तिके इति ।

*आत्मनइति । व्यवहारस्थस्येत्यादि । व्यवहारकालिकस्येति तदर्थः । विशेषपदार्थमाह *भ्रमेति । तस्य व्याख्या *प्रतीति । र-ज्जुसर्पवत् भ्रमात्मकप्रतीतिमात्रसिद्धा इत्यर्थः ।

तदुक्त विष्णुपुराणे—

देवा मनुष्या पशव पक्षिवृक्षसरीसृपाः ।

रूपमतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥ इति ।

ज्ञानस्वरूपमत्यन्तनिर्मल परमार्थत ।

तदेवार्थस्वरूपेण भ्रान्तिदर्शनत स्थितम् ॥ इति च ।

स्वाशयमाह *अनेनेति । नन्वेते कुतो भ्रमरूपा अत तथा ऽनुक्तेरतआह *तदपीति । तेषां भ्रमरूपत्वमपीत्यर्थ । *तत्रैव-परमार्थसारे एव । व्याख्यातमिदम् । पूर्वपरामर्शादाह *विनानेति । आदिना अन्तर्याम्यादि । स्थूलाया इदमा परामर्शादाह *वासनेति । ननु लोके स्वर्णपदार्थमजानतां कुण्डले स्वर्णत्वज्ञानाभाववत् अस्माक तदभावात्कथ सूक्ष्मोपाधिवैशिष्ट्येन तज्ज्ञानमत आह *वासनेति । अपिना स्थूलोपाधिः । आदिना श्रवणम् । सृष्टिवे-कज्ञानवतामपि घटादिव्यवहारवत् । एव चान्येषामभावे ऽपि न क्षतिः । रज्जुसर्पज्ञानवत् स्वस्य प्रपञ्चज्ञान जानीते इत्य-न्यत् । ननु सा चेन्नातिरिक्ता तर्हि को वासनाश्रयः । आत्मा तु न, असम्बन्धाद् अत आह *अविद्यायाश्चेति । इद तवा-प्यावश्यकमित्याह *नवेति । *तदपि—तस्यैव तदाश्रय-त्वमपि । *तत्रैव-परमार्थसार एव । व्याख्यातमिदम् । नत्रैव रज्ज्वा भुजङ्गविवर्त्तोपादानत्ववत् ब्रह्मण प्रपञ्चविवर्तोपादानत्व न स्यात् । अनिर्वचनीयानुत्पत्तावतात्त्विकान्यथाभावाद् अत आ-ह *भ्रमेति । तद्भ्रमरूपविवर्तोपेति समस्तः पाठः । विवर्त-स्य तद्रूपत्वात् दृष्टान्तेऽपि तथैवेत्याह *अतएवेति । ई-

दृशस्य तस्याङ्गीकारादेवेत्यर्थः । *प्रत्यय इति । किञ्च रज्जुतत्त्वज्ञानोत्तरं न कदाचिदपि सर्पपदप्रयोगबुद्धी, प्रकृते तु तत्त्वज्ञस्यापि तद्व्यवहारबुद्धी अनुवर्तेते इति वैषम्यम् । एतेन रज्जुर्भुजङ्गस्य विवर्तोपादानमिति निरस्तम् । दोषत्रयात् । कुण्डलप्रतीतिकाले स्वर्णत्वप्रतीत्यप्रच्यववत् भुजङ्गप्रतीतिकाले रज्जुत्वप्रतीत्यप्रच्यवाभावेन तत्त्वस्यायुक्तत्वाच्च । इदं चानुपदमेवोक्तम् । *एतत्—तस्य विवर्तोपादानत्वम् । *तादृशमेवेति । ननु कथं स्पष्टमतस्तद्ग्रन्थमाह *तत्त्वादिति । आदिना मूर्त्तिक्रियाविवर्तौ शक्तिमात्रगतौ विद्याऽऽत्मनि तत्त्वातत्त्वाभ्यामनाख्येयौ । एतद्धि तदविद्याया अविद्यात्वम् । ब्रह्म च सर्वपरिकल्पनाहीनं भेदसंसर्गसमतिक्रमेण सर्वाभिः शक्तिभिः समाविष्टं व्यवहारानुपातिधर्मैः सर्वावस्थास्वनाश्रिताविद्याविद्याप्रविभागरूपं चेत्यस्य परिग्रहः । *बहिरिति । अनेन करणापेक्षयाऽसत्यत्वबोधनद्वारा कारणसत्तापेक्षयाऽल्पसत्ताकत्वस्य कार्ये बोधनद्वारा कारणासमसत्ताकोऽन्यथाभावो विवर्त इत्यपि सूचितम् । मायासत्ताया ज्ञानपर्यन्तत्वेन कार्यसत्तायाश्च मध्यप्रलयेष्वभावेन लक्षणसङ्गतिः । तत्त्वादित्यादेः फलमाह *पयस इति । तदभावादेवाह* स्वर्णादेरिति । मायाया अपि दुग्धस्य दधिभावेनेव न प्रपञ्चरूपः परिणामः किन्तु स्वर्णस्य कुण्डलरूपेणेव । एवंविध एव परिणामो विवर्तपदवाच्यः । अत एव प्रलये पुनरविद्यारूपेण सर्वावस्थानम् । यदि दाधिवत् परिणमेत्तदा तस्य पुनर्दुग्धरूपत्ववत् प्रपञ्चस्य मायारूपेणावस्थानं भजेत् । तस्यां यत्संस्काररूपेणावस्थानं तदेव ब्रह्मणि सर्वलयत्वेन व्यवह्रियत इति बोध्यम् ॥ ९३ ॥

तदुक्तं परमार्थसारे—

यद्वद्देहो ऽवयवा मृदेव पार्थो विकारजातयश्च ।
तद्वत्स्थावरजङ्गममद्वैतं द्वैतवद्भाति ॥ इति ।

अवयवातिरिक्तो ऽवयवी यथा असन्, मृद्विकाराश्च यथाऽसन्तो भान्ति तथा नामरूपवत्त्वमसदेव भातीति तदर्थः । द्वैतशब्देन च द्वाभ्यां प्रकाराभ्या-

मितं ज्ञातं द्वीतं तस्य भावो द्वैतमिति व्युत्पत्त्या नामरूपे उच्येते । तद्राहितं चाद्वैतशब्देन । एवं च द्वैतशब्देन प्रपञ्चस्योक्तिरेव नाम्नः प्रकारत्वे मानमित्यपि बोध्यम् । श्रुतिरपि "विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । नाममात्रं व्यवहारमात्रं न तु तन्त्रान्तरेष्विव वस्त्वस्तीति तदर्थः । चेतनसन्निधानमात्रेण देहेन्द्रियमनःसु क्रियादर्शनात् । तस्य प्रेरकत्वादि आरोपितमेव, जनकत्वादि च । तदुक्तं भाष्ये "जीवेश्वरयोरैक्यात्प्रवर्त्यप्रवर्त्तकत्वमनुपपन्नम् । न । अविद्याप्रत्युपस्थापितनामरूपमायावशेन तदुपपत्तेः"। अविद्या संस्काररूपा । माया स्थूलरूपा । न च सन्निधानमात्रेण प्रवर्त्तकत्वे सन्निधिनित्यत्वात्प्रवृत्तिनित्यत्वप्रसङ्ग इति वाच्यम्। सन्निधिनित्यत्वेऽपि मायिकत्वेन परिहारादिति ।

"न तु दृष्टान्तभावाद्" इति सूत्रे ऽपि भाष्ये उक्तम् "यथा स्वयं प्रसारितमायया मायावी कदापि न संस्पृश्यते ऽवस्तुत्वाद् एवं परमात्माऽपि संसारमायया न संस्पृश्यते । मायामात्रं ह्येतद् यत् परमात्मनोऽवस्थात्रयात्मनाऽवभासनं रज्ज्वा इव सर्पादिभावेन" इति । अत्रावस्थात्रयेत्युपलक्षणम् । अनेन हि सर्वस्य जनकत्वादेरवभास एव, न वस्तु किञ्चिदस्तीति स्पष्टमेवोक्तम् । अनादिवासनावशाद् भ्रमविषयमेव तद् "यतो वा"इत्यादिश्रुतयो ऽनुवदन्ति । "यतो वा" इति श्रुत्या सर्वस्य जनकत्वपालकत्वलयस्थानत्वैस्तादृशैरेव ब्रह्मणस्तटस्थलक्षणं बोध्यते । कालत्रयसत्ताप्र-

तिपादनेन तद्बोधितकालत्रयाबाध्यत्वरूपं स्वरूपलक्षणमपि बोध्यते । "सत्यं ज्ञानम्" "आनन्दम्" इत्यादिश्रुतयो ऽपि शुद्धचित्त प्रति "नेह नानास्ति" इत्यादिश्रुतिसहकारेण धर्मत्यागेनाद्वैतं शुद्धं ब्रह्म बोधयन्ति । कणादादयो ऽपि मायिकत्वेन मिथ्याभूतत्वेन ब्रह्मरूपत्वेन च स्वज्ञातस्य प्रपञ्चस्य बोधनीयशिष्याधिकारानुसारेण मायिकत्वाद्यपलप्य ब्रह्मरूपत्वेन ज्ञातपरमाण्वादिभ्यः सृष्टिम्, समवायादीनां पदार्थत्वं चातीन्द्रियदृशा ज्ञात्वोक्तवन्तः, तत्र तदुक्तपदार्थानां शुष्कतर्कबलेनान्यथाकरण तेषां खण्डनं चायुक्तमेव । अस्मत्सु भासमानेष्वर्थेषु ऋष्यनुसारेणैव कल्पनाया औचित्यात् ॥ ९४ ॥

(क०टी०) ह्युक्तौ मानमाह *तदुक्तमिति । असत्यादिरूपप्रकारकज्ञानविशेष्यत्वादित्यर्थः । मायेत्यनेन देहादेरसत्त्वमेव प्रतिभासशरीरमित्युक्तम् । तदेव दृष्टान्तेन द्रढयति *यद्वदिति । देहोऽवयवातिरिक्तो नास्त्येव, अत एव पर स तदतिरिक्तो व्यवह्रियते प्रतिभासते च । यथा च पार्थी -पृथुशब्दः पृथिवीवाची, तत्सम्बन्धिनो विकाराः स्तम्भा नातिरिक्ताः सन्ति प्रतिभासन्ते व्यवह्रियन्ते च तद्वत् स्थावरजङ्गमं ब्रह्मैव न ततो भिन्न, पर तु द्वैतवन्नामरूपवद्भातीत्यर्थः । नतु तत्सत्यमिति भाव । "वाचारम्भण" इतिश्रुते । "ज्ञानस्वरूपम्" इतिस्मृतेश्च । तदाह *अवयवेति । भातीति शेष । ननु कथ द्वैतशब्देन नामरूपाभिधानम् अत आह *द्वैतेति । ननु लोके ऽर्थस्यैव भानविषयतया प्राभिन्नत्वेन तस्य अस्तु प्रकारत्वम्, शब्दस्य तु कथम् अत आह *एव चेति । तथा तस्य व्युत्पत्तौ चेत्यर्थः । तदसत्यत्वे श्रुतिरपि मानमित्याह *श्रुतिरपीति । ननु ब्रह्मणो निष्क्रियत्वेन "पृथग् आत्मानं प्रेरितारं च मत्वा" इति "भोक्ता" इति च प्रागुक्तश्रुत्यादौ कथमात्मनः प्रेरकत्वादिव्यवहारो ऽत आह *चेतनेति । मात्रपदेन तत्र क्रियाव्यवच्छेदः । अत्र मानमाह *तदुक्तमिति । तयोर्भिन्नाधिकरणत्वात्तयोरैक्या-

त्त्वमनुपपन्नमिति यत् तन्नेत्यर्थः । उभयोक्तेर्भेदमाह *अविद्येति । तथा च तयोर्भेदेन तयोर्भेदात्तत्त्वोपपत्तिरिति भावः । *नित्यत्वेति । तथा च प्रलयो न स्यादिति भावः । *मायिकत्वेनेति । तत एव तस्य तत्त्वेन कदाचिद्विभागेनाप्यवस्थानमिति नोक्तदोष इत्यर्थः । अनेन प्रेरकत्वं तस्य तादृशं स्पष्टमेवोक्तम् । जनकत्वादि तादृशमित्यत्रापि समानिमाह *न तु दृष्टान्तेति । 'सूत्रे ऽपि भाष्ये उक्तम्' इति पाठः । परिणामदृष्टान्तमुक्त्वा विवर्तदृष्टान्तमाह *यथेति । *कदापि–कालत्रयेऽपि । *अवस्थेति । अनादिमाययेतिप्रागुक्तजगज्जन्मास्थितिलयरूपावस्थात्रयेत्यर्थः । न्यूनतां निराचष्टे *अत्रेति । तेनावशिष्टभावविकारपरिग्रहः । स्वाशयमाह *अनेनेति । भाष्येणेत्यर्थः । नन्वेव श्रुतिविरोधस्तया हि ब्रह्मणि वास्तवजनकत्वादिप्रतिपादनादत आह *अनादीति । निदिध्यासनपरिपाकवता ज्ञातं ब्रह्मणि तद् भ्रमस्वरूपमेव जनकत्वादि अन्यस्य वैराग्यसिद्धये ता अनुवदन्तीत्यर्थः । प्रसङ्गादाह *यतो वेतीति । अस्य बोधद्वयेऽन्वयः । *तादृशैरेव–भ्रमरूपैरेव । *तटस्थेति । ज्ञेयतानवच्छेदकं सद् यद् इतरव्यावृत्तिबुद्धिजनकं तत् तटस्थलक्षणम् । यथा शाखोर्ध्वदेशत्वं चन्द्रस्य, काकवत्त्वं च देवदत्तगृहस्य । नहि तत्र तेन रूपेण ज्ञेयता विवक्षिता प्रष्टुः । तच्चात्र सर्वोपादानत्वम् । ज्ञेयतावच्छेदकं सद्यद् इतरव्यावृत्तिबुद्धिजनकं तत् स्वरूपलक्षणम् । यथा सत्यज्ञानत्वादि । यद्यपि निर्धर्मके ब्रह्मणि तदपि श्रुतिकल्पितमेव, तथापि तस्य श्रवणमननपरिपाके मिथ्यात्वनिश्चये ऽपि प्राक् तदभावेन तेन रूपेण ज्ञेयत्वाक्षतिः । अन्यस्य तु श्रवणमात्रेण तत्त्वनिश्चय इति विशेषस्तदाह *कालेति । तथैवेति भावः । *तद्बोधितेति । कालत्रयसत्ताबोधितेत्यर्थः । अन्यदपि प्रसङ्गादाह *सत्यमिति । "आनन्दम्" इतिश्रुत्यन्तरम् । शुद्धमिति श्रवणमननपरिपाकेन तस्य मिथ्यात्वनिश्चये निर्धर्मकस्याखण्डस्यैतच्छ्रुतितात्पर्यविषयस्य निदिध्यासनाविषयतेति भावः । कणादादितात्पर्यविषयभूतमपीदमेवेत्येकवाक्यतैवेत्याह *कणादेति । आदिना गौतमादयः । आदिना मिथ्याभूतत्वादि । परमाण्वादेर्नित्यत्वायाह *ब्रह्मेति । आदिना तन्मात्रादयः । अन्येषां तत्त्वस्य सर्वसाधारणत्वात्तेषां तत्त्वस्य तैरेवाङ्गीकारादाह *समेति । आदिना विशेषादयः । प्रसिद्धत्वाद्धि

अस्योक्ति । *तत्र–तथा सति । श्रुत्यादिविरुद्धत्व शुष्कत्वम् । तन्नत्यस्यार्थ सूचयन्नाह *असत्स्विति । विषयसप्तमी ॥ ९४ ॥

तदुक्तं परमार्थसारे ॥

यद्यत्सिद्धान्तागमतर्कादिषु भ्रमन्ति रागान्धाः ।
अनुमोदामस्तत्तत्तेषां सर्वात्मवादधिया ॥ इति ।

सिद्धान्तप्रतिपादकेषु पाञ्चरात्राद्यागमादिषु भ्रमन्ति 'अयमेव सिद्धान्तः समीचीनः' इति भ्रमन्ति चित्तस्वास्थ्यं च न लभन्ते। तत्तत् तेषां मतं 'सर्वमात्मा' इति वादे या धीस्तया ऽनुमोदाम इति तदर्थः। नचैवंरीत्या सर्वस्य चेतनत्वे सर्वत्र चेतनकार्यं कुतो नेति वाच्यम् । चेतनसन्निधानेन तत्तत्कार्ये जननीये सेन्द्रियद्रव्यस्य कारणत्वात् । तदुक्तं चरके. पतञ्जलिना "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्" इति। अत्र ग्रन्थे अग्रे पश्चात्क्वचिदाधुनिकग्रन्थानुसारेणास्ति लिखितामिति न पूर्वापरविरोधो ऽत्रेत्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ॥ ९५ ॥

(क०टी०)अत्र मानमाह *तदुक्तमिति । ननु "ब्रह्मैकत्वविज्ञान मोक्षसाधनम्" इति भगवान्पतञ्जलि., "प्रकृतिपुरुषविज्ञानं तथा" इति साङ्ख्यः, "ईश्वराभिन्नात्मज्ञानाद्' इति योगगौतमादय । किञ्च 'ब्रह्मैव सर्वजगत्कारणम्' इति आद्य, 'प्रकृते.' इति सांख्ययोगौ, 'परमाणुभ्य' इत्यन्ये । तत्र किम्मतमुपादेयमित्यत्राह*यद्यदिति । *सिद्धान्तेषु—सिद्धान्तवद्भासमानेषु । *आगम.–पाञ्चरात्रादि' । *तर्कादय.–न्यायकाणादसांख्ययोगपूर्वमीमांसा । तेषु भ्रमपरिगृहीतभेदादिप्रतिपादकेषु शास्त्रेषु प्रतिपादितार्थेषु यद्यत् प्रति यद्यदर्थविषये जगत्कारणमुक्तप्रकारेषु तत्तच्छास्त्रोक्तेषु यथाश्रु तेष्वर्थेषु रागान्धा जना भ्रमन्ति 'इद मतं समीचीनम्' इति भ्रमन्ति। चित्तस्वास्थ्य च न लभन्ते रागान्धत्वादेव । वय तु तेषां तत्त-

न्मत "सर्वमात्मैव" इति ये वदन्ति तेषां ज्ञानेनानुमोदाम इत्यर्थः । सर्वस्यात्मरूपत्वेन जगत्कारणमात्मैव, प्रकृतिपुरुषविज्ञानाद्यपि आत्मज्ञानमेव। स्थूलारुन्धतीन्यायेन परंपरया ब्रह्मप्रतिपादकत्वाद्वाऽनुमोदाम इति भाव । "सर्वे वेदा यत्पदमामनन्ति" इति श्रुति.,

रागान्धा हि जना सर्वे न पश्यन्ति हिताहितम् ।
तस्माद्राग न कुर्वीत यदीच्छेदात्मनो हितम् ॥ इति ।
वेदे रामायणे चैतद्भारते च विशेषतः ।
आदावन्ते च मध्ये च हरि· सर्वत्र गीयते ॥ इति च—

स्मृतिः । येन सकलपुराणशास्त्राणि गृह्यन्त इति तदाह *सिद्धान्तेति । *एवरीत्या-उक्तप्रकारेण । *सर्वत्र-घटादावपि । कारणसत्ताया कार्याव्यभिचारित्वादिति भावः । तत्र मानमाह *तदुक्तमिति । *सेन्द्रियमिति । अन्यथा प्रागुक्तरीत्या सर्वस्यापि चेतनत्वेनैतदसङ्गतिः स्पष्टैवेति तदेव तात्पर्यमस्येति भाव· ।

नन्वत्र द्रव्यस्य नित्यत्वमुक्तम् अग्रे चानित्यत्व वक्ष्यमाणमिति मिथो विरोधः । एवमत्र ब्रह्मण एव सर्वसृष्टिरुक्ता पूर्वं तु बिन्दोरिति तथाऽत आह *अत्रेति । *पश्चात्-पश्चादपि । *अस्तीति । वर्त्तमानसामीप्ये लट् । *लिखितमिति भावे क्तः । तथा च मतभेदाशयकत्वान्न विरोध· । उपसंहरति *इत्यलमिति । *प्रकृतम्-अन्तस्थस्यैव बाह्यरूपेणोक्तप्रनाड्या भानमित्येतत् ॥ ९५ ॥

**चित्तस्य विषयाकारपरिणामरूपा[1] वृत्तिश्च इन्द्रियेण सहैव। अत एव रसनेन्द्रियगतपित्तान्वयेन गुडः कटुरिति, नयनगतपित्तान्वयेन च शङ्खः पीत इत्याद्युपपद्यते। सा च भ्रमप्रमोभयरूपा पुरुषे प्रतिबिम्बते इति पुंसो विद्यमानवृत्तिग्राहकत्वम् । प्रतिबिम्बो ऽत्र[2] बुद्धेः परि-**

---

१ 'रूपा वृत्ति' इति पाठ· कुञ्जिकाटीकापुस्तकद्वितये मूले नोपलभ्यते ।

२ ऽत्र 'पुरुषस्य तदवच्छेद्यत्वमेव' नतु । इति पाठः कसञ्ज्ञके मूलपुस्तके ।

**णामविशेष एव न त्वादर्शादाविव प्रतिबिम्ब उभयोरपि नीरूपत्वादान्तरत्वाच्चेत्यन्यत्र निरूपितम् ॥९६॥**

(कुं.टी.)*इन्द्रियेण सहैव–इन्द्रियसाहितस्यैव । तेनेन्द्रियदोषसाहित्याच्चित्तस्य सदोषस्यैव परिणामः । यत्तु[1] दोषविशेषाजन्यज्ञानं प्रत्येव बाधज्ञानं प्रतिबन्धकमिति । तन्न । पित्ततारतम्येन पीतत्वतारतम्यस्यानुभवसिद्धतया पित्तस्यैव हेतुत्वावश्यकत्वात् । ननु पीतशङ्खाभावात्कथं तद्रूपा वृत्तिरित्यत आह *सा चेति । सा च वृत्तिश्च । नन्विदंवृत्तेः रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे विशिष्टज्ञानत्वाभावाद्भ्रमत्वासिद्धिरत आह *भ्रमप्रमेति । शङ्खांशे प्रमा पीतत्वांशे भ्रमः । वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेनैव भ्रमत्वप्रवाद इति भावः । [2]प्रतिबिम्बत इति । अयं भावः–बुद्धिपुरुषयोस्सम्बन्धो नाम भोग्यभोक्तृभावरूपः सन्निधिः । नहि व्यापकयोर्नित्ययोश्च तयोरन्यः सम्बन्धोऽस्ति । अयमेव छायापत्तिशब्देन प्रतिबिम्बशब्देन चोच्यते । *वृत्तिग्राहकत्वमिति । वृत्तिप्रकाशकत्वम् । [3]नहि स्वयमप्रकाशिता बुद्धिः परं प्रकाशयितुमर्हति । सा तु न स्वप्रकाशा द्रष्टृत्वदृश्यत्वयोर्विरोधात् । *परिणामविशेष इति । परिणामस्य प्रतिबिम्बनं नाम पुरुषोपरागः । आ[4]त्मनो ज्ञानात्मकत्वात्पुरुषे प्रतिबिम्ब उक्तपरिणामविशेषः अभिमानात्मकः साक्षिभास्यः । अस्मादेव प्रतिबिम्बरूपाद्दो-

१ 'यत्तु–त्वात् अय पाठ· कु टी पु. खसञ्ज्ञके नास्ति ।
२ प्रति–च्यते पाठोऽय कु टी कपु नास्ति ।
३ 'नहि–रागः' कु टी. कपु नास्ति ।
४ आत्म–दि कु टी खपु नास्ति ।

यच्चित्तपुरुषयोरेकताभ्रमः 'अहं सुखी' 'पश्यामि' इत्यादिः । साङ्ख्यादिमतं निराकरोति *नत्विति। *आदर्शादाविति । तत्र हि प्रतिहतचक्षुर्ग्राह्यत्वं प्रतिबिम्बत्वम् । आदर्शो दर्पणम् । तत्र हि मुखच्छायासादेश्याच्छायान्तरोद्भवो भवति । *उभयोः–बुद्धिपुरुषयोः । *नीरूपत्वादिति । समलस्य हि पदार्थस्य निर्मले प्रतिबिम्बो भवति दर्पणे मुखस्येव ॥ ९६ ॥

(क० टी०) तदेवाह– *चित्तस्येति । *अत एव–तत्सहितस्यैव तदङ्गीकारादेव । अन्यथा चित्तस्य शङ्खपीतत्वाद्याकारतायां मानाभावेन तदनुपपत्तिः स्पष्टैव । एतावतैव चक्षुरादीनां करणत्वव्यवहारः । यद्यपि ज्ञानोत्पत्तिप्रक्रिया ऽत्र शास्त्रे च सूत्रकृदाद्यनुक्ता, वेदान्तशास्त्रे च सूत्रकृदनुक्ता तथापि योगसूत्रभाष्ये वेदान्तसूत्रकृदुक्तत्वात्सैवात्रापि तत्रैव बाध्येति ध्वनयन् तामाह *साचेति । वृत्तिरित्यर्थः । विषयेन्द्रियसंयोगेन क्षारेण वस्त्रमालिन्यस्येव बौद्धतमसो ऽपसारणे निर्मले वाससि कुसुम्भयोगात्तद्वर्णतेव निर्मले बुद्धिसत्त्वे विषयाकारता भवति सैव बुद्ध्यवस्था वृत्तिरित्युच्यते । सा च प्रमाणम्, अनुभवाख्यफलायोगव्यवच्छिन्नत्वादिति भाव । चिज्जडांशभेदेनाह *भ्रमेति । *पुरुष विषयावच्छिन्ने इति । एतावतैव स्वसम्बद्धां विषयोपरक्तां बुद्धिवृत्तिं चेतनो ऽवभासयतीत्यर्थः । तथा च योगसूत्रं "सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयो प्रत्ययाविशेषो भोग" इति । "चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" इति च । "सत्त्व चित्तम् । अत्यन्तासंकीर्णत्व च जड़त्वाजड़त्वपरिणामित्वापरिणामित्वादिभिः । प्रत्ययाविशेषश्च प्रतिबिम्बरूपेण । प्रतिसंक्रमः–परिणामः । अप्रतिसंक्रमाया–बुद्ध्या असङ्गायाः । तदाकारापत्ति–बुद्धिसमानाकारापत्तिः । स्वबुद्धिसंवेदन स्वबुद्धिवृत्तिज्ञानम् । बुद्धिवृत्त्याविशिष्टः पुरुष" इति तद्भाष्यम् ।

संलक्ष्यते यथा रक्तः केवल स्फटिको जनैः ।
रञ्जकाद्युपधानेन तद्वत् परमपुरुष इति,

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुवृत्तयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ इति च

स्मृतिश्च । ननु को ऽसौ प्रतिबिम्ब· ? । न तावन्मुख्यः प्रतिबिम्ब· । चाक्षुषे चाक्षुषस्यैव प्रतिबिम्बस्वीकारात्, प्रतिबिम्बस्य तुच्छतया तत्र बन्धानुपपत्ते·, निरवयवे ऽवच्छेदासंभवाच्च । अत एव कस्तूरीप्रतिबिम्बे न गन्धोपलब्धि । प्रतिध्वनिस्तु न प्रतिबिम्बः किंतु ध्वनिजन्य आकाशगुणः । मूलध्वनयस्तु पृथिव्यादिगुणा एव । एतेन प्रतिबिम्बोऽत्र बुद्धे परिणामविशेष एवाभिमानात्मकः साक्षिभास्य इत्यपि निरस्तम् । अत आह *प्रतिबिम्बोऽत्रेति । तद्वृत्ति उपाधीनां सम्बन्धविशेष एवाध्यासिकः प्रतिबिम्ब इति, अवच्छेद इति च व्यवहार्य इत्यर्थ । एवव्यावर्त्यमुक्तमेवाह *नन्विति । *उभयो –वृत्तिपुरुषयो· । प्रतिध्वनौ तत्त्वव्यवहर्तृमतेनाह *आन्तरेति । न तु बाह्य इति न दोष ॥९६॥

पुरुषो ऽपि वृत्तिसम्बन्धात्तद्गतविषयाकारभाक् । वृत्तिश्च तत्सम्बद्धा तत्स्वरूपप्रकाशभाक् *स्वभावात्। तथा च पतञ्जलेः सूत्रे "तदा द्रष्टुः स्वरूपेऽवस्थानम्" । तदा, समाधौ । "वृत्तिसारूप्यमितरत्र" इति । "व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः" इति तद्भाष्यम् । पुरुषस्य वृत्तिश्च वृत्त्यवच्छिन्नः पुरुष एव । सारूप्यात्तत्र वृत्तित्वव्यवहारः । तत्सारूप्यात्पुरुषो ऽपि दुःखादिमानिव अकर्ताऽपि कर्तेव अभोक्ताऽपि भोक्तेव यद्भवाति स एव पुरुषस्य भ्रमात्मको भोगः, तद्धानिरेव च मोक्ष इति भावः ।

---

* स्वभावादिति पाठ खसञ्ज्ञकमूलपुस्तके कुञ्जिकायुतपुस्तकद्वितये च नोपलभ्यते ।

१ 'तथा च–व्यवहार इत्यर्थ·'अय पाठ हित्वैक कसञ्ज्ञक मूलपुस्तकम् अन्येषु उपलब्धेषु पुस्तकेषु नोपलभ्यते । उपलब्धकुञ्जिकाटीकापुस्तकयोरेतद्व्याख्यानाऽनुपलम्भेऽपि केवल कलायां व्य.ख्यात इत्ययमत्रोपन्यस्त· ।

अवच्छेदकस्थले प्रतिबिम्बव्यवहारस्तु प्रतिबिम्बसादृश्यात् । यथा रव्यादिप्रतिबिम्बं सोपाधि जलादिधर्मान् चाञ्चल्यादीन् गृह्णातीव तथा अवच्छेद्यमपि तदन्तर्भावात्तद्धर्मानिति ॥ ९७ ॥

(कुं०टी०)*वृत्तिसंबन्धात्–वृत्तिप्रतिबिम्बात् । अयम्भावः-अयःपिण्डस्य दग्धृत्वाभावे ऽपि दग्धृत्वाश्रयवन्हितादात्म्याध्यासाद् 'अयो दहति'इति यथा व्यवहारः तथा विषयाकारपरिणाम्यन्तःकरणैक्याध्यासादात्मनो ऽपि सविषयकत्वमिति । *तद्गतेति । वृत्तिगतेत्यर्थः । *तत्सम्बद्धेति । तत्सम्बन्धात्–पुरुषसम्बन्धात् पुरुषचैतन्याद् वृत्तेः प्रकाश इत्यर्थः । "सत्यं ज्ञानम्" इत्यादिश्रुत्या मुख्यं ज्ञानं ब्रह्मैव, वृत्तेस्तु जडान्तःकरणधर्मत्वेन जडत्वाद्गौणमेव ज्ञानत्वम् । जपाकुसुमस्फटिकयोरिव च सन्निधानादभेदग्रहे सति पुरुषधर्मो बुद्धावध्यस्यत इति भावः ॥ ९७ ॥

( क० टी० ) ननु विषयावच्छिन्ने पुरुषे ऽवभास इति, वृत्तेः प्रकाशकत्वमिति चानुपपन्नम्, विषयाकारताया बुद्धौ सत्त्वात् प्रकाशकत्वस्य चेतने एव सत्त्वाच्च अत आह *पुरुषोऽपीति । *तद्गतेति । तद्वृत्तिगतेत्यर्थः । *तत्सम्बद्धा–जायमानैव चेतनसम्बद्धा । अत्र हेतुमाह *स्वभावादिति । अत्रार्थे मानमाह *तथाचेति । नन्वसम्प्रज्ञातावस्थे चित्ते विषयाकारवृत्तिविषयकबोधस्वरूप. पुरुष. केन रूपेण तिष्ठति । किं व्युत्थानवत् प्रकाशरूपः किं तु वृत्त्याख्यदृश्याभावान्न पश्यति, अथवा दशादिक्षये दीपवन्नश्यतीत्याशङ्कायामाह *तदा द्रष्टुरिति । तदेत्यनेन योग्यताबलात्सर्ववृत्तिनिरोधः परामृश्यते । *तदा–असप्रज्ञातयोगकाले । *द्रष्टु –चितिशक्तेः पुरुषस्य । *स्वरूपे–निर्विषयचैतन्यमात्रे । आरोपितशान्तघोरमूढरहिते प्रकाशे ऽवस्थानमित्यर्थः । यथा जपापाये स्फटिकस्य अलोहिते स्वस्वरूपे ऽवस्थानम् । एवं च तदा वृत्त्यात्मकदुःखाभावः पुरुषार्थ इति बोध्यम् । पुरुषस्य चैतदेव स्वरूपम्, न तु बु-

द्धिवृत्तिविषयकबोधः । तस्यौपाधिकत्वात् । उपाधिनिवृत्तावप्युपहितानिवृत्तेर्न तन्नाशप्रसङ्ग । तत्र चरमासम्प्रज्ञाते ऽशेषसंस्कारक्षयात् चित्तेन वृत्तीनां निरोधे औपाधिकरूपनिवृत्तावात्यन्तिकं स्वस्वरूपावस्थानं मोक्ष इति दिक् । एतेन पुरुषस्वरूपमितरत्रेत्यस्य प्रतियोगिरूपं चोक्तं तदाह *समाधाविति । असम्प्रज्ञातयोगकाले इत्यर्थः । ननूत्थानदशायामप्यात्मा एकरूप एव, तदा तु खित्वाद्यङ्गीकारे परिणामित्वापत्तिः । तथारूपश्च नानुभूयते कुत इत्यत आह *वृत्तीति । *इतरत्र—व्युत्थाने । चित्तेन सह द्रष्टुर्वृत्तौ तदवच्छेदेन सारूप्यमित्यर्थः । व्युत्थाने हि बिम्बप्रतिबिम्बयोर्बुद्धिपुरुषवृत्त्यो सारूप्यमित्यर्थः । तदुक्तं भाष्ये इत्याह *व्युत्थान इति । वृत्तयश्च दीपस्य शिखा इव भङ्गुराश्चित्तस्यावस्था परिणामा द्रव्यरूपास्त्रिगुणकार्यत्वात्सुखदुःखमोहाश्रयत्वाच्छान्तघोरमूढाख्या स्वसम्प्रयुक्तार्थाकारा । तद्विलक्षणाश्च पुरुषस्यापि, तस्य दर्शिनविषयत्वात् । विषयदर्शनं च स्ववृत्त्यारूढविषयस्य प्रतिबिम्बरूपेण चिति आधानम् । एवं च तत्प्रतिबिम्बान्येव पुरुषस्य वृत्तयः । प्रतिबिम्बनमपि तासु स्वीयत्वाभिमानः । नैतावता तस्य कूटस्थत्वहानिरिति बोध्यम् । सापि नातिरिक्ता । राहोः शिर इतिवत् षष्ठीत्याह *पुरुषस्येति । ननु कथं स वृत्तिरत आह *वृत्तीति । *तत्र—पुरुषे । तत्फलितमाशयमाह *तत्सारूप्यादिति । तादृशवृत्तिसारूप्यादित्यर्थः । *भोग इति । दुःखाभ्यवहरणरूपो दुःखभोग इत्यर्थः । *तद्धानि—तादृशदुःखहानिः पुरुषस्येति भावः । ननु तादृशावच्छेदे कथं प्रतिबिम्बव्यवहारो ऽत आह *अवच्छेदेति । सादृश्यमुपपादयति *यथेति । *अवच्छेद्यम्—पुरुषरूपम् । *तदन्तर्भावात्—उपाध्यन्तर्भावात् ॥ ९७ ॥

तथाच तृतीये द्वितीयपादे व्याससूत्राणि—“अत एव चोपमा सूर्यकादिवत्”, “अम्बुवदग्रहणात्तु न तथात्वम्”, “वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्” इति । अत एव यतोऽयमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः अतस्तस्योपाधि-

निमित्तामपारमार्थिकीं विशेषवत्तामाश्रित्य श्रुतिषु प्रतिबिम्बोपमोपादीयते इत्यर्थः । नन्वेवमपि प्रतिबिम्ब एव अस्तु अत आह–अम्बुवदिति । जलवद् उपाधीनां पृथग्विप्रकृष्टदेशानां ग्रहणाभावेन न तत्र प्रतिबिम्बत्वमित्यर्थः । केन तर्हि धर्मेण तदुपमा तत्रेत्यत आह–वृद्धिह्रासेति । जलगतं हि रव्यादिप्रतिबिम्बं जलवृद्धौ वर्द्धत इव, तद्ध्रासे ह्रसतीव, तच्चलने चलतीव, तद्भेदे भिद्यत इवेति जलधर्मानुविधायि, न तु परमार्थतः सूर्यस्य तथात्वम्, एवं परमार्थतोऽविकृतमेकरूपमपि देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीनित्येव उभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्याद् अविशेषः प्रतिबिम्बत्वेनापि ब्रह्मण उपाधिषु व्यवहार इत्यर्थः ॥ ९८ ॥

(क० टी०) अत्र मानमाह *तथाचेति । तृतीये अध्याये सूत्राणि त्रीणि । *निर्विशेषो ऽयमिति । "अरूपवदेव हि तत्प्रधानत्वाद्" इत्यादिपूर्वसूत्रैस्तथा प्रतिपादितत्वादित्यर्थः । *विशेषेति । भेदमित्यर्थ । जीवेश्वरयोर्वास्तवोऽभेद उपाधिकृतश्च भेद इति भावः । *प्रतीति । सूर्यकादीत्यादिः । प्रतिकृतौ कनिति भाव । तथाच श्रुतिः–

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देव क्षेत्रेष्वेवमजोऽयमात्मा ॥ इति,
एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवद् ॥ इति च ।

ज्योतिःस्वभावो विवस्वानेको ऽपि तत्तत्पात्रगता भिन्ना अपोऽनुगच्छन्बहुधा क्रियते एवमयमात्मा देव. स्वप्रकाशो ऽतः कूटस्थनित्य एको ऽपि भिन्नेषु क्षेत्रेष्वनुगच्छन् उपाधिना भेदरूपः क्रियत इत्यर्थ । औपाधिकभेदे ऽय दृष्टान्तः, यथा बिम्बप्रतिबिम्बयोरुपाधिकृतो भेदो नानात्व च वास्तवो ऽभेदस्तथा जीवेश्व-

योरपीति । नैतावता जीवानां प्रतिबिम्बत्वप्रत्याशा कार्या । *एवमपि–तस्य तत्त्वे ऽपि । *एवेति । अयमात्मेत्यर्थ । दृष्टान्तवैषम्यात् । तथाच कथ तदुपमेति भाव । *जलवदिति । तत्रोपाधेरम्बुन. पृथक् ग्रहणाद् गृहीतभेदेन तत्र भेदव्यवहारो यथेत्यर्थ । *उपाधीति । विप्रकृष्टदेशानामुपाधीनामिवान्त.करणादीनां पृथक् ग्रहणाभावेन भेदव्यवहारस्यायुक्तत्वादित्यर्थ । अहमित्येव हि बुद्धिभानमिति भाव. । *तत्र–आत्मनि । जलरूपोपाध्यन्तर्भावादाह *जलगतमिति ॥ ९८ ॥

**वृत्तिजन्यफलं च वृत्तिद्वारा शुद्धचेतने तस्य प्रतिबिम्बनम्, एतदेव प्रकटता । तत्सम्बन्धाच्च परसमवेतक्रियाफलाश्रयत्वाद्विषयस्य कर्मत्वम्, अन्तःकरणद्वारा पुरुषस्य वृत्त्याश्रयत्वात्कर्तृत्वम् । जानातेश्च वृत्तिविशेषे एव शक्तिः । तत्र 'दण्डी' इति ज्ञाने वृत्तिस्थदण्डाऽऽकारेण यः पुरुषस्य सम्बन्धः सा प्रकारता, दण्डत्वनिष्ठश्च सोऽवच्छेदकत्वाख्यप्रकारता, संयोगनिष्ठः स सांसर्गिकी विषयता, पुरुषनिष्ठस्स विशेष्यता । तासां परस्परमवच्छेद्यावच्छेदकभावः परेषामिवास्माकमपि । विषयतात्वं च वृत्त्यनुयोगिकचेतनसम्बन्धाविशेषानिष्ठं सम्बन्धविशेषत्वमखण्डं यत्सम्प्रतिपन्नं तदेव ॥ ९९ ॥**

(कुं०टी०) घटं जानातीत्यादौ धात्वर्थो व्यापारो वृत्तिरूपं ज्ञानम्, तज्जन्यफलं प्रकटतेत्याह *वृत्तिजन्येति । *वृत्तिद्वारेति । वृत्तौ सत्यामेव प्रतिबिम्बनादिति भावः । *शुद्धचेतने–ज्ञानस्वरूपे आत्मनि । *तस्य–विषयस्य । *तत्सम्बन्धाच्चेति । वृत्तिसम्बन्धात्तु पुरुषसमवेतव्यापारजन्यफलाश्रयत्वात्कर्मत्वम् । परसमवेता क्रियात्र वृत्तिरेवेत्यर्थः । *कर्तृत्वमिति । अन्तःकरणप-

रिणामरूपवृत्तेः पुरुषे ऽध्यासात्कर्तृत्वमित्यर्थः। ननु अहमर्थस्यैव ज्ञातृत्वेनात्मनस्तदभावाज्जडत्वापत्तिरिति चेन्न । तस्य ज्ञानरूपत्वेनाजडत्वात् । मोक्षदशाया विषयानवभासात्कथं ज्ञानात्मकत्वमिति चेद् । अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वात् । ननु ज्ञानात्मकस्य पुरुषस्य ज्ञानाश्रयत्वाभावाज्जानातीत्यादौ कर्तृत्वानापत्तिरत आह *जानातेश्चेति । दण्डीति ज्ञाने दण्डांशे प्रकारत्वमुपपादयति *वृत्तिस्थेति । विषयतानां ज्ञाननिरूप्यत्वाद् वृत्तिस्थेत्युक्तिः । वृत्तिसंयुक्तस्यैव दण्डादेः प्रत्यक्षाद् वृत्तिस्थत्वम् । तत्र दण्डनिष्ठो यः सम्बन्धः स एव प्रकारता । *वृत्त्यनुयोगिकेति । वृत्तिनिष्ठो यश्चेतनस्य सम्बन्धः स एवात्र विषयता । अत एव ज्ञानस्य विषयेण सम्बन्धो विषयता । सा च ज्ञाननिष्ठा विषयविशिष्टज्ञानस्वरूपेति बौद्धाधिकारदीधितिः। एवं च विषयस्य नष्टत्वेऽपि ज्ञानस्य विद्यमानत्वाद्भवति विषयता । तद्धर्मो विषयतात्वमित्यर्थः। *अखण्डमिति । अन्यथा विषयतानां प्रकारताविशेष्यताभेदेन भिन्नतया घटत्वविशिष्टबुद्धिं प्रति घटत्वविषयकज्ञानहेतुताया मेकस्या निवेशे ऽन्यविषयताशालिज्ञानाद्बोधो न स्यात् । तस्माद्विषयतात्वमेकमूरीकर्तव्यमित्यर्थः ॥ ९९ ॥

(क० टी०) वृत्तिजन्यमपि चैतन्य फलमपि न ततोऽतिरिक्तमित्याह *वृत्तिजन्यमिति। *तद्वत्–तदपीत्यर्थ[1]। *तस्य–विषयस्य । पराभिमतातिरिक्तत्वव्युदासायाह *एवेति ।अथ भावः–अन्तःकरणस्य सावयवत्वाद्विषयेन्द्रियसंयोगादौ तत्परिणामो वृत्तिरूपो नयनादिद्वारा निर्गत्य विषय प्राप्य तदाकारो भवति। तथा भूत्वा तद्विषयविषयक तद्विषयावरकमज्ञान निवर्तयति । ततस्तद्वृत्त्युपहितत्वञ्चेतने

---

१ अत–र्थः । कु टी,कपु नास्ति ।

त्तिः, अतउक्तम् *तत्तद्विषयविशिष्टेति। तथा च घटांशे ज्ञानस्य प्रकारतारूपत्वं भूतलांशे विशेष्यतारूपत्वमिति भावः। अत्र ज्ञानमितीच्छाया उपलक्षणम्, अन्यथा ज्ञानद्वारा इच्छाया विषयतास्वीकारे ज्ञानोपरमे सविषयकत्वं न स्यात्।

यत्तु घटादिविषयकज्ञानजन्यत्वमेव इच्छाया विषयतेति। तन्न। ईश्वरेच्छाया नित्यत्वेनाव्याप्तेः।

वस्तुतस्तु तद्व्यक्तित्वेन सम्बन्धत्वं न सम्बन्धित्वमिति रूपभेदस्यावश्यकतया विषयताया एव ज्ञानतोऽतिरिक्तत्वं न्याय्यम्।

*त्रितयेति। विशेष्यताप्रकारतासंसर्गतेत्यर्थः। ननु वृत्तिविषयस्यैव घटादेर्बुद्धिविषयत्वाद् बाह्यस्य कथं तद् अत आह *अविभागेनैवेति। तयोरेकत्वादित्यर्थः ॥ १०० ॥

(क० टी०) एव स्वमते लाघवमुक्त्वा परमते गौरवमाह *न्यायेति। विशेष्यतादिरूपविषयताना केवलविषयस्वरूपत्वे, केवलज्ञानस्वरूपत्वे वा दोषस्योक्तत्वात्प्राचां मतेनाह *नत्तदिति। तत् तासां स्वरूपमित्यर्थ.। नव्यमतेनाह *अतीति। *तत्-विशेष्यतादि। ननु बौद्धस्यैव शक्यत्वे बाह्यबोधानापत्तिरत आह *तत्तद्वृत्त्येति। एव विषयिता तत्र नातिरिक्तेत्याह *तादृशेति। तदविभागवदित्यर्थ ॥ १०० ॥

एवं पुरुषोऽपि वृत्त्यारूढः पुरुषे प्रतिबिम्बत इति "अहम्" इति ज्ञानोपपत्तिः। 'आत्मानमात्मना-जानामि' इत्याद्युपपत्तिश्च। 'अहम् इति जानामि' इत्याद्युपपत्तिश्च। बिम्बप्रतिबिम्बयोर्वास्तवभेदाभावात्स्वातिरिक्ताप्रकाश्यत्वरूपं स्वप्रकाशत्वं पुरुषस्योपपन्नम्। एतत्सर्वं साक्षिभास्यमिति तन्निष्ठप्रकारत्वावच्छिन्नतद्वद्विशेष्यताकत्वरूपं प्रामाण्यम-

पि ज्ञानस्य स्वतोग्राह्यमेव । औत्तरकालिकबाधे तु तदंशे भ्रमत्वकल्पनम् । यथा च प्रदीपो रूपादि प्रकाशयन्नात्मानमपि प्रकाशयति एवं ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति । एवं शब्दोऽपि । ज्ञानशब्दप्रदीपानां त्रयाणामपि स्वप्रकाशत्वात् ॥१॥

(कुं० टी०) *पुरुषे इति । चिच्छायासम्बन्धतो बुद्धिसत्त्वे पुरुषच्छायाऽऽविर्भवतीत्यर्थः । वृत्तिविषयस्य पुरुषस्यापि घटादिवद् दृश्यत्वादिति भावः । *ज्ञानोपपत्तिः—आत्मनो विज्ञानविषयत्वोपपत्तिः । आत्मानं जानातीत्यादौ एकस्यैव कर्तृत्वकर्मत्वोपपत्तिरित्यर्थः ।

ननु आत्मनो ज्ञानकर्मत्वस्वीकारे अनात्मवत् स्वयंप्रकाशत्वानुपपत्तिः, 'न जानामि' इत्यनुरोधेनाज्ञातत्वस्वीकारे च स्वयञ्ज्योतिष्ट्वक्षतिः इति चेत् । सत्यम् । 'अन्यदेव तद्विदितादथो ऽविदितादधि' इति श्रुत्या तस्य ज्ञाताज्ञातविलक्षणत्वात् । 'आत्मानमहं जानामि' इत्यनुभवस्य का गतिरिति चेद् । शुद्धस्यैवाऽऽत्मनः स्वप्रकाशत्वात् । यद्यपि ज्ञानेच्छादीनां सविषयकत्वं स्वभावः तथापि सविषयत्वं विषयसम्बन्धः सच न तात्त्विकः किन्तु आध्यासिकः । उपाधिविशिष्टस्य तु ज्ञानकर्मत्वे ऽप्यविरोधः ।

तदाह *आत्मानमित्यादि । अन्तःकरणविशिष्टं चैतन्यं जीवः, तदुपहितः साक्षी । तत्रेन्द्रियाणां तज्जन्यज्ञानानां चानुसन्धाता यद्यपि प्रमातैव तथापि प्रमातुरप्यनुसन्धानार्थं साक्ष्यभ्युपगमः । साक्षी तु ब्रह्माभिन्नः स्वप्रकाशतया निरपेक्ष एव स्वपराविषयाननुसन्धत्त इति वृत्तिरूपं ज्ञानं तद्गतप्रामाण्यं च विषयः । ननु पुरुषस्यापि ज्ञानाविषयत्वे

स्वप्रकाशत्वभङ्ग इत्यत आह *बिम्बप्रतिबिम्बयोरिति। स्वेनैव प्रकाशो ऽस्य स्वप्रकाशः।

अयं भावः—घटादीनां प्रकाशको दीपो यथा स्वप्रकाशे दीपान्तरं नापेक्षते एवमर्थप्रकाशकं ज्ञानमपि स्वप्रकाशे ज्ञानान्तरं नापेक्षते। जडवैलक्षण्यं हि ज्ञानत्वमिति न प्रकाश्यत्वेऽपि घटादिवज्जडत्वप्रसङ्गः। अर्थप्रकाशनकाले च प्रकाशकस्याप्रकाशेऽर्थसंवेदनमेव न स्यात्। नहि अप्रकाशितो दीपो घटादिकं प्रकाशयतीति।

*साक्षिभास्यम्—साक्षिवेद्यम्। *तन्निष्ठेति। घटत्वनिष्ठप्रकारत्वावच्छिन्नघटत्ववद्विशेष्यकत्वामित्यर्थः। *स्वतोग्राह्यमिति। स्वतोग्राह्यत्वं च दोषविशेषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्। स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यत इत्यर्थः। इच्छाप्रामाण्यस्य स्वतोग्राह्यत्वाभावादुक्तम् *ज्ञानस्येति। ननु प्रामाण्यस्य स्वतोग्राह्यत्वे ऽनभ्यासदशोत्पन्नज्ञाने ऽप्रामाण्यसंशयानापत्तिरिति चेद्। सत्यम्। तत्र संशयजनकदोषेण प्रामाण्यस्याग्रहात्। अत एव दोषविशेषाभावे सतीत्युक्तम्। अत एवाह *औत्तरकालिकेति। 'इदं ज्ञानमप्रमा' इति बाधानिश्चये तु पूर्वज्ञानस्य भ्रमत्वं कल्प्यत इत्यर्थः। *आत्मानमपीति। एवं च "घटमहं जानामि" इत्यत्र घटो ज्ञानमात्मा चेति त्रयं ज्ञानेन विषयीक्रियते। इदमेव त्रिपुटीप्रत्यक्षं प्राभाकराणाम्। तार्किकाणां तु 'घटविषयकज्ञानवानहम्' इत्यनुव्यवसायेन ज्ञानग्रहः। ननु ज्ञानोत्पादिका चक्षुःसंयोगादिरूपसामग्री कथं ज्ञाने ज्ञानविषयता जनयेत् धर्मिण एवाभावादिति चेन्न। यथा कपालसंयोगो गुणविशि-

ष्टं घटमुत्पादयति एवं प्रकाशत्वविशिष्टस्य ज्ञानस्योत्पत्तौ बाधकाभावात् । *एवं शब्दोऽपीति । आत्मानमपि प्रकाशयतीति पूर्वेणान्वयः । अत्रैव हेतुमाह *प्रकाशत्वादिति । त्रयाणामपि प्रकाशरूपत्वादित्यर्थः । ज्ञानस्य स्वप्रकाशत्वं चानुव्यवसायाविषयत्वात् ॥ १ ॥

एवं बाह्यज्ञानप्रक्रियामुक्त्वाऽऽन्तरज्ञानप्रक्रियामाह *एवमिति । घटादिवदित्यर्थः । *वृत्तीति । अहमाकारान्तःकरणवृत्तीत्यर्थः । अन्तःकरणधर्मसुखादीनामपि तत्तदाकारवृत्त्युपगमेन प्रत्यक्षत्वम्। केवलसाक्षिवेद्यत्वप्रवादस्तु अन्तःकरणेतरेन्द्रियादिप्रमाणव्यापारं विना साक्षिवेद्यत्वमात्रेण। अत एव 'अहम्' इति प्रत्यक्षे ऽहमाकाराऽन्तःकरणवृत्तिः साम्प्रदायिकैरङ्गीकृता। वृत्त्यतिरिक्तान्तःकरणधर्माणामपि साक्षिभास्यत्वे सस्काराणामपि साक्षिभास्यत्वापत्तेः। तथा च तस्यां चेतनस्य पुरुषस्य प्रतिबिम्बः । अत एव चैतन्यभानमप्युपपन्नम्। साक्षात्स्वदर्शने कर्तृकर्मविरोधापत्तेः । चेतनस्य बुद्धौ सम्बन्ध एव चिदाकारता बुद्धेश्च छायापत्तिरित्युच्यत इति । अयमेव च बुद्धिपुरुषयोः सम्बन्धः परस्पराध्यास इत्युच्यते इति भावः । तथा च चेतनसम्बद्धबुद्धिवृत्तिव्याप्यत्वमेव च ज्ञेयत्वं घटादिसाधारणमात्मन्यपीति फलितम् ।

तदेतद्ध्वनयन्स्वप्रकाशत्वमात्मन आह *आत्मानमिति । ज्ञानस्यापि स्वप्रकाशत्वायाह *अहमितीति । ननु बिम्बप्रतिबिम्बयोर्भेदस्य कल्पनात्कथं स्वप्रकाशत्वमात्मनो ऽत आह *बिम्बेति । कल्पितभेदस्य तदबाधकत्वादाह *वास्तवेति ।

अयं भावः—यथा सूर्यो बिम्बरूपेण प्रकाशकः प्रतिबिम्बरूपेण च प्रकाश्यः, एवं पुरुषः स्वरूपेण ज्ञाता स्वसम्बद्धवृत्तिसम्बन्धेन च ज्ञेय इति प्रकारभेदान्न कर्तृकर्मविरोधः । आत्मनस्तद्रूपस्वप्रकाशत्वञ्चानन्यप्रकाशफलोपधानकत्वम् । तदुक्तं योगभाष्यकृता "पुरुष एव तु तं प्रत्ययं स्वात्मालम्बनं पश्यति न तु पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते "विज्ञातारमरे केन विजानीयाद्" इति । 'केन प्रकाशान्तरेण विज्ञातारं

लोको विजानीयादिति श्रुत्यर्थ' इति तद्व्याख्यातारः। अत एव चित्तस्यैवात्मत्वं वदतो बौद्धस्य मते "न तत्स्वाभासं दृश्यत्वाद्" इतिसूत्रेण कर्तृकर्मविरोध उपन्यस्तो योगसूत्रकृता। तत्र स्वाभासत्वं स्वगोचरवृत्तिं विना स्वग्राह्यत्वम्। विपक्षे बाधकश्च तां विना साक्षात्स्वभास्यत्वे कर्तृकर्मविरोध इति तदर्थः। आत्मा तु दृश्यभिन्नः द्रष्टृत्वात्। दृश्यत्वं च फलव्याप्यत्वरूपं प्रकाश्यत्वम्। आत्मनो द्रष्टव्यत्वं च वृत्तिव्याप्यत्वमेव, न फलव्याप्यत्वरूपम्। स्वप्रकाशस्य प्रकाशापेक्षाविरहात्। स्वप्रकाशत्वं च फलीभूतचैतन्याव्याप्यत्वे सति वृत्तिव्याप्यतया ऽपरोक्षव्यवहारयोग्यत्वं प्रागुक्तरूपमेव। नचैवं तत्र श्रुत्यादीनां प्रामाण्यं न स्यात् प्रमाख्यफलाजनकत्वादिति वाच्यम्। पुरुषनिष्ठाविद्यानिवृत्तेरेव तत्फलत्वात् प्रमाख्यफलाभावे ऽप्यक्षतेरिति।

ज्ञानस्य स्वप्रकाशत्वमुपपादयति *एतदिति। घटादिकं पुरुषादिकं चेत्यर्थः। तत्त्वादेव तस्यापि ग्रह इति भावः। एवेन मतान्तरव्यवच्छेदः। इदमप्यबाधितस्थले इत्याह *औत्तरेति। ननु ज्ञानस्य स्वप्रकाशत्वं विरुद्धम् अत आह *यथाचेति। *ज्ञानमर्थमिति। "तमेव भान्तमनुभाति सर्वम्" इति श्रुत्या तथा ऽवगमात्॥ १॥

अत एव ज्ञाने सति 'जानामि न वा' इति संशयस्य, 'न जानामि' इति विपर्ययस्य चाननुभवः। अनुव्यवसायस्य ज्ञानग्राहकत्वे त्वनवस्था। 'घटं जानामि' इतिवत् 'ज्ञानं जानामि' इत्यनुभवाभावाच्च। अभेदे ऽपि कर्मकर्तृभावस्य विषयविषयिभावस्य च स्वप्रकाश इत्यादिव्यवहारानुरोधेन स्वीकारे बाधकाभावादित्यन्यत्र विस्तरः।

एवं व्याप्याकारवृत्तिप्रतिबिम्बरूपव्याप्यज्ञानोत्तरं, शब्दाकारवृत्तिप्रतिबिम्बरूपशब्दज्ञानोत्तरं जायमानबौद्धव्यापकशब्दार्थरूपतत्तदर्थाकारवृत्तिप्रतिबि-

म्बनमेवानुमितिः शाब्दबोधश्च । शशशृङ्गालीकादिशब्दानां प्रातिपदिकत्वसिद्धिरपि बौद्धार्थवत्त्वेनैवोपपद्यते । "परस्सन्निकर्ष." इति सूत्रे, "स्थानिवद्" सूत्रे च भाष्ये स्पष्टमेतद् ॥ २ ॥

(कुं० टी०) *अत एव—स्वप्रकाशत्वादेव । *ज्ञानेसतीति । 'अय घट' इत्येवं घटे प्रकाशिते तद्विषयज्ञानस्यापि प्रकाशात् ज्ञानविषयकः संशयादिर्न भवति इत्यर्थः । 'घटविषयकज्ञानवानहम्' इत्यनुव्यवसायेन ज्ञानग्रह इति तार्किकमतं निराकरोति *अनुव्यवसायस्येति । प्रथमज्ञानं द्वितीयज्ञानेन प्रकाश्यं तदपि ज्ञानान्तरेणेत्येवमनवस्थेत्यर्थः । अप्रकाशितस्यानुव्यवसायस्य प्रकाशकत्वासम्भवादिति भावः । *अनुभवाभावाच्चेति । तथाच ज्ञानस्य न ज्ञानग्राह्यत्वम् ।

ननु यत्र विषयतया प्रत्यक्षं तत्पूर्वक्षणे विषयस्य सन्निकर्षस्य चापेक्षणीयत्वात्कथं स्वतोग्राह्यत्वं इति चेन्न । ज्ञानेन्द्रियसन्निकर्षस्य ज्ञानप्रत्यक्षे हेतुत्वानभ्युपगमेन विषयतत्सन्निकर्षाघटिताया एव सामग्रीव्याप्तेरुपगमात् ।

ननु स्वस्यैव कर्तृत्वकर्मत्वे विषयविषयित्वे च कथम् अत आह *अभेदेऽपीति ।

यथा हि तार्किकमते ऽपि 'सर्व प्रमेयम्' इति ज्ञाने स्वस्यैव विषयता, यथा वा द्रव्यादौ सद्व्यवहारः सत्ताप्रयुक्तः सत्तायां तु स्वातिरिक्तसत्ताऽभावेऽपि सद्व्यवहारः एवं स्वस्यैव विषयाविषयिभावो न विरुध्यते । एवं 'स्वात्मानं जानामि' इत्यादावेकस्यैव कर्तृकर्मभावश्च । तार्कि-

१ एव–भावः पाठोऽय कु० कपु० नास्ति ।

काणां स्वरूपसम्बन्धस्थल इव स्वस्यापि स्वसम्बन्धित्वसम्भवाच्चेति भावः ।

*व्याप्याकारेति । धूमाकारा या वृत्तिः तत्प्रतिबिम्बनमेव धूमज्ञानम् । तस्माद्बाह्याकारप्रतिबिम्बनमनुमितिः । *व्यापकेति । व्यापकरूपो यः स स पदार्थः, शब्दार्थरूपश्च यः स स पदार्थस्तदाकारा वृत्तिरित्यर्थः । *शाब्दबोधश्चेति । एवं शब्दाच्छाब्दबोधोऽप्युक्तरीत्येर्थः । ननु शशशृङ्गादौ बाह्यार्थाभावात्कथमर्थवत्त्वम् अत आह *शशशृङ्गेति । तदुक्तं हरिणा—

व्यपदेशे पदार्थानां बाह्यसत्तौपचारिकी ।
सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥ इति ।

अर्थानां बाह्याना व्यपदेशे व्यवहारार्थं बाह्यविलक्षणसत्ता बुद्धिसमाविष्टा औपचारिकी आरोपप्रयोजनवती । सर्वास्वस्थास्वित्यनेन अतीतानागतानामपि बुद्ध्या प्रतिभासो दर्शितः । सर्वेषामित्यनेन शशशृङ्गादिशब्देऽपि तद्बुद्धिकल्पनया व्यवहारात् शब्दार्थसम्बन्धो नित्यो दर्शितः । अत एव बुद्ध्या शशशृङ्गमुदिश्य बाह्यसत्ताव्युदासाय नास्तीति प्रयुज्यते ॥ २ ॥

(क० टी०) ज्ञानमात्माश्रयमिति मतेऽपि तत्स्वप्रकाशमेवेत्याह *अत एवेति । तस्य तत्त्वादेवेत्यर्थ. । निश्चयस्य, विपरीतज्ञानस्य च तथा सति प्रतिबन्धकत्वात् । अन्यथा तदभावात्तदापत्तिरिति भाव । परमते बाधकमाह *अन्विति । किञ्च भवदुक्तानुव्यवसायो विषयग्राहक एव, न ज्ञानग्राहक, अन्यादृशस्तु नोपलभ्यत इति तस्य तद्ग्राहकत्वमेव वस्तुतोऽसिद्धमिति । अभ्युपेत्यात्र तदुक्तमयुक्तमित्याह *घटमिति ।

ननु ज्ञानस्य स्वप्रकाशत्वे स्वस्य प्रकाश इत्यर्थकस्य स्वप्रकाशशब्दस्यानुपपत्तिः । क्रियाकर्मभावानुपपत्तेः । जन्या हि क्रिया जनक

च कर्म । नचैकस्यैवोभयरूपत्व सम्भवति । बहुव्रीहौ तु कर्तृक-र्मविरोध । एवमभेदे विषयविषयिभावासम्भव , सम्बन्धस्य सम्ब-न्धिस्वरूपभेदनियतत्वेन विषयित्वग्रहासम्भवाद् । अत आह *अ-भेदेऽपीति । आदिना स्वाभासमित्यादि ।

अय भाव—तथा सति ईश्वरज्ञानस्य नित्यत्वमते तस्य कर्मजन्यत्वाभावेन तत्कर्मणः कारकत्वानापत्त्या 'ईश्वर सर्वं जानाति' इत्यभावापत्ति । निरुपाध्यात्मान जानतो ऽध्या-त्मविद 'आत्मान जानाति' इत्यभावापत्तिश्च । तस्मादर्थवि-शेषस्य कर्मकारकादिसज्ञा वैयाकरणानाम्, तासां च यत्रापि सोऽर्थो नास्ति तत्रापि तदारोपेण स्वीकारात्तच्छास्त्रीयकार्यनिर्वाहेण तद्विरोधस्यादोषत्वम् । एव ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इत्यादौ सम्बन्धसम्बन्धस्य षष्ठ्या प्रतीयमानस्यानवस्थाभिया स्वा-श्रयात्मकत्वाङ्गीकारावश्यकत्वेन यत् सम्बन्धज्ञानं तत् सम्बन्धस्व-रूपात्सम्बन्धिनोर्भेद एव भवतीति नियमस्य त्यागात्सम्बन्धिभेद विनापि विषयविषयिभावाङ्गीकारे बाधकाभावात् । किञ्च यथा ता-र्किकमते ऽन्येषु सत्तासम्बन्धात्सद्व्यवहार, सत्ता तु स्वयमेव सद्व्यवहारभाक्, नैतावता आत्माश्रयस्तथा ज्ञान क्रियाकर्मभाव-विषयविषयिभावयोरभावेऽपि स्वत एव सिद्धरूपत्वात्स्वप्रकाश-त्वव्यवहारविषय इति ।

तदाह *अन्यत्रेति । एव प्रत्यक्षप्रक्रियामुक्त्वा ऽनुमित्या-दिप्रक्रियामाह *एवमिति । प्रत्यक्षवदित्यर्थ । *शब्दार्थे-ति । तदुभयेत्यर्थ । यथासख्यमत्र बोध्यम् । एवेन तदतिरि-क्तत्वनिरासः । एव ज्ञानप्रक्रियामुपपाद्य प्रक्रान्तबौद्धपदार्थस्वीका-रस्य फलान्तरमप्याह *शशेति । एवेन गत्यन्तरनिरासः । किञ्च आकाशो न पश्यतीत्याद्यप्युपपन्नम् । बाह्यतत्कर्तृकदर्शनस्य बाह्यतया ऽभावप्रतिपादनादिति बोध्यम् । अत्र मानान्तरमप्याह *पर इत्यादि । *एतत्–बौद्धपदार्थ एव ज्ञानविषय इत्येतत् । तत्र आद्ये तत्सूत्रं तत्सत्त्वे एव सङ्गच्छते ऽन्यथा ऽऽशुविनाशिनां शब्दानां सन्निकर्षो बाह्यो दुरुपपाद एवेत्युक्तम् । अन्त्य "प्राचीन ग्रामादाम्रा इत्युपदेशे तस्य सर्वत्राम्रबुद्धिः प्रसक्ता ततो ये क्षीरि-

णो ऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इत्युपदेशेन तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । तत. स पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपाधीयमानानित्युक्तम् । आम्रबुद्ध्या इत्यस्य तां सन्त्यज्येत्यर्थ ॥ २ ॥

ईदृशानामप्यन्तःकरणे वासनासत्त्वे शब्दाद्बोध एव मानम् । पूर्वपूर्वबोधैर्वासनाजननाच्च अनादित्वाच्च व्यवहारस्य न दोषः ।

तदुक्तं हरिणा—

यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।
स बाह्यं वस्त्विति ज्ञातः शब्दार्थः सम्यगिष्यते ॥ इति ।

'अबहीरूपो ऽपि बहीरूपतया ऽध्यस्त' इति पुञ्जराजः । अध्यासे बीजं चान्तःकरणस्य रागादिदोष एव । अत एव बाह्यपदार्थानयनम् उपपन्नम् । यत्र चाभ्यन्तरार्थस्य बाह्यार्थेन संवादः स शब्दः प्रमाणम्, विसंवादे त्वप्रमाणमिति व्यवस्था । एवमेव 'अयं शब्दः प्रमाणं न वा' इत्यादेः 'इदं ज्ञानं प्रमा न वा' इत्यादेश्चोपपत्तिः ॥ ३ ॥

( कुं० टी० ) ननु शशशृङ्गादिशब्दे ऽर्थस्य कल्पितत्वात्तत्र वासनासत्त्वे मानाभाव इत्यत आह *बोध एवेति । कथं तत्र वासना जन्यत इति चेत्तत्राह *पूर्वेति । पूर्वकाले ऽपि कथम् अत आह *अनादित्वादिति । *न दोषः—न वासनाऽनुपपत्तिः ।

केचित् शशशृङ्गादिशुक्तिरजतादिविषये बहिरसतोऽपि बुद्धिविषयत्वादसत्ख्यातिरिति व्यवहरन्ति ।

पुरोवर्त्तिनः स्वरूपेण सत्त्वाद्बाह्यरजताकारेण चासत्त्वात् सदसत्ख्यातिरिति साङ्ख्याः।

ज्ञानसन्तानस्यैवात्मत्वमभ्युपगच्छतां वैभाषिकादीनाम् आत्मख्यातिरिति व्यवहारः।

रजतत्वेन शुक्तिप्रतीतेरन्यथाख्यातिरिति तार्किकाः।

*यो वार्थ इति। वाशब्दः पक्षान्तरे। बुध्युपारूढस्य शब्दस्य बाह्यवस्तुनिबन्धनो बुध्युपारूढो यो ऽर्थः स बाह्यं वस्त्वित्यध्यस्तः सन् शब्दार्थः। यथा आन्तरः स्फोटो वाचकः तथा ऽर्थो ऽप्यान्तर एवेति भावः। नन्वत्राध्यासे बीजाभाव इत्यत आह *रागादिदोष इति। तद्वशादेव प्रवृत्तिरिति भावः। "सुखानुशयी रागः" इति पातञ्जलसूत्रम्। सुखे तत्कारणे वा तृष्णा राग इति तदर्थः। *अत एव–बाह्ये अध्यासादेव। *संवादः—ऐक्यम्। *एवमेवेति। संवादित्वासंवादित्वाभ्यामेवेत्यर्थः। ज्ञाने संवादो नाम यथार्थविषयकत्वम्। *प्रमाणमिति। बाह्यार्थसंवादीत्यर्थः॥ ३॥

(क० टी०) ननु शशशृङ्गादीनां बाह्यत्वाभावेन तद्वासनायां किं मानमत आह *ईदृशानामिति। अबाह्यानामपि तेषामित्यर्थः। नन्वेवमपि तज्जनक किम् अत आह *पूर्वेति। नन्वेवमप्याद्यबोधे दोषोऽत आह *अनादित्वादिति। व्यवहारदशायामिति भावः। *योवेति। वाशब्द समुच्चये। बाह्यवस्तुनिबन्धन इति पाठः। बाह्यवस्तु निबन्धन सवादिरूप यस्य। निर्मूलत्व निराचष्टे *अध्यास इति। *अतएव—रागादिदुष्टान्त.करणेन बाह्यान्तरार्थयो. संमुग्धत्वेनैव ग्रहणादेव। नन्वेव सर्वस्यापि शब्दस्य प्रामाण्यं स्यादत आह *यत्रहीति। सशयबीजकोटिद्वयमपीदमेव नत्वन्यद् इत्याह *एवमेवेति॥ ३॥

नलादिपदेभ्यो ऽपि बौद्धाकारविषयक एव

बोधः । स च बौद्ध आकारः सामान्यत एव, अवयवसंस्थानगतविशेषाग्रहात् ।

तेषां शक्तिग्रहोऽपि वक्तृमुखात्तदीयगुणसमृद्ध्यादिश्रवणानन्तरं तादृशगुणसमृद्ध्यादिविशिष्टे सामान्यतो बुद्ध्या गृहीतआकारे एव । 'हेतुमति च' इति सूत्रे भाष्ये "कंसं घातयति" इत्येतदुपपादनावसरे "तेषामुत्पत्तिप्रभृत्याविनाशादृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति" इत्युक्तेः ॥ ४ ॥

( कुं० टी० ) ननु नलादिशब्दानामाधुनिकत्वान्नत्र कथं वासना कथं वा बौद्धबाह्ययोरध्यास इत्यत आह *नलादीति । *बौद्धेति । अस्ति हि आकारविषयिणी वासना अनादिः । ननु अज्ञातस्य आकारोऽपि कथं बुद्धिस्थ इत्यत आह *सचेति । सामान्याकारस्य सर्वत्रानुमानादिना बुद्धिस्थत्वादिति भावः । *तेषाम्—नलादिपदानाम् । *शक्तिग्रहोऽपीति । बुध्या गृहीते आकारे इत्यत्रान्वयः । *व्युत्पादनावसर इति । चित्रपुस्तकादौ हि प्रतिकृतिरूपस्य प्रयोज्यप्रयोजकभावाध्यवसायात्कंसं घातयतीति सिद्धम् । यदा तु कंसाद्यनुकारेण सादृश्यान्नटानां तद्रूपताप्रतीतिः तत्र प्राथमिकेषु कथमिति तत्र प्रश्नः । *तेषामुत्पत्तीति । कंसादीनाम् ऋद्धीर्व्याचक्षाणाः कथका बुद्धिविषयान् प्रकाशयन्ति चिरकालातीतानां बहिरसत्त्वात् बुद्धिगोचरतया विद्यमानान् प्रकाशयन्ति । तथा च कथकैः श्रोतरि कंसाद्याकारप्रत्ययजननाद् बुद्धिवासुदेवेन कंसं घातयतीति प्रयोजकत्वोपपत्तिः । तथा च सूत्रेणैव सिद्धत्वाद्वार्तिकं नारब्धव्यमिति भावः । एवं च बुद्धिविषयसत्त्वयैव सर्वो ऽपि व्यवहार इति फलितम् ॥ ४ ॥

तस्य फलान्तरमप्याह *नलादीति । *आकारः—बाह्यत्वेनाभिमतः । शक्तिग्रहपदार्थोपस्थितिबोधानां समानप्रकारकत्वात्त विना तदसम्भवात्तद्याचष्टे *हेतुमतीति । *तेषाम्—कंसादीनाम् । *आचक्षाणाः—पौराणिकाः । सत्त्व बुद्धिविषयत्वेनेत्याह *बुद्धीति । अत एव नृत्यदर्शन पुराणश्रवण च कृतवतां दर्शनाद्यर्थं गच्छतो ऽन्यान्सामाजिकान्प्रति 'गच्छ हन्यते कंसो' 'गच्छ घानिष्यते कंसः', 'किन्तेन, हत स' इत्यादिव्यवहार । अन्यथा चिरहते कंसे हन्यते इत्यादिव्यवहारानुपपत्तिरेव । हन्तेस्तज्जननाभिनये तत्प्रतिपादकग्रन्थकथने वा लक्षणेति तु न युक्तम् । बौद्धकंसस्य बौद्धकृष्णेन बौद्धहननमित्येवमन्यथैवोपपत्तेरिति भाव' ॥ ४ ॥

तदुक्तं हरिणा—

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन्साधनत्वेन मन्यते ॥
बुद्धिप्रवृत्तिरूपं[1] च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना ॥ इति ।

प्रत्यक्षमिति मननक्रियाविशेषणम् । इन्द्रियजज्ञानाभावादिवेति । अर्थेषु बाह्येषु । बौद्धमेवैकस्य शक्तिनानात्वं बाह्ये ऽध्यस्यते दृश्यज्ञानविषययोरभेदाध्यासात् । अत एव देशान्तरस्थं देवदत्तं काश्यां शृण्वतस्तं च तत्र पश्यतो ऽपि 'देवदत्तो ऽत्र नास्ति' इत्यतो धीः सामान्येन बौद्धाकारेण, अस्य विजातीयतया संमुग्धत्वेनाग्रहात् । 'अयं स देवदत्त' इत्युपदेशोत्तरं सामान्यरूपोऽपि बौद्ध आकारो विशेषरूपेण विवर्तते ॥ ५ ॥

(कुं० टी०) *शब्दोपहितेति । शब्दसमर्पितबुद्धिविषया-

---

१ कलाऽनुरोधी कखमूलपुस्तकयोः 'प्रवृत्तं रूपम्' इति पाठः ।

कारानित्यर्थः । *साधनत्वेनेति । बुद्धिविषयवधादेरित्यर्थः । तदेवं बुद्ध्या व्यवहारमुपपाद्यैकस्यापि वस्तुनः शक्तिनानात्वं बौद्धमित्याह *बुद्धीति । बुद्धेः प्रवृत्तिर्व्यापारः परिच्छेदलक्षणः तस्या रूपमाकारः अविद्यया भासमानस्तमर्थेषु बाह्येष्वध्यस्य तेषां शक्तिनानात्व कल्प्यते । तथाच बौद्धशक्तिभेद एव बाह्यशक्तिभेदः । एवं च क्रियाभेदाद्वस्त्वेव नानाशक्तिकमवधार्यते । *क्रियाविशेषणमिति । इन्द्रियनिमित्तेन ज्ञानेन परिस्फुटार्थमवधारयतीत्यर्थ इति भावः । इवार्थमाह *इन्द्रियजेति । इन्द्रियजन्यमिदं ज्ञानं न भवतीति हेतोः प्रत्यक्षमिवेति इवशब्दः प्रयुक्त इत्यर्थः । *दृश्येति । बाह्येत्यर्थः । *ज्ञानविषयः—बौद्धः । *अत एव—बौद्धसामान्याकारे शक्तिग्रहादेव । 'देशान्तरे वर्तते' इत्यपरिचितं देवदत्तं श्रुतवतः काशीस्थपुंसः काश्यां देवदत्ते सत्यपि 'काश्यां देवदत्तो नास्ति' इति वाक्याद्बोधो भवत्येव । बुद्धिस्थस्य सामान्याकारस्य बाह्याकारे ऽध्यासाभावादित्यर्थः । *संमुग्धत्वेन—अभिन्नत्वेन । *अस्य—काशीस्थस्य । ननूपदेशात् 'सोऽयम्' इति बुद्धिः कथम् अत आह *अयं स इति । *विजातीयेति[1] । एतच्च संमुग्धत्वे हेतुः । मोहश्चाज्ञानम् । तथाच मोहाद् द्वयोराकारयोर्नैक्यग्रह इत्यर्थः । *सः—देशान्तरस्थः । अयमेवेत्यर्थः । *बौद्ध इति । तत्रोपदेशानन्तरं बौद्ध आकारो बाह्यरूपो भवतीत्यर्थः । *अतीतनलादीति ।

अतीतनलादिविषये नलत्वादिप्रकारकः शक्तिग्रहो न सम्भवति, नलत्वादिना पूर्वमज्ञातत्वात् किन्तु प्रमेयवानित्येव प्रमेयप्रकारकः । प्रमेयवानित्यनुभवे प्रमेयत्वेन नलत्वविशिष्टस्यापि पूर्वमनुभवोऽस्ति । एवं चादृष्टविशेषस्य प्रमेयत्वांशे उद्-

१ विजाती—त्यर्थः पाठोऽय कुं० कपु० नास्ति ।

बोधकत्वाकल्पनेन केवलचैत्रत्वविशिष्टस्मरणमिति प्राञ्चः ।

तन्न। 'जातिमान्' इति अनुभवोत्तरं 'घट' इति स्मरणापत्तेः । नहि तत्र कस्योद्बोधकत्वमस्ति कस्य नेत्यत्र नियामकमस्ति । अतस्तत्र संस्कारधाराकल्पनेनैव स्मृतिरिति नव्याः ॥ ५ ॥

(क० टी०) *शब्दोपेति। तज्जन्यप्रतीतिविषयानित्यर्थः। *साधनत्वेन–कर्मकारकत्वादिना। *बुद्धिप्रवृत्तम्–बुद्ध्यारूढम्। प्रत्यक्षस्य कसादिविशेषणत्वे प्रत्यक्षानित्युचितम् अत आह *प्रत्यक्षमितीति। अत एव इव. सफल इत्याह *इन्द्रियेति। *एकस्य—कसादेः। *ज्ञानेति। बुद्धीत्यर्थः। अतएवेत्यस्यार्थमाह *सामेति ॥ ५ ॥

एतेनातीतनलादिभाविचैत्रादिवर्तमानप्रसिद्धासन्निकृष्टवस्तुगोचराः संस्कारा अनादयो धारारूपेण विशिष्य बोधानुपपत्त्या कल्प्यन्ते, तैः स्मृतेष्वर्थेषु शक्तिग्रहो बोधश्चेति नैयायिकनव्योक्तमपास्तम् । विशिष्यबोधरूपहेत्वसिद्धेः। विशिष्य गृहीतसङ्गतिकानामिव तद्दर्शने पदस्मरणापत्तेश्च । पदप्रकारकबोधस्यैवानुभवाच्च।

अत एव अज्ञातार्थकेष्विदमेकं पदमिति ज्ञातेषु नलचैत्रगवयादिपदेषु श्रुतेषु क एतदर्थ इति प्रश्न उपमानतल्लक्षणादिना प्रतिवचनं च दृश्यते। अत एव सादृश्याद्युपायेन शक्तिबोधकतया उपमानस्य, प्रसिद्धपदसामानाधिकरण्यात्तत्तद्बोधकतया कोशस्य च प्रामाण्य व्युत्पादयन्ति ।

नलत्वादिना बोधस्तु तेन रूपेण शक्तिग्रहासम्भवादसम्भवी ।

एतेन प्रमेयत्वादिरूपेण सर्वानुभवसत्त्वात् तत्र प्रमेयत्वांशस्य अनुद्बुद्धसंस्कारत्वेन मोषे प्रथमतः तत्तज्जात्यादिरूपं निर्विकल्पकस्मरणं ततो ज्ञानलक्षणया विशिष्टतत्तत्पदार्थोपस्थितौ तत्र शक्तिग्रहो बोधश्च । ज्ञानलक्षणा च मनःसंयुक्तात्मवृत्तिसंस्कारविषयत्वम् । फलबलकल्प्योद्बोधकवशात्स्मृतेः काचित्कत्वकादाचित्कत्वनियमेन न सार्वज्ञ्यापत्तिरित्यपास्तम्। अनुभवविरुद्धतादृशस्मरणकल्पने मानाभावाच्च । सर्वत्र स्मरणे ऽनुभवसमानाकारत्वस्यैव दर्शनात् ।६॥

*भावीति । नलादिर्यो ऽतीतः यश्च भावी चैत्रादिः यश्च प्रसिद्धो वर्तमानो ऽपि असन्निकृष्ट इत्येतेषां द्वन्द्वः । *हेत्वासिद्धेरिति । विशिष्य बोधाभावेन तन्मूलकसंस्कारकल्पनाया असम्भवादिति भावः । *गृहीतेति । घटदर्शने घटपदस्मरणवदपूर्वचैत्रादिदर्शने ऽपि तद्वाचकपदस्मरणापत्तेरित्यर्थः । *पदप्रकारकेति । नलपदवाच्यः कश्चिदासीदित्याकारकेत्यर्थः । *एकं पदामितीति। एतादृशो व्यवहार इति शेषः । *ज्ञातेष्विति । तार्किकमते तु नलशब्दे ज्ञाते तदर्थस्यापि ज्ञातत्वात्प्रश्नानुपपत्तिः । *उपमानस्येति । प्रामाण्यमित्यत्रान्वयः ।

तत्र हि–'गोसदृशो गवयपदवाच्यः' इत्युपमानाद् 'गवयो गवयपदवाच्यः' इति शक्तिग्रहः । सादृश्यादीत्यादिना वैधर्म्यपरिग्रहः। यथा अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यात् उष्ट्रे करभपदवाच्यताग्रहः ।

*सामानाधिकरण्यात्–वाच्यतया एकार्थवृत्तित्वात् । *शक्तिग्रहासम्भवादिति । नलत्वेन रूपेण पूर्वमनुपस्थितेः । *मोषेऽग्रहे । तदंशे ऽन्याप्रकारकस्मृतिं प्रति तदंशेऽन्याप्रकारकत्वेन

तु नानुभवस्य हेतुत्वम्, मानाभावात् । नचैवं जातिमत्त्वादिरूपेण घटाद्यनुभवे ऽन्यांशे उद्बोधकालाभे 'घटः' इति स्मरणापत्तिरिति वाच्यम् । उद्बोधकलाभालाभयोः फलबलकल्प्यत्वात् इति भावः । *तत्तज्जात्यादीति । चैत्रत्वादीत्यर्थः । *निर्विकल्पकमिति । यथा बालानां स्तनपानादाविष्टसाधनतायाः पूर्वानुभूतायाः स्मरणेऽदृष्टविशेष एव नियामकः, तथाऽपूर्वचैत्रत्वादिस्मरणेऽपीत्यर्थः । *आत्मवृत्तीति । आत्मनिष्ठेत्यर्थः । 'सुरभि चन्दनं पश्यामि' इत्यादौ सौरभाद्यंशे संस्कारस्य या विषयता सैव ज्ञानलक्षणाप्रत्यासत्तिः । सैव सौरभस्मृतौ हेतुरिति भावः । *न सार्वज्ञ्यापत्तिरिति । प्रमेयत्वेन ज्ञानेऽपि विशिष्य ज्ञानाभावान्न सर्वज्ञतापत्तिरित्यर्थः । *तादृशेति । प्रमेयत्वरूपेणानुभवाच्चैत्रत्वरूपेण स्मरणेत्यर्थः । *अनुभवाकारत्वस्यैवेति ।

तथा च पातञ्जलसूत्रम् "जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वाद्" इति । जातिव्यवहितत्वं जन्मान्तरयोगेन । तत्र जन्मान्तराऽनुभूतस्मरणमञ्जनादिना । देशादिव्यवधानं दूरत्वादिना । नच सुषुप्तिदशायामनुभवाभावात् 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इतिस्मरणानुपपत्तिरिति वाच्यम् । एतदर्थमेव निद्राया वृत्तिविशेषत्वस्यैव स्वीकारात् । एतेन ज्ञानसामान्याभावो निद्रेति तार्किकोक्तमपास्तम् ॥ ६ ॥

*गोचराः—एतत्त्रितयगोचराः । तज्जनकाभावादाह *अनाद्य इति । सर्वदा तज्ज्ञानस्य जननादाह *धारेति । *अर्थेषु–नलत्वादिविशिष्टनलादिषु । *बोधश्च–तेषामेव । एतेनेत्यस्यार्थमाह *विशिष्येति । भाव्यादिविषये दोषान्तरमाह *विशिष्येति । घटादीनामित्यर्थ । दर्शन इति शेष । साधारणदोषान्तरमाह *पदेति ।

एतेन नलादिपदान्नलादिशब्दार्थत्वादिप्रकारक एव शाब्दबो-

धो लक्षणया । नच नलत्वादिविशिष्टे शक्त्यग्रहात्तत्सबन्धरूपलक्षणाग्रहोऽपि कथ ? सामान्यरूपेण तत्रापि शक्तिग्रहसत्त्वादिति तन्नव्योक्तमपास्तम्।

इद समूलयति *अत एवेति । सामान्यतस्तथा बोधादेवेत्यर्थः । एवमग्रेऽपि । विशेषजिज्ञासोपपत्तये आह *इदमेकमिति। *तल्लक्षणेति । लम्बकर्णत्वादिरित्यर्थ । सामान्यज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात् । त्वन्मते तूक्तरीत्या ऽऽदावेव विशिष्यैव बोधेन प्रश्नाद्यसङ्गति. स्पष्टैव । आदिना ऽतिदेशवाक्यार्थज्ञानम् । अन्यथोक्तरीत्यैव तत्रापि निर्वाहे तदप्रामाण्यापत्तिः स्पष्टैव । घटादितुल्यतां निराचष्टे *नलत्वादीति । *एतेन—तथा बोधासम्भवेन । *तत्र—तथानुभवविषये । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादाह *प्रथमत इति । आदिना गुणादि । *तत्र-विशिष्टे । *बोधश्च-विशिष्टस्य । ननु जात्यादिज्ञान कथ तस्य प्रत्यासत्ति. अत आह *ज्ञानेति । चक्षुजन्यज्ञाने विषयतासम्पादकसस्कारजनकज्ञानविषयत्वमित्यर्थः । ननु प्रमेयत्वेन सर्वानुभवे सार्वज्ञ्यापत्ति. अत आह *फलबलेति । देशत. कालतश्चान्तरवायाह *काचित्कत्वेति। एकदोषस्योक्तत्वाद्दोषान्तरमाह *अनुभवेति । अनुभवविरुद्धत्वे हेतुमाह*सर्वत्रेति ॥ ६ ॥

**किञ्च तदंशमोषेऽपि विशिष्य जातानुभवानामेव तथा ज्ञानं भवति नतु कदाचिदपि तथाऽननुभूतानां तथा ज्ञानं ज्ञानलक्षणासहकारेणापि। अनुभवविरोधात् । अन्यथा ब्रह्मणोऽपि तथा स्मरणे ज्ञानलक्षणया तथा ऽनुभवे च कृतकृत्यतापत्तिरित्यलम् ॥ ७ ॥**

ननु तद्विषयकस्मृतौ तद्विषयकानुभवहेतुतायां व्यभिचारवारणायाव्यवहितोत्तरत्वं वैजात्यं वा निवेश्यमित्यस्वरसादाह *किञ्च तदंशेति । यस्य कस्य चिद्विशिष्यानुभवो जातो ऽस्ति तस्यैव ज्ञानलक्षणयाऽपि ज्ञानं भवतीत्यर्थः । *नत्विति।

तथा ऽननुभूतानां ज्ञानलक्षणया ऽपि न तथा ज्ञानमित्यन्वयः । *ब्रह्मणो ऽपीति । अस्मदादीनां सामान्यलक्षणया ब्रह्मणो ऽप्यनुभवान्मुक्तत्वापत्तिरित्यर्थः ॥ ७ ॥

(क० टी०) तथा बोधांशे ऽनुभवविरुद्धत्वमाह *किञ्चेति । विपक्षे बाधकमप्याह *अन्यथेति । इष्टापत्तौ श्रवणादेर्योगादेः काशीमरणादेरानर्थक्यापत्त्या तद्बोधकश्रुतिस्मृतिपुराणशास्त्रानर्थक्यापत्तिः, वैषम्ये बीजाभावः, अत एव सार्वज्ञ्यापत्तिश्च । तदाह *इत्यलमिति ॥ ७ ॥

यत्र तु न गुणसमृद्ध्यादिश्रवणं तत्र पदमात्रविषयकमेव ज्ञानम् । अत एव 'पदं श्रुतम् अर्थं तु न जानामि' इति व्यवहारस्तत्र । गुणादिश्रवणोत्तरं तु 'श्रुतो ऽस्ति स न दृष्ट' इति व्यवहारः । अस्य कश्चिदर्थो भविष्यतीति पदत्वहेतुकमनुमानमेव । बौद्धार्थस्य बौद्धेन शब्देनाविभागात्तन्मूलाभेदाध्यवसायेन शब्दादर्थाकारवृत्तौ जायमानायां स्वाकारस्यापि समर्पणमिति शब्दस्यापि विषयता । अत एव शब्दे ग्राह्यत्वग्राहकत्वरूपशक्तिद्वयस्वीकारः । तत्र तात्पर्यवशाद्बहुधा शब्दप्रकारको बोधः । अर्थे[1] बाधे तु गौरित्ययमाहेत्यादौ अनुवादे शब्दविशेष्यकः । अनुकरणे शब्दमात्रविशेष्यकः ।
एवमर्थेनापि स्वाकारसमर्पणे तत एव शब्दाकारस्यापि समर्पणमिति सर्वं ज्ञानं शब्दानुविद्धम् ।

तदुक्तम्—

१ अर्थबाधे इतिपाठः कु० कखपु० ।

न सो ऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

उत्तरार्द्धेनानुव्यवसायः प्रमाणं दर्शितम्। अत एव चक्षुषा दृश्यमानमप्यज्ञातबोधकं पदार्थं 'किमिदमिति न जानामि' इति व्यवहरन्ति। तदुपदेशे च 'ज्ञातम्' इति व्यवहरन्ति॥ ८॥

(कुं० टी०) *बहुधेति। नलादिपदघटादिपदेभ्यो विशेष्यस्यानेकधा भानात्। उपमितौ अयं गवयपदवाच्य इत्यादिना बहुविधत्वात्। *अर्थबाधात्विति। अर्थस्योच्चारणासम्भवात्। *शब्दविशेष्यक इति। अर्थविशिष्टशब्दबोध इत्यर्थः। *शब्दमात्रेति। तत्रार्थस्य अप्रतीतिरेव। *तत एवेति। शब्दार्थयोरभेदादेवेत्यर्थः। *अनुविद्धमिति। शब्दार्थयोरभेदे शब्दपूर्वकत्वस्यैव न्याय्यत्वात्। *अनुव्यवसायः प्रमाणमिति। प्रत्यक्षे शब्दादीनां विषयत्वासम्भवात्तदुत्तरोत्पन्ने ऽनुव्यवसाये शब्दो विषय इत्यर्थः।[1] तथाचानुव्यवसायस्य प्रामाणिकत्वं दर्शितमित्यर्थः। अनुव्यवसाय एव ज्ञानस्य भानादुक्तम् *उत्तरार्द्धेति। *अत एव—शब्दानुविद्धत्वादेव। *अज्ञातबोधकमिति। न ज्ञातो बोधको वाचको यस्य तम्। शब्दानुविद्धस्यैव भानात् वाचकशब्दाज्ञाने ऽर्थस्याप्यज्ञातत्वव्यवहार इत्यर्थः॥ ८॥

तुरुकवैलक्षण्ये। ननु सामान्यतो ऽत्रापि अर्थज्ञानमत- आह *अस्येति। अय (शब्दः) सार्थकः पदत्वात् घटादिशब्दवत्। नलादिपदं किञ्चिद्वाचक साधुपदत्वादिति वा। एवेन शाब्दत्वनिरासस्तत्र। 'अर्थवशब्दोपि'इति शब्दस्य प्रागुक्त स्वप्रकाशत्वमाह *बौद्धार्थेति। तयोस्तद्रूपत्वादित्यर्थः। *तन्मूलेति बाह्यशब्दार्थयो-

१ तथा—त्यर्थः पाठोऽयं कु० कपु० नास्ति।

रित्यर्थ । *अतएव-शाब्दे तस्यापि विषयत्वादेव । ऐकरूप्येण सर्व त्र तथाऽसत्त्वादाह *तत्रेति । तस्य तद्विषयत्वे इत्यर्थ । एव शाब्दे उक्त्वा प्रत्यक्षादावप्याह *एवमिति । तद्वदित्यर्थ । *तत एव अविभागमूलाभेदाध्यवसायादेव । *तदुक्तम्, हरिणा । *प्रत्यय विशिष्टज्ञानम् । *शब्दानुगमात्-शब्दविषयकत्वात् । इदमेव तद-नुविद्धत्वम् । प्रत्यक्षादौ तदसत्त्वादाह *इवेति । भासत इत्युक्ति-स्वारस्यादाह *उत्तरेति । *अतएव—तस्य तदनुविद्धत्वादेव । बाधक -शब्दः । अन्यथाऽर्थदर्शनसत्त्वेनैतदसङ्गतिः स्पष्टैव । त-स्मात्तदशमादायैवमिति भाव. ॥ ८ ॥

एतेन मणिमन्त्रादिन्यायेन तत्पदवाच्यत्वग्रहो विशेषधर्मप्रकारेण ज्ञाने तथा व्यवहारे ऽनुव्यवसाये च हेतुरिति नैयायिकनव्योक्तमपास्तम् ।

मणिमन्त्रादिन्यायेन कारणत्वकल्पनापेक्षया ऽस्मदुक्तस्यैवौचित्यात् । तद्ग्रहे सति स्मृतस्य तस्य भाने बाधकाभावात् । तदर्थ प्रतिबन्धककल्पने गौ-रवम्, अनुभवविरोधश्च ।

किञ्च,पिकपदशक्तिग्रहवतः 'अयं कोकिल' इत्यनु-व्यवसायापत्तिः । तव पिकत्वकोकिलत्वयोरभेदात् । मम तु तत्तत्पदभानान्न दोषः ।

अत एव कणादसूत्रवृत्तिकृद्भिः कीर्तिदिङ्नागा-दिभिः 'नामसंसर्गविषयकत्वम्' सविकल्पकलक्षणमु-क्तम् । पातञ्जलानामपीत्थमेव सविल्पकलक्षणं संमतम् ।

एतेन ज्ञानं शब्दाननुविद्धमेव, अर्थज्ञानस्य वाच-कशब्दाभावात् । अर्थवाचकेनेतिकरणयुक्तेन 'घट इति जानामि' इति तद्व्यवहार इत्यपास्तम् ।

"इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति प्रत्यक्षलक्षणे ऽव्यपदेश्यत्वविशेषणं वदता गौतमेन शाब्दज्ञाने शब्दभानाङ्गीकाराच्च । 'अव्यपदिश्यमानत्वं च व्यपदेशाविषयकत्वम् । व्यपदेशश्चार्थवाचकः शब्द' इति तद्भाष्ये स्पष्टम् ।

एवं चान्यत्र तदभानाग्रहो मुधेति पातञ्जलानामाशयः । "शब्दाविषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः" इति वदता वात्स्यायनेन शब्दजबोधस्य शब्दाविषयकत्वमुक्तप्रायमेव । "शब्दविषयकत्वमेव शाब्दत्वम् न तु शब्दजन्यत्वम्" इति तत्रैव वाचस्पतिमिश्रैरुक्तम् ॥ ९ ॥

*मणिमन्त्रादीति ।

अयं भावः—'ह्रदो वह्न्यभाववान्' इतिनिश्चयानन्तरं 'ह्रदो वह्निमान्' इति बुद्धेरनुदयात्तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः । तत्र च ग्राह्याभावानवगाहित्वे ऽपि यथा दाहं प्रति मण्यादेर्विशिष्यैव प्रतिबन्धकता एवं चैत्रत्वादिना विशिष्य शक्तिग्रहाद् बोधादिरित्यर्थः ।

*अस्मदुक्तेति । बौद्धाकारेति प्रागुक्तत्वात् । *तद्ग्रहे—तदर्थग्रहे । *तस्य—शब्दस्य । *बाधकाभावादिति । शब्दार्थयोर्नित्यसम्बन्धित्वात् । पदाभाने दोषान्तरमाह *किं चेति । *नामेति । नामविषयकत्वं संसर्गविषयकत्वं चेत्यर्थः । चाक्षुषेऽपि नामवैशिष्ट्यमस्त्येव । सुरभि चन्दनमितिवन्नामांशे उपनीतभानसम्भवात् । नामांशे स्मरणं वा । अभावज्ञाने प्रतियोगि-

स्मरणवत् । *वाचकशब्दाभावादिति । पदार्थादिज्ञानस्य शब्दवाच्यत्वाभावादित्यर्थः । तथा च न शब्दानुविद्धं ज्ञानं ज्ञानशब्दयोः सम्बन्धित्वाभावात् । *इतिकरणेति । घटार्थवाचक इतिकरणयुक्तो यो घटादिशब्दः तेन ज्ञानस्य व्यवहार इत्यर्थः । *इन्द्रियार्थेति । इन्द्रियविषयसन्निकर्षेणोत्पन्नमित्यर्थः । यद्यपि मनोरूपेन्द्रियजन्यं सर्वं ज्ञानं तथापीन्द्रियत्वावच्छिन्नजनकता विवक्षिता । मानसप्रत्यक्षे तु मनस्त्वेन जनकता । ईश्वरप्रत्यक्षस्य त्वजन्यत्वेऽपि जन्यप्रत्यक्षस्यैवेदं लक्षणम् । *अव्याभिचारीति । भ्रमभिन्नमित्यर्थः । प्रत्यक्षं विभजते *अव्यपदेश्यमिति । निर्विकल्पकमित्यर्थः । व्यपदेशः शब्दप्रयोगः । स च विशिष्टज्ञानादेवेति व्यपदेशानर्हत्वान्निर्विकल्पकलाभः । *व्यवसायात्मकमिति । विशिष्टज्ञानात्मकमित्यर्थः । शाब्दप्रमाया अप्येकपदार्थे ऽपरपदार्थसंसर्गरूपयोग्यताजन्यत्वेनातिव्याप्तिवारणाय *इन्द्रियेति । त्वङ्मनोयोगजन्यानुमितावतिव्याप्तिवारणाय *अर्थेति । सर्वांशे कामिनीत्याद्यलौकिकप्रत्यक्षे इन्द्रियार्थजन्यत्वाभावादव्याप्तिवारणाय *संनिकर्षेति । चक्षुःकपालसंयोगजन्ये चक्षुर्घटसंयोगेऽतिव्याप्तिवारणाय *ज्ञानमिति । न चैवमप्यात्ममनोयोगजन्यात्मानुमितावतिव्याप्तिरिति वाच्यम् । ज्ञानपदमहिम्ना विषयतासम्बन्धावच्छिन्नेन्द्रियार्थसंनिकर्षजन्यत्वलाभात् ।

अथ गुडं भुङ्क्ते इत्यत्र गुडत्वस्येव मधुरत्वस्यापि प्रकारतया तत्प्रकारकशाब्दबोधवारणाय तद्धर्मप्रकारकशाब्दबोधं प्रति तद्धर्मप्रकारकशक्तिज्ञानस्य हेतुत्व वाच्यम् । एवं च घटत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशशक्तिज्ञानस्य हेतुतया कथं घटशब्दत्वादेः प्रकारतावच्छेदकतया भानं

घटशब्दस्य घटशब्दवाच्ये शक्तिरिति शक्तिग्रहाभावात् । यत्तु सम्बन्धिज्ञानविधया शब्दस्य भानमिति । तन्न । हस्तिपकशब्दाद्धस्तिनोऽपि बोधापत्तेरिति चेद् । शब्दांशे स्मरणात्मकबोधस्यैवोपगमात् ।

*अन्यत्र—शाब्दबोधे । *तदभानेति । शब्दाभानस्याग्रहो व्यर्थ इत्यर्थः । *वात्स्यायनेन—न्यायभाष्यकृता ।

तत्र हि—'रूपम्' इति जानातीत्याकारकं प्रत्यक्षं भवति । रूपादिशब्दाश्च विषयनामानि तथा च नामधेयशब्देन व्यपदिश्यमानत्वात्प्रत्यक्षस्य शाब्दत्वापत्तिरित्याशङ्कायामव्यपदेश्यमिति सूत्रांशो ऽवतारितः ।

तस्यायं भावः—रूपादिप्रत्यक्षकाले नामधेयशब्दस्य न कोऽपि व्यापारः किं तु व्यवहारकाले रूपमिति जानातीत्यादिः । तस्मादशाब्दं प्रत्यक्षमिति ।

*उक्तप्रायम्—अत एव ज्ञानजन्यत्वे सति शब्दज्ञानाजन्यत्वमनुमितिलक्षणमभिधाय मननजन्यतत्त्वज्ञाने नातिव्याप्तिः तत्त्वमसीत्यादिशब्दाविषयकत्वादिति तार्किका अपि वदन्ति । *न तु शब्दजन्यत्वमिति । विषयविधया शब्दप्रत्यक्षे ऽतिव्याप्तेः ।

यत्तु यत्र विभिन्नविषयकानुमितिसामग्रीकाले शाब्देच्छाबलाच्छाब्दबोधः, तत्र शब्दविषयकत्वासम्भवः । न । 'शब्दशाब्दं जायताम्' इत्याकारकेच्छाया एवोत्तेजकतया तदिच्छाविरहविशिष्टानुमितिसामग्र्याः प्रतिबन्धकत्वात् तत्र शाब्दबोधाभावात् । तदिच्छाया अप्युत्तेजकत्वे तु तत्तदिच्छाभावकूटानां विशेष्यविशेषणभावे विनिगमनाविरहाद्गौरवमित्यर्थ-

इति । तन्न । शाब्दबोधमात्रस्यैव शब्दविषयकतयैकाविधेच्छाया एवोत्तेजकत्वात् ॥ ९ ॥

एतेनेत्यस्यार्थमाह *मणीति । औचित्ये हेतुमाह *तद्ग्रहे सतीति । तत्तत्पदवाच्यत्वग्रहे सतीत्यर्थः । *तस्य–शब्दस्य । *तदर्थम्–विशेषधर्मप्रकारकबोधार्थम् । अभ्युपेत्यापि गोरवादिकमाह *किञ्चेति । *कोकिल इति । जानामीति शेष । *तत्तत्पदेति । अत एवोक्तद्वन्द्वोपपत्तिरपीति बोध्यम् । शब्दानुविद्धत्व परसमतमपीत्याह *अतएवेति । शब्दविषयकत्वादेवेत्यर्थ· । तेषां बहूनां सत्त्वादाह । *कीर्त्तीति । *नामेति । उभयविषयकत्वमित्यर्थ । अन्यसम्मतिमप्याह *पातञ्जलेति । *एतेन–पातञ्जलादिविरोधेन । *ज्ञानम्—प्रत्यक्षादि । नन्वेव कथ तद्व्यवहारो ऽत आह *अर्थेन्नि । दाषान्तरमाह *इन्द्रियार्थेति । ननु कथ तैतस्तदङ्गीकारो ऽत आह *अव्यपेति । *एवच–तथा तदुक्तौ च । *अन्यत्र–शाब्दे । *तदेति । तस्य शब्दाभानस्याऽऽग्रहो ऽभिनिवेश इत्यर्थः । तद्भाष्यादिसङ्गतमपीदमित्याह *शब्देति । तत्पदकृत्यव्याख्यावसरे इति भाव· । तदाशयमाह *शब्दात ॥ ९ ॥

स्वंरूपमितिसूत्रे भाष्ये स्पष्टमेतत् ।

तत्र हि—

“न वा एतद्वक्तव्यम् । किं कारणम् ? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः । आतश्च शब्दपूर्वः । यो ऽपि ह्यसौ नाम्नाऽऽहूयते नाम च यदाऽनेन नोपलब्धं भवति तदा पृच्छति किं भवानाहेति । शब्दपूर्वकश्चार्थस्य संप्रत्ययः । इह शास्त्रे शब्दे सम्भवादर्थेऽसम्भवादर्थस्य निवृत्तिः” इत्युक्तम् । शब्दपूर्वको हीत्यस्य श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोके प्रसिद्धमित्यर्थः । अन्वयमुक्त्वा व्यतिरेकमाह–आ-

तश्चेति। प्रकारान्तरमाह—शब्दपूर्वकश्चेति। शब्दविशेषणक इत्यर्थः। तेनार्थे ऽसम्भवेन कारणत्वेन विशेषणत्वेन चोपस्थिते शब्दे कार्यमिति भावः। चकारेणास्य युक्त्यन्तरत्वमेवोचितम्। "मन्त्रे यजुषीति च च यदुच्यते तत्र मन्त्रशब्दादौ कार्यासम्भवेन मन्त्रादिसहचरिते ऽर्थे भविष्यति"इति भाष्यप्रतीके कैयटेन स्पष्टमेवोक्तम् "साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमाद्" इति।

किञ्च प्रत्यक्षादावपि विषयताभाननियमनिर्वाहाय पदभानमावश्यकम्। यज्ज्ञानं यत्पदादिविषयं तत् तज्जन्यबोधधीयाविषयतासमानविषयताकमिति नियमात् ॥ १० ॥

(कुं० टी०) *न वा एतदिति। स्वंरूपमिति सूत्रं न वक्तव्यमित्यर्थः। *शब्दपूर्वको हीति। शब्दज्ञानपूर्वको हीत्यर्थः। उपलब्धस्यैव हि शब्दस्यार्थबोधकत्वं न तु चक्षुरादिवत्सत्तामात्रेण बोधकत्वमिति भावः।

अयमाशयः—अतरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वरूपमेव मुख्यमर्थः। शब्दार्थयोश्चाभेदाच्छब्दगतैव जातिरर्थ आरोप्यते। अत एवोक्तं हरिणा—

तथा शब्दार्थसम्बन्धाच्छब्दे जातिरवस्थिता।
व्यपदेशेऽर्थजातीनाञ्जातिकार्याय कल्पते ॥ इति।

*शब्दपूर्वकश्चेति। शब्दपूर्वको हीत्यर्थः। *व्यतिरेकमिति। शब्दज्ञानाभावे ऽर्थज्ञानाभावादिति भावः। *युक्त्यन्तरत्वमेवेति।'यतः शब्दपूर्वक' इति पूर्वहेतुतया न व्याख्येयमि-

त्यर्थः । *मन्त्रइति । मन्त्रशब्दादिग्रहणवारणाय अशब्दसंज्ञेति निषेध इत्याशङ्क्य भाष्यकार आह "लक्ष्ये मन्त्रशब्दग्रहणासम्भवादर्थस्य ग्रहणं भविष्यति" इति। कैयटोक्तिमेवाह *साहचर्य चेति । *यज्ज्ञानमिति । दृष्टं च शाब्दबोधे घटज्ञानं घटपदविषयकम् । *यज्ज्ञानम्—घटज्ञानम् । *यत्पदादिविषयम्—घटादिपदविषयम् । *तद्—घटज्ञानम् । *तत्पदजन्येति । घटपदजन्येत्यर्थः । घटपदजन्यबोधे या विषयता तत्समानविषयताकमित्यर्थः । एवं च प्रत्यक्षेऽपि पदविषयताऽऽवश्यकी । तथाच विषयताऽपि शक्यैवेति भावः । *समानेति । शाब्दबोधे यावन्तो विषयास्ते प्रत्यक्षे ऽपीत्यर्थः ॥ १० ॥

(क०टी०) *एतत्—स्वरूपमिति । *अर्थस्येति । अर्थबोधकशब्दान्तरस्य निवृत्तिरित्यर्थः । न चार्थज्ञानोत्तर पर प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह *श्रोतुरिति । अर्थमाह *प्रसिद्धमिति । *तेन—प्रकारद्वयेन । *उपस्थिते—तत्रैव । ननु पूर्वोपसहार एवाय कुतो नेत्यत आह *चकारेति । अत एव षष्ठ्यन्तोल्लेखो ऽपीति बोध्यम् । निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुपादानार्थं सूत्रमिति तदग्रे शङ्कितफलान्तरखण्डनपरभाष्यमाह *मन्त्रइति। *कैयटेन—तेनापि । युक्त्यन्तरमाह *किञ्चेति । आदिना अनुमित्यादि । अपिना शाब्दसमुच्चयः । भानानिर्वाहस्यान्यतोऽपि जायमानत्वादाह *नियमेति । *पदेति । सर्वत्रेत्यादि । ननु 'अन्यद् भुक्तमन्यद्वान्तम्' इति बाधितमिदमत आह *यत्ज्ञानमिति । आदिना वाक्यम् । यथासख्यमन्वय. ॥ १० ॥

संनिकर्षादिभिस्तु न व्यवस्था, 'घटो रूपवान्' इतिज्ञानवत् 'घटस्य रूपम्' इतिरूपविशेष्यकज्ञानस्यापि तेन संनिकर्षेण जननात् । घटरूपोभयविषयकज्ञानस्य तत्संस्कारस्य वा पूर्वं सत्त्वेन यदा यज्ज्ञानं पूर्वं

तदा तस्य विशेषणतेत्यप्ययुक्तम् । विशेषणज्ञानस्येव विशेष्यज्ञानस्यापि विशिष्टबुद्धिकारणत्वात् । अन्यथा 'किञ्चिद्रूपवद्' इत्येव स्यात् न तु 'घट'इत्यादि[2] विशेष्यताग्रहदशायां तदनुत्पत्त्या। किञ्च,यथा विशिष्टस्य वैशिष्ट्यमिति बुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वेऽपि लाघवाद्विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणमिति कल्प्यते, अत एव निर्विकल्पकसिद्धिः, तथा विशिष्टे वैशिष्ट्यमिति विशेष्यतावच्छेदकप्रकारकविशेष्यज्ञानस्य कारणतायाः सर्वेषामावश्यकत्वेन विशिष्टबुद्धित्वमेव विशेष्यज्ञानस्य लाघवात्कार्यतावच्छेदकमुचितम् । 'घट' इत्यादिविशिष्टबुद्धावपि विशेषणज्ञानवत् निर्विकल्पकविशेष्यज्ञानमपि सुलभम् । अत एव 'घटघटत्वे' इति निर्विकल्पकाकारमाहुः ॥ ११ ॥

(कुं०टी०)ननु यथा संयुक्तसमवायबलाद्रूपस्य प्रत्यक्षं तथा संयुक्तविशेषणताबलादेव विषयताभानं सिद्धं किमर्थं विषयताया वाच्यत्वमत आह *सन्निकर्षादिभिस्त्विति । कदाचिद् रूपस्य विशेषणता कदाचिच्च विशेष्यता भवति तथा प्रकारत्वादीनामप्यनियमः स्यादिति भावः ।

एतेन पदानां स्वपरत्वे लक्षणैव न शक्तिः, अन्यलभ्यत्वात् । प्रत्यक्षोपस्थितत्वात् शब्दस्यापि भानमिति तु न युक्तम् । वृत्त्यभावे 'प्रत्ययानां प्रकृत्यर्थान्वित–' इति

१ विशेष्यतावच्छेदकरूपेण विशेष्याग्रहदशायां तदनुत्पत्त्या पाठोऽय कखमूलपु० अधिक• ।

२ विशेष्य–त्पत्त्या इति पाठ नास्ति कखपु० ।

न्यायविरोधात् प्रत्ययार्थान्वयानापत्तेः । अत एव वृत्तिं विनापि पदस्य भान स्वभावात् । अन्यबोधनेऽतिप्रसङ्गवारणाय वृत्तिरपेक्षिता न तु स्वबोधनेऽपीत्यपि न वक्तव्यमित्यपास्तम् ।

*घटरूपेति । यदा यस्य पूर्वं ज्ञानं तदा तस्य विशेषणतेत्यर्थः । *विशेष्यज्ञानस्यापीति । तथा च विशेष्यस्य पूर्वं ज्ञातत्वे विशेषणत्वापत्तिः । *किञ्चिदिति । विशेष्यरहितमपि प्रतीयेतेत्यर्थः । *न तु घट इत्यादीति । 'रूपवान् घट' इति बुद्धिर्न स्यादित्यर्थः । अत्रैव हेतुमाह *विशेष्याग्रहेति । *तदनुत्पत्त्या—रूपविविशिष्टघटज्ञानानुत्पत्त्या । *विशिष्टस्येति । 'रक्तदण्डवद् भूतलम्' इत्यत्र रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यं भूतले भासते । तत्र रक्तत्वप्रकारकनिश्चयः कारणम् । 'रक्तो दण्डो न वा' इति संशयानन्तरं तदनुदयादिति भावः ।

ननु निश्चयत्वेनैव हेतुत्वे 'रक्तो दण्डो न वा' इति संशयानन्तरं 'रक्तदण्डं संदेह्मि' इति विशिष्टविषयकोऽनुव्यवसायो न स्यादिति चेत् ।

सत्यम् । तादृशानुव्यवसायो दण्डे रक्तत्वाभावावगाही 'दण्डे रक्तत्वं सन्देह्मि' इत्याकारक एव । 'घटवद् भूतलम्' इति विशिष्टबुद्धौ तु विशेषणतावच्छेदकप्रकारकज्ञानमेव कारणं न तु निश्चयत्वगर्भम् । 'अयं घटो न वा' इति संशयानन्तरमपि तादृशबुद्ध्युदयात् ।

ननु 'घटत्वप्रकारकघटविशेष्यकज्ञानवानहम्' इत्यनुव्यवसायबलादस्तु सविकल्पकस्य प्रत्यक्षसिद्धत्वं निर्विकल्पकस्वीकारे तु मानाभाव इत्यत आह *अत एवेति । विशेषणज्ञानस्य कारणत्वादेवेत्यर्थः । घटत्वज्ञानं विना घटत्वप्रका-

रकज्ञानं न सम्भवतीति भावः ।

ननु अन्यथासिद्धत्वाद्विशेषणज्ञानं न कारणमिति चेन्न ।

स्वरूपतो 'घट' इति विशिष्टबुद्धिं प्रति स्वरूपतो घटत्वज्ञानस्य हेतुतया 'जातिमान्' इति बुद्धिं प्रति जातित्वेन हेतुतया विशेषणज्ञानस्य हेतुतासिद्धेः ।

*विशिष्टइति । 'रक्तदण्डः प्रमेय' इत्यत्र रक्तत्वविशिष्टे दण्डे प्रमेयत्ववैशिष्ट्यज्ञानम् । *घटघटत्वेइति । व्यक्तिं विना जातेरभानाद्व्यक्तिरपि भासते । तदुभयसंसर्गस्तु फलबलान्न भासत इति भावः । ननु चक्षुस्संयुक्तसमवायरूपकारणबलात्सम्बन्धस्यापि भानं दुर्वारमिति चेद् एवं तर्हि निष्प्रकारकत्वादेव निर्विकल्पकत्वम् ॥ ११ ॥

( क० टी० ) परोक्तिं खण्डयति *सन्नीति । आदिनाऽनुमित्यादिसामग्रीपरिग्रहः । *तेनेति । तथा च विपरीतबोधापत्तिरपीति भाव. । तदुक्त युक्त्यन्तर खण्डयति *घटेति । कालान्तरे तद्भावादाह *तत्संस्कारेति । विशेष्यताऽवच्छेदकरूपेणेत्याद्यपपाठ । *तदिति । विशिष्टबुद्धीति । *अन्यथा–तस्याकारणत्वदशायामित्यर्थः । ननु विशेष्यज्ञानस्य कारणत्व विशिष्टे वैशिष्ट्यमितिबुद्धावेव परसमतं सर्वावश्यक च न विशिष्टबुद्धिमात्रे इति हेत्वासिद्धिरत आह *किञ्चेति । परीत्यैव तत्सिद्धिरित्याह *यथेति । तयोस्तत्त्वयो स्वीकारे गौरवेण लाघवादनयोरेव तत्त्वयोः स्वीकार इति भाव. । अस्यावश्यकत्वमाह *अत एवेति । तस्य तं प्रति कारणत्वादेवेत्यर्थः । *कारणताया इति । अन्वयव्यतिरेकाभ्यामिति भाव । नन्वेवं 'घट' इत्यादिविशिष्टबुद्धिर्न स्याद्विशेष्यज्ञानरूपकारणाभावादत आह * घट इति । *आहु.—परे ॥ ११ ॥

ये तु निर्विकल्पकं नेच्छन्ति, विशेषणज्ञानकारण-

१ कलानुरोधी कखमूलपुस्तकयोः ज्ञानादिकारणत्वं चेति पाठः ।

त्वादिकं च नेच्छन्ति, संनिकर्षेणैव विशिष्टज्ञानमिच्छन्ति तेषां त्वनुपपत्तिरेव ।

घटादिपदजबोधे विषयताभाने तु घटादिपदानां घटत्वविशिष्टे शक्तिरिति शक्तिग्रहो नियामकः । घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नशक्तिरिति तदर्थः । अत एव विषयताविषयको ऽनुव्यवसायः । स्वरूपतो विषये विद्यमानस्य पदार्थस्यानुव्यवसाये भाने तु आम्रफलादिविषयकज्ञानानुव्यवसाये माधुर्यादीनामपि विषयतापत्तिः। कुब्जखञ्जः खञ्जकुब्जः इत्यादौ विषयताभानं विना बोधे[1] विशेषस्योपपादयितुमशक्यत्वाच्च । सम्बन्धस्य स्वरूपसम्बन्धेनैव भानवद् विषयतानां स्वरूपत एव भानं न कयापि विषयतयेति नानवस्था । न च विषयतानां कार्यकारणभावबलादेव बोधः । तद्बोधकारणतानियामकत्वेन शक्तिकल्पनावश्यकत्वात् ॥१२॥

(कुं०टी०)*विशेषणज्ञानेति। युगपद्विशेषणविशेष्येन्द्रियसंनिकर्षेणैव विशिष्टबुद्ध्युत्पत्तौ विशेषणज्ञानहेतुत्वे मानाभावः। एवं च विशेषणज्ञानसंपादकतयाऽपि निर्विकल्पकस्वीकार इति भावः।ननु विशेषणज्ञानहेतुतामतेऽपि स्मरणं प्रति विशेषणज्ञानं न कारणम् विशेषणज्ञानशून्यकाले संस्काराभावादेव स्मरणासंभवात्, तथा च विशिष्टस्मरणमेव कारणमस्तु किं निर्विकल्पेनेति चेत्। अपूर्वचैत्रत्वादिस्मरणाभावेन विशिष्टबुद्धिर्न स्यादिति । *सन्निकर्षेणैवेति । संनिकर्षस्यैव हेतुतामिच्छन्तीत्यर्थः । *अ-

१ कुं० कखपु० बोधशब्दाघटितः पाठ. ।

नुपपत्तिरेवेति । विशेष्यविशेषणभावेऽनियमापत्तिरित्यर्थः ।

तार्किकास्तु प्रत्यक्षे एव विशेषणतावच्छेदकप्रकारकनिश्चयादेः कारणतां वदन्ति । खलेकपोतन्यायेन तैः शाब्दबोधस्वीकारेण शाब्दबोधादौ पदार्थोपस्थित्यादेरेव नियामकत्वात् ।

ननु विशेषणज्ञानहेतुतयैव गतार्थत्वाद्विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे मानाभावः। सत्यम् । घटत्वादिनिर्विकल्पकानन्तरं 'घटो नास्ति' इति प्रत्यक्षवारणाय प्रतियोगितावच्छेदकप्रकारकज्ञानस्य हेतुत्वकल्पने गौरवात् ।

ननु पदानुपस्थितस्य विषयत्वस्य भाने हेत्वभावोऽत आह *विषयताभानेत्विति । घटादिवत् घटनिष्ठा विषयताऽपि भासत इत्यर्थः । *घटत्वनिष्ठेति । एवं च प्रकारत्वादिघटितधर्मस्य वाच्यत्वे प्रकारत्वादीनामपि वाच्यत्वं सिद्धमित्यर्थः । *विषयताविषयक इति । 'घटत्वप्रकारकज्ञानवानहम्' इत्यादिः।*स्वरूपतइति। शक्तिग्रहाविषयस्यापिपदार्थस्य भाने त्वित्यर्थः। *कुब्जखञ्जइति । अत्र कुब्जत्वनिष्ठैव प्रकारता । ननु विषयताभाने तत्रापि विषयत्वान्तरापत्तिरत आह *स्वरूपेति । न तु सम्बन्धान्तरेत्यर्थः । *बलादेवेति । घटत्वप्रकारकशाब्दबोधं प्रतीत्यादिनेत्यर्थः । * तद्बोधेति । घटत्वे प्रकारताबोधार्थं प्रकारतांशेऽपि शक्तिरावश्यकीत्यर्थः ॥१२॥

(क०टी०)परमत खण्डयति *येत्विति। आदिना विशेष्यज्ञानपरिग्रह.। नन्वेव विशिष्टज्ञानस्याकस्मिकत्वापत्तिरत आह *सन्नीति । अनुपपत्तिरेव व्यवस्थाभावरूपा । ननु शाब्दे विषयताभाने एवोक्तनियमसिद्ध्येष्टार्थसिद्धिः, तत्रैव किं मानमत आह *घटादिपदेति । *इति—इत्याकारक । ननु तस्य घटत्वभाननियामकत्वे ऽपि न विषयताभाननियामकत्वम् अशाब्दत्वात्तस्या अत आह *घटत्वेति ।

ननु यथाश्रुत एव तस्य कुतो नार्थः, अत आह *अन एवेति । तत्र शक्तिग्रहेणा व्यवसाये तद्भानादेवेत्यर्थः । तत्र तत्त्वस्यान्यथासिद्धिं निराचष्टे *स्वरूपत इति । अन्यथाऽनुपपत्त्यापि शाब्दे तद्भानमावश्यकमित्याह *कुब्जेति । शब्दादिभानस्य तुल्यत्वादिति भाव.। नन्वेव प्रकारत्वादेरपि विषयताऽन्तरेण भाने ऽनवस्थापत्तिरत आह *सम्बन्धस्येति ॥ १२ ॥

**समर्थसूत्रे भाष्ये च जहत्स्वार्थावृत्तिव्युत्पादनावसरे राजपुरुष इत्यादौ वाक्ये राजपदार्थे विद्यमानविशेष्यत्वरूपस्वार्थस्य त्याग इत्युक्तम् । एवं च ऋष्यनुभवसिद्धं विषयताभानं तच्छक्यत्वं च ॥१३॥**

(कुं० टी०) *विशेष्यत्वरूपस्वार्थस्येति ।

अयं भावः—राजत्वनिष्ठप्रकारतानिरूपिता या विशेष्यता तदवच्छिन्नो राजपदार्थः । वृत्तौ तु राजपदार्थस्य विशेषणत्वाद्विशेष्यत्वरूपस्वार्थस्य त्यागः । राजरूपार्थस्य तु त्यागाभावान्न तत्प्रयुक्तजहत्स्वार्थत्वमिति ।

*तच्छक्यत्वञ्चेति । विषयतया भानं शक्यत्वं चानुभवसिद्धमित्यर्थः ॥ १३ ॥

( क० टी० ) ननु घटत्वनिष्ठप्रकारतानिरूपिताविशेष्यतावच्छिन्नघटबोध प्रति घटपदज्ञान कारणमितिरीत्या सर्वत्र तद्विशिष्टे शक्त्यग्रहे ऽपि विशेषबोध सुलभो ऽत आह *समर्थेति । *च—अपि । *इत्यादावित्यस्य त्याग इत्यत्रान्वय.। *वाक्ये—राज्ञः पुरुष इत्यादौ । *इत्युक्तमिति ।

तत्र हि—वाक्याद् वृत्तेर्निष्पत्तिरिति वादिना मते किं वृत्तिलक्षणमिति प्रश्ने ऽन्यदीयमर्थं यत्रान्यशब्दोऽभिधत्ते आस्कन्दति सा वृत्तिर्यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थो ऽभिधीयत इत्यर्थकम्परार्थाभिधान वृत्तिरित्युक्त्वा, ननु स्वार्थे वर्त्तमानस्य तत्त्याग विना कथमर्थान्तराभिधायकत्वमि

त्याशङ्कयैव तर्हि जहत्स्वार्थेत्युक्त्वा, पुरुषमात्रस्य तर्ह्यानयनं प्राप्नोतीत्याशङ्क्य सिद्धान्तिनोक्तम्-"नैष दोषः। जहदप्यसौ नात्यन्ताय जहाति। यः परार्थविरोधी स्वार्थस्तं जहाति। तद्यथा-राजकर्मणि प्रवर्त्तमानस्तक्षा स्वकीयं तक्षकर्म जहाति न तु हिक्कितहसितकण्डूयितादीनि। नचायमर्थः परार्थविरोधी विशेषणं नाम, तस्मान्न हास्यति" इति। नात्यन्तायेति। सर्वथा त्यागे ऽनुपादानमेव तस्य स्यादिति भावः। नचायमर्थ इति। यद्यपि वाक्येऽपि राजार्थो विशेषणमेव तथापि तत्तत्पदाद्विशेष्यतयैवोपस्थिते पदार्थैकदेशतया न विशेषणत्वसम्बन्धप्रतिपादने सामर्थ्यम्। एवं च वाक्ये विद्यमानस्य विशेष्यत्वरूपस्वार्थस्य त्याग इति तदर्थः। विषयतायाः पदाशक्यत्वे तस्याः स्वार्थत्वाभावात्तत्त्यागे ऽपि जहत्स्वार्थत्वोक्तिसम्भवाभावः, "यः परार्थविरोधी स्वार्थस्तं जहाति" इति भाष्याक्षरासामञ्जस्यं च। परार्थविरोधीत्यस्य हि "राजपदेन परार्थस्य पुरुषरूपार्थस्यास्कन्दने तद्विशेषणत्वेन राजरूपार्थोपस्थितौ राजरूपोऽर्थः स्वतो न विरोधी किन्तु तद्गतविशेष्यत्वमेव विरोधिभूतम्, अतो राजरूपार्थं न हास्यति किन्तु तद्गतविशेष्यतारूपमेव स्वार्थं तदास्कन्दनविरोधिभूतं त्यजति" इत्यर्थ इति।

*एवं च-तथोक्तौ च। शाब्दे इति भावः॥ १३॥

अत एव "व्यक्त्याकृतिजातयस्तु पदार्थः" इति सूत्रे न्यायवार्तिककृतोक्तम्-"तुशब्दो विशेषणार्थः। किं विशेष्यते? प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्" इति। 'प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्य' इति प्रस्तावे ऽपि न्यायवार्त्तिककृतोक्तम्-"अनित्यः शब्दः कृतकत्वादित्यनुमाने शब्दस्य सिद्धत्वेन साध्यत्वं न भवतीति प्रज्ञापनीयेत्यादि। नापि शब्दे ऽनित्यत्वं साध्यम्। कृतकत्वेन हेतुना साध्यस्य योगाभावात्। अनेन परम्परासम्बन्धत्वं दर्शितम्। *किंचानित्यत्वमपि घटादौ सिद्धम्। तस्मादन्यधर्मत्वेन प्रज्ञातस्यानित्यत्व-

* नचानित्यत्वमिति पाठः कुञ्जिकासमतः, नतु कलायाः समतः।

स्य धर्मिणा शब्देन यो विशेष्यविशेषणभावः स साध्यः। स चोभयाश्रयः। धर्मी विशेष्यः धर्मो विशेषणम्"इति। अनेन ज्ञाने विषयताभानं स्पष्टमेवोक्तमित्यन्यत्र विस्तरेण निरूपितम् ॥ १४ ॥

(कुं०टी०) *व्यक्त्याकृतीति। जातिविशिष्टायां व्यक्तौ शक्तिस्वीकारे सम्बन्धांशे ऽपि शक्त्यापत्तिः, विशेष्यविशेषणभावे विनिगमनाविरहापत्तिश्चेति पृथक् तयोः शक्यत्वम्। जातेर्नियतसंस्थानव्यङ्ग्यत्वनियमाभावादाकृतेः पृथग्वाच्यता। *विशेषणार्थ इति। विशेषणं व्यावर्तनम्। किं व्यावर्त्यत इति पृच्छति *किंविशेष्यत इति। उत्तरमाह *प्रधानेति। जात्यादीनां गौणप्रधानभावस्य नियतत्वाभावात्त्रिसृणामपि पदार्थत्वमित्यर्थः। "तुशब्द एकैकमात्रस्य पदार्थत्वव्यवच्छेदाय। अन्यथा कदाचित्कस्याश्चिदुपस्थितिः स्यात्" इत्यन्यैर्व्याख्यातमत उक्तं *वार्तिककृतेति।

यदा हि भेदविवक्षा विशेषगतिश्च 'गौस्तिष्ठति' इत्यादि तदा व्यक्तिः पदार्थः अङ्गं तु जात्यादीति। यदा भेदो ऽविवक्षितः सामान्यगतिश्च तदा जातिः पदार्थः। यथा 'गौर्न पदा स्प्रष्टव्या'इति। आकारस्य प्राधान्ये तु 'पिष्टकमय्यो गाव' इति।

*प्रज्ञापनीयेति। 'पर्वतो वह्निमान्' इत्यत्र बोधनीयो धर्मो वह्निः तद्विशिष्टो धर्मी पर्वतः। *साध्यः–प्रतिपाद्यः। अनित्यः शब्द इत्यत्रानित्यत्वविशिष्टः शब्दः प्रतिपाद्यते [1]तस्मादनित्यत्वविशिष्टः शब्दः साध्यत इति भावः। अत एव "जिज्ञासितधर्मविशिष्टो धर्म्यनुमेय" इति भगवान् पतञ्जलिः। [2]एतच्च

१ तस्मा-ञ्जलिः पाठोऽय कु कपु नास्ति।

२ एतच्च-कारः अय पाठः कुं खपु. न विद्यते।

"साध्यनिर्देशः प्रतिज्ञा" इति सूत्रस्य व्याख्यानम्। अत एव "प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा" इति तत्र भाष्यकारः । प्रज्ञापनीयेत्यस्य कृत्यमाह *अनित्य इति। अत्र शब्दस्य सिद्धत्वात्साध्यत्वं न सम्भवति। नापि अनित्यत्वं साध्यं तस्य घटादौ सिद्धत्वात्। नापि शब्दनिष्ठमनित्यत्वं साध्यमित्याह *नापीति। अनित्यत्वं शब्दवृत्तीत्यनुमाने हि अनित्यत्वं पक्षीकृत्य शब्दवृत्तित्वं साध्यं तत्रानित्यत्वरूपे धर्मिणि कृतकत्वरूपहेतोरभावः। *साध्यस्येति। धर्मवत्तया प्रतिपाद्यस्य पक्षस्येत्यर्थः। *योगाभावादिति। तस्मात्प्रज्ञापनीयेत्यादिः। सुष्ठूक्तमिति भावः। *परम्परेति। स्वाश्रयवृत्तित्वेत्यर्थः। कथं तर्हि 'एकं रूपम्' इत्यादौ गुणे गुणानङ्गीकारात्स्वाश्रयसमवायेनैकत्वं रूपे प्रतीयत इति प्रवाद इति चेन्न। तत्र सङ्ख्याऽभावरूपस्यैकत्वस्य स्वीकारात् । *नचेति । घटादौ सिद्धमनित्यत्वमपीह न साध्यं सिद्धत्वादेव हेतोरिति भावः । क्वचित् किञ्चानित्यत्वमपीति पाठः। ननु यदि धर्मः प्रज्ञापनीयस्तदा अज्ञातस्य धर्मस्य कथं विशेषणत्वमत आह *तस्मादिति । *अन्यधर्मत्वेन—घटादिधर्मत्वेन। धर्मधर्मिणोः सामान्यतो ज्ञातत्वेऽपि विशेष्यविशेषणभावरूपविशेषबोधार्थमेवानुमानमिति भावः । *सचेति । विशेष्यविशेषणभावश्चेत्यर्थः । उभयाश्रयत्वे सति यत्सिद्धं तदुपपादयति *धर्मीति । पर्वतादिः। *धर्मः—वह्न्यादिः ॥ १४ ॥

(क० टी०) परसमतमपीदमित्याह *अतएवेति । तासां तत्त्वादेवेत्यर्थः। जात्याकृतिव्यक्तयस्त्विति पाठ. । सूत्रपाठे तथैवोपलम्भात् । प्रकरणान्तरे ऽपि तेन तथोक्तमित्याह *प्रज्ञेति । अपूर्वबोधनीयेत्यर्थः । साध्यलक्षणमिदम् । विशिष्टान्तविशेषणकृत्यमाह *अनित्य इति । *सिद्धत्वेन—तथाच नापूर्वबोधनीयत्वमिति भाव । यथाश्रुत निरस्य वैपरीत्यमपि

निराचष्टे *नापीति । *योगेति । साक्षात्सबन्धाभावात् मिथस्तत्त्वस्याभावात् । वह्निधूमादौ कार्यकारणभावादिसबन्धादेव तद्दर्शनाद् अन्यथाऽतिप्रसङ्गापत्तेरित्यर्थ. । नन्वेकाधिकरणवृत्तित्वमेव तयो सम्बन्धो ऽत आह *अनेनेति । आशयवर्णनमिद तस्य । *सबन्धानाम्–तत्त्वेनाभिमतानाम् । प्रज्ञापनीयत्वमपि तस्य नेत्याह *किञ्चानित्यत्वमपीति । नचानित्यत्वमस्तीत्यपपाठ । असम्बद्धत्वात् । उपसहरति *तस्मादिति । द्वयोस्तत्रासम्भवादित्यर्थ. । *अन्येति । घटादीत्यर्थ । तस्य पक्षमाह *सचेति । तथाचोभय पक्ष इति भाव. । नन्विदमुक्तसूत्रात्कथ लब्धमत आह *धर्मीति । उभयतात्पर्यमाह *अनेनेति । उभयथोक्तेनेत्यर्थ । *ज्ञाने–ज्ञानसामान्ये । पूर्वस्य शाब्दविषयत्वादन्त्यस्यानुमितिविषयत्वात् ।

नचान्यनिरूपितविशेष्यतयाविरोध, अन्यनिरूपितविशेषणताया अन्यनिरूपिताविशेष्यतया विरोधात् । अतएव नित्यत्ववि-शिष्टघटत्ववानित्यर्थे नित्यघट इति न साधु । एव च राजपुरुष इत्यादौ राज्ञि प्रकारतैव न विशेष्यता, राजत्वे प्रकारतावच्छेदकताख्याविषयतैव नैतु राजनिरूपिता प्रकारता । पुरुपपदार्थ च राजपुरुषत्वोभयनिरूपित विशेष्यताद्वयमविरोधात् । नचैव घटप्रकारकभूतलविशेष्यकप्रत्यक्षस्य 'घटवद्भूतलम्' इति शब्देनाभिलापानापत्ति. । तस्य प्रत्यक्षस्य तज्जन्यबोधीयविषयतासमानविषयकत्वाभावात् । शब्दजबोधे घटवतो भूतले प्रकारत्वादिति वाच्यम् । घटवदित्यशे घटनिष्ठप्रकारता निरूपितभूतलनिष्ठविशेष्यताशालित्वनादोषात् । नच तच्छब्दीयताद्विशेष्यता सबन्धित्वावच्छिन्ना प्रत्यक्षीया तु भूतलत्वावच्छिन्नेति विशेष इति वाच्यम् । भूतलपदेनापि तद्व्यक्तेरेवापस्थित्या सबन्धिनिष्ठविशेष्यताया अपि तदवच्छिन्नत्वबोधेनाक्षते । तस्या अपि भूतलत्वेन समानाधिकरणत्वात् । नचैव वीर. पुरुष इत्यादौ वीरनिष्ठप्रकारताया अपि पुरुषत्वसमानाधिकरणत्वात्पुरुषत्वावाच्छिन्नत्वबोधापात्ति. नच तथा ऽनुभव इति वाच्यम् ।

एकत्रैकरूपेण विशेष्यतावच्छेदकत्वप्रकारतावच्छेदकत्वयोर्विरोधात् । भिन्नपदोपास्थितैकवृत्तिविशेष्यताद्वयस्य तु शब्दा-

न्तरोपस्थितसमानाधिकरणधर्मान्तरावच्छेद्यत्वे न कश्चिद्विरोध.। अत एव घटविधेयकानुमितेरप्ययमभिलाप । तत्र भूतलस्य भूतलपदात्पृथगुपस्थितेरपि सत्त्वेन ततो घटविधेयकधियो ऽपि सम्भवात् ।

यत्तु घटवता भेदसम्बन्धेन तत्रान्वयधीरिति ।

तन्न । पदद्वयोपस्थाप्यव्यक्त्योरेकत्वेन तयो॰ सम्बन्धाकाङ्क्षाऽभावात् । अभेदस्य तु न सम्बन्धत्वमित्यग्रे स्फुटीभविष्यतीति दिक् ।

तदाह *इत्यन्यत्रेति । गुरुमञ्जूषादावित्यर्थ॰ ॥ १४ ॥

सर्वत्र शब्दभानमित्ययमर्थः "अथ गौरित्यत्र कः शब्दः" इत्यनेनापि सूचित इत्यग्रे निरूपयिष्यते ।

शब्दार्थयोरविभागादेव पस्पशायाम् "अथ गौरित्यत्र कः शब्दः" इति प्रश्नः। किञ्च तत्प्रघट्टके जात्यादीनां शब्दत्वमाशङ्कितं तद्विविक्तशब्दतत्त्वाज्ञानात् । नचैवमपि गुणादीनां गोशब्दत्वाशङ्का कथम्, तेन शब्देन तेषां तादात्म्याभावादिति वाच्यम् । निरन्तरत्वरूपायुतसिद्धत्ववदवयवविशेषानुगतसामान्यविशेषरूपगुणसमूहस्यैव द्रव्यत्वात् । स्त्रियामिति सूत्रे "द्रव्ये च भवतः कः संप्रत्ययः? गुणसमुदायो द्रव्यम्" इति भाष्यात् । "कं च प्रति अवयवो गुणः? समुदायं प्रति" इति "संख्याया अवयव" इति सूत्रभाष्याच्च। "अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यमिति पतञ्जलिः" इति पातञ्जलभाष्याच्च । गुणपदेनावयवा धर्माश्च । अत एव व्रीहिषु प्रोक्षणजन्यसंस्कारस्यांशत्वावयवत्वादिना व्यवहारः समन्वयसूत्रे भामत्याम् । समुदायसमुदायिनोश्च परस्परं भेदाभेदाभ्युपगमः। अत एव 'मृद्घटो' 'मृदि घट'

इत्याद्युपपद्यते गुणगुण्याद्योरिव। अत एव'घटः शुक्लः' 'घटे रूपं, गन्धः, स्पर्श' इत्याद्युपपद्यते । अत एव गुणाश्रयो द्रव्यमिति परे वदन्ति। अयुतसिद्धावयवविशेषानुगत इत्युक्तेर्वनादीनां नातिरिक्तद्रव्यत्वम् । निरन्तरावयवस्वरूपायुतसिद्धत्वाभावात्। विजातीयावयवविभाग एव तन्नाशकः । भूयो ऽवयवावच्छेदेन चक्षुस्संयोगश्च तत्प्रत्यक्षे कारणम् ॥ १५ ॥

(कुं०टी०) *तद्विविक्तेति। जात्यादिव्यतिरेकेण द्रव्यस्यानुपलम्भादित्यर्थः । शब्दशब्दार्थयोरभेदाध्यासे ऽर्थगतजातेरपि शब्दत्वसम्भवादिति भावः । *कथमिति। एकस्मिन्नेव फले पूर्वरूपनाशेन रूपान्तरोत्पत्तौ 'तदेवेदं फलम्' इति प्रत्यभिज्ञया गुणव्यतिरिक्तस्यैव द्रव्यस्य न्याय्यत्वात् इति भावः । 'गुणसमूहो द्रव्यम्' इति पक्षे समूहस्य शब्दवाच्यत्वे ऽवयवस्यापि शब्दवाच्यत्वात् शब्दत्वमिति भावः। *अवयवविशेषेति । अयुतसिद्धा ये अवयवास्तदनुगतो यः सामान्यविशेषरूपगुणसमुदायः स एव द्रव्यमित्यर्थः । अयुतसिद्धत्वमपृथग्भावेनानुभूयमानत्वम् ।

अयम्भावः—पृथिव्याः सामान्यं कठोरत्वम्, जलस्य स्नेहः, वह्नेरुष्णता, वायोर्वहनशीलता, आकाशस्य सर्वतो गतिः । शब्दस्पर्शरूपरसगन्धाश्च पृथिव्यादीनां विशेषास्तत्समूहो द्रव्यम् । तत्र समूहमात्रं न द्रव्यमिति बोधयितुमुक्तम् *अयुतसिद्धेति । एतस्यैव विवरणम् *निरन्तरत्वरूपेति। यथा हि शरीरादीनामवयवा अयुतसिद्धा नैवं वनादीनामवयवा अयुतसिद्धा इति न तेषां द्रव्यत्वम्। गुणानामपि रूपादि सामान्यं शुक्लादिर्विशेष इति। *कः सम्प्रत्ययइति । किमात्मकं द्रव्यं भवान् मन्यत इत्यर्थः । *गुणसमुदायो द्रव्यमिति ।

[1]सत्त्वरजस्तमसां गुणानां परिणामविशेषाः शब्दादयः पञ्च रागाः सत्त्वाद्यात्मका एव तत्सङ्घात एव घटादिकं ननु तद्व्यतिरिक्तमवयविरूपमस्तीति सांख्यसिद्धान्तः । शतशः[2] छिन्नस्यापि पशोः रूपरसगन्धादिव्यतिरिक्तस्य कस्य चिद्वस्तुनोऽनुपलम्भाद् गुणानां समुदाय एव द्रव्यम् । तत्र प्रत्येकाभिप्रायेण गुणव्यवहारः समुदायाभिप्रायेण द्रव्यव्यवहारः । लोहकार्पासयोर्गुरुत्वभेदस्तु समूहकृत एव न द्रव्यभेदकृतः । "तस्य भावः' इति सूत्रे भाष्येऽपि द्रव्यगुणयोर्भेदव्यवहारः समूहसमूहिकृत एवेति भावः । तत्र समूहसमूहिनोरभेदात्तद्ग्रहो द्रव्यम्, व्याकरणे तु गुणशब्देन धर्ममात्रमुच्यते ।

तदुक्तम् हरिणा—

संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते ।

गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ॥ इति ।

संसर्गिण आधारस्य भेदकं सव्यापारमवच्छेदकरूपेण प्रतीयते तस्य गुणत्वम् । लोके हि परतन्त्रो गुण इत्युच्यते । तदाश्रयो द्रव्यमिति वैशेषिकपारिभाषा । इह तु सर्वनामपरामर्शयोग्यत्वं भेद्यत्वं वेत्यादि द्रव्यलक्षणम् । अत एव द्रव्यं पदार्थ इति पक्षः । अत एव च समानाधिकरणशब्दस्य समानद्रव्यवचनतया सर्वरस इत्यत्र समासः ।

नन्वेवं "विप्रतिषिद्धं चानधिकरणवाचि" इत्यत्रापि गुणादीनां निषेधात् शीतोष्णं सुखदुःखमित्यत्रैकवद्भावो न प्राप्नोतीति चेन्न । तत्र वचनसामर्थ्यात्प्रसिद्धद्रव्यग्रहणात् ।

"वोतो गुणवचनाद्" इत्यत्र गुणोपसर्जनद्रव्यग्रहणाज्जा-

---

१ सत्त्व-सिद्धान्तः पाठोऽयं कु,खपु नास्ति ।

२ शतश.-भावः अय च पाठ. कु कपु नोपलभ्यते ।

त्यादिविशिष्टग्रहणे प्राप्ते "सत्त्वे निविशते" इति परिभाषा आश्रिता ।

"गुणवचनब्राह्मणादिभ्य" इत्यत्र समासादिभिन्नत्वं गुणत्वमिति वार्तिकसमयः । "तृतीयातत्कृतार्थे" इत्यत्र खण्डादिरेव गुणः ।

त्रिगुणा रज्जुरित्यत्र समवायवचनो गुणशब्दः । गुणशब्देनावयवानामपि ग्रहणात् । तत्समुदायोऽपि द्रव्यमिति व्यवस्थापयति *कश्च प्रतीति । किञ्च समुदायघटकत्वाद्रूपादयोऽप्यवयवा इत्यभिप्रेत्याह *अयुतसिद्धेति । एतदभिप्रेत्यैवाह *गुणपदेनेति । *भामत्यामिति ।

तत्र हि 'निरवयव' इति शारीरकभाष्यप्रतीकमुपादाय 'व्रीहीणां खलु प्रोक्षणेन संस्काराख्यो ऽशो यथाऽनुमन्यते नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति' इत्युक्तम् ।

ननु गुणसमुदायस्यैव द्रव्यत्वे स्वस्यैवाधाराधेयभावासम्भव इत्यत आह *समुदायसमुदायिनोरिति । *अत एव गुणाश्रय इति । समूहसमूहिनोर्भेदस्यापि स्वीकारादयमपि व्यवहार इत्यर्थः । *नातिरिक्तेति । वृक्षसमूह एव वनं नातिरिक्तमित्यर्थः । ननु अवयवसमुदायस्यैव द्रव्यत्वे तन्नाशः कथमत आह *विभाग एव तन्नाशक इति ।

अत एवासमवायिकारणनाशात्कार्यनाशः, न तु समवायिकारणनाशात् । परमाणूनां नित्यत्वेन द्व्यणुकनाशानापत्तेरिति तार्किकाः ।

ननु सम्पूर्णस्याप्रत्यक्षे घटादेः प्रत्यक्षं न स्यादत आह *भूयो वयवेति ॥ १९ ॥

(क० टी०) प्राक् प्रतिज्ञातमेवाह *शब्देति । उक्तरीत्येति भाव ।

अन्यथा कोटिद्वयानुपस्थित्या तदसङ्गतिः स्पष्टैव । साधकान्तरमप्याह *किञ्चेति । *तादिति । अर्थतो निजन्यर्थ । *एवमपि–प्रश्नस्यार्थे शब्दत्वाशङ्कायाश्चोक्तरीत्योपपत्तावपि । *सिद्धत्व वदिति मतुप् । तस्यैव तत्त्वे हेतुमाह *स्त्रियामिति । *द्रव्येचेति विषयसप्तमी । किमात्मक द्रव्य भवान्मन्यत इत्यर्थ । 'स्त्रीत्व कस्य गुण, द्रव्यस्य' इत्युक्त्वेदमुक्त तत्र । नन्वेतावता विशेष्यांशो लब्धो न विशेषणांशोऽत आह * कञ्चेति ।

तत्र हि पञ्चावयवा इत्यादौ वारणाय "अवयवे वर्तमानाद्वियाने ऽवयविनि प्रत्यय' इत्युक्ते 'पञ्च पश्ववयवा देवदत्तस्य' इत्यत्रातिव्याप्तिवारणाय "अवयवशब्दो ऽय गुणशब्द । अस्येति वर्तते । तेन य प्रत्यवयवो गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम्" इत्युक्तेदमुक्तम् । अवयवारब्ध्ये एवावयविशब्दप्रयोग इति तदाशयेन तेन तदनुगतस्तत्समूह एवावयवीति ध्वनितमिति भाव ।

नन्वेवमपि स्पष्ट न लब्धम् अत आह *अयुतेति । सर्वसङ्ग्रहायाह *गुणेति । *अत एव–धर्माणा तेन ग्रहणादेव । आदिना अङ्गत्वम् । *समेति । "तत्तु समन्वयाद्" इति सूत्रे ।

तत्र सामान्य नाम घट घटव्यक्तिरूपघटपरमाणुमत्त्वम् । रूपक्रियादीनामप्येतन्मते द्रव्यत्वात्तत्तद्व्यक्त्यनुगमोऽस्त्येव । रूपरसगन्धस्पर्शशब्दानां तत्तन्मात्ररूपतया द्रव्यत्व स्पष्टमेव । गुरुत्वाद्यपि प्रकृतिपरिणामत्वात्तथा । तेषा गुणत्वव्यवहारस्तु 'घटे रूपम्' इत्यादिव्यवहारकल्पिताश्रितत्वेन रूढः । परोपकारकत्वाच्च तेषाम् । व्यक्तित्व च व्यज्यते ऽनयेति व्युत्पत्ते । सैव चानुगताकारप्रतीतिजनिका । इदमेवाभिसन्धाय त्यक्तभेदा व्यक्तय एव जातिरिति मतमाहु ।

शब्दादितन्मात्रैः प्रथम परमाणूनामेवोत्पत्ति । पश्चात्परमाणुक्रमेण महापृथिव्याद्युत्पत्ति । परमाणुद्वारैव तन्मात्राणां कार्योपादानत्वमिति तेषा सिद्धान्तात् । तत्र पार्थिवपरमाणुस्तन्मात्रपञ्चकावयवक । जलपरमाणुर्गन्धतन्मात्र विहाय चतुरवयवक । एव तेजोवाय्वाकाशपरमाणवस्त्रिद्व्येकावयवका । विशेषास्तु शब्दरूपादिपरमाणव । तेषा भेदत्यागश्च घटजनकशक्तिमत्त्वेनैक्यारोपात् । नच परमाणूनां सावयवत्वेऽनन्तावयवत्वेन मेरुसर्षपयो' परिमाणसाम्यापत्ति । अनन्तक्षणघटितयोरवान्तरकल्पयोरिवानन्तपरमा-

ण्वारब्धमेरुभूगोलयोरिव चानन्त्यविशेषाद्विशेषोपपत्ते', प्रकृतौ विश्रमाच्चेति तद्भावः।

ननु किं तयोः परमतवद्भेद एवाभेद एव वा, अत आह *समुदायेति। *इत्याद्युपपद्यते इति। आदिना वृक्षे शाखा, तन्तूनां पट, आम्राणां वनम्, कर्मधारयेणाम्रवणमित्यादिपरिग्रह। गुणगुण्याद्योरित्यादिना क्रियाक्रियावतोर्जातिव्यक्त्योश्च परिग्रह। *अतएव—तयोस्तादात्म्यघटकभेदाङ्गीकारादेव। एवमग्रेऽपि। नतु परमतरीत्या सर्वथा भेदेन। ननु समूहस्य द्रव्यत्वे वनस्याप्यतिरिक्तद्रव्यत्वापात्तिरत आह *अयुतेति। निरन्तरत्वरूपायुतेति पाठ। तदवयवानामित्यादिः। वनादेर्युतसिद्धावयवकत्वादिति भावः। नन्वेव यत्किञ्चिदवयवविनाशादपि तन्नाशापत्तिरत आह *विजातीयेति। परमते चतुर्विधसंयोगस्य तत्र कारणत्वे गौरवादाह *भूयोऽवयवेति।

अत्रेद बोध्यम्—कार्यमात्र च स्वकारणेन तत्तच्छब्दव्यवहाराविषयेण सूक्ष्मरूपेण सहैवानुगतमिति नासदुत्पादः। अभिव्यक्तिलक्षण कार्यमेव च तत्सत्ताऽनुमापकम्। असदुत्पादे सर्वत्र सर्वाभिव्यक्त्यापत्तेः। नच सर्वदाऽभिव्यक्त्यापत्तिः। निमित्तकारणसहकारेणैव वर्त्तमानावस्थारूपप्रादुर्भावाङ्गीकारात। मुद्गरपातादिना कपालादिरूपधर्मान्तरोदये चातीतावस्थारूपतिरोभावः। अतीतानागतावस्थे च ध्वसप्रागभावौ। अनागतावस्थारूपप्रागभावस्य चाभिव्यक्तिहेतुत्वान्नातीतव्यक्ते' पुनरुत्पत्ति। 'घटो नष्टः' 'घटो वर्त्तमान' 'घटो भविष्यति' इति त्रिष्वपि कालेषु घटानुगतिदर्शनादपि तत्सत्ताऽनुमानम्। अविद्यमाने विषयतादीनामप्यनुपपत्तेश्च। अभिव्यक्तेरभिव्यक्तिस्तु उत्पत्तेरुत्पत्तिवद् अभावे ऽभाववत्तत्स्वरूपैवेति नानवस्था। अभिव्यक्ते' सूक्ष्मावस्थाऽपि वस्तुसूक्ष्माऽवस्थैव न ततो ऽतिरिक्ता। क्वचित्तु अङ्कुरादिरूपाभिव्यक्तिरेव शालिनिष्पत्तिरुक्ता 'वृष्टश्चेद्देवो निष्पन्ना शालय' इत्यादौ। अङ्कुरावस्थायामेव शालित्वारोपो ऽवश्यभावित्वप्रतिपादनाय। ,नच निष्पन्नाश्चेद् भुज्यन्तामभिव्यक्तिर्हि प्रतीक्षणीया' इति भाष्ये उक्तम्। तत्राभिव्यक्ति स्थूलरूपेण बोध्या। कार्यस्यानागतावस्थैव च कारणेषु शक्तिरित्युच्यते। तस्याः शक्तेर्यावत्स-

हकारेण कार्यजनकता । तत्र सर्वत्र तच्छाक्तिमत्त्वोपचारः । स्पष्ट चेद् सर्वं पातञ्जलभाष्यादौ । "तस्यभाव" इति सूत्रे च भाष्ये ध्वनितामिति । अतिरिक्तावयविवादिना ऽप्यवयवानामनपलापात् । तदपलापे तदाधारताऽनुपपत्ते. ॥ १५ ॥

तदतिरिक्तो ऽवयवी तु नोपलभ्यते, ग्रावसमुदायस्थल इव । किञ्च तस्यातिरिक्तत्वे रूपगुरुत्वादेर्द्वैगुण्यस्योपलम्भापत्तिः । अवयविनो रूपराहित्ये ऽप्रत्यक्षत्वापत्तिः । नच अन्त्यावयवपरमाणूनामतीन्द्रियत्वेन तदाश्रितगुणाप्रत्यक्षत्वापत्तिरिति वाच्यम् । रथाङ्गानां प्रत्येकं कार्यासामर्थ्ये ऽपि विलक्षणसमुदायभावे कार्थकरत्ववदुपपद्यते । एवं च गोशब्दे तत्समूहाभेदेन तत्समूह्यभेदोऽपि सिद्ध इति भावेन गुणादीनां गोशब्दत्वाशङ्का । लिङ्गसंख्यान्वयि द्रव्यं, सर्वनामपरामर्शयोग्यं द्रव्यमिति तु स्वशास्त्रव्यवहारोपयोगीति बोध्यम् । 'गुणो नाम स' इत्युक्तराशयस्तु गोशब्देनानुद्भूतभेदावयवानुगतसमूहेनैव तादात्म्यं न तु तदवयवैरपीति । तत्र "भेदः प्रतिभासमात्रकल्पितत्वेनाध्यस्तः 'राहोः शिर' इतिवत् । अभेदस्तु व्यावहारिकः" इति वाचस्पतिमिश्राः । अन्ये तु उभावपि व्यावहारिकौ । 'स्वर्णं कुण्डलम्' 'स्वर्णस्य कुण्डलम्' इति च व्यवहारात् । एतद्व्यवहारान्यथाऽनुपपत्त्यैव तयोःक्वाचिदविरोधस्याप्यङ्गीकारात् ।

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥ इति—

श्रीहर्षोक्तेः। किञ्च, स्वर्णत्वरूपेणाभेदस्य कुण्डलत्व-

रूपेण भेदस्य स्थितिरित्यविरोधः । सामानाधिकरण्यं चैकार्थबोधकत्वमेव प्रकाराविशेषानपेक्षो ऽभेदस्तु भेदेन विरुद्धः । प्रतिभासकल्पितत्वेऽपि यावद्व्यवहारं ब्रह्म ज्ञानतः प्राक् शुक्तिरजतवत्तद्व्यवहारानपगमेन व्यर्थ-परिश्रमत्वात् । 'राहोः शिर' इत्यत्रानेकावस्थायुक्त-राहोरेकावस्थायुक्तशिरसो ऽवयवत्वेन तत्रापि व्या-वहारिकभेद एव ॥ १६ ॥

(कु.टी.)सामान्यविशेपरूपगुणसमुदायाश्रयो द्रव्यमिति मतं दूपयति *तदतिरिक्त इति । *ग्रावः—पाषाणः । यथा तत्समूहाश्रयीभूते पा-षाणातिरिक्तन्नोपलभ्यते एवमित्यर्थः । *द्वैगुण्यस्येति । अवय-वावयविगुरुत्वाभ्यामिति भावः । नन्ववयवरूपेणैव निर्वाहादवय-विनो न रूपवत्त्वमिति न तद्द्वैगुण्यापत्तिरत आह *अवयविन इति । अवयविनो ऽतिरिक्तत्वाभावे अप्रत्यक्षत्वापत्तिं शङ्कते *न चेति । अनवस्थाभयात्परमाणूनामवयवा न स्वीक्रियन्त इत्य भिप्रेत्याह *अन्त्यावयवेति । *उपपत्तेरिति । परमाणूनाम-तीन्द्रियत्वे ऽपि तत्समूहस्य प्रत्यक्षे बाधकाभावः । पिशाच-समूहस्तु न दृश्यते तत्र विलक्षणसंयोगाभावादिति भावः । *गोशब्देनेति । गोशब्दस्य समूहाभिन्नत्वे सिद्धे समूहिना रूपा-दिनाऽप्यभेदः सिद्ध इत्यर्थः । *इतिभावेन—इत्याशयेन । ननु गुणसमुदायस्यैव द्रव्यत्वे सर्वरस इत्यत्र समानाधिकरणलक्षणः कर्मधारयो न स्याद् अधिकरणशब्दस्य द्रव्यवाचित्वाद्, अत आह *लिङ्गसङ्ख्येति । *सर्वनामेति । 'इदम्,' 'तद्' इति परामर्शयोग्यं वस्तु द्रव्यम् । तेन स्त्रीत्वस्यापि स्त्रीत्वेन योगात् स्त्रीता इति तल्प्र-

१ अत्र भेद इतिच्छेद , भेदेनेत्यत्राभेदेनेति पाठः कुञ्जिकासमत.। कलानुसारीच ऊर्ध्वमुपन्यस्त. ।

त्ययासिद्धिरिति भावः। *अनुद्भूतेति । अनुद्भूतावयवभेदवता समूहेनैव तादात्म्यमित्यर्थः। *ननु तदवयवैरपीति। ननु समूहावयवैरूपादिभिरपीत्यर्थः । 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति न्यायस्तु यत्र स्वाभिन्नद्वारकः स्वस्वरूपानुगमस्तद्विषयः। यथा- परमकारणकार्योपादानके परमकारणाभेदः । अत एव सुखदुःखयोर्नाभेदः। एवं च गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेऽपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न शब्दत्वमिति भावः। *अध्यस्त इति। परमार्थदशाया वस्तुमात्रस्यासत्यत्वात् व्यवहारदशाया यत् सत्यत्वं तद्व्यावहारिकमित्युच्यते। यत्तु व्यवहारदशायामप्यसत्यं तत् प्रातिभासिकमित्युच्यते । *व्यावहारिकइति ।

अयं भावः—'सत्यं चानृतं च सत्यमभवद्' इति तैत्तिरीयकश्रुतौ सत्यस्य ब्रह्मणः सत्यानृतोभयतोक्ता । तत्र सत्यत्वं व्यावहारिकसत्यतया सृष्टेः, व्यवहारसत्यविलक्षणं च भ्रमस्थले रजतादिकं प्रातिभासिकं जायत इत्यवश्यं स्वीकार्यमिति ।

*उभौ—भेदाभेदौ । *तयोः—भेदाभेदयोः । ननु ज्ञानस्य स्वप्रकाशत्वे स्वस्यैव विषयविषयिभावः कथमत आह *अन्यथाऽनुपपत्तिश्चेदिति । विषयविषयिणोरभिन्नत्वदर्शनविरोधरूपदृष्टवैमत्यमन्यथाऽनुपपत्तिःपिनष्टीत्यर्थः। ननु दृष्टविरोध एवानुपपत्तिं कुतो न बाधत इत्यत आह *सैवेति। अन्यथाऽनुपपत्तिरेव सर्वतो बलवती दृष्टविरोधं निराकरोतीत्यर्थः । *किञ्चेति ।

अयं भावः—'सुवर्णं कुण्डलम्' इत्यत्राभेदे आत्यन्तिके अन्यतरस्य द्विरवभासप्रसङ्गः, भेदे चात्यन्तिके गवाश्वादिवत्सामानाधिकरण्यासम्भव इति ।

---

१ अध्य—च्यते पाठः कु कपु नास्ति ।

*स्वर्णत्वरूपेणेति । स्वर्णत्वरूपसामान्यधर्मविवक्षायामित्यर्थः । तदुक्तं भामत्यां 'कार्यरूपेण नानात्वमभेदः कारणात्मना' इति ।

युक्तञ्चैतत् । सर्वथा अभेदे कार्यकारणभावासम्भवात् । नचैवं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यधिकरणविरोधः । उपादानव्यतिरेकेणोपादेयं नास्तीति तदर्थात् । *इत्यविरोध इति । भेदाभेदयोराविरोध इत्यर्थः । नेनु विभिन्नरूपेणोपस्थित्यभावेऽपि भेदस्यैवासम्भव इत्यत आह *सामानाधिकरण्यंचेति । *तेन—अभेदेन । *एकार्थेति । भिन्नप्रवृत्तिनिमित्ताश्रयैकार्थेत्यर्थः । *प्रकारेति । नीलो घट इत्यत्र नीलत्वघटत्वरूपप्रकारविशेषापेक्षो भेदो नतु विशेष्यस्यापि भेदः, अभेदेन विरोधादित्यर्थः । *प्रतिभासेति । कल्पितस्यापि भेदस्य व्यवहारदशायां सत्त्वमस्त्येवेत्यर्थः । *व्यर्थपरिश्रमादिति । व्यावहारिकत्वस्य सम्भवे नाध्यस्तत्वकल्पनस्यान्याय्यत्वादित्यर्थः ॥ १६ ॥

( क० टी० ) परमत खण्डयति * तदतीति । तत्समूहातिरिक्त इत्यर्थः । दोषान्तरमाह *किञ्चेति । तस्यावयविनस्तत्समूहातिरिक्तत्वे इत्यर्थ । तत्समूहनिष्ठरूपाद्यपेक्षया भिन्नावयविनिष्ठरूपादेर्भिन्नत्वादिति भावः । नन्ववयवी रूपगुरुत्वादिरहित एवात आह *अवयवीति ।

नच रूपरसादिपरावृत्तौ तस्य समूहस्यान्यत्वात्प्रत्यभिज्ञाऽनुपपत्तिः । कस्य चिदवयवसमूहस्यानुगतस्यापि सत्त्वेन तदुपपत्तेः । यद्वा, आकृतिनिबन्धना सा । बाल्ययौवनादिभिन्नेषु चैत्रादिशरीरेषु तत्प्रत्यभिज्ञानवत् । गुरुत्वप्रतीतिरप्यव-

---

१ ननु—चेति पाठोऽय कु कपु नास्ति ।

२ व्यर्थपरिश्रमत्वादिति । प्रातिभासिकत्वकल्पनस्य निरर्थकत्वादित्यर्थ. । पाठोऽय कु कपु अधिकः ।

यवानुगतगुरुत्वसमुदायविषया दशपाषाणगतगुरुत्वप्रतीतिवत् । नन्ववयविनोऽतिरिक्तत्वे परमाणोरमहत्त्वेनातीन्द्रियत्वे ऽपि तद्रूपस्य ततो भिन्नस्योद्भूतत्वेन प्रत्यक्षत्वमिष्ट तदत्र न स्यात्तस्य तदभेदादित्याशयेनाह *न चेति ।

समूहस्य तैर्भेदाभेदाङ्गीकारेणोक्तरूपस्य समूहस्यातीन्द्रियावयवकस्यैन्द्रियकत्वे बाधकाभाव । एकस्य तण्डुलस्य क्षुत्प्रतिघातासमर्थत्वे ऽपि तत्समुदायस्य तत्समर्थत्वदर्शनादित्याशयेनाह *रथाङ्गानामिति । तस्मादुक्तविधगुणसमूह एव द्रव्यम् । अत एव स न केवलावयवरूप., तद्विलक्षणजलाहरणादिव्यवहारकारी च। द्विविधो ऽपि समुदायो द्विविध.। कश्चिच्छब्दानुपस्थितभेदावयवानुगतः कर्मधारयण 'वृक्षवनम्' इति यथा । कश्चित्तु शब्दोपस्थितभेदावयवानुगत. यथा–'उभये देवमनुष्या' इति, 'सहस्रतन्तुक पट' इति चेति बोध्यम् ।

ननु तस्य द्रव्यत्वे ऽपि तयोस्तत्त्वे ऽपि च शङ्का न समाहितेति "अन्यत् भुक्तमन्यद्वान्तम्" इति न्यायापत्तिरत आह *एवञ्चेति । तत्समूहस्य द्रव्यत्वेन तयोस्तदङ्गीकारे चेत्यर्थ । *भावेन–आशयेन । इद च द्रव्यलक्षण लौकिक न शास्त्रीयमित्याह *लिङ्गेति । *अत एव–शास्त्रीयप्रक्रियाव्यवस्थासिद्धिरिति भाव. । गोशब्दस्यानुद्भूतेति पाठ । ननु भेदाभेदयोर्विरुद्धत्वात्कथ सामानाधिकरण्यम्, अत आह *तत्रेति। तयोर्मध्ये इत्यर्थ. । अध्यस्तत्वस्वरूपमाह *प्रतीति। मात्रपदेन व्यावहारिकत्वनिरास. । कार्यनिर्वाहायाह *राहोरिति । एव च न विरोध इति भाव । *मिश्रा इति। भामत्यामिति भाव. । नन्वेव विरुद्धयोस्तयो कथमेकत्र स्थितिरत आह *एतदिति। उक्तद्विविधेत्यर्थ । सर्वत्रानतिप्रसङ्गायाह *क्वचिदिति । तथा व्यवहारविषये इत्यर्थ । नन्वनुपपत्त्यापि कथ दृष्टविरुद्धसाधनमत आह *अन्यथेति । *दृष्टविरुद्धत्व नाशयति—तदविरोध सम्पादयति। इदच विरोधमभ्युपेत्योक्तम्। वस्तुत स एव नेत्याह *किञ्चेति । नन्वेवम् उभयत्रोभयसत्त्वात्कथ 'स्वर्ण कुण्डलम्' इति सामानाधिकरण्यं विशेषणभेदाद् अत आह *सामेति । एवेन विशेषणैक्यनिरासः । 'नीलो घट' इत्यादौ तथैव

सत्त्वादिति भाव । नन्वेवं तौ विरुद्धाविति प्रवादोच्छेदापत्तिरत आह *प्रकारेति। अभेदस्त्विवति छेदः । अयमेवात्यन्तिकाभेद इत्युच्यते। *विरुद्ध –विरुद्ध एव । ब्रह्मणीति भाव । नच गन्ध-पृथिवीत्ववत्प्रकारविशेषानपेक्षावपीमावेकत्रास्तामिति वाच्यम् । एकत्रैव घटे 'घटो' 'न घट' इति बुद्ध्योः समावेशापत्तेः । ननु मिश्रो करीत्यैवोपपत्तौ किमिति भेदस्य व्यावहारिकत्वमत आह *प्रतीति । अनपगमे ऽस्यान्वय ।*तदिति । भेदेत्यर्थः । प्रातिभासिकस्य तु प्रतिभासकाले एव सत्ता नान्यदेति तदसङ्गतिरेव स्यादिति भाव । *व्यर्थेति। प्रातिभासिकत्वकल्पनायामित्यर्थः। नन्वेव मिश्रोक्तनदुदाहरणस्य का गतिरत आह *राहोरिति। आरोपितानेकावस्थाभिः समुदायरूपत्वस्याप्यारोप इति भाव । एवेन प्रातिभासिकत्वनिरास । इदमपि कैयटानुरोधेनोक्तम् ॥१६॥

वस्तुतस्तत्र विकल्पात्मकमेव ज्ञानम् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति तल्लक्षणं पतञ्जल्युक्तम्। शब्दज्ञानजन्यो बाह्यवस्तुशून्यो विकल्प इति तदर्थः। किंञ्च, शब्दप्रयोग तज्जन्यज्ञानं चानुपतति तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण सदैव जायमानो विकल्प इत्यर्थः। अनेन वक्तुः शब्दप्रयोगजनकमानसज्ञानस्यापि विकल्पत्वमुक्तम् । विपर्ययेतु बाधोत्तरं शब्दप्रत्यययोरभावान्न तेन गतार्थता ।

हरिणाऽप्युक्तम्–

अत्यन्ता सत्यपि स्वार्थे ज्ञानं शब्दः करोति हि। इति ।

अत्यन्तेत्यस्य बहिरित्यादिः । ज्ञानमवष्टभ्य श-

१ किञ्च–त्यापितदर्थः पाठ कु० कस्य पु० मूले नोपलभ्यते न तरां व्याख्यानमस्य तस्यां टीकायाम् । केवलमूलपुस्तकाद्वितये त मुपलभ्य कलाया व्याख्यान चास्य दृष्ट्वा ऽयमत्रावस्थापित. ।

ब्दः स्वप्रयोग करोतीत्यपि तदर्थः। अत एव "पुरुषस्य चैतन्यम्" इति तदुदाहरणं पातञ्जलभाष्ये दत्तम्। नहि तस्मादस्य कश्चिद्विशेषः ।

"व्यपदेशिवद्" इत्यस्यायमर्थः- मुख्यव्यवहारविषये यथा शास्त्रीयं कार्यं तद्वत् मुख्यसम्बन्धाद्यभावेऽपि कार्यमिति ।

स्वर्णकुण्डलस्थले देशकालैक्ये ऽपि न्यूनाधिकमूल्यदर्शनेन व्यावहारिकभेदो ऽप्यवश्यं स्वीकार्यः। नहि प्रातिभासिकेन तदुपपत्तिः। शुक्तौ प्रातिभासिकरजते सर्वथा मूल्याभावादित्यपि कश्चित्।

राहोः शिर इत्यादाववस्थाकल्पितो ऽवयवावयविभाव इति तु न युक्तम्। बोद्धृणामनेकावस्थाविशिष्टस्य तत्त्वेन राहुपदादबोधात्।

अतएवेयायेत्यादौ "इकारस्य प्रथमावयवत्वं कथम्" इत्याशङ्क्य "लोकविज्ञानात्सिद्धम्" इत्युक्तं भाष्ये। लोकवदेव शास्त्रे ऽविचारितमणीयो व्यवहारः।

किञ्च, अस्य विकल्पात्मकज्ञानजनकत्वे वस्तुसिद्ध्यनापत्तिः। विषयभेदेन विषयताऽङ्गीकारे तु अन्त्यः।

केचित्तु शब्दाभेदेऽपि विकल्पेन व्यवहारः शास्त्रीयकार्यनिर्वाहश्च। यथा-"अद्यतने ऽप्यनद्यतनो ऽस्ति"

---

१ 'किञ्च—प्रयुक्तमिति' पाठो ऽय कु कखपु मूले नोपलभ्यते। तस्यां व्याख्यानमप्यस्य नास्ति। केवलमूलपुस्तकद्वितये चेममुपलभ्य कलायां व्याख्यान च दृष्ट्वा ऽत्रायमवस्थापित.।

इति लङ्विधायके भाष्ये प्रयुक्तमिति तदाशय इत्याहुः ॥ १७ ॥

(कुं०टी०)*शब्दज्ञानानुपातीति । एतच्च पातञ्जलसूत्रम् । शब्दजन्यज्ञानानन्तरं वस्तुतत्त्वमनपेक्ष्य जायमानोऽध्यवसायो विकल्प इति तदर्थः । ननु शदज्ञानजन्यत्वे शब्दप्रमाणत्वापत्तिरत आह *वस्तुशून्य इति । क्वचिदभेदे भेदमारोपयति क्वचिच्च भिन्नानामभेदम् । तथाच भेदस्य अभेदस्य च वस्तुतोऽभावान्न प्रमाणत्वमिति भावः । ननु वस्तुशून्यत्वे भ्रमत्वापत्तिरत आह *शब्दज्ञानानुपातीति । व्यवहाराविसंवादान्न भ्रमत्वमिति भावः । एवं च नरशृङ्गादिश्रवणानन्तरं निर्विषया या वृत्तिर्भवति सा विकल्पः । *पुरुषस्य चैतन्यमिति । 'पुरुषस्य चैतन्यं स्वरूपम्' इत्यत्र पुरुषचैतन्ययोरभेदेऽपि भेदव्यवहारः कल्पित एवेत्यर्थः । *तस्मात्—राहोः शिर इत्यस्मात् । *अस्य—'पुरुषस्य चैतन्यम्' इत्यस्य । ननु 'राहोः शिर' इत्यत्रावयवावयविभावोपपादने व्यपदेशिवद्भावेन राहुरवयवीति प्रवादासङ्गतिरत आह *व्यपदेशिवदिति । *मुख्यव्यवहारविष-

१ पाठ क्वचि—भाव' कु कपु नास्ति ।

२ अभेदे भेदस्योदाहरण मूलकार एव 'पुरुषस्य चैतन्यम्' इति अनुपद दास्यति । भेदे अभेदस्य तु नरशृङ्गमिति । नरशृङ्गयोर्भिन्नत्वेऽपि विशिष्टाभेद' नरविशिष्टाभिन्न शृङ्गमिति ।

३ तथा च शब्दज्ञानानुपातीति विशेषणाभावे सद्वस्तुशून्येत्यर्थः स्यात्, तथाच भ्रमेऽतिव्याप्ति । शब्दज्ञानानुपातीति विशेषणे दत्ते तु तन्महिम्ना सदसद्वस्तुशून्येत्यर्थान्न भ्रमेऽतिव्याप्तिरिति भाव ।

४ ननु—षष्ठ्यादि पाठोऽय कु कपु नास्ति ।

ये—'देवदत्तस्य हस्त' इत्यादौ । *शास्त्रीयं कार्यम्—षष्ठ्यादि । *मुख्यसम्बन्धेति । मुख्यः सम्बन्धो भेदनिबन्धनस्तदभावेऽपि भेदव्यवहार इत्यर्थः । *शुक्ताविति । प्रातिभासिकरजतं चाविद्यापरिणामः । प्रातिभासिकत्वं च प्रतिभाससत्तानियतसत्ताकत्वम् । *तत्त्वेन—राहुत्वेन ।

अयं भावः—'राहोः शिर' इत्यत्र व्यावहारिकभेद एव । अत एव प्रकृतिविकृत्योरपि भेदाद् 'भक्तिर्ज्ञानाय कल्पते' इत्येतदर्थं "क्लृपि संपद्यमानेच" इति वार्तिकम् । स्वर्णशब्दस्य विकाराघटित एव निरूढत्वात् 'स्वर्णस्य कुण्डलम्' इत्यादौ षष्ठी । स्वर्णत्वजातेरनुस्यूतत्वाच्चाभेदोऽपि । सर्वथा अभेदे तु दधिदुग्धयोः रसभेदः कार्यभेदश्च न स्यात् । दुग्धस्य लवणादियोगनिषेधेऽपि दध्नो निषेधाभावात् । "व्रीहिभिर्यजेत" इत्यत्र व्रीहिनिष्ठानामेव पुरोडाशसाधनत्वेऽपि प्रोक्षणावघातादीनां व्रीहिसंस्कारत्वाद् व्रीहीणामपि करणतेति ।

*लोकवदेवेति । यथा हि प्रमेयत्वरूपसम्बन्धिभेदाभावेऽपि 'प्रमेयत्वे प्रमेयत्वम्' इति व्यवहारः, यथा वा स्वरूपसम्बन्धस्य सम्बन्धिरूपत्वम्, एवमिहाभेदे ऽपि सम्बन्धो व्यवह्रियत इत्यर्थः ॥ १७ ॥

( क० टी० ) इदमपि कैयटादिमतेनोक्तम् । भाष्यमते त्वारोपानुपयोग एवेत्याह *वस्तुत इत्यादि । *तत्र—राहोः शिर इत्यत्र । एवेनाहार्यज्ञाननिरासः । भाष्यसम्मतं मिश्रोक्तमर्थमाह *शब्देति । स्वोक्तमर्थमाह *किञ्चेति । शब्दश्च तज्जन्यज्ञानं च ते अनुपातिनी यस्य स इति विग्रहः । तदाह * शब्देति । *तदिति । उभयेत्यर्थः । *मानम्—प्रत्ययः । एतत्फलमाह * अनेनेति । द्वितीयार्थेनेत्यर्थः । स न प्रमाणान्तर्भूतः, वस्तु-

१ अयं—नेति कुं कपु न दृश्यते ।

शून्यत्वात् । नापि विपर्ययान्तर्भूतः, ज्ञानस्य याथार्थ्ये सति यादृशस्तद्याथार्थ्यनिदानो व्यवहारः शब्दप्रयोगरूपस्तादृशव्यवहारस्यैतादृशेऽपि दर्शनात् । विपर्ययस्तु नैवम् । बाधोत्तरम् "इदं रजतम्" इति शब्दप्रत्यययोरभावात् । एवञ्च "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इतिविपर्ययलक्षणे शब्दज्ञानाननुपातित्व विशेषणं देयमिति बोध्यम् । तदाह *विपर्यये त्विति । बौद्धसत्ताया सत्त्वादाह *अत्यन्तेति । शब्दज्ञानेत्यस्योक्तार्थैकवाक्यतायै करोत्यपीत्यपिसमुच्चितमाह *ज्ञानमिति । करोति हीति पाठे हिरप्यर्थे । प्रथमहिरेवार्थे । एतेन—

"अत्यन्तासत्यपि ह्यर्थे ज्ञान शब्दः करोति हि ।
प्रमाबाध्या ऽप्रमा तत्र ह्यत प्रामाण्यनिर्णयः ॥ इति—

खण्डनकारोक्ते।अत्यन्तासत्यपि, बाधितत्वेनावधारितेऽपि।अर्थे, विषये।हि, निश्चयेन।शब्द ज्ञान करोत्येव । द्वितीयहिशब्द एवकारार्थे । नन्वेव तत्र प्रवृत्त्यापत्तिः। तज्जनकस्य विशिष्टज्ञानस्य सत्त्वादत आह अप्रमेत्यादि । तत्र, बाधितार्थे । प्रमाबाध्या, प्रमया योग्यताप्रमया बाध्याऽप्रमात्वेन ज्ञाप्या । अप्रमा, अप्रमात्मकशाब्दबुद्धिरेव । भवतीति शेषः । तावतापि किं जातमत आह अत इति । प्रवृत्तिप्रयोजक इति शेषः । तथाच प्रवृत्तिप्रयोजकप्रामाण्यनिर्णयाभावान्न तत्र प्रवृत्तिरित्यर्थ इति नव्यनैयायिकोक्तमपास्तम् । अन्यथा चितेरेव पुरुषत्वात् भेदनियतसम्बन्धरूपस्य षष्ठ्यर्थस्याप्रतीत्यापत्ति । भवति च चैत्रस्य गौरिति यथार्थशब्दवदत्रापि षष्ठ्यर्थे वृत्तिः । तस्यास्ततो विवेकिनामपि बोधश्च तदाह *नहीति । नन्वेव व्यपदेशिवदित्यस्य वैयर्थ्यम् अत आह *व्यपेति । विशिष्टो ऽपदेशो व्यपदेशो मुख्यव्यवहारः स यस्यास्तीति व्यपदेशी तेन तुल्यम् असहाये कार्यं भवतीति शाब्दो ऽर्थस्तदाह *मुख्येति । एव च तेनास्यैकवाक्यतैवेति भावः। नन्वेव 'स्वर्णस्य कुण्डलम्' इत्यस्याप्येवमेवोपपत्त्या तद्व्यवहारात्कथ भेदस्य व्यावहारिकत्वसिद्धिः, अतो मतान्तर प्रागुक्तमाह *स्वर्णेति । *तादृति । न्यूनाधिकमूल्येत्यर्थः ।

*कश्चिदिति । अरुचिबीज तत्र रजतमूल्यस्य बाधोत्तरमसत्त्वेऽपि ततः प्राक्सत्त्वेन तदुत्तरमपि शुक्तिमूल्यस्य सत्त्वेन सर्वथा

मूल्याभावो ऽसिद्ध' । तत्रापि भेदस्य तत्त्वे ऽप्यवयवसस्थानकृतभे· देन तदुपपत्तिरिति न तत्रापि तदावश्यकत्वमिति ।

प्रागुक्तकैयटाद्युक्तिं खण्डयति *राहोरिति । *तत्त्वेन-राहुत्वेन । भाष्यसम्मतमपीदमित्याह *अतएवेति । उक्तरीत्या ऽनिर्वाहादेवेत्यर्थ । *लोकवदिति । ज्येष्ठकनिष्ठत्वादितद्व्यवहारव-दित्यर्थः । विज्ञानशब्दार्थमाह *व्यवेति । नन्वयमपि 'राहो· शिर' इतिवत्कुतो नेति किमिति तद्भाष्यस्योक्तोऽर्थोऽत आह कैयटरीत्या *किञ्चेति । *अस्य—"एकाचो द्वे प्रथमस्य" इत्यस्य । *वस्तुसिद्धनेति । यथा च जजागारेत्यादौ द्वित्वासिद्धभावाप-त्तिरित्यर्थ । 'प्रतिलक्ष्य लक्षणभेद' इतिन्यायाङ्गीकारे तु तत्र न दोष इत्याह *विषयेति । लक्ष्यभेदेन शास्त्रविषयताऽङ्गीकारे तु *अन्त्य-विकल्पप्रकार एवेत्यर्थ । अधिक वक्तुमाह *केचित्त्विति । *शब्दाभेदेऽपि-आरोप्यमाणारोपाधिकरणप्रतिपादकशब्दाभेदेऽपि। कार्यादीति तात्पर्यमित्याहुरिति बोध्यमित्याहुरिति पाठः । तत्राद्य केचित्त्वित्यन्वित मध्यम तु वस्तुत इत्यनेनान्वितमन्त्यं त्वन्येत्वित्यनेनान्वितमिति बोध्यम् ॥ १७ ॥

केचित्तु तदभिन्नाभिन्नस्य तदभिन्नत्वमित्याशयेन शङ्का। अयश्च न्यायो मूलकारणोपादानककार्योपादा-नके कार्ये मूलकारणोपादानकत्वस्यापि व्यवहारेण सिद्धः। यथा—तन्मात्राद्युपादानके ऽपि प्रकृत्युपादान-कत्वम् ।

"गुणो नाम स" इत्युत्तराशयस्तु—यत्र स्वाभिन्न-वस्तुद्वारकः स्वस्वरूपानुगमः तद्विषय एवोक्तन्यायः ।

स्वर्गनरकयोस्तु नैक्यम्, यदन्तःकरणावयवप-रिणामः सुखम्, तदतिरिक्तावयवपरिणाम एव दुःखमित्यङ्गीकारात् ।

"येनोच्चारितेन सास्नाखुरककुदविषाणिनां सम्प्र-

---

१ कारणाभेदस्यापिव्यवेतिपाठः कसञ्ज्ञके केवलमूलपुस्तके ।

त्ययो भवति स शब्द" इतिभाष्याशय-स्तु—यथा चिज्जडयोस्तादात्म्यावभासे ऽपि चित एव भासकत्वं जडस्यावभास्यत्वमेव, स्वभावात्, तथा स्वभावादेव शुद्धशब्दस्य भासकत्वमर्थस्याव-भास्यतेति वदन्ति । तस्माद् बुद्ध्यवच्छिन्नाकाशधर्मो-ऽयमान्तरः स्फोटः ॥ १८ ॥

(कुं.टी.)*तदभिन्नेति । यथा कपालिकाऽभिन्नकपालाभिन्नघटस्य कपालिकाऽभिन्नत्वम् । *मूलकारणेति । यथा प्रकृत्युपादानकं यत् महत्तत्त्वं तदुपादानके ऽपि प्राकृतत्वव्यवहारः । *तन्मात्राः—भूतसूक्ष्माणि । *स्वाभिन्नेति । महत्तत्त्वजन्ये प्राकृतत्वव्यवहार-वत् । *यदन्तःकरणेति । यादृशान्तःकरणावयवेत्यर्थः । सादिद्रव्यत्वेन तदपि सावयवमेव, तस्य परिणाम इति भावः । ननु भाष्याच्छब्दार्थयोर्भेदो लभ्यत इत्यत आह *भाष्याशय-स्त्विति । *चिज्जडयोरिति । तयोस्तादात्म्याध्यासस्तु विवे-काख्यातिमूलः । यद्वशात्पुरुषस्यापि कर्तृत्वभोक्तृत्वव्यवहारः । *जडस्यावभास्यत्वमिति ।

नन्वेवं वृत्तिव्याप्यत्वं जडत्वमिति फलितम्, तथा च ब्रह्मणो ऽपि वेदान्तवाक्यजन्यज्ञानाविषयत्वाद्व्यभिचारः ।

सत्यम् । वृत्त्युपहितमेव ब्रह्म वृत्तिविषयः । तच्च मिथ्यैव । शुद्धं तु स्वप्रकाशमेव । नच शुद्धस्यापि 'स्वप्रकाशम्' इत्या-दिज्ञानविषयताऽस्त्येवेति वाच्यम् । तद्वाक्यस्य लक्षणया अशुद्धत्वमप्रकाशत्वव्यापकमित्यर्थात् । तथाचाशुद्धत्वव्या-वृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति । स्फोटाख्यशब्दस्या-प्याकाशदेशताया न्याय्यत्वादाह *बुद्ध्यवच्छिन्नेति । आभ्य-न्तरेत्यर्थः । वेदान्तरीत्या अन्तःकरणविशेषस्य बुद्धेर्घटादि-

वद् द्रव्यतया आकाशावच्छेदकत्वं बोध्यम् ॥ १८ ॥

(क टी) गुणादीनां शब्दत्वाशङ्कादौ बीजं दीक्षिताद्युक्तमाह *केचित्विति। तथा सम्भवत्येवमुपपादनमनुचितमित्यरुचिरत्र। *तदभिन्नेति। शब्दाभिन्नगुणादीना शब्दाभिन्नत्वमित्यर्थः। एतन्न्याये निर्मूलत्वमपाकरोति *अयञ्चेति। तमेव व्यवहारमाह *यथेति। नन्वेवमुत्तराशये कुण्डलकटकयोः कुण्डलारम्भकस्वर्णावयवानुगमस्य कटकेऽभावेनानैक्ये ऽपि सुखदुःखयोरन्तःकरणपरिणामत्वेनैक्यापत्तिरेव अत आह *स्वर्णेति। अन्तःकरणस्यापि सावयवत्वादिति भावः। वैपरीत्यशङ्कानिरासायाह *येनोच्चारीति। शारीरमारुताभिहतकण्ठादिस्थानैस्तदवयवद्वाराऽभिव्यक्तेन येनेत्यर्थः। अत्र विषयाणां तैरवयवैर्गुणादयो ऽप्युपलक्ष्यन्ते। *सम्प्रत्ययो—ज्ञानम्। परमप्रकृतमुपसंहरति *तस्मादिति ॥ १८ ॥

**अर्थश्च बौद्ध एव ज्ञानविषयः शक्तिग्रहविषयश्च। ज्ञानं च वृत्तिरूपं बुद्धिधर्म एवेति एकदेशस्थत्वात्तेषामितरेतराध्यासः, "शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" इति योगसूत्रोक्त उपपन्नः। सचानादिवासनावशादनादिरेव। एवं शब्दार्थधर्मयोः, इति न कुतर्कावसरः॥१९॥**

(कुं० टी०) *वृत्तिरूपमिति। अन्तःकरणमिन्द्रियद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमते सा वृत्तिरित्युच्यते। *बुद्धिधर्म इति। अन्तःकरणमेव नैर्मल्यान्निश्चये जाते बुद्ध्याख्यां लभते। ब्रह्मात्मकज्ञानस्य बुद्धिधर्मत्वाभावादुक्तं वृत्तिरूपेति। *तेषाम्—शब्दार्थवृत्तीनाम्। *शब्दार्थप्रत्ययानामिति। एतच्च पातञ्जलसूत्रम्। गौरिति शब्दः, गौरित्यर्थः, गौरिति प्रत्ययः इत्येवं शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करः प्रसिद्धः। तेषां शास्त्रयुक्तिभ्यां विभागः सिद्धः। वर्णव्यङ्ग्यं पदं, पदव्य-

ङ्घ वाक्यमिति शब्दतत्त्वम्, अर्थो द्रव्यादिर्वाच्यो लक्ष्यश्चेत्यर्थतत्त्वम्, शब्दजन्याऽर्थविषया बुद्धिः प्रत्यय इति ज्ञानतत्त्वम् । तास्मिन् विभागे संयमात् सर्वशब्दादिवशीकारसूचकं सर्वभूताना पश्वादीनां रुतस्य शब्दस्य ज्ञानं भवति 'अनेनाभिप्रायेणानेनेदमुच्चारितम्' इति । *उपपन्नइति । तेषामितरेतराध्यास इति पूर्वेणान्वयः । ननु 'शुक्लः पटः पटः शुक्ल' इति प्रमाया अप्यध्यासरूपत्वाद् भ्रमत्वापत्तिः । सत्यं, स्वरूपविवेकतिरस्कारेणाभेदधीरेवाध्यासः । *सच–अध्यासश्च । *शब्दार्थेति । शब्देऽर्थधर्मस्याप्यध्यासः । *कुतर्केति । अग्निशब्दोच्चारणे मुखदाहापत्तिरित्यादीत्यर्थः ॥ १९ ॥

(क टी) *योगसूत्रोक्त इति । संयमान्तरस्य सिद्धन्तरमिदमुक्त तत्र । *शब्देत्यादि । गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञान तेषा सङ्केतरूपाध्यासात्तत्रैवोक्तात्सङ्करो विवेकाग्रहणम् । वस्तुतस्तेषां भेद एव । अतस्तेषां प्रविभागे भेदे सयमात्साक्षात्कारपर्यन्तात्सर्वभूतानां रुतानि ज्ञायन्ते अय काकादिरमुमर्थमनेन शब्देन कथयतीत्यर्थ. । अन्यथा श्रोत्रग्राह्यैर्वर्णैर्बाह्यघटाद्यर्थानामत्यन्तभेदात्कथमध्यास. स्यात् । किमर्थ वा तज्ज्ञानाय योगोपदेशः स्यादिति भाव. । नच तद्रीत्या सङ्करे कथ तेषा प्रविभाग । सङ्करस्यैकदेशस्थत्वोपाधिकत्वात् । वस्तुतस्तत्रापि तेषां भेद एवास्तीति न दोष. ।

एतेनास्मदादीनां तद्भेदसाक्षात्कारेऽपि योगजतत्साक्षात्काराभावान्न सर्वभूतरुतज्ञानमित्यपास्तम्, तत्सूत्रतद्भाष्यविरोधात् ।

एतत्सङ्करमूलक एव चायमयमित्यपि सङ्केत. । कार्यकारणभावोऽपि तदर्थविषयकशाब्द प्रति तदर्थगृहीतशक्तिकतत्तद्रूपाभिव्यक्तस्फोटज्ञानत्वेन हेतुत्वमिति बोध्यम् ॥ १९ ॥

**अतएव ।**

**निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ।**
**रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।**

गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः ॥

हिरण्यपूर्वं कशिपुं प्रचक्षते इत्यादि सङ्गच्छते । अन्त्ये हिरण्यकशिपुनामानामिति प्रतीतेरनुभवसिद्धत्वात् । अत एव "कथितपदत्वं दोषो ऽपि क्वचिन्न दोषः ।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥

इत्यत्र ताम्रपदं विना न तादृशो बोधः, पदप्रकारकबोधात्" इति प्रकाशकृतः ।

तदुक्तं हरिणा—

यदन्तःशब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता ॥
अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते । इति ।
एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ । इतिच ।

अन्तस्तथा स्थितावपि बहिर्भेदेन भासेते । तस्यैव शक्तिभेदात् । अक्रमे ऽपि तस्मिन् क्रमभासोऽपि तच्छक्तिवशादेवेत्यपि स्पष्टं तत्रैव ।

किञ्च बौद्धपदार्थानङ्गीकारे—

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ॥
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।

इतिस्मृतेः, "सभूरिति व्याहरत् स भूमिमसृजत" इतिश्रुतेश्च सृष्टेः प्राक् भूःशब्दादिभ्यस्तदर्थज्ञानपूर्वकं सृष्टिरिति लाभेन तदा बाह्याया भुवो ऽभावात् भूःशब्दस्य शक्तिग्रहपूर्वकं कस्यार्थ-

स्य बोधः स्यात्। नच जातेर्नित्यत्वात्तत्र शक्तिग्रह इति वाच्यम्। अद्वैतिनां जातेरप्यनित्यत्वेन तस्या अपि केनचिद्वैदिकशब्देनैव ज्ञानपूर्वं ब्रह्मणा निर्माणे तत्राप्यस्या एव दुरवस्थायाः सत्त्वात्। निराश्रयजातिसत्त्वे मानाभावाच्च। तत्तद्व्यक्तिसमवेतब्रह्मसत्ताया जातित्वे ऽप्यवच्छेदकाभावात्तस्यास्तदा जातित्वाभावात्। किञ्च[1] तत्तद्व्यक्त्यवच्छिन्ना ब्रह्मसत्ता जातिरिति गौरवान्न युक्तमित्यग्रे वक्ष्यते। "अपागादग्नेराग्नित्वम्" इति श्रुत्या तन्नाशस्यैव कथनाच्च। तस्मात्सर्वज्ञत्वाद्भगवदनुग्रहाच्च वेदलाभवत्तदैव स्वबुद्धिवर्त्तिपदार्थस्य स्थूलरूपेण भानम्, तत्र संबन्धग्रहो बोधश्च हिरण्यगर्भस्येति बोध्यम्॥ २०॥

(कुं० टी०) *निकार इति। निकारो ऽधिक्षेपो निशब्दश्च। निशब्दोत्तरधनशब्दनिधनशब्दार्थयोरभेदाध्यवसायः। कथितपदत्वं न दोष इत्येतदुदाहरति *उदेतीति। कथितपदत्वमेकस्यैव पदस्य पुनः प्रयोगः। *ताम्रपदंविनेति। 'अत्र यदि रक्त एवास्तमेतीति क्रियेत तदा पदान्तरप्रतिपादितः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीत'। पूर्वं बाह्यस्फोटं वाचकमाश्रित्य व्याख्यातम्, इदानीमान्तरमेवाह *यदन्तरिति। यदेकं निरवयवमन्तः शब्दतत्त्वं नादैर्बहिः प्रकाशितं तद् वाक्यमपरे आहुः, तस्य वाक्यस्य एकता निरंशतैव प्रतिपाद्यते। न केवलं

१ किञ्च—नाच्च पाठो ऽय कु० कख पु० मूले नोपलभ्यते।

वाक्यमेवाखण्डं किन्तु वाक्यार्थो ऽपीत्याह *अर्थभागैरिति। तेषां मते पदार्थभागैरखण्डो वाक्यार्थ आन्तरो व्यज्यते। तौ-च शब्दार्थौ एकस्य तत्त्वस्य सम्बन्धिनौ अभिन्नावेव बहिः-स्थितौ भिन्नाविव प्रतिभासेते। *तथा-अभेदेन। *तस्यैव-आत्मन एव। शक्तेर्भेदः वैचित्र्यम्। *अक्रमे-वर्णादिक्रमशून्ये। *वेदशब्देभ्यइति। वैदिकशब्दान् स्मृत्वेत्यर्थः। *पृथक्-संस्थाः-भिन्नाकृतीन् पृथिव्यादीन्। स्पष्टश्चेदम् "एते असृग्रमिन्दवः" इतिश्रुतावपि। *तदर्थज्ञानेनेति। तत्तच्छब्दैः तं तं पदार्थं स्मृत्वा रचितवान्। बौद्धपदार्थाभावे तु तदानीं कस्य पदार्थस्य स्मरणं स्यादित्यर्थः। *अवच्छेदकाभावात्-उपधायकाभावात्। *तस्याः-ब्रह्मसत्तायाः। तदानीम्-व्यक्त्य-भावदशायाम्। *वेदलाभवदिति। "यो वै ब्रह्माणं विदधाति पूर्वं यस्मै वेदान्प्राहिणोति सर्वान्" इति। स्वमानेन वर्षशतान्ते ब्रह्मणो ऽपि नाशादन्य एव हिरण्यगर्भ उत्पद्यते॥ २०॥

( कं॰ टी॰ ) *अत एव—शब्दार्थयोस्तादात्म्यादेव। निशब्दो-ऽग्रे पश्चाद्धनशब्द इति यत्तदेव, अहह खेदे, निधनं भोरित्यर्थः। एव रामेति यत् द्व्यक्षर नाम तदेव पिनाकिनो मानभङ्ग इत्याद्य-र्थः। *प्रतीतेरिति। सा चाभेद विनाऽनुपपन्नेति भावः। *अत-एव-शब्दार्थयोरभेदेन शब्दस्य प्रकारतया शाब्दबोधविषयत्वादेव। प्रकाशेत्यत्रान्वय। *दोषोऽपीति।

तापेन राजते सूर्य शूरश्चापेन राजते।

इत्यादाविति भावः। *तादृश-एकरूपताबोधः। अत्र हरिसम-तिमप्याह *तदुक्तमिति। बुद्धिस्थयोरुभयोर्मिथो भिन्नयोरेव ज्ञान-विषयत्वमित्युक्तमित्यर्थः। *हरिणा-तेनापि। *नादे-वर्णे। *अपरे वैयाकरणाः। *शब्द-वाचकम्। *तस्य-आन्तरस्य। *वाक्ये-बाह्ये। *अर्थभागै-तद्रूपतदंशैः। एकताचेत्याहुः। *तथा-तथासति। *तेषा-म्-अपरेषाम्। *आत्मनः-अन्तःकरणस्य। बुद्धिस्थत्वेनाह *अपृथ-

गिति । नन्वेव बाह्यप्रतीतिविरोधोऽत आह *अन्तरिति । *तथा- भेदेन । *तस्यैव–आत्मन एव । *तस्मिन्–आन्तरावभासे । *सः– हिरण्यगर्भः । *वेदशब्देभ्य –वैदिकशब्देभ्य एव । *आदौ–सृष्टिप्रा- रम्भे । *पृथक्पृथक्–भिन्नभिन्नरूपतया । सर्वेषां नामानि कर्माणि च सर्वेषां संस्थाः व्यवस्थाश्च पृथक् निर्ममे इत्यर्थः । ज्ञानपूर्वमिति शेष । अतएव श्रुतिमाह *सभूरिति । आदिपदार्थमाह *सृष्टिरिति । वेदेत्याद्यर्थमाह *भूरिति । श्रुतिलब्धमाह *तदर्थेति । अन्यथा वैपरीत्यस्याप्यापत्तिरिति भाव. । *इति–इत्यस्य । *तदा—सृष्टेः प्राक् । *स्यादिति ।

किञ्च, तथा सति तत्र शक्तिग्रहस्य पुरुषसङ्केतसापेक्षत्वापत्त्या तत्र च दोषजन्यत्वसम्भावनया वेदप्रामाण्यभङ्गरूप. शब्दे विरोधः स्यादित्यपि बोध्यम् ।

यत्तु हिरण्यगर्भस्य भूरादिपदशक्तिग्रहानुपपत्त्या जातेर्नित्यत्वा- त्तत्र शक्तिग्रह इति "शब्दइति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्या- म्" इतिव्याससूत्रव्याख्यावसरे उक्त देवताया विग्रहवत्त्वे ऽनित्यता- ऽऽपत्त्याऽनित्यस्याऽर्थस्येन्द्रादिशब्देनानित्यः सम्बन्ध. स्यात् । तथा- च शब्दे वैदिकशब्दे प्रामाण्यभङ्गरूपो विरोध इति चेन्न । अतः शब्दात् श्रौतशब्दादेव ज्ञानपूर्वक हिरण्यगर्भादेः श्रुतिस्मृत्योः सर्वो- त्पत्तिश्रवणेनोक्तभूरादिशब्दानां सम्बन्धानित्यत्वप्रयुक्तमप्रामाण्य यथा परिहर्तव्यमेव देवताविषयेऽपीति तदर्थ इति ।

तत्खण्डयति *नचेति । स्पष्ट तत्सूत्रव्याख्यायां गुरु- चरणकृतायाम् । *निर्माणे–स्वीक्रियमाणे । *निराश्रयेति । प्रलये इत्यादि । इदञ्चाविद्या वा आविद्यकधर्मविशेषो वा जातिरितिपक्षयोरुक्तम् । तृतीयपक्षे आह *तत्तादिति । *तदा– सृष्टेः प्राक् । इद च तस्यास्तत्त्वमभ्युपेत्योक्तम् । वस्तु स्तदेव नेत्याह *किञ्चेति । *अग्रेइति । अत्रैव प्रकरणे जातिस्फोट- निष्कर्षोत्तरम् परेन्वितिमतेनेतिभाव । विशिष्टवेषायास्तस्या अपि अनित्यत्वमाह *अपागादिति । "वाचारम्भणम्" इति श्रुतिवाक्य- शेषोऽयम् । अग्निस्तु ब्रह्मैवेत्यर्थादुक्तम् । किञ्चेत्याद्युक्तमुपसहरति *तस्मादिति ॥ २० ॥

सचायं स्फोट आन्तरप्रणवरूप एव। "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः । बह्वी, वाक्यपदादिरूपा । नानारूपा, घटपदादिरूपा च। अकार एवेति श्रुत्यन्तरे पाठः । तत्राप्यवयवद्वारा प्रणवोपलक्षणत्वम् । द्वादश स्कन्धे भागवते प्रणवस्य स्फोटत्वं स्फुटमेवोक्तम् । तत्र हि—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥

हृद्गताकाशादित्यर्थः । यः कर्णपुटापिधानेन श्रोत्रवृत्तिनिरोधादस्माभिरपि विभाव्यते श्रूयते ।

ततोऽभूत्त्रिवृदोङ्कारो यो ऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥

त्रिवृत्, त्रिमात्रः । अव्यक्त ईश्वरः प्रभवो यस्य सः। अत एवाह भगवतो लिङ्गं गमकः ॥ २१ ॥

( कुं० टी० ) *प्रणवरूप इति । प्रणवश्च द्विविधः परोऽपरश्च । परो ब्रह्मात्मकः, अपरः शब्दात्मकः ।

तदुक्तं सूतसंहितायाम्—

परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम् ।
प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ॥ इति ।

सत्यज्ञानानन्दादिरूपं ब्रह्म यतः प्रकर्षेण नवं निःशेषविकारराहित्येन कूटस्थं,तथा प्रकर्षेण नवः तत्प्राप्तिरूपो यस्मादिति

व्युत्पत्त्या शब्दो ऽपि प्रणव इति तदर्थः । *स्पर्शोष्मभिरिति । स्पर्शः ताल्वादेः । ऊष्मा वायुः । *समाहितात्मन इति । ब्रह्मणो हृदि य आकाशस्तस्मान्नादो ऽभूदित्यर्थः । स नादः क इत्याह *यइति । अव्यक्तप्रभवत्वेन सूक्ष्मत्वं दर्शितम् । अत एवाह *स्व-राडिति । स्वत एव हृदि प्रकाशमान इत्यर्थः । *त्रिमात्रइति । अकारोकारमकाररूपमात्रात्रयात्मक इत्यर्थः । ईश्वरः प्रभवो य-स्येति । ननु "य इच्छन्दसामृषभ" इति श्रुतौ ओकारं प्रकृत्य "ब्रह्मणः कोशो ऽसि" इत्युक्तं तत्कथं ब्रह्मप्रभवत्वम् । सत्यम् । असेरिवोपलब्ध्यधिष्ठानत्वात्कोशत्वम् । *गमकइति । कार्येण लक्ष्यत इति भावः ॥ २१ ॥

(क०टी०)तत्र स्फोटस्वरूपमाह *सचेति । प्रणवस्यापि द्वैविध्यादाह *आन्तरेति । स्पर्शोष्मभिरित्युपलक्षणमन्येषामपि । पौनरुक्त्यभ्रम निरस्यन् रूपपदार्थमाह *घटेति । घटपटादिरूपा चेति पाठ । श्रुत्यन्तराविरोधमाह *अकार एवेतीति ।

तदुक्त "विशोका वा ज्योतिष्मती" इति पातञ्जलसूत्रभाष्यव्या-ख्याने प्रक्रियात्वेन वाचस्पतिमिश्रादिभि.–'उदरोरसोर्मध्ये ऽधो मुखमष्टदल पद्म तद्रेचकप्राणायामेनोर्ध्वमुख कृत्वा तत्राल-म्बने चित्त धारयेत् । तन्मध्ये हि सूर्यमण्डलमकारो जागरि-तस्थान, तदूर्ध्व चन्द्रमण्डलमुकार स्वप्नस्थान, तदूर्ध्व वह्निमण्डल मकारः सुषुप्तस्थान, तदूर्ध्व ब्रह्म व्योमात्मकं नादस्तुरीयं स्थान या-ऽधर्मात्रेति । योगिनां तत्कर्णिकायां विष्वग्व्यापिशाखासहस्रव-त्या मनोवहनाड्या मूल तिष्ठति, यस्या ऊर्ध्वमुखी एका शाखा सुषु-म्नाख्याऽऽन्तरसूर्यादिमध्यगा वा तया च शाखारूपया ब्रह्मनाड्या बाह्यान्यपि सूर्यादिमण्डलानि प्रोतानि, सैव मनोवहा नाडी चित्तस्थान तस्यां ध्यानधारणासमाधिभिश्चित्तसाक्षात्कारो भव-ति' इति ।

सोऽयं प्राणिमात्रस्य हृत्स्थ. प्रणवस्तत्तुरीयोंऽशो ऽर्धमात्रारूपो नादो वा स्फोट इत्युच्यते ।

इदमेव मार्कण्डेयेनोक्तम्—
अर्धमात्रास्थिता नित्या याऽनुच्चार्या ऽविशेषत ॥ इति ।
अविशेषत , गत्वाद्यनालिङ्गिततया । तस्यैव प्रणवस्य श्रुत्या सर्ववाग्रूपत्वमुक्तमिति बोध्यम् । स्पष्टार्थमाह *द्वादशेति । *तत्र हीत्यस्येत्यर्थकमुक्तमित्यत्रान्वय । *समाहितेति । नियतान्त करणस्य हृद्याकाशादित्यस्यार्थमाह *हृद्गतेति । तुरीय सूचित ॥ २१ ॥

कोऽसौ परमात्मा तत्राह—

शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥

सुप्ते श्रोत्रे कर्णपिधानादिना अवृत्तिके । इमम्, प्रणवरूपम् । स्फोटम्, स्थूलरूपेण परिणतमपि यः शृणोति स परमात्मा । जीवस्य तु करणाधीनज्ञानत्वात् करणस्य चावृत्तिकत्वान्न तदा श्रोतृत्वम् । ईश्वरस्तु यतः शून्ये ऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य तादृश इति श्रोतैव । जीवस्य तदुपलब्धिस्तु ईश्वरद्वारिकैव । यथा निद्राकाले लीनेन्द्रियमपि जीवं परमात्मैव शब्दं श्रुत्वा प्रबोधयति तद्वत् । येन प्रणवेन वाक् बृहती व्यज्यते । यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिः ।

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥

स्वधाम्नः, स्वकारणस्य । किञ्च, स तदंशभूतसमस्तदेवतावाचको ऽपीत्याह—स, प्रणवः । सर्वमन्त्राणामुपनिषद्रहस्यं सूक्ष्मरूपम्, यतो वेदकारणम् । तत्का-

रणत्वेऽपि न विकारित्वं, यतः सनातनम्, सदैकरूपम् ।

तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ।

अकाराद्याः, अकारोकारमकाराः । तस्येत्यवयवावयविभावे षष्ठी॥यैः,अकाराद्यैः। त्रयः,त्रिसंख्यायुक्ताः। भावाः, धर्माः। धार्यन्ते तत्कारणत्वात् । गुणाः, सत्वरजस्तमांसि । नामानि, ऋग्यजुस्सामलक्षणानि । अर्थाः, भूर्भुवः स्वर्लोकाः । वृत्तयः, जाग्रत्स्वप्नसुषुप्तयः । अनेन तस्यैव सर्वप्रपञ्चकारणतोक्ता ।

ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम् ॥ इति ।

ततः,अकारादिभ्यः ।अन्तःस्थादयो लक्षणं यस्य तम् ।

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान्सोंकारान् चातुर्होत्रविवक्षया ॥

असृजदित्यनुषज्यते । होत्रुपलक्षिताश्चत्वार ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षयेत्यर्थकमुक्तमिति ॥ २२ ॥

(कुं.टी.)ननु जीव एव श्रोताऽस्त्वित्यत आह *सुप्तेइति। पिहितेऽपि श्रोत्रे इत्यर्थः। *प्रणवरूपमिति। अव्यक्तमित्यर्थ.।*श्रोतैवेति। इन्द्रियवर्गाभावेऽपि ज्ञातृत्वात्परमात्मैव श्रोतेत्यर्थः । *निद्रेति । प्रधानांशतमस्समुद्रेके सति जीवस्तमसा मग्नो भवति तदालम्बना जीवस्य वृत्तिर्निद्रा । उद्रेको दृढतरसंस्कारजनकत्वम् । जीवस्य श्रोतृत्वासम्भवं दर्शयति *लीनेन्द्रियमपीति । *तत्कारणत्वेऽपीति । वेदानां कारणीभूतोऽपि प्रणवो नित्य एवेत्यर्थः ।

त्रीन् भावान्प्रत्येकं दर्शयति *गुणेति। *अकारोकारेति। ननु समाहारद्वन्द्वे ऽव्ययत्वानापत्तिः, "अवतेष्टिलोपश्च" इति औणादिकस्य रूढस्यैव स्वरादिपाठेनाव्ययत्वादिति चेन्न। औणादिकस्य "कृन्मेजन्तः" इत्येव सिद्धे स्वरादिपाठस्यैतन्मात्रार्थत्वात्। तत्र ब्रह्मप्रतिपादकत्वं समुदायशक्त्या।

तदाहुः—

अकाराद्यास्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः।
अन्ते प्रतीयमानो यो ध्वनिर्ब्रह्मेति कीर्त्यते॥ इति।

*प्रपञ्चकारणतेति।

ननु समुद्रे ऽपि वाय्वाद्यभिघातं विना तरङ्गो नोत्पद्यते तत्कथं चिन्मात्रे ऽद्वितीये द्वितीयमज्ञानं सम्बध्यते यतोऽहङ्कारा द्युत्पत्तिरिति चेत्।

सत्यम्, कार्यमात्रस्य कारणमविद्या। साचाहङ्कारादिदृष्ट्यैव चिदात्मनि कल्प्यते नतु चिदात्मनि तत्सम्बन्धो ऽस्ति।

*अन्तःस्थोष्मेति। यरलवा अन्तःस्थाः, शषसहा ऊष्माणः। *विभुः—चतुर्मुखरूपो भगवान्। *असृजत्—आविर्भावितवान्। "शिवाद्या ऋषिपर्यन्ताः स्मर्तारो ऽस्य न कारकाः" इति वचनात्। एतेन—"छन्दांसि जज्ञिरे तस्माद्" इति वचनेन वेदानां जन्यत्वमित्यपास्तम्। *होत्रुपलक्षितम्—होत्रा उपलक्षितम्। होताऽध्वर्युर्ब्रह्मा उद्गाता चेति चत्वार ऋत्विजः। तत्र हौत्रमृग्वेदस्य, आध्वर्यवं यजुषः, औद्गात्रं साम्नः॥ २२॥

(क० टी०) *कोऽसावित्यस्य नन्वित्यादि। वस्तुन स्वभावादाह *कर्णेति। तथा परिणतस्य सर्वसाधारण्यादाह *स्थूलेति। ननु स जीव एव भवतु अत आह *जीवस्यात्विति। *करणेति बहुव्रीहि। *अवृत्तिकेति। उक्तरीत्येति भाव.। *तदा—तत्प्रधाना-

दिकाले । नन्वेवमुक्तयुक्त्या ईश्वरस्यापि कथं श्रोतृत्वमत आह *ई-श्वरस्त्विति । हेतुगर्भमिदं विशेषणमित्याह *यत इति । *शून्ये ऽपि-नेनावृत्तिकेऽपि । भावप्रत्ययान्तत्वादाह *ज्ञानमिति । ननु तदा जी-वस्याज्ञायमानोपलब्धिः कथमत आह *जीवस्येति । इदमावश्यक-मित्याह *यथेति । स्पष्टं चेदं वेदान्तसूत्रव्याख्यायां गुरुचरणकृ-तायाम् । उत्तरार्धार्थमाह *येनेति । पूर्वार्धस्थस्य चात्र सब न्धेनाह *यस्य चेति । पूर्वोक्तत्वादाह *हृदयेति । *स इति । मध्यमणिन्यायेनान्वेति । साक्षादित्यनेनान्येषामपि परम्परया स एवार्थ इति सूचयति । उत्तरार्धेनान्यदुच्यते इत्याह *किंचेति । *तदिति । परमात्मेत्यर्थः । मन्त्राणां तत्तद्देवताप्रतिपादकत्वादिति भावः । *रहस्यम्-उपनिषदर्थ. । तदर्थः *सूक्ष्ममिति । तत्र हेतुगर्भं विशेषणमाह *यत इति । एवमग्रेऽपि । *वेदेति । वेदस्य कारण-मित्यर्थ. । मृदादितुल्यत्वादाह *तत्कारेति । *तस्य-प्रणवस्य । लौकिकादिवर्णक्रमनिरासायाह *अकारोकेति । नेयञ्जन्यजनकभावे षष्ठी । तथा सति हि पञ्चमीमेव वदेद्, अत आह *तस्येत्यवेति । *भावा.-पदार्थाः । त एवोक्ताः *गुणेति । धारणं न घटभूतलादिव-दित्याह *तत्कारेति । त्रित्वं प्रत्येकान्वयि न समुदितान्वयी-त्याह *गुणा इत्यादि । फलितमाह *अनेनेति । *तस्यैव-आन्त-रप्रणवरूपस्फोटस्यैव । *तत इति बहुवचनान्तात्तसिलित्याह *अकारादिभ्य इति । आदिना प्लुतादिपरिग्रह. । *स्वरः—उ-दात्तादि । अन्यथा पौनरुक्त्यं स्पष्टमेव । *तेन—अक्षरसमाम्नायेन । बाह्यप्रणवाशयेनाह *सोङ्कारानिति । चतुर्णां होतृत्वाभावादाह *होत्रुपेति । छत्रिण इतिवत्तत्त्वारोप इति तत्त्वम् ॥ २२ ॥

निरुक्तभाष्ये ऽपि उक्तरीत्या पदसत्ताऽभावा-शङ्कोत्तरभूतं "व्याप्तिमत्त्वात्तु शब्दस्य" इति प्रतीकमुपादायोक्तम्-'अभिधानाभिधेयरूपा बुद्धि-र्हृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणो-दीर्यमाणा कण्ठादिषु वर्णभावमापद्य बाह्याकाशस्थं शब्दं स्वस्वरूपं कृत्वा श्रोत्रद्वारेण तत्र स्थितां श्रो-

तुर्बुद्धिमनुप्रविश्य सर्वार्थसर्वाभिधानरूपां तत्तद्बुद्धिं व्याप्नोति । पुरुषयत्नजा वक्रोद्घाताः परं नश्यन्ति न शब्दः । सच तदनुरक्तो ऽर्थप्रत्ययं जनयति इति तत्रत्यपदत्वादिकं वक्रोद्घातेष्वारोपयन्ति, तद्गतनाशादि च तस्मिन् । पुरुषबुद्ध्यवस्थस्यैव चार्थस्य प्रत्ययमादधाति शब्दः । तेनैव तस्य सबन्धाद्' इति ।

सच शब्दो वस्तुत एको ऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपो ऽनन्तपदरूपतामिवापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः ।

सा शक्तिश्च योगिप्रत्यक्षगम्या नास्मज्ज्ञानगम्या । यत्रैव व्यवहारादिना तज्ज्ञानं तत्रैवास्माकं बोध इति मर्यादा । एवमेकैकवर्णो ऽपि सहकारिवर्णान्तरसंबन्धात् अनन्तपदरूप इति सो ऽपि तत्तच्छक्तिरिति गकारौकारविसर्जनीया गोर्वाचका इति लोकस्याविचारितरमणीये तत्समूहे वाचकत्वग्रहः । तादृशस्यैव शास्त्रेणान्वाख्यानं तद्दृष्ट्या बोध्यम्

तदुक्तं भाष्ये—"अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः" इति । लोके ऽर्थबोधकत्वेन गृहीतो ध्वनिर्वर्णात्मकः तत्समूहः शब्द इति तदर्थः । "अथ गौरित्यत्र कः शब्द" इति प्रश्ने इदमुत्तरम् ।

अखण्डो ऽपि स्फोटो गकाराद्यवस्थाभ्यो भिन्नो ऽभिन्नश्च चरमावस्थया विसर्जनीयादिरूपया पदादिरूपेण व्यज्यत इति वर्णेषु तत्त्वव्यवहारोपपत्तिर्लोकस्येति बोध्यम् ॥ २३ ॥

१ वर्णेष्विति पा कु टी युतकखपु ।

(कुं टी.) *पदसत्ताऽभावेति। बाह्यपदसत्ता नास्तीत्याशङ्क्येत्यर्थः। बुद्धेरेव विषयाकारेण परिणामादाह* रूपाबुद्धिरिति। अभिधानम्—वाचकम्।*हृदयेति। हृदयस्थो य आकाशः तत्र स्थितमित्यर्थः। आभ्यन्तरार्थशब्दरूपा बुद्धिर्वक्त्राभिघातेन वाक्यार्थशब्दरूपवर्णात्मिका भूत्वा श्रोत्रद्वारेण परबुद्धिविषया भवतीत्यर्थः। *उदीर्यमाणा—प्रेर्यमाणा।*स्वस्वरूपमिति। आन्तरस्यैव बाह्यरूपताऽध्यवसायात्। *वक्त्रोद्घाताः—वक्त्रव्यापाराः।*सच—श्रोतृबुद्धिस्थश्च। ननु शब्दस्य नित्यत्वे सर्वदाऽर्थप्रत्ययापत्तिरत आह *तदनुरक्तइति। वक्त्रोद्घातव्याञ्जित इत्यर्थः। *तत्रत्येति। आभ्यन्तरशब्दगतेत्यर्थः। *तद्गतेति। वक्त्रोद्घातगतेत्यर्थः। *तस्मिन्—बुद्धिस्थे। *तेनैव—बुद्धिस्थेनैव। *तस्य—बुद्धिस्थस्य। *वर्णसंस्कारैरिति। प्रतिबिम्बितं यत्तत्तत्पदं तद्रूप इत्यर्थः। *यत्रैव-यस्मिन्पदे एव। *तज्ज्ञानम्—तादृशशक्तिज्ञानम्। *भिन्न इति। अखण्डत्वात्। अभिन्नस्तु प्रतिबिम्बवशात्। *तत्त्वेति। शब्दत्वेत्यर्थः ॥ २३ ॥

(क० टी०) अयमुक्त एवार्थो निरुक्तभाष्यसंमतोऽपि इत्याह *निरुक्तेति। *उक्तरीत्येति। वर्णानामुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वादित्यर्थः। अभावेऽस्यान्वयः। अभावेनाशङ्क्येति समासः। *तेन—नामाख्यातादिभेदेन। तद्विभागकथनम्, तल्लक्षणकरण, प्रकृतिप्रत्ययविभागेन तदन्वाख्यान चेति सर्वमनुपपन्नमित्याशङ्क्येत्यर्थ। *अभिधानेति। शब्दार्थोभयरूपेत्यर्थः। उदीर्यमाणा—सती। *कण्ठादिषु—स्थानेषु। *बाह्येति। सर्वसमष्टेर्विराजः इत्यर्थः। *श्रोत्रेति। श्रोतुरित्यादिना। *तत्र—श्रोतुर्हृदयाकाशे। वक्तृबुद्धिवत् श्रोतृबुद्धिरपि उभयरूपेत्याह *सर्वार्थेति। *तद्बुद्धिम्—श्रोतृबुद्धिम्। ननु तस्य नष्टत्वात्कथं तेन तद्यापनमत आह *पुरुषेति। वक्तृ-

१ हृदये—त्यर्थः कु० कपु० नास्ति।

पुरुषेत्यर्थः । *वक्त्रोद्धाताः-वर्णरूपा ध्वनयः । तस्य सर्वार्थप्रत्यायकत्वनिरासायाह *सचेति । शब्देत्यर्थ । *तदनुरक्त-वक्त्रोद्घातानुरक्त । इतरेतराभ्यासमाह *तत्रत्येति । शब्दनिष्ठेत्यर्थः । *तद्गेति । विनाशिवक्त्रोद्घातनिष्ठेत्यर्थ । आदिनोत्पत्त्यादि । पूर्वादिना वाक्यम् । *तस्मिन्-शब्दे । एव बौद्धस्य वाचकत्वमुक्त्वा वाच्यत्वमपि बौद्धस्यैवेत्याह *पुरुषेति । एव स्फोटादि निरूप्याथ वाक्यस्फोटस्यैव मुख्यत्व सिद्धान्ततया प्रागुक्त प्रतिपादयितुमन्यसिद्धान्त तावदाह *सचेति । स्फोटरूप इत्यर्थः । तदभिव्यञ्जनमेव तत्संस्कारः । वस्तुतो ऽतत्त्वादाह *एवेति । *सर्वार्थेति । व्यधिकरणबहुव्रीहि । नन्वेवमस्मदादीनामपि सर्वत सर्वबोधापत्तिरत आह *साशक्तिश्चेति । एव च यत्र शक्तिग्रहस्तत्रैव बोधोऽस्माक तत्सत्त्वेऽपि नान्यत्रेति नातिप्रसङ्गस्तदाह *यत्रैवेति । आदिना कोशादि । *तज्ज्ञान-शक्तिग्रह । एवं सिद्धान्तान्तरमुक्त्वा प्रक्रियासिद्धान्तमाह *एवमिति । तद्वदयमप्यनन्तपदरूप इत्यर्थः । नतु वास्तवत्वेन साम्यमिति भाव । *सम्बन्धात्-सर्वपदभवनशक्तिमत्त्वादिति शेषः । *तच्छक्ति-सर्वपदार्थबोधनशक्तिक । *विसर्जनीया-समुदिता । तत्त्वत प्रागुक्तयुक्त्याऽसत्त्वादाह *अविचारीति । अस्यावश्यकत्वमाह *नादृशेति । अन्यथा शास्त्रानर्थक्यमेवेति भाव ।

इदमपि भाष्यसमतमित्याह *तदुक्तमिति । उक्तार्थलाभायाह *लोकेऽर्थबोधकत्वेनेति । *तत्समूह-वर्णसमूह । नन्वस्य भाष्ये प्रसिद्धमर्थान्तरमेव यथाश्रुत कुतो नेति आह *अथगौरिति । एवञ्चार्थान्तर नैव तात्पर्यविषयभूत भगवत इति भाव । दृष्टान्तैकवाक्यतया वाचकत्वस्य तन्मात्रनिष्ठत्वादत्र तद्रूपत्वे ऽपि कथ तत्त्वमितिशङ्कानिरासायास्य भाष्यस्य तात्पर्यमाह *अखण्डोपीति । परिणामपरिणामिनोस्तादात्म्यादाह *गकाराद्येति । *चरमेति । पश्वादेरित्यादि अग्रे आदिना द्रव्यादि ॥ २३ ॥

एवं सर्वपदेषु पदान्तरसहकारेण नानावाक्यभवनशक्तित्व तत्तद्वाक्यार्थभवनशक्तिमत्त्वं च ।

यद्यपि परस्य बुभुत्सितार्थप्रत्यायनाय शब्दप्रयोगः, परस्य च प्रवृत्त्यादिविषय एव प्रायेण बुभुत्सितः स च वाक्यार्थ एवेति सर्वे शब्दाः तत्परा एव । यत्रापि केवलं 'वृक्ष' इति प्रयुज्यते तत्राप्याकाङ्क्षातात्पर्यादिवशाद् 'अस्ति, चलति, छिद्यते वा' इतिपदान्तरार्थानामध्याहारः । क्रियाविशेषतात्पर्यानवधारणेऽप्यस्तीत्यध्याहारः। बुद्धिसत्ताया बोधविषयबौद्धपदार्थेनाव्यभिचारात् । लोके ऽस्त्यर्थं विना शुद्धपदार्थानवगतेश्च। एवं क्रियापदादिमात्रप्रयोगे सर्वकारकाध्याहारः।'चैत्रोऽग्निना तण्डुलान्पचति' इत्यादिप्रयोगस्तु कारकान्तरनिवृत्त्यर्थः क्रियान्तरनिवृत्त्यर्थो नियमायेति स्पष्टमर्थवत्सूत्रे भाष्ये, तथापि अन्वाख्यानलाघवाय पदानि,तत्र प्रकृतिप्रत्ययभागाः,तत्तदर्थाश्च कल्प्यन्ते । तद्द्वारा पदार्थबोधनं वाक्यार्थबोधनं च शास्त्रफलम् । केवलरूढेषु तु वर्णसाजात्यादिना ऽवयवकल्पनम् । स्पष्टं चेदं निरुक्ते ।

यत्र तु वाक्यस्यैव शास्त्रेण संस्कारः, तत्र नैव पदात्पदार्थबोधः । यथा षट्त्सन्त इत्यादौ । अत एव "ङःसि–" इति सूत्रे भाष्ये "धुडादयः पूर्वान्ता एव किं न क्रियन्ते" इत्याशङ्क्य पूर्वान्तत्वे ष्टुत्वापादनेन समाहितम् । अन्यथा तकारविशिष्टस्य सत्पदाद्यर्थबोधकत्वाय परादित्वमेवावश्यकमिति तद्विचारासङ्गतिः, निर्दलत्वात् । मम तु वाक्यार्थबोधे भेदाभावान्न दोषः । एतेन पदात्पदार्थज्ञानपूर्वक एव वाक्यार्थबोध इत्यपास्तम् ॥ २४ ॥

(कुं०टी०)*तत्परा एव—वाक्यार्थपरा एव। *बुद्धिसत्ताया इति। अयं भावः—अस्तीत्यनेन साध्यावस्था प्रतीयते, सिद्धेन च साधनेन साध्यता भवति, सिद्धे च साधने साध्यक्रिया भवति।

तदुक्तं हरिणा—

प्राक् च सत्ताऽभिसम्बन्धान्मुख्या सत्ता कथं भवेत्।
असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववद्॥ इति।

तस्माद् बुद्धिसत्तासमाविष्टस्यैव बाह्यसत्तोपचार इत्याशयेनैवोक्तम्—

एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते इति।

*अस्त्यर्थं विनेति। पदार्थमात्रे अस्त्यर्थस्यात्मधारणस्याव्यभिचारात्। *तथापि—सर्वत्र वाक्यार्थस्यैव विषयत्वे ऽपि। *पदानीति। कल्प्यन्त इत्यत्रान्वयः। *तद्द्वारा—प्रकृत्याद्यर्थद्वारा। ननु रूढेष्ववयवार्थाभावात्कथमवयवकल्पनमत आह *वर्णसाजात्यादिनेति। तदीयवर्णानामनर्थकत्वे ऽप्यर्थवत्सजातीयत्वमस्त्येव। *तत्रनेदेति। तकारविशिष्टस्यैव त्सन्त इत्यस्य बोधकतया आवापोद्वापलभ्याया अर्थसत्ताया अत्र पदे असम्भवादिति भावः। *ष्टुत्वापादनेनेति। वाक्यार्थदोषाभावाद्रूपासिद्धिरेव दोष उक्त इत्यर्थः। *निर्दलत्वादिति। पूर्वान्तत्वे तकारान्तस्यैव बोधकत्वात्परादित्वे तकारादेर्बोधकत्वाद्विचारासङ्गतिरित्यर्थः। *वाक्यार्थेति। पदानां त्वर्थ एव नास्तीति भावः। *नदोषः—न भाष्यासङ्गतिः॥ २४॥

(क० टी०) नन्वेवं सर्वोपादानं व्यर्थमत आह *चैत्रोऽग्नीति। तथाच सर्वत्र वाक्यस्यैव बोधकत्वेन किमर्थं व्याकरणेन पदानामन्वाख्यानम्। किञ्च पदवद्वाक्यमखण्डमेव

न सन्त्येव पदानीति तदन्वाख्यानमसम्भवीति पूर्वपक्षतात्पर्यम् । *केषु–वाक्येषु । तेषामानन्त्येनान्यथा तदसम्भवो गौरव चेत्यत आह *अन्वाख्यानेति । तत्र पदेषु कल्पितान्वयव्यतिरेकाभ्यामाह * तत्तदर्थश्चेति । नन्वेव शास्त्राप्रामाण्यमत आह *द्वारेति । यौगिकेष्वित्युक्ते· फलमाह *यत्र त्विति । इदं भाष्यसमतमित्याह *अतएवेति । तत्र तत्र तदभावादेवेत्यर्थः । *अन्यथा–तथा तत्रापि तदङ्गीकारे । नैयायिकादिमत खण्डयति *एतेनेति । उक्तभाष्य विरोधेनेत्यर्थ· ॥ २४ ॥

वस्तुतः सर्वं वाक्यं अखण्डमेव । पदान्यसत्यान्येव । पदात्पदार्थबोध इत्यङ्गीकारे चैत्रादिपदानां सकलक्रियासाधारणे ऽर्थे गृहीतशक्तिकानां तत्तदर्थान्वितविशेषबोधाय लक्षणापत्तौ शक्त्या बोकत्वभङ्गः । ‘सामान्यरूपेण विशेषबोधे ऽपि लक्षणा’ इति स्पष्टं काव्यप्रकाशे ।

किञ्च पदानां सत्यत्वे ‘राजा, राजानं, राज्ञा, राजनि’ इत्यादौ राजरूपार्थप्रत्यायकस्यानियतत्वं न स्यात् । सत्यस्य नियतत्वात् । ‘हे राजपुरुष’ इत्यत्र राजेति क्रियापदार्थप्रतीत्यापत्तेश्च । अत एव भाष्ये “न लक्षणेन पदकारा अनुवर्त्याः” इत्यादिना “आशितः कर्त्ता” इत्यादौ पदानामसत्यत्वं दर्शितम् । सत्यत्वे तु लक्षणेन तदननुवर्तनासङ्गतिः । “पदप्रकृतिः संहिता” इत्यत्र तु षष्ठीसमासः ।

तथा च तत्रैव कैयटः–‘संहितैवापौरुषेयी पदानि तु पौरुषेयाणि’ इति ।

किञ्च तेषां सत्यत्वे अश्वकर्णादावश्वाद्यर्थप्रतीत्यापत्तिः । इद रूढम्, इदं यौगिकम्, इदं योगरूढमित्याद्यपि शास्त्रकृत्कल्पनैव विशि-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षमराजविरचितवृत्तिसमेता (वेदान्त)

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायण मजभट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृत व्याख्यासमलङ्कृत । (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित: परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित. आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठि सकलित ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश. । विद्वद्वरश्रीमहेश्वरसूरिविरचित. । ?

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनी टिप्पण्यो—प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता २

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपारिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमाविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्य-

व्याख्यासमलङ्कृतमितािरासहिता । व्यवहारन्याय ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ३

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्ययानथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता । २

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-श्रीमद्बालम्भट्टविरचितकलाटीका—इति टीकाद्वयसवलिता । ४

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । ३

(४८) विरमित्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ४

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसग्रहाख्यया टीकया समलकृत । ४

पत्त्रादिप्रेषणस्थानम् { हरिदासगुप्तः,
चौखम्बा बनारस सिटी ।

॥ श्रीः ॥

— ०.—

आनन्दवनविद्योतिसुमनोभि सुसस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा–सस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुल कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवक — २१३

१ अस्या चौखम्बा– सस्कृतग्रन्थमालाया प्रतिमास पृष्ठशतके मुन्दरै सीसकाक्षरैरुत्तमेषु पत्रेषु
एक स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमासावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्थ
एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसस्कृतपाठशालाध्यापका पण्डिता अन्य च शास्त्रदृष्ट्यो विद्वा
एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयै ,ब्रह्मदेशीयै ,सिहलद्वीपवासिभिश्चैतद्ग्राहकैर्देय वार्षिकमग्रिम मूल्यम्–मुद्रा ७आनका

५ अन्यैर्देय प्रतिस्तवक

६ प्रापणव्यय. पृथग् नास्ति ।

साम्प्रत मुद्र्यमाणा ग्रन्था —

(१) सस्काररत्नमाला । गोपीनाथभट्टकृता
खण्डे . २

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम्
पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया
व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृहित तत्त्वत्रयम् । विशिष्टाद्वैत-
दर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम्।
श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाश
सहित सम्पूर्णम् ( वेदान्त ) २

(५) करणप्रकाश । श्रीब्रह्मदेवविरचित १

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्री-
गागाभट्टविरचिता । तर्कपाद (मीमासा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविर
चिता सम्पूर्ण ( मीमासा ) २

(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्त-
सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्या
ख्यानम् । सम्पूर्ण । ( वेदान्त ) [illegible]

(९) स्याद्वादमञ्जरीमल्लिषेणानिर्मिता सम्पूर्णा [illegible]

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम
श्रीभाष्यकृता परमगुरुभि श्री ६ श्रीयामु
नमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्त )[illegible]

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टार
काचार्यसगृहीत । आचार्यचित्सुखमुनि
विरचितव्याख्यापेत ( वेदान्त ) [illegible]

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि
सप्तविभक्तिविस्तृतविचाररूप म० म
श्रीगिरिधरोपाध्यायविरचित सम्पूर्ण
( न्याय ) [illegible]

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम्।
सम्पूर्णम् ( मीमासा ) [illegible]

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसो
मेश्वरविरचिता । ( मीमासा ) [illegible]

ष्टार्थबोधार्थी। बुद्धे च तत्र प्रयोजनसम्पत्तेरुपायपरित्यागः। अत एव व्याकरणभेदेनोपाया अनियताः। तदुक्तम्—

उपादायापि ये हेयास्तानुपायान्प्रचक्षते।
उपायानाञ्च नियमो नावश्यमवतिष्ठते॥ इति॥२५॥

(कुं०टी०)असत्यान्येवेति। कथं तर्हि "जनपदतदवध्योः" इत्यत्र तच्छब्देनावयवार्थपरामर्श इति चेत्। सत्यम्। प्रतिभाविशेष एवात्र वाक्यार्थः। तच्छब्दश्चात्र सर्वनामसदृश एव, नतु सर्वनाम। *चैत्रादिपदानामिति। क्रियासामान्यान्विते शक्ताच्चैत्रपदाद्विशेषबोधे लक्षणापत्तिरित्यर्थः। ननु विशेषोऽपि सामान्यान्तर्गतत्वाच्छक्य एवेत्यत आह *सामान्यरूपेणेति। *पदाना सत्यत्वे इति। पदानां सत्यत्वे 'राजानं, राज्ञा' इत्यादौ राजरूपार्थे एकरूपमेव पदं नियमतः स्यात्, सत्यस्य नियतत्वादित्यर्थः। *क्रियापदार्थेति। 'हे पुरुष भ्राजस्व' इत्यर्थः स्यादिति भावः। *न लक्षणेन पदकारा इति। "'ऊदनोर्देशे' इति दीर्घोच्चारणमवग्रहार्थम्" इति भाष्यं तु विरुध्यते।

एकदेश्युक्तिरियम्। "अनूपो गोमान्" इत्यादौ ऋग्वेदिनामवग्रहादर्शनादित्यन्ये।

*पदानामसत्यत्वमिति। पदविभागस्यासत्यत्वादेव हि तदनुरोधो न भवति। किञ्च पदानां सत्यत्वे तेषां स्वतः सिद्धत्वात्पदानि कुर्वन्तीति पदकारा इति समाख्याऽपि विरुध्येत।

ननु पदार्थानामभावे 'धवखदिरपलाशाः' इत्यत्र बहुवचनं कथमिति चेत्।

गर्गा इत्यत्र यथैक एव गर्गशब्दो बहुषु वर्त्तते, तथा शब्द-

शक्तिमहिम्ना द्वन्द्वस्यापि बहुषु वृत्तेः। एवं 'ब्राह्मणा भोज्यन्ताम्' इत्यादौ पदार्थव्यतिरेकेण वाक्यार्थाभावे ऽपि यथा प्रत्येकं भुजिक्रिया समाप्यते एवं द्वन्द्वावयवेष्वपि प्रत्येकं तत्संभवः ।

ननु पदानामसत्यत्वमयुक्तं "पदप्रकृतिः संहिता" इति निरुक्तविरोधात्। तथाहि—पदानि प्रकृतिर्यस्याः सा संहिता। पदान्येव हि संहन्यमानानि संहिता भवति इत्यत आह *षष्ठीसमास इति। अयं भावः—पदानां या प्रकृतिः सा संहिता। संहितातो हि पदानि क्रियन्ते। तस्मात्संहितयैव मन्त्राणामध्ययनाद्विनियोगाच्च संहितैव प्रकृतिः। *संहितैवेति। संहितयैव पाठस्यानादित्वात्पदविभागस्याधुनिकत्वमेवेत्यर्थः। *अश्वकर्णः—ओषधिविशेषः। ननु पदानामसत्यत्वे यौगिकरूढादिविभागः कथमत आह *कल्पनैवेति । *बुद्धेचेति । विशिष्टार्थे ऽवगते चेत्यर्थः । *उपादायापीति। शब्दपरिज्ञाने शास्त्रमुपायः, ज्ञातेषु च तेषु प्रयोजनस्य सम्पन्नत्वात्तत्परित्यागः ॥ २९ ॥

(क० टी०) तदेव मतमाह *वस्तुतइत्याद्यलमित्यन्तेन। *असत्यान्येव—कल्पितान्येव। विपक्षे बाधकमाह *पदादिति। यत इत्यादिः। नित्यसाकाङ्क्षत्वाद्विशेषगमकाभावाच्चाह *सकलेति। *तत्त्वादिति। वृद्ध्यादिक्रियारूपेत्यर्थः। तत्त्वादेव विशेषत्वमिति भावः। ननु सामान्यरूपेण शक्त्यैवास्तु विशेषबोध, अत आह *सामान्येति। शक्तिग्रहपदार्थोपस्थितिशाब्दबोधाना समानप्रकारकत्वनियमवत्समानविशेष्यकत्वनियमस्याप्यङ्गीकारादिति भावः। *स्पष्टमिति। ननु केवलान्नैव तथा बोधः, वाक्यात्तु आकाङ्क्षाबलादिति नाय दोष, अत आह *किञ्चेति। *सत्यत्वे—आपेक्षिकेत्यादिः। *प्रत्यायकस्य—प्रकृतिभागस्य। दोषान्तरमाह *हेराजेति। भाष्यसमतिमाह *अतएवेति। दोषद्वयसत्त्वेनाखण्डवाक्यस्यैव सत्यत्वादेवेत्यर्थ.। "पदकारैर्नाम लक्षणमनुवर्त्यम्" इति—आदिना सग्रहः। नन्वेव प्रातिशाख्यविरोधस्तेन बहुव्रीहिणा पदाना सत्यत्वप्रतिपाद-

नाद् अत आह *पदेति । अत्र सम्मतिमाह *तथाचेति । षष्ठीसमासे चेत्यर्थः । *तत्रैव-"आशित कर्त्ता" इत्यत्रैव भाष्ये । दोषान्तरमाह *किञ्चेति । नन्वेव रूढत्वादिविभागोच्छेदापत्ति अत आह *इदं रूढमिति । आदिना 'इद शक्तम्' 'इद लाक्षणिकम्' इत्यादिसंग्रह । अपि. पूर्वसमुच्चये । तत्फलमाह *विशिष्टेति । वाक्यार्थेत्यर्थः । युक्त्यन्तरमपि तत्र सूचयन्नाह *बुद्धेचेति । *तत्र—विशिष्टार्थे । *अतएव—काल्पनिकत्वेन अनन्तरत्यागादेव । *तदुक्तमिति हरिणेति शेष । *हेयाइति । चामुण्डादिवत्पृषोदरादिरुपायशब्द इति भावः *च-किच । अन्यस्यान्योपायत्वाभावादाह *नावश्यमिति ॥ २५ ॥

ननु पदानामसत्यत्वे प्रतिनिध्युच्छेदः । तथाहि "व्रीहिभिर्यजेत" इत्यादौ यागेन सकलद्रव्याक्षेपे व्रीहिश्रुतिर्नियमार्था—व्रीहिभिरेव नान्यैरिति । तत्र व्रीह्यभावे नित्यकर्मणः प्रारब्धकाम्यस्य च लोपो मा भूदिति प्रतिनिधिरुपादीयते । तत्र व्रीहित्वस्य शक्त्युपलक्षणत्वात्प्रतिनिधेरपि श्रौतत्वमित्यग्रे निरूपयिष्यामः ॥

तत्र प्रतिनिध्युपादाने ऽपि तद्वाक्यार्थाखण्डार्थस्याननुष्ठानित्यादेर्विलयः । नीवारकरणकक्रियाया अन्यत्वात् । एवं च 'क्रिया न प्रतिनिधीयते द्रव्यं तु प्रतिनिधीयत एव'इति न्यायोच्छेदः । किञ्च 'वनात्पिक आनीयताम्'इत्युक्ते 'कः पिकः'इति प्रश्नानुपपत्तिः । अपि च "श्वेतं छागमालभेत"इत्यादौ क्रियायाश्छागद्रव्येण श्रौतः सम्बन्धः । द्वितीयाश्रुत्या साक्षात्प्रापिततत्वात् ।

श्वेतगुणस्य तु तत्सामानाधिकरण्याद्वाक्यीयः ।

निर्गुणद्रव्यस्य निरधिकरणगुणस्य चाभावात् तस्य च्छागेन सम्बन्धपूर्वकमेव क्रियया सम्बन्धात् । तत्र श्रुतिप्रापितद्रव्यात् वाक्यप्राप्तगुणस्य दुर्बलत्वात् । श्वेतच्छागाभावे ऽन्यवर्णश्छाग आलभ्यते नतु श्वेतगुणयुक्तो मेषः श्रुतिबाधापत्तेरिति सिद्धान्तः। अखण्डार्थत्वे सर्वस्यैकरूपत्वात्कस्य केन बाधः । अपि च पदार्थनिबन्धनवाक्यीयसकलमीमांसान्यायासिद्धिरिति चेत् । न । अखण्डादेव वाक्यात्तदर्थाच्च कल्पनया शास्त्रे पदपदार्थापोद्धारेण तमादाय सकलेष्टसिद्धेः। एवं च कल्पितपदपदार्थाश्रयैर्मीमांसान्यायैस्तादृशाखण्डार्थबोधनम् ।

किञ्च पदैः पदार्थबोधे हरेऽव दध्यानय इत्यादौ संहितया पदस्वरूपनाशादर्थबोधानापत्तिः ।

किञ्च राजपुरुष इत्यादौ पृथगुपस्थित्यपृथगुपस्थिती विरुद्धे आपद्येयाताम् । पदानां पृथगुपस्थापकत्वस्वभावत्वात् । वृत्तेस्तद्विपरीतत्वात् ।

वृत्तौ जहत्स्वार्थत्वादिविकल्पो ऽपि वाक्यादेव वृत्तिनिष्पत्तिरिति मन्यमानानबुधान्प्रति कल्पनैव ।

एवमुत्तरपदार्थप्राधान्याद्यपि ।

श्वेतो धावतीत्यादावखण्डमेव वाक्यं तन्त्रेणोभयार्थबोधकम् ।

एवं च सकलशास्त्रव्यवहारस्तदनुसारिलोकव्यवहारश्चापोद्धाराश्रयेणैव बोध्यः ॥ २६ ॥

( कुं. टी. ) *पदानामसत्येवत्वे इति । वाक्यस्याखण्डत्व

इत्यर्थः । *यागेनेति । देवतोद्देश्यकद्रव्यत्यागो हि यागः । *नित्यकर्मणइति । नित्यं हि कर्माशक्याङ्गपरित्यागेनाप्यनुष्ठेयम् । काम्यं तु कर्म अङ्गपरित्यागे विगुणमेव स्यात् । प्रारब्धे तु काम्ये तत्रापि प्रतिनिधिर्भवति इतिसूचनाय प्रारब्धपदम् । 'प्रारब्धं काम्यमपि नित्यायते' इति षाष्ठन्यायात् । "दोषश्चासमाप्तौ स्याद्" इतिकात्यायनसूत्राच्च । ननु कथं प्रतिनिध्युपादानम्, अत आह *शक्त्युपलक्षणत्वादिति ।

'केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम्'। इति–

हरिरीत्या जातिशक्तिनये व्रीहित्वस्यैव व्यक्तिद्वारा क्रियासाधनत्वाद् व्रीहित्वसहचरितशक्तेश्च नीवारेऽपि सत्त्वात्सोऽपि गृह्यते । शक्तिः—अदृष्टविशेषसाधनत्वम् । *श्रौतत्वम्—श्रुतिविहितत्वम् । *वाक्यार्थस्याखण्डस्येति । व्रीहिकरणकयागस्यैव निरस्तावयवार्थस्य वाक्यार्थतया नीवारकरणकयागस्यानुष्ठाने विधिलोप इत्यर्थः । *नित्यादेरिति । आदिना प्रारब्धकाम्यस्य । *क्रिया न प्रतिनिधीयते इति । वाक्यार्थभूतायाः क्रियायाः प्रधानत्वेन तत्परित्यागे प्रकृतकर्मण एव वैगुण्यापत्तिः । द्रव्यस्य तु अप्रधानत्वाद्भवति प्रतिनिधिरिति भावः ।

अत एवोक्तं हरिणा—

अपूर्वस्य विधेयत्वात्प्राधान्यमवसीयते ।
विहितस्य पदार्थत्वाच्छेषभावः प्रतीयते ॥ इति ।

अपूर्वस्य विधेयत्वात्तद्बोधकक्रियाया अपि प्राधान्यं विहितस्य सिद्धस्य द्रव्यस्य तु परार्थत्वाद् गुणत्वमिति तदर्थः । *प्रश्नानुपपत्तिरिति । 'वनादानीयताम्' इति पदयोरर्थो ज्ञातः पिकपदार्थस्तु न ज्ञात इति तद्विषयकः प्रश्नो भवति । वाक्य-

वाक्यार्थयोश्चाखण्डत्वे पिकपदस्य तदर्थस्य वाऽभावात् प्रश्नानुपपत्तिरिति भावः । *श्रौतः सम्बन्ध इति ।

अयं भावः-छागद्रव्यस्यालम्भनाक्रियायाश्च सम्बन्धः श्रौतः, द्वितीयाश्रुत्या प्रापितत्वात् । सामानाधिकरण्यबलात् श्वेतगुणस्य सम्बन्धो वाक्यार्थबलाल्लभ्यमानो वाक्यीय इति दुर्बलः । तदुक्तं हरिणा—

क्रियया यो ऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः ।
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ॥ इति ।

आश्रयस्य छागस्य, आश्रयिणः श्वेतत्वस्य सम्बन्धस्तु वाक्याल्लभ्यत इति तदर्थः । वाक्यादखण्डस्य वाक्यार्थस्याभिव्यक्तौ तु अयं न्यायो नोपपद्यते । श्रौतवाक्यीययोर्भेदो हरिणा दर्शितः—

अप्राप्तो यस्तु शुक्लादिः संनिधानेन गम्यते ।
स यत्र प्रापितो वाक्ये श्रुतिधर्मविलक्षणः ॥ इति ।

"छागमालभेत" इत्यत्र द्रव्यस्य साक्षात्सम्बन्धः शुक्लादिगुणस्य तु सन्निधानवशात् वाक्यीयो यत्नादवगतः । सच श्रुतिधर्मात्साक्षात्सम्बन्धाद्विलक्षण इति तदर्थः ।

ननु जातिनये जातिक्रिययोरेव साक्षात्सम्बन्धः, द्रव्यं त्वाक्षिप्तं तेनापि स्वाधेयो गुण इति द्रव्यगुणयोस्तुल्यत्वाद् गुणान्तरस्य ग्रहणं भवति न तु द्रव्यान्तरस्येत्यत्र किं विनिगमकमिति चेत् । सत्यम् । द्रव्यस्यैव शक्तत्वात्साक्षाज्जातिसम्बन्धित्वाच्च क्रियायोग्यं द्रव्यम् । गुणास्तु तत्कालोत्तरभावित्वाद्विप्रकृष्टा इति गुणा एव विकल्प्यन्ते ।

तदुक्तं हरिणा—

साक्षाद्द्रव्यं क्रियायोगि गुणस्तस्माद्विकल्प्यते। इति।

गुणद्रव्ययोः सम्बन्धः पश्चात्प्रतीयत इत्याह *निर्गुणद्रव्यस्येति। *तस्य–गुणस्य। *सर्वस्येति। द्रव्यस्य गुणस्य चेत्यर्थः। *एकरूपत्वादिति। वाक्यवाक्यार्थयोरखण्डत्वेन श्रौतवाक्यीयविभागासम्भवाच्छागश्वेतयोरुभयोरपि श्रौतत्वमेवेति न कस्यापि वाधः स्यादिति भावः। *पदार्थनिवन्धनेति। "नानृतंव देद्" इत्यादौ नञः क्रियायामन्वये प्रसज्यप्रतिषेधः। 'अब्राह्मणमानय' इत्यादावुत्तरपदार्थान्वये पर्युदासोऽर्थः। "आदित्यो यूपः" इत्यत्र चाकचक्यादिगुणयोगाद्यूपे वर्तमान आदित्यशब्दो गौणः। "नक्षत्रं दृष्ट्वा वाचं विसृजेद्" इत्यत्र नियतकाले वाग्विसर्गः। "यत्किञ्चित्प्रागग्नीषोमीयात्तत्सर्वमुपांशु कर्तव्यम्" इत्येवं ये पदार्थनिवन्धना विशेषास्ते पदपदार्थयोरसत्यत्वे न व्यवतिष्ठेरन्नित्यर्थः। *अखण्डादेवेति। तदुक्तं हरिणा—

अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते॥ इति।

वाक्यार्थे आविभक्तेऽपि अखण्डेऽपि शक्तिभेदाश्रयेणापोद्धृते कल्पनाबुद्ध्या पृथक् कृते अवान्तरवाक्यार्थोपजननात्सिद्धमिति तदर्थः। एतेन गौर्वाहीक इतिवाक्यस्याखण्डत्वे पदपदार्थाभावाद्गौणमुख्यविभागानापत्तिरित्यपास्तम्। *पदैरिति। पदानामेवार्थवत्त्वे इत्यर्थः। *विरुद्धेइति। पदस्वभावात्पृथगुपस्थितिः वृत्तिस्वभावाच्चापृथगुपस्थितिः स्यादित्यर्थः। *एवमिति। कल्पनयैवेत्यर्थः। नन्वखण्डत्वे संहितावशात् 'श्वा'इति पदस्वरूपस्य नष्टत्वेन तदर्थासम्भवात् 'श्वा इतो

धावति' इत्यर्थान्तरस्य कथं गतिरत आह *उभयार्थकमिति ।

अयम्भावः—यथैको ऽपि ध्वनिर्नालिकाद्युपाधिवशान्नानाविधषड्जऋषभादिभेदवानुपजायते तथा तन्त्रेण श्वा इतः श्वेत इत्येवं भिन्नानामपि शब्दानां श्वेत इत्येकरूपता भवतीति ॥२६॥

(क०टी०) प्रागुक्तरीत्या आह *यागेनेति । तदनुपादानेऽपीत्यादिः । तत्र नियमे सति तेन काम्योपक्रमाभावादाह *प्रारब्धेति । ननु तस्याश्रौतत्वात्कथ ततो ऽदृष्टमत आह *तत्रेति । व्रीहिभिर्यजेत इत्यत्रेत्यर्थ । *शक्तीति । व्रीहिजन्यापूर्वसाधनत्वशक्तीत्यर्थः । *अग्रे-विधिवाद । एवं वस्तुस्थितिमुक्त्वा प्रतिज्ञात वक्तुमाह *तत्रेति । व्रीह्यभावे इत्यर्थः । *अखण्डार्थस्य-व्रीहिकरणकाक्रियारूपस्य । आदिना तत्समुच्चय । तस्याश्रौतत्वेन तत अपूर्वाभावेन तस्यापूर्वसाधनत्वाभाव एव तस्य लय इति भाव. । तदाह *नीवारेति । तृणधान्यविशेष' । अयमेव तत्प्रतिनिधि । *एवञ्च-तल्लये च । तथाच तदुच्छेद इति भाव. । वाक्यीयत्वमुपपादयति *निर्गुणेति । एको ग्रन्थ' ? । *तत्र-तथा सति । एवं वस्तुस्थितिमुक्त्वा प्रकृतमाह *अखण्डेति । वाक्यस्येत्यादि' । *सर्वस्य—द्रव्यगुणाभ्यां सम्बन्धस्य । *एकेति । वाक्यशक्त्यैव प्रतिपादितत्वादित्यर्थ' । दोषान्तरगणमेकोक्त्याऽऽह *अपि चेति । श्रुतिलिङ्गाधिकरणोक्तेत्यर्थः । स्वरीत्या स्वशास्त्रवन्मीमांसोपयोगो, न परोक्तरीत्याऽऽह *एवञ्चेति । तया तदुपपत्तौ चेत्यर्थः । तत्र दोषान्तरमाह *किञ्चेति । पदज्ञानस्य त्वन्मते बोधकारणत्वादिति भाव' । यौगपद्यादाह *विरुद्धे इति । नन्वेवं कथ जहत्स्वार्थत्वादिभेदो ऽत आह *वृत्ताविति । सिद्धान्ते तदप्यसम्भवीत्याह *वाक्यादेवेति । अतएवाह *अबुधानिति । उक्तकल्पनां तद्गते ऽन्यत्राप्यतिदिशति *एवमिति । नन्वेवं कथं श्वेत इत्यादित उभयार्थस्य युगपत् बोधो ऽत आह *श्वेत इति । अत्रोभयोरपि तन्त्रमेव । प्रसिद्धविरोधाभावायाह *एवञ्चेति । तेषामसत्यत्वे चेत्यर्थ ॥ २६ ॥

प्रकृतिप्रत्ययाविभागो ऽप्येवमेव।

तदुक्तम्—

धात्वादीनां विशुद्धानां लौकिको ऽर्थो न विद्यते।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥
प्राग् विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते । इति।

अत एव प्रकृतिप्रत्ययोभयार्थे क्वचिदन्यतर एवाभिधत्ते । यथा—इयानिति, अहन् इतिच । तथा क्वचित्प्रत्ययद्वयेन कर्त्राद्यर्थबोधः । यथा—पचतीति। क्वचिदेकेनैव । यथा—अत्तीति ।

किञ्च ये कस्मिंश्चिद् व्याकरणे प्रत्ययार्थत्वेनोक्तास्तेऽन्यत्र प्रकृत्यर्थत्वेनोक्ताः । तस्मात्पदपदार्थाद्यसत्यमेव । शास्त्रमप्यसत्यव्युत्पादकमेव ।

तदुक्तम्—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
उपायाः शिक्ष्यमाणानां बालानामुपलालनाः ॥
असत्ये वर्त्मनि स्थित्वा ततः सत्य समीहते।इति।

अनादिमिथ्याभूतशास्त्राभ्यासानुसारेणैव शब्दः शास्त्रज्ञलोकेनार्थप्रत्यायकतया गृह्यते केन चिद् । यथा घटादिकः सर्वोऽपि प्रपञ्चः परिच्छिन्नत्वेन गृह्यते । भावानामुत्पादं दृष्ट्वा च शाश्वतमपि ब्रह्मोत्पादवदिति मन्यते लोकेन तद्वत् ।

तदुक्तम्—

घटादिदर्शनाल्लोकः परिच्छिन्नो ऽवसीयते ।
समारम्भाच्च भावानामादिमद्ब्रह्म शाश्वतम्॥इति

लोको विश्वप्रपञ्चः । समारम्भ उत्पत्तिः ।

किञ्च 'त्वं ग्राममश्वः''अश्वो गच्छति''अजापयः

शत्रून्' 'अजापयः पिब'इत्यादौ नामाख्यातसारूप्ये वाक्यार्थादेव पश्चात्पदपदार्थनिर्णय इत्यखण्डमेव वाक्यं बोधकमखण्डार्थस्येत्युचितम्।

तदुक्तम्—

यथैवानर्थकैर्वर्णैर्विशिष्टो ऽर्थो ऽभिधीयते।
पदैरनर्थकैरेवं विशिष्टो ऽर्थो ऽभिधीयते॥
नहि किञ्चित्पदं नाम रूपेण नियतं क्वचित्।
पदानामर्थरूपं च वाक्यार्थादेव जायते॥ इति।

वाक्ये ऽखण्डत्वं चापृथगुपस्थितिजनकत्वम्। अपृथगुपस्थितिविषयत्वं चार्थे ऽखण्डत्वम्। पदानां केवलानां पृथगुपस्थापकत्वं वृत्तिघटकानामपृथगुपस्थापकत्वमिति तु शास्त्रकृत्कल्पनैव। यदपि केवलं पदं सदित्यादि प्रयुज्यते तदप्यन्ततो ऽस्तिक्रियाघटितार्थबोधकमिति तदपि वाक्यमेव। साधनस्य साध्यक्रियाऽऽकाङ्क्षत्वात्। साध्यक्रियायाश्च साधनाकाङ्क्षत्वात्॥ २७॥

(कुं०टी०) ननु प्रकृत्यादीनामनर्थकत्वे "अर्थवन्तो वर्णा धात्वादीनामेकवर्णानां दर्शनाद्" इति भाष्यस्य का गतिस्तत्राह *धात्वादीनामिति। भाष्यं तु प्रक्रियाऽभिप्रायेण। *अत एव—प्रकृतिप्रत्ययतदर्थविभागस्यातात्त्विकत्वादेव। *पचतीति। अत्र शपा तिपा च कर्तुर्बोधः। *ये कस्मिंश्चिदिति। पदार्थविभागस्य तात्त्विकत्वे त्वसमञ्जसमेतत्स्यात्। *असत्यमेवेति। किञ्च अधिहरीत्यत्राधेः सत्यत्वे वाक्ये ऽप्यधिरधिकरणं बोधयेत्। प्रभुरित्यादाववयवार्थानुपलम्भाच्च। चित्रगुरित्यादौ च चित्रगो-

शब्दाभ्यामनुपाती देवदत्तादिः केन प्रत्याय्येत । नन्वसत्यत्वे कथ शास्त्रप्रवृत्तिरत आह *शास्त्रमपीति । अविद्यावर्णनं च तन्निरासद्वारा विद्योत्पत्त्यर्थमेव । *उपलालनाः–प्रतारणाः । *असत्ये इति । असत्यरूपे शास्त्रप्रक्रियामात्रेऽर्थे स्थितः अविद्यामुत्सृज्य सत्यं विद्यास्वरूपं ब्रह्म समीहते प्राप्नोति ।

अयं भावः–नित्यमद्वयं ब्रह्म ये वदन्ति ते ब्रह्मण एवंविधानादिजीवात्मशक्तिं मन्यन्ते यद्वशात्तत्त्वं तिरोधाय अतत्त्वेन भेदेन व्यवहारः । स चाविद्याकृतः । यथाहि दण्डादिकारणं विलक्षणं घटादिकमुत्पादयति एवमविद्याऽपि विद्योत्पत्तौ हेतुः । *शब्दः–एकैकपदात्मकः । *समारम्भादिति । भावानामुत्पादं दृष्ट्वा ब्रह्म आदिमदिति व्यवह्रियते । *त्वंग्राममिति। त्वं ग्राममगम इत्यर्थः । *अश्वइति। श्वयतेर्लुङ् सिप् । *अजापयइति। "जै क्षये" णिजन्ताल्लुङ् सिप् । *अजापयइति । अत्र षष्ठीसमासः । *यथैवेति । यथा अनर्थकैर्वर्णैरभिव्यक्तः पदस्फोटो वाचकः तथा अनर्थकैः पदैरभिव्यक्तो वाक्यस्फोटो वाचक इत्यर्थः । *नहि किञ्चिदिति । पदं नाम किञ्चित्स्वरूपेण न नियतं किंतु वाक्यार्थादेव पदार्थविभागः । यथा अजापय इत्यत्र प्रागुक्तम् । *पदानां केवलानाम्–वृत्तिबहिर्भूतानाम् । ननु वाक्यार्थस्याखण्डत्वे एकार्थीभावव्यपेक्षाभेदासङ्गतिरत आह *शास्त्रकृत्कल्पनैनैवेति । ननु क्वचिदेकपदस्यापि वाचकत्वमस्तीत्याशङ्क्याह *यदपीति । यत्राप्येकमेव पदं निराकाङ्क्षं कृदन्तं सदित्यादि प्रयुज्यते तत्रापि तद् अभूदस्ति नास्तिवेत्यादिक्रियासम्बन्धं विना न परिसमाप्तार्थं भवति । एतदेवाह *अन्ततोऽस्तिक्रियेति । तथाच वाक्यार्थव्यतिरेकेण पदार्थो ऽसत्य एवेत्याशयः ।

अयं भावः–उपगोरपत्यमित्यत्र जनिक्रियानिमित्तो ऽपत्या-

पत्यवत्संबन्धः । राज्ञ इत्यादौ भरणादिक्रियानिमित्तः । घट इत्यादौ तु पदार्थमात्रस्यैव बुद्धिसत्ताया अव्यभिचारात्सैव सत्ता प्रतीयत इति । एतदेवोपपादयति *साधनस्येति ।

अयं भावः—साध्यं साधनं च परस्परं नियतमेव । केवलमाकाङ्क्षादिवशादितरपदार्थसंनिधाने नियत एव प्रकाशते इति ॥ २७ ॥

( क० टी० ) विशेष वक्तुमुक्तमेवानुवदति *प्रकृतीति । *तदुक्त-हरिणा । *विशुद्धानां-प्रत्ययासमभिव्याहृतानाम् । एवमग्रेपि । आदिपदार्थमाह *कृदिति । *अलौकिकः—शास्त्रकृतकल्पित । नतु पारमार्थिक । ननु कृदाद्यन्तानामर्थोऽस्त्वित्यत आह *प्रागिति । विभक्तेः प्राक् । *तदन्तस्य-कृत्तद्धितान्तस्येत्यर्थ । विशेषमेवाह * अत एवेति । तस्यापि काल्पनिकत्वादेवेत्यर्थ. । *ये-अर्था । द्वितीयमुपसहरति *तस्मादिति । शास्त्रमपि तथैवेत्याह *शास्त्रमपीति । *तदुक्तम्-हरिणा । *अविद्या-प्रकृत्यादिरूपाऽसत्यपदार्थ एव । अत्र बीजमाह *उपायाइति । *उपलालना । भवन्तीति शेष । तदाह *असत्ये इति । असत्ये इत्यादेरर्थमाह *अनादीति । अथ त्वान्तस्यार्थ. । *शब्दः-स्फोटब्रह्मरूप । तत्रापि न सर्वेणेत्याह *केनचिदिति । तज्ज्ञानसामग्रीमता । दृष्टान्तान्तरमाह *भावानामिति । घटपटादीनामित्यर्थः । दृष्टान्तद्वय हरिसमतमित्याह *तदुक्तमिति । अवसीयतइत्यस्य मध्यमणिन्यायेनान्वय. । वाक्यतदर्थयोरखण्डत्वे युक्त्यन्तरमप्याह *किञ्चेति । आद्ये ऽश्व इति श्विधातोर्लुङ् । अन्तेऽजापय इति च जै क्षय इत्यस्य ण्यन्तस्य लङन्तम् । आदिना घटो भवति, भिक्षां देहीत्यादिपरिग्रह । *सारूप्ये-तद्विषये । बहुव्रीहिणा वाक्यविशेषणम् । *वाक्यार्थादेव पश्चादिति । वाक्यार्थबोधादनन्तरमेवेत्यर्थः । न ततः प्राक् । तयो सारूप्येण सन्देहेन क्रियाकारकान्यतरार्थत्वेनानिश्चयादिति भावः । *इतिर्हेतौ । *तदुक्त-हारणा । अव्यवहितोक्तम् । उक्तपदस्थले प्रक्रियायाः परीत्या वा आह *यथैवेति । *विशिष्टोऽर्थ—पदार्थः । *विशिष्टार्थ-वाक्यार्थः । अत्र हेतुमाह *नहीति । यतः

किञ्चिदपि पद रूपेण स्वरूपेण नामावश्य नियत विभक्त्यादिभेदेन तेषां भेदादित्यर्थः । तत्सारूप्यविषयमाह *क्वचिदित्यादि । क्वचित् तत्सारूप्यविषयपदानामर्थरूपे तन्निर्णय इत्याद्यर्थ. । नन्वस्तु एवमखण्डत्व तयो', पर तु खण्डशून्यत्वरूप बाधितं यस्य वाक्यस्य सत्यत्वप्रक्रियासिद्धान्तस्तस्य सखण्डस्यैवानुभवादत आह *वाक्येइति । तुल्ययुक्त्यैवाह *अपृथगिति । परमतन्दूषयति *पदानामिति । *किञ्चपदैरिति । दोषाद्यभावायाह *केवलानामिति । *किञ्च राजेति । दोषाभावायाह *वृत्तीति । *कल्पनैवेति । प्रागुक्तान्यदोषाणां सत्त्वादिति भावः । प्रागुक्तमेव दार्ढ्यायाह *पदेऽपीति । प्रागुक्तगतिसम्भवादाह *अन्त इति ॥२७॥

एवमर्थे ऽपि ये वादिनां नानापक्षास्तेऽपि तत्तच्छास्त्रवासनावशात्कल्पिता एव । यथा अभिहितान्वयः । अन्विताभिधानामिति । संसर्गो वाक्यार्थः, संसृष्टाः पदार्थाः स इति । जातिः पदार्थो व्यक्तिर्वेत्यादि । अत एव "घट" इति प्रयुक्ते वैशेषिको ऽतिरिक्तमवयविनं बुध्यते, साङ्ख्यो गुणसमूहम्, बौद्धादिः परमाणुसमूहम् ।

यद्यपि ऋषीणां दर्शनं तत्त्वविषयं भवति तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवाद्व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा नानाप्रकारैर्व्यवहरन्तीति न तद्वचसाऽपि पदपदार्थसत्यत्वं मन्तव्यम् ।

अत्र वाक्यार्थस्यापेक्षिकं सत्यत्वं द्रष्टव्यम् । सर्वव्यवहारस्यासत्याविषयत्वात् ॥ २८ ॥

( कु० टी० ) *वासनेति । वासनावैचित्र्यमेव ज्ञानवैचित्र्ये हेतुर्नार्थवैचित्र्यमिति भावः । ननु वासनावैचित्र्यात् ज्ञानवैचित्र्यं ज्ञानवैचित्र्याच्च वासनावैचित्र्यमित्यन्योन्याश्रय इ-

तिचेन्न । वासनाऽभावे ऽप्यपूर्वपदार्थसंनिधाने ज्ञानवैचित्र्यदर्शनात् । *अभिहितान्वयइति ।

अयं भावः—लाघवात्पदानां पदार्थमात्रे शक्तिर्न त्वन्वयांशे ऽपि । गौरवात् । आकाङ्क्षादिलभ्यत्वेनान्यलभ्यत्वाच्च । एवञ्च पदेभ्यः प्रथमं पदार्थमात्रोपस्थितिः । पश्चात्पदार्थविशेषाणामन्वयरूपस्य वाक्यार्थस्योपस्थितिः । एवं च तात्पर्यवशादशक्य एवान्वय आकाङ्क्षादिवशात्प्रतीयते । अत एवोक्तं भाष्ये "यदत्राधिक्यं स वाक्यार्थ" इति ।

नचापदार्थस्यापि प्रतीतावतिप्रसङ्गः । स्वरूपसतः शक्यान्वयस्य नियामकत्वात् । एवंचाकाङ्क्षितादिपदसमुदायो वाक्यं संसर्गश्च वाक्यार्थ इति मीमांसकाः ।

एतच्चायुक्तम् । पदानामाशुविनाशित्वेन समुदायासम्भवात् । तेषां स्मरणकल्पने ऽपि सामान्ये ऽवस्थितानां पदानां विशेषे ऽवस्थानं दुरुपपादमेव । विशेषस्याशक्यत्वात् । अशक्यस्याप्युपस्थितौ शब्दार्थसम्बन्धस्यानित्यतापत्तिश्च । वाक्यार्थस्याशाब्दत्वे च पदार्थो ऽप्यशाब्द एव । वर्णानामप्याशुविनाशित्वात् । *अन्विताभिधानमिति ।

तथाहि—अन्वयरूपे वाक्यार्थे ऽपि पदानां शक्तिः । 'घटमानय' इति प्राथमिकव्यवहारेण विशिष्ट एव शक्तिग्रहात् । आनयनाद्यन्वितो घटादिरेव घटादिशब्दार्थः । तथाच सर्वभेदानुगुणसामान्यरूपो विशेषान्तरसंनिधानाद्विशेषविश्रान्तः पदार्थ एव वाक्यार्थः । आक्षिप्तपदान्तराणि पदान्येव च वाक्यम् । किञ्च अन्वयस्याशक्यत्वे शाब्दबोधविषयता न स्यात् । तत्र शक्तिग्रहस्य नियामकत्वात् । अशक्यस्याप्यनुभवविषयत्वे ऽतिप्रसङ्गात् ।

ननु पदार्थसामान्यान्वित एव शक्तिग्रहात् संसर्गविशेषो

ऽशक्य एव। अन्यथा 'घटमानय'इति पदं श्रुत्वा 'पटमानय' इति वाक्यं श्रुतवतः तदेवेदमानयतिपदमिति प्रत्यभिज्ञा न स्यात् । पूर्ववाक्यस्य घटानयने शक्तस्य पटानयने ऽशक्ततया अर्थभेदेन शब्दभेदादिति चेन्न । पदार्थत्वेनैव रूपेण विशेषाणामन्वये शक्तिग्रहात् । अन्वितानां च विशेषरूपत्वादिति ।

एतन्मते ऽपि अर्थान्तरसामान्यान्विते एव पदानां शक्तिः गवादिविशेषान्वितस्त्वशक्य एवेति। अभिहितान्वयवादिमते वाक्यार्थलक्षणं सूचयति । *संसर्गो वाक्यार्थ इति । अयं भावः—यथा बलवता प्रेरित इषुरेकैनैव वेगाख्येन व्यापारेण चर्मच्छेदमुरोभेदं प्राणहरणं च करोति एवमेकेनैवाभिधाऽऽख्येन व्यापारेण पदार्थस्मृतिं वाक्यार्थबोधं च करोति । "यत्परः शब्दः स शब्दार्थः" इति न्यायादिति । अन्विताभिधानमते वाक्यस्यार्थं दर्शयति *संसृष्ट इति । यथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ति"इत्यत्र ऋत्विक्प्रचरणस्यान्यतः प्राप्तत्वाल्लोहितोष्णीषत्वमात्रं विधीयते तद्वदिति भावः । नन्वन्वयांशस्य शक्यसम्बन्धितया लक्षणया बोधः सिद्ध इति चेन्न । तत्सम्बन्धस्य तच्छब्दबोधानुपयोगितच्छाब्दबोधानुकूललक्षणायास्तत्राभावात् । मुख्यार्थबाधे सत्येव लक्ष्यार्थबोधात् । *सइति । संसृष्टः पदार्थ एव वाक्यार्थ इत्यर्थः । एकैकस्यैव पदस्य वाक्यार्थबोधकत्वे पदान्तरवैयर्थ्यापत्तेः । उत्तरपदानां व्यञ्जकत्वमिति चेत् । तर्हि आगतं समुदायस्य वाचकत्वमिति । *जातिः पदार्थ इति । तथाहि—वाजप्यायनमते जातिरेव शब्दार्थः । नित्याया अपि तस्या व्यक्तिद्वारकं साध्यत्वम् । जातेश्चानाश्रयाया अभावात्सामर्थ्याद् द्रव्यं प्रतीयते । तत्र द्रव्यगताया जातेरेकार्थसमवायेन क्रियान्वयित्वम् । गुणक्रियाशब्दानामपि गुणक्रियागतैव जातिर्वाच्या ।

उपसर्गादिरपि नामाख्यातसहभावी तदर्थस्य विशेषद्योतकत्वाज्जातिपदार्थ एव। अर्थविशेषस्य विशिष्टविश्रान्तस्यैवावगमात् । कर्मप्रवचनीयो ऽपि सम्बन्धजातिनिष्ठ एवेति । ननु जातिशक्तिवादे व्यक्तेरनुमानरूप आक्षेप एव, न शाब्दबोधविषयत्वमिति शक्त्यनुभवशाब्दबोधयोः समानप्रकारकत्वेन कार्यकारणभाव इतिप्रवादासङ्गतिरिति चेद् ।

अत्र केचित्। समानवित्तिवेद्यत्वस्यैवाक्षेपपदार्थतया व्यक्तेरपि शाब्दबोधविषयत्वात् । व्याडिमते द्रव्यमेव पदार्थः । तस्यैव क्रियान्वयोपपत्तेः। जातेरुपलक्षणत्वाच्च व्यक्त्यन्तरेऽपि शक्तिग्रहः। आख्याते ऽपि च क्रियाविशिष्टं द्रव्यमेव पदार्थः । देवदत्तः पचतीत्यादौ द्रव्यस्यैव साक्षात्साधनत्वोपपत्तेरिति । *अतिरिक्तम्—परमाणुसमूहादतिरिक्तम्। *गुणसमूहं—रूपत्वादिगुणसमूहमिति। विशकलितेषु तु तेषु घट इतिव्यवहारो न भवति, विलक्षणसंयोगस्यैव तन्नियामकत्वात् । तत एव च घट उत्पन्न इत्यादिरपि व्यवहारः । *अदृष्टेति । अदृष्टं तत्त्वं यैस्तत्सदृशा इत्यर्थः। तदुक्तं हरिणा—

ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम् ।
न तेन व्यवहारो ऽस्ति न तच्छब्दनिबन्धनम् ॥ इति ।

*नानाप्रकारैरिति । शास्त्रवासनाभेदादिति भावः । ननु पदपदार्थयोरिव वाक्यार्थस्याप्यसत्यत्वं न्याय्यमन्यथाऽद्वैतहानिरत आह *आपेक्षिकमिति । व्यावहारिकमित्यर्थः। अत एव "पश्वादिभिश्चाविशेषाद्" इतिसूत्रयता व्यासेनापि व्यवहारकाले विवेकिनामपि पश्वादिवदविवेकित्वं दर्शितम् । किञ्च अबुधबोधनाय प्रवृत्तं शास्त्रं कथं तत्त्वं वक्तुं पारयेत् ॥ २८ ॥

*एवम्–प्रकृत्यादिशब्दवत् । *अर्थेऽपि–तद्विषयेऽपि । *अत एव–तत्तच्छास्त्रवासनावशात्कल्पितत्वेन तस्य तत्तदभ्यासादेव । ननु तत्तच्छास्त्रप्रणेतारः किं तत्त्वज्ञा उत न । आद्ये कथं तदुक्तपक्षाणामसत्यत्वम् । अन्त्ये पामरोक्तिवत्तेषामश्रद्धेयत्वापत्तिरत आह *यद्यपीति । *वस्तुना–ब्रह्मणा । तत एवाह *सदृशा इति । सन्त इति शेषः । नन्वेवं वाक्यार्थस्य सत्यत्वे द्वैतापत्तिरत आह *अत्रेति । प्रक्रियायामित्यर्थः ॥ २८ ॥

वाक्यार्थश्च प्रतिभामात्रविषयः । प्रतिभा च जन्मान्तरसंस्कारजाऽपि । यथा मधौ पिकस्य पञ्चमस्वरविरावो जन्मान्तरसंस्कारजः । अत एव शशशृङ्गमस्तीत्यादितो ऽपि सः । प्रतिभाविषयत्वाच्च प्रतिभा वाक्यार्थ इति व्यवहार इत्यलम् ।

ननु पदपदार्थकल्पनायामपि 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादौ क्रियाकारकभावसम्बन्धस्य विभक्त्यैवोक्तत्वेन को वाक्यार्थः । सम्बन्धसम्बन्धस्य तु भाने न मानम्, अनवस्था चेति चेन्न । पदार्थानां परस्परविशेष्यविशेषणभावरूपान्वयस्य वाक्यार्थत्वात् । यद्यपि विभक्तिप्रकृत्यर्थगतविशेषणत्वमपि विभक्तिशक्यमेव तथापि विशेष्यनिष्ठम् इतरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वं वाक्यशक्यमिति बोध्यम् । एतच्चोपपादयिष्यते ।

ननु उक्तान्वयरूपवाक्यार्थस्य तद्घटकपदानुपस्थितत्वात्तत्र शक्तिग्रहासम्भवः, तथोपस्थिततद्विषयकशक्तिग्रहे च तस्यापूर्वत्वहानिरिति चेन्न । वृद्धव्यवहारदर्शनसहकृतमनसोपस्थितविशिष्टे तद्ग्रह-

**सम्भवात् । क्वचिदुपदेशेन तद्ग्रहसम्भवाच्च । क्वचिदाकाङ्क्षावशात्तदैव तत्र शक्तिग्रहो बोधश्च । पश्चाच्छास्त्रकृत्कल्पितान्वयव्यतिरेकाभ्यां तत्तत्पदशक्तौ व्यवस्थितायामर्थाद्वाक्ये उक्तान्वयाविषया शक्तिरवतिष्ठते ॥ २९ ॥**

( कुं० टी० ) ननु वाक्यस्याखण्डत्वे पदपदार्थयोरसत्यत्वात् क्रियाकारकभावो वाक्यार्थ इति प्रवादासङ्गतिः, अत आह *वाक्यार्थश्चेति । तदुक्तं हरिणा—

विच्छेदग्रहणेऽर्थाना प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ इति ।

देवदत्तादिपदानां पृथग् अर्थे गृह्यमाणे अन्यैव प्रतिभा जायते, वाक्ये चान्यैवेति प्रतिभैव वाक्यार्थ इति तदर्थः ।

ननु पदपदार्थयोरसत्यत्वे प्रतिभैव कथम्, अत आह *संस्कारजाऽपीति । यथा हि सर्वेषां प्राणिनामाहारादिक्रिया अनादिप्रतिभावशान्नियता एवमिहापीत्यर्थः । तत्र संस्कारस्य जनकोऽभ्यासः । बालानाञ्चाभ्यासाभावात्संस्काराभावे प्रवृत्तिर्न स्याद्, अत उक्तम् *जन्मान्तरेति । तदुक्तं हरिणा—

स्वरवृत्ति विकुरुते मधौ पुंस्कोकिलस्य कः ।
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः ॥ इति ।

मधुमासे कोकिलस्य पञ्चमस्वराविरावः केन शिक्षितः । लूतातन्तूनां कुलायरचना च प्रतिभावशादेव दृश्यत इति तदर्थः । तथाच अखण्ड एको ऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभा वाक्यार्थः, अध्यास एव सम्बन्धः । *पञ्चमेति ।

वायुः समुत्थितो नाभेरोष्ठकण्ठशिरोहृदि।
पञ्चस्थानसमुद्भूतः पञ्चमस्तेन संमतः॥ इति।

*व्यवहारइति। हर्यादीनां सिद्धान्त इत्यर्थः। *सम्बन्धस्य त्विति।

अयं भावः—पदार्थसंसर्गो वाक्यार्थः। पदार्थत्वं पदजन्यप्रतीतिविषयत्वम्। विषयता च प्रकारताविशेष्यताऽन्यतररूपा। सा च न सम्बन्धे ऽस्तीति।

*वाक्यार्थत्वादिति।

अय भावः— व्याडिमते भेदो वाक्यार्थः। पदवाच्याना द्रव्यान्तरानिवृत्तितात्पर्यकत्वात्। जातिवादिमते तु संसर्गो वाक्यार्थः। सच सामान्ये ऽवस्थितानां पदार्थाना संश्लेषः।

यत्तु 'नीलो घटः' इत्यादौ घटादिपदसमभिव्याहृतो नीलादिशब्द एव अभेदरूपान्वयस्य बोधक इति। तन्न। केवलनीलपदस्य तत्र शक्त्यभावात्। समभिव्याहारस्य प्रयोजकत्वे तु वाक्यशक्तिर्दुर्वारा।

*शक्यमेवेति। प्रतीयमानस्य सर्वस्य शक्यत्वौचित्यात्। *उक्तान्वयेति। इतरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यतेत्यर्थः। *एतद्घटकेति। वाक्यघटकेत्यर्थः। *अपूर्वत्वादिति। पदादनुपस्थितया तत्र शक्त्यभावादिति भावः। *तथोपस्थितेति। अन्विते शक्तिग्रहे चेत्यर्थः। *अपूर्वत्वहानिरिति। अन्वयांशे ऽपि पदशक्तिग्रहे तु वाक्यार्थत्वहानिरित्यर्थः। *तद्ग्रहेति। वाक्यार्थशक्तिग्रहेत्यर्थः। *पश्चादिति। प्रथमतो वाक्यार्थे ऽवगते कल्पितान्वव्यतिरेकाभ्यां पदानां स्वार्थमात्रपरत्वावगमादन्वयरूपे वाक्यार्थे वाक्यशक्तिरवतिष्ठते इत्यर्थः॥ २९॥

( क० टी० ) विशेषान्तरमाह *वाक्यार्थश्चेति । मात्रपदेन तस्य बाह्यरूपानवगम्यकत्वं सूचितम् । आदिप्रतीत्युपपत्तये आह *प्रतिभेति । एवं क दृष्टमित्यत आह *यथेति । *मधौ–वसन्ते । *अतएव-तस्य तन्मात्रविषयत्वादेव । *स –वाक्यार्थः । नन्वेवमत्र प्रतिभाऽतिरिक्तवाह्यस्वरूपाभावेन 'प्रतिभा वाक्यार्थ' इति जायमानो व्यवहारः कथमत आह *प्रतिभेति । तस्या अपि तत्त्वम्, अन्यथा बाह्यतदाकारासम्भव इति भाव । वाक्यत्वमपि कारकाद्यान्विताक्रियाबोधकत्वमेव ननु प्रसिद्धम्. अत एव प्रागुक्तसङ्गतिस्तदाह *इत्यलमिति । ततोऽन्यत्र तादृशतत्स्वरूपनिर्णयाय शङ्कते *नन्विति । *इत्यादाविति । परस्पराकाङ्क्षाजनकार्थबोधकपदघटितवाक्ये इत्यर्थः । समर्थसूत्रभाष्यमूलकमाह *क्रियेति । इदमग्रे स्फुटीभविष्यति । ननु तत्सम्बन्ध' सोऽत आह *सम्बन्धेति । अन्यथाऽनुपपत्त्यैव नत्वे त्याह *अनयेति । पदार्थानामितिसूचितमाशयं विशदयति *यद्यपीति । इदमपि तन्मूलकमग्रे स्फुटीभविष्यति । ननु तस्याप्यन्यथालाभेन कुत शक्यत्वमत आह *एतच्चेति । अपूर्वो वाक्यार्थ इति प्रवादे अपूर्वत्वम् । तत्र पदार्थोपस्थितेः पूर्वं नियमतो वाक्यार्थांशे उद्बोधकासमवधानेन पदार्थोपस्थितिसमये वाक्यार्थोपस्थितेरभावेन शाब्दबोधप्राग्वर्त्तितज्जनकशब्दज्ञानजन्यज्ञानाविषयत्व तदाह *तद्घटकेति । वाक्यघटकेत्यर्थ *तथोपस्थितेति । निगमेन तत पूर्वं तत्कल्पनया तद्घटकपदादुपस्थितवाक्यार्थविषयकशक्तिग्रहे चेत्यर्थः । उक्तप्रकारस्यासार्वत्रिकत्वमाह *क्वचिदेति । 'अयमेतस्यार्थ' इत्युपदेशेन जाते इत्यर्थः । *क्वचिदिति । प्रागविज्ञातहरिद्रानामकनदीविशेषेण पुंसा हरिद्रायां नद्यां घोष इति वाक्ये श्रुते नदीपदसमभिव्याहारेण हरिद्राशब्दस्य शक्तिग्रहपूर्वकं नदीलिङ्गात्तत्सम्बन्धित्वेनावगततीरप्रत्ययवत् पदै पदार्थानामुपस्थितावाकाङ्क्षाज्ञानादिसाचिव्यात्तत एवोपस्थिते वाक्यार्थे तत्सम्भव इत्यर्थः । नन्वेवं संसर्गो वाक्यार्थ इति प्रवादभङ्गोऽत आह *पश्चादिति । *शक्तिरिति । तथाच वाक्यस्य शक्तत्वव्यवहारोऽप्युपपन्न ॥ २९ ॥

सर्वथा अज्ञातस्य सम्बन्धस्य भानं त्वनुभवविरु-

द्धम् । इदं चार्थवत्सूत्रे भाष्ये स्पष्टम् । तथा प्रातिपदिकार्थसूत्रे "षष्ठीशेषे" इतिसूत्रेच भाष्ये । तत्राहि—वीरः पुरुष इत्यादौ "विशेषणविशेष्यभावरूपं यद् आधिक्यं स वाक्यार्थः" इत्युक्तम् । तत्राधिक्यमिति स्वार्थे ष्यञ् । तत्र नान्यत्प्रवृत्तिनिमित्तम् ।

तदुक्तम्—

वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया । इति ।

नन्वाकाङ्क्षादिसहकारेण पदैरेवोक्तसंसर्गस्यापि भानोपपत्तौ तत्र वाक्यस्य शक्तिकल्पने मानाभावो गौरवं च । आकाङ्क्षा च वक्ष्यते, इति चेन्न । तत्तत्समभिव्याहारे ऽर्थासंबद्धे बोधजनकत्वानुपपत्त्या सम्बन्धावश्यकत्वात् । पदेषु तत्तदर्थसम्बन्धवत् ।

तदुक्तं भट्टपादैः—

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थे ऽपि पदानि नः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते ॥ इति ।

हि, यतः । सर्वत्रैव, एकपदप्रयोगे ऽपि 'प्रविश' 'पिण्डीम्' इत्यादौ । एतदर्थश्चाग्रे वक्ष्यते । एवं च वाक्यार्थत्वं स्पष्टमेवोक्तम् । तत्र प्रत्येक पदस्य सामर्थ्यमिति न युक्तम्, विनिगमनाविरहात् । पदानां तद्विषयसामर्थ्यात्यागे युक्त्यन्तरमप्युक्तं तैः—

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्त्या नान्तरीयकम् ।
पाके ज्वाले च काष्ठानां पदार्थप्रतिपादनम् ॥ इति ।

एवं च पदतात्पर्यविषयता वाक्यसंबद्धत्वं च स्पष्ट-

मेव । एवं च पदवृत्तिः केवलपदार्थबोधिका वाक्यवृत्तिस्तु विशिष्टार्थस्यैव बोधिकेति बोध्यम् ॥ ३० ॥

(कुं.टी.)*यदाधिक्यमिति । इदंचाभिहितान्वयवादे । तत्र हि-पदानां परस्परान्वये पदार्थवशाद्यदाधिक्यं संसर्गः स वाक्यार्थः । *तत्र—वाक्ये । *अन्यत्—विशेष्यविशेषणभावातिरिक्तम् । यथा हि—घटादिशब्दानां घटाद्यर्थे प्रवृत्तौ घटत्वादिकं निमित्तं नैवं वाक्यस्य वाक्यार्थप्रवृत्तौ किञ्चिन्निमित्तमस्तीत्यत आधिक्यमित्यत्र स्वार्थ एव ष्यञित्यर्थः । *वाक्यरूपस्येति । न केवलं पदानां शब्दस्वरूपं प्रवृत्तिनिमित्तं, यावता वाक्यरूपस्यापि शब्दस्यार्थे वर्तमानस्य वृत्तिरन्यानपेक्षया स्वरूपेणैव बोद्धव्या न तु तत्र निमित्तान्तरापेक्षाऽस्तीति । *अर्थासम्बन्ध इति । असम्बद्धार्थबोधकत्वासम्भवाद्वाक्यस्यापि शक्तिरित्यर्थः । *लक्ष्यमाणः—प्रतीयमानः । प्रविशेत्यत्र गृहमिति गम्यते । पिण्डीमित्यत्र भुङ्क्ष्वेति । *नयुक्तमिति । कस्य पदस्य सामर्थ्यमित्यत्र नियामकाभावात्समुदायस्यैव युक्तमित्यर्थः । *तद्विषयेति । वाक्यार्थविषयेत्यर्थः । *साक्षादिति । वर्णा यद्यपि साक्षात्पदार्थमेव प्रतिपादयन्ति तथापि पदार्थस्य निष्फलत्वात् वाक्यार्थ एव पर्यवस्यन्तीत्यर्थः । वर्णैरेव पदार्थाभिव्यक्तेर्वर्णा इत्युक्तम् । *पाके काष्ठानां ज्वालेवेति दृष्टान्तः । *नान्तरीयकमिति । विनाऽर्थकेनान्तरेत्यनेन न-शब्दस्य "सुप्सुपा" इति समासः । ततो गहादित्वात् छः । येन विना न निष्पत्तिस्तन्नान्तरीयकमित्युच्यते । *पदतात्पर्येति । वाक्यार्थेऽपि पदानां तात्पर्य वाक्यार्थस्य वाक्यसम्बद्धत्वञ्चेत्यर्थः ॥ ३० ॥

( कु० टी० ) अनुपस्थितस्यैव संसर्गस्य भानमिति इतरतान्त्रिकमत दूषयति *सर्वथेति । प्रकारत्रयेऽपीत्यर्थः *स्पष्टमिति । तत्र हि-"एषां पदाना सामान्ये ऽर्थे वर्त्तमानानां यद्विशेषे ऽवस्थानं स वाक्यार्थ "इत्युक्तम् । विशेषे,पदार्थससर्ग रूपे । सचोक्तरूप एव । सम्बन्धान्तरस्य समर्थसूत्रभाष्ये विभक्तिवाच्यतोक्तेस्तत्र तच्छक्तिरप्याकाङ्क्षावशादेव । तद् ध्वनयन्नाह *यथेति । *तत्रहि । अर्थवत्सूत्रे हि । *इत्यादाविति । विशेषणविशेष्यभावस्याधिकस्य प्रतीत्या प्रातिपदिकार्थमात्राभावात्प्रथमा न प्राप्नोतीत्याशङ्क्येति शेष । "वीरप्रातिपदिकात्पुरुष इति शब्दान्तरस्यार्थो य पुरुषत्व तत्ससर्गेण वीरः क इत्येवमाकाङ्क्षया प्रापितविशेषणभावमनपेक्ष्य स्वार्थमात्रनिष्ठात्प्रथमा विधीयते । पश्चात्त्वाकाङ्क्षावशाद्विशेषणविशेष्यभावावगतिरुपजायते" इति कैयटस्तदाह *विशेषणेति । पुरुषे ऽपि वीरनिष्ठविशेषणतानिरूपितविशेष्यत्वमधिकम् । तद्ध्वनयता तृतीयसूत्रमुक्तम् । तत्रहि—'राज्ञ पुरुष इत्यत्र राजा विशेषण पुरुषो विशेष्यम् इत्यधिकार्थत्वात्प्रथमा न प्राप्नोति' इत्याशङ्क्य 'यदत्र'–इत्याद्युक्तम् । तेन तस्यैव तत्त्व स्पष्टमेवोक्तम् । तस्य तत्त्वायाह *तत्रेति । तस्य केनचिद्रूपेण भाने प्रागुक्तदोषापत्तेराह *तत्रेति ।* तदुक्तम्—हरिणा । नैयायिकमत खण्डयति प्रतिज्ञात प्रतिपादयन् *नन्विति । शाब्दत्वायाह *पैदरेवेति । नन्वाकाङ्क्षाया आत्मादिनिष्ठत्वेन कथ पदवृत्तित्वमत आह *आकाङ्क्षाचेति । अन्यथाऽतिप्रसङ्गापत्तेराह *बोधेति । परमतमपीदमित्याह *तदुक्तमिति । अपिना स्वार्थपरिग्रहः । पूर्वार्द्धोक्तार्थे हेतुमाह *वाक्यार्थे इति । तदेवाह * हि यतइति । नन्विद लक्षणापर न शक्तिपरमिति कथ प्रकृतसाधकमत आह *एतदिति । पर्यवसितं प्रकृतमाह *एवं चेति । तेषां तत्सामर्थ्यात्यागे चेत्यर्थः । वाक्यार्थत्व ससर्गस्य तथा ऽनुवादात् । पदानामिति बहुवचनोक्त्या समभिव्याहृतानामित्यर्थो नतु प्रत्येकमिति तदाह *वाक्यार्थे इत्यर्थः । उत्तरार्द्धेनैव युक्तेरुक्तत्वादाह *युक्त्यन्तरमपीति । स्वार्थप्रतिपादन निष्फल नान्तरीयकमित्यर्थः । *वर्णाः—समभिव्याहृताः पदरूपाः । *मितये-ज्ञानाय । प्राग्वदाह *एवं चेति ॥ ३० ॥

यत्तु पदैःपदार्थोपस्थितौ पदार्थानां परस्पराका-

ङ्क्षादिवशादन्वयबोधो नतु स वाक्यसंबद्धः । वाक्यार्थ इत्यस्य च वाक्यप्रयोजनमित्यर्थः इति । तन्न । अन्वयस्य शब्दासंबद्धत्वे तद्विषयकबोधस्य 'शाब्दयामि' इत्यनुव्यवसायानापत्तेः । धूमपदोपस्थितधूमेन जातवह्न्यनुमितेरपि शाब्दत्वापत्तेश्च

किञ्च शब्दानामर्थद्वारकसंबन्धस्यैवाङ्गीकारेण वाक्यानां च तदभावात् परस्परमिमे वाक्ये संबद्धे इत्यादिव्यवहारानापत्तिः । नच प्रयोजनभूतवाक्यार्थद्वारक एव तयोः संबन्ध इति वाच्यम् । ईदृशस्यापि संबद्धव्यवहारप्रयोजकत्वे मथुरापाटलिपुत्रयोरपि संबद्धत्वव्यवहारापत्तेः । स्वसयुक्तावयवकदेशसंबद्धत्वादित्यलम् ।

यत्तु बोधजनकत्वानुपपत्त्या न संबन्धकल्पना किंतु स्मृतिरूपपदार्थोपस्थित्यनुपपत्त्या । सा त्वेकसंबन्धिज्ञानादपरसंबन्धिस्मरणविधयेति तत्कल्पना । बालो ऽपि वाक्यार्थज्ञानकारणत्वेन पदार्थस्मृतिं कल्पयित्वा तदनुपपत्त्यैव शक्ति कल्पयतीति ।

तन्न । पदार्थस्मृत्यनुपपत्त्या कल्प्यमानशक्तेः पदेष्वेव कल्पनौचित्येन प्राथमिकशक्तिग्रहस्यैव पदविषयत्वसिद्धावन्वयव्यतिरेकाभ्यां पश्चात्तत्तत्पदशक्तिग्रह इति सर्वतन्त्रसिद्धान्तविलयापत्तेः ।

किञ्च एवमितरान्विते शक्तिरित्यादिपक्षाणां विलय एव ।

किञ्च पदार्थोपस्थितेर्न स्मृतित्वम् तत्ताया अननुभवात् । तत्ता च पूर्वानुभूततैव ।

अत एव "अनुभवविषयासंप्रमोषः स्मृतिः" इति पातञ्जलसूत्रम् । अनुभवस्य यौ विषयौ वृत्तितदारूढविषयरूपौ तयोरसंप्रमोषोऽनपहरणं यत्र सा वृत्तिः स्मृतिरित्यर्थः । तदुक्त पातञ्जलभाष्ये "वृत्तिग्राह्यविषयं ज्ञानं ग्राह्यविषयग्रहणवृत्त्युभयाकारप्रतिबिम्बवच्चैतन्यरूपं स्वबिम्बाश्रये तज्जातीयमेव संस्कारमारभते । तस्य च संस्कारस्य स्वाभिव्यञ्जककालायुद्बुद्धस्य स्वसमानाकारग्राह्यग्रहणोभयविषयकस्मृतिजनकत्वम्" इति । अनुभवसस्कारस्मृतीनां समानाकारकत्वेनैव कार्यकारणभावादेवमेव युक्तम् । नच तत्तांशे उद्बोधकासमवधानात्तदभानम्, दृश्यते हि समूहालम्बनात्मकनानापदार्थानुभवेऽपि कस्य चिदेव स्मरणमिति वाच्यम् । तत्तद्विषयांशोद्बोधकस्यैव नियमेन तद्विषयकज्ञानांशोद्बोधकत्वेन तदंशे प्रमोषासम्भवात् । किन्तु ग्राह्यांशे एव सः । तत्तद्देशकालवृत्तित्वरूपतत्तायास्तु न भानम् स्मृतावुचितम् कालादेस्तदनुभवेऽभानात् । नच दोषवशात्तत्प्रमोषः । नियमतस्तादृशदोषकल्पने गौरवात् । क्लृप्तस्य भ्रमजनकदोषस्य तन्मोषकत्वे तु विनष्टरजतस्य रागान्धस्य शुक्त्यादिदर्शने 'तद्रजतत्वविशिष्टमिदं रजतम्' इति तत्तांशोल्लेखिभ्रमानापत्तिः, दोषस्य विद्यमानत्वात् ॥ ३१ ॥

( कुं० टी० ) *नत्विति । वाक्यार्थे वाक्यसम्बद्धे इत्यर्थः । कथं तर्हि वाक्यार्थ इति व्यवहार अत आह *इत्यस्येति । ननु शब्दप्रयोगप्रयोज्यत्वात् शाब्दत्वमत आह

*धूमपदेति । *शब्दानामिति । यथा घटमानयेति पदयोः स्वार्थद्वारकः सम्बन्धः तथा द्वयोर्वाक्ययोरपि स्वार्थद्वारक एव सम्बन्धो वाच्य इत्यर्थः । *यत्तु बोधेति । पदात्पदार्थोपस्थितिः स्मरणरूपैव । तथाच स्मरणार्थमेव पदपदार्थयोः सम्बन्धः कल्प्यत इत्यर्थः। तथा च वाक्यासम्बद्धस्यापि वाक्यार्थस्य बोधे बाधकाभाव इति भावः । *तदनुपपत्त्यैव—स्मरणानुपपत्त्यैव । *शक्तिमिति । पदस्य पदार्थे इत्यादिः । *तन्नेति। पदार्थस्मरणार्थं कल्प्यमाना शक्तिः पदे प्रथमत एव स्यात् । तथाच वाक्यशक्तिग्रहानन्तरम् आवापोद्वापाभ्यां पदे शक्तिव्यवस्थापनासङ्गतिरित्यर्थः । *अन्वयव्यतिरेकाभ्याम्—आवापोद्वापाभ्याम् । *तत्तायाः इति। पूर्वानुभवजन्यसंस्कार एव स्मरणं प्रति हेतुः । नचेह तथाऽस्तीति भावः । *विलय एवेति अन्वयांशस्य पदार्थस्मरणोत्तरगम्यत्वेनान्वयांशमादाय पदशक्तेर्दुर्वचत्वादिति भावः। *पूर्वानुभूततैवेति। तथाचाऽऽकारभेदान्न पदार्थोपस्थितेः स्मृतित्वम् । 'मया पूर्वो ऽयमनुभूतः' इति बुद्ध्या विषयीकृत्यैव स्मरणादिति भावः । *अनुभूतविषयासम्प्रमोष इति । प्रमाणेनानुभूताना पदार्थानां संस्कारवशाद् बुद्ध्यावारोहोऽसंप्रमोषः । अन्ये तु मोषशब्दः स्तेयवाची । स्मृतौ हि अनुभूतस्ततो न्यूनोवा विषयो विषयो भवतीति।आधिकग्रहणं स्तेयमादृश्यान्मोषः । तथाच असंप्रमोषोऽधिकाग्रहः । अनुभूतमात्रग्रह इति यावत् ।सा स्मृतिरित्यर्थः। सर्वे प्रमाणादयोऽनधिगतमर्थमवगमयन्ति । स्मृतिस्तु पूर्वानुभवमर्यादां नातिक्रामतीति वृत्त्यन्तराद्विशेषः । स्वप्नेऽननुभूतानां पदार्थानां ज्ञानं तु विपर्यय एव न स्मृतिरिति भावः । *अनुभवस्येति । घटाद्याकारकश्चित्तपरिणामो वृत्तिः । साच घटादिश्चानुभवस्य

विषयावित्यर्थः । वृत्तिविषययोरुभयोरपि प्रकाशादनुभववि-षयत्वम् । *वृत्तिग्राह्येति । वृत्तिर्ग्राह्यश्च तद्विषयं ज्ञानं चैतन्य-रूपं तदेवानुभवरूपम् । तत्र ग्राह्यो यो विषयो या च ग्रहणहे-तुर्वृत्तिस्तदुभयप्रतिबिम्बयुक्तेत्यर्थः । *बिम्बाश्रये–अनुभवाश्रये। ग्राह्यग्राहकोभयाकारकानुभवजन्यत्वात्संस्कारो ऽपि तदुभया-कारस्तस्माच्च स्मृतिरपि तादृशीति भावः । *समानाकारत्वेनै-वेति । कथं तर्हि गोत्वविषयकशक्त्यनुभवानन्तरं गोव्य-क्तिस्मरणमिति चेद् । सत्यम् । गोत्वशक्तिज्ञानत्वेन शाब्दबोध-कारणतेत्येतावतैव जातेर्वाच्यत्वव्यवहारात् । *नच तत्तांशे इति । एवं च तदनुल्लेखे ऽपि स्मृतित्वमेवेति भावः। *तद्विषयां-शेति । घटाद्युद्बोधस्यैव घटादिज्ञानोद्बोधकत्वमित्यर्थः । *त-दंशे–तत्तांशे । *प्रमोषासम्भवादिति । तत्तांशप्रमोषे तद्विषयक-ज्ञानस्याप्युद्बोधासम्भवादित्यर्थः । *ग्राह्यांशे–अनुभूयमानांशे । *सः–प्रमोषः । तदंशस्य तु पूर्वमगृहीतत्वान्न प्रमोषसम्भवः । अत एवाह*तत्तद्देशेति । अनुभवेन तत्तद्देशत्वादिकं न विषयी क्रियते किन्तु पश्चात्तनस्मृत्या, तत्कथमननुभूतस्य तत्तांऽशस्य मोष इत्यर्थः । *विनष्टरजतस्येति–बहुव्रीहिः ॥ ३१ ॥

( क० टी० ) तदीयमतान्तरं खण्डयति *यत्त्विति । अर्थनि-ष्ठाऽऽकाङ्क्षामाह *पदार्थानामिति । *सः–अन्वय' । नन्वेव भट्टसं-मतवाक्यार्थव्यवहार' कथमत आह *वाक्यार्थ इति । अर्थशब्दः प्रयोजनवाची नाभिधेयवाचीति भाव. । परम्परया तत्त्वमादा-य तदुपपादने त्वतिप्रसङ्गमाह *धूमेति । एवञ्च तदुत्तरमपि तदनुव्यवसायापत्तिरिति भावः । नन्वाकाङ्क्षादिसत्त्वे एव तथा नान्यत्रेति चोक्तदोषद्वयमत आह *किञ्चेति । तदुक्तरीत्यैवाह *नचेति । *प्रयोजनेति । वाक्येत्यादिः । *बोधेति । तेषामा-काङ्क्षादिवशादित्यर्थः । *ईदृशस्य–परम्परासम्बन्धस्यापि । तत्रा-

प्याकाङ्क्षादेर्नियामकत्वकल्पने तु ततो वरं शक्तिकल्पनेत्याह *इ-त्यलमिति । मानान्तरं स्वपरसाधारणं खण्डयति *यत्त्विति। ननु वृद्धव्यवहारात्प्रथमशक्तिग्रहे नैतत्सम्भवोऽत आह *बालो-ऽपीति । त पश्यन्निति शेषः । *पदेष्वेवेति । तद्विशेषणतया तेषा-मेवोपस्थितेः । इष्टापत्तावाह *किञ्चैवमिति । तथाऽङ्गीकारे इत्य र्थः । तदाऽन्वयस्यानुपस्थित्या तत्र तदसम्भवात् । इदमपि त-स्यास्तत्त्वमभ्युपेत्य । वस्तुतस्तदेव नेत्याह । *किञ्चेति । माना-न्तरनिरासस्य वक्ष्यमाणत्वायाह *तत्ताचेति । धर्मधर्म्य-भेदात्तद्धीत्यर्थस्तदाह * यत्रेति । *सा–तदुभयविषया । एव-ञ्च 'स देवदत्तः' इत्येव स्मरणाकारः । *वृत्तीति । बहुव्रीहिः । *वि-षयाज्ञानमिति । चैतन्यरूपान्वितम् । *ग्राह्येति । ग्राह्यविषयश्च, ग्रहणवृत्तिश्च तत्साधनवृत्तिश्चैतदुभयाकारेत्यर्थः । *तस्य च–ता-दृशस्य च । एतेन स्मृतिर्ग्राह्यविषयैव वृत्तिविषयसंस्कारे माना-भावादिति प्रलपितमपास्तम् । *इतिस्तद्ग्रन्थसमाप्तौ । ननु समानप्रकारकानुभवस्य स्मृतिं प्रति कारणत्वं प्रकृते च तव मते 'अयं घटः' 'घटमहं जानामि' इत्यनुभवो विषयप्रकारको ज्ञानवि-शेष्यकः स्मृतिस्तु 'अयं स घटः' इत्याकारा विषयाविशेष्यिका ज्ञानप्रकारिकेति तादृशानुभवेन नेदृशस्मरणमिति चेन्न । लाघवेन समानाकारत्वेनैव कार्यकारणभावात् । नतु प्रकारतानिवेशो-ऽपि । गौरवात् । तदुक्तं भाष्ये "ग्रहणाकारपूर्वा बुद्धिर्ग्राह्याकारपू-र्वा स्मृतिः" इति । पूर्वशब्दो विशेष्यपरः । बुद्धिरनुभवः तदाह *अनुभवेति । आशयानभिज्ञः परः स्वमतसिद्धये आह *न-चेति । *तत्तांशे–वृत्त्यंशे । आशयमाह *तत्तदिति । अनुभव-बलाद्विषयांशप्रमोषाङ्गीकारेऽपि न वृत्त्यंशप्रमोष इति भावः । प-रमतं खण्डयति । *तत्तदिति अत्र घटः इत्यादितु तत्तद्वृ-त्तित्वानुभवो न तदनुभवः इत्याह *तदनुभवे इति । परः स्वमतं समर्थयन्नाह *न च दोषवशादिति ननु क्लृप्तेनैव नि-र्वाहे न गौरवमत आह *क्लृप्तस्येति ॥ ३१ ॥

किञ्च पदजपदार्थज्ञाने 'स्मरामि' इति नानुभवः । 'शाब्दयामि' इत्यनुभवश्च । पदजपदार्थज्ञाने उद्बुद्ध-

शक्तिग्रहजसंस्कारस्य हेतुत्वम्, फलबलात्। यथा तव वाक्यार्थबोधजनकत्वग्रहसंस्कारस्योद्बुद्धस्य वाक्यार्थबोधहेतुत्वम्।

किञ्च पदार्थानुभवस्य शक्तिग्रहात्मकतया तत्र च शक्तिविशेषणतयैव तद्भानेन तद्विशेषणकस्मृतिरेव स्यान्न तद्विशेष्यिका त्वदभिमता। किञ्च पदार्थोपस्थितिर्न शाब्दे कारणं किं तु पदज्ञानोद्बुद्धः पदार्थविषयकसंस्कार एव तत्र कारणम्। स शक्तिविषयोऽपीत्यन्यत्।

वाक्यशक्तिसत्त्वादेव 'समासग्रहणं वाक्ये प्रातिपदिकसंज्ञाऽतिव्याप्तिवारणार्थम्' इति भाष्यं सङ्गच्छते।

तत्र केषां चिद्विशिष्यैव तत्तद्वाक्यस्य तत्तद्वाक्यार्थे शक्तिग्रहः। अत एव समुदायतो विशिष्टबोधेऽपि पदविभागसामर्थ्याभावो दृश्यते तेषाम्।

एतेन विशिष्टशक्तिग्रहे पदशक्तिग्रहः कारणमित्यपास्तम्। कस्य चित्कारकत्वादि जानतः कारकपदधातुघटितपदयोर्विशिष्टयोः कारकविशिष्टक्रियाशक्तत्वमिति सामान्यत एव, ततः पदविशेषसमभिव्याहारज्ञाने सति तात्पर्यवशात्पदार्थविशेषविशिष्टक्रियाबोधः। सामान्यशक्तिग्रहो ऽपि तत्तत्पदार्थनिष्ठप्रकारतानिरूपितसंसर्गनिरूपिता या तत्तत्पदार्थनिष्ठा विशेष्यता तद्वत्यर्थे समुदायः शक्त इत्येवं विशेष्यविशेषणभावापन्ने ऽर्थे एवेति न विपरीतो विशेष्यविशेषणभावः।

यत्तु सर्वस्य सामान्यतः शक्तिग्रह एव बोधक इति ।

तन्न । कारकत्वधातुत्वाद्यजानतस्तथा शक्तिग्रहासम्भवात् ।

एतेन प्रातिपदिकार्थप्रकारकशाब्दबोधे तदर्थकपदोत्तरसार्थकप्रत्ययतदर्थबोधकपदानिपातान्यतमजन्योपस्थितिर्हेतुरित्याद्यपास्तम् । 'कर्मत्वं घटः' 'अम् घटः' इत्येतत्समभिहारव्युत्पन्नानां ततस्तथा बोधे व्यभिचाराच्च ।

नच स्वाव्यहितोत्तरोत्पत्तिकत्वस्वसामानाधिकरण्योभयसंबन्धेन तत्तद्व्युत्पत्तिविशिष्टबोधे तत्तद्व्युत्पत्तिः कारणमिति न दोष इति वाच्यम् । अनन्तकार्यकारणभावापत्तेः ।

यत्तु वाक्यशक्त्यङ्गीकारे पदार्थानामिव वाक्यार्थस्यापि स्मरणमेव स्यान्न त्वनुभवः । सम्बन्धिज्ञानतयैव पदज्ञानवत् तदुपयोगादिति । तन्न । पदार्थानामपि स्मरणाभावस्योपपादनात् । किञ्च वाक्यार्थप्रतीतेर्नानुभवत्वम् । स्वर्गनरकादिकं शृण्वतः तदनुभवामीत्यप्रतीतेः । तस्माच्छाब्दत्वं ज्ञानत्वव्याप्यजातिविशेष एव, नानुभवत्वव्याप्यमित्यलम् ॥ ३२ ॥

( कुं० टी० ) 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति न्यायात्पदेन पदार्थस्मरणमिति तार्किकमतं निराकरोति *किञ्चेति । ननु पदार्थोपस्थितेः स्मृत्यात्मकत्वाभावे ऽतिरिक्तहेतुकल्पनापत्तिरत आह

*पदजेति । *तज्ज्ञानेन—पदार्थभानेन । *स्मृतिरेव स्यादिति । घटपदस्य घटे शक्तिरित्यनुभवात् स्मृतिरपि तादृश्येव स्यादित्यर्थः । *न शाब्दकारणमिति । अन्यथाऽवान्तरवाक्यार्थबोधकाले पदार्थस्मरणस्य नष्टत्वान्महावाक्यार्थबोधो न स्यात् । मम तु संस्कारस्य सत्त्वाददोषः । अवान्तरस्मरणं तु न संस्कारनाशकम्, अत एव पुनः पुनः स्मरणात् दृढतरसंस्कार इति तत्सिद्धान्तः । *केषाञ्चित्—कारकत्वक्रियात्वाद्यजानताम् । *पदविभागेति । पदविभागमजानतामपि वाक्यार्थबोधदर्शनादित्यर्थः । *अपास्तमिति । हरेऽवेत्यादौ व्यभिचारात् । *कारकत्वादीति । कारकत्वादि जानतः कस्यचित्पुंस इत्यर्थः । *धातुघटितम्—तिङन्तादि । *विशिष्टयोः—समुदितयोः । *सामान्यत इति । कारकविशिष्टक्रियायां सामान्यतो वाक्यशक्तिग्रहः, विशेषबोधस्तु तात्पर्यवशादित्यर्थः । *तत्पदार्थेति । कारकादीत्यर्थः । *न विपरीतइति । सामान्यबोधोऽपि न क्रियाविशेषणकादिः । *अजानतइति । तस्मात्कारकत्वादि जानतः कस्यचिदेव सामान्यशक्तिग्रहो न सर्वस्येति भावः । *तदर्थकेति । प्रातिपदिकार्थस्य प्रत्ययार्थे प्रकारतेत्यर्थः । *तदर्थबोधकेति—प्रत्ययार्थबोधकसंबन्धादिपदेत्यर्थः । *अपास्तमिति । प्रातिपदिकार्थत्वाद्यजानतो बोधानापत्तेः । *स्वाव्यवहितेति । कालान्तरीयबोधे व्यभिचारवारणायाद्यदलम् । पुरुषान्तरीयबोधे व्यभिचारवारणाय द्वितीयदलम् । नत्वनुभव इति यदुक्तं तन्निराकरोति *नानुभवत्वमिति । अनुभवत्वं प्रत्यक्षवृत्त्येव न तु प्रत्यक्षादिचतुष्टयसाधारणमित्यर्थः ॥ ३२ ॥

( क० टी० ) तत्र दोषान्तरमाह *किञ्चेति । ननु सिद्धान्ते

शक्तिग्रहस्य ततः पूर्वमसत्त्वात्कथं तदुपस्थितिरत आह *पदजेति । तत्र दोषान्तरमाह *किञ्चेति । *तत्रच-शक्तिग्रहेच । *तदिति । अर्थेत्यर्थः । इदमपि पदार्थोपस्थितेः शाब्दबोधे हेतुत्वमभ्युपेत्य । वस्तुतस्तदेव नेत्याह । *किंचेति । अगृहीतशक्तिकस्य बोधवारणायाह *सशक्तीति । तस्य शक्तिग्रहात्मकत्वादिति भावः । प्रतिपादितमिदमादावेव मूले । वाक्यशक्तौ मानान्तरमप्याह *वाक्येति । *तत्र—वाक्यविषये । *केषां चित्—विशिष्यज्ञानवता तदज्ञानवताम् । *अत एव—समुदितस्य समुदितरूपेण समुदितेऽर्थे शक्तिग्रहादेव।*एतेन-समुदायव्युत्पत्त्या समुदायार्थबोधेऽपि व्याकरणव्युत्पत्तिं विना पदविभागसामर्थ्याभावस्यानुभवसिद्धत्वेन । *कारणमिति । प्रत्येकपदशक्तिग्रहाभावे वाक्यार्थबोधस्याजायमानत्वात्तत्सत्त्वेऽपूर्ववाक्यश्रवणे ऽपि तस्य जायमानत्वाच्चेति तद्भावः । *अपास्तमिति । किञ्च वाक्यशक्त्यग्रहे तदभावादेवाद्ये तदभावोपपत्तेः । तत्सत्त्वे तु जायत एवेत्यपि बोध्यम् । विशेषाविषयसामान्यबुद्ध्यभावादाह *तत इति । तदादिवदुक्तसामान्यशक्तिग्रहानन्तरमित्यर्थः । *क्रियाबोधः-तद्विशेषबोधः । एवचानियत एव स इति भाव । ननु स्वतन्त्रशक्तिज्ञानाद्विशृङ्खलपदार्थोपस्थितौ सत्यां विशेषणविशेष्यभावव्यत्यासेनाप्यन्वयबोध स्यादत आह *सामान्येति । उक्तप्रकारेण । एवेनोक्तविशिष्यशक्तिग्रहव्यवच्छेदः । आदिना प्रातिपादिकत्वादि । *एतेन—प्रातिपादिकत्वाद्यजानतस्तथा शक्तिग्रहासम्भवेन । आदिना विभक्त्यर्थविशेष्यकशाब्दबोधे विभक्तिप्रकृतिजन्योपस्थितिर्हेतुरित्यादिसामान्यकार्यकारणभावपरिग्रहः । घटः कार्यत्वमित्यतो विपरीतव्युत्पन्नस्य तथा बोधात् व्यभिचारवारणाय तदर्थबोधकपदेत्युक्तम् । नचैवमपि पटादिलाक्षणिकघटपदघटितघटमानयेतिवाक्यात्तथाबोधवारणाय घटबोधकत्वं घटबोधफलोपहितत्वं निवेश्यम् एवं चान्योन्याश्रयात्तादृशकार्यकारणभावग्रहासम्भव इति वाच्यम् । तत्र घटस्य वृत्तिजन्योपस्थित्यभावादेव तथा बोधवारणेन स्वरूपयोग्यत्वानिवेशेऽपि क्षत्यभावादिति तद्भाव । अतएव व्यभिचारान्तररूपदोषान्तरमाह *कर्मत्वमिति । प्रकृतदोषाभावायाह *स्वाव्यवेति । अ-

न्यस्य बोधवारणाय *स्वसामेति । एकसम्बन्धिज्ञानमिति न्याये-नाह *सम्बन्धीति । इदमपि तस्य तत्त्वमभ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह *किञ्चेति । किञ्च वाक्यज्ञानस्य तादृशविजातीयज्ञानत्वमेव कार्यतावच्छेदकमतो न स्मृतिस्तत । अन्यथा तवापि वाक्येनाकाङ्क्षारूपसम्बन्धस्य सत्त्वात् स्मृतिजननाशङ्का दुरुद्धरैव स्यात् तदाह *इत्यलमिति ॥ ३२ ॥

तत्र सम्बन्धस्य सम्बान्धिद्वयनिरूपितत्वेनैव बोधाद्वाक्यतो न पृथक् तद्बोधः ।

तदुक्तं हरिणा—

नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वात् षष्ठयेवास्य तु वाचिका॥इति।

षष्ठयेव सम्बन्धस्य वाचिका न तु सम्बन्धशब्दादीति तदर्थः । अभिधानम्, पदम् । सम्बन्धिनोः संघटनस्वभावत्वेन नित्यपरतन्त्रत्वात् । षष्ठीपदं विभक्तीनां वाक्यस्य चोपलक्षणम् । पदानां तु पृथक् स्वार्थबोधकत्वमपि ।

यत्तु मीमांसकैकदेशिनः—वाक्यार्थे वाक्यस्य लक्षणेति

तन्न । वाक्यबोध्यान्वयस्य सम्बन्धरूपत्वेन तत्र वाक्यबोध्यस्य सम्बन्धस्य पदार्थस्य वा सम्बन्धग्रहाननुभवेन वाक्यबोध्यनिरूपितसम्बन्धमूलिकायास्तद्रूपाया वा तस्या असम्भवात् । अनुपपत्तिप्रतिसन्धानं विनाऽपि तद्बोधेन तदप्रसरात् । नच तात्पर्यविषयीभूतवाक्यार्थानुपपत्तिस्तद्बीजम् । नियमतः पूर्वं तात्पर्यज्ञानस्यापि कल्पनाऽपेक्षया शक्तिकल्पनस्यैवौचित्यात ।

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थे ऽपि पदानि नः ।

इतिपूर्वार्धोक्तेऽर्थे हेतुत्वेनोपन्यस्तायाम्—

वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते । इति भट्टकारिकायां लक्ष्यमाण इत्यस्य प्रतीयमान इत्यर्थः । दृश्यत इत्यस्य प्रतीतिविषयत्वेनानुभूयत इत्यर्थः ।

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितिः ।

इतिपाठे लक्ष्य इत्यस्य प्रतीतिविषय इत्यर्थकस्य अस्तीति शेषः । सर्वत्रैव हि वाक्यार्थः प्रतीयमानो ऽस्त्येवेति स्थितिः वक्ष्यमाणरीत्या वाक्यैकदेशन्यायेनेत्यर्थः । अत एव केवलपदप्रयोगे ऽपीत्यर्थकं सर्वत्रैवेति सार्थकमित्याहुः ॥ ३२ ॥

( कुं० टी० ) ननु पदार्थसंसर्गस्यैव वाक्यार्थतया पदार्थानां च तत्तत्पदलभ्यत्वेन तत्र वाक्यशक्तौ केवलसम्बन्धस्य बोधापत्तिः, अत आह *तत्रेति । *वाक्यतोनेति । सम्बन्धस्य संबन्धिपरतन्त्रतया केवलसंबन्धबोधो नेत्यर्थः । *नाभिधानमिति ।

अस्यार्थः—स्वेन असाधारणेन धर्मेण उपलक्षितस्य संबन्धस्याभिधानं वाचकं षष्ठीव्यतिरिक्तं नास्ति । द्रव्याधीना अपि गुणाः कदाचित्प्राधान्येन शुक्लादिशब्देनोच्यन्ते नैव संबन्धशब्देन इति सूचनायात्यन्तग्रहणम् । परतन्त्रो हि संबन्धः । एवंच संबन्धादिपदं न संबन्धस्य वाचकमिति । अभिधानमित्यस्याभिधायकमित्यर्थ इत्याह *पदमिति । *संबन्धिनोरिति । संबन्धिद्वयौन्मुख्यस्वभावत्वेन संबन्धस्य पदार्थान्तरसापेक्षत्वमेवेत्यर्थः । *विभक्तीनाम्—षष्ठ्यर्थे विहितविभक्ती-

नाम्। *वाक्यस्यचेति। तेनापि संबन्धप्रत्यायनात्। ननु पदार्थाभावे कथं तत्संसर्गरूपो वाक्यार्थ इत्यत आह *पदानां त्विति। संसर्ग एव तु वाक्यशक्य इति भावः। *लक्षणेति। पूर्वोत्तरपदयोः स्वार्थमात्रे शक्तिः तद्विशिष्टे ऽधिके ऽर्थे तु लक्षणेत्यर्थः। *तत्रेति।

अयं भावः—वाक्यबोध्यो यदि अन्वयस्तदा स एव सम्बन्ध इति पुनः संबन्धो नानुभवासिद्धः। अथ यदि पदार्था एव वाक्यबोध्यास्तदा तेषामपि सम्बन्धग्रहो नानुभवसिद्धः इति। लक्षणायां मतभेदस्य पूर्वमुपपादितत्वादाह *तद्रूपायावेति। *नविमुञ्चन्तीति। द्वारमित्याद्येकपदे ऽपि बोधदर्शनात्पदमपि वाक्यार्थबोधकमित्यर्थः। *प्रतीयमान इति। तेन तन्मते ऽपि लक्षणाऽभावो दर्शितः। *वाक्यैकदेशन्यायेनेति। यथा गृहमित्येव गृहं प्रविशेति समुदायार्थवाचकम्। *केवलपदेति। एकपदेत्यर्थः॥ ३३॥

(क०टी०) प्राग्वद्विशेषान्तरमाह *तत्रेति। वाक्याविषये। *तद्बोधः-ससर्गबोधः। *स्वधर्मेण-सम्बन्धत्वेन। *सम्बन्धस्येति। निषेधे विधौच मध्यमणिन्यायेनास्यान्वय.। यथाश्रुतस्य भाष्यविरुद्धत्वादाह *नत्विति। *आदिना ससर्गशब्दादि। अत एवाह *पदमिति। उक्तहेत्वर्थमाह *सम्बन्धिनोरिति। सम्बन्धस्येति शेषः। भट्टसमतेः प्रागुक्तत्वादाह *मीमासकैकेति। अयं भावस्तेषाम्-एवं च शक्तिकल्पना न। नचापूर्वत्वं प्रागविज्ञातहरिद्रानामकनदीविशेषेण पुसा 'हरिद्रायां नद्या घोषः' इति श्रुते वाक्ये नदीपदसमभिव्याहारेण तदानीमेव हरिद्राशब्दस्य नदीविशेषे शक्तिग्रहपूर्वकं नदीलिङ्गात्तत्सम्बन्धित्वेनावगततीरप्रत्ययवत् पदैः पदार्थानामुपस्थितौ आकाङ्क्षाज्ञानादिसाचिव्यात्तत एवोपस्थिते वाक्यार्थे तद्ग्रहसम्भवात्। तथोपस्थितस्यापि वृत्त्याऽनुपस्थितत्वान्न स बोधः शाब्द इति शाब्दत्वप्रकारकबोधानुभवान्मध्ये लक्षणाग्रहः।

सच स्वबोध्यसम्बन्धितया तदुपस्थितिः । स्वबोध्यसम्बन्धिनः स्वबोध्यस्योपस्थितेरेव प्राचीननये लक्षणात्वात् । यद्वा स्वसम्बन्धिपदार्थबोधक वाक्यमिति तद्रह', तीरसम्बन्धिप्रवाहबोधक गङ्गापदमितिवत् । लक्षकत्व च स्वसम्बन्ध्यर्थबोधकत्वमेव । बोध्यसम्बन्ध एव च लक्षणा । पदजन्यपदार्थोपस्थित्याकाङ्क्षाद्यसहकृतप्रमाणबोध्यबोधकत्व चाधिगतार्थगन्तृत्वमिति न वेदस्यानधिगतार्थगन्तृतारूपप्रामाण्यहानिरिति । *तत्र—अन्वये । *तस्याः—लक्षणाया' । ननु भट्टकारिकायामपि लक्ष्यमाण इत्युक्त्या तेषामपि लक्षणैव समतेति कथमेकदेशिन इत्युक्तमतः प्राक् प्रतिज्ञातमाह *नविमुञ्चन्तीति । नन्वेवं दृश्यत इति व्यर्थमत आह *दृश्यत इति । पाठान्तरैकवाक्यतामाह *सर्वत्रैवहीति । *इत्यर्थकस्येति बहुव्रीहेः पूर्वविशेषणम् । *वक्ष्येति । अनुपदमित्यादि । अस्यैव व्याख्या *वाक्यैकेति । अयमेव भट्टसमतोऽर्थो नैकदेश्यभिमत इत्याह *अतएवेति । आहुरित्यरुचिबीज तु समासस्रग्राहकतया तत्सार्थक्यमिति न तत एवमर्थ. । किन्तु भाष्याद्येकवाक्यतयैवेति ॥ ३३ ॥

यत्तु पदानामेवान्विते शक्तिः पदैरेव तदर्थप्रतीत्युपपत्तौ वाक्येऽपि शक्तिकल्पने मानाभावात् । तदुक्तम्—'एवं हि सम्बन्धग्रहणम्—अयमर्थोऽनेन शब्देनाकाङ्क्षितसंनिहितयोग्येतरान्वितः सन्नभिधीयते' इति । पदानां सामान्यत इतरान्विते शक्तावपि विशेषाविषयसामान्यबुद्ध्यभावात्समभिव्याहारविशेषकारणत्वरूपाकाङ्क्षाज्ञानबलात्तत्तत्पदार्थविशेषनिरूपितान्वयविशेषबोधसिद्धिः । अत एव पदप्रयोगे ऽन्वयविशेषजिज्ञासोपपत्तिः । तस्या अन्वयसामान्यज्ञानपूर्वकत्वनियमात् । विशेषतः पदार्थान्तरघटितस्य तदन्वयविशेषरूपवा-

क्यार्थस्य प्रागनुपस्थितावपि अन्वितत्वादिसामान्यधर्मप्रकारेणोपस्थिते शक्तिग्रहः सुलभः। इतरान्विते शक्तिरिति तु न युक्तम्। इतरस्य पदान्तरलभ्यत्वात्। पदान्तरसमभिव्याहारे एव तच्छक्त्युद्बोध इति घट इत्येतन्मात्रान्नान्वयधीः। ततो घटमात्रबोधस्तु शक्तिभ्रमात्। विशिष्टविषयायाः शक्तेस्तन्मात्रविषयत्वमपीति भ्रमः।

यद्वा पदैकदेशन्यायेन विशिष्टे एकदेशे च पदानां शक्तिग्रह इत्यदोषः।

एतेन कार्यान्विते शक्तिः पदानामित्यपास्तम्। कार्यस्यापि लिङादिलभ्यत्वात्। लिङादिसमभिव्याहार एव तद्बोधानुभवात्। आनयनाद्यर्थकपदसमभिव्याहार एवानयनादिबोधवदिति।

तन्न। अन्वये शक्त्यभ्युपगमे ऽपि विशेषबोधाय समभिव्याहारस्य तद्बोधकारणत्वस्वीकारे, तथा कारणत्वाग्रहवतो बोधवारणाय तद्ग्रहस्यापि कारणत्वस्वीकारे, समभिव्याहारे तदसम्बद्धे तद्बोधजनकत्वानुपपत्त्या समभिव्याहारे ऽपि तत्सम्बन्धाङ्गीकारे विपरीतगौरवापत्तेः। अन्यलभ्यत्वरूपतर्केण कार्यत्वांशत्यागवदेतत्त्यागस्याप्युचितत्वाच्च। न चोपजीव्यविरोधः। उपजीव्यत्वे मानाभावात्। दैवाद्धि प्रथमं तद् वृत्तं नतु पदशक्तिग्रहे तस्य हेतुत्वम्, मातापित्रादिभिः 'चन्द्रः' 'गौः' इत्यादिशब्देषु चन्द्राद्यभिमुखाङ्गुलीदर्शनपूर्वकमुच्चार्यमाणेषु बालस्याद्यशक्तिग्रहे व्यभिचारात्।

यत्र त्वनन्यथासिद्धतयोपजीव्यत्वं सिद्धम्,

यथा—यागस्य स्वर्गजनकतानिर्वाहाय कल्पिते ऽपूर्वे, 'तत्र तदेव कारणमस्तु न यागः' इति शङ्कायां तद् दूषणम् । नचैवं प्रकृते । न च प्राथमिकत्वेन बलवत्त्वात्तेन पश्चात्तनस्य बाधः । यथा दर्पणे चैत्रमुखं नास्तीति पूर्वप्रत्यक्षेण चैत्रमुखसंनिधानानन्तरभाविनो दर्पणे चैत्रमुखप्रत्यक्षस्य भ्रमत्वकल्पनमिति वाच्यम् । 'इदं रजतम्' इतिग्रहस्य पाश्चात्त्येन 'नेदं रजतम्' इति ग्रहेण बाधात् । नच सर्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वम् । सर्वेषां शरीरात्मप्रत्यये चन्द्रताराल्पत्वप्रत्यये च व्यभिचारात् । उक्ते मात्रादिनिर्दिष्टे चन्द्रादौ बालीयाद्यशक्तिग्रहे व्यभिचाराच्च । तस्माल्लोके प्रवृत्तिसंवादादिना, वेदे तदर्थनिर्णायकन्यायेन यद्बलवत् तद्बाधकमितरद्बाध्यमिति व्यवस्था । तत्र परेण पूर्वस्य भ्रमत्वप्रत्यायनमेव बाधः । पूर्वेण तु परस्य सोपाधिकज्ञानस्थले भ्रमत्वप्रत्यायनम् । क्वचित्तूत्पत्तिप्रतिबन्धः । यथा—श्रौतविनियोगेन लैङ्गिकस्य तस्य बाधः । जिज्ञासाऽपि फलविशेषदर्शने रसविशेषजिज्ञासावदुपपन्ना ।

ननु तद्वदेव तर्ह्यत्रापि जिज्ञासानियमो न स्यादिति चेद्, इष्टापत्तेः । नच 'अनयोः संसर्गविशेषज्ञानं मे भवतु' इतीच्छायां तादृशज्ञानधर्मिकेष्टसाधनताज्ञानस्य हेतुत्वेन तद्घटकतया विशेषज्ञानस्यापि सिद्ध्या जिज्ञासोच्छेद इति वाच्यम् । विशेषधर्मत्वेन ज्ञानेऽपि तत्तद्रूपेण जिज्ञासोपपत्तेः । किञ्च सिद्धिर्न स्वरूपतः प्रतिबन्धिका किन्तु सिद्धत्वप्रकारकज्ञानमेव

तथा । अत एव वस्त्वसिद्धावपि तत्सिद्धत्वज्ञानेने-च्छानिवृत्तिः । वस्तुतः पदज्ञाने तादृशजिज्ञासैवा-सिद्धा किन्त्वन्वयिजिज्ञासैवेत्यलम् ॥ ३४ ॥

(कुं.टी.) पदानां जातौ शक्तिः व्यक्तेस्त्वाक्षेपेण बोधः, अन्वय-स्य तु आक्षेपेण लाभो न सम्भवति अशक्यबोधने चातिप्रसङ्गात् अन्वयेऽपि शक्तिरतो जातावन्विते वा शक्तिरिति भट्टमतं दूषयति *यत्तुपदानामेवेति ।*तदर्थप्रतीतीति । वाक्यार्थरूपान्वयप्रतीती-त्यर्थः । *मानाभावादिति । अन्वयविषयकशाब्दबोधे तत्त-दानुपूर्वीज्ञानत्वेन हेतुतया तत एव तल्लाभात् । अन्वयविशे-षभानार्थं तत्तदानुपूर्वीज्ञानहेतुतायास्तवाप्यावश्यकत्वादिति भा-वः । व्यवहारेण शक्तिग्रहो जायमानो ऽन्वित एव भवतीति तात्पर्यम् । *एवंहीति । सम्बन्धग्रहः शक्तिग्रह एतादृशो हीत्य-र्थः । आकाङ्क्षितः संनिहितो योग्यश्च य इतरस्तदन्वितो ऽयम-र्थोऽनेन शब्देनाभिधीयत इत्यन्वयः । *विशेषाविषयेति । नि-र्विशेषस्य सामान्यस्याभावादिति भावः । *अत एव–विशेष-पूर्वकत्वादेव । *विशिष्टविषयायाः–आन्वितपदार्थविषयायाः । *तन्मात्रेति । घटादिमात्रेत्यर्थः । *पदैकदेशेति । भीमो भीमसेन इतिवत् ।

घटमानयेत्यादि वाक्यात्प्राथमिकशक्तिग्रहात् कार्यान्विते पदानां शक्तिः कृतिसाध्यानयनान्विते इत्यर्थः । नच कार्यतावाचकलिङादीनां कथं कार्यान्विते शक्तिरिति वाच्य-म् । सर्वपदानामेव कार्यान्वयशालिगोचरज्ञानविषयत्वात् । एवं च लिङ्लोट्तव्यविषय एव शाब्दबोधः प्रवृत्त्यादिजनक-त्वात् । वैदिकानामर्थवादवाक्याना तु मूकत्वमेवेति प्राभाकर-

मतं निराकरोति *एतेनेति । एतन्मते कार्यान्विते शक्तिः भट्टमते इतरपदार्थान्विते इति भेदः।लिङ्गादिलभ्यत्वमेवोपपादयति *समभिव्याहारएवेति । अनूदितं भट्टमतं निराकरोति *तन्नेति । *तद्बोधेति । विशेषबोधं प्रति समभिव्याहारस्य कारणत्वे कल्प्ये कारणत्वग्रहस्यापि कारणत्वं वाच्यम्, समभिव्याहारस्यापि शक्तिः कल्प्येति गौरवमिति भावः । *तस्यागस्य—अन्वयांशत्यागस्य । *मानाभावात् इति । यदि प्रथममन्वय एव शक्तिग्रहः स्यात्तदा तस्योपजीव्यत्वं स्यादिति भावः ।*वृत्तम्—जातम् । *सः—उपजीव्यविरोधः । *दूषणमिति । आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गजनकत्वसिद्धये ऽदृष्टं कल्प्यम्।तत्रच यद्यदृष्टस्यैव कारणता स्यात्तदोपजीव्यविरोधः स्यात् । अतएव व्यापारिणा व्यापारस्येव व्यापारेण व्यापारिणो ऽपि नान्यथासिद्धिरिति प्रवादः । अत एव व्यापारसम्बन्धावच्छिन्नं कारणत्वं करणत्वमिति वदन्ति । व्यापारवत्कारणं करणमिति तु न युक्तम्, नष्टस्यापि करणस्य व्यापारद्वारा कार्यजनकत्वात् । *बाधादिति । नन्वेवं 'घटोऽयम्' इति ज्ञानानन्तरं मुद्गरपातादिना चूर्णिते घटे 'नायं घटः' इति ज्ञानात्पूर्वज्ञानस्य भ्रमत्वापत्तिरिति चेन्न । उपस्थितिसामान्याभावप्रतियोगिन एव बाध्यत्वात् । इहतु सत्कार्यवादे सूक्ष्मरूपतया घटस्यावस्थानेनादोषात् । *चन्द्रतारेति । ननु चन्द्रतारादौ शास्त्रजन्यमहापरिमाणज्ञानेन स्वल्पपरिमाणज्ञाने ऽप्रामाण्यं कल्प्यते । प्रकृते तु प्राथमिकत्वात्कार्यान्विते एव शक्तिरस्त्वित्यस्वरसादाह *उक्तेमात्रादीति ।*प्रवृत्तिसंवादादिनेति । यथा इदं प्रमा-यथार्थप्रवृत्तिजनकत्वादिति । *सोपाधिकेति । दर्पणमुखादौ पूर्वेण परस्य भ्रमत्वम् । *श्रौतेति । "ऐन्द्र्या गार्हपत्यमुपतिष्ठते"

इत्यत्र इन्द्रोपस्थानस्य बाधः । सामान्यस्य विशेषपूर्वकत्वादिति प्रागुक्तं निराकरोति *फलविशेषेति । अपूर्वफलदर्शने 'कोऽस्य रसः' इतिवत् । *नचानयोरिति । संसर्गविशेषज्ञानेच्छां प्रति संसर्गविशेषज्ञाननिष्ठेष्टसाधनत्वज्ञानं हेतुः । अत एव संसर्गविशेषस्य ज्ञातत्वे ऽपि जिज्ञासाऽनुपपत्तिरित्यर्थः । *तत्तद्रूपेणेति । विशेषस्य विशिष्यस्वरूपेण, नतु विशेषत्वेनेत्यर्थः । *सिद्धिर्नेति । पर्वते वह्निसत्त्वे ऽपि तदप्रत्यक्षे ऽनुमितिर्भवत्येवेति भावः । *तथा—प्रतिबन्धकम् ॥ ३४ ॥

(क० टी० ) तृतीयमेव मतान्तर खण्डयति *यस्त्वित्यादि । निराकाङ्क्षितादिवारणाय विशेषणत्रयमितरस्य । नन्वेव कथ विशेषबोधोऽसमानप्रकारकत्वादत आह *पदानामिति । *अभावादिति । तत्तत्पदसामान्यशक्तिभिरेवेति शेष. । *सिद्धिरिति ।

एतेन पदानामेवान्विताभिधायकत्वे घटादिपदस्य तथाशक्तिग्रहवतो घटमानयेत्यानुपूर्वीज्ञानवत. प्रागुककार्यकारणभावाग्रहवतोऽपि घटपदात् घटकर्मकमानयनमितिबोधापत्तिः । किञ्च विशेष्यविशेषणभावे विनिगमनाविरहात्सामान्यत शक्त्या इतरान्वितो घट इतरान्वित कर्मत्व तथाऽऽनयन तथा कृतिरित्येव बोधचतुष्टयापत्ति, न घटीयकर्मत्वमित्यादि । अपि च घटः कर्मत्वमानयन कृतिरित्यतः अन्वितकर्मत्वादौ शक्तिग्रहवतस्तथा बोधापत्तिश्चेति परास्तम् ।

अस्यावश्यकतामाह *अतएवेति । शब्दस्यान्विताभिधायकत्वादेवेत्यर्थ. । *पदेति । एकत्यादिः । अपिना तत्समुदायसमुच्चयः । *अन्वयति । नियमेनेत्यादि । ननु कथ ततस्तदुपपत्तिरत आह *तस्याइति । तथाच तस्या नियमेन दर्शनात्ताद्विनाऽसम्भवात्तस्य शब्दादन्यतो ऽसम्भवाच्छब्दस्यैव तत्त्वमावश्यकमिति भावः । नन्वपूर्वत्वात्कथ तत्त्वमत आह *विशेषइति । नन्वेव केवलपदादपि बोधापत्तिरत आह *पदान्तरेति । नन्वेवं ततो घटमात्रबोधो ऽपि न स्यादत आह *तत इति । भ्रमत्वमेवाह

*विशिष्टेति । अनुपद वक्ष्यमाणरीत्या भ्रमो नेत्याह *यद्वेति। शब्दवद् अर्थेऽपि युक्तेस्तुल्यत्वमिति भाव.। गुरुमत खण्डयति *एतेनेति। अस्यार्थमाह *कार्यन्वापीति । तदेव विध्यर्थ इति तन्मतम्। ननु तदसमभिव्याहारे ऽपि तद्बोधार्थ तत्र सा ऽत आह *लिङादीति। तदन्ते इत्यर्थ । *अन्वयेइति । त्वन्मते इत्यादि'। *कारणत्वेति । कार्यकारणभावेत्यर्थ. । आदिनेतरन्वम्। *एतदिति । अन्वयेत्यर्थ । *नचोपेते । अन्वितत्वादिसामान्यधर्मप्रकारेणोपस्थिते एव शक्तिग्रहादिति भाव । विशेषतस्तु तत्रैव। सामान्यतो ऽपि असार्वत्रिकत्वादन्यथासिद्धमित्याशयेनाह *उपेति । तदुपपादयति *दैवाद्धीति। अपूर्वत्वपरिहारायेति भाव.। उक्तदार्ढ्याय तद्विषयमाह *यत्रात्विति। अपूर्वे इत्यन्त पूर्वान्वयि। *स'-उपजीव्यविरोध । *नच-नहि। *पश्चात्तनस्य-वाक्यशक्तिग्रहस्य। वाधपदार्थमेवाह *भ्रमत्वेति । तद्व्यावृत्तमसाधारण तत्प्रयोजकरूपमाह *नचसर्वैरिति । उक्त आशय.। तत्र परस्यैव प्राबल्यमित्याह *सर्वेषामिति। प्रागुक्तो ऽपि दोष इत्याह *उक्ते इति। नन्वेव कथ वाधव्यवस्था, अत आह *तस्मादिति । आदिना निवृत्तिसवादादि । *न्यायेन-श्रुतिलिङ्गादिना। सामान्योक्त विशिष्याह *नत्रेति । तयोर्मध्ये इत्यर्थ । एवेनोत्पत्तिप्रतिबन्धनिरासः, तस्य जातत्वादिति भाव । इद सार्वत्रिकम्। अन्यत्र तु नैवमित्याह *पूर्वेणत्विति । सोपाधिकेत्यनेनोक्तलौकिकसग्रहः प्रकृतेष्टसिद्धिश्च सूचिता । अन्यथा शास्त्रद्वयप्रामाण्याद्विकल्पापत्तेराह *उत्पत्तिप्रतिबन्ध इति । *तस्य-विनियोगस्य । "ऐन्द्या गार्हपत्यमुपतिष्ठते" इत्यादाविति भाव । नन्वेव तदुक्तजिज्ञासाऽनुपपत्तिरत आह *जिज्ञासापीति । पदार्थवाक्यार्थयोर्नियमस्य पूर्व-ग्रहादिति भाव. । इच्छामात्रे तस्य कारणत्वाद् अत्र विशेषमाह *अनयोरिति। *सिद्ध्येति । इच्छा प्रति सिद्धे' प्रतिबन्धकत्वादिति भाव । तत्र तथैव निवेशादाह *विशेषधर्मत्वेनेति। ननु ससर्गस्य न केनापि रूपेण भानमिति प्रागुक्तत्वेन तथाज्ञानेऽपि सिद्धिसत्त्वाज्जिज्ञासोच्छेद एव अत आह *किचेति । एव चात्र तत्सत्त्वे ऽपि तदभावान्न दोष.। *अत एव-तथा ज्ञानस्यैव प्रतिबन्धकत्वादेव। *वास्त्वति। 'चैत्रस्य ज्ञान भवतु' इतीच्छायामजाते

न्न तस्य ज्ञाने 'तस्य ज्ञानं जातम्' इति सिद्धत्वज्ञानादिच्छानिवृत्ति-रित्यर्थः । जिज्ञासापीत्यादिना यदुक्तं तदप्यभ्युपेत्यैव । वस्तुतः सैव नेत्याह *वस्तुत इति । यदि त्वन्वयसामान्ये ज्ञाते तेन विशेषान्वयस्यानुमानमित्युच्यते तर्ह्यन्वयसामान्यस्यापि तथैवोपस्थितिसम्भवात्प्रस्थितमन्वितशक्त्या । न चैवमनुमानेनैव संसर्गोपस्थितिसम्भवेन शब्दप्रामाण्योच्छेदः । 'नानुमितं, न साक्षात्कृतं किन्तु शब्दादेवावगतम्' इत्यनुभवेन तस्यातिरिक्तप्रमाणत्वात् । अधिकमन्यत्र द्रष्टव्यम् । तदाह* इत्यलमिति ॥ ३४ ॥

क्वचित्तु पदैरितरान्वितस्वार्थबोधनमस्त्येव । यथा 'प्रविश' 'पिण्डीम्' इत्यादौ । तथाहि–यथा भीमादयः पदैकदेशाः पदस्यार्थे प्रयुज्यन्ते । विशिष्टशक्तिग्रहकाले ऽनुनिष्पाद्यवयवानामपि तत्र शक्तिग्रहात् । भीमसेनपदं, पृथक् प्रयुज्यमानं तदवयवपदं च भीमसेने शक्तमिति शक्तिग्रहः । नच सेनपदादपि तद्बोधापत्तिः । तत्तत्पदस्य तत्रार्थे शिष्टप्रयोगाभावेन शक्तिग्रहे तद्विषयकत्वांशे ऽप्रामाण्यकल्पनेन ततो बोधानुदयात् । अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव बोधजनकत्वात् । शक्तिभ्रमाद्बोधो ऽपि भ्रमत्वेनाज्ञातादेव । एवं वाक्यस्यापि तत्तत्पदार्थालिङ्गिते विशेष्यविशेषणभावे शक्तिग्रहकाले तदवयवानां 'प्रविश' 'पिण्डीम्' इत्यादीनामपि तत्तद्वाक्यार्थे शक्तिग्रहेण प्रविशेत्यादिपदादेव तत्तद्वाक्यार्थबोधः । अनेककारकाणां क्रियाणां च सम्भवे ऽपि योग्यतावशात्तात्पर्यवशाच्च तत्तदर्थबोधः, तच्च तत्तत्पदाध्याहारवत् ।

तदुक्तं समर्थसूत्रे भाष्ये निष्कौशाम्ब्यादौ क्रान्तादिपदाभावेनासामर्थ्यात्समासाभावमाशङ्क्य

"तदर्थगतेःसिद्धम् । सोऽर्थस्तदर्थः तद्गतेः। यो ऽर्थः कौशाम्ब्या समर्थः स निसोच्यते" इति । उक्तरीत्या विशिष्टो ऽर्थो निसोच्यत इति तदाशयः ।

अतएव "लुपि युक्तवद्—" इतिसूत्रे "एकवचनाद्यवयववचनशब्दः पारिभाषिकः" इत्युक्तम् । तदुक्तम्—

वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ।
आख्यातशब्दे नियत साधनं यत्र गम्यते ॥
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते । इति ।

ग्रामं प्रविश, पिण्डीम्भक्षयेत्यादि तु शब्दान्तराण्येव ।तान्यपि लौकिके प्रयोगे लाघवानादरात्प्रयुज्यन्ते एव ।

यत्तु–पदावयवेन पदस्मरणम्, एवं वाक्यैकदेशेनापि वाक्यस्मरणम्, अयमेवाध्याहार इति ।

तन्न ।भीमादिपदांशात्स्मरणाननुभवात् ।

किञ्चैवं सत्युच्चारितपदस्य वृत्त्याऽर्थबोधकत्वाभावेन प्रातिपदिकत्वाभावेन तदुत्तरं विभक्त्युत्पत्त्यनापत्तेः । किञ्चैकदेशेन भिन्नस्वरूपस्य सङ्घातस्य कथं स्मरणम्, सादृश्याभावात् । स्मृतस्यानुच्चारितत्वेन ततो बोधानापत्तेश्च ।

तदुक्तम्—

एकदेशात्स्मृतिर्भिन्ने सङ्घाते जायते कथम् ।
कथं प्रतीयमानः स्याच्छब्दो ऽर्थस्याभिधायकः॥इति।

तदेतदभिप्रेत्योक्तम् "इग्यणः सम्प्रसारणम्" इति सूत्रे भाष्ये–"दृश्यते हि वाक्येषु वाक्यैकदेशान्प्र-

युञ्जानाः पदेषु पदैकदेशान् । प्रविश, पिण्डीम्, प्रविश, तर्पणम्, देवदत्तः, दत्तः, सत्या, भामा, सत्यभामा” इति । वाक्येष्वित्यादेर्वाक्यार्थेष्वित्यादिरर्थः ।

नच पदैकदेशस्य तत्तत्पदार्थे लक्षणा । बाधप्रतिसन्धानाभावेऽपि शक्यसम्बन्धज्ञानाभावे ऽपि बोधानुभवात् । अणुदित्सूत्रभाष्ये चोच्चारितस्यैव शब्दस्य प्रत्यायकत्वमुक्तम् । अन्यथा ज्ञानमात्रे शब्दभानाच्छाब्दधाराऽऽपत्तिः । तत्र तन्निवृत्तये प्रतिबन्धककल्पने गौरवम् ।

नच लिपिस्मृतशब्दादर्थबोधानापत्तिः, अनुच्चारणादिति वाच्यम् । तत्र चेष्टावल्लिपेरेवार्थबोधकत्वेनाक्षतेः । अत एव लिपौ शब्दत्वभ्रमो बालानाम् । तच्छक्तिग्रहश्च शब्दसङ्केतग्रहाधीन इत्यन्यत् । लिपौ शब्दत्वभ्रमवतां तत्स्मरणानुपयोगाच्च । अत एव लिपौ 'अयं ककारः' इति व्यवहारः पण्डितानां लिपौ शब्दत्वबाधज्ञानवतामपि । अनादिसिद्धारोपात् । अन्तःकरणादावात्मप्रत्यये भ्रमत्वज्ञानवतां पण्डितानां व्यवहारानिर्वाहस्यैवमेवोपपाद्यत्वात् ।

यद्वा तत्रापि सूक्ष्मतरताल्वोष्ठपुटव्यापारात्सूक्ष्मतरमुच्चारणमेव, मानसजपस्थल इव । निरूपितं चैतत् प्राक् । तस्माच्छब्दसत्ताज्ञानं शाब्दबोधकारणम् । अतएवान्यस्मिन् शब्द उच्चारिते तत्रान्यशब्दत्वभ्रमदशायां तदर्थबोधानुभवः । “उच्चारितः

१ नच–भवात् अयं ग्रन्थ· मूले ऽत्रोपलभ्यमानो ऽपि कलाऽसंमतः, प्रकृते तत्रानुपदं स्फुटीभविष्यतीति कथनात् ।

शब्दः" इत्यस्य उच्चारितत्वेन गृहीत इत्यर्थो बोध्यः ।

एतेन "प्रविश" "पिण्डीम्" इत्यादौ कारकक्रियाशब्दमनुमाय ततो बोध इति परास्तम् ।

किञ्च किं शब्देन शब्दस्याक्षेप उतार्थेन ? । नाद्यः । स्वार्थप्रतिपादनव्यग्रेण तेन अन्यानाक्षेपात् । नान्त्यः। तस्यार्थस्य शब्दान्तरेण सम्बन्धाभावात् ।

एतेन शब्देनार्थाक्षेप इत्यपास्तम् । अस्य शब्दस्य शब्दान्तरार्थेन सम्बन्धाभावात् । यथाकथं चित्परम्परासम्बन्धसत्त्वेऽपि तस्य नानुमितिप्रयोजकत्वं लक्षणाप्रयोजकत्वाभाववत् । अर्थेनार्थानुमाने ऽपि तस्य शाब्दत्वं न स्यात् । तस्मादर्थेनार्थान्तरस्यैतद्वाच्यत्वानुमानमेवोचितम् ।

नच पिण्डीमित्येतन्नाम सिद्धार्थकं कथं साध्यक्रियाबोधकमिति वाच्यम् । नामसरूपं भिन्नमेवेदमित्यदोषात् । नामसारूप्यादेव द्वितीयाद्यन्तताव्यवहारः । नचाख्यातलक्षणस्यात्रातिव्याप्तिः । शास्त्रबोधितक्रियार्थकघटितत्वे सतीतिविशेषणदानेनादोषात् । पिण्डीमित्यादेरनेकक्रियार्थत्वे ऽपि प्रकरणान्निर्णयः ॥३५॥

(कुं. टी.) *अनुनिष्पादीति। नान्तरीयकेत्यर्थः । समुदायार्थे ऽवयवस्यापि शक्तिग्रह इति भावः । घकाराद्येकैकवर्णोच्चारणे तु घटादिबोधो न भवति । "चतुर्थादनजादौ च लोपः पूर्वपदस्यच" इतिलोपानुशासनबलाद्दत्तादिशब्दानामेवानुनिष्पादिनां संज्ञात्वोपगमात् । *निसोच्यतइति । निरादिभिरेव क्रान्ताद्यर्थावगमाद्वृत्तौ क्रान्तादीनामप्रयोग एवेति भावः । *एकवच-

नाद्यवयवेति । एकवचनशब्दान्तर्गतो वचनशब्दोऽपि समुदायार्थे रूढः । तेन कटुबदर्या अदूरभवो ग्रामः कटुबदरी इत्यत्र युक्तवद्भावेन षष्ठ्या अतिदेशो न भवतीति भावः । *यत्पदमिति । गर्भीकृतक्रियं पिण्डीमिति यत् पदं तदपि वाक्यम्, तत एव निराकाङ्क्षार्थप्रतीतेः । अत एवोक्तं हरिणा—

अन्तरेण क्रियाशब्दं वाक्यादेर्द्वित्वदर्शनात् । इति ।

'माणवक माणवक त्वमभिरूपः' इत्यत्र क्रियाऽभावे ऽपि वाक्यादित्वाद् द्वित्वसिद्धिरिति तदर्थः । केवलाख्यातमपि वाक्यमित्याह *आख्यातेति । यत्र आख्यातशब्दे प्रविशेत्यादौ नियतं कारकं गम्यते तदपि समाप्तार्थं परिपूर्णार्थं वाक्यमित्यर्थः । अस्मिन् पक्षे आख्यातशब्दो वाक्यं क्रियाकारकभावश्च वाक्यार्थ इति सखण्डपक्षो दर्शितः । ननु प्रविशेत्यनेनैव गतार्थत्वात्कथं 'गृहे प्रविश' इति प्रयोगस्तत्राह *शब्दान्तराण्येवेति । *पदावयवेनेति । भीमसेनपदावयवभीमपदेनेत्यर्थः । ननु संबन्धिज्ञानमेव स्मरणे हेतुर्न सादृश्यज्ञानम्, दृश्यते च श्लोकादावेकदेशेन समुदायस्मरणमित्यस्वरसादाह *स्मृतस्येति । एकदेशेन सघातार्थः स्मर्यत इति मतं निराकरोति *एकदेशादिति । सदृशवस्तुदर्शनाभावात्स्मृतिर्न संभवति, नापि स्मृतस्य बोधकत्वमिति तदर्थः । *चेष्टावदिति । तत्र लिपेरेव सङ्केतग्रहो न तु शब्दकल्पनया बोधः । एतेन लिपौ वर्णतादात्म्यारोपाद् बोध इत्यपास्तमिति भावः । *अत एव-

---

१ अत—तदर्थ. पाठोऽयं कुञ्जिकाक पु नोपलभ्यते ।

२ एतेन—भाव. पाठो ऽय कु कपु नास्ति ।

३ अतः—देव पाठोऽय कु कपु नास्ति ।

लिपीनामप्यर्थबोधकत्वादेव । *शब्दसङ्केतेति । शब्दसङ्केतग्रहादेव लिपिसङ्केतस्यापि ग्रह इत्यर्थः । ननु परेषां लिपौ शब्दतादात्म्यारोपः किमर्थ इत्यत आह *अत एवेति । आरोपादेवेत्यर्थः । ननु भेदस्य निश्चितत्वे कथमारोप इत्यत आह *अनादीति । एतादृशारोपस्यानादित्वादित्यर्थः । पण्डितानां व्यवहार इत्यत्र हेतुमाह *अनादिसिद्धारोपादिति । *एवमेव—आरोपादेव । *शब्दसत्ताज्ञानमिति । नतु वस्तुतः शब्दसत्तेत्यर्थः । *तदर्थबोधेति । अन्यार्थबोधेत्यर्थः । *उच्चारित इति। "यस्येति च" इत्यादौ तु प्रत्याय्यप्रत्यायकयोरभेदादिकारादीनां ग्राहकत्वं हरिणा वर्णितम् । *परास्तमिति । अनुच्चारितस्य बोधकत्वाभावात् । *इत्येतन्नामेति । सिद्धार्थकं पिण्डीमिति नाम साध्यक्रियां कथं बोधयेदित्यन्वयः । 'सुबन्तमिह नामेष्टम्' इत्यभियुक्ताः । *नामसरूपम्—नामसदृशम् । ननु नामत्वाभावे द्वितीयान्तत्वव्यवहारः कथमत आह *सारूप्यादेवेति । द्वितीयान्तत्वमपि सारूप्यादेवेति भावः । *नचेति । 'क्रियाबोधकं यत्तदाख्यातम्' इति निरुक्तकारोक्तेः । *अतिव्याप्तिरिति । अत्रापि असत्त्वभूतक्रियोबाधादिति भावः । *शास्त्रेति । पिण्डीमित्यत्र तु शास्त्रबोधिता क्रियार्थकता यस्य तन्नास्ति ॥ ३९ ॥

(क० टी०) विशेषान्तरमाह *क्वचित्त्विति । अस्यार्थमाह *यथाप्रेति । एतेनातिप्रसङ्गो नेति सूचितम् । तत्रादौ सर्वसमत दृष्टान्तमाह *यथा भीमेति । कोशे पर्यायेष्वनुक्तत्वादाह *पदैकेति । तदाकारमाह *भीमेति । *पृथगित्युत्तरान्वयि । देवादिसङ्ग्रहायाह *तत्तत्पदेति । वीप्सितस्य परामर्शादाह *तत्रार्थेति । त

१ ननु—त्वादित्यर्थः पाठोऽयं कु कपु नास्ति ।

त्र तत्रार्थे इत्यर्थः । अनुदये हेतुमाह *अप्रामाण्येति । नन्वेवं कथमुक्त–'शक्तिभ्रमाद्बोध' इति अत आह *शक्तीति । दार्ष्टान्तिकमाह *एवमिति । तद्वदित्यर्थ । *भावे इति । वैयाकरणैस्तत्र तस्य शक्त्यङ्गीकारादिति भाव. । नन्वेव वाक्यभेदेन तावन्मात्रात्कथ विशेषबोधो ऽत आह *अनकेति । क्रियायामपीद विशेषण बोध्यम् । *योग्यतेति । नन्वननायोग्यव्यावृत्तावपि योग्यानेकत्वादुक्तदोष एव अत आह *तात्पर्यैति । इद तवापि तुल्यमित्याह *नवेति । पक्षान्तरत्वेनाह *तदर्थेति । निस एवाय वृत्तिविषये क्रान्तलक्षणोऽर्थ इत्याशयेनाह तस्यार्थ इति भाष्ये । पक्षान्तरतयाऽऽह *सोर्थ इति । उच्यते इति वदता भगवतेति शेष ।*उक्तेति । वाक्यैकदेशन्यायेनेत्यर्थ· । लक्षणा तु नेत्यनुपदमेव स्फुटीभविष्यति । पूर्वपदवदुत्तरपदे ऽपि तथेति सूचयन्नन्यदपि तत्र मानमाह *अत एवेति । उक्तरीत्यङ्गीकारादेवेत्यर्थ । *सूत्रे इति । भाष्ये इति शेष. । *तदुक्तमिति । हरिणापीति शेष. । अपि प्रसिद्धसमुच्चये । *चरितेति । क्रियान्वयित्वन स्वार्थबाधकमित्यर्थ । एव पिण्डोमित्यस्य वाक्यत्वमुक्त्वा प्रविशेत्यस्यापि तत्त्वमाह *आख्यातेति । *नियतम्नित्यसाकाङ्क्षम् । *तदपि–सामान्ये नपुसकम् । आख्यातशब्दरूपम् । *एकम्–एकमपि । तत्त्वे मुख्यबीज ध्वनयन् हेतुगर्भ विशेषणमाह *समाप्तार्थमिति । निराकाङ्क्षार्थबोधकमित्यर्थः । नन्वेव विशिष्टयोगोऽफलो ऽत आह *ग्राममिति । ननु गौरवात्तदप्रयोगापत्तिरेव अत आह *तान्यपीति । अन्यथा कलशादिप्रयोगाच्छदापत्तिरिति भाव. । *अयमेव–स्मृत्यात्मकप्रत्यय एव । आद्य दोषमाह *भीमादीति । *वृत्त्येति । तत्सूत्रे तथैव निवेशादिति भाव । *एकेति । यत इत्यादि । *सादृश्येति । एकवर्णादिश्रुतितो बालकस्य समुदितप्रयोगे तु तथासकेतादेवार्थबाधेनोपपत्तिर्नतु स्मृत्वेत्यग्रे स्फुटीभविष्यत्यनुपदमेव । अव्यवहितदोषद्वयेन हरिसम्मतमाह *तदुक्तमिति । *उक्तमिति । उभयसंज्ञापक्षमुक्त्वा वाक्यार्थसज्ञापक्षानुवादे दोषाभावाय सप्रसारणजन्ये उपचारात्सप्रसारणपदमित्येक समाधि कृत्वाऽथवेत्यादिना मध्यमपक्षत्वेनोक्तमित्यर्थ । तथाच सप्रसारणनिर्वृत्तेत्यर्थस्य ततो लाभ इति न तत्र दोष इति भाव. । वाक्योदाहरणमेतत् । अत एव "सप्रसारणनिर्वृत्तादित्यादेर्वाक्यस्यार्थे सप्रसा-

रणादित्यादिर्वाक्यैकदेशः प्रयुज्यते" इति भाष्ये उक्तम् । एव समर्थ-सूत्रभाष्योक्तमपि । *लुपीतितु पदोदाहरण बोध्यम् । *भामेतीति । इदं सत्याया अप्युपलक्षणम् । अनेन च तत्तदर्थशक्तत्वमेकदेशस्ये-त्युक्तमेव । एतदेवाभिप्रेत्येतरान्विते पदानां शक्तिरिति प्रवादो ऽपि । असङ्गतिं परिहरति *वाक्येष्विति ।

एतेन तत्तदर्थबोधाय वाक्येषु प्रयोक्तव्येषु तत्तदर्थे तत्तदेकदे-शान् प्रयुञ्जते इत्यर्थो निरस्त. । अध्याहारापत्ते' । *भावेऽपि-तत्रापि । तत्रापि च उक्तार्थे भाष्यान्तरसम्मतिमप्युक्त-दोषोपपत्तये आह *अणुदिदिति । *चोऽप्यर्थे । तत्समर्थय ते *अन्यथेति । तदनङ्गीकारे इत्यर्थः । *मात्र कार्त्स्न्ये । प्रतिपादितमिद प्राक् । सकृदितिन्यायस्योच्चारितविषयत्वादाह *धारेति । *तत्र-अनुच्चारणस्थले । भाष्योपरि शङ्कते *नचेति । एवेन तत्स्मृतशब्दनिरासः । *अत एव-तस्याबोधकत्वादेव । श-ब्दत्वस्य बोधकनिष्ठत्वादिति भावः । 'अवैरूप्यायाह *तच्छक्तीति । लिपिशक्तीत्यर्थः । तं विनाऽपि बोधमाह *लिपाविति । तन्निष्ठसर्व-धर्माध्यासस्य ततो लाभेन बोधकत्वेन तदुच्चारणस्यापि लाभादिति भाव । *अत एव-तेन सर्वतद्धर्माध्यासादेव । ननु बालानां तद्व्यव-हारोपपत्तावपि कथमन्येषाम्, भ्रमासभवाद् । अत आह *पण्डिता-नामिति । ननु सोऽपि कथ तेषाम् अत आह *अन्त.करणेति । अवि-द्यावशादिति भावः । एव प्रक्रियायामुपपाद्यादोष सिद्धान्ते आह *य-द्वेति । *तत्रापि-लिपिदर्शनेऽपि । *सूक्ष्मतरम्-इतराज्ञेयम् । अनुमी-यमानव्यापारकत्वाच्च तादृशस्थले मानसजपव्यवहारः । *प्रागिति । शब्दनिरूपणोपक्रमे इत्यर्थ । उक्तभाष्यतात्पर्यमाह *तस्मादि-ति । प्रमां विहाय ज्ञाननिवेशफलमाह *अतएवेति । ज्ञानस्य कारणत्वादेवेत्यर्थ' । तत्र तच्छब्दसत्ताभ्रमसत्त्वादिति भाव । अन्यथा तदसङ्गतिः स्पष्टैव । नन्वेव भाष्यविरोधः तत्र स्वरूप-सत्यास्तस्याः कारणत्वस्योक्तत्वाद् अत आह *उच्चारित इति । *ए-तेन-अणुदित्सूत्रभाष्यविरोधेन । आक्षेपो ऽध्याहारशब्दार्थ इति पक्षे-ऽप्याह *किञ्चेति । *अनाक्षेपात्-तदसम्भवात् अनुपपत्त्यभावात् । *तस्यार्थस्य-उच्चारितार्थस्य । एतेनेत्यस्यार्थमाह *अन्येति । ननु साक्षात्संबन्धाभावे ऽपि परंपरासंबन्धोऽस्त्येव अत आह *य-

श्चेति । *तस्येति । सामग्र्यन्तराभावादतिप्रसङ्गापत्तेश्चेति भावः ।*लक्षणेति । प्रतिपादितमिदं प्राक् । साक्षात्सबन्धसत्त्वादाह *अर्थेनेति । *अपिना आक्षेपपरिग्रहः । किञ्चेत्युक्तमुपसहरति *तस्मादिति । तथा च स्वेष्टसिद्धिरिति भावः । सिद्धान्ते *नचेति । *अत्र-पिण्डीमित्यादौ । प्रागुक्तमेव दार्ढ्यायाह *पिण्डीमिति ॥ ३५ ॥

पदानामानर्थक्ये ऽपि "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" "चत्वारि पदजातानि" इत्यादि शास्त्रकृत्कल्पनामात्रमेव । यथा असत्येनाप्यर्थेन मरीचिकाजलेन 'इदं जलमानय' इत्यादिव्यवहारो लोकानां दृश्यते तद्वत् सर्वत्रापि पदे ऽर्थव्यवहार इति स्पष्टम्—

न लोके प्रतिपत्तॄणामर्थयोगात्प्रसिद्धयः ।

इत्यादिना हरिग्रन्थे । प्रसिद्धयः शास्त्रे इति शेषः । एतेनोच्चारितं पदममुकार्थान्वयित्वेन स्वार्थबोधेच्छया वक्त्रुच्चारितमिति तात्पर्यग्रहे कस्य चित्पदाध्याहारेण कस्य चिदर्थाध्याहारेण बोध इति यथाऽनुभवं व्यवस्था ।

"शब्दं विनापि गुडादिशब्दैर्माधुर्यादिरूपार्थस्याक्षिनिकोचादिना चार्थस्य बोधस्य दर्शनाद्" इति स्पष्टम् "अन्नेनव्यञ्जनम्" इतिसूत्रे भाष्ये ।

अर्थस्यापि तत्पदविशिष्टस्याध्याहारः ।

एतेनार्थाध्याहारे 'चैत्र ओदनम्' इत्यत्र तृतीयापत्तिः । प्रत्ययेन कर्तुरनभिधानात् । "शब्दानुविद्धं सर्वं ज्ञानम्" इति नियमभङ्गश्चेति परास्तम् । "अनभिहिते" इत्यत्र कर्त्रादावनभिहितत्वस्य समभिव्याहृतेन पदेन समभिव्याहृतज्ञानविषयी-

भूतार्थविशेषणीभूतपदेन वा ऽभिधानयोग्यत्वाभावरूपस्य विवक्षणेनादोषात् । उपस्थितपदात्पदार्थबोधानङ्गीकारेण चार्थाध्याहारव्यवहारो बोध्यः । अध्याहारश्च मानसं ज्ञानमित्यपास्तम् ॥ ३९ ॥

(कुं० टी० ) *पदानामिति । पदानां वास्तविकार्थवत्त्वाभावेऽपि कल्पनयाऽर्थवत्त्वमित्यर्थः । *यथेति । असत्यमपि मरीचिकाजलमाश्रित्य यथा व्यवहार इत्यर्थः । ननु पदपदार्थविभागस्यासत्यत्वे कथं लोके तदाश्रया प्रवृत्तिरत आह *नलोकइति । न सत्यार्थसम्बन्धादेव लौकिकानां व्यवहारः, असत्येनापि मरीचिकाजलादिना व्यवहारदर्शनादिति तदर्थः । *मरीचिकाजलेनेति ।

अयं भावः–सत्यत्वं त्रिविधं पारमार्थिकम्,व्यावहारिकम्, प्रातिभासिकं चेति । तत्र शुक्तिरूप्यस्य व्यावहारिकत्वे संसारदशायां बाधो न स्यादिति प्रातिभासिकत्वम् । तत्र च आगन्तुकदोषः कारणम् । नन्वागन्तुकदोषजन्यत्वं न प्रातिभासिकत्वे प्रयोजकं काचादिध्वंसतत्संयोगादावतिव्याप्तेरिति चेन्न । दोषत्वेन जन्यताया विवक्षितत्वात् । नचैवमागन्तुकेति विशेषणवैयर्थ्यम् । घटादावतिव्याप्तिवारकत्वात् । घटो दोषजन्यः अध्यस्तत्वात् शुक्तिरूप्यवदित्यनुमानात् । *एतेनेति । द्वितीयेनापास्तमित्यनेनान्वयः । *उच्चारितम्–द्वारमित्यादिकम् । *अमुकार्थेति । पिधानादीत्यर्थः । *कस्यचिदिति । पुंस इत्यर्थः । अर्थाध्याहारे तृतीयाद्यापत्तिमाशङ्क्याह *तत्तत्पदविशिष्टेति । *प्रत्ययेनेति । तिङ्कृत्तद्धितेतिपरिगणनात् । *अनभिहितत्वस्येति । रूपस्येत्यत्रास्यान्वयः । *समभिव्याहृतेति । समभिव्याहृतस्य यज्ज्ञानं तद्विष-

र्थीभूतोऽर्थः पचत्यादिपदार्थः तद्विशेषणं पचत्यादिरूपम् । पचत्यादिपदस्यात्राभावाद्योग्यत्वोक्तिः । *अपास्तमिति । अनुच्चारितस्य बोधकत्वासम्भवात् । स्वमते एकदेशस्यापि समुदायार्थवाचकत्वादध्याहारो नास्तीति भावः ॥ ३६ ॥

(कु टी )विशेष वक्तु प्रागुक्तमेवाह *पदानामिति । तमेव विशेषमाह *यथेति । *सर्वत्रापीति ।वाक्यघटके इत्यर्थ । *एतेन–उक्तरीत्या भाष्यादिसमत्या तस्यैव बोधकत्वेनाध्याहारकथाया एवायुक्तत्वेन । अपास्तमित्यत्रान्वय । अव्युत्पन्नोऽद शब्दपर्यायोऽमुकशब्दः । पदजन्यपदार्थोपस्थिति शाब्दबोधे कारणमिति मतेनाह *कस्यचित्पदेति । तदन्यमतेनाह *कस्यचिदर्थेति । ननु द्वितीये तद्वाचकशब्द विना कथ तदर्थप्रतीतिरत आह *शब्दमिति । तद्वाचकशब्दमित्यर्थ' । *गुडादीति । प्रतिपादितमिदमादौ । *अक्षीति । तदुक्त समर्थसूत्रे भाष्ये "अन्तरेण खल्वपि शब्दप्रयोगं बहवो ऽर्था गम्यन्ते अक्षिनिकोचै पाणिविहारैश्च" इति । "यथैते वृद्धव्यवहारवशादर्था गम्यंन्ते तथा शब्दैरिति भाव " इति कैयटः । *अर्थस्य बोधस्येति । व्यस्तः पाठः । *बोधस्य–ज्ञानस्य । आद्ये सङ्गतिमाह *स्पष्टमिति । तत्रहि दध्योदनादौ कथ सामर्थ्यमिति शङ्कायां "युक्तार्थसम्प्रत्ययाच्च सामर्थ्यम् । दध्ना युक्तार्थता सम्प्रतीयते । अन्यथा दधीत्युक्ते बहवोऽर्था गम्यन्त इति लोपपक्षे ऽनवस्था स्याद्" इत्युक्तम् । दध्नेति पदवाच्येन युक्तो यो ऽर्थ उपसेकक्रियादिरूपस्तदर्थता तस्य प्रतीयते इत्यर्थ । विशेषमाह * अर्थस्यापीति । एतेनेत्यस्यार्थमाह *अनभीति । तस्यापि तद्विशिष्टस्याध्याहाराङ्गीकारेणेत्यादिः । तत्र प्रसिद्धार्थमाह *समभीति । तत्तत्त्वस्य तत्रैव सत्त्वादाह *पदेनेति । प्रकृतनिर्वाहायाह *सम्भीति । एतदर्थमेव योग्यत्वनिवेश. । नन्वेवं कथमर्थाध्याहार अत एवाह *अपेति । अत एव द्वितीयदोषोऽपि नेति भावः । स्मृतित्वादेरसम्भवस्योक्तत्वादाह *मानसमिति ॥ ३६ ॥

"क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्येतदु-

दाहरणे 'फलेभ्यो याति'इत्यादौ तुमुनन्ताप्रयोगे तादृशवाक्यैकदेशप्रयोग एव चतुर्थी साधुर्नतु तत्प्रयोगे। स्थानिन इत्युक्तेः। "स्पृहेरीप्सित" इत्युदाहरणे 'पुष्पेभ्यः स्पृहयति'इति सम्पूर्णवाक्यप्रयोगे तदेकदेशप्रयोगे च चतुर्थ्याः साधुत्वम्। "ल्यब्लोप" इत्यादि च ल्यबन्तरहितवाक्यैकदेशप्रयोगे एव प्रवर्तते। शास्त्रबलाल्लोकव्यवहाराच्च अस्य पञ्चम्यन्तघटितवाक्यैकदेशस्यैव विशिष्टे ऽर्थे शक्तिकल्पनमिति बोध्यम्। "युष्मद्युपपदे" इति सूत्रे "स्थानिन्यपि" इति तु उपपदग्रहणात्तत्पदसत्ताया एव निमित्तत्वभ्रमवारणाय। "स्थानिनि"इत्युक्ते तत्प्रयोगे न स्यादतः "अपि" इति। "उपपदे" इति तु वैचित्र्यार्थैव। "आचार्याः कृत्वा न निवर्तन्ते" इति न्यायात्।

एतेनैतत्पदबलात् स्थानिपदमज्ञायमानार्थकम्। तेन युष्मदाद्यर्थाध्याहारे ऽपिनोपपदोच्चारणे तदध्याहारे च मध्यमादि। 'फलेभ्यो याति' इत्यादि चार्थाध्याहार एव साधु न पदाध्याहारे। 'पुष्पेभ्यः' इत्यादि पदाध्याहारे एव साधु नार्थाध्याहारे इत्यपास्तम्।

एकस्यैव पक्षभेदेन साधुत्वासाधुत्वयोः "न वा" इति सूत्रे भाष्ये तिरस्कारात्।

किञ्च एतत्पदाज्ञानं पदज्ञानं च वक्तृनिष्ठं साधुत्वनियामकं श्रोतृनिष्ठं वा ? । नाद्यः। अर्थस्य बुद्धिस्थत्वे तद्वाचकपदस्यापि तद्बुद्धिस्थताया आवश्यकत्वात्। नान्त्यः। "इग्यणः" इति सूत्र-

भाष्योक्तन्यायेन 'पुष्पेभ्यः' इत्येकदेशस्यापि तादृशवाक्यार्थे शक्तिग्रहसत्त्वे ततः पदज्ञानं विनापि बोधेन तत्र पदज्ञानस्य दुर्लभत्वात् । पदानालिङ्गितार्थाध्याहारासम्भवेन 'फलेभ्यो याति' इत्यादावपि श्रोतुः पदाज्ञानस्य दुर्लभत्वाच्च । "परः सन्निकर्षः" इति सूत्रभाष्योक्तरीत्या वक्तृज्ञानस्यैव साधुत्वनियामकत्वाच्च । वाक्यत्वं कारकाद्यन्विताक्रियाबोधकत्वमेवेति वक्ष्यते ॥ ३७ ॥

(कुं॰ टी॰) ननु वाक्यैकदेशन्यायाश्रयणे, 'फलेभ्यः आहर्तुम्' इत्यपि प्रयोगापत्तिरत आह *फलेभ्य इति । अत्रार्थाध्याहारः, पुष्पेभ्य इत्यत्र शब्दाध्याहारः इति व्यवहार उक्तयुक्तिमूलकः । ननु "स्पृहेरीप्सितः" इत्यादाविव वाक्यैकदेशन्यायेन युष्मदर्थस्य लाभात्स्थानिन्यपीति व्यर्थमत आह *स्थानिन्यपीति त्विति । अपि शब्दस्य फलमाह *नस्यादिति । *वैचित्र्यार्थेति । तस्मिन्निति परिभाषा तु व्याख्यानान्न प्रवर्तिष्यत इति भावः । *एतद्बलात्—उपपद इति वचनात् । ननु उपपदत्वे सति अप्रयुज्यमानत्वमसम्भवीत्यतस्तदर्थमाह *अज्ञायमानार्थकमिति । तेन युष्मत्पदाप्रयोगे तदर्थाध्याहारे युष्मत्पदाज्ञाने मध्यम इत्यर्थः । अपिशब्दार्थमाह *अपिनेति । *तदध्याहारे—युष्मत्पदाध्याहारे । *पक्षभेदेनेति । शब्दाध्याहाररूपार्थाध्याहाररूपभेदेन । *न्यायेनेति । "ष्यङः सम्प्रसारणम्" इत्यादिविधिप्रदेशे ऽप्यन्योन्याश्रयवारणाय 'यणः स्थाने इग् भवति' इति वाक्यार्थः संज्ञी । इल इत्याद्यनुवादे तु सम्प्रसारणनिर्वृत्ते सम्प्रसारणशब्दो वर्तत इति स्पष्टं तत्र । *भाष्योक्तरीत्येति । तत्र बौद्धपौर्वापर्याश्रयणे शब्दादर्थमवगत्य परबोधाय श-

न्दः प्रयोक्तव्य इति स्पष्टम् । ननु एकदेशस्यापि समुदायार्थवाचकत्वे 'आख्यातं सविशेषणं वाक्यम्' इत्यादिवाक्यलक्षणाव्याप्तिरतआह *वाक्यत्वमिति ॥ ३७ ॥

( क० टी० ) परमत खण्डयितु सिद्धान्ते स्वशास्त्रप्रक्रियाव्यवस्थामाह *क्रियार्थोपेति । *उदेति । जातावेकवचनम् । एवमग्रेऽपि । *नाहशेति । उक्तभाष्यसिद्धेत्यर्थः । ताहशवाक्यार्थे इतिपाठस्तु सुगम एव । पूर्ववदत्र विनिगमकाभावादाह *सम्पूर्णेति । आद्यवदत्र विशिष्टाप्रयोगेण भेदात्तदेकदेशत्वाभावेन कथमुक्तन्यायसञ्चारः, मल्लग्रामादिवद् भूयसा व्यवहारेऽपि कदाचित् द्विभक्तिविशिष्टैकदेशस्यापि तत्र प्रयोगापत्तिरत आह *शास्त्रेति । लोके तदप्रयोगादेवाह *लोकेति । एवेन तद्व्यवच्छेदः । एव फलेभ्यो यातीत्यादावपि बोध्यम् । स्वरूपसती शब्दसत्ता शाब्दबोधकारणमिति पाणिनिसम्मतमिति निरासायाह *युष्मदीति । *उपेति । आदौ तथाऽननुसन्धानेन तदुक्तत्वादित्यर्थः । अनन्तर तदनुसन्धानादिति भाव । एव सत्यादिम स्पष्टार्थमेवेत्याह— *उपेति । एतेन स्थानिन्यपीत्यस्यापि तत्त्वमेव सूचितम् ।

एतेन युष्मदिति सूत्रे स्थानिन्यपीति व्यर्थ तदभावे ऽपि "स्पृहेरीप्सित." इतिवत्तस्यापि युष्मद् प्रयोगे ऽप्रयोगे च प्रवृत्त्युपपत्तेरित्यपि परास्तम् । तद्वत्तस्यापि तत्त्वात् । तदेव खण्डयति *एतेनेति । *एतादिति । उपपदे इतीत्यर्थ । सूत्रे ऽपिनाऽऽक्षायमानसमुच्चय । उभयफलमाह *तेनेति । *अर्थेति । शुद्धार्थेत्यर्थः । *तदिति । शुद्धपदेत्यर्थः । *चस्त्वर्थे । स्थानिन इत्युक्तः । *नार्थेति । प्रयोगे इत्युक्तेः । आद्ये उक्तदोषस्य स्फुटत्वात् द्वितीयादौ दोषमेतेनेत्युक्तमाह *एकस्यैवेति । *एनादिति । अन्यथापि तदुपपत्त्या प्रयाग इत्यस्य निर्मूलत्वाच्चेत्यपि बोध्यम् । तथैव पाणिनेराशयो स्त्विति भ्रमनिरासायाद्यसाधारणदोषमाह *किञ्चैतदिति । अध्याहारविषयभूतेत्यर्थः । इदमग्रेऽपि विशेषण बोध्यम् । *तदिति । वक्तित्यर्थः । तथाच पदानालिङ्गितार्थबुद्धेरभावेन तदज्ञानासम्भवात्सर्वत्र दोष इति भाव । *ततः—पुष्पेभ्य इत्यत । *पदज्ञानम्—स्पृहयतीति पदज्ञानम् । *तत्र—तत्रापि । उक्तदोषत आह *पदेति । *पर इति

तत्रहि, "पौर्वापर्यमकालव्यवेत संहिता" इतिन्यासान्तरे एकैक-वर्णवृत्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम्" इति तेषां पौर्वापर्याभावमाशङ्क्य "एव तर्हि बुद्धौ कृत्वा" इत्याद्युक्त्वा "बुद्धिविषयमेव शब्दानां पौर्वापर्यम्" इति व्याख्याय वक्तृबुद्धिस्थत्वमुपपादितम्—"य एष मनुष्य प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थे ऽय शब्दः प्रयोक्तव्य, अस्मिंस्तावच्छब्देऽयन्तावद्वर्णस्ततोऽय ततोऽयम्" इति । प्रतिपादितमिदमधस्तात् । ननु सिद्धान्ते एकपदस्य कथं दुर्याद्युक्तवाक्यत्वव्यवहार., परसंमतवाक्यलक्षणानाक्रान्तत्वादित्यत आह *वाक्यत्वमिति । एवेन परकीयव्यवच्छेदः ।

अत एव चन्द्रालोके जयदेवेनोक्तम्—

वाक्य च खण्डवाक्य च पदमेकमपि क्वचित् ।
धूमवत्त्वादिति यथा देवेत्यामन्त्रण यथा ॥ इति ।

वाक्याध्याहार इति पस्पशास्थभाष्येणापि वार्त्तिककृद्वाक्यानां सूत्रकृत्तात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता । एतेनाध्याहारस्यैवाभावे तद्भाष्यविरोध इत्यपास्तम् ॥ ३७ ॥

तत्र "प्रकृतिप्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनाद्"इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवंरूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः । वस्तुतस्त्वं विकल्पायोगेन प्रातिपदिकार्थविषये एकम्, द्विकम्, त्रिकम्, चतुष्कम्, पञ्चकमित्यादिवादिविकल्पानुपपत्तेः । काल्पनिके तु यथेष्टमिति तत्संभवः ।

अत एव "अतिशायने तमप्" इति सूत्रे शुक्लादयो गुणा एके, नच शुक्लतर इतिप्रकर्षप्रत्ययानुपपत्तिः । तेषां सावयवत्वेनाल्पत्वमहत्त्वकृतविशेषेण तदुपपत्तेः। अथवा एके निरवयवाः नैर्मल्यादिगुणान्तरमिश्र-

णात् प्रकर्षः। यथा जात्युत्पलादिवासिताया मल्लिकाया गन्धप्रकर्षः। अथवा नाना शौक्ल्यादि इति भाष्ये उक्तम्। अनेन एकत्र वस्तुनि अनेकपक्षोपन्यासेन व्यवहारोपपादकपदार्थानामवास्तवत्वं सूचितम्।

किञ्च अस्यैव वास्तवत्वे "कर्तरि कृद्"इत्यस्यास्मदादीन्प्रत्यबोधकत्वापत्तिः। कर्तृपदस्याप्यवयवशक्त्यैव बोधकत्वेनैतद्वाक्यार्थबोधात्प्राक् तत्र शक्तिग्रहासम्भवेनात्माश्रयापत्तेः। यदि तस्य मानान्तरेण शक्तिग्रहस्तदाऽन्येषामपि तेनैव शक्तिग्रहसम्भवेनास्य वैयर्थ्यापत्तिः। शक्तिग्रहाभावे शक्यसंबन्धरूपा तन्मूलिका वा लक्षणा वक्तुमशक्या। एवञ्चेदृशे विषये समुदायशक्त्यैव बोधकत्वम् अस्मदादीन्प्रत्यावश्यकम्।

गौतमोऽपि प्रकृतिप्रत्ययार्थस्यावास्तवत्वं ध्वनयन् "ते विभक्त्यन्ताः पदम्" इति पदपदार्थमुक्त्वा "जात्याकृतिव्यक्तयस्तु पदार्थः"इत्याह। विभक्तिपदेन सुप्तिङाविति तद्वार्तिककारः।

तत्र जातिः प्रवृत्तिनिमित्तोपलक्षणम्। आकृतिपदेन रूपक्रियादिविशिष्टमवयवसंस्थानं जातिलिङ्गमेव।

अतएव च गां लिखेत्यादौ लेखनकर्मत्वोपपत्तिः।

अत एव 'गौः' इति विज्ञाने प्रतिभासमानेषु वस्तुषु "कः शब्दः" इति प्रश्ने सास्नादिविशिष्टस्यार्थस्य क्रियायाः, गुणस्य, जातेश्च शब्दत्वं "किंयत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः, यत्तर्हि तदिङ्गितं चेष्टितं निमिषितं स शब्दः, यत्तर्हि तद्

शुक्लो नीलः कपिलः कपोत इति स शब्दः, यत्तर्हि भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्द" इत्येतद्ग्रन्थेन इतिशब्दबलात्, तदिति नपुंसकवशाच्च शुक्लसुरभ्यादिविशेषशब्दैर्व्यवह्रियमाणं वस्तुरूपं गन्धस्पर्शादिकं लिङ्गसंख्यादिकं च शब्द इत्याद्यर्थकेनाशङ्क्य "नेत्याह—वक्ष्यमाणगुणाश्रयं द्रव्यं नाम तत्, क्रिया नाम सा, उक्तद्रव्यवृत्तिर्गुणो नाम सः, आकृतिर्नाम सा" इत्येवं तेषां तत्त्वाभावमुपपाद्य "येनोच्चारितेन सास्नालाङ्गूलखुरककुदविषाणिनां संप्रत्ययो भवति स शब्दः" इत्युत्तारितं पतञ्जलिना।

अतएव कैयटेन"अथ गौरित्यत्र कः शब्द" इतिप्रश्नस्य गौरिति विज्ञातेषु वस्तुषु कः शब्द इत्याशयमुक्त्वा तान्येव वस्तूनि क्रमेण निर्दिशतीति कियत्सास्नेत्यादिभाष्यमवतारितम्।

येनेत्यादिसिद्धान्तभाष्ये विषाणस्योपलक्षणत्वात् गुणक्रियाजातिग्रहणम्। अतएवचाम्रफलादौ श्रुते रसविशेषादिजिज्ञासा। विशेषाजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात्। चक्षुरादिभिरपि सामान्यतो रसादिग्रहणं भवत्येव। विशेषस्तु रसनादितत्तदिन्द्रियग्राह्य एव। अतएवाम्रफले दृष्टे रसविशेषादिजिज्ञासा। "अथ गौरित्यत्र"इत्यत्र गौरित्यनेनाविशेषात ज्ञानमात्रस्य ग्रहणेन ज्ञानमात्रे शब्दगुणक्रियादिसामान्यभानस्य भाष्यकृता ध्वननात्। अतएव 'कम्बुग्रीवादिमान्नास्ति'इत्यादितो घटत्वावच्छिन्नाभावप्रतीतिः उक्ता न्यायविद्भिः। जातेरपि तत्पदार्थत्वात्। आकृते-

घटपदार्थत्ववत् ॥ ३८ ॥

(कुं० टी०) *भाष्ये उक्तइति । वर्णस्फोट इत्यत्रान्वयः । *न वास्तवः—न लौकिकव्यवहारोपयोगी । *अतिशायनेतमबिति । द्रव्यस्य स्वतः प्रकर्षाभावेन संसर्गिधर्मनिमित्तक एव प्रकर्षः । *शुक्लतरः पटइति । शुक्लगुणनिमित्तको द्रव्यप्रकर्षः । यथा हि निरुपाधिनो द्रव्यस्य प्रकर्षो नास्ति तथा द्रव्यान्निष्कृष्टस्य गुणस्यापि शुक्लतरं रूपमिति स्वतः प्रकर्षो नास्ति । ननु-

संसर्गिभेदक यद्यत्सव्यापारं प्रतीयते ।

गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ।

इत्युक्तं हरिणा । अस्यार्थः-संसर्गिण आधारस्य यद्यद् भेदकं सव्यापारमवच्छेदकरूपेण प्रतीयते तस्य सर्वस्य गुणत्वम् । परतन्त्रो हि गुण इत्युच्यते । एवञ्च परतन्त्रत्वाज्जातेरपि गुणत्वं न्याय्यम् । भाष्यकारो ऽप्याह "अन्यो हि वीरत्वं गुणः अन्यः पुरुषत्वम्" इति । तथा च जातिप्रकर्षे ऽपि तरबापत्तिः । यथा हि शुक्लो नील इत्यादौ आश्रयान्तरव्यवच्छेदः एवं गौरश्वः इत्यादावप्याश्रयान्तरव्यवच्छेदः प्रतीयते इति चेत् । सत्यम् । शुक्लादिगुणैरेव व्यक्तीनां भेदनात्तत्प्रकर्षे एव तरप् । नहि गोत्वेन गोषु प्रकर्षापकर्षौ भवतः । कथ तर्हि गोतर इति प्रयोग इति चेत् । तत्र प्रकृष्टत्राहदोहा गौः गोतरेत्युच्यते । एवं निकृष्टतरः प्रकृष्टतरः इत्यत्र निकर्षप्रकर्षातिशय एव तरप् । नतरामित्यत्र निषेधस्य प्रकर्षोऽत्यन्तमयुक्तत्वं गमनादेः सूचनाय । द्योत्यार्थप्रकर्ष एव तरबिति तु प्रायिकम् । एवं गुणप्रकर्षे तरपं व्युत्पाद्य गुणानामेकत्वादि निरूपयति *शुक्लादय इति । *प्रकर्षप्रत्यय इति । नह्येकत्वे स्वस्य स्वप्रतियो-

गिकः प्रकर्षः सम्भवति इति भावः । रूपादि सावयवमिनि साङ्ख्यमतेनेदम् । अतएवाह*अल्पत्वेत्यादि । *नैर्मल्यादीति । एतेन रूपादिचतुर्विंशतिसाधारणगुणत्वजातौ मानाभाव इति सूचितम् । तथाहि न तावत्तत्र प्रत्यक्षं प्रमाणम् । धर्मादीनामप्रत्यक्षात् । यथाहि तुरगादौ गत्यादिनिष्ठोत्कर्षमादाय गुणव्यवहारः, ब्राह्मणादेश्च द्वेपाद्यभावे गुणव्यवहारः, तथा रूपादिष्वपि उत्कर्षादिकमादायैव गुणव्यवहारः । *यथेति । जाती मालत्यपरपर्यायः पुष्पप्रधानो वल्लीविशेषः । *अथवा नानेति । नत्वास्मिन्पक्षे कृष्णावधिकशुक्लप्रकर्षे तरबापत्तिः शङ्क्या । समानजातीये एव प्रकर्षप्रतीतेरिति भावः । *किञ्चास्यैवेति । कल्पितस्य प्रकृत्याद्यर्थस्यैवेत्यर्थः । अबोधकत्वमुपपादयति *कर्तृपदस्येति । *तेनैव—मानान्तरेणैव । *तेविभक्त्यन्ताइति । ते एव वर्णा एव । विभक्त्यन्ताः इति वर्णाभिप्रायं बहुत्वं जात्यभिप्रायं पदमित्येकत्वम् । तथाच पूर्वपूर्ववर्णस्मृतिसाहितो ऽन्त्यवर्णो नश्यदवस्थानुभवविषयीक्रियमाणः पदम् । पूर्वपदस्मृतिसहितम् अन्त्यपदं नश्यदवस्थानुभवविषयीक्रियमाणं वाक्यम्, पूर्वपदार्थस्मरणसहितेनान्त्यपदेन जायमाना प्रतीतिर्वाक्यार्थः । *पदपदार्थम्—पदशब्दार्थम् । *जात्याकृतिव्यक्तयस्त्विवति । अत्र त्रयाणामेकपदार्थत्वसूचनाय पदार्थ इत्येकवचनम् । जातौ व्यक्तौ तद्वैशिष्ट्ये चेत्यर्थाच्च गोत्वं व्यक्तिश्चेति न बोधप्रसङ्गः । एवमवयवसंयोगरूपाकृतौ तद्वैशिष्ट्ये च शक्तिः । जात्याकृतिविशिष्टाया एव व्यक्तेर्बोधात् । अत एवोक्तं हरिणा—

अनुप्रवृत्तिधर्मा वा जातिः स्यात्सर्वजातिषु । इति ।

अयं भावः—यथा गोत्वादिजातिः सर्वा व्यक्तीर्व्याप्नोति तथा विषाणादयो ऽपीति जात्या तुल्यरूपत्वाज्जातिकार्याय क-

ल्पते । नन्वेवं गोपिण्डेषु सास्नाविषाणाद्यवयवस्य तुल्यत्वात्सैव जातिरस्तु । नैवम् । सास्नादिमानिति प्रत्ययो जन्यते नतु गौरिति । *नसुप्तिङाविति । विभक्तिरन्तःसंबन्धः ।तेन वाचकत्वं पदत्वमित्यर्थ इति भावः । *आकृतिपदेनेति । इदं परतीत्या । वस्तुतस्तु गवादिषु य आकारविशेषावसायः स नान्तरीयकः, अन्यथा देवताऽपूर्वादिशब्देऽप्याकारविशेषप्रथनापत्तेः ।

तदुक्तं हरिणा—

प्रयोगदर्शनाभ्यासादाकारावग्रहस्तु यः ।
न स शब्दस्य विषयः सहि यत्नान्तराश्रयः ॥ इति ।

*कःशब्दइति । कः शब्दपदार्थ इत्यर्थः । *शब्दत्वमिति । आशङ्क्येत्यत्रान्वयः । *यदिति । उद्दिश्यमानप्रतिनिर्दिश्यमानयोः पर्यायेण परामर्शात् यत्सा इत्युभयलिङ्गेन परामर्शः । यथा शैत्यं हि यत्सा प्रकृतिर्जलस्येति । *इङ्गितम्—अभिप्रायसूचकः शरीरव्यापारः।*चेष्टितम्—कायपरिस्पन्दः।*निमिषितम्—अक्षिव्यापारः ।*शुक्लइति । अत्र शुक्लादिशब्दा गुणवाचकाः ।*भिन्नेष्वभिन्नमिति । आश्रयभेदेऽप्येकम् । अनेन सामान्यस्यैकत्वं प्रतिपादितम्।छिन्नेष्वच्छिन्नमित्यनेन तु नित्यत्वम्। *तत्त्वाभावम्-शब्दत्वाभावम् । *चक्षुरादिभिरपीति । यद्यपि चाक्षुषप्रत्यक्षे एव चक्षुस्संयोगादेर्हेतुता तथापि सामान्यत इन्द्रियसंयोगादेरपि हेतुत्वमावश्यकम् । अन्यथा प्रत्यक्षसामान्याभावे तत्तद्विशेषाभावस्य हेतुत्वे गौरवादिति भावः । किञ्च चक्षुस्संयुक्तसमवायरूपकारणबलाद्रूपादीनामपि ग्रहणे बाधकाभावः । प्रतिबन्धकताकल्पने गौरवात् । *अविशेषादिति । गौरित्यादि ज्ञानमात्रोपलक्षणमित्यर्थः । *अतएव—सामान्यस्य भानादेव । *घटत्वाव-

च्छिन्नेति । *कम्बुग्रीवात्वं संस्थानगता जातिः । तस्याः परंपरया घटवृत्तित्वाद् गुरुत्वम् । स्वरूपतस्तु द्वयोरपि जातित्वान्न गुरुत्वम् । तथाच कम्बुग्रीवादिमत्त्वस्य गुरुधर्मतया प्रतियोगितावच्छेदकत्वाभावादिति भावः । वस्तुतो गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वमनुभवसिद्धम् । प्रतियोगितायां कम्बुग्रीवादिमत्त्वावच्छिन्नत्वं भ्रम इति मतं त्वनादेयमेव । अबाधितप्रतीतिबलाद्वस्तुसिद्धौ गौरवस्याकिञ्चित्करत्वात् । अतएव नीलधूमत्वादीनां व्याप्यतावच्छेदकत्व हेत्वाभासे दीधितिकृता स्वीकृतमिति । यत्तु घटत्वावच्छिन्नप्रतियोगितासंबन्धेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतानिरूपिताभावविषयताशाली बोध इति। तन्न । उक्ताभावप्रतीतौ घटत्वावच्छिन्नप्रकारताया अस्वीकारे तादृशाभावबोधं प्रति घटत्वावच्छिन्नप्रकारताशालिज्ञानस्य हेतुतायां व्यभिचारापत्तेः । तस्य हेतुत्वे घटत्वादिनिर्विकल्पकानन्तरमपि तादृशाभावप्रत्यक्षापत्तेः ॥ ३८ ॥

(क टी ) विशेषान्तर वक्तुमुक्तमाह *तत्रेति । अखण्डवाक्यस्याखण्डवाक्यार्थबोधकत्वे सतीत्यर्थ. । अर्थवन्तो वर्णा अनर्थका वेति सदेहे आद्ये हेतुमुक्तमाह *प्रकृतीति । यत्तु प्राञ्च. पदादिघटकवर्णानां प्रत्येक वाचकत्वमिति । तन्न । दोषगणस्योक्तत्वात्तद्धनयन्नाह *प्रकृतीति। ननु वास्तव एवास्तु सोऽपीत्यत आह *वस्तुतस्त्वइति। आद्यार्थं स्पष्टयन्नाह *अतएवेति । तस्यावास्तवत्वादेवेत्यर्थः । उक्तमित्यत्रान्वय. । *निरवयवा.-निरवयवाश्च । अत्र पक्षे उक्तशङ्कां समाधत्ते *नैर्मल्येति। तत्तात्पर्यमाह *अनेनेति । भाष्येणेत्यर्थ । *हि-यतः। *तस्यैव-वर्णस्फोटस्यैव। एतत् "कर्त्तरि" इति सूत्रम्। एवमग्रेऽपि। *तत्र-तृचि। *तस्य-तृच.। *अन्येषाम्-तदभिन्नाना ण्वुलादीनाम्। तत्र लक्षणया ऽनिर्वाहमाह *शक्तीति । *बोधकत्वमिति। एवचावास्तवत्वमेवोचितमिति भावः। परसमतमपीदमित्याह *गौतमोऽपीति। प्रकृतयश्च प्रत्ययाश्चार्थाश्चेति समाहारद्वन्द्वः । *ते-शब्दा. । प्रस्तावात् ।

यदि उक्तवर्णस्फोटस्तदभिमतो भवेत्तर्हि प्राथमिकत्वात्तमेव व्याहरेत् त्तमपि वा। तस्मान्न्यायनये पदस्फोट एव। आधुनिकन्यायग्रन्थेषु सुबर्थादिविचारस्तु व्याकरणवासनावासितान्तःकरणतयेति बोध्यम्। शक्तं पदमिति तदेकदेशिमतनिरासायाह *विभक्तीति। अथ तदुपदेशक्रमेणाह *तत्रेति। तत्सूत्रे इत्यर्थः। न्यूनतानिरासायाह *प्रवृत्तीति। *आदिना गन्धादि। जातिलिङ्गमित्यत्र षष्ठीतत्पुरुषः। *अतएव-तस्या पदार्थत्वाङ्गीकारादेव। *आदिना-लिङ्गादि। परोक्त भाष्यसमतमपीत्याह *अतएवेति। तासां विशिष्टानां पदार्थत्वादेवेत्यर्थः। एवमग्रेऽपि। प्रश्नादावुच्चरितनाम् इत्यन्तेन्वयः। *इतिप्रश्ने इति। इत्याशयके "अथ गौः इत्यत्र कः शब्द" इति प्रश्ने इत्यर्थः। ग्रन्थविशेषण तत्तात्पर्यबोधकमाह *इतिशब्दबलादिति। आद्यादिना रसादि। द्वितीयादिना शक्तिः। तृतीयादिना क्रिया। *वक्ष्यमाणेति। अत्रैवेति भावः। एवमग्रेऽपि। *तत्त्वेति। शब्दत्वेत्यर्थः। प्रागुक्तार्थे कैयटसंमतिमाह *अतएवेति। उक्तोऽर्थः। तत्रादौ प्रागुक्तमेवाह *अथेतिक्त्वान्तेन। नन्वेवमपि सिद्धान्तविरोधो न्यूनत्वादित्यत आह *येनेत्यादीति। *अतएव च-शब्दजन्यबोधे गुणादिभानादेव च। आदिना रूपविशेषादि। ननु कथं श्रोत्रेण तद्ग्रहणमत आह *चक्षुरादीति। आदिना श्रोत्रादि। नन्वेवमितरवैयर्थ्यादीत्यत आह *विशेषस्त्विति। *अतएव—तस्य सामान्यतश्चक्षुर्ग्राह्यत्वादेव। आदिना गन्धविशेषादि। ननु भाष्यस्य शाब्दबोधविषयत्वेन तत्र तस्य तथा भानेऽपि चाक्षुषे तस्य तथा भाने मानाभावोऽत आह *अथेति। अतएवेत्यस्यार्थमाह *जातेरपीति ॥ ३८ ॥

तत्र जातिरनुगताकारप्रतीत्या स्वरूपत एकत्वेन च सिद्धा। अत एव सरूपसूत्रे भाष्ये "कथं पुनर्ज्ञायते एकाकृतिरिति, प्रख्याऽविशेषात्। नहि गौरित्युक्ते विशेषः प्रख्यायते शुक्लो नील" इत्यादि। 'प्रख्या बुद्धिः तस्या अविशेष एकरूपता' इति कैयटः। इयमेवानुगताकारप्रतीतिशब्देनोच्यते। एकाकारप्रतीति-

शब्देन च ।

अत एव प्राणप्रदत्वं जातेरुक्तं प्रकाशे । 'यावत्स्थितिसंबन्धित्वं च तत्त्वम्' इति तद्व्याख्यातारः । यावत्स्थिति एकाकारप्रतीतिर्हि प्राणः । तत्प्रदत्वं च जातेरेव न पाचकत्वादेरिति स्पष्टमेव । पाकक्रियाणामाश्रयभेदेन भेदात् । स्वगतजात्यैव तासामेकाकारप्रतीतिजनकत्वमित्यन्ये ।

अत एव कणादेनापि "सामान्यं विशेष इति बुद्ध्यपेक्षम्" इत्युक्तम् । 'अनुवृत्तिबुद्धिजनकत्वं सामान्यलक्षणं व्यावृत्तिबुद्धिजनकत्वं विशेषलक्षणम्' इति तद्व्याख्यातारः । तथा 'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' इत्युक्तम् । इतीत्यस्य व्यवहारप्रत्ययाविति शेषः । अनेन इदमेव सर्वजातिषु मानमिति सूचितम् । तथा "भावोऽनुवृत्तेरेव हेतुरिति सामान्यमेव" । 'भावः सत्ताऽनुवृत्तेरेव हेतुरिति सामान्यमेव । द्रव्यत्वादि तु अनुवृत्तेरितरव्यावृत्तेश्च हेतुरिति सामान्यं विशेषश्च । यावत्स्थिति एकाकारप्रतीतिरनुवृत्तिः' इति तद्व्याख्यातारः । यावत्स्थितीत्यस्याभावे पाचकत्वादेरपि जातित्वापत्तिः । कादाचित्कैकाकारप्रत्ययहेतुत्वात् । "भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नम्" इत्यनेनोपलक्षितनित्यत्वेनापीदं सूचितम् ।

गौतमोऽपि "समानप्रसवात्मिका जातिः" इत्याह । यावत्स्थिति एकाकारबुद्धिजननस्वभावेत्यर्थः । "आकृतिजातिलिङ्गाख्या" इति चाह । जातिलिङ्गमि-

१ गौत-ह्रीतेति पाठो ऽयं कुञ्जिकायुतमूलपुस्तके नोपलभ्यते ।

त्याख्या यस्या इत्यर्थः। रूपादिष्वपि रूपत्वादिजातिव्यञ्जकं यत् साऽऽकृतिर्जातिरिति तदाशयः। व्यक्तिस्तु आकारविशिष्टं समवायिकारणमेव। "मृत् कयाचिद् आकृत्या युक्ता पिण्डो भवति, सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति" इति पस्पशायां पतञ्जल्युक्तेः। तत्राकृतेरनित्यत्वाद्विशिष्टे ऽनित्यत्वम्। विशेष्यांशमादाय नित्यत्वमपि। तमादाय गौनमीये व्यक्तिः पृथग्गृहीतेति॥ ३९॥

(कुं० टी०) *प्राणो हानोपादानव्यवहारः स्वज्ञानेन तत्प्रदः। *यावात्स्थितीति। नन्वेवं परमाण्वादिशब्दानामपि जातिशब्दत्वं स्यात् न गुणशब्दत्वमिति चेत्। सत्यम्। परमाणुत्वमपि जातिरेव। तार्किकनयानुसारेण तु गुणशब्दत्वव्यवहारः। *अनुवृत्तीति। अस्ति हि सर्वेषु घटेष्वनुस्यूतस्य घटत्वस्य प्रतीतिस्तदेव सामान्यम्। एवंच जातिष्वपि सर्वासु जातिरित्येकाकारप्रत्ययजननाज्जातित्वमपि सामान्यमेव। *सदितीति। द्रव्यादिषु सदिति प्रतीतिर्यतः सा सत्तेत्यर्थः। सामान्यादिष्वपि सदिति प्रतीतेर्नोक्तयुक्त्या द्रव्यादित्रयसाधारणी सत्ता जातिः। धर्मादिष्वतीन्द्रियेषु सत्तायाः प्रत्यक्षासम्भवाच्च। न च घटः सन्निति प्रतीतिबलात्सत्तासिद्धौ तस्या एकार्थसमवायेन जातौ भानमिति वाच्यम्। वर्तमानत्वस्यैव सन्निति प्रतीतिविषयत्वात्। वर्तमानत्वं च भावत्वमेवेति नाननुगम इत्यन्ये। *इदमेवेति। एकाकारबुद्धिजननमेव। तथा च गौतमसूत्रं "समानप्रसवात्मिका जातिः" इति। समानाकारः प्रसवो बुद्धिजननं स्वरूपं यस्याः सेति तदर्थः। *भावोऽनुवृत्ते-

रिति। सत्ताऽनुवृत्तेरेव हेतुरित्यतः सामान्यमेव, नतु विशेष इत्यर्थः। कणादसूत्रस्थभावपदस्यार्थमाह *सत्तेति। *द्रव्यत्वादित्विति। सर्वेषु द्रव्येष्वनुवृत्तत्वात्सामान्यं, गुणादिभ्यो व्यावृत्तत्वाद्विशेषोऽपीत्यर्थः। एवञ्चैकत्वमनेकवृत्तित्वं नित्यत्वं च लभ्यते। अनुवृत्तेरेवेत्येवकारव्यावर्त्यमाह *यावत्स्थितीति। आश्रयस्थितिपर्यन्तमित्यर्थः। *कादाचित्केति। पाककालिकेत्यर्थः। *इदंसूचितमिति। पाचकत्वादीनामनित्यत्वाज्जातित्वं नेति सूचितमित्यर्थः॥ ३९॥

(क०टी०)*तत्र-तासां मध्ये। तया स्वरूपत सिद्धावपि भेदे वैयर्थ्यमेव, अत आह *एकत्वेनचेति। अभेदेनेत्यर्थः। *अतएव-तया तस्या एकत्वेन सिद्धेरेव। भाष्ये उक्तामिति शेषः। आकृतिरत्र जातिः। अवयवसंस्थानस्य भिन्नत्वात्। *आदिना कपिला कपोतिकेति। *तेन—तदविशेषेण। *इयमेव—तदेकरूपतैव। *अत एव-तस्या एकत्वादेव। *तत्त्वम्-प्राणप्रदत्वम्। सामान्ये तत्र नपुसकम्। ननु इद कथं गुणादिव्यावृत्ततया तैरुक्तमत आह *यावदिति। लक्षणया। *हि—यतः एकत्वेन। तदेवाह *पाकेति। मतान्तरमाह *स्वगतेति। *अतएव—तस्यास्तत एकाकारप्रतीतिजनकत्वादेव। बुद्धिशब्देन तद्विशेष इत्याह *अनुवृत्तीति। तदुक्तिमेवाह *नथेति। *यत.-यस्माद्धर्मात्। *इदमेव-व्यवहारप्रत्ययोभयरूपमेव। तदुक्तिमेवाह *तथेति। तदंर्थमाह *सामान्यमिति। योग्यतयेति भाव.। "तस्य भावस्त्वतलौ" इतिवत्। सर्वत्र तदुक्तिफलमाह *यावदिति। *इदम्-यावत्स्थितिसम्बन्धित्वम्। नतु वास्तव तत्त्वमिति न विरोध इति भावः। तदुक्तिमेवाह *आकृतिरिति। नन्वेव रूपादावाकृत्यभावेन तत्सिद्धिर्न स्याद-

१ वस्तुतस्तु इद अर्थकथनपरत्वेन सामान्यमेवेत्यस्य व्याख्यान चिन्त्यम्। सामान्यमेवेत्यन्तस्य वैशेषिकसूत्रत्वात्। अग्रे भावः सत्तेत्यस्य व्याख्यातृग्रन्थस्थत्वाद्। अतएव भाव इत्यादेरेवार्थकथनपरत्वमाश्रित्य कुञ्जिकाकारो व्याख्यत्।

त आह *रूपादिष्वपीति । *आकृतिविशेषम्–तदुयुक्तम् । आकारवि-शिष्टमिति पाठान्तर सुगमम् । *तत्र–तयोर्मध्ये । यावद्व्यवहारं स-मवायिकारणस्य नित्यत्वादाह *विशेष्यांशेति । *तमिति । विशेष्यां-शमादायैवेत्यर्थः । जात्याकृतीति सूत्रे इत्यर्थः ॥ ३९ ॥

चरकेऽप्युक्तम्—

सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृद् । इति । एकत्वकरत्वमेकत्वबुद्धिकरत्वम् । यदनेकासु गवादिव्य-क्तिषु 'अयं गौः अयं गौः' इत्येवमाद्येकाकारबुद्धिरेकं सा-मान्यं विना नाभ्रान्ता भवति । एव च तदेकत्वालम्बना सत्यपि व्यक्तिभेदे एकत्वबुद्धिर्युक्तैव । तदेव गोत्वम-श्वादिभ्यो व्यावृत्तिबुद्धिजनकतया विशेष इति त-दर्थः । एतद्बीजमप्युक्तं तत्रैव–

"तुल्यार्थता हि सामान्यं विशेषश्च विपर्ययः" इति ।

'तुल्यार्थता तुल्यानामर्थानां भावः । अ-र्थेषु तुल्यत्वं च एकाकारप्रतीतिजनकधर्मवत्त्व-म् । एवंच तेषां भावः स धर्म एव । एवंच एकाकारप्रतीतिजनकं यतः सामान्यमतः तत् तदेक-त्वकरम् । यथा सकलगवीनां गोत्वम् । विपर्ययः अतुल्यार्थता, अनेकाकारप्रतीतिजनको धर्मः स यतो-विशेषोऽतः पृथक्त्वकृत्सः । यथा गवाश्वयोर्गोत्वाश्व-त्वे इति तदर्थः' इति तद्व्याख्यातारः । एवं च पाचकत्व-मपि सामान्यं भवत्येव । जातित्वं तु यथा न तथोक्तम् । "अतिशायने तमब्" इति सूत्रे भाष्ये "जननेन यत्प्रा-प्यते सा जातिः" इत्युक्तम् । अनेनापि तस्या नित्य-त्वं बोधितम् । एतच्च लक्षणमद्वैतिमते । ब्रह्मातिरिक्तस्य

सर्वस्य तन्मते जन्यत्वात्। अविद्यादेरपि जन्यत्वमुक्तम्। जीवानामप्युपाधीनां जन्यत्वेन विशिष्टानां जन्यत्वमेव। ब्रह्मणस्तु निर्धर्मकत्वात्तत्र जात्यभाव एव । अन्यथा न्यायादिनये परमाण्वादीनामजन्यत्वेन परमाणुत्वादिजात्यव्यापकत्वमस्य लक्षणस्य स्यात् । सरूपसूत्रे भाष्ये तु "भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः" इत्युक्तम् । तन्निष्कर्षस्तूक्तः ।

एतेन कारणतावच्छेदकत्वादिनैव जातिसिद्धिरित्यपास्तम् ।

सखण्डोपाधावपि तत्तद्रोगनाशत्वादौ तत्तच्चूर्णत्वादौ च तस्य सत्त्वेन कारणतावच्छेदकत्वादिना जातेरन्वयव्यतिरेकयोरुभयोरपि व्यभिचारेण कारणतावच्छेदकत्वादिना जातिसाधनासम्भवात् । बाधकाभावे इत्यादिविशेषणदाने तु गौरवम् ।

किञ्च घटत्वशरावत्वाद्यनेकधर्मपुरस्कारेणानेककार्यकारणभावस्वीकारापेक्षया सर्वानुगतं यं कंचित्सखण्डधर्ममवच्छेदकीकृत्यैककार्यकारणभावे लाघवेन कार्यतावच्छेदकत्वादिना न जातिसिद्धिरित्यलम् ॥४०॥

(कुं० टी०) *तदेकत्वालम्बना—जात्येकत्वाश्रया । *अर्थेषु—व्यक्तिषु । *वाचकत्वमपीति । सकलपक्तृधर्मत्वात् । *यथानेति । अनित्यत्वात् । *जननेति । सूक्ष्मरूपेषु कारणेषु सूक्ष्मरूपेण स्थिता जातिर्जननकालसम्बन्धादिभिरभिव्यक्ता भवतीत्यर्थः ।

अय भावः—जात्यात्मना कारणेषु कार्याणामवस्थानात्तत्र

साधनप्रवृत्तौ कार्यकारणयोरभेदात्तत्समवेतजात्याभिव्यक्तिः । यथैकस्मिन्घटे नष्टे ऽपि व्यक्त्यन्तरे घटत्वादिजातिरवतिष्ठते । एवमुत्पन्ने घटे घटत्वादिजातिरभिव्यज्यते इति ।

ननु प्रलये अनित्यानां सर्वेषां विनाशान्निराश्रया जातिः कथमवतिष्ठते इति चेत् । युगपत्सर्वेषां भावानां प्रलयो नास्तीति मते परमाण्वादावेव जातयः । अथवा ब्रह्माण्डान्तरविनाशे ऽपि ब्रह्माण्डान्तराणां प्रलयो नास्ति ।

तदाहुः—

अण्डानामीदृशानान्तु परिसंख्या न विद्यते। इति ।

ये महाप्रलयमिच्छन्ति तन्मते विशेषेषु प्रकृतौ लीनेषु प्रधाने च ब्रह्मणि वा मूलकारणे लय एव प्रलय इति शक्तिरूपेषु पदार्थेषु जातियोगस्तदानीमप्यविरुद्धः। द्रव्यात्मना जातीनामवस्थानात्। ब्रह्मात्मकद्रव्यरूपत्वात् । *अनेनापीति । एतद्भाष्येणापीत्यर्थः । जन्यकालमभिव्यक्तत्वान्नित्यत्वमेवेत्यर्थः । ननु परमाण्वादीनां जन्यत्वाभावात् तत्र जात्यनापत्तिरत आह *एतच्चेति । तथाच परमाणूनामपि जन्यत्वमेव । परमाणुरनित्यः पृथिवीत्वादित्यनुमानाच्च । ननु सर्वस्य जन्यत्वमयुक्तम् । अविद्याया अनादित्वप्रवादादत आह *अविद्यादेरपीति । नन्वात्मभूतानां जीवानां कथं जन्यत्वमत आह *उपाधीनामिति । अन्तःकरणानां जन्यत्वात्तद्विशिष्टाना जीवानामपि विशेषणद्वारा जन्यत्वमेवेत्यर्थः । यद्यप्यग्निविस्फुलिङ्गोदाहरणेन जीवस्योत्पत्तिः श्रूयते ।

निस्सरन्ति यथा लोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।
सकाशादात्मनस्तस्मादात्मानः प्रभवन्ति हि ॥ इति—

स्मृतिश्च । तथापि स्थूलशरीरग्रहणमेव प्रभवशब्दार्थः । *अ-

न्यथा-पदार्थमात्रस्य जन्यत्वाभावे । तप्तायःपिण्डनिक्षिप्तानां निश्शेषं नाशस्यानुभवसिद्धत्वान्न परमाणूनां नित्यत्वमिति भावः । *अस्य लक्षणस्य-जननेन यत्प्राप्यत इत्यस्य । *तस्य सत्त्वेनेति । रोगनाशत्वे कार्यतावच्छेदकत्वस्य, चूर्णत्वे कारणतावच्छेदकत्वस्य च सत्त्वेनेत्यर्थः । अत्र जात्यस्वीकारादन्वयव्यभिचारः । क्वचिच्छक्यतावच्छेदकत्वादिनापि स्वीकाराद्व्यतिरेकव्यभिचारः । कार्यतावच्छेदकतयाच घटत्वं जातिरिति मतं दूषयति *किञ्चेति ॥ ४० ॥

(क०टी०) कणादोक्ते ऽर्थे भाष्यसमतिमप्याह *चरके ऽपीति । यथाश्रुतार्थासम्भवादाह *एकत्वेति । *यत्-यत । विषयबाधकृत भ्रान्तत्व तदभावाय तदिति भावः । तदेवाह *एवञ्चेति । तद्भिना तस्याः भ्रान्तत्वापत्तौ चेत्यर्थः । *तदेकत्वेति । जात्येकत्वाश्रयिकेत्यर्थः । *तदेव-सामान्यमेव । *विशेषः-सोऽपि । *एतदिति । एतत्करत्वबीजमित्यर्थ. । *तत्रैव-चरके एव । उभयशेषमाह *तद्याख्येति । *एव च-चरकोत्तरसामान्यलक्षणे या वत्स्थितीत्यस्यानिवेशो च ।*पाचकत्वमपि-पाचकत्वादिकमपि।कणादाद्युक्तजातिलक्षणे तन्निवेशादाह *जातित्वत्विति । इदमेव द्रढयन्नाह *आतिशायनेति । तत्र हि-जातेर्नेति वार्त्तिकप्रत्याख्यानायेदमुक्तम् । "नचैतस्य प्रकर्षापकर्षौ स्त" इति एतच्छेषस्तत्र । *अनेनापि-जननेन प्राप्यत्वकथनेनापि । अपिना भिन्नेष्विति प्रागुक्तभाष्यसमुच्चयः । *नित्यत्वमित्युपलक्षणमेकत्वानेकवृत्तित्वयोरपि । नित्यगतजातेर्जननेनाप्राप्यत्वादयत्नलभ्यपरमेतादिति तत्रत्यकैयटासांगत्य ध्वनयन्नाह *एतच्चेति । नन्वविद्यादेरनादित्वादतत्त्वेन कथ तज्जातावेतल्लक्षणाक्रान्तताऽत आह *अविद्यादेरपीति । इदमप्युक्तमेव । वक्ष्यते इत्यपपाठः । *अन्यथा-अस्य सर्वमतसाधारणत्वे । *न्यायादिपरमाण्वादीत्यादिभ्यां सांख्यादिमतेप्रधानावयवसत्त्वादिपरमाणुपरिग्रह. । सर्वमतसाधारण भाष्योक्त तल्लक्षणमाह *सरूपेति । अत एव तु । तत्र हि सरूपसूत्रप्रत्याख्यानाय

"आकृत्यभिधानाद्वैक विभक्तौ वाजप्यायन" इतिवार्त्तिकमुपक्रम्य तस्या एकत्व वाच्यत्वं च प्रख्याऽविशेषाव्यपवर्गगतिभ्यामुक्त्वा "इतीन्द्रवद्" इत्यनेनानेकवृत्तित्वमुक्त्वा अनाश्रितत्वेनानैकात्म्येन च नित्यत्वमुक्त्वा नानार्थेष्वपि क्रियासामान्यात् सिद्धमित्युक्त भगवता । तदर्थ कैयटोक्तमाह *भिन्नेष्विति । अभिन्नत्वमुभयविशेषणम् । तत्त्व चेकाकारवत्त्वम् । *अभिधान–शब्दः । *प्रत्ययः–ज्ञानम् । *आदिना कार्यतावच्छेदकत्वम् । *एवेनानुगताकारप्रतीत्यादिव्यवच्छेदः । एतेनेत्यस्यार्थमाह *सखण्डोपेति। अखण्डोपाधेरपिना समुच्चय. । *तस्य–कारणतावच्छेदकत्वादेः। तदाद्योरपि मिथ. कार्यकारणभावात् । *आदिना–सहेति शेषः। *जाते.–जातित्वस्य । क्वचित्तथा पाठ एव । नान्यतरव्यभिचार इत्याह *उभयोरपीति । *आदिना अनेकवृत्तित्व इत्यस्य परिग्रहः । इदमप्यनेककार्यकारणभावस्वीकारेण । वस्तुतः स एव नेत्याह *किञ्चेति । कार्यतावच्छेदक साध्यमृद्विकारत्वादि कारणतावच्छेदकं पञ्चतन्मात्रपरिणामविशेषत्वमनुगत सखण्डम् । किञ्च प्रागुक्तभाष्यादिसकलविरोधस्तदाह *अलमिति ॥ ४० ॥

शतशोऽपि गौरित्युक्ते शुक्लत्वादिविशेषानवगमपूर्वं सामान्यस्य शब्दतोऽवगतेः सा शब्दशक्या । द्रव्यस्यैव शक्यत्वे तु तस्य गुणसमूहरूपत्वेन शुक्लत्वादिविशेषावगतिप्रसङ्ग. । अतिरिक्तद्रव्यवादेऽपि द्रव्यस्य विशेषानालिङ्गितस्य बोधाभावेन स एव दोषः । उक्ताकृतेरपि शब्दवाच्यत्वाच्च । तत्र रूपक्रियादि सामान्यरूपेणैव भासते ।

यद्यपि प्राथमिकशक्तिग्रहो विशेषालिङ्गितव्यक्तिविशेषे एव, तथापि आवापोद्वापन्यायेन पुरुषान्तरात् गामानयेत्येतच्छ्रवणोत्तरमेव व्यक्त्यन्तराण्यानयतो दृष्ट्वा विशेषे गृहीतामपि शक्तिं

तज्जात्याश्रयमात्रे व्यवस्थापयति । कारणत्वादि-ग्रहस्थले ऽप्येवमेवेति न कश्चित्सामान्यलक्षणोपयोगः । यथा गोसदृशो गवय इति शक्तिग्रहे न व्यक्तिविशेषभानं तद्वत् ।

तदुक्तं सरूपसूत्रे भाष्ये—

"अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयते, नहि गौरित्युक्ते व्यपवर्गो गम्यते शुक्लो नील इत्यादि" इति । व्यपवर्गो विशेषः तस्य गतिः प्रतीतिरित्यर्थः । ननु प्रख्याऽविशेषाव्यपवर्गगत्योः को विशेष इति चेत्—

शृणु । 'अनभिधीयमानाऽपि जातिः संनिधिमात्रेण प्रख्याया अविशेषे निमित्तं भवति । प्रख्याया अविशेषः 'तदेवेदं ज्ञानम्' इतिप्रत्यभिज्ञाविषयत्वम् । तेनैकत्वे जातिपदार्थे च सिद्धेऽपि अभिधानासिद्धिः । तथा वनमिति सर्वविशेषाभ्यन्तरीकरणेनाव्यपवर्गगतावपि प्रख्याया अविशेषो नास्ति । भिन्नवृक्षालम्बनत्वाद्व-नमिति प्रत्ययस्य । यथाऽऽम्रवनं पलाशवनमित्यादिज्ञा-नेषु तदेवेदं ज्ञानमितिप्रत्यभिज्ञाऽभावाद्' इति कैयटे-नैव समाधानात् ।

अत एव 'सामान्यशक्तात् शब्दाद्विशेषव्यक्ति-बोधे लक्षणा' इति वृद्धाः । सा च शब्दतन्मात्रस्यैव परिणामविशेष आकाशवद्विभुः ॥ ४१ ॥

(कुं० टी०) *विशेषानवगमेति । व्यक्तेः शक्यत्वे तु विशेषो ऽपि प्रतीयेतेति भावः । *सा—जातिः । ननु गुणसमूहो द्रव्यमित्ययुक्तं, द्रव्यपदार्थवादिव्याडिमते आख्याते ऽपि क्रि-

याविशिष्टद्रव्याभिधानादतिरिक्तमेव द्रव्यम् । अत एव शुक्लादीनामपि द्रव्यपदार्थता सिद्धा । 'इदं' 'तद्' इतिसर्वनामपरामर्शयोग्यं वा द्रव्यम्, तत्तदुपाध्यवच्छिन्नं ब्रह्म वा द्रव्यमित्यत आह *अतिरिक्तेति । *स एव—शुक्लत्वादिभानप्रसङ्ग एव । *उक्ताकृतेरिति । जातिशक्तिवादे तु जात्या स्वाश्रयव्यक्तीनामाक्षेपे सामान्यरूपेणैव गुणादीनां भानमित्यर्थः । *यद्यपीति । बालानां शक्तिग्रहो यद्यपि व्यक्तिविशेष एव, तथापि व्यक्त्यन्तरे ऽपि आनयनादिदर्शनाज्जात्याश्रयमात्रे शक्तिव्यवस्थितिरित्यर्थः । *कारणत्वादीति । दण्डत्वाश्रये घटकारणताग्रहाद्व्यक्त्यन्तरे ऽपि तत्संभवोऽस्त्येवेति सामान्यलक्षणाया नोपयोग इत्यर्थः । अत एवोक्तं हरिणा—

निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियायाः प्रयोजिका ॥ इति ।

अस्यार्थः—यद्यपि घटं करोतीत्यादावसतः क्रियासाधनता न सम्भवति, तथापि जातिरूपाश्रयेण सा साधनता, व्यक्तिरूपाश्रयेण निर्वर्त्यतेति । एवमेकत्र घटत्वाश्रये चक्षुस्संयोगाद्देशान्तरस्थघटस्यापि बोधसम्भवे तदर्थमपि सामान्यलक्षणा न स्वीकार्या ।

यत्तु अतीतघटादेर्वर्त्तमानकालानवच्छेदकतया तत्प्रत्यक्षानापत्तिः, अतः सामान्यज्ञानस्य प्रत्यासत्तित्वमावश्यकम् । एतेन कार्याव्यवहितप्राक्क्षणावच्छेदेन कारणाभाव एव व्यभिचारः । अतीतघटादेश्च कारणऽभावस्याभावेऽप्यवच्छेदकभावान्न व्यभिचार इत्यपास्तमिति ।

तन्न । अतीतघटादावपि बुद्ध्या विषयीकृत्य घटत्वाश्रयत्वेन ज्ञानसत्त्वात् ।

*तद्वदिति । यत्तु पर्वतीयधूमे व्याप्तिग्रहो न स्यादिति । तन्न । धूमत्वेनैव रूपेण महानसीयधूमे व्याप्तिग्रहात् ।

ननु प्रसिद्धधूमे व्याप्तिरेव गृहीता अप्रसिद्धस्य चाऽनुपस्थित्या 'धूमो वह्निव्यभिचारी न वा' इति संशयो न स्यादिति चेन्न । प्रसिद्धधूमे तत्तद्धूमत्वेन व्याप्तिनिश्चये ऽपि धूमत्वेन तत्संशयसम्भवात् । *अव्यपवर्गगतेश्चेति । विशेषानवगमादित्यर्थः ।

अयं भावः—शुक्लादिभेदेन भिन्नास्वपि व्यक्तिषु एकाकारप्रतीत्या जातिसिद्धौ तत्रैव शक्तिग्रहः । नापि शुद्धव्यक्तीनां बोधोऽस्ति। व्यक्तीनां विशेषरूपत्वेन विशेषावगतिप्रसङ्गात् । जातेः शक्यत्वे तु तदाक्षिप्तव्यक्तौ सामान्येन भानमिति । *को विशेष इति भाष्ये किमर्थमनयोरुपन्यास इत्यर्थः।*अनभिधीयमानाऽपीति । वाच्यत्वेनास्वीकृताऽपीत्यर्थः । *सन्निधिमात्रेणेति । शक्तिग्रहे व्यक्तावुपलक्षणतामात्रेणेत्यर्थः । तथाचानेन बुद्ध्यैक्यमूलकजात्यैक्ये सिद्धे ऽपि वाच्यत्वं नोपपादितमतो ऽव्यपवर्गगतेश्चेत्ययुक्तमिति भावः । *तदेवेदं ज्ञानमिति । तदुच्चारितगोशब्दाद्यादृशं ज्ञानं तादृशमेतदुच्चारितादित्याकारकमित्यर्थः । *तेनैकत्वे इति । उक्तयुक्त्या जातिपदार्थे सिद्धे तस्या एकत्वे च सिद्धे ऽपि तस्या वाच्यत्वं न सिद्धमित्यर्थः । द्वितीयहेतुना त्वेकत्वं न सिद्धमित्याह *तथेति । *अविशेषइति । एकरूपत्वमित्यर्थः । वनशब्देन कदाचिदाम्रसमुदायस्य कदाचित्खदिरसमुदायस्य प्रतीतेर्न बुद्ध्यैक्यमित्याह *भिन्नेति । *आलम्बनत्वात्—विषयत्वात् । *कैयटेनेति । उक्तविभागस्य कैयटेन प्रदर्शितत्वादित्यर्थः । कथं तर्हि सर्वनामनि न लक्षणेति

---

१ अपि शब्दो भिन्नक्रम. बोधपदोत्तर द्रष्टव्यः ।

प्रवादः, विशेषबोधार्थं लक्षणाया आवश्यकत्वात्, इति चेत् । तदादिन्यायेन सामान्ये शक्तस्य विशेषरूपेणोपस्थापकत्वमिति मते तथा संवादात् ॥ ४१ ॥

(क०टी०)सैव वाच्येति सिद्धान्तमाह *शतशोऽपीति । अनन्तवचनोऽय शतशब्दः । *सा—साऽपि।विषयभेदेन । अत एवाह *द्रव्येति । सर्वत्रेति भाव । एवेन तद्व्यवच्छेदः । व्यवहारस्य तत्रैव सम्भवात् । सिद्धान्तमतेनाह *गुणेति । परमतेनाह *अतिरिक्तेति । गुणाद्याश्रयस्यैव द्रव्यत्वात् । एवांशे दूषणमाह *उक्तेति । 'गां लिख'इत्यादाविति भाव । *तत्र—आकृतिमिति । जाते· शक्यत्वमप्रमाणमिति शङ्कते *यद्यपीति । *पुरुषान्तरात्—प्रयोज्यवृद्धभिन्नात् । *बालः—यो व्युत्पित्सु । विशेषशक्तिग्रहानन्तरमिति शेषः । *श्रवणोत्तरमेव—नतु वाक्यान्तरश्रवणोत्तरम् । *मात्रङ्कात्स्न्र्ये । आदिना कार्यत्वम् । इद परसमतमपि स्थलविशेषे इत्याह *यथेति । *शक्तिग्रहे—बहुव्रीहिणा यथा तत्र तत्त्वेन सर्वोपस्थितिस्तथाऽत्र तत्त्वेन तदुपस्थितिरिति न तदुपयोग । एतेन तासां नैतत्संभव इत्यपास्तम् । *इत्यादीत्यादिना-कपिला कपोतिकेति । *अप्रतीतिरिति । विशेषानवगतिपूर्वं सामान्यस्य शब्दतोऽवगतिरित्यर्थं ।

अय भावः—गुणादिभिन्नेष्वनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रहः शब्दात्तस्या बोधश्च । व्यक्तीनां त्वानन्त्यात्तासु न शक्तिग्रहो नापि शुद्धानान्तासां बोधः । तासां विशेषरूपात्वेन विशेषावगतिप्रसङ्गात् । यथा आकृतिरूपादिकं शाब्दबोधे भासते सामान्येन तथा विशेषोऽपि भासेत । जातेः शक्यत्वे तु तदाश्रयत्वेनाक्षेपादिना सामान्याकृतिरूपादेरेव ग्रहणमिति न दोष इति

*कोविशेषइति । एकेनैव हेतुना एकत्वाभिधानयोः सिद्धत्वादिति भाव । *सन्निधिमात्रेण—शक्तिग्रहे व्यक्तावुपलक्षणतामात्रेण । *प्रत्यभिज्ञेति । तदुच्चरितगोशब्दाद्यादृशः प्रत्यय तादृश एवैतदुच्चरितादित्येव प्रत्यभिज्ञाविषयता । साचैकाकारतां वि

१ तद् सामान्यम् । २ एवो द्रव्यस्यैवेत्येतदूषटक ।

नाऽनुपपन्नेत्यर्थः । द्वितीयहेतुनाऽभिधाने सिद्धेऽप्येकत्वं न सिध्यतीत्याह *तथावनमिति । *अविशेष इति । एकरूपत्वमित्यर्थः । वनशब्देन कदाचिदाम्रसमुदायस्य, कदाचित्पलाशसमुदायस्य, कदाचित् खदिरसमुदायस्य, कदाचिदाम्रादिसमुदायस्य प्रतीतेरिति तात्पर्यम् । तदाह *भिन्नेति । *अतएव-विशेषे शक्त्यभावादेव । *सा च-जातिः ॥ ४१ ॥

**साच जातिः सर्वत्र । आकाशजातिसमवायादप्यौपाधिकानेकत्वात् ।**

**तदुक्तं हरिणा–**

**संयोगिद्रव्यभेदेन देशो च परिकल्पिते ।**

**तेषु देशेषु सामान्यमाकाशस्यापि विद्यते॥ इति ।**

**आकाशेत्युपलक्षणम् ।**

**अर्थजात्यभिधाने ऽपि सर्वे जात्यभिधायिनः ।**

**व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः॥ इतिच ।**

**जात्यभिधायिनः, जातिविशिष्टवाचकाः । व्यापारलक्षणा, प्रयोजनज्ञाप्याः । शब्दस्यान्वयिरूपमनवच्छेदकीकृत्य अप्रत्यायकत्वात् । एवं च 'निस्सामान्यानि सामान्यानि' इत्यनादेयम् । सामान्यानीत्यस्य शब्दस्याबोधकत्वात् ।**

**किञ्च ब्रह्मण एव प्रमाणसिद्धतया सर्वे भावा ब्रह्मणः शक्तिभूता नतु ततो भिन्नाः । तत्र यथाव्यवहारं शक्तिकल्पनेति सर्वत्र जातिद्रव्यविभागः । आकाशत्वं, घटत्वमिति व्यवहारस्य तुल्यत्वात् । तत्तत्कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वमिति मते श्रोत्रत्वस्य जातित्ववत् ।**

**सा च जातिरुत्पत्तेः प्राक् नाशे च सूक्ष्मरूपेष्वाश्रये-**

ष्ववातिष्ठते इति नित्यत्वं तस्याः।अनुगताकारज्ञानजनकं व्यक्तीनां यत्किञ्चिद्रूपं तत्सर्वं जातिः। एवं च जातिः, उपाधिरिति पर्यायाविति हेलाराजः।

सर्वजातीनां व्यापकत्वेऽपि पदार्थानां विचित्रशक्तित्वात् कां चिदेव जातिं कश्चित्पदार्थोऽभिव्यनक्ति न सर्वां सर्वः। सा च कदाचित्स्त्रीत्वयुक्तेन पिण्डेन व्यज्यते, कदाचित्पुंस्त्वयुक्तेन, कदाचिदेकाधारस्था, कदाचिदनेकाधारस्थेति बोध्यम्।

'तस्याः प्राधान्येऽपि स्वाश्रयसमवेतत्वेन संख्यादेस्तत्र बोधात् तत्तल्लिङ्गवचनोपपत्तिर्गुणवचनशब्दवद्' इति सरूपसूत्रभाष्ये स्पष्टम्। सा च नित्येत्युक्तम्।

अत एव भाष्ये "सिद्धे शब्दार्थसबन्धे" इति वार्तिके "सिद्धे शब्दे ऽर्थे सम्बन्धेचेति विग्रहः कं पदार्थं मत्वा" इति प्रश्ने "आकृतिमित्याह। आकृतिर्हि नित्या द्रव्यमनित्यम्"। अत्राकृतिपदेन जातिः संस्थानं च। उभयमपि नित्यम्। अनयोर्यथा नित्यत्वं तथा वक्ष्यते। "अथवा द्रव्ये एव पदार्थे एष विग्रहो न्याय्यः–सिद्धे शब्दे ऽर्थे सम्बन्धेचेति। द्रव्यं हि नित्यमाकृतिरनित्या। एवं हि दृश्यते लोके मृत् कया चिदाकृत्या युक्ता पिण्डो भवति पिण्डाकृतिमुपमृद्य घटिकाः" इत्यादि॥ ४२॥

*सर्वत्रेति। पदार्थमात्रे इत्यर्थः। ननु आकाशादीनामेकव्यक्तिकतया कथं तत्र जातिरत आह *आकाशेति। आकाशजातिसमवायानां सर्वेषामनेकत्वमित्यर्थः।

एतेनाकाशपदान्निर्विकल्पक एव बोध इति, शब्दाश्रयत्वमेवाकाशपदशक्यतावच्छेदकमिति चापास्तम्।

*सयोगिद्रव्यभेदेनेति। अयं भावः—सर्वभूतानामधिकरणमाकाशम्, अवकाशदानाद्ध्याकाशम्। तथाच इह देशे घटसंयोग इति व्यवहारात्संयोगिनां घटादीनां यो भेदस्तद्वशादाकाशस्यापि भवत्यौपाधिको भेदः। एवंच प्रतिदेशमाकाशमिदमित्यभिन्नप्रत्ययलक्षणमस्त्याकाशसामान्यम्। एवं कालस्यापि युधिष्ठिरादिसंयोगवशादनेकत्वम्। एवं दिक्पालादिसंयोगवशाद्दिशोऽप्यनेकत्वम्। एवं समवायस्यापि सबन्धिभेदादेनकत्वोपचारः। सर्वत्रेहबुद्ध्यनुवृत्तेर्जातिकल्पनम्। *उपलक्षणमिति। जातिसमवायबुद्धेरपीत्यादिः। अत्र सर्वैर्गवादिशब्दैः स्वरूपपरैरर्थपरैश्च प्रथमं गोशब्दत्वादिजातिरेवाभिधीयते पश्चात् शब्दार्थयोरभेदारोपाद्गोत्वादिरूपार्थजातिषु अध्यासकल्पना।

तदुक्तं हरिणा—

स्वजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना॥ इति।

इत्थं स्वसिद्धान्तमुपपाद्य भर्तृहरिर्मतान्तरमप्युपपादयति *अर्थजात्यभिधानेऽपीति। यदा विशुद्धा एवाऽर्थजातयः शब्दैरभिधीयन्त इत्याश्रीयते तदा सर्वे जात्यभिधायिनो ऽपि शब्दा जातिवाचिन एव। ननु निस्सामान्यानि सामान्यानीति सिद्धान्तात्कथं जात्यादिशब्दा जात्याधारे जातिमभिदध्युरत आह *व्यापारलक्षणा इति। व्यापारः प्रयोजनं तदेव लक्षणं हेतुर्येषाम्। अभिधारूपव्यापारवशाद्धि शब्दार्थकल्पनम्। यथा द्रव्यादिशब्दानामनुगमकधर्मस्वीकारः। एवं गोत्वाश्वत्वे सामान्ये इत्याद्यनुभवात्तत्राप्यनुगमकधर्म आवश्यक इति।

*अवच्छेदकीकृत्येति । यथाहि घटादिशब्देषु घटत्वादिकमवच्छेदकीकृत्य शक्तिग्रह एवं जात्यादिशब्देऽपि जातित्वसामान्यमवच्छेदकमित्यर्थः । किञ्च जात्यादिषु सामान्याभावे "जात्याकृतिव्यक्तयस्तु पदार्थः" इति गौतमसूत्रस्यापि विरोधः । *अबोधकत्वादिति । अन्वयितावच्छेदकरूपास्वीकारे गोत्वाश्वत्वादीनि सामान्यानीति शब्दस्य बोधकत्वासम्भवादित्यर्थः । *ब्रह्मण एवेति । ननु ब्रह्मातिरिक्तस्यातात्त्विकत्वे तदन्तर्गतश्रुतेरपि तथात्वान्नेष्टसिद्धिरिति चेत् । श्रुत्यर्थस्य ब्रह्मणः "सत्यं ज्ञानम्" इत्यादिना तात्त्विकत्वदृष्टेस्तस्यास्तात्त्विकप्रामाण्यात् । *ब्रह्मणः शक्तिभूता इति ।

अयं भावः—अविद्याकल्पितस्य भावभेदस्यापारमार्थिकत्वादेकस्य नानात्वोन्नीयमानशक्तिभेद एव युक्त इति । अविद्यावृत्तिरूपस्य भेदस्य सर्वपदार्थानुयायिनो ऽसत्यत्वाद्व्यक्तिरिति व्यवहारः । भेदप्रत्यये सत्यप्यन्वयि रूपं जातिः । यथाच रुचकस्वस्तिककुण्डलादिविकारभेदे ऽपि सुवर्णमित्येव सर्वत्रानुयायि रूपं सत्यम् । एवंचैकैव जातिर्महासत्ताख्या ब्रह्मस्वभावा । तस्या एव गोत्वाश्वत्वजातिविवर्तः ।

तदुक्तम्—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।

जातिरित्युच्यते । इति ।

आश्रयैर्भिद्यमाना उपचरितभेदा गवादिषु महासत्तैव गोत्वादिजातिः । तस्यामेव शब्दा वाचकत्वेन वर्तन्ते । एवंचाभावस्यापि बुद्ध्या निरूपणात् महासत्ताया अवियोगात्प्रातिपदिकमात्रवाच्या सा । अतएव 'प्रातिपादकार्थः सत्ता'इति प्राहुः । धातुरपि क्रियाव्यक्तिषु समवेतामुपाध्यनु-

गृहीतनानात्वां सत्तामेवाभिधत्ते। उपाधिभेदादेव च न सर्वेषां नानार्थत्वम्।

अत्र सर्वे भावा इत्युक्त्वा मायाया अपि शक्तित्वेन पराश्रयत्वात्पारतन्त्र्यं सूचितं न तु सांख्याभिमतं प्रधानत्वम्।

नन्वेवं गोत्वमिति प्रकृतिप्रत्यययोरानर्थक्यप्रसङ्ग इति चेन्न। प्रातिपदिकेन गवाश्रयायाः सत्ताया अभिधानं प्रत्ययेन तु निष्कृष्टाश्रयस्य सामान्यस्येत्यदोषात्। जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पः।

ननु सत्यासत्यात्मकरूपद्वयस्वीकारे अद्वैतहानिरिति चेत्। सत्यम्। अविद्यावशान्नानात्वम्। तत्र योऽप्रकाशस्साऽविद्या। नचाप्रकाशो नाम प्रकाशाभावरूपोऽधिकरणादतिरिक्तोऽस्तीति दिक्।

*यथाव्यवहारमिति। गोत्वजातिर्गोव्यक्तावेवेत्यादि। *जातिद्रव्येति। द्रव्यशब्देनात्र व्यक्तिरुच्यते। *सूक्ष्मरूपेषु–परमाणुषु। "सर्वं जातिः" इति जातिशब्देन धर्ममात्रमुच्यते नातः पश्वादिशब्देऽपि तत्प्राप्तिरिति गौतमसूत्रव्याख्यातारः। *व्यापकत्वेऽपीति। ब्रह्मसत्तारूपाया गोत्वजातेरश्वेऽपि सत्त्वात्। *विचित्रशक्तित्वादिति। उपाधिस्वभावादिति भावः। ननु जातेर्वाच्यत्वे लिङ्गसंख्याद्यनन्वयप्रसङ्ग इत्यत आह *प्राधान्येऽपीति। तथा च सामानाधिकरण्येन संख्याद्यन्वय इति भावः। *गुणवचनशब्दवदिति। तत्राप्येकार्थसमवायेनैव लिङ्गसंख्यान्वयोपपत्तेः।

केचित्तु एकं रूपं द्वे रूपे इति अबाधितप्रतीतेः संख्या अ-

तिरिक्तपदार्थ एव । नहि तत्र स्वाश्रयसमवायादीनां सम्बन्धत्वसम्भवः । सर्वत्र प्रतीतीनामविलक्षणत्वात् । किञ्च एकार्थसमवायेन घटत्वादौ द्वित्वसत्त्वात्तद्बोधापत्तिः इत्याहुः ।

*कंपदार्थमिति । कं पदार्थं मत्वा सिद्धत्वमुच्यते इति प्रश्नार्थः । *सस्थानम्—कम्बुग्रीवादिमत्त्वादि । *तथा-वक्ष्यत इति । प्रवाहाविच्छेदात् । *द्रव्यं हि नित्यमिति । एकस्मिन्नेव द्रव्ये अनेकाकृतियोगाद् द्रव्यं नित्यमित्यर्थः ।

अयं भावः—उपाधीनां वस्तुतो व्यतिरिक्तत्वाभावेनोपधेयरूपतया उपाधिमद्द्रव्यमेव नित्यत्वात् शब्दार्थ इति ॥ ४२ ॥

(क टी ) *साचेति । उक्तरूपा, उक्तरीत्या सिद्धाचेत्यर्थः । नन्वाकाशत्वादेरेकव्यक्तिवृत्तित्वात्कथ तत्त्वमत आह *आकाशेति । *आदिना कालादि । *देशे–प्रदेशे । *तेषु–तावत्प्रदेशोपश्लिष्टस्याकाशस्यापि । प्रतिज्ञाऽविरोधायाह *आकाशेत्युपेति । हर्यन्तरमत एवाह *अथैति । तन्निष्ठजात्यभिधानेऽपीत्यर्थः । पूर्वार्द्धोक्ते ऽर्थे हेतुमाह *व्यापारेति । यथाश्रुतासङ्गतेराह जातिविशिष्टेति । *व्यापारः–प्रतीतिरूप । व्यापारलक्षणा इति बहुव्रीहि । तदाह *प्रयोजनेति । सत्त्वमेवाह *शब्दस्येति । एवञ्चेत्यस्यार्थमाह *सामान्येति । गोत्वाश्वत्वादीनि सामान्यानीत्यस्याबोधकत्वापत्तेरित्यर्थ । सिद्धान्तरीत्या दोषमाह *किञ्चेति । एवेन प्रपञ्चव्यवच्छेदः । अग्नेर्दाहकत्वादिवदाह *शक्तीति । *तत्र–ब्रह्मणि । इदं परस्यापि क्वचिदावश्यकमित्याह *तत्तदिति । ननु जातेराकाशवद् व्यापकत्वे सर्वं गोभूतं स्याज्जातिसङ्करप्रसङ्गश्चात आह *सर्वेति । सङ्करोऽपि न, परस्परपरिहारेण भिन्नवस्तुनिष्ठानामेवैकत्र स्थिते. सङ्करत्वाद्, स न गोत्वादीनामिति भावः । *न सर्वामिति । यथा आत्मनां व्यापकत्वेऽपि क्वचिच्छरीरे कश्चिदेवात्मा स्फुरति नतु सर्व सर्वत्र तद्वदित्यर्थः । ननु जातेः प्राधान्ये तस्यां स्वतो लिङ्गाद्यभावात्कथ तदुपपत्तिरत आह *तस्या इति ।

१ सामान्यमस्तीति मूलेन योजना ।

*सरूपेति । तत्रहि "लिङ्गवचनासिद्धिर्गुणस्यानित्यत्वाद्" इत्युक्तम् । गुणा. सत्त्वादिगुणाः स्त्रीत्वादय., एकत्वादीनि च । तेन च जातौ तदारोप इति तात्पर्यम् । विशेष वक्तुमनुवदति *साचेति । प्रकृतोपयुक्तमात्रमाह *अर्थेचेति । चेन सम्बन्धोऽपि बोध्यः । कैयटसूचितमाह *अत्राकृतीति । पूर्वंजातिमात्रस्य नित्यत्वोक्तावपि वस्तुतस्तत्त्वस्याभावादाह *अनयोर्यथेति । जातिसस्थानयोर्येन प्रकारेणेत्यर्थ । तथाच पूर्व तत्प्रकारो नोक्तो ऽनुपदमेव वक्ष्यत इत्यर्थो बोध्य' । *अथवेति । "अथ द्रव्ये पदार्थे कथ विग्रह', सिद्धे शब्देऽर्थसम्बन्धेचेति–नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः" इति तत्रत्योऽस्यादिः । *इत्यादीत्यादिना–"घटिकाकृतिमुपमृद्य कुण्डिका" इत्यादिपरिग्रहः ॥ ४२ ॥

अत्र कैयटः–तत्तदाकारं तत्तद्व्यङ्ग्यजातिरूपं वाऽसत्यमुपाधिमाश्रित्य तदवच्छिन्नं ब्रह्मैव द्रव्यम् ।

एतेन मृदो ऽप्यनित्यत्वाद् "द्रव्यं नित्यम्" इत्ययुक्तमित्यपास्तम् । मृदो ऽप्याकारमात्रतया ब्रह्मण्येव पर्यवसानात् । "वाचाऽऽरम्भण विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इतिश्रुतिवत् ।

आकृतिः संस्थानं[1] तस्या अनित्यत्वे तद्व्यङ्ग्यजातिरप्यनित्येति एतत्तात्पर्यम् ।

"यद्वा आकृतावपि पदार्थे एष विग्रहो न्याय्यः । ननु चोक्तमाकृतिरनित्येति । नैतत् । नित्या आकृतिः । कथम् । न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते" इति । अत्राकृतिपदेन जातिः । उपरमो ऽनभिव्यक्तिः ।

---

१ अत्र खसञ्ज्ञके मूलपुस्तके–ब्रह्मदर्शने जातेरप्याविद्यकत्वेनासत्यत्वादनित्यत्वमिति । अनेन अत्र प्रकरणे व्यङ्ग्यव्यञ्जकयोरुभयोरप्याकृतिपदेन ग्रहण सूचयति–इति पाठो ऽधिक. ।

आविद्यकः पदार्थो जातिः यावद्व्यवहारं ध्रुवत्वात्कूटस्थत्वादविचालित्वादनपायोपजनविकारित्वाद्वारंवारमुत्पत्त्याद्यभावेनानुत्पत्त्यवृद्ध्यव्यययोगित्वेन नित्येति एतद्भावः । एतदभिप्रेत्य "भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नम्" इति सामान्यलक्षणमुक्तम् । अथावयवसंस्थानरूपाया आकृतेरुक्तहेत्वभावेन प्रकारान्तरेण नित्यत्वमाह "अथवा यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यम् । तस्य भावः तत्त्वम् । आकृतावपि तत्त्वं न विहन्यते" इति[1] । अवयवसंस्थानरूपाया आकृतेराश्रयप्रवाहाविच्छेदात्तद्धर्मस्याविघात इत्याशयकेनानेन प्रवाहनित्यतोक्ता ॥ ४३ ॥

(कुं.टी.)*ब्रह्मैव द्रव्यमिति । सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन सर्वत्राधिष्ठानभूतं ब्रह्मैव । विशेष्यमेव च द्रव्यम् । शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्वात् । तथाहि—व्याडिमते सर्वे शब्दा द्रव्याभिधायिनः । तद्यथा आत्माद्वैतवादिभिरात्मशब्देन द्रव्यमुच्यते । आत्मैवहि बुद्ध्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थः । अत एव स्वभाव आत्मभूता सत्तेति वदन्ति । अत एवोक्तं हरिणा—

---

१ यस्मिन्विहते नष्टेऽपि तद्धर्मो न विहन्यत इत्यर्थः । आकृतिव्यक्त्योश्च परस्पर भावत्व घटत्वादिघटादिरूपमेव । जातेराकृतेश्चाविद्यकत्वेऽपि तत्तदुपाध्यवच्छिन्न ब्रह्मैव द्रव्यम् । तस्याविद्यकत्वे तदवच्छिन्न ब्रह्मैव आकृतिर्जातिश्चेति बोध्यम् । तत्त्वपदेन च तद्व्यवहारो लक्ष्यते । निर्धर्मकव्यवहाराभावाच्च धर्मव्यवहार इत्युक्तम् । इति पाठोऽधिको पुस्तके खसङ्कके ।

आत्मा वस्तुस्वभावश्च शरीरं सत्त्वमित्यपि ।
द्रव्यमित्यस्य पर्यायास्तत्त्वमित्यपि हि स्मृतम् ॥ इति–

इति भावः। एवञ्चाधिष्ठानसत्ताभिप्रायेणैव घटः सन्निति प्रयोगः । नहि सत्ता जातिस्तत्र निमित्तम् । अभावेऽपि सन्निति व्यवहारात् । अत एव स्वरूपसत्त्वमपि न तत्र हेतुः । अभावे ऽनुगतधर्माभावेनानुगतप्रतीत्यनापत्तेः । *वाचारम्भणमिति । आरभ्यते स्पृश्यते इत्यारम्भणं वाचा वागिन्द्रियेण नामभेदकल्पनम्। यथा घटः शराव इत्यादि,वस्तुतस्तु मृत्तिकैवेति तदर्थः। नित्या आकृतिरित्यत्र हेतुं भाष्यकारः पृच्छति *कथमिति।समाधत्ते *क्वचिदिति। क्वचिद्व्यक्तावनभिव्यक्ता नैतावता सर्वत्रानभिव्यक्ता भवति। तस्मान्नित्यत्वं जातेरित्यर्थः। अनित्यता त्रिविधा–संसर्गानित्यता यथा–स्फटिकस्य जपाद्युपधानेन स्वरूपतिरोधानम् । परिणामानित्यता यथा–बदरफलस्य श्यामतातिरोधाने लौहित्याविर्भावः । प्रध्वंसानित्यता सर्वात्मना विनाशः । एतत्त्रिविधव्यत्यासेन नित्यतां समर्थयति *ध्रुवेति । *कूटस्थत्वादिति संसर्गानित्यता परिहृता । कूटमयोघनस्तद्वत्तिष्ठति । संसर्गिनाशे ऽपि स्वयमनष्टा, इत्यर्थः । *अविचालिभिरिति । परिणामा ऽनित्यता । *अनपायेत्यादिना प्रध्वंसानित्यता परिहृता । उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ विकारौ निरस्तौ । *अवृद्धीति । वृद्धिरूपविकाररहितम् । *अव्ययमिति । विनाशः परिहृतः । *यस्मिंस्तत्त्वमिति । प्रप्रवाहनित्यताऽनेनोक्ता । तन्नाशे ऽपि तद्धर्मो न नश्यति । आश्रयप्रवाहाविच्छेदादिति भावः । तत्त्वमित्यस्यार्थमाह *तस्य भाव इति । *संप्रदायाविच्छेदादिति । अयं नित्यत्वे हेतुः ॥ ४३ ॥

(क टी) ननु घटादिद्रव्यस्य कथं नित्यता, अत आह *अत्रे ति। कैयटोक्तासत्यपदार्थमाह *तत्तदिति । कम्बुग्रीवादिमृदादि-रूपमित्यर्थं । *तद्व्यङ्ग्येति । तत्तदाकारव्यङ्ग्यघटत्वादिजातिरूपमि-त्यर्थः । एतेनेत्यस्यार्थमाह *मृदोऽपीति । *श्रुतिवदिति । श्रुतेर्यथा तत्त्वेन तत्र पर्यवसानन्तद्वदित्यर्थः । ननु जातेरनित्यत्वे सिद्धा-न्तविरोधो ऽत आह *आकृतिरिति । तथाचाविरोधायैव मध्ये इद लिखितम् । एतेन पूर्वोक्तार्थानुपपादकत्वादिदमत्रायुक्तमित्यपा-स्तम् । तदाह *एतदिति । द्वितीयमते इत्यर्थः । अथाद्यमत समर्थयते *आकृतावपीति । *न क्वचिदिति । क्वचिदुपरतेति कृत्वा न सर्वत्रोपरतेत्यन्वयः । ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्व विरुद्धमत आह *अनभीति । अविद्याया जातित्वे मानाभावात्ताव न्मात्रेणानिर्वाहादाह *आविद्यक इति । तृतीयमत तु अग्रे एव खण्ड-नीयमिति भावः । ननु परमार्थदृष्ट्या सर्वमनित्यमत आह *याव-दिति । अद्वैतेन लौकिकव्यवहाराभावाद्व्यवहारे च जातेरेकाकारपरा-मर्शहेतुत्वात्सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालमित्य-र्थः । *कूटस्थत्वादिति ध्रुवत्वादित्यस्य व्याख्यानन्तद्व्याख्यानम् *अविचालित्वादिति । रूपान्तरापत्तिर्विचालः । यथा पयसो दध्यादिरूपता । अनेन परिणामानित्यता परास्ता । अपायोप-जनरूपविकारद्वयशून्यत्वादित्यर्थः । तत्र *अनपायेति पञ्चमापच-यनिरासः । *अनुपजनेति चतुर्थपरिणामनिरासः । उत्पत्तेः स त्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ । *अवृद्धीत्यनेन तृतीयो वृद्धिलक्षणो निरस्तः । *अव्ययेति षष्ठो विनाशो निरस्तः । एतद्रूपविकाराहितं नित्यम् । इद च भाष्ये मुख्यत्वेनादौ नित्यत्वं ब्रह्मविषयं यावद्व्यवहारमेकरूपास्थितपदा-र्थविषय चोक्तं तदाह *नित्येत्येतदिति । द्वितीयविषयत्वे भा-ष्यान्तरसंमतिमप्याह *तदेवेति । जातिरूपसामान्यलक्षणमुक्तामि ति पाठः । *भाष्ये-पस्पशायामेवेति भावः । *रूपायाइति । जा-तिव्यञ्जिकाया इत्यर्थः । *उक्तहेत्विति । यावद्व्यवहारकाल मध्ये मध्ये उत्पत्तिनाशयोः सत्त्वेन तदभावरूपोक्तहेत्वभावादित्यर्थः । न प्रागुक्त एव नित्यशब्दार्थः । प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्व-व्यवहारादित्याह *तदपीति । ननु किं तत्त्वमत आह *तस्ये-

ति। यस्मिन्विहते नष्टे ऽपि तद्वृत्तिधर्मो न विहन्यते न नश्यति आश्रयप्रवाहाविच्छेदादित्यर्थः। तत्त्वपदेन तद्व्यवहारो लक्ष्यते। निर्धर्मकव्यवहाराभावान्नष्टव्यक्तेर्व्यवहाराभावाच्च तद्धर्मव्यवहार इत्युक्तः। आश्रयप्रवाहानुच्छेदाच्च तद्धर्मव्यवहाराविघात इति तात्पर्यम्। तदाह *अवयवेति। *उक्तेति। इत्युक्तमिति शेषः। भाष्ये इत्यस्यात्रान्वयः। तस्यभाव इत्यादिहेलाराजइत्यन्त ग्रन्थे पाठान्तर क्वचित्पुस्तके दृश्यते तदयुक्तम्। प्रागुक्तत्वादिति बोध्यम् ॥ ४३ ॥

प्रवाहनित्यतां न्यायवार्तिककारो ऽप्याह—“नित्या वर्णाः नित्या वेदा इति च सम्प्रदायाविच्छेदात्। नित्या पृथिवी नित्याः पर्वता इतिवत्। तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेष्वपि सम्प्रदायाविच्छेदेन प्रवर्त्तन्ते। एतत् मन्वादिवाक्येष्वपि तुल्यम्” इति।

व्याससूत्रमपि “समाननामरूपत्वाच्चावृत्तावप्यविरोधः” इति। वेदस्य तदर्थानां च नामरूपप्रवाहानुच्छेद एव नित्यत्वमिति तदर्थः। उपाधिसंनिवेशादिशब्दैश्चोपाधीनामपि तदात्मकत्वात् ब्रह्मैव वाच्यम्।

यत्तु अविद्याशब्देनापि विच्छिन्नप्रकाशं ब्रह्मैव। विच्छेदो ऽपि तद्रूप एवेति नाद्वैतहानिरिति।

अत्र वदन्ति। विच्छेदस्य ब्रह्मरूपत्वे तत्त्वज्ञाननिवर्त्यतानापत्तिरिति।

वस्तुतस्तु विच्छेदो ऽसत्य एव। रज्जूरगवत्। सर्वोऽपि प्रपञ्च एवमेव। तत्तद्भोगप्रापकप्राण्यदृष्टैश्च ब्रह्मणस्तथा विवर्तः। एवञ्च तन्नाश्यतोपपन्नेति

परमार्थसारविवरणे प्रपञ्चितमस्माभिः । 'यथा स्वप्ने एकस्यैवान्तःकरणस्य विरुद्धानेकपदार्थरूपत्वं तथा जागरे मायासहकारेण ब्रह्मणस्तथात्वम् । यथाच जागरे अप्रतीयमानत्वात्स्वाप्नस्य मिथ्यात्वं तथा तुरीयदशायामननुवृत्तेरस्य प्रपञ्चस्य मिथ्यात्वं संविदश्च सत्यत्वम् । उपाधिवैशिष्ट्येन तदेव व्यवहारास्पदम् । निरुपाधिकं तु सर्वव्यवहाराविषय' इति हेलाराजः ।

आकृतिस्तु यत्र सम्भवति तत्रैव । गौतमीये "जात्याकृतिव्यक्तयः पदार्थ" इतिसूत्रे व्यक्तिपदेनच सख्यादिविशिष्टा व्यक्तिः, पिष्टकमय्यो गाव इत्यादावाकृतिरेव । वस्तुतस्तत्रापि जातिः । प्राण्याश्रितत्वेनाभिव्यक्ता तु पुण्यपापसाधनम् । तदुक्तं हरिणा—

चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते ।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः॥इति।

चित्रादीत्यादिना प्रतिमाः । प्राण्याश्रिता इति प्राणिपदं कृतदेवताऽऽवाहनप्रतिमोपलक्षणम् । विसर्जने तु कृते ता न पुण्यपापसाधनम् ।

ब्राह्मणत्वादयो भावाः सर्वत्रैव च ते स्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इति चस्मृतिः॥इतिच

यत्रैवोपदेशादिनाभिव्यक्तास्तत्रैव स्वकार्यसाधकाः । प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादिति भावः । सरूपसूत्रे भाष्ये ध्वनितं सर्वमेतत् । स्वर्गापूर्वदेवताशब्दादौ नाकृतिर्बोध्या । दर्शनाभ्याससहकारेणैव त-

द्बोधात् । नव्यनैयायिकग्रन्थे प्रकृतिप्रत्ययार्थविचारस्तु व्याकरणवासनावासितान्तःकरणतया तत्रैव वास्तवत्वभ्रमेणेति बोध्यम् ॥ ४४ ॥

*तुल्यमितीत्यन्तं वार्तिकोक्तिः। *समानेति। सृष्ट्यन्तरेऽपि नामरूपसाम्यान्नित्यत्वस्याविरोध इत्यर्थः। तथाच श्रुतिः "यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्" इति। यज्ञेन पुण्येन कर्मणा वाचो वेदस्य पदवीयं मार्गमायन् प्राप्तवन्तः । *तदात्मकत्वात्—ब्रह्मात्मकत्वात् । *विच्छेदोऽपीति । तन्मते अभावस्याधिकरणस्वरूपत्वात् । भूतलादेः स्वरूपेण भावत्वेऽपि रूपान्तरेणाभावत्वाभ्युपगमात् । तदाहुः—

भावान्तरमभावो हि कया चित्तु व्यपेक्षया । इति ।

*असत्य एवेति । अयं भावः—यद्यपि विच्छेदो नाम प्रतिबन्धः, तथाच स्वाकारातिरिक्तस्य प्रतिबन्धकस्य स्वीकारेऽद्वैतहानिः प्राप्ता, तथापि अज्ञानस्यैव प्रतिबन्धकत्वस्वीकारेण वास्तविकप्रतिबन्धाभाव इति । अविद्या च अनादिभावरूपत्वे सति ज्ञाननिवर्त्या। नच सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेष्वव्याप्तिः । रूप्योपादानाज्ञानस्याप्यनादिचैतन्याश्रितत्वेनानादित्वात् । *एवमेव—असत्य एव । असत्यस्यापि व्यावहारिकसत्यत्वं दर्शयति *तत्तद्भोगेति। *विवर्त इति। उपादानसमसत्ताककार्यापत्तिः परिणामः। उपादानविषमसत्ताककार्यापत्तिर्विवर्त्तः।*यथा स्वप्नेइति। अयं भावः—स्वप्नावस्थागतः प्रपञ्चो जाग्रद्दशया बाध्यमानत्वादसत्य इति सर्वानुमतं, तेनैव दृष्टान्तेन जागरायां यो भावभेदस्तस्य तुरीयदशायामननुवृत्तत्वादसत्यत्वम्। सर्वावस्थास्वनुगतं संविन्मात्रं सत्यम् । चिच्छक्तेरावरका

मोह एव निद्रा नाम । तस्य चाविद्यावृत्तिरूपत्वान्मिथ्यात्वम् । एवं जाग्रत्स्वप्नावस्थागतमूर्तक्रियाविवर्तरूपमसदेवेति । *अनेकपदार्थरूपत्वमेवेति । अविद्यावृत्तिभेदात् । *तथात्वम्—अनेकरूपत्वम् । जाग्रदादिभिन्नत्वं तुरीयत्वम् । *तदेव—ब्रह्मैव । *सर्वव्यवहाराविषय इति । "यद्वाचाऽनभ्युदितम्" इत्यादिश्रुतिभिर्व्यवहाराविषयत्वस्यैवोपपादनात् । नन्वेवं "तं त्वेवमौपनिषदं पुरुषं पृच्छामि" इतिश्रुतिविरोधः । सत्यम् । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इतिश्रुत्या वाङ्मनसातीतत्वमेव तस्य । औपनिषदत्वं तु उपनिषज्जन्यान्तःकरणवृत्त्या स्वात्मानमप्यविषयीकुर्वत्या प्रतिबन्धकाज्ञाननिवृत्तौ स स्फुरतीत्यभिप्रेत्य । ननु घटादीनामाकारविशेषस्य सर्वत्र व्यक्तिषु नियतत्वाभावात्कथमाकृतेर्वाच्यत्वं गौतमेनोक्तमत आह *आकृतिस्त्विति । यत्राकृतिरेव नियमतः पदेन प्रत्याय्यते तत्रैवाकृतिर्गौतमसूत्रे वाच्यत्वेन विवक्षितेत्यर्थः । ननु घटत्वमित्यादौ जातिरपि व्यक्तिरेवेत्यतो व्यक्तिपदेन गतार्थतां निराकरोति *व्यक्तिपदेनचेति । *संख्यादीति । संख्याकारकाविशिष्टेत्यर्थः । कुत्र आकृतिमात्रप्रतीतिस्तत्राह *पिष्टकमय्यइति । स्वमतमाह *वस्तुत इति । अचेतनजातीनामपि सर्वगतत्वमुपपादयति *चित्रादिष्विति । आलेख्यलिखिते ऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदयात्तत्रापि जातिप्रकाशः । चित्रस्योपघाते त्वधर्मो न भवति । एवं चित्रस्थब्राह्मणपूजायां धर्मोऽपि न भवति । कैश्चिदित्यरुचिबीजं तु मुख्यसादृश्यात्तत्प्रतिकृतिषु तत्प्रत्ययो भवति न तु तद्वशात्तत्र जातिसमवाय इति । *कृतदेवतेति । तत्र हि प्रतिष्ठाविधिना देवतानां प्रतिमायाम् अहङ्कारो भ-

वति । चण्डालादिस्पर्शे च तदभिमानाभावः । ननु प्रतिमाया देवताबुद्धेरध्यासे भ्रान्त्यापत्तिः । सत्यम् । अन्योन्यस्मिन्नन्योन्यबुद्धिरध्यासः । प्रतिमायामेव हि देवतादृष्टिर्न देवतायां प्रतिमादृष्टिः । *आवाहनम्—अभिव्यक्त्यनुसन्धानम् । *विसर्जनम्—निजरूपेणावस्थानचिन्तनम् । पूर्वं व्यक्तिसर्वगतत्वं सामान्यानामुक्तम्, इदानी सर्वगतत्वनये ऽप्याह *ब्राह्मणत्वादय इति । भवन्ति सर्वत्रेति भावा ब्राह्मणत्वादयः । ते प्राणिषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः । तथापि "ब्राह्मणमालभेत" इत्यादौ नाव्यवस्थाप्रसङ्गः । यत्रैव हि उपदेशादिनाऽभिव्यक्तिमासादयन्ति तत्रैव स्वकार्यं साधयन्तीति पारम्पर्येण स्मर्यते । एवं च घटत्वादिजातयः प्रलये परमाण्वादिष्ववस्थिताः । *स्मृतिरित्यनेन जातिवादिवाजप्यायनमते स्मरणं सूचितम् । *प्रतिनियतेति । तच्च ब्राह्मणत्वं विशुद्धमातापित्रोर्योनिजत्वव्यङ्ग्यम् । ननु गवादिशब्दोच्चारणे आकारविशेषस्यापि प्रतीतेरस्त्वाकृतेरपि शब्दार्थत्वमत आह *स्वर्गापूर्वेति । यदि हि आकृतिरपि शब्दार्थः स्यात् तदा स्वर्गादिशब्दे ऽपि तत्प्रतीत्यापत्तिः । तस्मान्निष्कृष्टो ऽर्थमात्र एव शब्दार्थः । ननु कथमाकारविशेषस्य प्रतीतिस्तत्राह *दर्शनाभ्यासेति । सास्नादिमत्स्वेव गोशब्दप्रयोगं पश्यतां तद्दर्शनाभ्यासादाकारविशेषप्रत्ययो नान्तरीयको न शाब्द इत्यर्थः ॥ ४४ ॥

(क० टी०) आद्यस्य परसमतत्व प्रसिद्धमेवेति द्वितीये परसंमतिमपि तदीयानामज्ञाननिरासायाह *प्रवाहेति । अद्वैतिसमतिमप्याह *व्यासेति । प्रथमाध्यायतृतीयपादस्थदेवताधिकरणस्थम् । ननु जगत्कारणत्वादेव देवस्य नित्यत्वमित्यर्थकेन "अत एव च नित्यत्वम्" इतिपूर्वसूत्रेणोक्त नित्यत्वमयुक्तम्, सृष्टिप्रलययोरुत्पत्ति-

प्रलयदर्शनाद्, अत आह *समानेति । "दर्शनात् स्मृतेश्च" इति सूत्रशेषः । आवृत्तौ पुनःपुनरुत्पत्तावपि समाननामरूपत्वात् समानशब्दार्थत्वाद् विवक्षितस्यैकरूपप्रवाहाविच्छेदरूपनित्यत्वस्याविरोध । श्वासप्रश्वासवत् पुरुषबुद्ध्यजन्यत्वेन च वेदे नाप्रामाण्यशङ्का । समाननामरूपत्वे प्रमाण च—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
त ह देवमात्मबुद्धिप्रकाश मुमुक्षुर्वै शरणमह प्रपद्ये" ॥ इति,
"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिव च पृथिवीं चान्तरिक्षमथो सुव." ॥ इति च श्रुति,
"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ इति च–

स्मृतिश्चेत्यर्थः । एवं च ब्रह्मणः स्वयभूत्ववद्वेदस्यापि तत्त्वम् । सृष्ट्याद्यकाले प्रादुर्भाव. प्रलये च लयो न तु मध्ये मध्ये घटादिवदिति नित्यत्वव्यवहारस्तस्येति भावः । तदाह *वेदस्येति । ननु तत्तदाकारादिरूपोपाधेर्द्रव्यनित्यतापक्षे उक्तत्वेन तस्य च ततो भेदलाभेन प्राक्सिद्धान्तिताद्वैतहानिरितिशङ्कानिरासाय प्रागुक्तमपि कचिद्विशेष प्रागनुक्तमत्रैव प्रसङ्गाद्वक्तुमनुवदति *उपाधीति । *सनिवेशः–संस्थानम् । *ब्रह्मैवेति । पूर्वपूर्ववासनावशात्परमात्मन एवोपाध्यादिरूपेण तद्वैशिष्ट्येन च भानादित्युक्त प्राक् । तथा च न तद्धानिः । तमेवाह *यत्त्वित्यादि । *विच्छेदोऽपीति । स्वकल्पितेत्यादि । अत्र परोक्तदोषमाह *अत्रेति । विच्छेदांशे । तदुभयासांगत्य प्रकटयन् सिद्धान्तमाह *वस्तुतस्त्वित्याद्युपपन्नेत्यन्तेन । *एवमेव–असत्य एव । प्राण्यदृष्टवासनासहकारेणेति पाठ. । प्राण्यदृष्टैश्चेति पाठान्तरम् । *तथा–प्रपञ्चरूपतया । *एव च–तस्यासत्यत्वेच । *तन्नाश्यता–तत्त्वज्ञाननाश्यता, सर्वप्रपञ्चवद् विच्छेदस्यापि । *इतीति । प्रपञ्चितं पूर्वत्र परमार्थसारविवरणे चास्माभिरिति पाठ । ननु कथमेकस्य युगपत्तथात्वमतस्तत्राह प्रच्युतस्येत्यादिप्रागुक्तहरिव्याख्यानस्थहेलाराजम् *यथेत्यादि । *तथात्वम्–विरुद्धानेक पदार्थरूपत्वम् । *सविदश्च–ब्रह्मणश्च । *उपाधीत्यग्रिमान्वयि । *तदेव-ब्रह्मैव । मायाया अपि दुग्धस्य दधिभावेनेव न प्रपञ्चरूपः परिणामः

किन्तु स्वर्णस्य कुण्डलरूपेणेव। एवंविधपरिणामो विवर्त्तपदेनोच्यते। अतएव प्रलये पुनरविद्यारूपेण सर्वावस्थानम्। यदि दधिवत्परिणमेत्तदा तस्य पुनर्दुग्धरूपत्ववत्प्रपञ्चस्य मायारूपेणावस्थानं भज्येत। तस्या यत् संस्काररूपेणावस्थान तदेव ब्रह्मणि सर्वलयत्वेन व्यवह्रियते इति बोध्यम्। गौतमीये आकृते. पदार्थत्व सम्भवाभिप्राय न तु सार्वत्रिकमित्याह *आकृतिस्त्विति। विशेष वक्तु प्रागुक्तमपि पौनरुक्त्यपरिहारमनुवदति *गौतमीये इति। जातिव्यक्त्योरपि तत्त्वमौत्सर्गिक नतु सार्वत्रिकमित्याह *पिष्टकेति। एवेनोभयव्यवच्छेद। *जातिः—सापि। तेनाकृतिसमुच्चय। पूर्वैवेन तु व्यक्तिमात्रव्यवच्छेद इति भाव। नन्वेव तन्नाशादौ प्रायश्चित्ताद्यापत्तिरत आह *प्राणीति। तदाश्रितत्वेनाश्रयोत्पत्त्यनन्तर तत्रावयवसस्थानाभिव्यङ्ग्या सती स्वरूपसतीत्यर्थ। नतु ज्ञानमेव तत्साधनम्, अज्ञानेऽपि प्रायश्चित्ताद्युपदेशात्। *अपिना प्राणिसमुच्चयः। *कैश्चित्—तत्त्वज्ञै[1]। उत्तरार्धवैयर्थ्यं परिहरन् शास्त्राविरोधमाह *प्राण्याश्रितेति। प्रतिमादीत्यर्थः। तेन चित्रसग्रहः। प्राणिषु तु तथा स्पष्टमेवेति न तत्रास्योपयोग इति नोपिरुक्त.। विशेषणफलमाह *विसर्जन इति। नन्वेवमपि शालग्रामाद्यसग्रहस्तत्रावाहनाद्यभावात्। तत्त्व तु तत्रापि शास्त्रसमतमत आह हर्यन्तरम् *ब्राह्मणत्वेति। चार्थो[2] ये इत्यादिः। *भावाः—जातय.। *चं. स्थितिसमुच्चये। *स्मृति[3]—स्मरणम्। *चं:—पूर्वहरिसमुच्चये। अभीत्यस्य साकाङ्क्षत्वादाह *यत्रैवोपदेशेति। अयञ्च शास्त्रीयः। आदिना स्वप्ने फललाभादिः। *प्रतिनियतेति। विशेषेत्यर्थः। *सर्वमेतदिति। सर्वत्र जातिसत्त्वम्, तदेकत्वम्, तस्या वाच्यत्वञ्चोरीकृत्य नानार्थेष्वपि तथा स्वीकृत्य सरूपसूत्रं प्रत्याख्यातम्। सर्वत्र तदसत्त्वादौ तु तदर्थन्तदावश्यकत्वेन तदसङ्गति स्पष्टैव। आकृतिस्त्वित्युक्तफलमाह *स्वर्गेति। शब्दार्थभूताया आकृतेरवयवसस्थानरू-

---

१ अपिनोंक्तइति योजना।

२ यत्तदोर्नित्यसाकांक्षत्वेनापेक्षितानुक्तयेऽन्यस्य सङ्ग्रहोऽनुक्तसमुच्चयार्थेन चेनेत्यर्थः।

३ साधकाइतिचेत्यत्रत्यः। ४ श्लोकबाह्य इतिचेत्यत्रत्यः।

५ उपदेश इत्यर्थ।

पत्वस्योक्तभाष्योक्तत्वादिति भाव । एवञ्च तथा सूत्रयता गौतमेन पदलक्षणादिकरणान्न्यायमते पदस्फोट एव । तद् ध्वनयन्नाह *नव्येति । अत्रापि वाक्यस्फोटस्यैव तत्त्वादाह *भ्रमेणेति ॥ ४४ ॥

अनन्ता वर्णा उत्पादविनाशशालिनस्तत्समूहश्च पदं बोधकमिति पक्षे तु पदानामानन्त्याच्छक्तिग्रहासम्भवेनानुगताकारप्रतीत्या सिद्धायास्तत्तत्पदगतघटपदत्वादिजातेर्वाचकत्वम् । अर्थगतजातेः शक्यत्ववत् । यथा च भ्रमणत्वादिजातिश्चरमक्रियाप्रत्यक्षव्यङ्ग्या एवमेषा ऽपि चरमवर्णप्रत्यक्षव्यङ्ग्या । क्रियासमुदाये बौद्धे भ्रमणत्ववदेषाऽपि तादृशे वर्णसमुदाये व्यासज्यवृत्तिः । तदुक्तम्—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता । इति ।

यद्वा शक्यतावच्छेदके शक्तेरिव शक्ततावच्छेदकेऽपि तस्याः सत्त्वमिति तस्याः स्फोटत्वव्यवहारः ॥ ४५ ॥

इति जातिस्फोटनिष्कर्षः ।

( कु० टी० ) जातिस्फोटं व्युत्पादयति *अनन्ताइति । एतन्मते वर्णानामनित्यत्वात्तद्गता जातिरेव नित्येति सैव स्फोटशब्देनोच्यते । तदाश्रया एव तु ध्वनय उच्यन्ते । *चरमक्रियेति । विशिष्टप्रयत्नजानितेन विक्षेपविशेषेणाभिव्यक्ता भ्रमणत्वादिजातिः प्रत्येकसमाप्ताऽपि न गृह्यते भ्रमणानामन्त्यवृत्तौतु गृह्यते इत्यर्थः । *एषा–पदजातिः । *बौद्धे इति । व्यापाराणां समुदायासम्भवे न तत्समूहरूपक्रियाया अपि प्रत्यक्षासम्भवात् बौद्ध समुदाये जातिर्व्यज्यते इत्यर्थः । वर्णानामाशुविनाशित्वादाह *तादृशे इति । बौद्धे इत्यर्थः । *व्यासज्यवृत्तिरिति । तेन नैकवर्णो-

ञ्चारणे ऽर्थाभिव्यक्तिः । अतएवोक्तम् *अनेकव्यक्तीति । अनेकवर्णव्यक्तीत्यर्थः । तथा च भिन्नप्रयत्नोदीरितध्वन्यभिव्यक्तो जातिस्फोटोऽयं विलक्षण एव । *यद्वेति । यथा घटत्वादिकं वाच्यतावच्छेदकं तथा घटपदत्वादिकं शक्ततावच्छेदकमित्यर्थः ॥ ४५ ॥

(कु० टी०) एव वाक्यव्यक्तिस्फोटं सिद्धान्तभूतमुक्त्वा प्राचोक्तं जातिस्फोट तत्सिद्धान्तभूतमेकदेशिमतेनाह *अनन्ता इति । सिद्धान्तरीत्याऽऽह *अनुगतेति । इद घटपदमिद घटपदमित्यादीत्यर्थः । असम्भवनिरासायाह *अर्थेति । ननु तद्व्यञ्जकत्वस्य प्रतिवर्ण सत्त्वे प्राचोक्तवर्णस्फोटपक्षोक्तदोषाः, सरो रस इत्यादौ बोधाविशेषापत्तिश्चात आह *यथाचेति । *चरमवर्णेति । पूर्वपूर्ववर्णानुभवसहकृतेत्यादि. । एवच नोक्तदोष. । नन्वेवमपि प्रत्येकं तत्सत्त्वे आद्यदोपाभाव एवात आह *क्रियेनि । ननु क्रमिकवर्णसमुदायस्य यौगपद्यासम्भवेनानारब्धे तु गोशब्दे गोशब्दत्व कथ भवेदिति तत्र जातिर्दुरुपपादैवात आह *बौद्धे इति । उभयत्र हरिसम्मतिमाह *तदुक्तमिति । अनेकाभिर्वर्णव्यक्तिभिरभिव्यङ्ग्या जातिः स्फोटो वाचिका ऽभिमतेत्यर्थ । स्फोटपदस्य च स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या वाचक इत्यर्थः । एवच ज्ञाताया एव तस्या वाचकत्वमित स्फोटस्य सदातनत्वात्सर्वदाऽर्थापत्तिरिति निरस्तम् । इद चाकृत्यधिकरणन्यायेनोक्तम् । न्यायादिमतेनाप्याह *यद्वेति । *इतिजातीति । इत्येव प्राचोक्तजातिस्फोटनिष्कर्ष इत्यर्थः ॥ ४५ ॥

परे तु यथाऽद्वैतिनामात्मभेद औपाधिको मायाकृतः चेतनस्यैकत्वे ऽप्यस्त्येव, तत्रानुगमार्थं जातिकल्पना च दृश्यते, तथैकस्यैव तत्तत्कालतत्तद्वर्णानुरागरूपोपाधिभेदेनानन्त्यात्तत्पक्षे ऽपि अनुगतशक्तिग्रहाय जातिरावश्यकी । परं तेषां तत्तदुपाध्यवच्छिन्नः स्फोटो व्यक्तिपदभाक् । तत्तदुपाध्युपल-

क्षितश्च जातिपदभाक्। पूर्वमते तु जातिः पदार्थान्तरम्।

यत्तु सर्वत्र व्यक्तिरनित्या तत्तद्व्यक्त्युपहितं ब्रह्मैव जातिरिति ।

तन्न। आविद्यकानन्तव्यक्तिकल्पनापेक्षया जात्यादेरेव हेतुत्वकल्पने लाघवात्। अत एव "अग्नेरग्नित्वमपागाद्" इत्यादिश्रुतौ धर्मस्यैव नाश उक्तः। अत एव "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिके आविद्यकः पदार्थो जातिर्यावद्व्यवहारं नित्या प्रवाहनित्या वेति द्वेधैवाकृतेर्नित्यत्वमुक्तम् । तच्चोपपादितमित्याहुः ॥ ४६ ॥

इति वाच्यवाचकशक्तीनां निर्णयः ।

(कुं० टी०) *आत्मभेद इति । अन्तःकरणावच्छिन्नं चैतन्यं जीवः । जीवाकाराहंत्वप्रकारकाविद्यावृत्तिपरिणतो जीवोऽन्तःकरणेनाभिव्यज्यते । मायावच्छिन्न चैतन्यं परमेश्वरः । अन्तःकरणभेदाज्जीवानां भेदः । तदुक्तम्—

तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।

*यथाऽग्न्युत्था विस्फुलिङ्गा वारिराशेरिवोदकम् ॥ इति ।

*औपाधिक इति । ननु चिन्मात्रस्याज्ञानं न स्वाभाविकं किन्त्वौपाधिकम्, तत्र स्वस्यैवोपाधित्वे आत्माश्रय इति चेन्न । भेदस्य स्वभेदकत्ववत्स्वस्यैवोपाधित्वात् । चेतनस्यैकत्वेऽपि आत्मभेदोऽस्त्येवेत्यन्वयः । *अनुगमार्थमिति । नियतशब्दव्यवहारार्थमित्यर्थः ॥ ४६ ॥

इति श्रीमदाचार्यकृष्णमित्रकृतायां कुञ्चिकायां
वाच्यवाचकशक्तीनां निर्णयः ॥

---

*अङ्गारांकितमुत्पाति इति पाठान्तरम् ।

(क० टी०) वस्तुतो ऽस्यायुक्तत्वात्सिद्धान्तमतेनाह *परेत्विति। औपाधिकइत्यस्य व्याख्या *मायेति।*तत्र—नानात्मसु । *एकस्यैव—वाक्यस्फोटस्यैव।*तत्पक्षेऽपि—प्रागुक्तसिद्धान्तपक्षेऽपि। अत्र नाधिकं किञ्चित् कल्प्यमित्याह *परमिति। केवलमित्यर्थः ।*तेषाम्—सिद्धान्तिनाम्।एतेनातिरिक्तजातिकल्पने किं स्फोटकल्पनयेत्यपास्तम्। तद् ध्वनयन्नाह *पूर्वेति । आविद्यकधर्मविशेष इत्यर्थः । सकलजीर्णोक्तिं खण्डयति *यत्त्विति । आदिनोपाधेः । *तत्त्वकल्पने इति । आविद्यकत्वकल्पने इत्यर्थः । इदमेव पूर्वं किञ्चेतिवार्त्तिके तद्व्याख्यानावसरे, द्वितीयमाविद्यकावयवसंस्थानविषयं न जातिविषयमिति ध्वनयन्नाह *आकृतेरिति ।भाष्ये इति भावः । *तच्चोपेति । अनुपदमेवेति भावः ॥ ४६ ॥

इतिवाच्यादिनिर्णयव्याख्यानम् ।

**वाक्यसमयग्राहिका चाकाङ्क्षा । सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः क' इत्येवंरूपा पुरुषनिष्ठैव । तथापि तस्या आकाङ्क्षाविषये अर्थे आरोपः। एतदेवाभिधानापर्यवसानमित्युच्यते । 'अयमर्थोऽर्थान्तरसाकाङ्क्ष' इति व्यवहारात् । पदे तु नारोपः। मानाभावात् । अर्थबोधोत्तरमेव जिज्ञासोदयाच्च। 'पदं साकाङ्क्षम्'इति तु साकाङ्क्षार्थबोधकमित्यर्थकम् ।**

**तदुक्तं समर्थसूत्रे भाष्ये—"परस्परव्यपेक्षां सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा। न ब्रूमः शब्दयोरिति। किं तर्हि? अर्थयोः।इह राजा पुरुषमपेक्षते—'ममायम्'इति।पुरुषोराजानमपेक्षते 'अहमस्य'इति"इति। ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वे ऽपि 'आकाङ्क्षा'इति व्यवहारः।**

एतज्ज्ञानस्य बोधहेतुत्वादेकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः । कार्यसहवर्तित्वेनैव तस्य हेतुत्वान्न सर्वत्र बोधद्वयम् । अन्यथा प्रथमबोधहेतोस्तज्ज्ञानस्य द्वितीयबोधात्पूर्वमपि सत्त्वेन तत् दुर्वारं स्यात् ।

अन्वयबोधश्च तदाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः ।

एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधो न स्यादित्यपास्तम् ।

खण्डबोधस्य क्रियातद्विशेषणकारकतद्विशेषणैतदन्यतरमात्रविषयकत्वात् । अतएव "सुरतक्रीडापिकीनां रवः" "कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वन"इत्यादौ समाप्तपुनरात्तस्य दोषतोक्ता ऽऽलङ्कारिकैः । क्रियाकारकभावेनान्वयबोधकसकलपदोक्त्यनन्तरं तद्घटकयत्किञ्चिदन्वयिविशेषणोपादानं हि समाप्तपुनरात्तत्वम् ॥ ४७ ॥

(कुं टी.)*साचैकेति । यथा घटादिपदार्थज्ञानानन्तरं तदन्वयिन आनयनादेर्जिज्ञासा भवति । यद्यपि 'घटमानय'इतिवाक्ये द्वयोरपि पदार्थयोरवगतत्वान्नास्ति जिज्ञासा,तथापि एकपदार्थज्ञानमात्रे इत्यर्थः । *तद्विषयेच्छेति । ज्ञानाविषयिणी इच्छेत्यर्थः । *पुरुषनिष्ठैवेति । इच्छारूपायास्तस्यास्तत्रैवौचित्यात् । *अर्थे-आरोप इति । विषयतासम्बन्धेनाकाङ्क्षाया अर्थे ऽपि सत्त्वात् । *एतदेवेति । अभिधानस्य बोधकत्वस्यापर्यवसानमित्यर्थः । नन्वाकाङ्क्षायाः शाब्दबोधहेतुत्वात्पदनिष्ठत्वमेव यु-

क्तमत आह *एकपदार्थे इति । भवतिचानयपदार्थाभावे घट-पदार्थे ऽन्वयबोधाजनकत्वम् । पदार्थोपस्थित्यनन्तरमेवान्वय-बोधोत्पत्तेरर्थस्यैव जनकत्वमिति भावः । *अपरपदार्थव्य-तिरेकः—अपरपदार्थज्ञानाभावः । तेन घटस्य सत्ता नास्तीत्य-त्र नाव्याप्तिः । मौनिश्लोके ऽव्याप्तिवारणाय पदज्ञानस्य हेतुत्वावश्यकतया पदार्थनिष्ठैवाकाङ्क्षेति तात्पर्यम् । *तद्विष-ये—बोधाजनकत्वज्ञानविषये । नन्वाकाङ्क्षायोग्यतयोः को भेद इति चेद् । इत्थम् । योग्यता यावद्वस्तुस्थायिनी जाते ऽपि बो-धेऽस्त्येव, आकाङ्क्षा तु नास्तीति तयोर्भेदः । नन्वन्वयबोधे जाते पुनरप्यन्वयबोधापत्तिरत आह *तदजनकत्वेति । अत-एवाजनितान्वयबोधजनकत्वमाकाङ्क्षेति परे । नन्वाकाङ्क्षा-निश्चयस्य निश्चयत्वघटिततया लाघवादनाकाङ्क्षाज्ञानाभावस्यैव हेतुत्वमस्त्विति चेन्न । तत्राप्रामाण्यनिर्णयस्योत्तेजकत्वे गौरवात् । आकाङ्क्षानिश्चयस्य हेतुत्वेतु अप्रामाण्यज्ञानस्यैवोत्तेजकत्वमिति लाघवम् । *कार्यसहेति । बोधात्पूर्वं बोधाजनकत्वज्ञाने सत्यपि बोधे सति बोधाजनकत्वज्ञानाभावान्न पुनर्बोध इत्यर्थः । *तज्ज्ञा-नस्य—बोधाजनकत्वज्ञानस्य । *द्वितीयबोधादिति।प्रथमबोधकाले आपादनीयादित्यादिः । *तत्—बोधद्वयम् । ननु अवान्तरवा-क्यार्थबोधानन्तरं महावाक्यार्थबोधानापत्तिरत आह *सकल-क्रियेति । अत एव तात्पर्यविषयान्वयबोधाजनकत्वमाकाङ्क्षे-ति परे । *क्रियाकारकेति । क्वचिक्रियातद्विशेषणयोः क्वचि-त्कारकतद्विशेषणयोः प्रथममन्वय इत्यर्थः । *सुरतक्रीडेति । तन्व्याः कङ्कणक्वाणः वः प्रेम तनोतु । स कीदृशः सुरतक्रीडायां याः पिक्यः कोकिलाः तासां शब्दः।पुनः कीदृशः,नववयोनृत्यार्थं वेणुस्वनः । अत्र वाक्यार्थे समाप्ते वेणुस्वन इति विशेषणोपा-

दानात्समाप्तपुनरात्तत्वम् । *तद्घटकेति । तद्घटको यः क- श्चित्तदन्वयिनो विशेषणस्येत्यर्थः ॥ ४७ ॥

( क० टी० ) अथ तद्धेतुत्वादाकाङ्क्षादिनिरूपणमित्याह *वा- क्येति । ऐश्वरेत्यर्थः । नन्वाकाङ्क्षा सामान्यत इच्छा कोशादिप्रसिद्धेति कथ तस्यास्तद्ग्राहकत्वमत प्रकृतो- पयोगिविशेषरूपा तामाह *साचेति । ज्ञाने सति यज्ज्ञान भवति तद्विषयेच्छेति । ज्ञानविषयविषयेच्छेत्यर्थः । तदेवाह *अस्येति । इयमपि न प्रकृतोपयोगिनी इत्याह *पुरुषेति । यद्यपी- त्यादि । विषयतासम्बन्धस्य विशिष्टबुद्ध्यनियामकत्वस्योपक्रमे एवो- क्तत्वादाह *आरोपइति । *एनदेवेति । आरोपितार्थनिष्ठाकाङ्क्षारू- पमेवेत्यर्थः । अभिधानापर्यवसानमाकाङ्क्षेति वृद्धोक्तेरिति भावः । बोधापूर्त्तिरिति तदर्थ । उक्तहेतोरेवारोपे बीजत्वमाह *अयमर्थ- इति । एवव्यवच्छेद्य ध्वनयन्नाह *पदेष्विति । *मानेति । तथा यवहाराभावादित्यर्थ । अर्थविषयकत्वमेव तस्यां न पदविष- यकत्वमिति अन्यसम्बन्धादपि नारोप इत्याह *अर्थेति । नन्विद पद- मितरपदसाकाङ्क्षमिति व्यवहारो बीजमस्त्येव तत्रापत्यित आह *पदमित । 'प्रविशपिण्डीम्' इतिन्यायेनाह *साकाङ्क्षार्थेति । अ- न्यथा भाष्यविरोधोऽपीति सूचयन्नाह *तदुक्तमिति । एतेन यत्पदस्य यत्पदव्यतिरेकप्रयुक्तान्वयबोधाजनकत्व तत्पदे तत्पद वत्त्वमाकाङ्क्षा, तज्ज्ञान तत्र हेतुरित्येवं पदनिष्ठा ता तद्रूपां वर्णय- न्तो ऽन्ये सर्वेऽपि परास्ता । तदेतद् ध्वनयन्ननयाऽपि कथ प्रकृ- तासिद्धिरिति शङ्कानिरासायाह *ईदृशेति । अस्या उपयोगमाह *एतदिति । तद्रूपाकाङ्क्षाज्ञानस्येत्यर्थ । एव सति प्राप्तदोषं परिहरति *कार्येति । *तस्य-एतज्ज्ञानस्य । एवेन पूर्ववर्त्तित्वव्यव- च्छेद । संस्कारे क्लृप्तमिदमिति भावः । *अन्यथा-तेनैव तत्त्वानङ्गी- कारे-पूर्ववर्त्तित्वमात्रेण तदङ्गीकारे । *तद्-बोधद्वयम्, सार्वत्रिकम् । दोषान्तराभावायाह *अन्वयेति । किंतद्विवक्षाफलम, तदाह* एतेने- ति । अस्यार्थमाह *खण्डेति । खण्डवाक्यार्थेत्यर्थ । *मात्र कैवल्ये । *मतएव-खण्डवाक्यार्थबोधोत्तरामिष्टमहावाक्यार्थबोधे दोषाभा-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता ( वेदान्त ) २

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् ( वेदान्त ) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्त ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च - १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

•(३१) वीरमित्रोदय. । महामहोपाध्यायश्रीमित्रमिश्रविरचित. आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित . ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित. २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । ७

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भगवतदशमस्कन्धजन्मप्रकरणं श्रीसुबोधिनीटिप्पण्यो प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमाविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति. । बालम्भट्टीसमाख्य-

व्याख्यासमलङ्कृत ... व्य-
वहारा ... ११

(४४) ... ... भट्टाचार्यचक्रव
र्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्व-
चिन्तामण्या श्रीरघुनाथतार्किकशिरोमणि-
विरचितदीधित्या च गर्भिता। २

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणी-
ता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्या-
ख्यव्याख्ययातथासोमनाथकृतया मयुख-
मालिकया च व्याख्यया समलङ्कृता। ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपा-
ध्यायापनामक श्रीनागेशभट्टविरचिता।
श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-
श्रीमद्बालम्भट्टविरचितकलाटीका--इति
टीकाद्वयसवलिता। ९

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय
विश्वेश्वरसूरिविरचित । ३

(४८) विरमित्रोदय । लक्षणप्रकाश ।
महामहापाध्यायश्रीमित्रमिश्रविरचित। ४

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वा-
मिविरचित । महेश्वरतीर्थकृतयालघुस-
ग्रहाख्यया टीकया समलकृत । ४

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

October 1915.

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 214.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।

श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-

कुञ्जिकाकलाह्वटीकाद्वयसंवलिता ।

गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनामवलम्बमानेन

शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा

संशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU MANJUSHÂ

BY

MAHAMAHOPADHYAYA ŜRÎ NAGEŜA BHATTA,

With Two Commentaries, i. e. Kunjikâ of

Durbalâchârya and Kalâ of Bâlam Bhatta

Edited by Pandit Parvatiya Nityananda Panta

with the assistance of Sitarama Sastri Shende

FASCICULUS VI.

PUBLISHED & SOLD BY THE SECRETARY,

CHOWKHAMBA SANSKRIT BOOK-DEPOT BENARES.

AGENTS—

OTTO HARRASSOWITZ, LEIPZIG

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY

PROBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press*

BENARES

*Price Rupee one.*

॥ श्री॰ ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्किनभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवक —२१४

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमपत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभा अमुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एव सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्टयो विएतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्रा ७ आना॰

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ "

६ प्रापणव्ययः पृथक् नास्ति । ... ... ... ...

सम्प्रति मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाष्यभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपाद (मीमांसा) १

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) . १

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यती-द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्त

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पू

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपण श्रीभाष्यकृतां परमगुरुभिः श्रीश्री मुनिभिर्विरचितम् । सम्पूर्णम् वेदा

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्त

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म॰ श्रीगिरिधरोपाध्यायविरचितः । १ (न्याय) ... . .

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) .

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) सोमेश्वरविरचिता । (मीमांसा)

वस्येष्टत्वेनेदृशान्वयबोधस्याभिप्रेतत्वादेवेत्यर्थः । अन्यथा सर्वत्र तथा सत्त्वेन तदसङ्गति स्पष्टैव । *सुरतेति । केङ्कारः स्मरकार्मुकस्येत्यादिः । *कङ्कणाते । 'झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनि । तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलदित्यादिः । *आदिना प्रागप्राप्तत्यादि । अत्र तनोतु व इति समाप्तमेव वाक्य नववयस्त्यादिविशेषणान्वयायोपात्तम् । अतएवेत्यस्यार्थं सूचयन् फलितमाह *क्रियेति । वाक्यस्य पुनरुपादान स्वघटकद्वारेत्याह *तद्घटकेति । विशेष्यभूतकाणेत्यर्थ । शाब्दस्तु "समाप्त जनितविवक्षितान्वयबोधक वाक्यं सद्यत् पुनरुपात्त तद्घटकान्वयिशब्दोपादानेन तद्घटकद्वारा पुनरनुसन्धानविषय" इति ॥ ४७ ॥

यद्यपि सति तात्पर्ये आवृत्त्या बोधद्वयमिष्टमेव । तथापि सैवात्र दूषकताबीजम् । एतन्मूलिकैव 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति व्युत्पत्तिः । किञ्च उक्तस्यान्वयबोधाजनकत्वज्ञानस्य वक्ष्यमाणसमभिव्याहारकारणताज्ञानमूलकत्वात्साऽप्याकाङ्क्षा । अतः स स समभिव्याहारस्तादृशतादृशान्वयबोधजनक इति ज्ञानं कारणम् । तदजानतामबोधाच्च । अत एव यस्य यादृशसमभिव्याहारे यादृशान्वयबोधकत्वग्रहस्तस्य तादृशान्वयबोध इत्यनुभवसिद्धम् । स स समभिव्याहारस्तत्तदन्वयबोधजनक इत्ययमेव वाक्यविषये ऐश्वरः समयः । तत्परिपालिका च मीमांसा । अत एव घटः कर्मत्वमानयनं कृतिरित्यतो विपरीतव्युत्पन्नस्य बोधः, सद्व्युत्पन्नस्य चाबोध उपपद्यते । सद्व्युत्पन्नत्वं च व्याकरणशास्त्रोक्तप्रकृतिप्रत्ययविभागतस्तदर्थविभागतस्तदन्वयबोधविषयज्ञानवत्त्वम् । अन्वयानुभवश्च स्वरूपसन् तत्तत्समभिव्याहारजन्यान्वय-

बोधान्तरे प्रतिबन्धकः। तन्मूलकमन्वयबोधाजनकत्वज्ञानमपि वा हेतुरिति तन्मूलिकैव 'सकृदुच्चरित' इति व्युत्पत्तिः। तादृशबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञाने सत्यपि तत्समभिव्याहारे तज्जनकत्वज्ञानाभावे बोधादर्शनान्न तात्पर्येणास्या अन्यथासिद्धिः। सत्यप्यस्य तात्पर्ये अबोधकमिति व्यवहाराच्च। तत्र अयं व्युत्पन्नस्य क्रियाकारकादिपदघटितः सामान्यत एवेत्युक्तम्। व्युत्पन्नस्याश्रुतवाक्यादपि बोधदर्शनाद् प्रतिवाक्यं तथाग्रहस्यासम्भवाच्च ॥ ४८ ॥

( कुं० टी० ) ननु उभयतात्पर्येण प्रयुक्ते 'अयमेति पुत्रो-राज्ञः पुरुषो ऽपसार्यताम्' इति वाक्ये पुत्रेणान्वयबोधे जाते पुरुषेणान्वयबोधो न स्यादत आह *आवृत्त्येति। तथाच द्वितीयवाक्यं बोधाजनकमेवेति भावः। *सैव—आवृत्तिरेव। *अत्र—पुनर्बोधे। *दूषकताबीजमिति।

अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः,

अयमुदयति निद्राभञ्जनः पद्मिनीनामित्यादौ तु पूर्ववाक्यार्थोपपादकत्वेनाकाङ्क्षाया अनिवृत्तत्वान्न समाप्तपुनरात्तत्वम्। *एतन्मूलिकैवेति। जनितान्वयबोधकत्वेन निराकाङ्क्षत्वादिति भावः। *वक्ष्यमाणेति। तेन घटः कर्मत्वमित्यादौ न बोधः। *स स समभिव्याहार इति।

यत्तु समभिव्याहृतपदे व्यतिरेकप्रयुक्तेति, तेन घटो भवतीति वाक्यं न रक्तसाकाङ्क्षं रक्तपदसमभिव्याहाराभावादिति।

तन्न। आसत्त्यभावाच्चात्पर्याभावाद्वा बोधाप्रसक्तेः। *अत

एव—समभिव्याहारस्य हेतुत्वादेव। *विपरीतव्युत्पन्नस्य—भ्रान्तस्य। *स्वरूपसन्निति। स्वरूपसत्येवोक्ताऽऽकाङ्क्षा हेतुः। तावतैव जनितान्वयबोधे ऽतिप्रसङ्गाभावादिति भावः। नन्वाकाङ्क्षायाः प्रागभावरूपत्वाद् 'अहो विमलं जलं नद्याः कच्छे महिषाश्चरन्ति' इत्यत्र नदीजलयोरन्वयबोधानन्तरमपि कालान्तरीयनदीकच्छान्वयप्रागभावसत्त्वान्नदीकच्छान्वयबोधापत्तिः। तात्पर्याभावान्न तदापत्तिरित्युक्तौ तु आकाङ्क्षाविरहान्न बोध इति प्रवादविरोध इत्यत आह *अन्वयबोधान्तरे प्रतिबन्धक इति। नन्वयमेतीत्यादौ राजपुत्रयोरन्वयबोधानन्तरं तात्पर्यभ्रमात्पुरुषान्वयस्यापि दर्शनात् प्रतिबन्धकत्वासम्भव इत्यत आह *ज्ञानमपीति। 'अयमेति पुत्रो राज्ञः पुरुषो ऽपसार्यताम्' इत्यादौ तात्पर्यभ्रमेण पुरुषे ऽन्वये पश्चात्पुत्रान्वये तात्पर्यग्रहे ऽप्यन्वयानापत्तिरतः तात्पर्यविषयान्वयाजनकत्वमेव विवक्षितमिति भावः। ननु तात्पर्यविरहादेवान्वयबोधाभावे किमाकाङ्क्षयेत्यत आह *तादृशेति। इदं वाक्यमेतदर्थबोधकं नेति जानतः इदं वाक्यमेतदर्थबोधेच्छया उच्चरितमिति तात्पर्यग्रहे सत्यप्यर्थाबोधादित्यर्थः। *अस्याः—आकाङ्क्षायाः। *अयम्—समभिव्याहारः। *सामान्यत इति। नतु विशिष्य तत्तत्पदघटितः। *अश्रुतवाक्यादपीति। तत्तत्पदघटितवाक्यस्यापूर्वश्रवणे ऽपीति भावः॥ ४८॥

(क० टी०) अस्य नित्यदोषत्वमाह *यद्यपीत्यादि। ननु सकृदुच्चरित इतिव्युत्पत्तिसत्त्वेनेष्टबोधद्वयस्यैवाभावेन कथं तस्या एव तद्बीजत्वमत आह *एतदिति। आवृत्तेर्दुष्टत्वमूलिकैवेत्यर्थः। एवेन स्वातन्त्र्यव्यवच्छेदः।

यत्तु—यत्पदं यदर्थेन सह तात्पर्यविषयीभूतयादृशार्थान्वयबोधकं

तत्पदे तस्य पूर्ववर्त्तित्वोत्तरवर्त्तित्वादिरूप समभिव्याहारस्तादृशबोधे आकाङ्क्षा तज्ज्ञान कारणमिति ।

तन्न । सद्व्युत्पन्नासद्व्युत्पन्नविभागोच्छेदापत्तेः । यदि तत्परिहाराय तादृशबाधे यत्समभिव्याहारः कारण तादृशबोधे तत्कारणत्वज्ञानमपि तथेत्युच्यते तह्यावश्यकत्वात्सैवाकाङ्क्षाऽस्तु ।

यदपि तत्तत्समभिव्याहारे तत्तद्बोधाजनकत्वनिश्चयः प्रतिबन्धक इति ।

तदपि न । घटमानयेत्यादौ तत्तत्पदे घटाम्पदादौ प्रत्येक गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानवतोऽकारणत्वनिश्चयाभाववतो विपरीतव्युत्पन्नस्य ततो बोधापत्तेर्गौरवाच्च । तदेतद् ध्वनयन्नाह *किञ्चेत्यादिवत्त्वमित्यन्तेन । *सापि–समभिव्याहारनिष्ठान्वयबोधजनकताऽपि । *अपि पूर्वसमुच्चये । *अतः–तद्विना तदसम्भवात् । अन्वयमुक्त्वा व्यतिरकमाह *तदजाननामिति । *अतएव–तस्य तथा न त्कारणत्वादेव । एवमग्रेऽपि । *इत्ययमेवेति । ज्ञानरूप एव । शास्त्रोक्तत्वं बोधान्तात्रितयान्वाये । तदुक्तात्रितयाविषयकज्ञानवत्त्वमिति तदर्थः । नन्वेव प्रोक्तकारणाभावात्सर्वत्र बाधद्वय दुर्वारमिति प्रोक्तदोषापत्तिरतः । प्राचां मतेनाह *अन्वयेति । आवश्यकत्वाल्लाघवाच्च सिद्धान्तमतेनाह *तन्मूलकामिति । समभिव्याहारकारणताज्ञानमूलकामित्यर्थः । *तन्मूलिकेति । अन्यतरमूलिकेत्यर्थः । अत एव जानेतान्वयबाधे नैराकाङ्क्ष्यामिति व्यवहारः । ननु तात्पर्येणान्यथासिद्धतया नैतदाकाङ्क्षाज्ञानमपि हेतुरत आह *तादृशेति । *अस्याः–उक्ताकाङ्क्षायाः । *तत्र–उक्ताकाङ्क्षाया कारणत्वस्वीकारे । *अयम्–आकाङ्क्षाकार्यकारणभावग्रह । सामान्यत इत्यस्य व्याख्या *क्रियेति । एवेन विशिष्य तत्तत्पदघटितव्यवच्छेद । *उक्तम्–वाक्यशक्तिग्रहकथनावसरे । *अश्रुतेति । अपूर्वश्रुतेत्यर्थः । तदुक्त वाचस्पतिमिश्रैः साङ्ख्यतत्त्वकौमुद्याम् "नच वाक्य वाक्यार्थ बोधयत्सम्बन्धग्रहणमपेक्षते अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वाद्" इति । इदमपि तत्सम्भवमभ्युपेत्य । वस्तुतः स एव नेत्याह *प्रतीति ॥ ४८ ॥

'पदभेदेन व्युत्पत्तिभेद' इत्यस्य च नामपदद्वयना-

माख्याताख्यातानिपातनिपातनामादिभेदेन तत्तत्पद-समुदाये व्युत्पत्तिभेद इत्येवार्थः । सचाग्रे तत्र तत्र वक्ष्यते। उत्थापकताविषयताऽन्यतरसम्बन्धेनोभयसंबन्धेन वा जिज्ञासाविशिष्टः साकाङ्क्ष इत्युच्यते । तत्रान्त्यं-पचति तण्डुल देवदत्त इति। क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तद्विषयत्वाच्च। आद्यं-पश्य मृगो धावतीति। अत्र पश्यार्थस्य कारकधावनाऽऽकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। ईदृशस्थले क्रियाकारकसम्बन्धो वाक्यशक्य एव। अत एव "विभाषा साकाङ्क्षे"इति सूत्रे भाष्ये "अस्त्यस्मिन्नाकाङ्क्षेति च साकाङ्क्षम्" इत्युक्तम् । अस्मिन्निति विषयसप्तमीस्थलम् ॥ ४९ ॥

( कुं० टी० ) ननु क्रियाकारकादिपदसमभिव्याहारस्यार्थविशेषे नियतत्वात् एकस्य पदस्य वाक्यान्तरे कथं भिन्नार्थत्वमत आह *पदभेदेनेति। ननु जनितान्वयबोधे तात्पर्यविरहात्पुनर्बोधाप्रसक्तौ किमाकाङ्क्षाज्ञानहेतुतयेति चेद् ।

अत्राहुः—सैन्धवपदादतात्पर्यविषयतुरगबोधे तात्पर्यविषयान्वयाजनकत्वसत्त्वादाकाङ्क्षाऽस्त्येव किंतु तात्पर्याभावादेव न तुरगबोध इति ।

*अन्त्यम्—उभयसम्बन्धेन । *आद्यम्—अन्यतरसम्बन्धेन । *कारकधावनेति कर्मधारयः ॥ ४९ ॥

( क० टी० ) ननु सामान्यत एव तदङ्गीकारे पदभेदेन व्युत्पत्तिभेद इति प्रवादासङ्गत्यापत्तिरत आह *पदभेदेनेति । ननु विशिष्य तत्तत्पदघटितत्व तस्य तत्तात्पर्यभूतमिति भावः। ननु साकाङ्क्षत्वव्यवहारे न समवायो नियामकः तथा-

सति पुरुषतदारोपविषयार्थान्यत्रेष्टतद्व्यवहारानापत्ते, अत एव न विषयताऽपि, इत्यत आह *उत्थापकतेति । हेतुगर्भं विशेषणमाह—*कारकेति । *उत्थापकत्वम्—उत्थापकत्वमेव । ननु 'पश्य मृगो धावति' इत्यादौ विशेषणविशेष्यभावस्य वाक्यशक्यत्वेन तत प्रतीतावपि कथ क्रियाकारकभावसम्बन्धावगतिः, तस्य विभक्तिशक्यत्वेन न वाक्यशक्यत्वमित्यस्योक्तत्वेन वक्ष्यमाणत्वेन च विभक्तेरत्राभावात् अत आह *ईदृशस्थले इति । *सम्बन्धः—सोऽपि । वाक्यशक्य एवेति एवेन विभक्तिव्यवच्छेदः । तस्या एवासत्त्वेनान्यथानुपपत्त्येति भावः । ननूत्थापकतासम्बन्धेन तद्विशिष्टस्यैव साकाङ्क्षत्व स्वरससिद्ध न विषयतयेति कथं धावनस्य तत्त्वेनैव साकाङ्क्षत्वमत आह *अत एवेति । विषयतासम्बन्धस्यापि निवेशादेवेत्यर्थः । चेन तथा द्वितीयसमुच्चय । अत्रेव तत्रापि द्वितीयस्य तथा साकाङ्क्षत्वेऽप्याद्यस्याभावादेवमुक्तम् । तदाह *अस्मिन्नितीति । आकाङ्क्षात्वेनानुगमादेक एव कार्यकारणभाव । समभिव्याहारस्य कारणत्व च सम्बन्ध विनाऽनुपपन्नमित्येतत्कार्यकारणभावबलादेव वाक्यशक्तिसिद्धिः, अन्यथा पदशक्तिरपि न सिध्येदित्युक्तम् । तदाह *अलमिति ॥ ४९ ॥

यत्तु अर्थनिष्ठा योग्यताऽपि शाब्दबोधे कारणम् । साच तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गतावच्छेदकाख्ये सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावः । तेन विशिष्टाभावादिकमादाय न दोषः । तज्ज्ञानं कारणम् । संसर्गज्ञानं तु तात्पर्यविषयतया ऽऽकाङ्क्षाज्ञानविषयतया वा सुलभम् । यद्वा प्रतियोगितावच्छेदकत्वरूपायोग्यतानिश्चयो बोधप्रतिबन्धक इति ।

तन्न । शब्दप्रयोज्ये बोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । तदभावज्ञानस्याकारणत्वाच्च । सत्यपि बाधनिश्चये 'अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः

( कुं० टी० ) *साचीति। यथा "वन्हिना सिञ्चति" इत्यत्र सेककरणत्वे वन्हिसंसर्गो नास्तीति सेककरणत्वनिष्ठो यो वह्निसंसर्गाभावस्तत्प्रतियोगितावच्छेदकमेव वह्निसंसर्गत्वमिति अयोग्यत्वान्न बोधः । प्रतियोगिता च तदभावग्रहप्रतिबन्धकग्रहाविषयत्वम् । अन्योन्याभावस्थले प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिप्रकारकज्ञानस्याभावधीविरोधित्वान्नाव्याप्तिः। संसर्गे प्रतियोगित्वाभावमनिवेश्य संसर्गतावच्छेदके प्रतियोगितानवच्छेदकत्वनिवेशस्य फलमाह *तेनेति । घटमानयेत्यादौ घटसंसर्गपटत्वोभयाभावसत्त्वे ऽपि नायोग्यत्वापत्तिरित्यर्थः । ननु वृत्तिविरहात्संसर्गस्य कथं ज्ञानमत आह *संसर्गज्ञानं त्विति । *यद्वेति । योग्यताज्ञानहेतुताया तत्र प्रामाण्यनिश्चयस्योत्तेजकत्वं कल्प्यम् । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तु संशयनिश्चयसाधारणाप्रामाण्यज्ञानस्यैवोत्तेजकत्वे लाघवमिति भावः । *बोधप्रतिबन्धक इति ।

इदं तु बोध्यम्—बाधस्य संसर्गाग्रहरूपतया तदभावस्य विशिष्टबुद्धिं प्रति हेतुतायाः क्लृप्तत्वादयोग्यतानिश्चयानन्तरं न शाब्दबोधापत्तिः सम्भवति । अत एव बाधनिश्चयानन्तरं योग्यताभ्रमादेव बोधः । योग्यताभ्रमश्चाहार्यारोपो ऽपि । योग्यताज्ञानस्य पृथक् कारणत्वे तु यत्र स्वरूपसद्बाधावतारो योग्यतासंशयश्च तत्रापि बोधापत्तिः । नच तदुभयमेकत्र न भवत्येवेति वाच्यम् । नहि ग्राह्यपदार्थ एव योग्यता येन ग्राह्याभावनिश्चये सति तत्संशयो न स्यात् । किन्तु ग्राह्यव्याप्या सा । एवं च व्याप्यनिश्चयदशायां तदुभयमविरुद्धमेव। *बाधज्ञानस्येति । बाधनिश्चयस्येत्यर्थः । संशयानन्तरं विशेषदर्शने सति तद्वत्ताबुद्धेरुदयात् ।

केचित्तु संशयसाधारणं बाधज्ञानमेव प्रतिबन्धकं विशेषदर्शनं तूत्तेजकमित्याहुः ।

तन्न । योग्यतासंशयानन्तरं शाब्दबोधोदयेन बाधनिश्चयस्यैव प्रतिबन्धकत्वात् ।

यत्तु बाधकाले ऽपि आहार्यप्रत्यक्षोदयात्प्रत्यक्षान्यज्ञानत्वमेव प्रतिबध्यतावच्छेदकं वाच्यम् । तस्य चार्थापत्तिसाधारणत्वेन प्रतिबध्यतावच्छेदकत्वासम्भवादनुमितित्वादिकमेव प्रतिबध्यतावच्छेदकमिति शाब्दबोधे तस्याक्लृप्तत्वाद्योग्यताज्ञानं पृथगेव हेतुरिति । तद् दूषयति *अप्रतिबन्धकत्वादिति । बाधकाले ऽप्याहार्यप्रत्यक्षोदयादिच्छाया उत्तेजकत्वानुरोधेन प्रत्यक्षत्वस्यैव प्रतिबध्यतावच्छेदकत्वात् उपनीतभानसाधारणप्रतिबध्यतायाः शाब्दबोधावृत्तित्वाद्बाधकाले ऽप्याहार्यः शाब्दबोधो भवत्येवेति भावः ।

वस्तुतस्तु सत्यपि बाधनिश्चये कामलादिदोषवशाद्यथा 'पीतः शङ्ख' इति धीस्तथा पदार्थोपस्थितिवशाच्छाब्दबोधो दुरपह्नव एवेत्याह ।

*अस्यक्षोणिपतेरिति । अस्य राज्ञः कीर्तयः परार्धाधिकसंख्यया लक्ष्या इत्यर्थः । अत्र परार्धाधिकत्वस्य बाधे ऽपि बोधः । *वादेइति । तत्त्वबुभुत्सोः कथायामित्यर्थः ।

केचित्तु शाब्दप्रमायामेव योग्यताज्ञानं हेतुः । आहार्यबोधस्तु भ्रमभेद इत्याहुः ।

*नचेति । योग्यवाक्ये एव विशिष्टबुद्धिः स्वीक्रियत इत्यर्थः । *सर्वत्रेति । योग्यवाक्ये ऽपि विशिष्टबुद्ध्युच्छेदापत्तिरित्यर्थः । *दुःखेति । दुःखादिकं सत्यपि विशिष्टज्ञानस्य हेतु-

तया गालिप्रदानादौ विशिष्टज्ञानाभावे दुःखादिकं न स्यादित्यर्थः ।

यत्तु बाधस्य संसर्गाग्रहरूपतया तदभावस्य विशिष्टबुद्धिमात्रे हेतुत्वावश्यकत्वादयोग्यतानिश्चयानन्तरं न शाब्दबोध इति, तन्निराकरोति *मिथ्याभिशापेति । *रूपकादीति । उपमानोपमेययोरभेदवर्णनं रूपकम् । पदार्थोपस्थितिमात्रस्वीकारे दोषमाह *अन्यथेति । मुखत्वचन्द्रत्वाश्रयत्वानां विशकलितानामुपस्थानेऽपि चमत्कारापत्तिरित्यर्थः । *विभक्त्यर्थस्यैवेति । 'अग्निना सिञ्चति' इत्यादावित्यादिः । *असंसर्गाग्रहेति । रजतत्वप्रकारकप्रवृत्तौ रजतत्वप्रकारकज्ञानस्य हेतुतायाः क्लृप्तत्वाद् रङ्गादिगोचररजतभ्रमोत्तरं प्रवृत्तावपि रजतत्वासंसर्गाग्रह एव हेतुरस्त्विति भावः ।

यत्तु अयोग्यतानिश्चयाभावस्यासंसर्गाग्रहत्वेन प्रत्यक्षस्थले हेतुतायाः क्लृप्तत्वादिहापि तत्त्वमस्तु, नतु योग्यताज्ञानस्येति । तन्न । प्रत्यक्षासंसर्गाग्रहस्यैव तत्र प्रतिबन्धकतया असंसर्गग्रहसामान्याभावस्य पृथग् हेतुताया अक्लृप्तत्वात् । अत एव वक्ष्यति अभावरूपस्यासंसर्गाग्रहस्येनीति भावः ।

*तत्सिद्धिः—प्रवृत्तिसिद्धिः । *अपास्तमिति । प्रत्यक्षासंसर्गाग्रहस्यैव तत्र प्रतिबन्धकतया तदभावस्य कारणतायास्तत्र क्लृप्तत्वे ऽपि असंसर्गग्रहसामान्याभावस्य पृथग्हेतुताया अक्लृप्तत्वादिति भावः ॥ ५० ॥

( क० टी० )आकाङ्क्षेत्युक्तिमात्रसूचितमाह *यत्त्विति । प्राग्वद्द्वियमपि पदनिष्ठा नैवेत्याशयेनाह *अर्थनिष्ठेति । अन्यनिरासायाह *तात्पर्येति । *अवच्छेदकाख्ये—विशेषणविशेष्यभावत्वादौ । ननु तादृशसंसर्गे सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगित्वाभाव इत्येव कु-

तो नोक्तमत आह *तेनेति । तद्वृत्तिधर्मादिनिवेशेनेत्यर्थः । *आदिना-धर्माभयाभाव । अन्यथा तमादाय तत्प्रतियोगित्वस्यैव सत्त्वमिति योग्येऽप्ययोग्यतापत्ति । एव निवेशे तु तदभावे ऽपि तत्त्वस्य तत्र सत्त्व नतु तादृशधर्मे इति न दोष इति भावः । इयमपि ज्ञाता कारण न स्वरूपसतीत्याह *तज्ज्ञानमिति । ननु ससर्गज्ञानमेवादौ कथ येनैतत्स्याद्, अत आह *ससर्गेति । तत्रादौ परमतेनाह *तात्पर्यज्ञानेति । सिद्धान्तमतेनाह *आकाङ्क्षेति । मतान्तरमाह *यद्वेति । व्युत्क्रमेणादौ द्वितीये दोषमाह *बाधेति। आद्ये आह *तदभावेति । उभयत्र हेतुमाह *सत्यपीति। *सख्ययेत्यस्य "प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्या किलाकीर्तयः। गीयन्ते स्वरमष्टम कलयता जातेन वन्ध्योदरान्मूकाना प्रवरेण कूर्मरमणीदुग्धोदधे रोधसि" इति शेष । *यातीत्यस्य 'खपुष्पकृतशेखर.। मृगतृष्णाम्भसि स्नात. शशशृङ्गधनुर्धर" इति शेष. । तत्र दोषान्तरमाह *किञ्चैवमिति । तदन्यतरस्य तदन्यतरत्वे इत्यर्थः । एवमग्रेऽपि । भावे सति किं तत्रोचितमत आह *एतदिति । लेशतोऽपि ज्ञानशून्यत्वायाह *पाश्चात्स्येति । *एतादृशेषु-'वह्निना सिञ्चति' इत्यादिषु । *सर्वत्रेति । 'घटमानय' इत्यादावन्यत्रापीत्यर्थ । तथाच शब्दप्रामाण्योच्छेदप्रसङ्ग इति भावः । वैषम्यादन्यत्र दोषमुद्धरति *नचेति । घटः कर्मत्वमित्यादौ ॥ ५० ॥

किञ्चासंसर्गाग्रहो नाम संसर्गाभावग्रहाभावः । तथा सति बाधज्ञानाभावेन विशिष्टबुद्धेरापत्त्या न्यायनये एवं वक्तुमनौचित्यात् । गुरुमते ऽपि न, येन दोषेण विद्यमानस्यासंसर्गस्याग्रहस्तेनाविद्यमानसंसर्गग्रहस्यैव वक्तुं शक्यत्वात् ।

किञ्च विशिष्टज्ञानस्य कारणत्वे सम्भवति अभावरूपस्यासंसर्गाग्रहस्य तत्कारणत्वकल्पने गौरवम् ।

---

१ न्यायनये, गुरु-ऽपिन, किञ्चेति, इति पाठा न सन्ति केवलमूलपुस्तकद्वितये ।

यत्र तु काव्यादौ विभावादीनां सहृदयतासहकृतव्यञ्जनया संबन्धिविशेषीयत्वेनाप्रतीतौ प्रतीतिरूपा साधारण्येन प्रतीतिस्तत्र विशिष्टज्ञानस्यानुभवविरुद्धतया स्वीयत्वासंसर्गाग्रहमात्रेण स्वीयत्वसंसर्गग्रहप्रयोजनं स्वनिष्ठस्थाय्याभिव्यक्तिरित्यन्यत् । नच 'वह्निना सिञ्च'" इत्यादितः प्रवृत्तिरपि स्यात् । बाधज्ञानेन जायमानज्ञाने ऽप्रामाण्यशङ्काया जननात्तच्छून्यज्ञानस्यैव प्रवृत्त्युपयोगित्वेनाक्षतेः । बौद्धस्यैव सर्वत्र बोधविषयत्वेन बाधस्यैवाभावाच्च ।

तदुक्तम्—

अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि । इति।

वस्तुतो बाधज्ञानं न क्वापि ज्ञाने प्रतिबन्धकम् । तत्काले ऽपि सत्यां सामग्र्यां जायत एव ज्ञानम् । तत्र स्वस्वसामग्रीवशात् द्वयोरपि ज्ञानयोर्जातयोर्यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहस्तत्राप्रामाण्यग्रह इत्येव मर्यादा ज्यायसी । यथा 'गेहे घटोऽस्ति' 'गेहे घटो नास्ति' इति परस्परविरुद्धे द्वाभ्यां प्रयुक्ते ।

किञ्च आशुसंचारादलातचक्रं प्रत्यक्षेण दृश्यते। अनेकदिक्कस्य रूपसहचारिणः स्पर्शस्य युगपद्ग्रहणात् हेतोः, अनुमानाद्गम्यते–'नैतदस्ति इति' । अनन्यथासिद्धानुमानाच्च तदभावज्ञाने तेन पूर्वज्ञानस्य भ्रमत्वं कल्प्यत इति "लटः शतृ" इति सूत्रे भाष्यकैयटयोरुक्तम् । एवं च बाधज्ञानकाले ऽप्यनुमितिः स्वीकृता । अत्र दृश्यते गम्यते इति वर्तमाननिर्देशा-

भ्यामुभयोरेककालिकता सूचिता। अनेकदिक्स्पर्शस्य युगपद्ग्रहणरूपहेतोर्भ्रम इत्येव तस्मिन् सम्भवाच्च। प्रत्यक्षस्य प्रबलत्वे त्वनुमितौ भ्रमत्वकल्पनम् । एवं च बाधस्य हेत्वाभासत्वमप्युपपन्नम् । अनुमितौ तेनाप्रामाण्यग्रहस्य जननात् । एवमन्यत्राप्यूह्यम् ॥५१॥

( कुं० टी० ) *बाधज्ञानाभावेति । विषयाबाधो योग्यता, साच यत्संसर्गो यत्र येन सम्बन्धेन गृह्यते तेन सम्बन्धेन तत्र तद्वत्त्वम् । तज्ज्ञानं च संशयनिश्चयसाधारणं भवत्येव । अन्यथा यस्य न गेहे घटसंसर्गज्ञानं किन्त्वज्ञानमात्रं तस्य 'गेहे घटोऽस्ति'इतिवाक्याद्बोधानापत्तिरिति भावः । *विशिष्टेति । विशिष्टबुद्धिरेव स्यादिति पदार्थोपस्थितिमात्रोक्तिरयुक्तेत्यर्थः । *अभावरूपस्येति । अत एवानिष्टसाधनत्वाभावादीनां न हेतुत्वम् ।

नन्वेव यत्र पदार्थस्मरणानन्तरं योग्यतासंशयात्मकमानमादिज्ञानं ततः अयोग्यतानिश्चयः तत्रापि बोधापत्तिरिति चेत् । सत्यम् । अयोग्यतानिश्चयकाले आपाद्यते तदुत्तरं वा । नाद्यः । विरोधिनिश्चयसामग्र्याः प्रतिबन्धकत्वस्य सर्वसिद्धत्वात् । नान्त्यः । पदार्थस्मरणस्य नाशात् ।

*विभावादीनामिति । रत्यादेश्चित्तवृत्तिविशेषस्य लोके यानि कारणानि प्रमदादीनि तानि चेत्तदनुकरणेन काव्यनाटकयोरुपनिबद्धानि तदा तानि विभावाः । एतैर्व्यक्तः स्थायी रत्यादिको भावो रस इत्युच्यते । *सहृ-

---

१ किञ्च आशु—जननात् अय पाठ कुञ्जिकायुतमूलपुस्तके नोपलभ्यते ।

दयतेति । काव्यवासनापरिपक्वबुद्धिः सहृदयः । *सम्बन्धिविशेषीयत्वेनेति । 'ममैवैते' 'तटस्थस्यैवैते' इतिसम्बन्धिविशेषस्वीकारपरिहारादिति भावः । *स्वीयत्वेति । साधारणोपायबलात्साधारण्येनैव तदभिव्यक्तेः । *नचेति । अत्रापि विशिष्टबुद्धिस्वीकारे इति शेषः । समाधत्ते *बाधज्ञानेनेति ।*वस्तुतइति । सत्यपि पीतत्वाभावनिश्चये कामलादिवशात् 'शङ्खः पीतः'इति प्रतीत्युदयादिति भावः। किञ्च योग्यताज्ञानस्य हेतुत्वे संशयसाधारणमेव तद् वाच्यं, तथाच यस्य न गेहे घटसंसर्गज्ञानं किन्त्वज्ञानमात्रं तस्य 'गेहे घट' इति वाक्याद् बोधानापत्तिः । *न क्वापि ज्ञाने इति। अयं भावः—यत्र तदभावभासकसामग्री, तत्कोटिभासकसामग्रीच, तत्र संशय एवोत्पद्यते। यत्र तदभावभासकसामग्रीमात्रं तत्र सामग्र्यभावादेव तत्कोटिभानासम्भवः। अथोपनायकज्ञानात्पूर्वं बाधाभावस्य सत्त्वात् 'भूतलङ्घटवद्' इति लौकिकप्रत्यक्षसामग्रीकाले ऽपि 'भूतलं घटाभाववद्'इत्याकारकोपनीतभानसामग्र्यस्त्येवेति चेन्न। एककोटिलौकिकप्रत्यक्षसामग्र्या अपरकोटिभानप्रतिबन्धकत्वात् । बाधदशायां लौकिकसंनिकर्षजन्यसंशयवारणाय तादृशप्रतिबन्धकत्वस्यावश्यकत्वात्। *यथा गेहे घट इति। संशयात्मकयोग्यताज्ञानस्योभयत्र सत्त्वादुभयविधो ऽपि बोधो भवत्येवेति भावः।

यत्तु तत्र संशय एव, तदुत्तरं विशेषदर्शने सति निश्चय इति।

तन्न। बोधं विना संशयस्यैवासम्भवात्। किन्तु विशेषदर्शनेनान्यतरकोटावप्रामाण्यग्रह एव । *किञ्चाशुसंञ्चारादिति । तथा च गौतमसूत्रम्—"अलातचक्रदर्शनमनुपलब्धेराशु संचाराद्" इति। "क्रमिके ऽपि यौगपद्योपलब्धिराशु सञ्चारात्।

शीघ्रसञ्चारात्मकाद्दोषात् । यथा वेगातिशयेन भ्राम्यमाणे अलाते क्रियासन्तानस्य भेदानुपलब्धिः" इति तदर्थः । आनुमानिकबाधनिश्चयदशायामपि इन्द्रियसन्निकर्षेण तद्वत्ताबुद्धिजननाल्लौकिकसंनिकर्षाजन्यज्ञानमेव प्रतिबध्यमिति न युक्तं, किन्तु दोषविशेषाजन्यमेव, इत्याह *अलातचक्रमिति । आशु संचारात्तत्र चक्रभ्रान्तिरुत्पद्यत इत्यर्थः । *रूपसहचारिणइति । शुक्लभास्वररूपव्यापकस्येत्यर्थः । अनेकादिक्कस्पर्शस्य युगपद्ग्रहणाभावादनुमानेन प्रत्यक्षं बाध्यत इत्यर्थः । स्पर्शस्येत्यत्रोद्भूतस्येति शेषः । तेन दीपप्रभायां स्पर्शाग्रहे ऽपि अनेकदिग्रूपस्य युगपद्ग्रहणमित्याशङ्का ऽपास्ता । *अन्यथासिद्धेति । लोकादिसिद्धेत्यर्थः । *तदभावज्ञानेइति । जाते सतीतिशेषः । *वर्तमानेति । "अलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च गम्यते—नैतदस्ति इति"भाष्योक्तावित्यर्थः। *तस्मिन्निति। अलातचक्रे भ्रमति सतीत्यर्थः । *बाधस्य—पक्षे साध्याभावनिश्चयस्य । *हेत्वाभासत्वमिति । 'ह्रदो वह्न्यभाववान्' इति निश्चये 'ह्रदो वह्निमान्' इत्यनुमितेरनुदयात् । ननु ह्रदे धूमस्यासत्त्वात् 'ह्रदो वह्न्यभाववान् धूमाद्' इत्ययं स्वरूपासिद्ध एवेति चेन्न । यत्र 'वह्निव्याप्यधूमवान् ह्रद' इति भ्रमात्मकः परामर्शो जातस्तत्र बाधस्यैव दूषकत्वात् । ननु तद्व्याप्यवतो ज्ञानकाले कथन्तदभाववतो ज्ञानम् । सत्यम् । अलौकिकतद्व्याप्यवतो ज्ञानस्यैव विरोधितया आनुमानिकवह्निव्याप्यवत्ताज्ञानकाले ऽपि प्रात्यक्षिकवह्न्यभाववत्ताज्ञानोदये बाधकाभावात् ॥ ५१ ॥

( क० टी ) अनतिप्रसङ्गायाह *वि[1]शिष्टेति ॥ ५१ ॥

---

१ अत्र ग्रन्थस्त्रुटितो भाति । आदर्शपुस्तकैक्येन च ज्ञातु न पार्यते स कीदृश इति ।

वस्तुतः—साध्यबाधो न हेत्वाभासः, सर्वसाधारणबाधबुद्धिप्रतिबन्धकतयैव निर्वाहेण तस्य विशिष्य हेत्वाभासेषु ग्रहणानौचित्यात्, किन्तु हेतुबाधभानस्यैव तत्त्वमुचितम् । उक्तं च न्यायभाष्यवार्तिककाराभ्यां तथैव ।

किञ्च 'इदं रजतम्' इतिभ्रमोत्तरं जायमानस्य 'नेदं रजतम्' इति बाधज्ञानस्य रजतज्ञाननिष्ठाप्रामाण्यज्ञानं प्रति कारणता ऽवश्यं वाच्या । एवं स्फटिके रक्तत्वाभावज्ञानस्य सोपाधिकतद्रक्तत्वज्ञाने तत्कारणता वाच्या । एवं च सर्वत्र तथैवास्तु किं द्वयकल्पनेन ।

यत्र तु लोकप्रसिद्ध्याऽर्थस्य बाधितत्वज्ञानं तत्र तेनैव जायमानज्ञाने ऽप्रामाण्यग्रहः, यथा—'वह्निना सिञ्चति' इत्यादौ ।

नच गालिदानादिस्थलेऽपि बाधज्ञानेन तत्राप्रामाण्यग्रहे दुःखानुपपत्तिरिति वाच्यम् । ततो दुःखाभावेऽपि व्यञ्जनया जायमानेन तद्दुष्टत्वज्ञानेन तदुपपत्तेः । व्यञ्जनाजन्यज्ञाने तु न बाधज्ञानेनाप्रामाण्यज्ञानमिति स्पष्टं काव्यप्रकाशादौ ।

यद्वा तत्र तमउद्रेकेण प्राथमिकबोधे ऽपि नाप्रामाण्यग्रहः ।

एवं च योग्यताज्ञानं प्रवृत्त्याद्युपयोगियोग्यतासंदेहादिप्रसक्ताप्रामाण्यज्ञानाभावविशिष्टबोधजनकं विशेषणीभूताभावप्रतियोगिप्रतिबन्धकतयेति बोध्यम् । लक्षणामूलमपि शक्यार्थबोधे विषयबाध-

ज्ञानजन्यमप्रामाण्यज्ञानमेवेत्यलम् ॥ ५२ ॥

( कुं० टी० ) *नहेत्वाभासइति । न हेत्वसाधारणदोष इत्यर्थः । एतदेवोपपादयति *सर्वसाधारणेति । तद्वत्तानिश्चयस्य सामान्यत एव तदभाववत्तानिश्चयप्रतिबन्धकत्वात् ।

यत्तु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितौ कारणम्, तथाचानुमितिकारणीभूतसाध्यसंसृष्टत्वज्ञानविरोधितया बाधस्य हेत्वाभासत्वमिति । तन्न । साध्यसंशयं विनाऽप्यनुमित्युत्पत्तेः ।

*किं चेति । ननु बाधस्थले पक्षे हेत्वभावे स्वरूपासिद्धिरेवेति कथं तस्य बाधत्वमिति चेत् । सत्यम् । यत्रोत्पत्तिक्षणावच्छिन्नघटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र 'उत्पत्तिकालिको घटो गन्धवान्' इत्यनुमितिं प्रति बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । *हेतुबाधज्ञानस्यैवेति । पक्षे हेत्वभावज्ञानस्यैवेति भावः । एतस्य पक्षधर्मताविघटकतया प्रतिबन्धकत्वम् । *तेनैवेति । जायमानज्ञाने बाधज्ञानेनाप्रामाण्यग्रहो भवतीत्यर्थः । *तमउद्रेकेण-तमोगुणस्य दृढतरसंस्कारजनकत्वेन । *योग्यतासन्देहेति । योग्यतासन्देहेन प्रसक्तं यदप्रामाण्यज्ञानं तदभावविशिष्टबोधे प्रवृत्तिजनके विशेषणीभूतो योऽप्रामाण्यग्रहाभावः तस्य प्रतियोगी योऽप्रामाण्यग्रहस्तस्य प्रतिबन्धकतया योग्यताज्ञान प्रवृत्त्याद्युपयोगि इत्यन्वयेनेत्यर्थः । *लक्षणामूलमिति । शक्यार्थे बाधज्ञानमेव लक्षणामूलमित्यर्थः ॥ ५२ ॥

(क०टी०)*सर्वेति । प्रत्यक्षादीत्यर्थे । *तस्य-साध्यबाधस्य । *तत्त्वम्-हेत्वाभासत्वम् । उक्तरीत्या अनिर्वाहात् । अत्र तन्मूलसंमतिमाह *उक्त चेति । एतेन तस्य तत्त्वमाधुनिकनैयायिकोक्तमपास्तम् ।

परस्यापि क्वचिन्मदुक्तप्रकारं विना न गतिरित्याह *किञ्चेदमिति । विशेषणभेदेनाह *एवमिति । तद्वादित्यर्थ. । *ज्ञानस्येति । पूर्वजा-

तस्य परजातस्य चेत्यर्थः । तथैवानुभवादिति भाव, तदाह *सोपाधिकेति । *तत्कारणतेति । तज्ज्ञाननिष्ठाप्रामाण्यग्रहजनकतेत्यर्थः । तथा सति गौरवमाह *एव चेति । तत्र तदावश्यकत्वे चेत्यर्थं । *द्वयेति । क्वचित् ज्ञानप्रतिबन्धकत्व, क्वचिदप्रामाण्यग्राहकत्वमिति द्वयेत्यर्थ । प्रागुक्ते बाधज्ञानांशे विशेष सिद्धान्ते आह *यत्रत्विति । *प्रसिद्धा–तथैव । सिद्धान्ते दोष परिहरति *नचेति । *तत्र–ज्ञाने । *अनुपपत्तिरिति । प्रवृत्ताविव तत्रापि तदनास्कन्दिततादृशज्ञानस्यैव हेतुत्वादिति भाव. । फलबलकल्प्यमाह *तत इति । ननु तत्रापि तेनैव कुतो नाप्रामाण्यग्रह इत्यत आह *व्यञ्जनेति । *स्पष्टमिति । तत्र हि–'सारोपसाध्यवसानयोर्गौणभेदयोर्भेदेऽभेदावगमः, सर्वथैवाभेदप्रतीतिश्च फलमिति । किं बहुना बाधित एव पावनत्वादिविशेषस्तटादौ प्रतीयते, अत एव सूत्रितं "योगः फलेन नो" इति' इत्युक्तम् । *आदिना प्रदीपादौ । बाधितार्थबोधक तयैव तस्या धर्मिग्राहकमानासिद्धत्वमिति भावः । नन्वेव सिद्धान्ते प्रयत्नविशेषे गौरवमेव, अत आह *यद्वेति । उत्तेजकमाह *तम-इति । सत्त्वरजसोरभिभवपूर्वकाविर्भावेणेत्यर्थः । *अपिरेवार्थे । एवं योग्यताज्ञानादेस्तत्र कारणत्ववादिनैयायिकमते खण्डितेऽपि आद्यं प्रवाद कथंचित्तेषामुपपादयन् तदुपयोगमाह *एव चेति । बाधनिश्चयस्य सर्वथा प्रतिबन्धकत्वाभावे चेत्यर्थः । *उपयोगीति बोधविशेषणम् । प्रवृत्त्यादीत्यादिना दु.खादि । सदेहादिप्रसक्तेति पाठ । *सन्देहादीत्यादिना ऽयोग्यतानिश्चय. । व्यस्तपाठे तु तत् एकदेशबोधविशेषणमेतद्वदिति बोध्यम् । प्रसक्तत्वमप्रामाण्य ज्ञानविशेपणम् । *प्रतिबन्धकतयेति । न योग्यतानिश्चयस्य साक्षाच्छाब्दबोधजनकत्व, किन्तु अप्रामाण्यज्ञानाभावविशिष्टबोधस्यैव प्रवृत्त्याद्युपयोगितया विशिष्टशाब्दबुद्धिं प्रति प्रयोजकत्वम् । तच्च तत्र विशेषणीभूताभाव–प्रतियोगि—प्रतिबन्धकतया तत्रैतन्निश्चयप्रयोज्यत्वेन । एतावतैव शाब्दबोधकारणत्वोक्तिः

---

१ तत्–उपयोगीति योग्यतया सदेहपदार्थैकदेशे बोधे विशेपणम् प्रसक्तपदार्थैकदेशे प्रसङ्गे योग्यतासन्देहादिना इत्येतद्वत् इत्यर्थ. प्रतिभाति ।

प्राचामित्यर्थः । नन्वेवमपि लक्षणास्थले बाधनिश्चयस्य बोधप्रतिबन्धकत्वमावश्यकमेवात आह *लक्षणेति । तस्या मूलमपीत्यर्थ । एवेन शक्यार्थबोधाभावव्यवच्छेदः । यथाचैतत्तथोक्तं प्राक् । एवं च सर्वत्रैकवाक्यता सिद्धेति बोध्यम् । तदाह *अलमिति ॥ ५२ ॥

परेतु अन्वयप्रयोजकसमभिव्याहृतकार्यशक्तिमत्त्वं योग्यता । साच शाब्दबोधे भासते । अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्यैव जलाहरणशक्तिमत्त्वेन साच्छिद्रेतरत्वप्रकारको बोधः । अत एव प्रतिनिधेः श्रौतत्वोपपत्तिः । यथा–"खादिरे बध्नाति" इत्यादावस्वातन्त्र्यफलकसंयोगविशेषरूपबन्धनसमर्थखादिरालाभे ऽन्यः प्रतिनिधिः उपादीयते । अतस्तादृशबन्धनसामर्थ्यवत्त्वेन खादिरबोधो ऽवश्यमभ्युपेयः । एवं च खादिरबाधे ऽपि तत्सामर्थ्यत्यागे मानाभावात्तदुपपत्तिः । अन्यथा खादिरस्यासामर्थ्ये बन्धनलोप एव स्यात् । सर्वत्र प्रवृत्तिनिमित्तं स्वाश्रयसमभिव्याहृतकार्यशक्तेरप्युपलक्षणमिति तस्या अपि प्रवृत्तिनिमित्तसामानाधिकरण्येन बोधे भानम् । एवं चोपलक्षकजात्यवच्छिन्नस्याशक्ततया त्यागे ऽपि उपलक्ष्यशक्तित्यागानौचित्याद् अन्यगता सा गृह्यते । सादृश्येन तत्रापि तत्त्वबुद्धेः । किञ्च घटत्वेन सच्छिद्रेतरव्यक्तिविशेषस्यैव भानमित्यङ्गीकारे लक्षणापत्तिः । सामान्यरूपेण विशेषबोधे ऽपि लक्षणेत्यर्थस्य 'त्वामस्मि वच्मि' इत्युदाहरणे काव्यप्रकाशकृता स्पष्टमुक्तत्वात् ।

तदुक्तं हरिणा–

केषांचित्साहचर्येण जातिः शक्त्युपलक्षणम् ।
खादिरादिष्वशक्तेषु जातिः प्रतिनिधीयते ॥
अस्वातन्त्र्यफलो बन्धः प्रमाणादौ च शिष्यते ।
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते॥इति।

केषाञ्चित्, जातिशक्तिवादिनाम् । प्रमाणं हिंसा। शुद्धव्यक्तिशक्तिवादेऽपि वस्तुगत्या जातिशक्तिविशिष्टा केवला व्यक्तिः शक्येति न दोष इति बोध्यमित्याहुः ॥ ५३ ॥

इति योग्यताविचारः ।

(कुं० टी० ) *परेत्विति । घटादावानयनानुकूलतैव योग्यतेत्यर्थ. । *तदुपपत्तिः—प्रतिनिधेः श्रौतत्वोपपत्तिः । *अन्यः प्रतिनिधिरिति । बन्धनस्य तु न बाधः, प्रधानत्वात् । कथ तर्हि "स्रुचः संमार्ष्टि" इत्यत्र द्वितीयाश्रुत्या स्रुचा प्राधान्यमिति सिद्धान्त इति चेद् । द्रव्यसंस्कारककर्मत्वं गुणत्वमिति सिद्धान्तात् । एतेन दृष्टोपकारजनकत्वाभावात्संमार्जनस्याप्राधान्यमित्यपास्तम् । *स्वाश्रयेति । प्रवृत्तिनिमित्तसमानाधिकरणशक्तेरपि भानमित्यर्थः । उपलक्षकजातिः—खदिरत्वादिः । *अशक्ततया—असमर्थतया । *तत्रापि—कदरादावपि । *तत्त्वबुद्धेः—खदिरत्वबुद्धेः । ननु जातिशक्तिवादिमते जातौ कथं बन्धनादिक्रियान्वयः—सामर्थ्याद्व्यक्तिराक्षिप्यत इति चेत्, कथ प्रतिनिधेर्ग्रहणमित्याशङ्क्याह *केषाञ्चित्साहचर्येणेति । केषाञ्चिज्जातिशक्तिवादिनां मते एकार्थसमवायेन क्रियान्वये "खादिरे बध्नाति" इत्यादौ खदिरत्वादिजातिः स्वसमानाधिकरणबन्धनयोग्यतारूपशक्तेरुपलक्षणम्, अन्यथा असमर्थखदिरेऽपि बन्धनप्रसङ्गात् ।

तथाच क्वचिद् गुणीभूतखदिरत्वस्य बाधे ऽपि प्रधानबन्धनक्रियानुकूलशक्तेर्न बाधः। काकादिपदे दध्युपघातकादेरिवात्रापि जातेः शक्त्युपलक्षणत्वान्नान्तरीयकमुपादानम् । नचैवं गवादिचोदनासु महिषादेरपि ग्रहणप्रसङ्गः । चोदितप्रतिनिधिविषये एव एतन्न्यायस्येष्टत्वात् ।

यत्तूक्तङ्कुसुमाञ्जलौ—

"संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" । इति ।

व्रीहिप्रोक्षणादिना पुरुषे एवादृष्टमुत्पद्यते तादृशादृष्टं प्रति च प्रोक्षितव्रीहेः कारणत्वमिति तदर्थ इति ।

तन्न । शक्त्यस्वीकारे प्रतिनिधिग्रहणानापत्तेः ।

ननु येषां जातिवादिनां तात्पर्येण जातिरभिधेया तेषां कथं प्रतिनिध्युपपत्तिरत आह *अस्वातन्त्र्यफलइति ।

अयं भावः—मा भूज्जातिः शक्त्युपलक्षणम्, एवमपि प्रातिपदिकार्थभूताया जातेर्गुणत्वात्प्रधानबन्धनक्रियानुकूलत्वात्प्रतिनिधिरेवोपादेयः । तथाहि सति प्रमाणस्य हिमावदानादेरनुपपत्तिः, अन्यथा यागस्यैवासम्पत्तिरिति । *जातिशक्तिविशिष्टा—एतदुभयविशिष्टा ॥ ८३ ॥

( क० टी० ) प्राभाकरमतसवादिहर्यादिसमतसिद्धान्तमाह *परेत्वित्यादिना । तत्स्वरूपमाह *समभीति । तज्जननत्वावच्छिशक्तीत्यर्थः । एतज्ज्ञान शाब्दबोधे कारणमिति गुरूक्तिर्विषयतया तस्य कारणत्व पदार्थोपस्थितिवन्न त्वाकाङ्क्षाज्ञानवदित्याशयेनेति ध्वनयन्नाह *साचेति । तत्र शक्तिस्वरूपमाह *सच्छिद्रेतरत्वेति । अत एवान्वयितावच्छेदकत्वानियम' शाब्दबोधे इति भाव' । अस्यावश्यकत्वमाह *अतएवेति । तस्यास्तत्र भानादेवेत्यर्थः । तत्त्वमुपपादयति *यथेति । *अन्य.—बर्बुर. । यत इत्यादि. । उपस्थितत्वादाह *तत्सामर्थ्येति । *तत्-श्रौतत्वम् । अन्वयेनोक्त व्य-

तिरेकमुखेन द्रढयति *अन्यथेति । विपक्षे इत्यर्थः । तथाचाङ्गवैगुण्यापत्तिरिति भावः । प्रत्येकमुक्तत्वात् द्वितीयमाद्यैकवाक्यतया सवलनोक्त्या विशदयति *सर्वत्रेति । तदवच्छेदेनाभानादाह *सादृश्येनेति । वर्णादिना प्रतिनिधावपि खादिरत्वादिबुद्धेरित्यर्थः । ननु सामान्यरूपेण विशेषबोधेन निर्वाहे किमिति तत्र तद्भान, प्रतिनिधेः श्रौतत्वमपि तत्र तस्यापूर्वसाधने लक्षणेत्यादिप्रागुक्तप्रकारेणोपपन्नमत आह *किंचेति । ननु शक्तिरेव तत्राप्यत आह *सामान्येति । अपिना विशेषरूपेण विशेषबोधसमुच्चय । *त्वामस्मीति । लक्षणामूलगूढव्यङ्ग्यप्राधान्यस्य ध्वनेर्भेदद्वयादाद्यभेदस्यार्थान्तरसंक्रमितवाच्यस्येदमुदाहरणम् । तत्र वच्मीत्यादेरुपदेशादौ लक्षणादीत्याद्युक्तम । *तदुक्तमिति । एतन्मतोक्त सर्वमित्यर्थ । *प्रतिनिधीति । अप्रतिनिधिः प्रतिनिधिमेवतीत्यर्थः । *प्रमाणादाविति विषयसप्तमी । आदिना उत्सर्गः । 'मीङ् हिंसायाम्' इत्यस्य रूपमित्याह *प्रमाण हिंसेति । हरिणा मतत्रये निर्वाहे उक्तेऽपि तुर्यमते तदनुक्त्या न्यूनतां निराचष्टे *शुद्धेति । *जातीति । जातिशक्त्युभयविशिष्टेत्यर्थः ॥ ५३ ॥

आसत्तिरपि मन्दस्याविलम्बेन शाब्दबोधे कारणम् । साचान्वयप्रतियोगिपदार्थानां तद्बोधकपदानां चाव्यवधानजप्राथमिकोपस्थितिरूपा । काव्ये ऽन्यत्र च सर्वान्प्रति प्रायेण तादृशबुद्धेरेव वक्तुरुद्देश्यत्वात् । अनासन्नस्थले योजनावाक्यान्मन्दस्य बोधेऽपि विलम्बो ऽस्त्येव । नच 'अस्मात्पदादयमर्थो बुद्ध' इत्यनुभवो विरुध्येतेति वाच्यम् । योजनावाक्यसंपादनद्वारा तस्यापि बोधे उपयोगेनादोषात् । अमन्दस्य तु आसत्त्यभावे ऽपि पदार्थोपस्थितौ आकाङ्क्षाज्ञानवतो बोधो ऽविलम्बेनैव भवतीति न तद्बोधे तस्याः कारणत्वम् । ध्वनित चेदं "नपदान्त–" इतिसूत्रे भाष्ये ।

**वस्तुतो योजनावाक्यकल्पना व्यर्था तत्कल्पकाकाङ्क्षादिना अर्थयोजनाकल्पनस्यैवौचित्यात् । परं तु मन्दस्य सा विलम्बेन, अमन्दस्य तु सा शीघ्रमित्येवोचितम् ॥ ५४ ॥**

इत्यासत्तिविचारः ।

(कुं०टी०)*आसत्तिरपीति । मन्दस्य अविलम्बेन बोधे आसत्तिरपि कारणम्,अमन्दस्य तु आसत्त्यभावे ऽपि बोधो भवतीत्यर्थः । एवंचानासन्नस्थले योजनावाक्याद्विलम्बेन बोध इत्येतावतैवानासन्नत्वव्यवहार इति भावः । *साचेति । अन्वयिपदार्थानां पदानां च अव्यवधानेनोपस्थितिरासत्तिरित्यर्थः । *ननु कथं गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादावासत्तिभ्रमाच्छाब्दबोध इति प्रवादः, गिर्यग्निमत्पदयोरव्यवधानदशायां तस्यैवासत्तित्वादित्यत आह *प्राथमिकेति । एवं च प्राथमिकबोधाभावेनैवानासन्नत्वप्रवाद इति भावः । *तादृशबुद्धेरेव–प्राथमिकबुद्धेरेव । ननु अनासन्नस्थले कथं योजनावाक्याद्बोध इत्यत आह *विलम्बोऽस्त्येवेति । *विरुध्येतेति । तत्र योजनावाक्यस्यैव बोधकत्वात् । *तद्बोधे–अमन्दानां बोधे॥५४॥

आसत्तिविचारः ।

( क० टी० ) इयमपि सर्वबोधे न कारणमित्याह *मन्दस्येति । तत्रापि विशेषमाह *अविलम्बेनेति । द्वितीयोपस्थितेरनासत्तित्वाद्याह *प्राथमिकेति । अविलम्बनिवेशे बीजमाह *काव्ये इति । क्वचित् कूटादौ तदभावादाह *प्रायेणेति । तन्निवेशफलमाह *अनासन्नेति । तस्य तत्र तथा बोधे दोष परिहरति *नचेति । पञ्चम्यर्थः साक्षाज्जनकत्वमिति शङ्काऽऽशय । प्रयोजकत्व स इति समाधत्ते *योजनेति । मन्दत्वनिवेशे फलमाह *अमन्देति । अत एव तुः । योग्यताज्ञानस्य तत्त्वस्य खण्डितत्वादाह *आ-

काङ्क्षाज्ञानेति । *तस्याः—तादृश्या शक्तेः । *ध्वनितमिति । तत्रहि-"स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्" इति आनुपूर्व्येण सन्निविष्टानां यथेष्ट सम्बन्ध शक्यते कर्त्तु नचैतान्यानुपूर्व्येण सन्निविष्टानि । अनानुपूर्व्येणापि सन्निविष्टाना यथेष्ट सम्बन्धो भवति । तद्यथा—अनड्वाहमुदहारि या त्व हरसि शिरसा कुम्भ भगिनि साचीनमभिधावन्तमद्राक्षीरिति'इत्युक्तम् । 'प्रकृत॰—प्रस्तुत । पदान्तरेणाव्यवधानरूपाऽऽसत्तिरानुपूर्व्यम्, तत्र पदार्थाना समन्वयावगमात्पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसम्बन्ध' इति कैयटः । 'यथेष्ट सम्बन्ध' इष्टवाक्यार्थबोधजनकत्वरूप । आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रमः । एव चासत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद् बुद्ध्युत्पत्त्यनुसारेणान्वयबोध इति भावः । साचीन तिर्यग्गच्छन्तम्' इत्युद्द्योतश्च । अनासन्नस्थले ऽभ्युपेत्यवादेन प्रागुक्तम् नतु तात्त्विकमित्याह *वस्तुतइति । आकाङ्क्षादिनेत्यादिना—तात्पर्यम् । *सा—अर्थयोजना ॥ ५४ ॥

( आसत्तिविचारः । )

यत्तु तत्र तत्र वाक्ये'घटमानय'इत्यादौ घटकर्मकानयनबोधेच्छयोच्चरितत्वाभावज्ञाने,अन्यबोधेच्छयोच्चरितत्वज्ञाने वा तथाबोधानुदयात्तयोः प्रतिबन्धकत्वकल्पने गौरवेण लाघवात्तथाबोधे 'इदं वाक्यमेतदर्थप्रतीतीच्छया वक्त्रोच्चारितम्' इत्याकारकतात्पर्यग्रहो हेतुः। नानार्थपदस्थले पदविषयोऽपि स तथा। तद्ग्राहकं च प्रकरणादिकम् । अत एव प्रकरणादिज्ञानाभावे 'इदं पदमेतदर्थकमेतदर्थकं वा' इति संदिह्यते । मौनिलिखितवाक्यस्थले ऽपि तस्य सूक्ष्ममुच्चारणमस्त्येवेति ।

तन्न । शुकादिवाक्याद्, देवताप्रसादेन पूर्वजन्मसंस्कारेण वा मूर्खबालककृतोत्तमकाव्याद्वक्तृतात्पर्य-

व्यतिरेकनिश्चयेऽपि बोधोदयेन तस्य बोधे हेतुत्वासम्भवात् । तद्व्यतिरेकनिश्चयश्च वक्तुस्ततस्तदर्थाबोधात्।

नन्वैश्वरं तत्र तात्पर्यम् । अत एव वेदवाक्यतो ऽर्थबोध इति चेन्न । तस्य फलैकोन्नेयत्वेन प्राक् दुर्ज्ञेयत्वात् । लाघवादिन्यायगृहीततत्तदर्थबोधकत्वज्ञानस्य वेदजन्यबोधे तद्गतप्रामाण्यनिश्चये वा हेतुत्वान्मीमांसोपयोगः । किञ्च 'अस्मादर्थद्वयविषयको बोधो जायते तात्पर्यं तु क्वेति न जानीम' इति सर्वजनानुभवविरोधान्न तस्य हेतुत्वम् । अत एव 'पय आनय' इत्युक्ते अप्रकरणज्ञस्य दुग्धं जलं वाऽऽनेयमिति प्रश्नः संगच्छते । स्पष्टं चेदं सर्वं संख्यासंज्ञासूत्रे भाष्ये ।

तत्र पदार्थोपस्थितिरेवेत्यादि उक्तरीत्या खण्डनीयम् ।

तात्पर्यनिर्णयोपयोगस्तु तज्ज्ञाने प्रामाण्यनिश्चयद्वारा प्रवृत्तौ, क्वचिदनेकपदार्थस्यान्वययोग्यत्वे कस्याध्याहार इत्यत्र चेति बोध्यम् । नचाश्वतात्पर्यकत्वेन निर्णीताद् 'गेहे सैन्धवमस्ति' इति वाक्याद् 'गेहे लवणमस्ति नवा' इतिसंशयोच्छेदापत्तिरिति वाच्यम् । एकतरविषयकज्ञाने प्रामाण्यनिश्चये तदितरविषयकज्ञाने ऽप्रामाण्यबुद्ध्युदयेन तदनुच्छेदात् । तत्परत्वाभावज्ञान-तदन्यपरत्वज्ञानयोरपि तद्बोधेऽप्रामाण्यग्रहजनकतैव । तथा तत्तद्वाक्यार्थे प्रामाण्यग्रहे तत्तद्वाक्ये आप्तोक्तत्वज्ञानं हेतुः । आप्तत्वं च भ्रमप्रमादविप्रलिप्साशून्यत्वम् । तज्ज्ञानं च 'अयं प्रकृत-

विषये ईदृशासत्ववान्, आसत्वधर्मविरोधिधर्मानधिकरणत्वाद्' इत्यनुमानेन । तत्र भ्रमो वाक्यार्थभ्रमः । प्रमादोऽन्यार्थकशब्दभ्रमः । विप्रलिप्सा प्रतारणा—प्रतीतविपरीतप्रतिपिपादयिषा । वेदस्याकर्तृकत्वे तु अनाप्तोक्तत्वाभावज्ञानं हेतुः । तच्चाप्तोक्तत्वज्ञानादनुक्तत्वनिर्णयाद्वेत्यन्यत् ।

वस्तुतः सर्वः शब्दः प्रमाणमेव । अनाप्तोक्तत्वज्ञानं तु तज्जन्यज्ञाने अप्रामाण्यग्राहकमित्यग्रे निरूपयिष्यामः । अत्र श्रौततावत्पदार्थज्ञानानामाकाङ्क्षादिज्ञानानां च नष्टत्वे ऽपि तेषां समूहालम्बनस्मरणात्तत्संस्काराद्वा ऽन्वयबोधः । अयमेव खलेकपोतन्यायेन बोधः । यदा तु क्रमेणैवोद्बोधकसमवधानात् तत्तत्खण्डवाक्यार्थबोधोत्तरं पूर्वपूर्वस्मरणात्तत्संस्काराद्वा महावाक्यार्थबोधस्तदा राजपुरप्रवेशन्यायेन बोध इत्यन्यत्र विस्तरः ॥ ५५ ॥

इति तात्पर्यविचारः ।

(कुं.टी.)*तयोः—पूर्वोक्तज्ञानयोः। *स—तात्पर्यग्रहः । *तथा—हेतुः । एकार्थपदे तात्पर्यस्यानुपयोगात्सैन्धवादिपदे तात्पर्यमपि हेतुरित्यर्थः । *तद्ग्राहकम्—तात्पर्यग्राहकम् । *इदं पदम्—सैन्धवादिपदम् । शुकादिवाक्ये शिक्षकव्यापारस्यैव सत्त्वादाह *मूर्खेति । तत्र वक्तृतात्पर्याभावे ऽपि बोधदर्शनान्न तस्य हेतुत्वमितिभावः । *फलैकेति । शाब्दबोधमात्रानुमेयत्वेनेत्यर्थः । *दुर्ज्ञेयत्वादिति । ईश्वरतात्पर्यस्य प्रथमतो ग्रहीतुमशक्यत्वादित्यर्थः । *लाघवादीति । निषादस्थपत्यादौ कर्मधारया-

द्यर्थनिर्णयवत् । *अतएवेति । प्रकरणतात्पर्यनिर्णये प्रकरणस्यैव हेतुत्वमस्त्विति भावः । नन्वीदृशस्थले पदार्थोपस्थितिमात्रं भवति नतु विशिष्टवाक्यार्थबोध इत्यत आह *उक्तरीत्या खण्डनीयमिति । योग्यताज्ञानहेतुतानिराकरणावसरे खण्डितमेतदिति भावः । *प्रवृत्ताविति । उपयोग इतिपूर्वेणान्वयः । *अकर्तृकत्वे इति । जैमिनीया हि वेदाध्ययनं प्रति गुरुशिष्यपरम्परामविच्छिन्ना मन्यमाना वेदमनादिमित्याचक्षते । वैयासिकमते तु सृष्टिप्रलययोः श्रुतिसिद्धत्वात् पूर्वपूर्वसर्गानुसारेण तादृशानुपूर्वीविरचनमेव । अवान्तरवाक्यार्थबोधकाले पदार्थस्मरणस्य नष्टत्वान्महावाक्यार्थबोधो न स्यादत आह *संस्काराद्वेति । *खलेकपोतेति । तदाहुः—

वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥इति।

*राजपुरेति । तत्पक्षे हि पदार्थानामवान्तरार्थबोधे विशिष्टस्य वैशिष्ट्यमितिन्यायेन महावाक्यार्थबोधः । पदजन्यविशेषणतावच्छेदकप्रकारकनिश्चयात्मकावान्तरवाक्यार्थबोधं विना विशिष्टवैशिष्ट्यात्मकमहावाक्यार्थज्ञानासम्भव इति भावः ॥ ९५ ॥

इति श्रीमद्देवीदत्तात्मजरामसेवकतनूद्भवकृष्णाचार्यकृतायां
मञ्जूषाकुञ्चिकायामाकाङ्क्षादिविचारः ।

( क० टी० ) अथ तात्पर्यज्ञानस्य शाब्दबुद्धिसामान्ये हेतुत्वं नैयायिकाद्युक्तं खण्डयति *यत्त्विति । वाक्ये इत्यस्यैव व्याख्या *घटमिति । विषयसप्तमी । *हेतुरिति । अन्यथाऽनेकससर्गकबोधजनकत्वेन गृहीतवाक्याद् बोधनियमो न स्यादिति भावः । *स तथेति । 'इद पदमेतदर्थप्रतीतीच्छया वक्त्रोच्चारितम्' इत्याकारस्तात्पर्यग्रहो हेतुरित्यर्थ. । *तदिति । तात्पर्येत्यर्थः । *अतएव-तस्य तद्-

ग्राहकत्वादेव । तदपि स्वरूपसन्न ग्राहकमित्याह *ज्ञानेति । यत्तु मौनिलिखितवाक्ये दोषाभावायानुसहित वेत्यपि वाच्यमिति तत् खण्डयति *मौनीति । जपादिवदिति भाव । व्यतिरेकव्यभिचारमाह *शुकादीति । *काव्यात्-काव्याच्च । *तस्य-तात्पर्यज्ञानस्य । *बोधे-शाब्दबोधसामान्ये । *तद्व्यतिरेकेति।वक्तृतात्पर्याभावेत्यर्थः। *वक्तु -शुकादे । अस्यावश्यकत्वमाह *अतएवेति । तत्र वक्तृशब्दस्येश्वरसाधारण्यादेवेत्यर्थ ।अध्यापकतात्पर्य तत्र नियामकमिति तु न युक्त, मूर्खाध्यापकोक्ते तदसम्भवादिति भाव' । *तस्येति । अतएवेश्वराप्तत्वानिश्चयवतां बोधो मीमांसकादीनाम्।ननु तस्य तत्राहेतुत्वे तद्ग्राहकप्रकरणादिप्रतिपादकमीमांसोच्छेदापत्तिरत आह *लाघवादिति । आदिना गौरवम् । प्राचां मतेनाह *वेदेति । वक्ष्यमाणसिद्धान्तमतेनाह *तद्वतेति । नचैव विज्ञवक्तृकवाक्यजन्यबोधे तात्पर्यधियो हेतुत्वमिति शुकवाक्यादिजन्यबोधे न दोषस्तस्यातथात्वात्,तत्र तु बोधकत्वज्ञानमेव हेतु . वेदजबोधे ऽपि न्यायावगततत्तदर्थबोधकत्वज्ञान हेतुरिति वाच्यम् । विज्ञत्वस्यानियतत्वात् । सवत्र बोधकत्वज्ञानहेतुतयैव सिद्धेश्च । दोषान्तरमाह *किञ्चेति । *तात्पर्यन्त्विति। प्रकरणाद्यनुगृहीतवक्तृतात्पर्य त्वित्यर्थ ।*अतएवतस्य बोधाहेतुत्वेनोभयज्ञानादेव । अन्यथा ज्ञानस्य प्रश्नादिहेतुत्वेन तदभावे तदसङ्गति. स्पष्टेत्र । *स्पष्ट चेदमिति । तस्य तत्त्वखण्डनभूत सर्वमित्यर्थ । तत्रहि-"इहार्थमुत्तरार्थ चोद्देश्यकोटौ सख्याग्रहण कर्त्तव्यमितरथा ह्यसम्प्रत्ययोऽकृत्रिमत्वाद्यथा लोके" इत्युक्त्वा "आद्यफलार्थ न कर्त्तव्यम । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयो कृत्रिमे कार्यसम्प्रत्ययो भवति-अर्थो वाऽस्यैवसञ्ज्ञकेन भवति, प्रकृत वा तत्र भवति इदमेवसञ्ज्ञकेन कर्त्तव्यमिति । आतश्चार्थात्प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्य पांसुलपादमप्रकरणज्ञमागत ब्रवीतु गोपालकमानय कटजकमानयेति, उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तङ्गमिष्यति" इत्याद्युक्तम् । नच तत्र पदार्थोपस्थितिरेव न शाब्दबोध इति वाच्यम् । पय कर्मत्वमानयन प्रेरणेति वाक्यजन्यपदार्थोपस्थितावपि तदापत्तेः । सर्वत्रैवमेवापत्तौ शाब्दबोधोच्छेदापत्तेश्च । एतेन तत्र मानस एव बोध इति, उपस्थितपदार्थानामससर्गाग्रहमात्रेण प्रश्नादिसिद्धिरिति च परास्तम् । शब्द-

जन्यमानसबोधस्यैव शाब्दबुद्धित्वात् । शाब्दयामीत्यनुव्यवसायाच्च । तदेतदभिप्रेत्याह *तत्रेति । सिद्धान्तमाह *तात्पर्येति । सिद्धान्ते दोषमुद्धरति *नचेति । तस्य बोधहेतुत्वेऽश्वतात्पर्ये तद्बोधेऽपि लवणाबोधेन तदनिश्चयात्प्रतिबन्धकाभावात्संशयस्य तच्छ्रवणोत्तरमुपपत्तिः । सिद्धान्ते तु तस्य तदहेतुत्वेनोभयबोधे तन्निश्चयद्वयप्रतिबन्धकसत्त्वात्तदुच्छेदापत्तिरित्यर्थः । *निश्चयेसति । आर्थिकमाह *तदितरेति । *बुद्ध्युदयेनेति । तदनिश्चयेन प्रतिबन्धकाभावेनेति शेषः । यत्तु तत्परत्वाभावज्ञान–तदन्यपरत्वज्ञानयोः सत्त्वे तदर्थविषयकबोधाननुभवेन फलबलात्तयोः प्रतिबन्धकत्वमेव, एवमपि प्रामाणिकगौरवस्यादोषत्वादिति, तत् खण्डयति *तत्परत्वेति । एवेन प्रतिबन्धकत्वव्यवच्छेदः । एवञ्चैकरूपताऽत्रापीति भावः । विशेषान्तरमाह *तथेति । तत्र तस्यैवेत्यर्थः । *प्रामाण्येति । अबाधितत्वरूपेत्यर्थः । *ईदृशेति । भ्रमादिशून्यत्वरूपेत्यर्थः । *आप्तत्वेति । इदमुपरञ्जकं नतु हेतुकुक्षिनिविष्टम् । भ्रमादिरूपविरुद्धधर्मानधिकरणत्वादित्यर्थः । अन्वयव्यतिरेकीदम् । अतएव विशेषदृष्टान्तानुक्तिः । अपौनरुक्त्याय प्रकृतोपयोग्यर्थमाह *तत्रेति । आप्तलक्षणघटकानां मध्ये इत्यर्थः । *अन्यार्थकशब्देति । अन्यार्थत्वेति पाठान्तरम् । विप्रलिप्साव्याख्या *प्रतारणेति । तद्व्याख्या *प्रतीतेति । *ज्ञान–ज्ञानमेव । तुना सूचितं तस्येश्वरकर्तृकत्वे भ्रमादिराहितरूपाप्तकत्वं वेदेऽप्यस्त्येवेति । इदमपि प्राचां मतेन नतु तन्मत इत्याह *वस्तुतइति । *इत्यग्रेइति ? । विशेषमाह *अत्रेति । शाब्दबोधविषये इत्यर्थः । *ज्ञानानाम्–उपस्थितीनाम् । आदिपदं पररीत्या योग्यताज्ञानादिसंग्राहकं तद्धेतोरेवेतिन्यायेन । लाघवादाह *तत्संस्काराद्धेति । एवमग्रेऽपि । *राजपुरेति । एतत्स्वरूपं प्रागुक्तम् । एतेन विशिष्टस्य वैशिष्ट्यमितिरीत्या बोधे खण्डवाक्यार्थबोधोत्तरमेव महावाक्यार्थबोध इति तादृशस्थले राजपुरप्रवेशन्यायेन बोधः । तत्र हि खण्डवाक्यार्थबोधे तावद्विषये ज्ञाते ततश्चरमपदार्थज्ञानेन समूहालम्बनविधया खण्डवाक्यार्थविषयिण्या महावाक्यार्थबोध इति कैश्चिदुक्तम्, शब्दजन्यतादृशबोधे विशेषणतावच्छेदकप्रकारकनिश्चयो न कारणमिति सर्वत्र खलेकपोतन्यायेनैव बोध-

इत्यन्यैरुक्तम्, शब्दजन्यतादृशबोधे विशेषणतावच्छेदकप्रकारकनिश्चयो न कारणं विशेषणविशेष्यादिसन्निकर्षेणैव तदुपपत्तेरिति परैरुक्तं च परास्तम् । उक्तयुक्तेः । अन्त्ये दोषस्य प्रागुक्तत्वाच्चेति दिक् । तदाह *इत्यन्यत्रेति । गुरुमञ्जूषायामित्यर्थः ॥ २६ ॥

इति तात्पर्यनिर्णयः ।

---

# धात्वर्थनिरूपणम् ।

अथ सकलशब्दमूलभूतधात्वर्थो निरूप्यते । तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः इति सिद्धान्तः ।

यत्तु फलं धात्वर्थो व्यापारः प्रत्ययार्थः इति ।

तन्न । "लः कर्मणिच" इत्यादिसूत्रविरोधात् । न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते । किञ्च पचते पक्ष्यति पक्ववानित्यादौ फूत्कारादीनां प्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षया एकस्य धातोरेव शक्तिकल्पनोचिता । किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादावपि तत्प्रतीतिवारणाय तद्बोधे पचादिसमभिव्याहारस्यापि कारणत्वकल्पने गौरवम् । किञ्च सकर्मकाकर्मकव्यवहारोच्छेदः ।

नच प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम् तत्समानाधिकरणफलवाचकत्वं चाकर्मकत्वम् । जानातावपि व्यापारतावच्छेदकसमवायसम्बन्धेन व्यापारानधिकरणवृत्तित्वरूपवैयधिकरण्यस्य विषयतया फले सत्त्वेन न क्षतिः । अन्यथा यत्किञ्चित्सम्बन्धेन सर्वेषामेव व्यापारसमा-

नाधिकरणफलवाचित्वेन बहुपप्लवापत्तिः । प्रत्ययार्थव्यापाराश्रयत्वं च कर्तृत्वम् । घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम् । अभिधानानभिधानव्यवस्थोच्छेदापत्तेः ।

नच व्यापारेण स्वाश्रयस्याक्षेपात्कर्तुरभिधानं कर्माख्याते प्रधानेन फलेन स्वाश्रयाक्षेपात् कर्मणोऽभिधानमिति वाच्यम् । जात्याक्षिप्तव्यक्तेरिवाश्रयस्य प्राधान्यापत्तौ "क्रियाप्रधानमाख्यातम्" इतियास्कविरोधापत्तेः ।

किञ्च फलस्य धातुना तदाश्रयस्याक्षेपेणैव लाभसम्भवेन "लः कर्मणि" इत्यस्य वैयर्थ्यापत्तिः । कर्मकर्तृकृतां भावनाकारकोभयवाचकत्वे गौरवाच्च ।

किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः । तद्वाचकत्वे तेनापि स्वाश्रयाक्षेपे कर्तुरभिधानापत्तिः ।

किञ्च गुरुः शिष्याभ्यां पाचयतीत्यादौ "हेतुमति च" इति सूत्रबलात्प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः, एवञ्च संख्यायां स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवान्वयाच्छिष्याभ्यामिति द्विवचनानापत्तिः । पाचयतीत्येकवचनानापत्तिश्च । गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च । शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः ॥ १ ॥

## धात्वर्थनिरूपणम् ।

( कु० टी० ) *यत्नसहित इति । तेनाग्निसंयोगाधीनव्यापारसत्त्वे अयं न पचतीति प्रयोगो भवत्येव । तत्र यत्नाभावात् । आमवातजडीकृतकलेवरस्य च यत्नसत्त्वेऽपि यत्नस्योत्थानानुकूलत्वाभावान्नोत्तिष्ठतीति प्रयोग इति भावः ।

अत्र मण्डनमिश्राः—फलमात्रं धात्वर्थः व्यापारः प्रत्ययार्थः । पाक इत्यत्रापि घञर्थ एव व्यापारः । कर्त्तृत्वमपि प्रत्ययार्थव्यापाराश्रयत्वात् । प्रत्ययार्थव्यापारव्यधिकरणफलाश्रयत्वमेव च कर्मत्वम् । देवदत्तेन पाक इत्यत्र तृतीयार्थ एव व्यापारः । णिजन्ते तु व्यापारस्याख्यातार्थत्वादुभयोः कर्त्तृता । फलरूपक्रियावाचकत्वादेवच धातुत्वमिति वदन्ति ।

तान्निराकरोति *यत्त्विति । ननु भावनाया धात्वर्थत्वे "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयेन यागं यागेन स्वाराज्यमिति उभाभ्यां सम्बन्धसम्भवाद् गुणविधित्वापत्तौ नामधेयत्वप्रतिपादकवाजपेयाधिकरणासङ्गतिरिति चेन्न । गुणं प्रति अनुवाद्यत्वं फलं प्रतिच विधेयत्वमिति विरुद्धद्वयासम्भवात् । तस्मात्सामानाधिकरण्यान्नामधेयत्वम् । ननु कर्त्तरि इत्यस्य कर्त्तृत्वे इत्यर्थाद् व्यापारलाभ इत्यत आह *किञ्चेति । ननु अनेकधातूनां व्यापारे शक्तिकल्पने तवापि गौरवमत आह *किञ्च फूत्कारेति । ननु व्यापारविशेषबोधार्थं तत्तद्धातुसमभिव्याहारस्य हेतुत्वं सर्वेषामावश्यकमत आह *किञ्चेति । *जानातावपीति । अत्र समवायेन ज्ञानं व्यापारः, विषयतया ज्ञानं च फलम् । *अन्यथेति । कालिकसम्बन्धेन सर्वेषां समानाधिकरणत्वात् । *धातुनेति । फलस्य धात्वर्थतया

फलेन चाश्रयस्याक्षेपाल्लाभे लकाराः कर्म्मणि इत्यस्य वैयर्थ्यापत्तिरित्यर्थः । *कर्मकर्त्रिति । पाचक इत्यत्र व्यापारकर्त्तारौ प्रत्ययवाच्यावित्यर्थः । भावघञादीनां व्यापारवाचित्वमस्ति नवेति विकल्प्य दूषयति *किञ्चेति । *स्ववाचकेति । संख्यावाचकस्याख्यातस्यार्थो यो व्यापारस्तस्य प्रयोज्येऽन्वयात्प्रयोज्ये द्विवचनं न स्यादित्यर्थः ॥ १ ॥

## धात्वर्थनिरूपणम् ।

(कु०टी०) अवसरसङ्गत्या पूर्वानन्तरम्, उपजीव्यत्वादग्रिमात्पूर्वं धात्वर्थनिरूपणमित्याह *अथेति । *तत्र-निरूपणीयधात्वर्थविषये ।

अत्र प्रभाकरानुयायिनः—फलमेव धात्वर्थो भावना तु वाच्यैव न, तद्विषयकशाब्दबोधस्य सर्वत्राननुभवात् । किन्तु लिङ्ग्येव । परं सा आख्यातवाच्येति ।

तन्न । "कर्त्तरि कृद्" इत्यत एव कर्तृग्रहणस्य "लः कर्मणि" इत्यत्रानुवृत्त्या तिङ्कृतोर्वैषम्यस्य दुरुपपादत्वात् । यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थो यत्न आख्यातार्थः, धात्वर्थे कारकान्वय इति गुरुमत "तत्तु समन्वयाद्" इतिसूत्रस्थवाचस्पत्यादिग्रन्थेभ्यो लभ्यमान भूषणकारोक्तयत्नाख्यातार्थत्ववादिनैयायिकमतदूषणग्रस्त, तदेतत् ध्वनयन्नाह *यत्नेति । अनेन सर्वत्र यत्नोऽर्थ इति सूचितम् । मण्डनमिश्रानुयायिमत खण्डयति *यत्त्विति । ननु कर्त्तृपदस्य धर्मपरत्वेन तल्लाभो ऽत आह *किञ्चपचतीति । यत इति शेषः । एवमग्रे सर्वत्र यथासम्भवम् । नन्विय सिद्धान्ते ऽपि तुल्येत्यत आह *किञ्चफूत्कारेति । इष्टापत्तौ आह *किञ्च सङ्केतेति । इम दोषमुद्धरति *नचेति । वाच्यमित्यत्रान्वयः । नन्वेव जानाते सकर्मकत्वानापत्तिः, धात्वर्थज्ञानव्यधिकरणव्यापारस्य देवदत्तादावननुभवादित्यत आह *जानातावपीति । *विषयतया फले-तत्सम्बन्धावच्छिन्नफले । *अन्यथा—व्यापारतावच्छेदकसम्बन्धानिवेशे । *सम्बन्धेन—कालिकादिना । *सर्वेषामेव-धातूनाम् । *कर्तृत्वमिति । अतएव घटम्भाव-

यतीत्यादौ कर्मणोऽपि घटस्य घटो भवतीत्यादौ कर्तृत्वमेव। तत्राख्यातस्य धात्वर्थसमानाधिकरणकर्तृव्यापारमात्रार्थकत्वात्। कर्मत्वमपि प्रत्ययार्थव्यापारव्यधिकरणधात्वर्थाश्रयत्वमेवेति सूचयन्नाह *घटामिति। *णिजर्थेति। प्रयोजकव्यापारेत्यर्थः। अन्तर्भावितण्यर्थे ऽपि प्रत्ययस्यैव णिजर्थलक्षणेति न दोष इति भावः। इममपि दोषमुद्धरति *नचेति। अत्र व्यापारस्यानाक्षेपकत्वायाह *प्रधानेनेति। एतेन तत्रापि वैपरीत्य निरस्तम्। ननु यास्क अनाक्षेपबोधाशयको मतान्तरपरो वा ऽत आह *किञ्चेति। *इत्यस्य-इत्यशस्य। ननूक्तरीत्या लाभे ऽपि प्राधान्याय पुन शास्त्रेण प्रत्ययार्थबोधनं, द्वावित्यादिवन्न न बोधावृत्तिः, भाववत्तदनुवादकत्व वा, तत्फल प्राधान्यमेव, अत आह *कर्मेति। कर्माणि कृताम्, कर्मकर्त्तरि कृतां चेत्यर्थ। अत एव सामानाधिकरण्यम् ओदनस्य पक्तेत्यादौ कारकान्वयश्च। इष्टापत्तावाह *किञ्चेति। दोषान्तरमाह *किञ्च गुरुरिति। *अनापत्तिरिति। तदभावापत्तिरित्यर्थः। एवमग्रेऽपि। नचात्र फल धात्वर्थो व्यापारानुकूलप्रयोजकव्यापारो ण्यर्थः, तत्र फलस्यानुकूलतया ऽऽद्यव्यापारे ऽन्वयः, तिङस्तु कालसङ्ख्ये प्रयोजकव्यापारश्चार्थः, द्वावित्यादिवन्न बोधावृत्ति., प्रधानत्वाल्लु कर्मणीत्यादिसौत्रानुवादबलाच्च प्रयोजकव्यापारेणैव धर्मिण आक्षेप.। "अनभिहित" इत्यादेश्च शक्त्याक्षेपे साधारणाबोधित इत्येवार्थ इति न दोष इति वाच्यम्। "हेतुमति च" इति सूत्रेण तथाऽलाभात्। अस्मद्रीत्याऽक्लेशेनैव सकलसामञ्जस्ये क्लिष्टकल्पनानुपयोगादुक्तदोषग्रासाच्चेति दिक्। तदाह *इत्यन्यत्रेति। गुरुमञ्जूषायामित्यर्थ ॥१॥

यदपि–धातोः केवलव्यापारे एव शक्तिः फलं तु कर्मप्रत्ययार्थ इति।

तन्न। ग्रामं गच्छतीत्यत्र विभागस्य, त्यजतीत्यत्र संयोगस्य बोधापत्तेः। सयोगबोधे गमादिसमभिव्याहारस्य, विभागबोधे त्यजादिसमभिव्याहारादेः कारणत्वकल्पने तु गौरवम्। त्यागो गमनमित्या-

पत्तेश्च । तत्र फलावच्छिन्नव्यापारवाचित्वे सर्वत्र तथैवोचितम् ।

किञ्च गत्यर्थकर्मणि द्वितीयाचतुर्थ्योर्ल्यब्लोपे कर्मणि पञ्चम्याः, क्तस्येन्विषयस्य कर्मणि सप्तम्या विधानेनानेकेषां सुपां तिङां च फले शक्तिकल्पनापेक्षया फलविशेषबोधे तत्तद्धातुसमभिव्याहारस्य कारणत्वकल्पनापेक्षया च धातोरेव फलेऽपि शक्तिकल्पनोचिता । कर्मकर्तृप्रयोगे फलस्य तवापि धातुवाच्यत्वावश्यकत्वाच्च । त्यजतिगच्छत्योः पर्यायताभ्रमदशायां ताभ्यामविलक्षणबोधोत्पत्त्या तत्तत्समभिव्याहारस्य फलविशेषबोधनियामकत्वासम्भवाच्च । कार्यतावच्छेदककोटौ पुरुषविशेषीयत्वनिवेशे तु गौरवम् ।

यत्त्वीदृशविषये सामग्रीप्रतिबन्ध्यप्रतिबन्धकभावे लाघवगौरवविचारकरणम्, तत्तु तादृशसामग्रीप्रतिबन्धकताज्ञानस्यानुपयोगेनानुमितिपरामर्शकार्यकारणभावादिलाघवगौरवविचारकरणवत् काकदन्तविचारकरणम् ।

किञ्च शाब्दानुमितिसामग्र्योर्ज्ञानघटितत्वेन युगपज्ज्ञानानुत्पत्तेर्मनोलिङ्गतया च तयोराश्रयेनानुभवसिद्धः समावेश एव दुर्घट इति बोध्यम् ।

किञ्च त्वया कर्मत्वं धात्वर्थान्वितप्रत्ययार्थफलवत्त्वम्, प्रत्ययार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वं वाच्यम् । तच्च भावयत्येधयत्यादिण्यन्तसकर्मकेषु तत्कर्मणि चाव्याप्तम् । तत्र फलस्य

धात्वर्थत्वेनान्यलभ्यतया प्रत्ययार्थत्वासम्भवादित्यन्यत्र विस्तरः ॥ २ ॥

(कुं०टी०) नव्यनैयायिकमत निराचष्टे *यद्पीति । *फलं-त्विति । कर्म्मणीत्यस्य कर्मत्वे इत्यर्थात् । कर्मत्वं च फलाश्रयत्वं फलमेवेति भावः । *त्यागइति । अत्र पर्यायतापत्तिरित्यर्थः । नन्वत्र तत्फलावछिन्नव्यापारोऽर्थ इति चेत्तत्राह *सर्वत्र तथैवेति । ननु शाब्दिकमते ऽपि तत्तत्फलबोधे तत्तद्धातुसमभिव्याहारस्य नियामकत्वमावश्यकमत आह *किञ्चेति । फले विभक्तीनां शक्तिः कल्पनीया, फलविशेषबोधे धातुविशेषसमभिव्याहारस्य नियामकत्वं कल्पनीयमिति गौरवमित्यर्थः । *कर्मकार्त्रीति । पच्यते तण्डुलः स्वयमेवेत्यादौ । फलस्य धात्वर्थत्वे समानविषयकानुमिति प्रति शाब्दसामग्रीप्रतिबन्धकतायां फलप्रकारतानिरूपिता या व्यापारविशेष्यता अथवा व्यापारविशेष्यतानिरूपिता या फलप्रकारता तच्छालिधातुजन्योपस्थितित्वनिवेश इत्यत्र विनिगमनाविरहात् प्रतिबन्धकताबाहुल्यमिति दूषणमुद्धरति *यत्त्विति । *अनुमितिपरामर्शेति ।

केचिद्--वन्हिव्याप्यधूमवान्पर्वत इतिपरामर्शस्य कारणतां वदन्ति । अन्ये वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानित्यनुमितिमिच्छन्ति ।

*काकदन्तेति । अयं भावः--देवदत्ताभिन्नाश्रयकः पाक इत्याकारकशाब्दबोधसामग्र्यास्तत्समानाकारानुमितिं प्रति प्रतिबन्धकता वाच्या । सा च न सम्भवति । शाब्दबोधे पाकस्य विशेष्यत्वात् अनुमितौ च पाकं पक्षीकृत्य देवदत्ताभिन्नाश्रयकत्वसाधने विषयभेदात् । अनुगतस्य व्याप्यस्यासम्भ-

वाच्च । या हि धूमादिदर्शनेन सम्भावना सापि संशय एव नतु-निश्चयात्मिकाऽनुमितिः ।

परे तु धातोः फलावच्छिन्नव्यापारे द्वितीयायाश्चाश्रयत्वे शक्तिभ्रमवतो लाक्षणिकत्वग्रहवतश्च ग्रामं गच्छतीत्यादिशाब्द-सामग्र्या तादृशानुमित्यनुदयेन तदनुरोधात्तादृशप्रतिबध्यप्रति-बन्धकभावस्तवाप्यावश्यक इत्याहुः ।

*ज्ञानघटितत्वेनेति । शाब्दसामग्री पदपदार्थज्ञानादि-रूपा । अनुमितिसामग्री च परामर्शादिरूपा । तयो-श्च युगपत्सामञ्जस्येनावस्थानं न सम्भवतीत्यर्थः । *मनो-लिङ्गतयेति । नानेन्द्रियाणां विषयसंयोगे ऽपि यद्वशादे-केन्द्रियजन्यमेव ज्ञानं भवति तन्मनसो लिङ्गं लक्षणम् । तथाच गौतमसूत्रम्—"युगपज्ज्ञानानुत्पात्तिर्मनसो लिङ्गम्" । एवं ज्ञानद्वययौगपद्यं न सम्भवतीति भावः । दीर्घशष्कुली-भक्षणादौ ज्ञानद्वययौगपद्यस्वीकारात् उक्तम् *आञ्जस्येने-ति । *कर्मत्वमिति । फलवत्त्वं वाच्यमित्यत्रान्वयः । *तच्चे-ति । तत्र उत्पत्त्यादिरूपं फलं भूप्रभृतीनामेवार्थ इति प्रत्ययार्थ-त्वाभावात् सकर्मकत्वानापत्तिरिति । ननु तत्रोत्पत्तिर्व्यापार एव न तत्फलमत आह *अन्यलभ्यतयेति । उत्पत्तेर्धात्वर्थत्वे प्रत्ययार्थः फल किमित्यर्थः ॥ २ ॥

(क०टी०)प्राचीननैयायिकोक्तिं खण्डयति *यदपीति । *कर्मेति । कर्मप्रत्ययापेक्षया बहूनां धातूना फले शक्तिकल्पनस्य गुरुत्वा त् । किञ्च धातोः फलबोधकत्वे नामार्थधात्वर्थयोराश्रयता-सम्बन्धेन साक्षादन्वयासभवेन फलाश्रयत्वस्य प्रत्ययार्थत्वे च वृत्तित्व सम्बन्ध इति लाघवमिति भाव. । आदिनोभयभिन्ने-ऽन्यसमभिव्याहारसग्रहः । *त्याग इति । एकस्या एव संयोगावि-भागजनकत्वादिति भावः । तत्र तत्र लक्षणायां सैव दोषो ऽत

आह *तत्रेति । चतुर्थ्योरित्यादेर्विधाने ऽन्वय । *कर्मेति । पच्यते तण्डुलः स्वयमेवेत्यादावित्यर्थ । समभिव्याहारस्य कारणत्वमपि दुर्वचमित्याह *त्यजतीति । ननु तत्पुरुषीयत्वनिवेशे नाय दोषोऽत आह *कार्यतेति । नैयायिकोक्तिं खण्डयति *यत्त्विति । फलावच्छिन्नव्यापारवाचित्वे ग्रामङ्गच्छतीतिवाक्यज्ञानघटितसामान्याः समानविषयकानुमितिप्रतिबन्धकतायां फलावच्छिन्नव्यापारविषयकधातुजन्योपस्थितेर्निवेश्यतया तस्याः फलनिष्ठ प्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन व्यापारनिष्ठविशेष्यतानिरूपितफलप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमनाविरहात्सामग्रीप्रतिबन्धकताधिक्यमवच्छेदकगौरव च । मम मते द्वितीयाजन्यफलोपस्थिते. सामग्र्यन्तर्निवेशो भवन्मतसिद्धतज्जन्योपस्थितिस्थानीय इति लाघवमित्यर्थ' । यद्यपि धातो फलावच्छिन्नव्यापारे द्वितीयायाश्चाश्रयत्वे शक्तिभ्रमवतो लाक्षणिकत्वग्रहवतश्च ग्राम गच्छतीत्यादिशाब्दसामग्र्यां सत्यां तादृशानुमित्यनुदयेन तदनुरोधात्तादृशप्रतिबध्यप्रतिबन्धकभावस्य तवाप्यावश्यकत्व तथापि वास्तवमेव समाधिमाह *तत्तु तादृशेति । बाधकबुद्धेर्बोधसामान्ये प्रतिबन्धकत्वाभावस्य व्यवस्थापितत्वादिति भाव. । प्रासङ्गिकमाह *अनुमितीति । तयो. कार्यकारण भाव एव न, त विनाऽपि तदुदयेन तस्य कारणताऽनुपयोगात् । यथा चानुमितिप्रक्रिया तथा प्रागेवोपपादिता । आदिना व्याप्तिज्ञानादि । *काकेति ।

काकस्य कति वा दन्ता मेषस्याण्ड कियत्पलम् ।

इत्यादिनेति भाव. । इदमप्यभ्युपेत्योक्तम् । वस्तुनोऽसम्भव एवेत्याह *किञ्चेति । परमते मनसा ऽणुरूपत्वादाह *मनोलिङ्गेति । परमतावलम्बन विनाऽसम्भवादाह *आञ्जस्येनेति । सर्वथा ऽसत्त्वं वारयति *अनुभवेति । तथाच पररीत्येद दूषणम् । एव यत्त्वितिमत सखण्ड्य बोध्यमित्यन्ते प्रक्रान्तमते दोषान्तरमाह *किञ्चत्वयेति । *प्रत्ययार्थेति । तदन्वितेत्यादिः । अकर्मकत्व च तदभाव एवेति भाव । *धात्वर्थत्वेनेति । अन्वयव्यतिरेकाभ्यामित्यादि । *लभ्यतयेति । गौरवेण चेत्यपि बोध्यम् । किञ्च विष्णु यजते, विष्णुर्यष्टव्य इत्यादौ चतुर्थ्यर्थविहित-

द्वितीयादेरुद्देश्यत्वेनैवान्वयबोधकत्वाद्यतिवद्यजेरप्यकर्मकत्वापत्ति। विष्णोर्धात्वर्थकर्मत्वाभावेन तस्मिन्कर्मणि लतव्यादेरभावापत्तिश्च। उद्देश्यताख्यविषयतया विष्णुर्योगविषय इति चेद्भोजनमभि य-त्यर्थस्यापि सकर्मकत्वापत्ति । नचाकर्मकभिन्नत्व सकर्मकत्वं तत्र च प्रयोगानुरोधात्कृञ्जानात्यादिभेदो न निवेश्य इति वाच्यम्। सकर्मकाणामप्यर्थान्तरे ऽकर्मकत्वेनासम्भवापत्तेः। तुल्ययुक्त्याऽकर्मकत्वमपि सकर्मकान्यत्वमेव वाच्यम्, अन्यादृशस्य तस्य दुर्वचत्वात्। एवञ्चान्योन्याश्रयापत्त्या "ल० कर्मणि" इत्यादेरबोधकत्वापत्तिश्चेति दिक्। तदाह *इत्यन्यत्राति। उक्तोऽर्थः॥२॥

अत्र फलव्यापारयोः पृथक् शक्तिः। एकपदोपस्थाप्ययोरपि परस्परमन्वयो व्युत्पत्तिवैचित्र्यात् परेषां कृतीष्टसाधनत्वयोरिव। अन्यथा कर्मप्रत्ययसमभिव्याहारे व्यापारावच्छिन्नफलबोधेन तथाशक्तेरप्यावश्यकत्वेन गुरुशक्यतावच्छेदककशक्तिद्वयकल्पनापत्तिः।

तत्र फलव्यापारावन्तरङ्गत्वात्परस्परविशेषणतामनुभूयैवार्थान्तरान्वयिनौ। अत एव गमनं न व्यापार इति न। फलांश उत्सर्गतो व्यापारविशेषणम्। जन्यजनकभावः संसर्गः। क्वचित्तु विषयत्वं संसर्गः। यथा आस्यादेस्तत्पूर्वकाध्यवसायादौ वृत्तौ। पत्ये शेते आस्ते इत्यादौ पत्युद्देश्यकं शयनाद्यध्यवस्यतीत्यर्थः। फलत्वं च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। जन्यता च आरोपिताऽनारोपिता वेत्यन्यदेतत्। विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम्।

कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता ॥ ३ ॥

(कु० टी०) *पृथक्शक्तिरिति । फलावच्छिन्नव्यापारस्य धात्वर्थत्वे विशेष्यविशेषणभावे विनिगमनाविरहादवच्छेदकगौरवमेकदेशान्वयापत्तिश्चेति भावः । ननु पदद्वयघटिताकाङ्क्षाविरहात् फलव्यापारयोरन्वयबोधानापत्तिरत आह *व्युत्पत्तिवैचित्र्यादिति । अत एव तार्किकमते ऽपि एवकारार्थयोरन्ययोगव्यवच्छेदयोः परस्परमन्वयः । नच तत्राप्यन्ययोगप्रतियोगिकाभावरूपः समुदित एवार्थः । उभयाभावमादायातिव्याप्तेः । अन्ययोगत्वावच्छिन्नप्रतियोगिताको व्यवच्छेदो ऽर्थ इत्युक्तौ तु 'पार्थ एव धनुर्धर' इत्यत्र पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्य प्रतीतिर्न स्यात् । पदभेदेन भिन्नत्वात् । तथाच प्रकृते एकपदोपस्थाप्यत्वमेवाकाङ्क्षेति भावः । *परेषामिति । तार्किकाणा लिङर्थकृतौ लिङर्थेष्टसाधनत्वान्वयवदित्यर्थः । ननु इष्टसाधनत्वस्य पाकादावेवान्वय इत्यरुचेर्दोषान्तरमाह *अन्यथेति । फलावच्छिन्नव्यापारे शक्तौ पच्यत इत्यत्र व्यापारप्रकारकबोधो भवदभिमतो न स्यादित्यर्थः । *तथाशक्तेरपीति । फलावच्छिन्नव्यापारत्व व्यापारावच्छिन्नफलत्वं च शक्यतावच्छेदकं वाच्यमित्यर्थ. । *इति नेति । इत्याकारकः प्रत्ययो नेत्यर्थः । फलव्यापारयोः पृथगुपस्थितौ तयोर्व्यापाररूपत्वाभावादुक्तप्रत्ययः स्यादेवेत्यर्थः । कर्मप्रत्ययसमभिव्याहारे फलस्य विशेष्यत्वस्वीकारादाह *उत्सर्गतइति । *आस्यादेः-आस्ते इत्यादेः । एतदेवोपपादयति *पत्ये शेते इति । पत्युद्देश्यकं यत् शयनं तदध्यवस्यतीति । अत्र शयनविषयकाध्यवसाये पर्यवसानात् । कर्मप्रत्यये फलस्य विशेष्यत्वादाह *कर्तृप्रत्य-

येति । *आरोपितेति । ईश्वरस्तिष्ठतीत्यादौ स्थितौ जन्यताया आरोपात् । *विभागेति । विभागजन्यः संयोगः पतधात्वर्थः । तत्र संयोगस्य प्रकारत्वाभावात् । विभागस्य धात्वर्थजन्यत्वाभावात् वारणमित्यर्थः । *उभयम्—विशेष्यविशेषणद्वयम् । क्वचिद्-कर्मकधातौ व्यापारमात्रम् धात्वर्थ इति वक्ष्यमाणमतेनेदम् ॥३॥

( कु० टी० ) विशेषमाह *अत्रेति । धातुविषये इत्यर्थः । तत्रादौ प्राचां दीक्षितादीनां मतमाह *पृथगिति । नन्वेव तयोरन्वयो न स्यात् भिन्नपदोपस्थितेस्तत्र तन्त्रत्वादत आह *एकेति । तथाच तत् धातुभिन्नविषयमिति भाव' । इदम्परसमतमपीत्याह *परेषामिति । ननु द्वितीयार्थाश्रयान्वयस्यैकदेशे फले ऽन्वयानुपपत्त्या न पृथक्शक्तिस्वीकार, "कर्मणि द्वितीया" इत्यनुशासनाद् व्युत्पत्तिवैचित्र्याच्च तस्य सोलभ्यादत आह *अन्यथेति । पृथक्शक्त्यनङ्गीकारे इत्यर्थः । *तथा—तेन रूपेण । शक्तिद्वयकृततुल्यत्वेऽप्याह *गुर्वीति । नन्वेवमपि फलाशयेन गमन न व्यापार इति प्रतीत्यापत्तिरत आह *तत्रेति । पृथक्शक्तिपक्षे इत्यर्थः । अन्वयानां मध्ये इत्यर्थो वा । कर्मप्रत्ययतदन्यप्रत्ययभेदेनाह *फलेति । अन्तरङ्गत्व प्रथमोपस्थितत्वरूपम् । *अतएव—फलस्य स्वातन्त्र्येणानुपस्थितेरेव । नन्वेवमपि व्यापारविशेषणकफलाशयेन तथाप्रयोगापत्तिरेवात आह *फलाश इति । फलरूपोऽश इत्यर्थ । *उत्सर्गत'—कर्मप्रत्ययभिन्नस्थले । तथा च गमनपदतो व्यापारस्यैव तादृशस्य विशेष्यतया प्रतीतिर्न विपरीतस्येति न तदापत्तिरिति भावः । औत्सर्गिकमिदमिति सूचयितुमाह *क्वचित्त्विति । अप्रसिद्धत्वादस्य विषयमाह *यथेति । प्रसङ्गादत्रैव सिद्धान्तमतेन फलपदार्थमाह *फलत्वञ्चेति । प्रागुक्ते पत्ये शेते इत्यादौ वस्तुतो ऽजन्यत्वादाह *जन्यताचेति । पर्ण पततीत्यादौ विभागजन्यसयोगस्यैव धात्वर्थत्वे विभागे विशेष्यवत्त्वेऽपि न सत्यन्तम्, संयोगे तत्त्वे ऽपि न विशेष्यमित्युभयोपादानमित्याह *विभागेति । *विभागसयोगयोरिति । मिथ इति शेष । कर्तृप्रत्ययेत्यस्य फलमाह *कर्मेति ॥ ३ ॥

परेतु तयोः पृथक्शक्तौ फलव्यापारयोरुद्देश्यविधेयभावेनान्वयापत्तिः । पृथगुपस्थितयोस्तथाऽन्वयस्यौत्सर्गिकत्वात् । तथाऽन्वये धातुजतत्तद्बोधस्य प्रतिबन्धकत्वकल्पने गौरवम् । तस्मात्फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिः । कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः । गौरवंच प्रामाणिकत्वान्न दोषावहम् । किञ्चैकपदे व्युत्पत्तिद्वयकल्पने गौरवम् । तथाहि—फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमितिकार्यकारणभावद्वयकल्पनम्, धातोरर्थद्वये शक्तिकल्पनम्, बोधजनकत्वस्य विषयासम्बद्धे ऽनुपपत्त्या तत्तत्समभिव्याहारविशिष्टधातौ विशिष्टानिरूपितसम्बन्धद्वयकल्पना चेत्यतिगौरवम् । अन्यथा पदशक्तेरुच्छेदः । एवमन्यत्रापि पृथक्शक्तिकल्पना निरसनीयेत्याहुः ॥ ४ ॥

( कुं० टी० ) *तथाऽन्वयस्य—उद्देश्यविधेयभावेनान्वयस्य । अन्येतु पृथगुपस्थितयोस्तयोर्विशिष्टबोधो न स्यात् । हरिपदादुपस्थितयोरश्वसूर्ययोः परस्परमाधाराधेयभावेनान्वयाभावात्पृथगवस्थितयोः पृथगेवान्वयो भवतीत्याहुः । *फलावच्छिन्ने इति । कर्तृप्रत्यये इति शेषः । कर्मप्रत्ययेऽप्याह *व्यापारावच्छिन्ने इति । *एकपदे—एकधातुपदे । *व्युत्पत्तिद्वयेति । कर्मकर्तृप्रत्ययसमभिव्याहारे फलस्य विशेष्यत्वविशेषणत्वयोः

स्वीकारे इत्यर्थः । *विषयासम्बद्धे इति । बोधविषयेणार्थेन धातुर्यदि सम्बद्धो न स्यात्तत्र बोधजनकत्व न स्यादतो धातोस्तत्र सम्बन्धो वाच्य इत्यर्थः । *तत्तत्समभिव्याहारविशिष्टेति । कर्मकर्तृप्रत्ययसमभिव्याहारभेदेनार्थद्वयकल्पनमित्यर्थः । *अन्यथा–समभिव्याहारस्यैव नियामकत्वे । *उच्छेदइति । तत्रापि समभिव्याहारविशिष्टस्य विशिष्टे शक्तिसम्भवात् । *अन्यत्रापीति । अन्ययोगव्यवच्छेद एवकारार्थः । नतु अन्ययोगो व्यवच्छेदश्च पृथगर्थ इत्यर्थः ॥ ४ ॥

( क० टी० ) सिद्धान्तमाह *परेत्विति । परमतेनैवाह *पृथगिति । तन्मते तत्र तस्यास्तन्त्रत्वादिति भाव. । राज्ञ पुरुष इत्यादौ तदभावादाह *औत्सर्गिकेति । *तत्तद्बोधस्य–फलव्यापारोपस्थिते । अव्यवस्थां निराचष्टे *कर्तृकर्मेति । ननु गुरुशक्यतावच्छेदकप्रयुक्तगौरव प्राचोक्तमेव, अत आह *गौरवञ्चेति । इदमप्यभ्युपेत्य । वस्तुतस्तथा ऽप्यत्र ततो लाघवमेवेत्याह *किञ्चेति । *अन्यथा–तृतीयकल्पनानङ्गीकारे । *अन्यत्रापि–जातिव्यक्त्यादावपि ॥ ४ ॥

सर्वकारकाणां धात्वर्थे ऽन्वयः । अयमेव च क्रिया ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥इति-
भूवादिसूत्रस्थभावनार्थप्रतिपादकहरिग्रन्थात् ।
क्रमजन्मनामेषां व्यापाराणां समूहं प्रति गुणभूतै-

---

१ धात्वर्थ एवेत्यर्थः ।

स्तत्तद्रूपेण भासमानैरवयवैर्युक्तः सङ्कलनात्मिकयै-कत्वबुद्ध्या प्रकल्पिताभेदरूपः समूहः क्रियेति व्यप-दिश्यते इति द्वितीयकारिकार्थः । अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम् ।

एतेन पूर्वापरीभूतक्षणसमूहस्य युगपदसंनिधा-नादेका क्रियेति भाष्यासङ्गतिरित्यपास्तम् ।

क्षणनश्वराणामवयवानां वस्तुभूतसमुदायाभा-वाद् बुद्ध्येत्युक्तम् । पचति पक्ष्यतीत्यादावसिद्धम्, अपाक्षीदित्यादौ सिद्धं वा साध्यत्वेन तत्प्रकारेणा-भिधीयमानं क्रिया । आश्रितेति योगप्रदर्शनं क्रियते अवयवानां क्रमेणोत्पत्त्या । अत एवाश्रितक्रमरूपा क्रियेत्याद्यार्थः ।

एकैकावयवे ऽपि समूहरूपारोपादधिश्रयणका-ले ऽपि पचतीति व्यवहारः । आरोपे च प्रतीतिरेव बलम् । अध्यासगृहीतयैव क्रियया ऽऽख्यातस्य सम्ब-न्धग्रहो बोध्यः । नचैवं धात्वर्थस्य गौणत्वापत्तिः । तदतिरिक्तमुख्यार्थाप्रसिद्ध्या तस्य गौणत्वाभावात् । यस्य हि मुख्यो ऽन्यो ऽर्थो ऽस्ति तत्रैवेदृशस्य गौ-णत्वात् ।

यद्वा तादृशानेकव्यक्तिवृत्तिजातिरेव क्रिया । व्य क्तिद्वारकं च तस्याः साध्यत्वम् । स्फोटवदस्याः क्रमव द्भिरपि क्रियाक्षणैरभिव्यक्तिः । फलस्यापि स्वजनक व्यापारगतपौर्वापर्यारोपेण तथैव भानम् । अत एव तन्मात्रवाचकस्य धातुत्वसिद्धिः ॥ ९ ॥

(कुं.टी.)*अयमेवेति। सकलकारकान्वितो धात्वर्थ एवेत्यर्थः। एतच्च स्वरूपकथनं नातो ऽन्योन्याश्रयः। ननु यथा 'किङ्करोति' इति प्रश्ने 'पचति' इत्युत्तरं भवति एवम् 'अस्ति' इत्युत्तराभावादस्त्यादीनां क्रियावाचकत्व न स्यादत आह *यावदिति।

अस्यार्थः—क्रमरूपं पौर्वापर्यमाश्रित्य साध्यत्वेन विवक्षितो ऽर्थः क्रियेति। 'घटः क्रियते' इत्यत्रापि क्रियाद्वारैव घटस्य साध्यत्वम्। नहि घट इत्येतावन्मात्रात्साध्यत्वं प्रतीयते। क्रियते इत्येतत्तु स्वत एव साध्यत्वं गमयतीति तदेव क्रियावाचकत्वमस्त्यादावपि साधयिष्यतीति। नन्वेका क्रियेति व्यवहारः कथमत आह *गुणभूतैरिति। क्रमिकाणा व्यापाराणां समूहे बुद्धिकल्पितमेकत्वमाश्रित्यैकत्वव्यवहार इत्यर्थः। *तत्तद्रूपेण—फूत्कारत्वादिना। सङ्कलनात्मिकयेत्यस्यावतरणम्-*एकत्वबुद्ध्येति। *क्षणसमूहस्येति। 'कालमन्ये क्रियामाहुः' इति मते क्रियायाः कालरूपत्वात्। *वस्तुभूतेति। वास्तविकेत्यर्थः। *अभिधीयमानं क्रियेति। सिद्धमसिद्धं वा वस्तु साध्यस्वरूपेणाभिधीयमानं क्रियेत्यर्थः। *आश्रितेतीति। कारिकायामाश्रितक्रमरूपत्वादित्येतत् क्रियाशब्दार्थकथनमित्यर्थः। तथाच क्रियते इति क्रियेत्यर्थः। ननु व्यापारसमुदायस्य कारणासम्भव इत्यत आह *अवयवानां क्रमेणोत्पत्त्येति। क्रियते इत्यस्य हेतुकथनमेतत्। अवयवद्वारकं समुदायस्योत्पाद्यत्वमिति भावः।

ननु यदि व्यापारसमुदायः क्रिया, तदा ऽधिश्रयणाद्येकैकव्यापारस्य क्रियात्वानापत्तौ 'स्थाली पचति' इतिप्रयोगानापत्तिरत आह *एकैकावयवेऽपीति। तदुक्तं हरिणा—

समूहः स तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदाः कालभेदस्य हेतवः॥ इति।

अयं भावः—अधिश्रयणारम्भ एव फलाभिसन्धेः समस्त-क्रियाकलापस्तत्रैवाऽध्यस्यते । तस्यैव च भूतत्वादिविवक्षायाम-पाक्षीदित्यादयो ऽपि प्रयोगाः । तथाभूतः गुणभूतः क्रमजन्मा । अयं भावः—न समुदायबुद्ध्या एकत्वम्, नापि—'अयं चायंच' इति समुच्चयबुद्ध्या एकत्वम्, किन्तु पूर्वापरीभूतावयवत्वेनैव । तथाच समुदायस्य प्रत्येकावयवे ऽध्यऽध्यासात्तत्प्रत्ययोपपत्तिः ।

अत एवोक्तं हरिणा—

एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्त्तन्ते तुल्यरूपं समाश्रिताः ॥ इति ।

यद्यपि हिंसार्थको हनधातुर्भिन्नः, गत्यर्थको भिन्नः । साद-श्यात्तु ऐक्यप्रत्ययः, तथाऽपि—

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः । इति—

न्यायेन एक एव हन्धातुरुभयार्थकः । अबाधितैकाकारप्रत्य-यात् । अनेकार्थत्वमेव बाधकमिति चेन्न । शक्तिभेदस्यैव न्या-य्यत्वात् । यथा एको ऽप्यक्षशब्दो ऽनेकार्थप्रतिपादकशक्तिर्दृष्ट-स्तथा पच्यादिरपि । तथा हि 'पच्यते तण्डुलः स्वयमेव' इत्यत्र विक्लित्तिरेव पच्यर्थः, 'स्थाली पचति' इत्यत्र तदाश्रयणमेव । तुल्य-रूपमित्यस्य तुल्येनाभिन्नेन स्वभावेन युक्ता एते धातवोऽभिन्ना एवेत्यर्थः । नन्वध्यासे किं बीजं तत्राह *प्रतीतिरेवेति । सर्वत्र 'पच-ति' इतिबुद्धेरनुवर्त्तमानत्वात्प्रत्यवयवमपरिसमाप्तस्य समुदाय-स्यावयवे अध्यास इत्यर्थः । नन्वधिश्रयणादेरारोपितक्रियात्वे कथं तत्कर्त्तरि लकार इत्यत आह *अध्यासगृहीतयेति । बुद्ध्या विषयीकृतयेत्यर्थः । *मुख्यार्थाप्रसिद्ध्येति । अवयवगतपौर्वाप-र्यस्य समुदायरूपक्रियायामारोपाद्गौणत्वमेवेति भावः । जातिप-

क्षस्यैव मुख्यत्वात्तदभिप्रायेणाह *यद्वेति । तदुक्तम्—

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवोपलक्ष्यते ॥ इति ।

अनुगतप्रतीतिरेव जातिसाधिका । इहापि कर्त्तृकर्मपदादपि पचतीत्येकाकारप्रतीतिदर्शनात्तद्गता जातिरेव धातुवाच्या । अनेकव्यक्तिवर्त्तिनीमित्यनेन जातित्वं दर्शितम् । *स्फोटवदिति । यथा स्फोटस्य क्रमिकवर्णैरभिव्यक्तिस्तद्वत् । *क्रियाक्षणैः-तत्क्रियाक्षणैः । *तथैव—क्रियात्वेनैव । *तन्मात्रेति । पच्यते तण्डुलः स्वयमेवेत्यादौ फलस्यापि क्रियात्वमित्यर्थः ॥ ५ ॥

(क० टी०) यत्तु कर्मान्यसर्वसाङ्गत्यं तद् ध्वनयन्नाह *सर्वेति । साधुत्वमष्टकस्य क्रिययैवेति प्राचाम्, कारकाणां भावनान्वय इति परेषा च सिद्धान्तो ऽपि धात्वर्थपर एवेत्याह *धात्वर्थे इति । फलावच्छिन्नव्यापारादावित्यर्थ. । साक्षात्परपरया वा यथाकथचिदिति भाव. । धात्वर्थे वक्ष्यमाणस्वरूपे क्रियाशब्दस्य सांकेतिकी शक्तिरित्याह *अयमेव चेति । एवेन मतान्तरव्यवच्छेद । निर्मूलत्वनिरासायाह *भूवादीति । भाष्यसिद्धान्तार्थेत्यर्थः । तत्र हि-"क्रिया नामेयमत्यन्तापरदृष्टा" इत्याद्युक्तम् । द्वितीयकारिका बुद्धिस्थत्वादिरूपशक्यतावच्छेदकानुगमकबोधिका नतु क्रियास्वरूपबोधिकेति भूषणाद्यसागत्यं ध्वनयन्नाद्ये धर्मविशेषाद्युक्तावपि तत्स्वरूपानुक्त्या व्युत्क्रमेण व्याचष्टे *क्रमेत्यादि । क्रमेण जन्म येषां तेषाम् । एषां बुद्धिस्थानामधिश्रयणादीनां समूह इत्यत्रान्वयः । प्रत्यासत्त्या आह *समूह प्रतीति । गुणभूतैरित्यस्याङ्गभूतैरित्यर्थे पौनरुक्त्यापत्तिरतो गुणशब्दो धर्मपर, भूतशब्दो 'ये प्राप्त्यर्था' इत्युक्तेर्ज्ञानपरो वर्तमानक्तान्त इत्याह *तत्तद्रूपेणेति । प्रकल्पितेत्यत्र कर्मधारयो न तु भूषणाद्युक्तो बहुव्रीहिरित्याह *प्रकल्पिताभेदरूप इति । विरोध परिहरति *अत्रेति । क्रियालक्षणे इत्यर्थ. । अत एव सरूपसूत्रस्थभाष्यविरोधो नेत्याह *एते-

नेति । समुदायाश्रितैकत्वेनेत्यर्थ । *बुद्ध्येत्युक्तमिति। समूहेऽपि तस्या अन्वय । समूहव्यवहारो बुद्धिकृतो विकल्परूप एव न वास्तवः । तथा च पूर्वापरीभूतावयवा साध्यमानावस्था भूतभविष्यद्वर्त्तमानसदसदनेकावयवसमूहरूपैका क्रियेत्यर्थ । मतद्वयसाधारण्येनाह *तत्प्रकारेणेति । प्रकारो भेदः । नन्वेव प्रत्येकाशयेन पचनीति न स्यादत आह *एकैकेति । तदुक्तम्—

एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावत प्रवर्तन्ते तुल्यरूप समाश्रिता ॥ इति ।

कैयटमतेनाह *समूहेति । अधिश्रयणेत्युपलक्षणम् । वस्तुतस्तु अधिश्रयणादिरपि नैकक्षणात्मकस्तस्यापि हस्तप्रसारणपात्रादानचुल्लीसंयोजनादयो ऽवयवा सन्त्येवेति सोऽपि समूहरूप एव । यस्तु तेषामप्यवयव परमाणुप्रख्य स तु शब्दशक्तिस्वभावान्नैव वाच्यो नापि प्रत्यक्ष इति बोध्यम् । अत एव मतद्वयसाधारण्येनाह *अध्यासेति *एवम्—अध्यस्तस्य धातुवाच्यत्वे । *ईदृशस्य-अध्यस्तस्य । तस्य सम्बन्धिशब्दत्वादिति भावः । एतेन यदनन्तरमव्यवधानेन फलोत्पादः सा क्रिया यथा तण्डुलं पचतीत्यत्र विक्लेदनम् । अधिश्रयणादीनां तज्जनकतया क्रियात्वमौपचारिकम् । तदुक्तम्—

अनन्तर फल यस्या कल्पते तां क्रियां विदुः ।
प्रधानभूता तादर्थ्यादन्यासां तु तदाख्यता ॥ इति

इत्यपास्तम् । तदा तस्य गौणतापत्तेः । आरब्धेऽपि पाके क्रियाया भावित्वेन पक्ष्यतीति प्रयोगापत्तेश्च ।

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवोपलक्ष्यते ॥ इति-

हर्युक्तेराह *यद्वेति । पचतीत्यनुगतव्यवहाराच्च तत्सिद्धि । ननु तदभिव्यञ्जकत्वं प्रागुक्तरीत्या दुर्वचमत आह *स्फोटवदिति । नन्वेवमपि फलस्य कथ तदन्तर्गतस्य क्रियात्व तथाप्रतीत्यभावादत आह *फलस्यापीति । *तथैव-तादृशसमूहरूपतयैव ॥ ५ ॥

तत्र केचित्-सिद्धत्वं क्रियान्तराकाङ्क्षोत्थापक-

तावच्छेदक यद्वैजात्यं तद्रूपम् । साध्यत्वं च पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वययोग्यतावच्छेदकं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं च यद्वैजात्यं तद्रूपम् । हिरुगाद्यव्ययानां क्रियाप्रधानत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात् । स्वरादीनां हि स्वःपतिरित्यादौ नामार्थे ऽप्यन्वयः । अत एव न हिरुगाद्यर्थे कारकाणामन्वयः । तेषां क्रियान्तराकाङ्क्षत्वात् । तत्र सिद्धत्वं पाक इत्यादौ घञादिबोध्यम्, साध्यत्वं च सर्वत्रैव धातुप्रतिपाद्यम् ।

न च धातुनः क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्येनोपस्थितौ कृष्णं नमेच्चेत्सुखं यायादित्यादौ आकाङ्क्षाऽभावेनान्वयो न स्यादिति वाच्यम् । चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः ॥ ६ ॥

( कुं० टी० ) *साध्यत्वंचेति । अयं भावः—पचतिशब्देन क्रियावगतौ पुनः क्रियाया आकाङ्क्षा न भवति, अतस्तादृशक्रियागतम् वैजात्यं तद्रूप साध्यत्वम् । तच्च वैजात्यमतिरिक्तं पचतीत्यादिशब्द एव वेत्यन्यत् । ननु पचत्यादिशब्दोपात्तानामेव क्रियात्वस्य न्याय्यत्वात् हिरुगाद्यव्ययानां कथं क्रियाप्रधानत्वमतआह *हिरुगादीति । अन्यत्र क्रियामात्रविशेषणत्वव्यतिरेकं दर्शयति *स्वरादीनांहीति । *अतएवेति । हिरुगाद्यार्थस्य क्रियात्वाभावान्न कारकान्वयः । क्रियाकाङ्क्षा तु भवत्येवेत्यर्थः । *सर्वत्रैवेति । तिङन्ते कृदन्ते च । *अन्वयो न स्यादिति । नमेदित्यस्य क्रियान्तरानाकाङ्क्षत्वात् । *आहुरिति । तथापि साकाङ्क्षत्वं दुर्वारमित्यस्वरसः ॥ ६ ॥

(क टी) *तत्र–क्रियाशरीरघटकसाध्यत्वविषये। तत्रादौ भूषणकारादिमतमाह *केचिदिति। तत्राप्यादौ व्यावर्त्यतया वक्तव्यमाह *सिद्धत्वमिति। *वैजात्यम्–सत्त्वभूतत्वम्। *पूर्वापरीति बहुव्रीहि। आदिना सम्बोधनान्तादिसप्तकपरिग्रहः। इदमेव परोक्तमित्याह *क्रियान्तरेति। *यद्वैजात्यम्–असत्त्वभूतत्वम्। नन्वेव हिरुगाद्यव्ययानां क्रियाप्रधानत्वव्यवहारस्य "तद्धितश्च" इतिसूत्रे भाष्ये क्रियमाणस्यानुपपत्तिस्तदर्थस्य तत्त्वेनाभानादत आह *हिरुगादीति। *क्रियामात्रेति। क्रान्तादिवदित्यादिः। तथा च गौणस्तत्र व्यवहार इति भावः। मात्रव्यवच्छेद्यमेवाह *स्वरादीनां त्विति। अतएव वैलक्षण्यसूचकस्तु। अपिना स्वः पश्येत्यादौ क्रियासमुच्चय। ननूक्तभाष्यात्तदर्थस्य तत्त्वमेवास्त्विति किमर्थं तस्य गौणत्वमत आह *अत एवेति। *तेषाम्–हिरुगाद्यर्थानाम्। आकाङ्क्षा चेतिपाठ। उभयोरुभय व्यावर्त्यं क्रमेण। तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्येनाभानान्न तस्य तत्त्वमिति भावः। *तत्र–तयोर्मध्ये। अत एवोक्तम्—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥ इति।

*चेदिति। भुक्त्वेत्यत्रापि धातुसम्बन्धे विधीयमानक्त्वासमभिव्याहारात् सा। पचति भवतीत्यादौ पचतीत्यादेराकाङ्क्षाया अभावेऽपि भवतीत्यादेः कर्त्राद्यपेक्षत्वाद्योग्यतावशादन्यतराकाङ्क्षयैवान्वयेन न दोष इति बोध्यम्॥ ६॥

वस्तुतः साध्यत्वं निष्पाद्यत्वमेव। तद्रूपेणैव च बोधः। स्पष्टं चेदम् "उपपदमतिङ्" "सुट् कात्पूर्वं" इत्यादौ भाष्ये इति उपसर्गवादे निरूपयिष्यामः।

यद्यपि 'घटं करोति' इत्यादौ घटस्यापि साध्यमानत्वं प्रतीयते, तथापि पदान्तरसमभिव्याहारात्तथा। स्वतस्तु घटादिपदाद् द्रव्यं सिद्धत्वेनैव प्रतीयते। सिद्धत्वं च सूक्ष्मरूपेण बोध्यम्।

यद्यपि क्रियाऽपि तथा, तथाऽपि शक्तिस्वाभाव्यात्स्थूलरूपेण साध्यत्वेनैव तस्याः प्रतीतिः । द्रव्यस्य तु सूक्ष्मरूपेण सिद्धत्वेनैवेति न दोषः । पचति भवति भुक्त्वेत्यादौ भवति भुक्त्वेत्यादीनां क्रियाकाङ्क्षादर्शनेन तादृशवैजात्येनाभानात्कारकान्वयानापत्तिर्धातुत्वानापत्तिश्च । एवं कृष्णं नमेच्चेदित्यादौ चेत्पदेनापि तथाऽऽकाङ्क्षायां तद्वैजात्येनाभानाद्दोष एव । हिरुगित्यादेश्च न साध्यत्वेन भानमिति न कारकान्वय इति दिक् ॥ ७ ॥

( कुं० टी० ) *वस्तुतइति । तेन कृष्ण नमेच्चेदित्यादौ नाव्याप्तिरिति भावः । *तथापीति । करोत्यादिप्रयोगे एव घटस्य साध्यत्वं प्रतीयते, करोतेस्तु स्वतो ऽपीति भावः । ननु सिद्धस्य घटस्य कथं साध्यत्वम्, असिद्धत्वे तु कथं क्रियाजनकत्वमत आह *सूक्ष्मरूपेणेति । कारणे विद्यमानस्यैव बुद्ध्या विषयीकरणादिति भावः। *क्रियापितथेति। सूक्ष्मरूपेण सिद्धेत्यर्थः। क्रियान्तराकाङ्क्षेतिलक्षणं वदतो मते दोषमाह *पचतिभवतीति । अत्र भवतीत्यस्य पचतीत्येतत्साकाङ्क्षत्वात् । भवति भुक्त्वेत्यादौ पाकक्रियाकाङ्क्षादर्शनादव्याप्तिरित्यर्थः। ननु स्वमते क्रियान्तरानाकाङ्क्षात्वस्य नियामकत्वे हिरुगादावतिव्याप्तिरत आह *हिरुगाद्यर्थस्येति ॥ ७ ॥

( क० टी० ) सिद्धान्तमाह *वस्तुत इति । यौगिकोऽर्थ इत्याह *निष्पाद्येति । उत्पाद्यमानत्वमेवेत्यर्थ. । एवेनोक्तव्यवच्छेद. । सिद्धान्ते "प्रातिपदिकानामपि" इतिभाष्योक्तदोष 'स्वभावसिद्ध तु द्रव्यम्" इतिभाष्योक्त्यैव परिहर्त्तुमाह *यद्यपीति । *स्वतस्तु–तदसमभिव्याहारे तु। ननु स्थूलरूपस्य द्रव्यस्य सिद्धत्व बाधितमेवात आह

*सिद्धत्वञ्चेति । सत्कार्यवादादाह *यद्यपीति । *तथा–सूक्ष्मरूपेण । *द्रव्यस्यत्विति । एतेनोक्तभाष्यस्य "द्रव्य स्वभावेन शब्दशक्तिस्वभावेन सिद्ध सूक्ष्मरूपेण सिद्धावस्थमेव शब्दवाच्यम्" इत्यक्षरार्थः सूचित । तथाच क्रियायास्तत्त्वेऽपि शब्दवाच्यत्वं ' तथा नेति भेद इति भावः । केचिन्मते दोषमाह *पचतिभवतीति । पचतीत्यस्यानाकाङ्क्षत्वादाह *भवतीति । अत्र क्रियात्वेन तदभावेऽपि कर्तृत्वेन साऽस्त्येवेत्याह *क्रियाकाङ्क्षेति । आदि' प्राग्वद्भुक्त्वेत्याद्याशयक' । दोषान्तरमाह *एवमिति । अपि क्त्वाऽऽदिसमुच्चये । *नथेति । उत्थापितक्रियाऽऽकाङ्क्षायामित्यर्थं । स्वमतेऽत्रापि न दोष इत्याह *हिरुगिति । पञ्चमीयम् । वर्जनादेरितिशेषः । *नेति । तदर्थं इति शेष' ।

एतेन 'नच साध्यत्वेनाभिधाने मानाभाव', पचति पाकः करोति कृतिरित्यादौ धात्वर्थावगमाविशेषे ऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वाद्' इत्यपि तदुक्तमपास्तम् ।

"ज्योतिष्टोमेन यजेत" इत्यादौ यथाऽत्र पक्षे न दोषस्तथाऽग्रे स्फुटीभविष्यति तदाह *दिगिति ॥ ७ ॥

तत्र फलानुकूलः फूत्कारादिर्व्यापारः समूहघटकः फूत्कारत्वाधःसंतापनत्वादितत्तद्रूपेणैव वाच्यः । प्रागुक्तहरिकारिकाभ्यां तत्तद्रूपेणैव बोधलाभात् । अत एव 'देवदत्तः पचति' इत्युक्ते 'स फूत्कारादिमान्न वा' इति सन्देहो न । नानार्थत्वमिष्टमेव ।

तत्र यदा यो वक्तृबुद्धिस्थस्तदा स वाच्यः । अत एव 'काष्ठानि पचन्ति' इति सिद्धम् । तद्व्यापारस्य धात्वर्थत्वाविवक्षायां 'काष्ठैः पचति' इति । शक्ततावच्छेदकं तु पचित्वादिकम् । धातुत्वं तु न, अतिप्रसक्तत्वात् । धातुत्वाद्यजानतो ऽपि बोधाच्च ।

एतेन धातुत्वेन धातुमात्रस्य क्रियात्ववति शक्तिः,

तत्तद्रूपेण च तत्तद्रूपावच्छिन्नबोधकत्वमित्यपास्तम् । गौरवात्। तादृशशक्तिग्रहस्यादृष्टमात्रार्थत्वाच्च ।

फूत्कारे एव गृहीतशक्तिकस्य व्यजनेन वह्नि-प्रज्वालनदशायां पचतीति नेष्टमेव । फूत्कारातिरिक्ते विक्लित्त्यनुकूलत्वाग्रहे तवापि तन्नेष्टमेव ।

याग इच्छा ज्ञान वेति वादिविप्रतिपत्तिरपि तत्तत्पुरुषीयतादृशबोधानुसारादेवोपपन्ना ।

धातूनामनेकार्थत्वात्कदाचित्क्रियात्वेन बोधोऽपि।

फूत्कारस्यातीतत्वमात्रेणापाक्षीदिति तु न, भूतत्वादेः समुदाये एवान्वयात् ॥ ८ ॥

( कुं० टी० ) ननु तत्तद्रूपेण वाच्यत्वे नानार्थत्वापत्तिरत आह *इष्टमेवेति । *अतिप्रसङ्गात्–फूत्काराद्यवाचकेऽपि सत्त्वात् । *तत्तद्रूपेणचेति । पच्यादिविशेषशक्त्या च फूत्कारत्वादिना तत्तद्बोध इत्यर्थः।*गौरवादिति । यद्विशेषयोरिति न्यायस्तु निर्बीज इति भावः । *तादृशशक्तिग्रहस्य–धातुत्वादिना शक्तिग्रहस्य । ननु फूत्कारत्वादिरूपेण वाच्यत्वे व्यजनेन प्रज्वालनदशायां पचतीति प्रयोगानापत्तिरत आह *नेष्टमिति । इदं च तवापि तुल्यमित्याह *फूत्कारेति । *यागइति । देवतोद्देश्यकस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छा यागः, इच्छाविशेषो ज्ञानविशेषो वेति मतभेदोऽपि स्वस्वव्युत्पत्त्यनुसारादेवेत्यर्थः। ननु तत्तद्रूपेण वाच्यत्वे विक्लित्त्यनुकूलफूत्कारादिरित्येव बोधः स्यादतआह *धातूनामिति । *फूत्कारस्येति । तावन्मात्रस्यापि क्रियात्वे तदापत्तिरिति भावः ॥ ८ ॥

( क० टी० ) *तत्र–तयोर्मध्ये । *कारिकाभ्याम्–सर्वानुभवसिद्धार्थप्रदर्शिकाभ्याम् । एवेन सामान्यरूपव्यवच्छेदः । तमेवाह *अ-

तथवेति । अन्यथा सामान्येन बोधेऽपि विशेषरूपेणाबोधेनैकतरकोटिनिश्चयाभावेन सन्देहापत्तिरिति भावः । *इष्टमेवेति ।

एतेन तदादिन्यायेन बुद्धिस्थत्वादे. शक्यतावच्छेदकानामनुगमकस्य सत्वात्तत्त्व नेति तदुक्तमपास्तम् ।

*तत्र । तेषां व्यापाराणां मध्ये । *य.—व्यापारः । अनेनाव्यवस्था निराकृता । *अतएव—तदैव तदाश्रयस्य कर्तृत्वादेव ।

एतेन काष्ठक्रियाया वाच्यत्वे तृतीया न स्याद्, अवाच्यत्वे प्रथमा न स्यान्नियमतस्तृतीया स्यादित्यपास्तम् ।

धातुत्वतो विशेषे ऽपि तत सामान्यत्वाद् उक्तवैलक्षण्ये तु ।

*धातुत्वादीति । आदिना परस्मैपदित्वादि ।

एतेन कृत्यन्यव्यापारे पचित्व शक्ततावच्छेदक कृतेस्तु सर्वधातुष्वनुस्यूततया प्रतीयमानत्वेन तत्र सर्वसाधारणधातुत्वमेव शक्तताऽवच्छेदकमित्यप्यपास्तम् ।

उभयथा दीक्षितोक्तिं खण्डयति *एतेनेति । मात्र कार्त्स्न्ये । नानार्थत्वाभावायेदमुक्त तै. । क्रियात्व धातुवाच्यत्वसमानाधिकरणो जातिविशेष. । स च क्रियापदशक्यतावच्छेदकत्वादिना सिद्ध. । जलपदशक्यतावच्छेदकतया जलत्वजातिसिद्धेर्लीलावत्युपाये दर्शनात् । प्रत्यभिज्ञाऽनुगतव्यवहाराभ्यां जातिसिद्धेस्तद्वाच्यतायाश्च सरूपसूत्रे भाष्ये उक्तत्वाच्च । तद्घटकधातुत्व च जातिविशेष. । तत्परिचायक च भूवादिसूत्रमिति तात्पर्यम् । सर्वधातुभ्य सर्वक्रियाबोधापत्तिवारणायाह *तत्तद्रूपेणचेति । तथाच पचतीत्यादिसमभिव्याहारस्य तत्तद्बोधनियामकत्वमिति तात्पर्यम् । एतेनेत्यस्यार्थमाह *गौरवादिति । उभयकल्पनात इत्यर्थ. । दोषान्तरमाह *तादृशेति । सामान्यरूपेत्यर्थ' । *अदृष्टमात्रार्थत्वाच्चेति । तत्त्वापत्तेश्चेत्यर्थ । समभिव्याहारस्य बोधनियामकताया विपर्यासम्बद्धे बोधकत्वानुपपत्त्या दुर्वचत्वेन तथासम्बन्धकल्पनायास्तवाप्यावश्यकत्वादिति भाव. ।

किञ्च तेन रूपेण बोधाननुभवात् । किञ्च तत्तद्रूपेण बोधस्यैवानुभवाच्च ।

एतेन सकलसाधारणानुगतैकधर्मान्तरस्य वक्तुमशक्यत्वे ऽपि विक्लित्त्याद्यनुकूलत्वमेव तथेत्यप्यपास्तम् । अतिप्रसक्तस्य

शक्यतानवच्छेदकत्वाच्च । प्रामाणिकत्वाच्च नानाशक्तिकल्पना न दोषाय । अन्यथा सैन्धवादिपदशक्यतावच्छेदकतयाऽश्वलवणादिवृत्त्येकधर्मकल्पनाऽऽपत्त्या तत्रापि तत्त्वोच्छेदापत्तिः । अश्वत्वादिनैव तत्प्रतीतिरनुभवसिद्धेति चेत् । प्रकृते ऽपि समम् । अत एव विभुपदशक्यतावच्छेदकतया न विभुत्वजातिसिद्धिः । परममहत्परिमाणत्वेनैव सर्वमूर्त्तसयोगित्वेनैव वा ततो बोधादिति दिक् ।

ननु तत्तद्रूपेण शक्तौ फूत्कारं विना ऽपि चैत्रनिष्ठक्रियान्तरेण सिद्धज्वालया जायमाने ओदने 'चैत्रः पचति' इति प्रयोगो न स्यादत आह *फूत्कारेष्वत्रेति। एवेन तत्रापि तत्त्वे तु तस्येष्टत्व सूचितम्। इदं तवाप्यावश्यकमित्याह *फूत्कारेति । नन्वेवमपि तथा सति याग इच्छा ज्ञान वेति वादिविप्रतिपत्तिर्न स्यादन्यतरकोटिनिश्चयसत्त्वादतआह *यागइति । *तत्तत्पुरुषीयेति । स्वीयेति पाठान्तरम् । नह्यय सशयो येनैकस्य कोटिद्वयज्ञानापेक्षेति भाव । इदं दोषद्वय मीमांसकनव्योक्त बोध्यम् । नन्वेवमपि तथा सति सामान्यरूपेण बोध कादाचित्को न स्यादत आह *धातूनामिति । एतेन लक्षणया स इत्यपास्तम् । नन्वेवमपि फूत्कारस्यातीतत्वमात्रेण व्यापारान्तरवर्त्तमानतादशायामपाक्षीदिति स्यादतआह *फूत्कारेति । *भूतत्वादेरिति । इदमग्रे स्फुटीभविष्यति ॥ ८ ॥

अस्तिभवतिविद्यतीनामर्थः सत्ता । अनेककालस्थायिनीति कालगतपौर्वापर्येण क्रमवतीति तस्याः क्रियात्वम् ।

तदुक्तं हरिणा—

आत्मभूतः क्रमो ऽप्यस्या यत्रेदं कालदर्शनम् ।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् ॥ इति ।

'अस्याः क्रियायाः । यत्र क्रियायाम् । कालदर्शनं कालगतपौर्वापर्यस्य तत्रारोप' इति हेलाराजः ।

यद्वा सत्ताविषयव्यापारार्थकत्वेन क्रियावाचकत्वनिबन्धनधातुत्वसिद्धिः ।

सत्ता च आषष्ठाद् भावविकारादनुस्यूतं यद् रूपं 'सद्' इतिप्रत्ययवेद्यं तत् । तद्विषयव्यापारश्चात्मभरणस्वरूपधारणपदाभ्यामुच्यते । आत्मस्वरूपं च सत्तैव । सा चात्र स्थूलरूपात्मिका । म्रियतौ तत्त्यागानुकूलव्यापारस्येवात्र तद्वैपरीत्येन तद्धारणानुकूलव्यापारस्य प्रतीतेः । स्पष्टं चेदं भूवादिसूत्रे भाष्ये ।

तदुक्तं निरुक्ते–

"षड् भावविकारा भवन्तीति वार्ष्यायणिः–जायते, ऽस्ति, विपरिणमते, वर्धते, ऽपक्षीयते, विनश्यतीति । जायतेइति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्" इति ।

भावस्य निरुपपदभावशब्दवाच्यस्य जगत्कारणस्य सत्तारूपब्रह्मणो निष्क्रियस्यापि षडेते विकारा इव विकाराः मायासहकारेण क्रियारूपा विवर्त्ताः । अन्यत्र प्रधानादिषु 'प्रधानभाव' इत्यादिरीत्या सोपपदभावशब्दप्रयोगः ।

दृश्यते च महाभारते याज्ञवल्क्यम्प्रति रविवाक्ये प्रयोगः—

कृत्स्नं शतपथं चैवं त्वं प्रणेष्यसि वै द्विज ।
तस्यान्ते च पुनर्भावे बुद्धिस्तव भविष्यति ॥ इति ।

'जायते इति च षड्भावेषु पूर्वस्य जनेः, आदिमित्युपलक्षणम्, उपक्रमप्रभृत्यपवर्गपर्यन्तं जात इति व्यवहारं यावत्, भावमाचष्टे तदाऽपरं भावमस्त्याख्यमसतो

जन्मायोगाद्ध्रियमानमपि नाचष्टे । शब्दशक्तिस्वभावात् । नापि प्रतिषेधति । निरालम्बनं जायते इत्यनापत्तेः । अस्तीति चोत्पन्नस्य सत्त्वस्य सत्तावतः तादृशस्थूलरूपस्यावधारणं धारणमाचष्टे' इति तद्भाष्यकृतः ॥ ९ ॥

( कुं० टी० ) ननु सर्वशक्त्यात्मभूतस्य ब्रह्मण एवानेकविकारप्रदर्शनफला अविद्याशक्तिः, अव्यतिरिक्ताभिः स्वशक्तिभिर्जन्मादिरूपतया तदेवाविद्यायामवभासते, तच्च ब्रह्म सर्वभावेषु समानरूपं सत्ताऽऽत्मकं सर्वदैव भासते न क्रमेणेति कथं तर्हि क्रमो नाम कश्चित् क्रियाविशेषोऽस्तीत्याशङ्क्याह *आत्मभूत इति ।

अस्यार्थः—योऽयं क्रियमाणः क्रमः सो ऽप्यस्याः सत्तायाः आत्मभूतः, क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासंवेदनात् । यत्र क्रमे इदं कालदर्शनम् । कालो नात्र पदार्थान्तरं पश्यन्ति । अविभक्तो ऽपि कालः क्रियोपाधिवशात्पौर्वापर्येण प्रविभक्त इव । ब्रह्मण एव हि क्रियाऽऽख्या कालशक्तिः जायमानपदार्थेषु जन्मादिक्रियाद्वारा पौर्वापर्येणावभासिका नापरो द्रव्यभूतः कालोस्तीति ।

तदेवं विवर्त्तवादमालम्ब्य क्रियात्वमुपपाद्य लौकिकमपि क्रियात्वमुपपादयति *यद्वेति । *सत्ताविषयेति । सत्तानुकूलो यो व्यापारस्तद्वाचकत्वादित्यर्थः । अस्ति आत्मानं विभर्त्तीत्यर्थादात्मभरणानुकूलव्यापारस्तत्रापि प्रतीयत इति भावः । *आषष्ठादिति । षष्ठो विकारो विनाशस्तत्पूर्वपर्यन्तमनुवर्त्तमानं यद्रूपं सा सत्तेत्यर्थः । *आत्मस्वरूपंचेति । आत्मभरण-

मित्यत्रात्मशब्देन सत्त्वैवोच्यते, स्वरूपधारणमित्यत्र च स्वरूपशब्देन सत्त्वैवोच्यते इत्यर्थः । *माचेति । स्थूलं यन्नस्वरूपं तदेवात्र सत्तेत्यर्थः । समग्रः क्रियाकलापः सत्ताविवर्त्त एवेति निरुक्तकारमतमाह *तदुक्तमिति । भावस्य विकाराः षडिति वार्ष्यायणिराचार्यो मन्यते । तानाह *जायतइति ।

अय भावः—यद्यपि द्वितीयादयोऽपि विकाराः तृतीयाद्यपेक्षया पूर्वास्तथापि पूर्वभावस्यादि प्रथमं पूर्वभावं जनिशब्दवाच्यं विकारं 'जायते' इत्येवंशब्द आहेति जनिशब्दवाच्यो विकारः पूर्वः तदुत्तरकालेऽस्तिशब्दवाच्यः । तत्र च जनिशब्दवाच्ये भावविकारे अस्तेरप्यर्थोऽस्ति विद्यमानता । नह्यविद्यमाने 'जायते' इत्येष शब्दो जन्मैव केवलं ब्रवीति । तस्यामवस्थायामस्तिशब्दवाच्यस्य विकारस्यासंपूर्णत्वात् । तस्माद्विद्यमानमप्यास्तित्वं नाचष्टे ।

नन्वेवमर्थात् प्रतिषेधः सिद्ध इत्यत आह *नप्रतिषेधतीति । आस्तित्ववानेव हि असौ जायते तत्प्रतिषेधे अनात्मक एव स्यात् । अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणमाचष्टे न विपरिणाममाचष्टे अपूर्णत्वात् । पूर्वकाले परिपूर्णत्वे सत्येव हि उत्तरकालेऽवस्थान्तरं भवति । *सत्त्वस्य-सत्तावतः । *अवधारणम्—स्थूलरूपधारणम् । भावस्य कार्यस्य विकाराः षडित्यपव्याख्यानमित्याह *भावस्येति । अत एवोक्तं हरिणा—

सैव भावविकारेषु षडवस्थाः प्रपद्यते । इति ।

शारीरकभाष्यकृता तु जन्मास्थितिलयास्त्रय एव विकारा

---

१ अत्र 'सत्तावत' इति विवरणान्मूले तत्पाठो नास्तीति भाति ।

उक्तास्तन्मते परिणामवृद्ध्योः उत्पत्तावन्तर्भावः, अपचयस्य नाशे इति । *निरुपपदस्येति । केवलभावशब्दस्येत्यर्थः ।

अयं भावः—

सन्मात्रस्वभावा सत्ता । तच्च सन्मात्ररूपं प्रथमतो ऽस्ति-शब्देन नाभिधीयते किन्तु जन्मोत्तरकालभावी अवस्थाविशेषः । तदानीमेव लोके 'अस्ति' इतिव्यवहारात् । तदनन्तरं चास्तीत्यवस्थितस्य विकारापत्तिरिति ।

*विपरिणमते–विपरिणममानं मुहूर्त्तमपि नावतिष्ठते इति । यावद् अनेन वर्धितव्यं तावद्वर्धते ततो ऽपक्षीयते मुहूर्त्त-मप्यनवस्थानादेव । एवं च तस्यैव विचित्रमाश्रयः । येन चित्र-रूपेण भासते इति। *भावेति । ब्रह्मात्मकसत्तापर्यायत्वाद् भावो ब्रह्मैवेत्यर्थः । क्रियाद्रव्ययोः सत्तात्मकत्वप्रतिपादनेन तद्व्य-तिरिक्तवस्त्वभावात्सर्वं सत्ताऽऽत्मकब्रह्ममयमिति भावः । ननु परिणामवाचिविकारशब्दे अनित्यत्वापत्तिरत आह *वि-कारा इवेति । *मायासहकारेणेति ।

अयं भावः—नायं विकारशब्दः परिणामवाची अ-नित्यत्वप्रसङ्गात् किन्तु विवर्त्तपर्यायः । तथाहि सर्व-शक्त्यात्मभूतस्य ब्रह्मणो ऽनेकविकारप्रदर्शनफला अविद्या-ऽऽख्या शक्तिः । तच्छक्तिरेव च जन्मादिरूपतया अविद्यायां भासते । तदेव सद् ब्रह्म सर्वभावेषु समानरूपसत्तात्मकं तद्-व्यतिरिक्तस्याभावात् ।

*अन्यथेति । प्रधानभाव इत्याद्याकारको भावशब्द-प्रयोगः प्रधानादिषु इत्यन्वयः । *निरालम्बनमिति । एतच्च हेतुगर्भं विशेषणम् । निरालम्बनत्वाज्जायत इति व्यवहारो न स्यादित्यर्थः । यो हि जायत इति व्यव-

ह्रियते स विद्यमान एव विषयो भवति । *अपवर्गः–समाप्तिः । 'जात'इतिव्यवहारपर्यन्तं परं भावं नाचष्टे इत्यन्वयः । *तदेति । असतो जन्मायोगाद्विद्यमानमपि अस्त्याख्यं भावं नाचष्टे इत्यन्वयः । पूर्वस्येत्यस्य विवरणं *जनेरिति । न ह्यविद्यमानं जायते ॥ ९ ॥

( क० टी० ) नन्वेवमस्त्यादीनां धातुत्वानापत्तिस्तेषां सत्तामात्रार्थत्वेन व्यापाररूपक्रियावाचकत्वाभावादत आह *अस्तीति । *आत्मेति। क्रियास्वरूपभूत इत्यर्थः । यत्रेद कालदर्शनमस्या आत्मभूतः क्रमो ऽप्यस्तीत्यन्वय ।तदेवाह *पौर्वेति । आदिना समूहत्वम्। अत्र प्रागुक्तिविरोधादाह *यद्वेति । *आपष्ठादित्याङ् मर्यादायाम् । जननानन्तरमिति बोध्यम् । यद्यप्युत्पत्तिविनाशयोरपि सूक्ष्मरूपेण वस्तुनो भावस्तथापि तद्वारणायाह *सदिति । विशिष्टस्वरूपमाह *तद्विषयेति । स्वस्वरूपेति पाठः । तदेव स्पष्टयति *आत्मेति । सदित्युक्तेः फलमाह *साचेति । आपष्ठादित्युक्तेः फलमाह *म्रियताविति । *अत्र–चतुर्षु । *स्पष्टं चेदमिति । द्वितीयमतमित्यर्थः । तत्राहि–"कारकाणां प्रवृत्तिविशेष क्रिया" इति सिद्धान्ते भोजनक्रियाणां मिथो वैलक्षण्याद्यथा प्रवृत्तिविशेषरूपत्व नैवमस्त्यादीनामिति तेषां धातुत्वासिद्धिरिति शङ्कानिरासायोक्तम्, "यद्येव सिद्धाऽस्त्यादीना धातुसज्ञा । अन्यथा हि कारकाण्यस्तौ प्रवर्त्तन्ते अन्यथा हि म्रियतौ"इति । कारककर्त्तृकास्तौ वाच्यत्वेन स्थिता प्रवृत्तिरन्यथेत्यादिरक्षरार्थः ।तदुक्त *म्रियताविति। तत्र तद्धारण स्थूलस्वरूपधारणम् । एव च म्रियत्यपेक्षया प्रवृत्तिविशेषरूपताऽस्त्येवास्त्यर्थस्येति तत्सिद्धिरिति तात्पर्यम् । "षड् भावविकारा इति ह स्माह वार्ष्यायणिर्जायते, ऽस्ति, विपरिणमते, वर्द्धते ऽपक्षीयते, विनश्यतीति" तदग्रिमभाष्य तु अस्त्यादीना क्रियावाचकत्वे युक्त्यन्तरबोधनपरमिति ध्वनयन्नाह *तदुक्तमिति । *वार्ष्यायणि । आहेति शेष । तद्भाष्यग्रन्थमाह *भावस्येत्यादि । *एते-क्रियाप्रकारा । निरुपपदेत्यस्य फलमाह *अन्यत्रेति । अस्यैव व्याख्या *प्रधानादिष्विति । आदिना ईश्वरभाव इत्यादि । अतो

न ते केवलभावशब्दवाच्या इत्यर्थः । *भारते—मोक्षधर्मेषु । *कृत्स्नमिति ।

प्रतिष्ठास्यति ते वेद सोत्तरः सखिलो द्विज ।—

इत्यादि. । *भविष्यतीति ।

प्राप्स्यते व्यपदिष्टं तत्सांख्ययोगेप्सित पदम् ।—

इत्यन्तः । पूर्वत्वस्य सापेक्षत्वादाह *षडिति । *जने.—उत्पत्तिरूपभावस्य । *आदि.—प्रारम्भ । तथा सति न्यूनतां निराचष्टे *आदिमित्युपेति । *अपवर्गस्तत्समाप्ति. । तदाह *जात इतीति । अव्यवहितत्वादाह *अस्त्याख्यमिति । ननु तदा तस्यासत्त्वादेव नाख्यानमत आह *असतइति । अन्यथा शशशृङ्गादेरप्युत्पत्त्यापत्तेरिति भाव. । नन्वेव तेन तन्निषेध एवोच्यतामत आह *नापीति । सत्त्वस्येत्यस्य व्याख्या *सत्तावत इति । सूक्ष्मरूपतया तस्या. पूर्वमपि सत्त्वादाह *तादृशेति । उत्पन्नेत्यर्थ । नात्रावधारण निश्चय इत्याह *धारणमिति । एव च ब्रह्मसत्तैवानेकक्रियाविवर्त्तात्मिका कारकै. सबन्धादवसीयमानसाध्यस्वरूपा जन्मादिरूपतया भासते इति तस्यापि तत्त्वमिति भाव. ॥ ९ ॥

भावनाफलयोरेकनिष्ठत्वाच्च गच्छतीत्यादाविव न स्पष्टप्रतीतिः । आसन्नविनाशं कंचिदुद्दिश्य 'किं करोति' इति प्रश्ने 'अस्ति'इत्युत्तराच्च तस्य व्यापारवाचित्वम् । अन्यत्र तु सुस्थतया निश्चिते 'किङ्करोति' इति प्रश्नः पाकादिगोचर एवेति निर्णयाद् 'अस्ति' इति नोत्तरम् ।

किञ्च व्यत्यनुषते इत्यत्र "कर्त्तरि कर्मव्यतिहारे" इत्यात्मनेपददर्शनात्तस्य क्रियावाचकत्वम् । "कर्मव्यतिहारश्च तत्र क्रियाव्यतिहार" इति "उपसर्गप्रादुर्भ्याम्" इति सूत्रे भाष्ये स्पष्टम् ।

"घटो भवति" इत्यादावुत्पत्त्यनुकूलो व्यापारो-

ऽर्थः । स व्यापारश्च साध्यत्वेनाभिधीयमानाऽऽश्र-
यतैव । पातञ्जलनये सर्वपदार्थानामवस्थादिरूपेण
प्रतिक्षणपरिणामितया तत्तत्परिणामविशिष्टोत्पत्ति-
निरूपितानामाश्रयतानामनेकतया पूर्वापरीभूतावय-
वकत्वाक्षतेः, सत्तायामिव कालगतपौर्वापर्यारोपेण वा।

यद्वा सत्कार्यवादे कारणात्मना सदेव यावत्
स्थूलं रूपं न प्रतिपद्यते तावत् 'जायते' इत्युच्य
ते । तत्प्रतिपत्तौ तु 'अस्ति' इति । तत्र तत्प्रा-
पकव्यापाररूपारोपात्तस्याः क्रियात्वम् ।
अस्तीत्यस्य च सत्तां भावयतीत्यर्थ इति बोध्यम्।
'ज्ञानं ब्रह्म'इत्यादौ जानातेर्भावे ल्युट् ।

नच तस्याखण्डत्वेन नित्यत्वेन च पूर्वापरीभूता-
वयवकत्वेनाभानात् कथं तत्प्रकृतेर्जानातेर्धातुत्व-
मिति वाच्यम् ।

वृत्त्यभिव्यक्ते वृत्तिधर्मारोपेण तत्प्रतीत्या ऽत्रापि
तदारोपेण तस्योपपत्तेः। ब्रह्मणो निर्विकारत्वनिर्ध-
र्मकत्वादिश्रुतिभिश्च तस्यारोपितत्वमेवोचितम् ।
शुद्धचित्तस्य तु अन्यत्रेवात्रापि निषेधवाक्यसह-
कारेणाखण्डार्थबोधः । निषेधवाक्यैरेव वा सः ।
एवमेव ब्रह्मेत्यादौ नपुंसकत्वाद्युपपत्तिरित्यन्यत्र
विस्तरः ॥ १० ॥

(कुं० टी०) नन्वस्तीत्यादावपि भावना स्पष्टं कुतो न प्रती-
यते आह *एकनिष्ठत्वाच्चेति । *आसन्नविनाशम्–मुमूर्षुम् ।
*व्यत्यनुषतइति । "श्नसोः" इत्यल्लोपे उपसर्गप्रादुर्भ्यामिति

पः । कर्मव्यतिहारस्य प्रायो बहुविषयत्वाद् बहुवचनोक्तिः । *तत्तत्परिणामेति । परिणामभेदेनाश्रयतानामपि नानात्वमित्यर्थः । *तत्प्रापकेति । आश्रयताप्रापका ये व्यापारास्तदारोपादाश्रयताना पौर्वापर्यसत्त्वाद्व्यापारत्वमित्यर्थः । *तस्येति । ब्रह्मात्मकज्ञानस्याजन्यत्वादिति भावः । *वृत्तिधर्मेति । वृत्तिनिष्ठजन्यतया ज्ञानस्य जन्यत्ववन् वृत्तिगतपौर्वापर्यारोप इत्यर्थः । *निषेधवाक्येति । "एकमेवाद्वयं ब्रह्म नेह नानास्ति" इत्यादीत्यर्थः । *निषेधवाक्यैरेववेति । अथवा निषेधवाक्यैरेव । *सः—अखण्डार्थबोधः । *नपुंसकत्वेति । गुणाना साम्यावस्था क्लीबत्वम्, ब्रह्मणि च प्राकृताना गुणानामभावे ऽपि वस्तुमात्रस्य ब्रह्मरूपतयाऽऽरोपेणैव साम्यमिति भावः ॥ १० ॥

( क० टी० ) नन्वेवं घट करोतीत्यादाविव घटोऽस्तीत्यादावपि स्पष्ट कुतो न बुध्यत इति, अत आह *भावनेति । क्रमो जन्यजनकयोरिति तत्क्रमेण पूर्वनिपात । तथाचास्यास्तत्सामानाधिकरण्य तत्स्पष्टत्वे दोष इति भावः । एवं तदर्थस्य क्रियात्वे भाष्याद्युक्तप्रकारेण साधिते सामान्यविशेषतया प्रश्नोत्तरभावेन सामानाधिकरण्य पच्याद्यर्थस्य क्रियात्वसाधक भाष्याद्युक्तमप्यत्राव्यापकमस्तीत्याह *आसन्नेति । *प्रश्ने—कृते इति शेष. । *उत्तराच्च—उत्तरस्य सर्वसमतत्वाच्च । एतेनैव साति किं करोतीति प्रश्ने पचतीत्युत्तरवदस्तीत्युत्तरमपि स्यादित्यपास्तम् । नन्वेवमन्यत्रापि तथा कुतो न, अत आह *अन्यत्रेति । आसन्नविनाशभिन्न इत्यर्थ । वस्तुतस्तद्भिन्ने ऽपि तत्त्वेनाज्ञाते ऽपि तस्येष्टत्वादाह *सुस्थतयेति । इदमपि तत्रैव भाष्ये स्पष्टम् । लौकिकवच्छास्त्रीयमपि अव्यापक तस्य तत्त्वसाधकमस्तीत्याह *किञ्चव्यतीति । षत्वस्य सामर्थ्यादपि सिद्धिरित्याशयेनाह *कर्त्तरीति । तत्र बीजमाह *कर्मेति । चो यत इत्यर्थे । लक्ष्यानुरोधादकृत्रिमस्यैव तस्य तत्र ग्रहणमिति भाव. । एव

लडादिव्यवस्थाऽपि तस्यापि तत्त्वसाधिका भाष्ये ऽप्येवमित्यादि-नोक्ता बोध्या । अन्योऽपि तस्यार्थ इत्याह *घटइति । अत्र तु प्र-वृत्तिविशेषरूपक्रियात्व स्पष्टमेव । अत्र मानम्—

रोहितो लोहितादासीद् धुन्धुस्तस्य सुतो भवद् ।

इत्यादि । ननु ततस्तत्त्वेनाभिधाने ऽपि धर्मरूपत्वेनैकत्वात्पूर्वा-परभावाभावेन कथ तत्त्वमत आह *पातञ्जलेति । *तत्रेति । स्थू-लरूपप्रतिपत्तिरूपसत्तायां तत्प्रतिपत्तिप्रापकचैत्रनिष्ठव्यापारेत्यर्थ. । *तस्या.–तत्सत्ताया । भेदस्यासिद्धान्तत्वादाह *भाव इति । सि-द्धावस्थापन्नधात्वर्थ इत्यर्थ· । ताश्च—

निष्क्रिय निष्कल शान्त निरवद्य निरञ्जनम् ।
अमृतस्य परं सेतु. साक्षी चेता केवलो निर्गुणश्च ॥

इत्यादय. ।

कारण परमेशानो य. शुद्धो ऽप्युपचारतः ।

इत्यादिस्मृतिरप्यनुसन्धेया । *तस्य–भावत्वस्य । प्रागुक्तरीत्या आह *शुद्धेति । *अन्यत्रेव–"तत्त्वमसि" इत्यादाविव । *निषेधेति । "नेह नान ऽस्ति" इत्यादीत्यर्थ. । प्रागुक्तमेव द्वितीयमतमाह *नि-षेधेनि । *एवमेव—आरोपेणैव । आदिना सङ्ख्या ॥ १० ॥

**सकर्मकत्वं च व्यापारव्यधिकरणफलवाचकत्वम्, तत्समानाधिकरणफलवाचकत्वं चाकर्मकत्वम् ।**

**यद्वा व्यापारव्यधिकरणफलवाचकत्वाभावो ऽक-र्मकत्वम् ।**

**स च क्वचित्सामानाधिकरण्यात् । यथा–उ-त्तिष्ठतीत्यादौ । अन्यथोर्ध्वदेशसंयोगस्य विद्यमान-त्वे उत्थित इति प्रयोगानापत्तेः । मम तु तत्समा-नाधिकरणस्य तदनुकूलव्यापारस्यातीतत्वात् तस्य विद्यमानत्वे ऽपि तदुपपत्तिः । अत एव "परिपन्थं च तिष्ठति" इत्यादौ 'क्रियाविशेषणत्वात् कर्मत्वेन**

द्वितीयान्तत्वम्' इति सङ्गच्छते ।

क्वचित्फलांशाभावात्तत्त्वम् ।

एवं चास्त्यादौ केवलसत्तैवार्थः । निरुक्ते उत्पन्नस्य सत्त्वस्य द्रव्यस्य स्वरूपधारणारूपां सत्तामाचष्ट इत्यर्थः । तस्या अपि क्रियात्वमुपपादितमेव ।

यद्धातूच्चारणे कर्माकाङ्क्षा नियता स सकर्मक इति तु न युक्तम् । गच्छेत्यादिषु तदाकाङ्क्षाऽभावात् । क्वेत्येव हि तत्राकाङ्क्षा ।

अकर्मकभिन्नत्वं सकर्मकत्वमित्यपि न । सकर्मकाणामर्थान्तरे ऽकर्मकत्वेनासम्भवापत्तेः ।

एतेन सकर्मकधात्वन्यतमत्वं सकर्मकत्वमित्यपास्तम् ॥ ११ ॥

( कुं० टी० ) *सामानाधिकरण्यादिति । फलव्यापारयोरिति शेषः । अकर्मकाणां व्यापारमात्रवाचित्वं तार्किका वदन्ति, तान्निराकरोति *अन्यथेति । संयोगमात्रस्य उत्तिष्ठत्यर्थत्वे इत्यर्थः । *अतएव–फलस्य धात्वर्थत्वादेवेत्यर्थः । तथाच व्यापारं प्रति फलस्य कर्मत्वात्तद्विशेषणादपि द्वितीयेति भावः । निरुक्तविरोधं परिहरति *निरुक्तेइति । *तस्या अपि–सत्तायाः अपि । *उपपादितमेवेति । कालगतपौर्वापर्यारोपादित्यादिना । व्यापारमात्रं धात्वर्थ इति नव्यतार्किकलक्षणं दूषयति *इतितु न युक्तमिति । *अन्यतमत्वमिति । सकर्मकान्धातूनुपादाय एतदन्यतमत्वमित्यर्थः ॥ ११ ॥

(क०टी०)प्राचामनुरोधेन सिद्धान्ते ऽसत् तावदाह *सकर्मकत्वं

चेति। केवलफलस्य व्यापारस्य वा वाच्यत्वे क्वचिदकर्मकलक्षणाव्याप्तिराह *यद्वेति। एव चाद्ये एव तात्पर्यं द्वितीय त्वर्थलब्धमिति भावः। *यथेति। तत्र समानाधिकरणम् उभय वाच्यमिति तत्र तद्यधिकरणत्वाभावप्रयुक्तस्तदभाव इत्यर्थ.। *अन्यथा-व्यापारस्य तत्रावाच्यत्वे फलस्यैव वाच्यत्वे। ऊर्ध्वदेशसयोगरूपोत्थानस्यैव तत्र धात्वर्थतया तत्रैव भूतत्वेन क्तो वाच्य इति तस्य विद्यमानत्वे तत्त्वाभावात् "गत्यर्थाकर्मक-" इति भूते कर्त्तरि क्तो न स्यात्तदाह *उत्थित इति। *मम तु-तत्रोभयवाचकत्वाङ्गीकर्त्तु। *तस्य-ऊर्ध्वदेशसयोगस्य। नन्वेव व्यापारस्यैव तत्र वाच्यत्वमस्तु न तस्यात आह *अतएवेति। तस्यापि वाच्यत्वादेवेत्यर्थ.। एवेन केवलव्यापारवाचकत्वमकर्मकत्व फलव्यापारोभयवाचकत्वमेव सकर्मकत्वमित्यपास्तम्। लक्षणान्तरकरणफलं प्रतिपादयन्नाह *क्वचिदिति। तदभावप्रयुक्त एव तदभाव इत्यर्थ.। अस्य लक्ष्यमाह *एवचेति। केवलेत्यनेन तस्या व्यापारत्वमेव न फलत्वम्, प्रागुक्तफलत्वस्य तत्र दुर्वचत्वादिति सूचितम्। एवेन प्रागुक्तयद्वेतिमतनिरासः। भाष्यादेस्त्वत्रापि सुयोजत्वेन तदविरोधान्निरुक्तविरोध परिहरति *निरुक्तइति। सत्तावत इति तद्भाष्योक्तो नार्थ इत्याह *द्रव्यस्येति। एतच्छास्त्रपरिभाषालब्धस्येत्यर्थः। *स्वरूपेति। एतेन भाष्यकैयटार्थो ऽपि सूचित.। *तस्या अपि-सत्ताया अपि। तस्यापीति पाठे सत्तादेरपीत्यर्थ.। *उपपादितमिति। यद्वा सत्कार्येत्यादिनेत्यर्थ.। अतएव सत्तायामिवेत्यादिनाऽपुनरुक्तिः प्राक्। एवं च फलावच्छिन्नव्यापारो धात्वर्थ इति प्रागुक्त प्रायिकमिति बोध्यम्।

साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्।
सकर्मक. स धातुः स्यात्पारपर्ये त्वकर्मक.॥ इति।—

भावार्थाधिकरणस्थभट्टोक्तिफलित जीवत्यादिवारक मीमांसकमत खण्डयति *यद्वात्विति। तदर्थस्येति शेष.। तदन्यत्वमकर्मकत्वामिति त्वर्थाल्लब्धम्। साच समार्थकेष्वपि धातुविशेषोपनिबन्धना यत्रास्ति स सकर्मक। एव च कृञो यतेरिव यत्नमात्रार्थकत्वेऽपि न दोष.। कर्मत्वा-

दिपदोपस्थाप्यस्य क्रियाकाङ्क्षत्वाभावे ऽपि द्वितीयोपस्थाप्यस्य तत्साकाङ्क्षत्ववत् कृञुपस्थाप्यस्य यत्नस्य कर्माकाङ्क्षोपपत्तेरिति तद्भाव. । अविवक्षितकर्मातिव्याप्तिनिरासाय वक्ष्यमाणविशेषणमप्यत्र बोध्यम् । एवमेकस्यैवार्थभेदेन सकर्मकत्वमकर्मकत्व चोपपन्नम्। यदर्थेऽविवक्षाभावविशिष्टकर्माकाङ्क्षा यस्य स तत्रार्थे सकर्मक इत्यनुगतस्यैव लक्षणत्वादिति तद्भाव । पचतीत्यादौ सत्त्वेऽपि अन्यत्र नेत्याह *गच्छत्यादीति । सर्वधातूना यत्किञ्चित् फलादिवाचकत्वेन तत्त्वापत्त्या स्वार्थफलेत्यादिवाच्यमित्यननुगमापत्त्याऽकर्मकभिन्नत्व तद्वाच्य तत्र प्रयोगानुरोधाज्ज्ञानात्यादिभेदो न निवेशनीय इति न तेषु व्यवहारभाक्त्वमिति नैयायिकमत खण्डयति *अकर्मकेति । तान् क्रोडीकृत्यैतदन्यतमत्वमकर्मकत्व तदन्यत्व सकर्मकत्वमिति वाच्यमित्यर्थ. । स्वस्मिन्स्वभेदासम्भवादाह *असम्भवेति । *सकर्मकेति । स्वरूपनिर्देशपरमिद न तु लक्षणान्तर्गतम् । तान् क्रोडीकृत्यैतदन्यतमत्व सकर्मकत्व तदन्यत्वमकर्मकत्वमिति वाच्यमित्यर्थ. । एतेनेत्यस्याद्ये ऽसम्भवेनेत्यर्थोऽन्त्ये ऽव्याप्तिदोषेणेत्यर्थ ॥ ११ ॥

वस्तुतस्त्वेनच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्, तदनन्वय्यर्थकत्वमकर्मकत्वम् । तेन 'अध्यासिता भूमय.' इत्यादिसिद्धिः । "अधिशीङ्स्थासाम्" इत्याधारस्य कर्मत्वम् ।

अन्वयश्च पृथग्बुद्धेन संसर्गरूपः । अन्वयपदस्य तत्रैव व्युत्पत्तेः । तेन जीवत्यादिषु न दोषः । तत्र प्राणादिरूपकर्मणो धात्वर्थात्पृथगबोधात् । स्पष्टं चेदं "सुप आत्मनः" इति सूत्रे भाष्ये । पूर्वसकर्मकलक्षणे त्वेतदर्थे फलाश्रयावाचकत्वे सतीति विशेषणदाने गौरवम् ।

अत्र सकर्मकलक्षण एव तात्पर्यम्,अकर्मकलक्षण त्वर्थलब्धम् ।

यत्तु पूर्वसकर्मकलक्षणे फले अविवक्षाविरहवि-शिष्टेतिविशेषणादविवक्षितकर्मसु नातिव्याप्तिः । नच तदर्थका भिन्ना एव धातव इति अविवक्षितकर्मसु फलवाचकत्वाभावादेव नातिव्याप्तिरिति वाच्य-म् । सकर्मकपदे धातूनामन्यपदार्थत्वेन क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यात् 'त एवैते' इति तत्त्वप्र-त्ययविषयाणामेकत्वेनाविवक्षितकर्मणां धातूनामक-र्मकव्यपदेशासम्भवात् । स्पष्टं चेदं "गतिबुद्धि-" इति सूत्रे कैयटे इति ।

तन्न । " "मातुः स्मर्यते" इत्यत्राविवक्षितकर्मतया भावे लः" इति "अधीगर्थ-" इतिसूत्रस्थभाष्यविरो-धापत्तेः । तत्र फलांशसत्त्वे एव सम्बन्धसामान्ये-नान्वयो न तु तदविवक्षा ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।

प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥इति-

अभियुक्तोक्ताकर्मकसंग्रहकारिकायाम् 'अविव-क्षात' इत्यस्य पृथगुपादानवैयर्थ्यापत्तेश्च । भवद्रीत्या फलस्य धात्वर्थत्वाविवक्षायां धातोरर्थान्तरे वृत्तेरेव सम्पत्तेः ।

किञ्च विशेषणदानेऽपि क्वचिदविवक्षाविरहविशिष्ट-फलवाचकत्वेन तत्त्वप्रत्यभिज्ञयाऽतिव्याप्तिर्दुर्निवारैव। यदि त्वर्थभेदाच्छब्दभेद इति स धातुर्भिन्न एवेत्यु-च्यते, तदोक्तरीत्या विशेषणदानं व्यर्थमेव ।

किञ्च 'कर्मणा सह' इत्येतदर्थकसकर्मकपदस्य नेदं प्रवृत्तिनिमित्तम् । ततः शब्दमर्यादया ऽलाभात् । ल-

**क्षणत्वेऽपि तेन रूपेण "लः कर्मणि" इत्यादौ सकर्मकपदाद्बोधानापत्तिः । शक्त्यग्रहात् । तथाबोधाननुभवेन तत्करणानुपयोगाच्च । तस्माच्छब्दमर्यादया लब्धं मदुक्तमेवोचितम् ॥ १२ ॥**

( कुं० टी० ) *एतदर्थमिति । जीवत्यादीनां सकर्मकत्वनिवृत्त्यर्थमित्यर्थः । *फलाश्रयावाचकत्वे सतीति । फलाश्रयविशेषस्यावाचकत्वे सतीत्यर्थः । तेन उत्तरदेशादिरूपफलाश्रयवाचकत्वे ऽपि गच्छत्यादेर्नाकर्मता । *अविवक्षाविरहेति । 'तण्डुलं पचति' इत्यत्र फलव्यधिकरणव्यापारवाचकत्वसत्त्वेऽपि 'नेह पच्यते' इत्यत्र फलस्याविवक्षितत्वात् न सकर्मकत्वमित्यर्थः । *तत्रफलाशेति । सम्बन्धसामान्येनान्वयादेव तत्राकर्मकत्वं न तु फलाशाविवक्षयेत्यर्थः । *व्यर्थमेवेति । व्यापारमात्रवाचकतया फलव्यधिकरणव्यापारवाचकत्वाभावादेव सकर्मकत्वाप्राप्तेः । ननु सकर्मकपदस्येदं लक्षणं न तु प्रवृत्तिनिमित्तकथनमत आह *लक्षणत्वेऽपीति । *शक्त्यग्रहादिति । सकर्मकपदाद् योगेन रूढ्या वा तस्यानुपस्थितेः । *तत्करणेति । तादृशलक्षणकरणेत्यर्थः ॥ १२ ॥

( क० टी० ) योगार्थानुरोधेन सिद्धान्तमाह *वस्तुतस्त्वित्यादि । प्रत्यासत्तेस्तन्त्रान्तररथनद्वारणायाह *एतदिति । पूर्वसकर्मकलक्षणे दोषं सूचयन्नाह *तेनेति । एतदङ्गीकारेणेत्यर्थ । 'मास आस्यते' इत्यस्य तत्रापि सिद्धेराह *अध्यासिता- इति । सकर्मकत्वेन कर्मणि भूते "निष्ठा" इति क्त । तेनासाद्धिं सूचयन्नाह *अत्रेति । नन्वेवं जीवत्यादिषु 'प्राणान्धारयति' इत्याद्यर्थेनातिव्याप्तिरायस्यात आह *अन्वयश्चेति । तथोपस्थितेन य. संसर्गस्तद्रूप इत्यर्थ. । आदिना नृत्यादि । प्रकृताशयेनाह *धात्वर्थादिति । *स्पष्टचेदमिति । तत्र हि-इच्छाक्यजन्ताद्

भावकर्त्रधिकरणादौ प्रत्ययेऽपि न कर्मणि, यत. "अभिहित तत्कर्मान्तर्भूत धात्वर्थ. सम्पन्न. । नचेदानीमन्यत्कर्मास्ति येन सकर्मक स्याद्" इत्युक्तम् । जीवत्यादिवादिच्छाक्यजन्तरयाकर्मकत्वात्स । तत्र पूर्वसकर्मकलक्षणे त्वयमपि दोप । प्राणधारणगात्रविक्षेपादिफलस्य तत्र सत्त्वात्तस्य व्यापारव्यधिकरणत्वाच्चेति सूचयन् भूषणोक्तवारणप्रकारे दोपमाह *पूर्वेति । *एतदर्थम-अत्रातिप्रसङ्गवारणार्थम् । *फलम्-प्राणधारणादि । *तदाश्रय.-प्राणादि । प्रागुक्तलाघवमत्रापि, इति न तदभावप्रयुक्तगौरवमित्याह *अत्रेति । अत्रापीत्यर्थ । भूषणादिसिद्धान्तान्तर खण्डयति *यत्त्विति । यदपीत्यर्थ । प्रसङ्गात्कैयटमपि दूषयितु तन्मतमुपपादयति *नचेति । अर्थभेदाच्छब्दभेद इति भाव.। *दर्शनेन-तत्त्वे सतीति शेप । प्रत्ययो ज्ञानम् । *स्पष्ट चेदमिति । तत्र हि-"अकर्मकग्रहणे कालादिकर्मकाणामुपसङ्ख्यानम्" इति वार्तिकखण्डकाधिकसग्राहक-"सिद्धं तु कालकर्मकाणामकर्मकवद्" इत्यतिदेशखण्डक-"अकर्मकाणामित्युच्यते । न च केचिदपि कालभावाध्वभिरकर्मकाः । त एव विज्ञास्याम. क्वचित्ते ऽकर्मका इति" इतिभाष्ये अविवक्षितकर्मतया तत्त्वमाशङ्क्य, सर्वथा कर्मशून्यानामेवेह शास्त्रे तेन ग्रहण न त्वविवक्षितकर्मणामपि अन्यथा पचादेस्तदविवक्षायां भावे लाद्यापत्तिरिति समाधाय, 'अकर्मकशब्दस्य च धातवोऽन्यपदार्थत्वेनाश्रीयन्ते न त्वर्था. । अर्थाश्रयणे हि कर्माविवक्षायामर्थस्याकर्मकव्यपदेश. स्यात् । धातुषु त्वाश्रीयमाणेपु क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यात् 'त एवैते' इति तत्त्वप्रत्ययाविषया नाकर्मकत्वेन व्यपदिश्यन्ते । अर्थास्तु कारकादिभेदाद्भिन्ना एवेत्यन्ये सकर्मका अन्ये एवाकर्मका इति स्याद्व्यपदेश । यदा तु 'अर्थस्यापि स्वतो नास्ति भेद' इतिदर्शन तदाऽर्थेष्वन्यपदार्थेष्वदोष इति' तदुपपादित तेन । *मातुरिति । तत्रहि-"कर्मादिष्वकर्मकवद्" इति वार्त्तिकखण्डनायेत्थम् उक्तम् । तमुपपादयति *तत्रहीति । यत इत्यर्थ. । दोषान्तरमाह तत्र *धातोरिति ! कर्मणइत्यस्य पूर्वैस्त्रिभि' सबन्धः । अनार्षत्वायाह *अभियुक्तेति । अकर्मकेतिबहुव्रीहि. । पृथक्त्वमाद्यापेक्षयेत्याह *भवद्रीत्येति । कैयटरीत्यैव । तत्र दोषान्तरमाह *किञ्चविशेषणेति । नचेतिशंकोक्तरीत्या । तद्दातुराशयमाह *यदित्विति । *उक्तेति । शङ्कोक्तरी-

त्येत्यर्थः । तेषु फलवाचकत्वाभावादेवेति यावत् । कैयटोक्तरीतिस्तु चिन्त्यैव । "ल कर्मणि" इत्यादावेव दुर्वचत्वात् । कृतपूर्वीत्यादौ क्तस्याविवक्षितकर्मतया भावे साधनस्य "कर्तृकर्मणोः" इति भाष्यादौ स्पष्टत्वात् । अकर्मकत्यादि तदुपपादनमप्ययुक्तम्, कर्मसञ्ज्ञाया अर्थसञ्ज्ञात्वेनार्थानामेवान्यपदार्थत्वस्यौचित्यात् । अर्थस्यापि स्वतो नास्ति भेद इति मतमप्ययुक्तम्, धातूनां नानार्थत्वोच्छेदापत्तेः । भाष्याशयस्त्वनुपदमेव स्फुटीभविष्यतीति बोध्यम् । अथ पूर्वसकर्मकलक्षणसाधारणमत्र दोषान्तरमाह *किञ्चेति । *अलाभात्—तेन रूपेण ततोऽप्रतीतेः । ननु गो सास्नादिमत्त्ववदिदं तल्लक्षणमत आह *लक्षणत्वेऽपीति । अनुभवोऽपि तथा नेत्याह *तथेति । *तत्करणेति । लक्षणकरणेत्यर्थः । सिद्धान्तमुपसहरति । *तस्मादिति । योगशक्त्यैव तादृशार्थलाभ इति भावः ॥ १२ ॥

**कारिकायामविवक्षा नाम येन रूपेणान्वयविवक्षया यस्य कर्म्मसंज्ञा तेन रूपेणान्वयविवक्षाऽभावः । स च क्वचिद्विशेष्याभावकृतः, यथा—नेह पच्यत इत्यादौ । क्वचिद्विशेषणाभावकृतः, यथा—मातुः स्मर्यते इत्यादौ । कार्योत्पत्तिवेलायामविवक्षा पश्चाद्विवक्षेत्यपि क्वचित्, यथा—कृतपूर्वी कटमित्यादौ । कृतपूर्वीत्यादिवृत्तिविषय एवेदम्, नान्यत्र । धातोरर्थान्तरे वृत्त्या, यथा—'नदी स्यन्दते' इत्यर्थके नदी वहतीत्यादौ । प्रसिद्धेरित्यस्य प्रसिद्ध्या झटित्यध्याहारेण तल्लाभात् तत्प्रयोगाभाव इत्यर्थः । न तत्राकर्म्मकत्वप्रयुक्तं कार्य्यम्, भाष्ये ऽनुक्तत्वात् । शास्त्रे ऽकर्म्मकपदस्थकर्म्मपदेन कालभावाध्वदेशाभिन्नानामेव ग्रहणम् । "गतिबुद्धि—" इति सूत्रे सजातीयापेक्षसकर्म्मकविषयनियमेन सिद्धे ऽकर्म्मकग्रहणसामर्थ्यादिति "गतिबुद्धि—काला-**

ध्वनोः” इति सूत्रे भाष्ये स्पष्टम् । तेन ‘मासमास्यते’ इति भावे लादिसिद्धिः ॥ १३ ॥

( कुं० टी० ) *विशेष्याभावकृतः–कर्म्माभावकृतः । *नेहपच्यतइति । अत्र तण्डुलादेरविवक्षया ऽकर्म्मकत्वम् । *विशेषणाभावेति । येन रूपेणान्वयेत्यादीत्यर्थः । *कृतपूर्वीति । अत्र कर्म्मणो ऽविवक्षया भावे क्ते पश्चात्कर्म्मयोगः । *सजातीयेति । ‘एषामेव धातूनामणौ कर्ता’इत्यत्र सजातीयत्वात्सकर्म्मकाणामेव नियमः स्यादित्यर्थः ॥ १३ ॥

(क० टी०) ननु सिद्धान्ते कथ कारिकास्थतदविवक्षासङ्गतिरत आह *कारिकायामिति । *विशेष्येति । अन्वयेत्यर्थ । तदन्वययोग्यधात्वर्थत्यागादिति भावः । ‘नेह पच्यते’ इत्यादावित्यादिना भुज्यते इत्यादि । *विशेषणेति । तद्रूपेत्यर्थः । सत्येव तस्मिन्नर्थे कर्मत्वेनान्वयाविवक्षायां सम्बन्धित्वेनान्वयस्य विवक्षणादिति भावः । मातुः स्मर्यते इत्यादावित्यादिना पितु स्मर्यते इत्यादि । तत्रापि विशेषमाह *कार्येति । कटमित्यादावित्यादिना ऽनुभूतपूर्वीत्यादि । अनतिप्रसङ्गायाह *कृतेति । अनभिधानात् । स्पष्टंचेद “कर्त्तृकर्मणो.” इति सूत्रे भाष्ये । एतेन गङ्गाधरादौ तथा स्वीकुर्वन्त परास्ता । प्रसङ्गात्तदुदाहरणमनुक्तमाह *धातोरिति । ‘यक्षानुरूप’–इतिन्यायेन प्राचां मतेनाह *अध्याहारेणेति । तत्त्व तु प्रागुक्तं बोध्यम् । प्राचोक्त खण्डयति *प्रसिद्धेरिति । प्रसिद्धातिरिक्तवृत्तित्वमपि फले विशेषणं देयमिति, अय फलितोर्थ. । शाब्दस्तु कर्मण प्रसिद्ध्या तथा लाभात्क्रियाऽकर्मिका तत्पदप्रयोगरहितवाक्यप्रतिपाद्येत्यनेनैव सूचित' । यथाश्रुतार्थत्यागे बीजमाह *नन्विति । *भाष्ये इति । तथोपस्थितस्य तस्यान्वयस्वीकारेण तावन्मात्रेणाकर्मकत्वस्य भाष्ये ऽनुक्तत्वादित्यर्थ । अतएव “नदी वहतीत्यकर्मकः” इति भाष्य “नदी स्यन्दते” इत्यर्थकतया कैयटेन व्याख्यातम् । एतत्सूचनार्थमेवेदमेव तदुदाहरणं दत्तम् । नन्वेव ‘मासमास्यत इत्यादि’ इति कथमातिदेशखण्डनं

तत्र भाष्ये, अत आह *शास्त्रे इति । ज्ञापके सामान्यापेक्षमिति भाव । *सामर्थ्यादिति । अयमाव –किम् अकर्मकपदे कर्मपदस्य कर्मसञ्ज्ञाप्रयोजके लक्षणया न विद्यते कर्मसञ्ज्ञाप्रयोजकोऽर्थो येषां धातूनामित्यर्थ, उत लक्षणया कर्मरहितार्थप्रतिपादकानामित्यर्थ ?। तत्राद्य खण्डितम्–नत्रकोचिदिति । तथाच कर्मसञ्ज्ञाप्रयोजकार्थरहितानामित्यर्थे सर्वेषां तदर्थसम्भवेनाकर्मकाणामित्यस्योदाहरणासम्भव इत्यर्थ । अन्त्येऽविवक्षितकर्मतयोदाहरणसम्भवो वाच्य । नच कालस्य क्रियामात्रेणाकाङ्क्षितया तदाविवक्षाऽसम्भव । आख्यातार्थकालेनैव तदाकाङ्क्षाशान्त्या बाह्यकालकर्मणोऽविवक्षासम्भवात् । एवञ्च सति गत्यादिसूत्रे तुल्यजातीयापेक्षतया नियमस्य सकर्मकविषयता ऽकर्मकविपये “कर्तुरीप्सिततमम्” इत्यनेन तदुपपत्तौ अकर्मकग्रहण व्यर्थम्, तत्सामर्थ्यं हृदि निधायोक्त “त एवम्”इत्यादि। “क्वचिद् इत्यस्य कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थ । तत्सामर्थ्यात्तदवस्थायां कर्मरहिता गृह्यन्त इति तत्त्वम् । *इतीति—इत्यादौ ॥ १२ ॥

पचेर्विक्लित्त्यनुकूलव्यापारोऽर्थः । सचानेकविध इत्युक्तम् ।

नश्यतेरदर्शनानुकूलव्यापारो ऽर्थः । सच ध्वंससामग्रीरूपो व्यवधानाद्यनुकूलव्यापाररूपश्च । “उत्पातिते काके नष्ट तद् गृहं भवति”इति निष्ठासंज्ञासूत्रे भाष्यप्रयोगात् । ‘हृतं नष्ट च लभ्यते’ इति स्मार्तप्रयोगाच । तत्र व्यापारे कालान्वयः ।

एतेन नाशस्य नित्यत्वात्सर्वदा नश्यतीत्यापत्तिरित्यपास्तम् ।

ध्वंसश्च तिरोभावावस्था । कारणे शक्तिरूपेणावस्थानं च प्रागभावः । ततः प्रच्युता अभिव्यक्तिलक्षणं धर्ममप्राप्ता व्यक्तिः ‘जायते’इत्युच्यते । तिरोभा-

वावस्थैव लब्धक्रमा नश्यतीत्यनेनोच्यत इत्यन्ये ।

जानातेर्विषयतया ज्ञानं फलम् । आत्ममनस्संयोगो व्यापारः । अत एव 'मनो जानाति' इत्युपपद्यते । आत्मा चान्तःकरणं मनो ऽपि तद्वृत्तिविशेषरूपम् । तत्रोभयोरपि सावयवत्वादवच्छेदकांशसम्भवेन संयोग उपपद्यते ।

मनो निरवयवमात्माऽपि ज्ञानाश्रयो निरवयव इतिनये ऽवच्छेदकांशासम्भवेन संयोगानुपपत्तेः । तदभ्युपगमे ऽपि—

उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति—

न्यायेन ज्ञानाश्रयत्वस्य संयोगस्य चात्मनाश एव पर्यवसानात् तन्नित्यत्वमनुपपन्नम् ।

एवमाकाशस्यापि सावयवत्वम् ।

तदुक्तं खण्डनकृता—

संयोगो ऽव्याप्यवृत्तित्वादेकदेशे ऽस्ति संमतः ।
तदेकदेशदेशस्य प्रश्ने संयोग एव कः ॥

तस्मात्—

अणौ निरंशे नितरां कल्पिते कल्पितं जगद् इति ।

निरंशे ऽप्यणौ संयोगकल्पनायां सर्वथा जगतः कल्पितत्वमेवेति तद्भावः ।

कणादः पारिमाण्डल्यसंयोगाद् द्व्यणुकक्रमात् ।
जगदुत्प्रेक्षयन् मायावादसादरमानसः ॥ इति

प्रघट्टकान्तरे तदुक्तः ॥ १४ ॥

( कुं० टी० ) *सचानेकविधइति । स्थालीस्थस्य व्यापारस्यापि पच्यर्थत्वात् । अदर्शनमज्ञानम् । तदुदाहरति *नष्टन्तद्-

गृहमिति । *हृतं नष्टमिति व्यवधानस्य । *ध्वंसस्य नित्यत्वादिति । ध्वसपरम्पराकल्पने गौरवमिति भावः । एतेन 'नाशं प्रति जन्यभावत्वेन कारणत्वे गौरवाज्जन्यस्यैव कारणता इति ध्वंसो ऽप्यानित्य' इत्यपास्तम् ।

यत्तु ध्वंसस्यानित्यत्वे घटो नष्ट इत्यप्रसङ्ग इति ।

तन्न। द्वितीयादिध्वंसप्रतियोगित्वस्य लाघवेन घट एव स्वीकारात् । ननु जन्मनाशयोरवस्तुत्वात् कथं तयोः सत्तात्मकत्वमित्याशङ्क्य नाशस्य तावत्सत्तावत् सत्तात्मकत्वमुपपादयति *ध्वंसश्चेति । तदुक्तं हरिणा—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता । इति ।

अयं भावः—नित्या ब्रह्मात्मिका सत्ता न निरन्वयनाशसहेति अभावो नाम न भावाद् व्यतिरिक्तः, किन्तु सत्तैव तिरोभूय स्वकारणेषु शक्तिरूपतया स्थिता वस्तूनां नाशः । सैव च तिरोभावावस्था साधनसम्पर्कात् क्रमवत्त्वेन प्रतीयमाना नश्यतीत्याख्यातेन प्रत्याय्यते इति ।

*ततः प्रच्युतेति । कारणनिष्ठशक्तिरूपेणावस्थानात् प्रच्युता अभिव्यक्तिहेतुकं धर्ममप्राप्ता घटादिव्यक्तिर्जायते इत्युच्यते । तदानीं घटत्वेन ग्रहाभावादप्राप्तत्वम् । जाते तु घटे 'घटो जातः' इति व्यवह्रियते । अथवा अभिव्यक्तिरूपमवस्थाऽन्तरमप्राप्तेत्यर्थः । तदुक्तं हरिणा—

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
यदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ इति ।

अस्यार्थः—कारणे शक्तिरूपेणावस्थितात्पूर्वधर्मात् प्रच्युता कार्यनिष्ठधर्मान्तराभिव्यक्त्युन्मुखादुत्तरावस्थामप्राप्ता जायत

इत्युच्यते इति । एवञ्च पूर्वापरावस्थान्तरालवर्त्तिक्षणक्रमविवक्षायां जनिक्रियाव्यवहारः ।

अत एवोक्तं तत्रैव—

पूर्वावस्थामपजहत्संस्पृशद्धर्ममुत्तरम् ।

संमूर्छित इवार्थात्मा जायमानोऽभिधीयते ॥ इति ।

अस्यार्थः—न सर्वथा पूर्वां कारणावस्थां त्यजत्, अनेन प्रकृतेरपि कर्तृत्वं दर्शितम् । नापि सर्वथोदासीनम्, अपि तु उत्तरावस्थाविशेषं स्पृशत् आस्वदयत्, अनेन विकृतेः कर्त्तृत्वं दर्शितम् । एवं च पूर्वापरावस्थोपाध्यवच्छिन्न एकः संमूर्छित इव उभयरूप इवाध्यवसीयमानो जायत इत्युच्यत इति ।

*लब्धक्रमेति । साध्यरूपता ऽनेन दर्शिता । तेन नष्टे नश्यतीति न प्रयोगः । *मनो जानातीति । साङ्ख्यरीत्या ज्ञानस्य मनोधर्मत्वात् । *मनोऽपीति । संशयजनकतायामन्तःकरणमेव मनःसंज्ञां लभते । *सावयवत्वेनेति । अन्तःकरणं सावयवं सादिद्रव्यत्वात् पटवदित्यनुमानात् । अवच्छेदकांशः,एकदेशः । *मनो निरवयवमिति । तार्किकमते परमाणुरूपत्वात् । *अवच्छेदकाशासम्भवेति । अवयवसम्बन्धे एव संयोगव्यवहारात् । *तदभ्युपगमेऽपीति । संयोगाभ्युपगमे ऽपीत्यर्थः । *उपयन्—आगच्छन् । *अपयन्—निवर्त्तमानः । *आत्मनाश एवेति । संयोगरूपधर्मस्योत्पत्तिविनाशाभ्यामात्मनो ऽपि विकारापत्तावनित्यत्व स्यादित्यर्थः । *तदेकदेशेति । आकाशादावेकदेशस्य प्रश्ने तु संयोग एव न सिद्ध्येदित्यर्थः । *अणौनिरंशे इति । निरवयवाभ्यामपि परमाणुभ्यां संयोगे द्व्यणुकादीनामधिकपरिमाणत्वानापत्तिरिति भावः । *पारिमाण्डल्यसंयोगादिति । परमाणुद्वयसंयोगाद् द्व्य-

णुकं त्रिभिर्द्व्यणुकैस्त्र्यणुकमिति क्रमेण जगदुत्पत्तिस्वीकारात्। भर्तृहरिस्त्वाह—

परमाणोरभागस्य दिशा भागः प्रकल्प्यते। इति।

निरंशानामपि परमाणूना दिगूनिमित्त एव पार्श्वचतुष्टय-भाग इति द्व्यणुकादिसिद्धिः। तथा तेनैवोक्तम्—

अदेशाश्चाप्यभागाश्च निष्क्रमा निरुपाधयः।
भावाः संसर्गरूपा तु शक्तिर्भेदाय कल्पते॥ इति।

येषामाकाशादीनां देशो नास्ति, नापि अवयवादिस्तेषां संसर्गनिमित्तक एव शक्तिभेदः। पूर्वाकाशसंयुक्तो घट इत्यादि-व्यवहारादिरर्थ इति॥ १४॥

(क० टी०) एवं सामान्यतो धात्वर्थं निरूप्य परमतनिरासाय केषांचिद्विशिष्यार्थान्निरूपयति *पचेरित्यादिना। पुन कथन-फल सूचयन्नाह *सचानेकेति। एतेन तेज सयोगानुकूलव्या पारमात्र पच्यर्थ इति निरस्तम्। अग्निसयोगानुकूलकृत्यभाववति भक्तविक्लित्यनुकूलप्रस्रवणकर्त्तरि 'पचति' इति प्रयोगानापत्ते। *ध्वससामग्रीति। प्रतियोगित्वघटितनत्समवधानेत्यर्थ.। ध्वसानु कूलेत्येव वाच्ये ऽदर्शनत्युक्तिफलमाह *व्यवेति। तत्राद्ये प्र-सिद्धत्वात् द्वितीये मानमाह *उत्पतिते इति। *नष्टम्–बुद्ध्यनारूढ-म्। *हृतमित्यस्य—

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान्।

तस्य सस्मरणादेवेत्यादि.। एतेन लक्षणा तत्रेत्यपास्तम्। अनुप पत्तिप्रतिसन्धान विनाऽपि तनो बोधात्। *तत्र–तयोर्मध्ये। *एते-न–तत्र कालान्वयेन। *नाशस्य–ध्वसजन्यादर्शनस्य। *नित्यत्वा-त्–तस्य जन्यत्वे ऽप्यविनाशित्वात्। ध्वसानुकूलव्यापार एव सर्वत्र धात्वर्थ इति न शक्तिद्वयकल्पनेति लाघवात्सत्कार्यवादेन सि-द्धान्तमाह *ध्वसश्चेत्यादि–'अन्येऽप्यन्तेन। *शक्ति'–सूक्ष्मावस्था। नन्वेव प्रागुक्तनिरुक्तादिविरोध., वस्तुत उत्पत्तिध्वसयोरभा-

वादत आह *तत इति । तद्रूपप्रागभावत इत्यर्थः । द्वितीयादिनिरासायाह *अभिव्यक्तीति । क्रियात्वायाह *लब्धेति । *अतएव-तस्य तत्त्वेन तद्वृत्तित्वादेव। सयोगोपपत्तये सिद्धान्तमाह *आत्माचेति । *तत्र-तथा सति । नैयायिकमते दोषमाह *मन इति । *ज्ञानाश्रय - चेतनो जीवः । *सयोगानुपपत्तेरिति । 'मनो जानाति' इत्यनुपपत्तिः स्पष्टैवेति शेषः । ज्ञानाश्रय इत्यनेन ज्ञानाश्रयेणापि न तदुपपत्तिरिति सूचितम् । तद् ध्वनयन्नाह *तदभ्युपेति । युगपदनेकज्ञानानुत्पत्त्या मनसोऽणुरूपत्वम्, न विभुत्वम्, एव च विभुद्वयसयोगानङ्गीकारेऽपि तदङ्गीकारे न बाधकम्, तस्याव्याप्यवृत्तित्व तु बाह्यपदार्थसयोगविषयमिति तदाकूतम् । *उपयन्निति । उत्पत्तिविनाशशालीत्यर्थः । *विकरोति-तन्नाशं बोधयति । मनसस्तत्त्वस्येष्टत्वादाह *आत्मेति । तथाच स्वसिद्धान्तस्यैव भङ्ग इति भाव । आकाशङ्गच्छतीत्यादिप्रयोगाय प्रसङ्गादाह *एवमिति । अन्त करणमनसोरिवेत्यर्थः । सर्वत्र समातिमाह *तदुक्तमिति । श्रीहर्षेणेत्यर्थः । *अव्याप्येति । अवच्छेदकभेदेन स्वाभावसमानाधिकरणत्वादित्यर्थः । *समत इत्यनेन तस्य निर्विवादत्वं सूचितम् । *तदेकेति यदेकदेशे ऽस्ति तदेकदेशरूपसयोगीयदेशविषयकप्रश्ने इत्यर्थ एव पूर्वपक्षे ।प्रागुक्तस्थले ऽग्रिमा सिद्धान्तोक्तिरिति सूचयन् चूर्णिकामाह *तस्मादिति । कथमिद प्रकृतसाधकम् अत आह *निरंशेऽपीति । नितरामित्यस्याग्रेऽन्वय इत्याह *सर्वथेति । एवेन परसमतनित्यत्वनिरासः । ननु निरंशेऽप्यणौ कल्पित इति यथाश्रुतप्रतीयमानार्थमपहाय किमर्थं सयोगाति शेषपूरणेन व्याख्यातम्, तथाच नेष्टासिद्धिरतआह *कणाद इति । पारिमाण्डल्यम् ,परमाणु.। एव च सर्वेषां सावयवत्वेन प्रागुक्तासिद्धि । एतेन तत्तद्दिगवच्छिन्नपरमाणुद्वयसयोगात्सृष्टिरिति नैयायिकोक्तमपास्तम् । उक्तयुक्तेः। आद्यसृष्टौ दिशोऽप्यभावाच्चेति दिक् ॥ १४ ॥

**यत्तु-आवरणभङ्गो विषयता वा फलम् । विषयताया यथा फलत्वं तथा कारके निरूपयिष्यामः । व्यापारस्तु ज्ञानमेवेति ।**

तन्न । कर्मस्थाक्रियकत्वापत्तेः । तद्व्यवस्था चेत्थमुक्ता हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

अस्यार्थः—यत्र कर्मणि कर्त्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते तत्र क्रिया व्यवस्थितेति । उच्यते इति शेषः ।

नन्वेवं पच्यादिकर्त्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम् । किञ्च चिन्तयति–पश्यतीत्यादीनां कर्त्तृस्थभावकत्वानुपपत्तिः । कर्त्तरि क्रियाकृतविशेषाभावादतो ऽन्येषामिति । मते इति शेषः । यत्र कर्त्तृकर्मसाधारणधर्मरूपं फलं शब्देन प्रतिपाद्यते स कर्त्तृस्थभावकः । यथा–पश्यति घटम्, ग्रामं गच्छति, हसति इत्यादौ । तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठं संयोगश्चोभयनिष्ठः । एवं हासोऽपि । नच विषयताऽऽवरणभङ्गावेवम् । यत्र तु कर्त्रवृत्तिधर्मरूपं फलं स कर्मस्थभावकः, यथा–भिनत्तीत्यादौ । नहि छिधाभवनादि कथमपि कर्त्तृनिष्ठं प्रतियन्तीति हेलाराजः ।

अत एव "कर्मवद्" इतिसूत्रे भाष्ये उक्तम्–"नच कर्तृस्थभावकानां कर्मणि क्रियायाः प्रवृत्तिरस्ति" इति । तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः । कारिकापूर्वार्धोक्तार्थपरत्वे ज्ञानादिकर्त्तर्यपि क्रियाकृतविशेषानुपलम्भेन "चिन्तयति, गच्छति" इत्याद्युपक्रम्य " कर्त्तृस्थभावकानाम्" इत्युक्त्यसङ्गतेः ॥ १५ ॥

(कुं० टी०) *कर्मस्थक्रियकत्वापत्तेरिति । विषयतादिरूपफलस्य कर्तृकर्मसाधारणत्वाभावादिति भावः । *यत्रेति । कर्मणि कर्त्तरि वेत्यर्थः । *क्रियातत्रेति । यत्र कर्मणि क्रियाकृतो विशेषस्तत्र कर्मस्थक्रियत्वम्, यत्र कर्मकर्त्तरि[1] तत्र कर्तृस्थक्रियत्वमित्यर्थः । *तत्र व्यवस्थिता—तन्निष्ठा । *क्रियाऽव्यवस्थात्विति । अन्येषां मते क्रियाऽव्यवस्था शब्दैरेव प्रकाश्यते ।

अयं भावः—ये ऽपि कर्मस्थभावकाः पच्यादयः तत्रापि श्रमादिको विशेषः कर्त्तर्यपि दृश्यते । तथाच विशेषदर्शनं यत्रेति लक्षणेन नास्ति निर्वाहः । तस्माद्यत्र शब्दैरेव विशेषः तत्रैव क्रिया स्थिता । तद्यथा—घटं पश्यतीत्यादौ शब्दो दृशिक्रियाविषयं किञ्चिद्विशेषविशिष्टं न अभिधत्ते इति तद्वशेन कर्तृस्थभावकत्वाद् 'दृश्यते स्वयमेव' इति न भवतीति । काष्ठं भिनत्तीत्यादौ तु भिदिक्रियाविषयं सविशेषमभिधत्ते इति तद्वशेन कर्मस्थभावकत्वाद् 'भिद्यते काष्ठं स्वयमेव' इति भवति ।

ग्रन्थकारस्तु कर्ममात्रनिष्ठफलकत्वं कर्मस्थक्रियत्वमित्यर्थं वक्ष्यति । यत्रेत्यस्य विवरणम् *कर्मणि कर्त्तरिवेति । तत्रेत्यादेस्तन्निष्ठेत्यर्थः । *विषयताऽऽवरणभङ्गावेवमिति । कर्तृकर्मसाधरणत्वाभावाद्विषयताऽऽवरणभङ्गयोः फलयोः कर्मस्थक्रियत्वापत्तिरित्यर्थः । *कारिकापूर्वार्द्धेति । 'विशेषदर्शनं यत्र' इतिलक्षणस्याश्रयणे इत्यर्थः ॥ १५ ॥

( क० टी० ) भूषणात्युक्तिं खण्डयति । *नन्वावरणभङ्गस्योक्तफललक्षणाक्रान्तत्वेन तत्त्वेऽपि कथं विषयतायास्तत्त्व तदभावादत आह *विषयतायाश्चेति । व्यवस्थाचेति चो ह्यर्थे । *अस्यार्थ

---

१ कर्मणः क्रियाया• कर्ता तस्मिन् ।

इत्यस्य व्यवस्थितेतिघटकेतावन्वयः । यत्रेत्युभयार्थकमित्याह *कर्मणीति । असिद्धान्तत्वादाह *इत्युच्यत इतीति । अत आह उत्तरार्द्धे तुरुकवैलक्षण्येन सिद्धान्तत्वद्योतकः । शब्दैरेवेत्येवेन दर्शनव्यवच्छेदः । अत एवाह *मते इतीति । *यत्र-आख्याते । *स.-तद्घटको धातु' । एवमग्रेऽपि । *तत्र-तेषां मध्ये । *एवमिति । सम्बन्धभेदेनोभयनिष्ठ इत्यर्थ. ।*न च-नहि । *एवम्-उभयनिष्ठौ । *कथमपि-तदवच्छेदकसम्बन्धेन । नयन्तीति पाठः । अत्र भाष्यसमतिमाह *अतएवेति । द्वितीयार्धोक्तमतस्य सिद्धान्तत्वादेवेत्यर्थः । *तेषाम्-कर्तृस्थभावकानाम् । अन्यपदार्थो धातुरित्याह *धातूनामिति । वाच्यवाचकभावः षष्ठ्यर्थ इत्याह *वाच्यायाइति । क्रियायाः परिनिष्पत्तिरितिवत्तत्प्रयोग इत्याह *फलरूपेति । तस्यापि तत्त्व प्रागुपपादितम् । उक्तरीत्या तत्रापि सत्त्वाद्यथाश्रुतासङ्गतेः सर्व वाक्यमिति न्यायेनाह *कर्ममात्रे इति । कर्मण्येवेत्यर्थ. । ननु यथाश्रुतभाष्यस्य साधारणत्वेन पूर्वार्द्धोक्तार्थपरतैव कुतो न, अत आह *कारिकेति । ज्ञानादीत्यादिना भिदादिकर्तृसमुच्चय । तस्मात्सोऽसिद्धान्त एवेति, तथाभूषणाद्युक्तमयुक्तमेवेति बोध्यम् ॥१५॥

एवमिच्छतेरिच्छानुकूलं ज्ञानमर्थः । अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वम् । 'आत्मानं जानाति' इत्यादौ अन्तःकरणावच्छिन्नः कर्त्ता, शरीरावच्छिन्नं कर्मेति कर्मवत्—सूत्रे भाष्ये स्पष्टम् । ब्रह्म जानाति, सविता प्रकाशते, इत्यादौ विषयोपहितज्ञानस्य तदुपहितप्रकाशस्य च जन्यत्वात्कर्तृत्वं ब्रह्मसवित्रोः ।

पतिर्गमिवत् सकर्मकः । नरकं पतित इत्यादिप्रयोगात् । विभागजन्यसंयोगमात्रपरत्वेऽकर्मकत्वं वाच्यम् । कृञ उत्पत्तिव्यधिकरणस्तदनुकूलव्यापारोऽर्थः । यत्नमात्रार्थकत्वे ऽकर्मकत्वापत्तिः यतिवत् ।

किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्त्तरि कर्मवद्भावानापत्त्या यगाद्यनापत्तिः । कृतिरित्यादौ धातूनामनेकार्थत्वाद्यत्नमात्रे ऽपि वृत्तिः ।

यद्वा कृतियत्नशब्दयोरपि व्यापारसामान्यवाचितैव । अतएव "स्थालीस्थे यत्ने कथ्यमाने" इति "कारके" इति सूत्रे भाष्ये प्रयुक्तमित्यलम् ॥ १६ ॥

( कुं० टी० ) ननु नित्यज्ञानरूपस्य ब्रह्मणो ज्ञानकर्तृत्वं कथमत आह *ब्रह्मजानातीति। ननु विततौष्ण्यप्रकाशस्यैव सवितृपदार्थत्वात्तत्र कथं फलत्वम्,अत आह * तदुपहितेति। विषयोपहितेत्यर्थः। 'भूमौ पतति' इत्यादौ भूमेः कर्मत्ववारणायाश्रयानवच्छिन्नत्वं फले विशेषणमिति तार्किकमतं दूषयति *पतिरिति। कथं तर्हि पातयामास भूतले इत्यादिप्रयोग इत्यत आह *विभागजन्येति ॥ १६ ॥

( क० टी० ) *एवमिति । जानातिवदित्यर्थः । नन्वतीतादौ तदाश्रयत्वस्य दुर्वचत्वेन कथ तत्त्वमत आह *अतीतेति । एवमेव घट करोतीत्यादावपि बोध्यम्।सत्कार्यवादे तु न काचिद्दोषाशङ्कैव। नन्वेवमप्यात्मन एव कथ तत्र तत्त्वमत आह *आत्मानमिति । *कर्मेतीति । तथाच कल्पितात्मभेदेन फलव्यापारयोर्भिन्ननिष्ठत्वाक्षत्या सकर्मकत्वादिति भावः। *कर्मवदिति । "द्वावात्मानौ शरीरात्माऽन्तरात्मा च । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति, अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति"इति हि तत्रोक्तम् । एतेन "आत्मानमात्मना हन्ति सृजत्यात्मानमात्मना"इत्यपि व्याख्यातम्। ननु विषयतासम्बन्धावच्छिन्नज्ञानरूपफलानुकूलात्ममन सयोगरूपव्यापारस्योक्तेषु सम्भवेन तदुपपत्तावपि ब्रह्म जानातीत्यादौ स्वस्वरूपातिरिक्तज्ञानाभावात्तस्य चाजन्यत्वादात्ममनःसयोगस्य चाभावात्कथ तत्त्वमत आह *ब्रह्मे-

ति । स्पष्ट चेदम् "ईक्षतेर्नाशब्दम्" इतिसूत्रे भाष्यभामत्योः । एवमेव "स ऐक्षत" इत्यादेरुपपत्तिः । तत्र प्रथमनो ऽव्याकृतनामरूपेक्षणम्, तत सामान्येन तद्याचिकीर्षा, ततो विशेषाकारेण सा, ततस्तदभिव्यक्तिरिति सिद्धान्त इति बोध्यम् । उत्तरदेशसयोगरूपफलभेदेन धात्वर्थभेदे ऽपि तद्यधिकरणत्वस्य तत्र तुल्यत्वेन सकर्मकत्व तुल्यमित्याह *सकमक इति । "द्वितीयाश्रित" इतिसूत्रोदाहरणमाह *नरकामिति । वृक्षात्पर्णं पततीत्याद्यर्थमाह *विभागजन्यसयोगमात्रेति । मात्रपदेन तदनुकूलव्यापारव्यवच्छेद । तस्य तत्रोक्त फलत्वाभावेऽप्युक्तरीत्या क्रियात्वान्नानुपपत्ति । एतेन व्यापारमात्रपरत्वेनाकर्मकत्वमित्यपास्तम् । जनिवन्नोत्पत्तिसमानाधिकरण व्यापारार्थकत्वमिति सूचयन्नाह *उत्पत्तिव्यधीति । नैयायिकादिमत खण्डयति *यत्नमात्रेति । तथा च घट करोतीत्यादि न स्यात् । दोषान्तरमाह *किञ्चेति । यगादीत्यादिना तङादि । नन्वेव कृतिरित्यत्र कथ यत्नप्रतीतिरत आह *कृतिरिति । आदिना करणादि । एतेन तत्र लक्षणेत्यपास्तम् । इदमपि परीत्योक्तमिति सूचयन् सिद्धान्तमाह *यद्वेति । कृतियत्नशब्दयोरपीति पाठ. । अन्यथा पाठे तु यत्नश्च कृतिशब्दश्चेति द्वन्द्वो बोध्यः । *कथ्यमाने इति । सा कर्त्रीति शेष । जनेरुत्पत्तिसमानाधिकरणव्यापारो ऽर्थ. । तत्रोत्पत्तिस्वरूप प्रागुक्तमेव । स्नसादेर्जीवत्यादिवदकर्मकत्व दधात्यादेस्त्वतथात्वात्सकर्मकत्व तदाह *इत्यलमिति ॥ १६ ॥

अनुभूयते सुखम्, साक्षात्क्रियते गुरुरित्यादौ निपातानां द्योतकत्वेनानुभवसाक्षात्काररूपफलधोधात्वर्थत्वेन सकर्मकत्वम् ।

एतेन निपातस्यैव तदर्थकत्वमित्यपास्तम् ।

कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति मते ऽपि फलाश्रयतया कर्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमेवावश्यकम् ।

द्योतकत्वं च समभिव्याहृतगतवृत्त्युद्बोधकत्व प्रा-

येण ।

क्वचित्तु क्रियाविशेषाक्षेपकत्वं तत् । यथा प्रादेशं विलिखतीत्यादौ विर्विमानक्रियाऽऽक्षेपकः । प्रादेशं विमाय लिखतीत्यर्थावगमात् ।

क्वचित्तु सम्बन्धपरिच्छेदकत्वम्, यथा—कर्मप्रवचनीयानाम् । "अथ शब्दानुशासनम्" इत्यत्राथशब्दस्य प्रारम्भक्रियाऽऽक्षेपकत्वं कैयटादावुक्तम् । एवमन्यदप्यूह्यम् ।

विशिष्टस्य तु न धातुत्वम्, अपाठात्, अडाद्यव्यवस्थापत्तेश्च ।

एतेनोपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वम् । साक्षात्प्रत्यक्षतुल्ययोरिति कोशात् । नमःपदेन नमस्कारार्थत्वस्य लोकसिद्धत्वाच्च । सकर्मकत्वंच स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम् । कर्मत्वमपि एतादृशफलाश्रयत्वमेवेति न कर्मणि लकारानुपपत्तिरित्यपास्तम् । वैषम्ये बीजाभावात् । 'अनुभूयते' इत्यस्य 'साक्षात्क्रियते' इत्यनेन समत्वात् ।

कर्मसंज्ञकार्थान्वय्यर्थकत्वं तत्त्वमिति निष्कृष्टमते उक्तरीत्या द्योतकतां विना गत्यभावाच्च । "लः कर्मणि" इत्यादौ तेन रूपेण बोधस्य दुर्लभत्वाच्च । अन्यतरत्वस्यातिगुरुत्वाद् दुर्ज्ञेयत्वाच्च ॥ १७ ॥

( कुं० टी० ) *समभिव्याहृतेति । भूधातुगतानुभवबोधकशक्तेरुद्बोधको ऽनुरित्यर्थः । *प्रादेशमिति । अत्र कारकवि-

भक्तेर्लिखतीतिक्रियायोग्यताऽभावाद्विना मानक्रियाऽऽक्षिप्यते। *संबन्धेति। जपमनु प्रावर्षदित्यत्र। शैषिकी इयं विभक्तिर्न क्रियामाक्षिपति क्रियाकारकयोः परस्परमवच्छेद्यावच्छेदकभावात्, किन्तु जपवर्षणयोर्हेतुहेतुमद्भावं संबन्धम्। स नियतक्रियाजनित इत्यनुनाऽऽवेद्यते। *स्वस्वयुक्तेति। स्वस्य, स्वयुक्तनिपातस्य वाऽर्थो यत् फलमित्यर्थः। *अन्यतरत्वस्येति। तद्भिन्नत्वे सति तद्भिन्नो यः तद्भिन्नत्वं हि तत्॥ १७॥

(क० टी०) एवं सामान्यतो विशेषतश्च केषांचित्तदर्थमर्थान् शुद्धान् निरूप्य मिश्रिते तद्विशेषे परप्राचीनोभयोक्तनिपातविषयकमतनिरासार्थमर्थान्निरूपयति *अनुभूयते इत्यादि। वक्ष्यमाणसमत्वोपपत्तये आह *साक्षादिति। आदिना 'अल क्रियते' इत्यादिपरिग्रह। उभयसाधारण्येनाह *निपातानामिति। *साक्षात्कारेति। तदादीत्यर्थ। प्रकृतानुरोधेन तु तावन्मात्रमुक्तम्। *सकर्मकत्वमिति। तथाच तद्रूपकर्माणि लादिसिद्धिः। *एतेन–एषां सकर्मकत्व न स्यादनुभवादिफलस्य निपातार्थत्वे ऽपि इति शेषः। *धात्वर्थफले एवेति। प्रत्यासत्तेः। अन्यथा 'वन त्यजति' इत्यादौ ग्रामादिनाऽपि सकर्मकत्वापत्तेरिति भाव। अथ प्रसङ्गात्तदर्थं तन्निरूपयति *द्योतकत्व चेति।

अत्र केचित्—तत्तद्धातोस्तत्र तत्रार्थे लक्षणा निपातास्तात्पर्यग्राहकाः, एतदेव द्योतकत्वमित्याहुः।

अन्येतु–अनेकार्थत्वाद्धातूनां तत्राप्यर्थे शक्तिः, उपसर्गसमभिव्याहारस्तु तादृशशक्त्युद्बोधक। शक्त्युद्बोधकत्वमेव च द्योतकत्वम्। इदमेव शक्त्याधायकत्वपदेनोच्यते व्यतिसे इत्यादावित्याहु। *वृत्त्युद्बोधेति। एतेन जये क्लृप्तशक्तेः प्रकर्षे शक्तो नेषां शक्त्यवच्छेदकत्वम्। शक्ततावच्छेदके विशेषणत्वमात्रमेव तत्त्वम्। एवञ्च प्रोत्तरजित्वेन प्रकर्षे शक्ति। नच जिपूर्वप्रत्वेन शक्तिः। अधिककल्पनापत्ते, आख्यातार्थानन्वयप्रसङ्गाच्च। शक्त्यवच्छेदकत्वमेव च द्योतकत्वमिति–तदर्थं विशेषमाह *प्रायेणेति। तत्फलमाह *क्वचिदिति। ननु 'लिखन्ना-

स्ते भूमिम्' इतिवदत्र कुतो न,अत आह *प्रादेशमिति । *विमाय-परिच्छिद्य। वि-प्रादेशपदापादानेन वक्तुस्तथैव तात्पर्यात् । अन्यथा तदुक्त्यसङ्गतिः स्पष्टैव । लिखधातोर्जीवत्यादिवदकर्मकत्वात् । अ-क्षररूपकर्मणो धात्वर्थेनोपसंग्रहात् । नचैव कथं दृष्टान्ते इति वा-च्यम् । तत्र बहुदिनव्यापिमानवतीं प्रति सखीवाक्ये-त्वत्प्राणवद-स्माकं रक्षणीयोऽपि-भूमिं नतु भूमौ,तेनाकाङ्क्षितकर्मणः अनुद्देश्यत्वं ध्वन्यते। लिखन् नतु लिखतीति, तेन लिखनस्याबुद्धिपूर्वकत्वरूपम-प्राधान्यं ध्वन्यते । बहिर्नतु मध्ये, तेन नायकस्यात्युद्वेग । आस्ते न त्वासीत्, तेनैवमवस्थानस्य प्रसादपर्यन्तता ध्वन्यते-इत्यर्थेन धातू-नामनेकार्थतया रेखाऽनुकूलव्यापारार्थकत्वेनादोषात् । तृतीयमा-ह *क्वचित्त्विति । सम्बन्धविशेषेत्यर्थ । इदं च "कर्मप्रवचनीया" इत्यत्र भाष्ये स्पष्टम् । तत्र हि-"कर्म प्रोक्तवन्त. कर्मप्रवचनीयाः । के पुनस्तथा ये सम्प्रति क्रियामाहुः । ये अप्रयुज्यमानस्य क्रिया-माहुस्ते कर्मप्रवचनीया" इत्यन्वर्थसंज्ञात्वमुक्तम् ।

तत्र हरि —

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।

नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक. ॥ इति ।

तथाच भाष्ये क्रियापदम् अग्रे तत्सम्बन्धपरमिति भाव ।द्वितीयस्यो-दाहरणान्तरमाह *अथेति । अनेकक्रियाविषयस्यापि शब्दानुशास-नस्य आरभ्यमाणताऽथशब्दसंनिधाने प्रतीयते इति कैयट. । आ-दिना मिश्राद्युक्त्यादि। सर्वथा तदनियमायाह *एवमिति । ननु लो-के तत्राविलक्षणत्वादाह *अडादीति । आदिना द्विर्वचनम् । नै-यायिकमत खण्डयति *एतेनेति ।

इत्थ हि तदाकूतम्—प्रजयतीत्यादौ प्रकृष्टजयादिर्नोप-सर्गवाच्यः । एव हि तस्याप्रकृत्यर्थतया ऽऽख्यातार्थकृतावन-न्वयापत्तेः । "प्रत्ययानाम्" इति व्युत्पत्ते. । नच जयो धात्वर्थ., प्रकर्षः प्रशब्दार्थ । नामार्थधात्वर्थयोर्विभक्त्यर्थमद्वारी-कृत्य साक्षाद्भेदसम्बन्धेन नान्वय इति व्युत्पत्त्या तस्य तथाऽपि धा-त्वर्थे ऽन्वयासम्भवात् । नच विशिष्टजयो धात्वर्थ । अर्थान्तरस्ये-वोपसर्गं विनाऽप्येतदर्थप्रत्ययापत्तेः । तस्मात् 'जये फलतशक्तेरित्या-दितत्त्वम इत्यन्त' प्रागुक्त बोध्यम् ।

किञ्चानुभूयते सुखमित्यत्र तस्य तद्वाचकत्वे धातोरकर्मकत्वात् कर्मणि लाद्यनापत्तिः । स्वार्थफलव्यधिकरणव्यापारवाचकत्वस्यैव सकर्मकत्वाद् । अन्यथा यत्किञ्चित्फलवैयाधिकरण्यस्य सर्वत्र सत्त्वेनातिप्रसङ्गात् । तस्मादुपसर्गाणां द्योतकत्वम्, चादयस्तु वाचका एव । 'साक्षात्क्रियते' इत्यादौ विषयतासम्बन्धेन प्रत्यक्षादिरूपतत्फलवाचकत्वस्य साक्षात्पदादेः सम्भवात् तदुत्पत्त्यनुकूलो व्यापारो धात्वर्थः । तथाच 'साक्षात् क्रियते गुरुः' इत्यादौ गुर्वभिन्नाश्रयनिष्ठो विषयतासम्बन्धेन यः साक्षात्कारस्तदुत्पत्त्यनुकूलो व्यापार इत्यादिर्बोध इति । तदाह *तदितरेति । तस्य तत्त्वे मानमाह *साक्षादिति ।

अलम्भूषणपर्याप्तशक्तिवारणवाचकः ।
उरर्यूरी चोररीच विस्तारेऽङ्गीकृतौ त्रयम् ॥—

इत्यपि बोध्यम् । नन्वर्थविशेषान्तर्भावेणाकर्मकत्वादिविभजनादत्र प्रत्यक्षाद्यर्थे कथं कर्मणि लः ? । फलव्यधिकरणव्यापारवाचित्वमेव सकर्मकत्वमिति तु न युक्तम् । अनुपदं किञ्चेत्याद्युक्तदोषापत्ते । तथाच तस्य धात्वर्थत्वादर्थादेषां द्योतकत्वमेवावश्यकमिति कथं तत्त्वमत आह *सकर्मकत्वञ्चेति । नन्वेवमप्यनतिप्रसङ्गाय धात्वर्थफलाश्रयत्वस्यैव कर्मत्वेनात्र तदभावात्कर्मत्वमेव तस्य कथमत आह *कर्मत्वमपीति । *एतादृशेति । स्वस्वयुक्तनिपातान्यतरार्थफलेत्यर्थः । एतेनेत्यस्यार्थमाह *वैषम्येइति । "नामार्थधात्वर्थयोः" इत्याद्युक्तरीत्या तत्र तथात्वे अत्रापि तथा । एतदनुरोधेन तद्व्युत्पत्तेर्निपातातिरिक्तविषयत्वम् । तत्राऽपि वाचकत्वमेवोचितम् । स्तोकं पचतीतितुल्यता तु द्योतकत्वं विनाऽनुपपन्नेति भावः, तदाह *अनुभूयते इति । सिद्धान्तमतेन दोषमाह *कर्मेति । *बोधस्येति । ततः शब्दमर्यादया ऽप्रतीतेरिति भावः । अतिगुरुत्वं दुर्ज्ञेयत्वे हेतु । तस्य च भेदघटितत्वेनैतदुभयभिन्नानेकज्ञानसापेक्षत्वेन, यावतस्तस्य ज्ञानासम्भवेन च तत्त्वात्तत्वाच्चेत्यर्थः ॥ १७ ॥

यत्तु—उपसर्गो द्योतकः उपसर्गत्वादित्यनुमानेन

परेणोपसर्गाणां तत्त्वसाधने, शक्तिसंबन्धेन निपातपदवत्त्वरूपमखण्डं वा निपातत्वं पक्षतावच्छेदकीकृत्य निपातत्वेनैव हेतुना वाचकत्वाभावसाधनं युक्तम्, प्रमाणानां सामान्ये पक्षपातादिति ।

तन्न । ततो ऽपि सामान्यधर्माव्ययत्वावच्छेदेनैव तत्सिद्ध्यापत्तेः ।

निपातत्वं द्योतकताग्रहे ऽवच्छेदकमिति तु न युक्तम् ।

तत्तदर्थनिरूपितद्योतकत्वस्य तत्तन्निपातवृत्तितया तद्वृत्त्यसाधारणधर्मस्यावच्छेदकत्वावश्यकतया सामान्यधर्मस्यावच्छेदकत्वे मानाभावात् । निपातत्वाद्यजानतोपि बोधाच्च ।

यदपि निपातानां वाचकत्वे 'शोभनः समुच्चय' इतिवत् 'शोभनः च' इत्यस्यापत्तिः । 'घटस्य समुच्चय' इत्यस्य स्थाने 'घटस्य च' इत्यस्याप्यापत्तिरिति ।

तन्न । शब्दशक्तिस्वाभाव्येन नित्यपरतन्त्रतया निपातैः स्वार्थस्य विशेषणत्वेनैव बोधेन विशेषणान्वयाप्रसङ्गात्, षष्ठ्यप्राप्तेश्च ।

किञ्च 'घटं पटं च' इत्यादौ घटमित्यस्य क्रियायामेवान्वयः । अत एव ततो द्वितीया । 'घटं समुच्चयवन्तं पटं पश्य' इति बोधः ।

तत्र समुच्चयस्य प्रतियोग्याकाङ्क्षायां सन्निहितत्वात् घटस्य प्रतियोगित्वम् । पटेतु समुच्चयस्य भेदेनान्वयो नतु पटस्य समुच्चये इति क्व षष्ठ्यापादनम् ।

नामार्थयोरभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया ।

वस्तुतो ऽव्ययेषु नामत्वमेव नेत्यग्रे वक्ष्यामः । अत एव समुच्चेयानन्तरं चादिप्रयोग इति वृद्धाः ।

यद्वा समुच्चितश्चार्थः । स्वभावतश्चाद्युपस्थाप्यस्यासत्त्वभूतत्वम् ।

तदुक्तम्—

समुच्चिताभिधाने च व्यतिरेको न विद्यते । इति ।

धर्म्यंशे शक्तिकल्पनागौरवं प्रामाणिकत्वान्न दोषाय १८ ॥

(कुं० टी०) *उपसर्गत्वादिति । नन्वेव पक्षतावच्छेदकहेत्वोरैक्ये सिद्धसाधनमिति चेत्।सत्यम्। संज्ञारूपोपसर्गत्वं पक्षताऽवच्छेदकम्,द्योतकोपसर्गसजातीयत्वं च हेतुः।*परेण—तार्किकेण। *तत्त्वसाधने—द्योतकत्वसाधने । *वाचकत्वाभावेति । अनर्थकनिपातानां द्योतकत्वाभावादिदमुक्तम् । *तत्तदर्थेति । निपातविशेषेणार्थविशेषस्यैव द्योतनान्न सामान्यधर्मोऽवच्छेदक इत्यर्थः । *तदवृत्तीति । एकैकमन्यत्रावृत्तीत्यर्थः । *शब्दशक्तीति । यथाहि एकैव पचिक्रिया पाक इत्यनेन सत्त्वभूताऽभिधीयते, पचतीत्यनेन चासत्त्वभूता एवं शब्दशक्तिस्वभावान्निपातानामपि नित्यपरतन्त्रत्वमेवेति न षष्ठी, नापि विशेषणयोग इत्यर्थः । *नामत्वमेवनेति । "चत्वारि पदजातानि"इति निरुक्ते नामनिपातयोः पृथगुपादानात् । तथाच नामार्थयोरभेद इत्यादेर्नायं विषयः । *अत एव—घटमित्यादेः पश्येत्यादावन्वयादेव । चादीनां समुच्चयाद्यर्थत्वे एव षष्ठ्यापत्तिः । सा तु ना-

स्तीत्याह *यद्वेति । ननु समुच्चिताभिधायकत्वे लिङ्गसंख्यायोगापत्तिरत आह *स्वभावत इति । अतएव 'शोभनश्च वृक्ष' इत्यपि न प्रयोगः। ननु समुच्चिताभिधाने द्रव्यवाचित्वान्निपातसंज्ञानापत्तिरिति चेन्न । असत्त्वभूतस्यैवाभिधानात्। *व्यतिरेकः—पृथगर्थोपस्थापकता। तेन न पूर्वोक्तदोषः । तदुक्तं हरिणा—

समुच्चिताभिधाने ऽपि विशिष्टार्थाभिधायिनाम्।
गुणैः पदानां सम्बन्धः परतन्त्रास्तु चादयः॥ इति।

गुणैर्विशेषणैः पदानां विशिष्टार्थाभिधायिना सम्बन्धो भवति, निपातानां तु शब्दशक्तिस्वाभाव्यात्परतन्त्रत्वमेवेतितदर्थः॥ १८॥

(क॰ टी॰) कौस्तुभात्युक्तिं खण्डयति *यत्त्विति । *उपसर्गस्तत्पदवाच्य.। नातो हेतुपक्षताऽवच्छेदकयोरैक्यम्। *अनुमानेन। व्यतिरेकिणा। *परेण—नैयायिकेन । साधने इत्यस्य—दोषादुक्ते इति शेष.। चतुष्टयीपक्षे आह *शक्तीति । त्रयीपक्षे आह *अखण्ड वेति। उपाधिरूप जातिरूप वेत्यर्थकत्वे सति चादिगणादिपठितत्वरूप सखण्डमपि सम्भवति, तथाऽपि तस्य चादिगणादिभेदेनाननुगतत्वमिति तत्त्याग । *निपातत्वेनैव—निपातपदवाच्यत्वेनैव। एतेन सामान्यावच्छेदेन तत्साधकहेतोरुभयवादिसंमतस्याभावादिदमयुक्तमित्यपास्तम् । अत्र पक्षे तद्वत् द्योतकत्व न साध्यम्, अनर्थकनिपातेषु तादृशनिपातत्ववत्सु द्योतकत्वाभावेन व्यभिचारादत आह *वाचकत्वाभावेति। एवञ्च सम्भवे द्योतकत्वमार्थसमाजग्रस्तमिति भाव । युक्तत्वे हेतुमाह *प्रमाणानामिति । प्रमाकरणानां व्यापकधर्मग्रहादित्यर्थ । व्याप्यत्वेन गृहीतधर्मोपस्थितौ व्यापकधर्मोपस्थितेरावश्यकत्वादिति भावः । प्रमाणस्य सामान्यावच्छेदेन प्रवृत्तौ बाधकाभावसहकृत लाघवं बीजमिति तत्त्वम्। *तत्सिद्ध्यापत्तेरिति। नचेष्टापत्तिः। स्वरादीनामपि स्वातन्त्र्येण प्रयोगानापत्तेः । अतएव अन्यथा भूषणाद्युक्तिङ्ग-

ण्डयति *निपातत्वामिति। तद्रूपमित्यर्थः। व्यापकत्वेन उक्तन्यायादिति भाव। एवञ्च नोक्तदोष इति तात्पर्यम्। सामान्यग्रहस्यानुपयोगादाह *तत्तदिति। *तद्वृत्तीति। तत्तद्वृत्तीत्यर्थ.। ननु "यद्विशेषयोः" इतिन्यायेन तस्याप्युपयोग एव, अत आह *निपातत्वादीति। तथा चासति बाधके तथाऽङ्गीकारेपि प्रकृते बाधकसत्त्वान्न तथेति भावः। कौस्तुभाद्युक्तिमेवान्यां खण्डयति *यदपीति। धातुघञाद्युपस्थाप्यक्रिययोरिव, रामावित्यादौ द्वित्वादे. परविशेषणत्वे एव साधकप्रत्ययानामितिव्युत्पत्तिवदत्र गमकाभावात्स्वातन्त्र्येण पदादुपस्थितिसत्त्वादिद दुर्वारमितिभूषणासाङ्गत्यायाह *शब्दशक्तीति। "पदार्थ" इति न्यायात्, तस्य तत्र प्रतियोगितयाऽनन्वयाच्चेति भावः। षष्ठीप्राप्तिमभ्युपेत्यान्त्ये वारितम्। वस्तुतः सैव नेत्याह *किञ्चेति। *द्वितीया–द्वितीयादि। अनतिप्रसङ्गायार्थिकार्थमाह *तत्रेति। विशेषणे इत्यर्थ। *घटस्य—तस्यैव। एव च तत्र तस्य शाब्दान्वयाभावान्न तदापत्तिरिति भावः। तदाह *केति। 'नन्वेवमपि' "नामार्थयो." इति प्राचां मतमभ्युपेत्येदम्। वस्तुतो ऽयुक्तमेतदित्याह *वस्तुत इति। *अग्रे–अत्रैव प्रकरणेऽनुपदमेव। *अत एव–तेषां नित्यपरतन्त्रतया विशेषणत्वेन घटादेस्तत्र शाब्दान्वयाभावेन तस्यैव तत्र शाब्दान्वयेन। द्वन्द्वादौ तु मिथःसमुच्चयार्थमनेकचप्रयोग इति बोध्यम्। एतेन निपातानां वाचकत्वेऽभेदान्वयापत्तिर्निपातातिरिक्तत्वविशेषणदाने मानाभावश्चेति कौस्तुभभूषणाद्युक्तदोषो ऽपि परास्त। शब्दशक्तिस्वभावादराविशेषात्। पररीत्या परमतेनैव तदभावप्रयुक्तलाघवादाह *यद्वेति। 'समुच्चितः स घट' इत्यभेदेनैवान्वयान्न भेदनिबन्धना षष्ठी, नापि तद्विशेषणांशदानम्, नापि शोभनाद्यन्वय, एकदेशत्वादिति भाव। नन्वेव सत्त्वार्थकत्वाद्विभक्तिश्रवणापत्तिरत आह *स्वभावतइति। शब्दशक्तीत्यादिः। *चादीति। समुच्चितानभिधाने निपातेभ्यो विभक्तिरेव न स्यात्तावत्तेषामर्थवत्त्वाभावेन प्रातिपदिकसञ्ज्ञाया अभावात्। किञ्च नञ्समासादावुत्तरपदार्थः प्रधानमिति व्यवस्था न स्यात्, पूर्वपदस्य नञादेरनर्थकत्वादिति चाद्युपस्थाप्यत्व तस्य आवश्यक किन्तु तस्य तत्रासत्त्वभूतत्वम्। समुच्चितपदोपस्थाप्यत्वे तु तस्य सत्त्वभूतत्वमेव। अत्र हरिसमतिमाह *तदुक्तमिति। *समुच्चितेति।

प्रत्ययो वाचकत्वे ऽपि केवलो न प्रयुज्यते ।

इत्यस्यादि॰ । यद्यपि प्रत्ययपरत्ववदेषां परत्व न स्मर्यते, तद्बोध्याथस्य विना सम्बन्धिनमनन्वयात्केवलाप्रयोगः, चोऽप्यर्थे । तेन पूर्वमतसमुच्चय । अतएव तेनैवोक्तम्—

समुच्चिताभिधानेऽपि विशिष्टार्थाभिधायिनाम् ।
गुणैः पदानां सम्बन्धः परतन्त्रास्तु चादय॰ ॥ इति,

तथाऽपि विशेषतस्तयोरुपस्थिाति विना प्रतीतेरपर्यवसानान्नित्यपरतन्त्रतैवेति न भिन्नप्रयोग इति भावः । इदं पूर्वमतेऽप्यावश्यकम् । एवञ्च पूर्वत्र स्वभावद्वयाश्रयणमत्रतु एकस्यैवेति लाघवतरमिति गूढाकूनम् । *धर्म्यंशे—समुच्चिते । घट स्यचेति विना विभक्त्यर्थे तयोर्भेदनान्वयायोगादन्यथाऽतिप्रसङ्गापत्तेरन्यथाऽन्वयायोगादिति भावः । घटादेर्विशिष्टशक्तिवदिति भाव॰ ॥ १८ ॥

निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव । शक्तिलक्षणाद्योतकताऽन्यतमसंबन्धेन बोधकत्वस्यैवार्थवत्त्वात् ।

नञ्समासे उत्तरपदार्थप्राधान्यमपि द्योत्यार्थापेक्षयैव ।

प्रतिष्ठत इत्यत्र तिष्ठतिरेव धातूनामनेकार्थत्वाद्गतिवाची । प्रशब्दस्तु तदर्थकत्वस्य, तद्गतादित्वस्य च बोधक इति भूवादिसूत्रे भाष्ये स्पष्टम् ।

यद्यपि लोके विशिष्टादेव विशिष्टबोध इति विशिष्ट एव क्रियावाची, तथाप्यडादिव्यवस्थार्थे धातूपसर्गयोः पृथक् कल्पनम् ।

एवञ्चान्तरङ्ग उपसर्गयोगः । अत एव 'उपास्यते गुरुः' इति कर्मणि लकारः । एतन्मूलक एव "पूर्वं धातुरुपसर्गेण युज्यते" इति प्रवादः । बाह्यश्च

साधनयोगः । अत एव संचस्कार इत्यादौ पूर्वं सुट्, ततः साधनप्रयुक्तकार्यम् । अध्ययनमित्यादौ 'प्रत्यय' इत्यादिनिर्देशेन क्वचित्प्रत्ययनिमित्तकार्यात् प्राग् उपसर्गनिमित्तकार्याप्रवृत्तेर्ज्ञापनेनादोषः । एतन्मूलकमेव पठ्यते "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति" इति नव्याः ॥ १९ ॥

( कुं० टी० ) *साधनयोगइति । साध्यतेऽनेनेति साधनं कारकम् । तद्वाची च प्रत्ययः साधनशब्देनोच्यते । *अध्ययनमिति । अत्र धातूपसर्गयोः सवर्णदीर्घः प्राप्तः ॥ १९ ॥

(क० टी०) एव वाचकत्वे तेषां परोक्तदूषणानि सखण्ड्य प्रागुक्तयुक्त्याऽऽवश्यके तेषां द्योतकत्वे सिद्धान्तमादाय परोक्तदूषणद्वयमुद्धरति *निपातानामित्यादि । *आदायैवेत्यस्य बोध्यमिति शेषः । एतेन साक्षादित्याद्यनुशासनादेरप्येवमेवोपपत्तिरिति सूचितम् ।

ननु शक्तिलक्षणाऽन्यतररूपवृत्त्यर्थबोधजनकत्वरूपार्थवत्त्वम् अर्थवत्-सूत्रे ऽनतिप्रसङ्गाय निविष्टमिति कथ ततो निर्वाहः ।

यत्तु भूषणादौ–सख्यान्वयाभावाद्वा एकाज्द्विर्वचनन्यायाद्वा, तथाऽपि लुकाऽदोषाद्वा, राम इत्यादे राजपुरुषादिवत्समासत्वाद्वा, यद्यपि नातिप्रसङ्गः तथापि आद्ये निपातानामपि सख्याद्यभावाद्विभक्तिर्न स्याद् औत्सर्गिकैकवचनाङ्गीकारे राम इत्यादावपि ततस्तदापत्तिः, एकाज्द्विर्वचनन्यायस्यापि नाय विषयः, समुदायकार्येणावयवानामननुग्रहाद्, एव च तथा कैयटाद्युक्त चिन्त्यम्, तृतीये प्रातिपदिकानवयवत्वाल्लुको ऽप्राप्त्या विभक्तिश्रवणापत्तिर्धनमित्यादौ जश्त्वनलोपापत्तिरिति । अतश्चतुर्थपक्षोऽप्यसङ्गतः । तस्मात् "अव्ययादाप्सुपः" इति ज्ञापकादेव न विभक्त्युत्पत्तिरिति केचित् ।

"निपातस्य" इति वार्त्तिकादित्यन्ये । तस्य "अधिपरी" इति ज्ञापकेन प्रत्याख्यानपक्षे तस्य सामान्यापेक्षत्वाश्रयणेन सिद्धिरित्यपरे ।

"कृत्तद्धित" इत्यत्रानुक्तसमुच्चयार्थचेन तेषां संग्रह इति दीक्षिता इति तत्त्वमित्याहु, तन्न ।

औत्सर्गिकैकवचनस्य गमके सत्येवाङ्गीकारात् । अत एव जश्त्वाद्यापत्तिर्न । "सुपो धातु" इति लुको धातुसाहचर्येण सुबन्त्यानेकघटितप्रातिपदिकावयवस्यैव सुपोऽङ्गीकारात् । वार्त्तिकस्य प्रत्याख्यानात् । तस्य सामान्यापेक्षत्वे मानाभावात् । चकारस्यानर्थकसग्राहकत्वस्य भाष्यादावुक्तत्वाच्च ।

तदेतद् ध्वनयन्नाह *शक्तीति । तादृशार्थवत्त्वस्यैव तत्सूत्रे निविष्टत्वादित्यर्थ· । एतदर्थमेव व्यञ्जनावृत्तिस्वीकार इत्युक्तं प्राक् ।

एतेन विषयतापर्याप्त्यधिकरणत्वस्य निवेशेन तत्रादोष· । विशिष्टे एव तत्सत्त्वात् । प्रकृते तु प्रादेरेव तात्पर्यग्राहकत्वादुक्तरीत्याऽर्थधीप्रयोजकतया तत्प्रयोजकधीविषयतापर्याप्त्यधिकरणत्वस्यैव सत्त्वेनादोष इत्यपास्तम् ।

क्लिष्टत्वात्, व्यातिलुनत इत्यादौ दोषापत्तेश्च ।

नन्वेव प्रातिपदिकत्वेऽपि सत्याद्यभावात्कथ विभक्तिरिति चेन्न। "अव्ययादाप्" इति ज्ञापकात् "तद्धितश्च" इति सूत्रभाष्योक्त्या सर्वविभक्त्येकवचनाङ्गीकारात् ।

एवमुपसर्गान्यनिपातानां द्योतकत्वे वाचकत्वे च व्यवस्थितत्वेनोक्ते ऽप्युपसर्गाणां सर्वथा द्योतकत्वमेव, अन्यथा प्रतिष्ठत इत्यत्र गमनत्वेन रूपेण बोधानापत्ते । ष्ठाधातोर्गतिनिवृत्त्यर्थकत्वे ऽभावस्य प्रशब्दार्थत्वे गत्यभावो नास्तीत्येव प्रत्ययापत्ते· । न चात्र तथाबोधसम्भावनाऽपि गत्यभावसम्बन्धित्वेनानुपस्थिते, अन्यथा घट अभाव इत्यत्रापि तथाबोधापत्ते । नञ्समभिव्याहारे चानादिसिद्धतथाव्युत्पत्तिस्वीकारान्न दोष· । नापि तथाबोधानुभवः । अतस्तेषां द्योतकत्वमेव ।

तदेतद् ध्वनयन् तत्र भाष्यसमतिमप्याह *प्रतिष्ठत इति । इत्यत्रापीत्यर्थ । *तदर्थेति । धातोरित्यादि । *तद्गतादित्वेति । गतिनिष्ठादित्वेत्यर्थ । आदिकर्मेति यावत् । *भूवादीति ।

तत्रहि "क्रियावचने धातावुपसर्गप्रत्यययोः प्रतिषेध· " इति वार्त्तिकखण्डनावसरे "प्रकृति· प्रकृत्यर्थे वर्तते प्रत्ययः प्रत्ययार्थे" इति प्रतिपाद्य, "क्रियाविशेषक उपसर्ग·, पचनी-

त्यत्र क्रिया गम्यते, तां प्रो विशिनष्टि" इत्युक्त्वा, तत्र धातोरुपसर्गव्यभिचारवदध्येतीत्यादौ उपसर्गस्य धातुव्यभिचारेण निर्वाह कृत्वा, "इह तर्हि व्यक्तमर्थान्तर गम्यते, तिष्ठति प्रतिष्ठते" इति, आद्ये व्रजिक्रियानिवृत्तिरन्त्ये व्रजिक्रिया अत. "मन्यामहे उपसर्गकृतमेतद् येनात्र व्रजिक्रिया गम्यत इति । प्रोऽय दृष्टापचारः आदिकर्मणि वर्त्तते । नचेद् नास्ति बह्वर्था अपि धातवो भवन्ति" इति । वध्यादौ यथेद तथाऽत्रापि "तिष्ठतिरेव व्रजिकिया तन्निवृत्ति चाह" इत्युक्तम् । प्रोऽयमिति, अन्यत्रापि प्रयोगात् । ततश्चान्यत्रास्य यो ऽर्थो द्योत्य स एवेहापीत्यनुमीयते । अनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतिवाचीति निर्णय इति कैयट ।

विशेष वक्तु तत्र प्रागुक्तमपि शङ्कापूर्व भाष्यतात्पर्यत्वेनाह *यद्यपीत्यादि । *पृथगिति ।

तदुक्त हरिणा—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयो. शास्त्रे धातुरेव तु तादृश. ॥ इति ।

तादृशोऽखण्डः । तदेवाह *एव चेति । लोके विशिष्टादेव विशिष्टबोधेन भेदस्य कार्यार्थे कल्पितत्वेन चेत्यर्थः । *अतएव—अन्तरङ्गत्वेन तदर्थकत्वादेव । *इतीति । इत्यादो । तेनानुभूयते सुखमित्यादिपरिग्रह. । एतेन परिभाषेयं स्वतन्त्रेति सीरदेवाद्युक्तिनिरासः । *प्रवाद इत्यनेनानार्षत्व सूचितम् । उपस्थितिक्रमादेव तत्त्वमित्याह *बाह्यश्चेति । *अतएव—तयोर्यथाक्रममन्तरङ्गत्वबहिरङ्गत्वाभ्यामेव । एवञ्च "अभ्यासव्यवायेऽपि" इति न कार्यमिति भाव. । नन्वेवमध्ययनमित्याद्यासिद्धिः । पूर्वमुपसर्गयोगे तन्निमित्तदीर्घः ततो ल्युटि गुणे अधयनमित्यापत्तेरत आह *अध्ययनमिति । आदिना "णेरध्ययने" इत्यादिपरिग्रहः । अनतिप्रसङ्गायाह *क्वाचिदिति । एवः प्राग्वत् । एवच द्योतकत्वमपि प्रक्रियादशायां तन्निर्वाहार्थं काल्पनिकमेवेति तत्तात्पर्यम् । *नव्या—दीक्षितादयः ॥ १९ ॥

**वस्तुतस्तु "सुट् कात्पूर्वः" "गतिर्गतौ" इत्यत्र भाष्ये उक्तम्—"धातूपसर्गयोः कार्यमन्तरङ्गम् । कुत एतत् । पूर्वं हि धातुः उपसर्गेण युज्यते पश्चात्साधनेनेति" ।**

उपसर्गेण तत्संज्ञकेन, साधनेन तत्प्रयुक्तकार्येणेति तदर्थः ।

इतर आह–"नैतत्सारम् । पूर्वं हि धातुः साधनेन युज्यते पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि" इति ।

साधनेन तत्प्रयुक्तकार्य्येण । हि यतः साधनं क्रियान्निर्वर्त्तयति साध्यत्ववैशिष्ट्येन बोधयति, अतः पूर्वं तत्प्रयुक्तकार्यमिति भावः । तदुक्तं भूवादिसूत्रे कैयटेन—'साधनसम्बन्धेनावसीयमानसाध्यरूपा' इति । निश्चीयमानसाध्यतेत्यर्थः । ताम्, तेनरूपेण बुद्धाम् । उपसर्गः, तत्संज्ञकः शब्दः । विशिनष्टि, स्वद्योत्यविशेषणवैशिष्ट्येन बोधयति । साध्यत्वेन ज्ञान विना क्रियायोगे विहितोपसर्गसंज्ञकशब्दैर्योगाज्ञानादिति तदर्थः । क्रियायोगश्च क्रियाविशेषणीभूतार्थद्योतकत्वमेव ।

इतर आह "सत्यमेवमेतत् । यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते । अवश्यं च एतदेवं विज्ञेयम् । यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति, तस्य 'आस्यते गुरुणा' इत्यकर्मकः 'उपास्यते गुरुः' इति केन सकर्मकः स्याद्" इति ।

एवमेतत्, 'पूर्वं धातुः साधनेन युज्यते' इति यदुक्तं तत्सत्यमेव । तत्सम्बन्धं विना साध्यत्वेन प्रतीतेरपर्यवसानात् । कथं तर्हि उपसर्गकार्यस्यान्तरङ्गत्वं तत्राह–"यस्त्वसौ" इति । यस्तव धातू-

पसर्गसम्बन्धकृतत्वेनाभिमतो ऽर्थस्तमुपसर्गसंज्ञकसम्बन्धमन्तरेणापि धातुरभ्यन्तरं कृत्वाऽर्थत्वेनाङ्गीकृत्य साधनेन युज्यत इत्यर्थः ।

अयं भावः–वक्ता धातोरेव विशिष्टमर्थं बुद्धौ कृत्वा साधनसम्बन्धकार्यप्रत्यययोगेन तत्र साध्यत्वावगतौ श्रोतृबोधाय क्रियायोगनिमित्तोपसर्गसंज्ञकशब्दयोगं करोति । अन्यथा केवलधातुतः सर्वत्राप्रतीयमानतया श्रोतुस्तद्बोधो न स्यादिति ।

तदुक्तं "भूवादयः" इति सूत्रे कैयटेन–अनेकार्थत्वाद्धातूनां विशिष्टो ऽर्थो धातोरेव, उपसर्गस्तु बोद्धारं प्रति तदर्थद्योतक इति ।

एवञ्च पूर्वमुपसर्गेण योगो नाम तदर्थसम्बन्धः तत उपसर्गयोगात्पूर्वं साधनकार्ययोगः ततः उपसर्गशब्दयोग इति परिभाषाद्वयार्थः ।

तदुक्तं हरिणा—

धातोः साधनयोगस्य भाविनः प्रक्रमाद् यथा ।<br>
धातुत्वं कर्मभावश्च तथाऽन्यदपि दृश्यताम् ॥<br>
बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।<br>
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ इति ।

अस्यार्थः—यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते, यथा च भावीषिकर्मत्वमाश्रित्योपक्रमे एवेषिकर्मत्वमुक्तम्, तथा भाव्युपसर्गसंबन्धादुपक्रम एव विशिष्टक्रियावचनत्वं दृश्यताम् । धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्यो-

---

अर्थानुकरणमेतद् ।

पसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते । श्रोतॄणामिति शेषः ।

तथा—

प्रयोगार्हेषु सिद्धः सन् भेत्तव्यो ऽर्थो विशेषणैः ।
प्राक् तु साधनसम्बन्धात् क्रिया नैवोपजायते ॥इति च।

प्रयोगार्हत्वं च प्रत्ययोत्पत्त्यनन्तरम् । तेषु शब्देषु सिद्धः सन्नेव विशेषणैर्भेत्तव्यः विशेष्यः। श्रोतृबोधार्थमिति शेषः ॥ २० ॥

( कुं० टी० ) *पूर्वं हि धातुरुपसर्गेणेति । विशिष्टा हि क्रिया 'उपास्यते गुरुः' इत्यादौ कार्यलाभाय सम्बध्यते । एवञ्चान्तरङ्गत्वात्सुटि सञ्चस्करतुरित्यत्र गुणः सिद्धः इति भावः । *तत्संज्ञकेनेति । उपसर्गार्थमभ्यन्तरं कृत्वा पूर्वं साधनेन योग इत्यस्याग्रे व्याख्यास्यमानतया इहोपसर्गसंज्ञकशब्दयोग एव विवक्षित इति भावः । ननु "विष्वग्देवयोः" इत्यत्राप्रत्ययग्रहणेन तदादिविधेर्ज्ञापितत्वात् कथं धातूपसर्गकार्यस्यान्तरङ्गत्वमिति अत आह *नैतत्सारमिति । साधनसम्भवाद्धि धात्वर्थस्य साध्यत्वं प्रतीयते, क्रियायामेव चोपसर्गो विशेषं द्योतयति । *साध्यत्ववैशिष्ट्येनेति। साध्यत्वस्य साधननिरूप्यत्वात् । *सत्यमेतदिति । उपसर्गयोगात्पूर्वं साधनयोग इति सत्यम्, परं तु धातूपसर्गसम्बन्धकृतो योऽर्थस्तमभ्यन्तरं कृत्वा स्वबोध्यं कृत्वा साधनयोगे क्रियात्वावगतौ उपसर्गयोगः। नहि केवलधातुना सोऽर्थः प्रतीयते । *पूर्वमुपसर्गेणेति । उपसर्गार्थसंबन्धं विना उपसर्गार्थान्तर्भावेण धातोः

सकर्मकत्वासम्भवादिति भावः । *तदर्थसंबन्धइति । उपसर्गार्थसंबन्धात् पूर्वं बुद्धिस्थ इत्यर्थः । *परिभाषाद्वयेति । "पूर्वं धातुरुपसर्गेण" इति "पूर्वं धातुः साधनेन" इति च । *धातोरिति । क्रियावाचिनो धातव इत्युक्तं साधनसंबन्धाच्च प्राक् क्रियानिर्वृत्तेरसम्भवात् यथा भाविसाधनसंबन्धाश्रयेणोपक्रमे एव धातुसंज्ञा, यथा वा "धातोः कर्मण" इत्यत्र भावीषिकर्मत्वमुक्तम्, तथा भाविसबन्धादुपक्रमे एव विशिष्टक्रियावचनत्वं तदाह *अन्यदपीति । दार्ष्टान्तिके योजयति *तथेति । भेदो विशेषः । *पदप्रयोगकाले–प्रतिष्ठते इत्यादिप्रयोगकाले । "पूर्वं धातुः साधनेन" इति पक्षेणाह *प्रयोगार्हेष्विति । प्रयोगार्हेषु धातुषु प्रसिद्धोऽर्थो विशेष्यो भवत्युपसर्गादिभिः ॥ २० ॥

( क० टी० ) सर्वथैकवाक्यत्वे सम्भवति तथा व्यवस्था न युक्तेत्याद्याशयेन सिद्धान्तमाह *वस्तुनस्त्वित्यादि । अस्य बोध्यमित्यत्रान्वयः । *उक्तमित्यस्यादावित्यादि । इतीत्यत्रान्वयः । "किमन्तरङ्ग बहिरङ्गम्" इति प्रश्ने "यद्युक्त तदेवाश्रयणीयम्" इत्युक्त्वा युक्त दर्शनमेवाह *धातूपेति । एवञ्च सुटोऽन्तरङ्गत्वेनासिद्धत्वाभावाल्लघुत्वाभावेन न दीर्घप्रसङ्ग । सयोगादित्वाच्च गुणसिद्धिरिति भाव. । *हि–यत । 'उपास्यते गुरु 'इत्यादिसिद्ध्यर्थमावश्यकमिदमिति तात्पर्यम् । वक्ष्यमाणार्थकत्वे दोषासङ्गतेरन्तरङ्गत्वासिद्धेश्चान्यथाऽर्थमाह *उपेति । अर्थकृतबहिरङ्गत्वादेरभावादिति भावः । उपसर्गत्व विशेषण नतूपलक्षणमित्याह *तत्सञ्ज्ञकेनेति । *आहेति "वर्त्तमानसामीप्ये" इति लट् । एवमग्रे ऽपि । *नैतदिति । वक्ष्यमाणो ऽभिप्राय. । अत्र हेतुमाह *पूर्वहीति । हि यत । तस्यासारतां दर्शयन्–"पूर्वं हि धातु ' इत्यस्य युक्तत्व दर्शयति *साधनहीति । साधनयोगेन हि साध्यत्वेन धात्वर्थप्रतीति , साध्यत्वस्य साधननिरूप्यत्वात् । क्रियायोगे चोपसर्गत्वमिति भाव. । तदाह *तामिति । स्थितिम् । *करोतीति । एवच सकृतीत्यवस्थायामन्तरङ्गतरार्थकसशब्दनिमित्तत्वात् द्वित्वाद्यपेक्षयाऽप्यन्तरङ्गः सुडादिरित्यर्थ. । एवञ्च प्रकृष्टतया ऽऽद्यर्थक आ-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) १

(१६) मीमासाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसग्रह श्रीभट्टनारायणात्मज भट्टशङ्करविरचित । (मीमासा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमासादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमासासारसग्रहश्च सम्पूर्ण (मीमासा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) २

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्यां प्रत्यक्षानुमानमाथुर्यां व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १८

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—सस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसकलित । ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । १

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमासाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २

(३७) वेदान्तदर्शनम् । परमहसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ५

(४१) वदान्तसिद्धान्तसग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्श । श्रीमत्परमहसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय .. ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । २

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया तथा सोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता । २

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका श्रीमद्बालम्भट्टविरचितकलाटीका - इति टीकाद्वयमवलिता । ६

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । ३

(४८) वीरमीत्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ४

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलकृत । ४

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी ।

*November* **1916.**

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 227.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित
कुञ्जिकाकलाह्वटीकाद्वयसंवलिता ।
गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनमवलम्बमानेन
शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा
संशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU-MANJUSHA

BY

MAHAMAHOPADHYAYA ŚRÎ NÂGEŚA BHATTA,
With Two Commentaries, i. e Kunjikâ of
Durbalâchârya and Kalâ of Bâlam Bhatta
Edited by Pandit Sitaiama Sastii Shende

FASCICULUS VII-

*PUBLISHED & SOLD BY TIIE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES
AGENTS —
OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

*Price Rupee one*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभि सुसस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-सस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुल कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवक —२२७

१ अस्यां चौखम्बा- सस्कृतग्रन्थमालाया प्रतिमास पृष्ठशतके सुन्दरै सीसकाक्षरैरुत्तमेषु पत्रेषु एक स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमासावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्रयन्ते ।

३ काशिकराजकीयप्रधानसस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्टयो विद्वास एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयै ,ब्रह्मदेशीयै ,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देय वार्षिकमग्रिम मूल्यम्-मुद्रा ७आनका ८

५ अन्यैर्देय प्रतिस्तवक " " १ " ०

६ आपणव्यय पृथग् नास्ति ।

साम्प्रत मुद्र्यमाणा ग्रन्था —

(१) सस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे २

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहित तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहित सम्पूर्णम् ( वेदान्त ) २

(५) करणप्रकाश । श्रीब्रह्मदेवविरचित १

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपाद (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्ण ( मीमासा ) २

(८) ब्रह्मसूत्रभाष्यम् बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्त ) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभि श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्त )१

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टारकाचार्यसगृहीत । आचार्यचित्सुखमुनिविरचितव्याख्यापेत ( वेदान्त ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायविरचित सम्पूर्ण ( न्याय ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

तोः पूर्वं साधनतत्कार्यप्रत्यययोगे क्रियात्वावगतावुपसर्गसंज्ञकशब्द-योग इति भावः। विपक्षे बाधकमाह *अन्यथेति । तद्योगे इत्यर्थः । उक्तरीत्यैव व्याचष्टे *साधनेनेत्यादि तदर्थ इत्यन्तेन । एवञ्च "पूर्वं धातुरुपसर्गेण" इति न सारमिति भाव । *इतर इति । एतदङ्गीकुर्वन्नेव तस्यान्तरङ्गत्व व्युत्पादयितुमाहेत्यर्थ. । *पूर्वम्–उपसर्गसञ्ज्ञकशब्दयोगात् पूर्वम् । *अपर्यवसानादिति । अनिश्चयादित्यर्थः । साध्यत्वस्य साधननिरूप्यत्वादिति भावः। *कथन्तर्हीति । संचस्कारेत्यादौ सुडादेरित्यर्थः । तथा नेष्टत्वादाह *यस्तवेति । धातोः पूर्वं नियमेनाकाङ्क्षितार्थत्वादाह *साधनसम्बन्धेति। *तत्र–विशिष्टेऽर्थे। *क्रियायोगेति। बहुव्रीहिद्वयम्। *धातुः–केवलधातुरेव। *अर्थत्वेन-स्वार्थत्वेन।*साधनेनेति। तस्य साध्यत्वबोधाय कारकेण युज्यते इत्यर्थ. । तत उपसर्गेणेति भावः। तदुक्त"गतिर्गतौ"इत्यत्र कैयटेन–"विशिष्टैव क्रिया साधनेन द्योत्यते। ततश्च प्रयोक्ता विशिष्टायाः क्रियायाः साधनसम्बन्धं प्रतिपादयितु धातूपसर्गसमुदायं प्रयुङ्क्ते" इत्यादि। *यो हि मन्यते इत्यस्य शब्दसम्बन्धवदर्थसम्बन्धोऽपि पश्चादिति यो मन्यत इत्यर्थो बोध्यः । *धातोः–तत्त्वेनाभिमतस्य भ्वादेः । प्रक्रमादित्यस्य तन्निमित्तकक्रियावाचित्वस्यादावाश्रयणादित्यर्थ , तदाह *आश्रयणेनेति । *आश्रित्येत्यस्यादावित्यादिः । "भूवादय" इत्यनेनेति भावः । कर्मभावश्चेति व्याचष्टे *यथाचेति । पिपठिषतीत्यादौ "धातोः कर्मणः"इत्यनेनेति भाव'। तथाऽन्यदपीति व्याचष्टे *तथाभाव्युपसर्गेति । तच्छब्देत्यर्थः। तदेव विशदयति द्वितीयकारिकयेत्याह *धातूपसर्गेति । *विषयीकृत्येत्यस्योच्चारितेनेति शेष । धातुविशेषण सेः । भेद इत्यत्रान्वितस्य तथेत्यस्य व्याख्या *उपसर्गार्थकृत इति । भेद इत्यस्यार्थः *विशेष इति । अर्थादाह *धातुनैवेति । अर्थत्वेनाङ्गीकृत इत्यर्थः। पदकाले इत्यस्यार्थ. *पदप्रयोगेति । तदर्थः *उपसर्गेति । वक्तुः प्रागेव सत्त्वादाह *श्रोतृणामिति। हेत्वन्तरमाह *तथेति । तद्वदित्यर्थः । *विशेषणैः–प्रादिभिः । *प्राक्त्विति । प्राक्चेति पाठे ऽप्येवम् । *क्रियेति । साध्यत्वेन सा नैव प्रतीयते इत्यर्थ ॥ २० ॥

---

१ शेष इत्यर्थ. ।

यद्यपि—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥ इति ।

तादृश एव विशिष्ट एव—तु । धातुः क्रियावाचीत्यर्थः ।

क्रियाविशेषाः सङ्घातैः प्रक्रम्यन्ते तथाविधाः ।
कार्याणामन्तरङ्गत्वमेवं धातूपसर्गयोः ॥
साधनैर्याति संबन्धं तथाभूतैव सा क्रिया ।—

इत्यप्युक्तं हरिणा, तथाऽपि भाष्यसम्मतत्वादाद्यमेव युक्तम् । धातूपसर्गकार्यस्यान्तरङ्गत्वं तु पूर्वोपस्थितान्तर्भूतार्थकनिमित्तकत्वात् । बाह्यसाधनकार्यप्रत्ययनिमित्तं तु द्वित्वादि बहिरङ्गमिति भावः ।

इदमेवाभिप्रेत्य "संप्रसारणाच्च" इति सूत्रे भाष्ये उक्तम्—अद्य आ ऊढा अद्योढा इत्यत्र धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद्गुणेऽद्यशब्देन पररूपम् । कथम् । तत्कार्यमन्तरङ्गम् । पूर्वमुपसर्गस्य हि धातुना योगो भवति । धातोस्तदर्थान्तर्भावेण बोधजनकत्वस्य तत्संबन्धं विना अभावात् । अद्यशब्देन तु नाङो योगः, धात्वर्थक्रियापेक्षत्वादाधारस्य। किमर्थं तर्हि अद्यशब्दः प्रयुज्यते, आङ इव विशिष्टस्यापि अधातुत्वेनानन्वयात् । अद्यशब्दस्यापि समुदायेन योगो भवति, आङो द्योतकत्वेन विशिष्टस्य धात्वर्थत्वादिति । तेनैतद्बोधयति—पूर्वं धातोः साधनकार्ययोगस्तत उपसर्गसंज्ञकशब्दसंबन्धस्ततो भिन्नपदवाच्यकारकसम्बन्ध इति ।

एवं च साध्यत्वं निष्पाद्यत्वरूपमेव भासते इति भाष्यसम्मतम् ।

किञ्चोपसर्गाणां द्योतकत्वमेव भाष्यसम्मतम् । अतएव "उपपदमतिङ्" इति सूत्रे धातूपसर्गयोः समासमाशङ्क्य "पूर्वं धातुः साधनेन युज्यते" इति पूर्वं तिङि विशिष्टेनैव सामर्थ्यं स्यात्तत्र "अतिङ्" इति निषेधान्न तिङन्तेनैकार्थीभाव इति समाहितम् ।

पूर्वं धातोरुपसर्गसम्बन्धे, उपसर्गस्य वाचकत्वे च तत्र समासो वारयितुमशक्य एव ।

नच लकारमात्रोत्पत्त्याऽपि साधनसम्बन्धो जात एवेति तदा समासो दुर्वारः, नच तस्य काल्पनिकमर्थवत्त्वम्, विभक्तीनामपि तादृशार्थकत्वस्यार्थवत्सूत्रे भूवादिसूत्रे च भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम् । साधनस्य संख्यावैशिष्ट्यनियमेन संपूर्णतदाकाङ्क्षानिवर्त्तकतिङामुत्पत्त्यैव तदाकाङ्क्षानिवृत्तेः । तिङ्पदे च तिङ्भाविनो ऽपि ग्रहणाच्च ।

नचैवं परमगार्ग्यस्यापत्यमित्यर्थे परमगार्ग्यायण इत्यादौ परमसंसृष्टस्यापि गार्ग्यस्य केवलस्यापत्ये-नैकार्थीभावाद्गार्ग्यशब्दादेव फक्, अतएव पकाराकारस्य न वृद्धिरिति "येन विधिस्तदन्तस्य" इति सूत्रे भाष्ये स्पष्टम्, तद्रीत्याऽत्रापि समासो दुर्वारः, तिङर्थरहितेनापि सामर्थ्यस्य सुवचत्वादिति वाच्यम् ।

वक्ष्यमाणरीत्या तिङां कर्त्रादिद्योतकत्वेन विशिष्टस्य धात्वर्थत्वात् तस्य वक्तुमशक्यत्वात् । तत्रा-

द्युपसर्गार्थोऽन्तरङ्गः तद्विशिष्टस्य साधनाकाङ्क्षत्वात्। द्योत्योऽपि कर्त्रादिर्बहिरङ्गः ॥ २१ ॥

( कुं० टी० ) *अडादीनामिति । अडादिव्यवस्थार्थमेव धातवः पृथगुपदिष्टाः । सोपसर्गा एव तु विशिष्टक्रियावचनाः । *विशिष्ट एव—उपसर्गविशिष्ट एव । तत एव लोके बोधात् । संग्रामयतौ सोपसर्गस्यैवाडादिदर्शनेनोपक्रम एवोपसर्गविशिष्टैः क्रियाप्रणयनात्तत्कार्यमन्तरङ्गमित्यर्थः । *तथाभूतैव—उपसर्गविशिष्टैव । कारकसम्बन्धं याति । *आद्यमिति । "पूर्वं धातुःसाधनेन"इति । *बाह्येति । बाह्यं यत्साधनं तस्य यत् कार्यं प्रत्यय इत्यर्थः । आशङ्कते *कथमिति । समाधत्ते *तत्कार्यमिति । *तदर्थान्तर्भावेण—उपसर्गार्थान्तर्भावेण । *अद्यशब्देनत्विति । अद्यशब्दस्याधारवाचित्वादाधारस्य च क्रियापेक्षत्वादिति भावः । किमर्थं तथेत्यत्रैव हेतुमाह *आङइवेति । आङो यथा न धातुत्वन्तथेत्यर्थः । *विशिष्टस्य—आङ्विशिष्टस्य । *अनन्वयात्—अन्वयासम्भवात् । तेन सह अद्यशब्दस्येत्यादिः । समाधत्ते *अद्यशब्दस्यापीति । *समुदायेनेति । उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थः । *विशिष्टेनैवेति । तिङन्तेनैव समासो वाच्यस्तत्र "अतिङ्"इति निषेध एवेत्यर्थः । *तदा—लावस्थायाम् । *नचतस्येति । नहीत्यर्थः । काल्पनिकामिति यदुक्तं तत्समाधत्ते *विभक्तीनामपीति । *तादृशार्थकत्वस्य—कल्पितार्थकत्वस्य । *तिङामुत्पत्त्यैवेति । एवञ्च न लकारावस्थायामेकार्थीभावसम्भवः । *तिङ्भाविनोऽपीति । एवञ्च "अतिङ्"इति निषेधान्न समासप्राप्तिः । *नचैवमिति । परमगार्ग्यशब्देन यथैकार्थीभावात्फक् एवं तिङ्पूर्वभागे ऽप्येकार्थीभावो ऽस्त्वित्यर्थः ।

*विशिष्टस्य–तिङर्थविशिष्टस्य । तथाच तेनैकार्थीभावासम्भव इति भावः । *तस्य–समासस्य । बाहिरङ्गत्वे बीजमाह *तद्वि·शिष्टस्येति । उपसर्गार्थविशिष्टस्येत्यर्थः ॥ २१ ॥

(क० टी० ) दीक्षितमतसाधकहर्यन्तराविरोधमाह *यद्य· पीति । शास्त्रे इत्यन्त पूर्वान्वयि । *तु–वस्तुतस्तु । हर्यन्तरमाह *क्रियेति । सघातैरिति । अनुभवानुकूलव्यापारादिरूपाः क्रियाविशेषाः अनुभवादिभिरादावेव बोध्यन्ते इत्यर्थः । *कार्याणामिति । तयोस्तेषामन्तरङ्गत्वमेव सति सिद्धमित्यर्थः । *तथेनि । सं· घातबोध्यैवेत्यर्थ । क्रियेति चेत्यपीति पाठः । नन्वेव तदुक्तमन्तरङ्गत्व स्वाभिमते कथ भाष्यमते ऽत आह *धातूपसर्गेति । अर्थकृतत्वाभावादाह *पूर्वोपस्थितेति । एवंच नानयोरन्तरङ्गबहिरङ्गभाव., किन्तु तत्कार्ययोरिति 'उपास्यते' इत्यादौ कर्मणि लसिद्धिः, सचस्कारेत्यादौ साधनसम्बन्धोत्तरमुपसर्गसम्बन्धे 'सं कृ ति' इति स्थिते ऽन्तर्भूतार्थकनिमित्तकत्वाद्बाह्यसाधनसम्बन्धद्वित्वादिकार्यात् सुडन्तरङ्ग इति तत्सिद्धिश्चेति न दोष इति बोध्यम् । *इतिभाव इति । पूर्वहरेरित्यर्थः।*इदमेव–तत्कार्यस्योक्तान्तरङ्गत्वमेव। *गुणे–"आद्गुण"इति । *पररूपम्–"ओमाङोश्च"इति । ह्यर्थमाह *धातोरिति । *नाङो योग इति । पृथग् उपसर्गस्यार्थाभावात् । तत्सत्त्वेऽप्याह *धात्वर्थेति । शङ्काशयमाह *आङ्इवेति । *समुदायेनेति । उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थ· । तदाह *आङ इति । एवचान्तरङ्गार्थकशब्दनिमित्तकत्वेन धातूपसर्गकार्यमन्तरङ्गमिति तात्पर्यम् । तदाह *तेनेति । सूचयतीत्यर्थ· । इतो ऽपि प्रागुक्तभूषणाद्युक्तमयुक्तमित्याह *एवचेति । पूर्व धातोः साधनयोगप्रतिपादने चेत्यर्थः । तस्यैव तदायत्तत्व न तदुक्तस्येति तन्मते भाष्यासङ्गतिः स्पष्टैवेति भाव । उक्तसूत्रद्वयभाष्यस्य "उपपदम्"इति सूत्रभाष्याविरोध प्रतिपादयितु दीक्षिताद्युक्ति खण्डयन्नाह *किञ्चेति । *उप· सर्गाणाम्–तत्सञ्ज्ञकानामित्यर्थः । क्रियागतविशेषबोधकानामिति यावत् । *अतएव–द्योतकत्वेन तेषां पश्चात्सम्बन्धादेव । इत्थं हि तत्रोक्तम् "उपपदम्" इति सूत्रे "गतिः" इतिसूत्रेच—अ·

तिङ्ग्रहणात् सुप्सुपेति निवर्त्त्य 'गतिकारकोपपदानाम्—" इति परिभाषां प्रत्याख्याय, "यद्येतज्ज्ञाप्यते केनेदानीं समासो भविष्यति ?, समर्थेन । यद्येव धातूपसर्गयोरपि समासः प्राप्नोति–"पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन" इति । नैतदस्ति । "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" । साधन हि क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्" इति ।

अस्यार्थः–यद्येतदिति, अतिङित्यस्य समासविशेषणतया शब्देनोत्तरपदस्यानुपादानात्प्रश्नः । समर्थेनेति, उपपदस्य सुबन्तत्वेन "सुप्"इत्यनुवृत्त्या वा पदविधित्वेन समर्थपरिभाषोपस्थानात् । सुपेत्यननुवृत्तावातिप्रसङ्गमाह यद्येवमिति । "कुगति"इत्यनेन । "अतिङ्" इत्यनेन तिङन्तस्यैव प्रतिषेधइति तात्पर्यम् । ततश्चैकस्वर्यादिप्रसङ्गः । न च "अतिङ्"इत्यस्य पर्युदासत्वेन तिङ्भिन्नप्रत्ययान्तः समास इत्यर्थान्न दोषः । प्रपिपठिषतीत्यादौ 'प्रकृष्टा पठनेच्छा' इत्याद्यर्थके सन्नन्ते धातुनोपसर्गस्य समासापत्तेर्दुर्वारत्वात् । तिङ्भिन्न कृत्प्रत्यय एवेत्यत्र तु न मानम् । तथा हि सति "उपपद कृद्"इत्येव सूत्रयेत् । धातुप्रकृतिकत्वातिरिक्तसाजात्यस्य कृत्स्वप्यभावाच्च । प्रत्ययत्व तु सुप्स्वतिप्रसक्तमेव । इदमेव ध्वनयितुमत्र वक्ष्यति–प्रपिपठीति । उपसर्गेण, तत्सञ्ज्ञकशब्देन । ततस्तयो सामर्थ्यमस्ति उपसर्गार्थविशिष्टायाः क्रियायाः साधनेन योगात् । नैतदिति, "पूर्वं धातुरुपसर्गेण"इत्येतन्नास्तीत्यर्थः । अन्यथा "नैष दोष"इत्येव वदेत् । साधनेन, कर्त्तृकर्मरूपकारकेण । साध्यत्वेन प्रतीतस्य पूर्वं साधनाकाङ्क्षोदयेन तत्सम्बन्धस्यान्तरङ्गत्वात् । ततश्च पूर्वं साधनाभिधायिप्रत्ययोत्पत्तिः, पश्चात्साधनसंसृष्ट एव धातुरुपसर्गेण युज्यते न केवल इति, तेन सामर्थ्याभावात्तयोः समासाभावः । तत्र कृदन्तेन समासो भवत्येव, तिङन्तेन तु "अतिङ्" इति निषेधान्न भवति । पूर्वं धातोः साधनेन योगे युक्तिमाह—साधनहीति । क्रियाम्, तत्प्रतीतिम् । निर्वर्त्तयति, निष्पादयति । साध्यत्वप्रतीतेस्तत्सम्बन्धाधीनत्वात् । साध्यत्वेन प्रतीतार्थकयोगे च तेषामुपसर्गत्वादिः । नच धातोः "भू सत्तायाम्" इत्यादितो व्याकरणात् गृहीतशक्तिकस्य तत्प्रतीतिः, कारकसम्बन्धसाध्यत्वात् । उपसर्गस्य तु क्रियागतविशेषद्योतकत्वरूपक्रिया

योगनिमित्तोपसर्गसञ्ज्ञकत्वात् क्रियात्वज्ञानोत्तरमेव सम्बन्धः, तदुत्तरमेव "ते प्राग्धातोः" इति नियमप्रवृत्तेः । ताम्, साध्यत्वेन गृहीताम् । उपसर्गः, तत्सञ्ज्ञकशब्दः । द्योतकत्वेन विशिनष्टि । तत्र युक्तिमाह—अभिनिर्वृत्तस्येति, निष्पन्नत्वेन ज्ञातस्य । विशेषः, विशेषणं प्रकर्षादि प्रजयतीत्यादावुपसर्गेण द्योतयितुं शक्यः । बोद्धारं प्रतीति शेष इति ।

तदेतदभिप्रेत्य संक्षेपेणाह *धातूपसर्गयोरिति । अतएवेत्यस्योक्तार्थं सूचयन् तद्व्यतिरेकमाह *पूर्वमिति । द्योतकत्वे ऽपि स दुर्निवार इति शङ्कते *नचेति । मात्रपदेन तिङ्व्यवच्छेदः । *इतीति । लकाराणामपि कारकार्थकतायाः शास्त्रसिद्धत्वेन तत्सम्बन्धेनैव साध्यत्वबोधे उपसर्गसम्बन्धे सति लावस्थायामिनामित्यर्थः । *तस्य—लत्वावच्छिन्नस्य । *विभक्तीनामिति । तदादेशास्येत्यर्थः । तेषां भावार्थकत्वस्यापि सत्त्वेन तत्प्रतीतावनियामकत्वादिति युक्तिस्तु न युक्ता, तात्पर्येण निर्णयादिति सूचयन्नाह *साधनस्येति । अत एव अध्यैयातामित्यादौ लावस्थायामाड्यपि पूर्वं न वृद्धिः, साधनकार्यस्य आताम एव पूर्वं प्रवृत्तेः, साध्यस्य साधनाकाङ्क्षानैयत्येनान्तरङ्गत्वात् । ततो "वार्णादाङ्गम्" इतीयङि याणि वृद्धाविष्टसिद्धेरिति केचित् ।

वस्तुतस्तत्पक्षे ऽन्तरङ्गत्वाद् वृद्धावेतद्रूपासिद्धिः । कथं चिद् "वार्णादाङ्गम्" इत्याश्रयणे ऽप्यनेकाच्त्वाद्यणापत्तिः । तस्मादध्यैयातामित्यादि छान्दसम् । तत्र हि "बहुलं छन्दस्यमाङ्योगे ऽपि" इति बहुलग्रहणादादेशोत्तरं परत्वादियङि तत आटि वृद्धिरिति बोध्यम् । सामर्थ्यादाह *तिङिति । एतद्भाष्यतात्पर्यं वक्तुं शङ्कते *नचैवमपीति । तिङन्तस्य, तिङ्भाविलान्तस्य च समासवारणे ऽपीत्यर्थः । *समासइति । धातूपसर्गयोः निष्कृष्यैकार्थीभावो न समासादिप्रयोजक इति विशिष्टैकार्थीभावे ऽवयवानामपि तत्सत्त्वादिति भावः । तदाशयमाह *वक्ष्यमाणेति । तिङर्थनिरूपणावसरे इति भावः । *विशिष्टस्य—कालसङ्ख्याकारकादिविशिष्टस्य । पञ्चकं धात्वर्थ इति भावः । *तस्य—अवयवेनासामर्थ्यस्य ।

अयं भावः—तिङन्तेन नैकार्थीभावः, "अतिङ्" इति निषेधात् ।

नापि तदवयवेन प्रत्ययार्थासंसृष्टेन, साधनसंसृष्टार्थस्यैवोपसर्गेण योगात् । तथा च तिङां द्योतकत्वमेवेति ।

नन्वेवमुपसर्गसंबन्धात्प्राक् केवलभ्वासादेः सकर्मकत्वाभावेन कर्मणि लादयो न स्युः, किञ्च सञ्चस्कारेत्यादौ सुटोऽन्तरङ्गत्वं "सुट् कात्पूर्व" इति सूत्रभाष्योक्तं भज्येत, अत आह *तत्रापीति। तिङां द्योतकत्वे ऽपीत्यर्थः । *उपसर्गार्थ-तद्द्योत्यार्थः । *द्योत्योऽपीति । आकाङ्क्षाक्रमेणोपस्थितिक्रमस्यात्रापि सत्त्वात् पञ्चकपक्षे स्वार्थादिक्रमवत् । यथा चैतत्तथोक्तं प्राक् ।

एतेनोपसर्गाणां द्योतकत्वे ऽप्युपास्यत इत्यादौ सकर्मकत्वाय तद्द्योत्यार्थस्य साधनसंबन्धात्पूर्वमेव धातुना बोधनावश्यकत्वेनोपसर्गेण पूर्वयोगस्यावश्यकत्वेन सामर्थ्यस्य सत्त्वेन धातूपसर्गयोस्तत्रैव समासो दुर्वार इत्यपास्तम् ।

तदुक्तम् "उपपदम्" इत्यत्र कैयटेनोक्तप्रथमाशङ्कासमाधित्वेन 'अनुभूयते सुखम्, उपास्यते गुरुरित्यादौ केवलधातुरेव सकर्मिकां क्रियां वक्ति, उपसर्गस्तु द्योतकः श्रोतृबोधाय पश्चादेव सम्बध्यते इति नास्ति कश्चिदस्मिन्पक्षे दोष' इति ॥ २१ ॥

प्रपिपठिषतीत्यादौ "समानकर्तृकाद्" इत्युक्तेः सनर्थसाधनेनैव प्रकृतेरपि तदाकाङ्क्षाशान्तेः सनैकार्थीभावात्, तद्विशेषणत्वाच्च प्रकृत्यर्थस्य तदुत्तरं प्रादियोग इति न समासः । इतो ऽप्युपसर्गाणां वाचकत्वं निरस्तम् । विशिष्टाया एव क्रियाया इषिकर्मत्वस्य प्रतिपाद्यतया सापेक्षत्वेनासामर्थ्यात्सनुत्पत्त्यनापत्तेः ।

"निर्विशः" इत्यादेर्नेः परत्वयोग्याद्विशेरित्यर्थः । "सम्पृच" इत्यादेरपि संपूर्वत्वयोग्यात्पृचेरित्यादिः क्रमेणार्थः । गोसन्दाय इत्यादावपि समुपसर्गद्योत्यार्थविशिष्टाद्धातोः कर्मण्युपपदे बुद्धिस्थे ऽणि ततः समायोगे गतिसमासे उपपदसमासो बोध्यः ।

यद्यप्युपसर्गमुपक्रम्य—

स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा। इति-

उक्तं हरिणा, यथा प्रतिष्ठते इत्यत्र गतिनिवृत्ति-वाचको धातुः, उपसर्गो गतिवाचक इति पुञ्जराजश्च, तथापि तिष्ठतेर्धातुत्वेन यज्यादिवदनेकार्थत्वा-द्धातोरेव गतिरर्थः । प्रशब्दस्तु द्योतक एव, उपसर्ग-त्वात्, प्रपचतीत्यादिस्थप्रशब्दवदित्यार्थिकया—

स्थाऽऽदिभिः केवलैर्यच्च गमनादि न गम्यते ।
तत्रानुमानाद्विविधात्तद्धर्मा प्रादिरुच्यते ॥ इति—

कारिकया,

क्वचित्सम्भाविनो भेदाः केवलैरनिदर्शिताः ।
उपसर्गेण संबन्धे व्यज्यन्ते प्रपराऽऽदिना ॥

इत्यादिना च द्योतकत्वमेवोपसर्गाणां सिद्धान्ति-तम् । तद्धर्म्मा,द्योतकत्वधर्मा । क्वचित्,पचत्यादौ॥२२॥

( कुं० टी० ) *समानकर्तृकादित्युक्तेरिति । समानकर्त्तृ-कत्वसिद्धये उभयोः कर्त्रोरैक्यं प्रतिपाद्यम्, तथाच तादृशपाठ-विषयकेच्छायामेव प्रकर्षो बोध्यते इत्यर्थः । *सनर्थेति । सनर्थ-स्य साधनमिति विग्रहः । *तदाकाङ्क्षा—साधनाकाङ्क्षा । *सनेति । प्रकृतेरिति शेषः । हेत्वन्तरमाह *तद्विशेषणत्वाच्चेति । सनर्थे विशेषणत्वाच्चेत्यर्थः । *विशिष्टायाइति । प्रादीनां वाचकत्वे तु प्रकर्षविशिष्टपाठादीनामिषिकर्मत्वं वाच्यम्, तत्र पाठस्य सापेक्ष-त्वात्सन् न स्यादित्यर्थः । ननु धातूपसर्गयोः पूर्वं योगाभावे कथं

१ उभयनिरूपितकर्त्रोरित्यर्थः ।

"नेर्विंशः" इति, तत्राह *योग्यादिति। *सम्पृचेत्यादेरिति। "सम्पृचानुरुधाङ्–"इति णिनिविधेः। *गोसन्दायइति। अत्रापि उपसर्गयोगे भाविनि दाधातोरण्, ततो दाय–संशब्दयोः समासे गवा समास इत्यर्थः। *बुद्धिस्थेइति। कर्मत्वस्य क्रियानिरूप्यत्वादिति भावः। *स वाचकइति। न केवलमुपसर्गो द्योतकः किन्तु वाचको ऽपि, तिष्ठतेर्गतिनिवृत्तिवाचित्वे ऽपि प्रतिष्ठते इत्यत्र गतिबोधेन विशेषसम्भवात्। *यज्यादिवदिति। तत्र पूजादानाद्यनेकार्थत्वस्य सुप्रसिद्धत्वात्। *प्रपचतीति। अत्र आदिकर्मद्योतकत्वं प्रशब्दस्य। *स्थादिभिरिति। केवलैस्तिष्ठत्यादिभिर्यत्र गमनं न प्रतीयते तत्र तद्द्योतनाय प्रादिः प्रयुज्यते इत्यर्थः। *तत्रानुमानाद् द्विविधादिति। प्रशब्द आदिकर्मद्योतकः प्रशब्दत्वात्, प्रपूर्वोदितगत्यादिदृष्टप्रशब्दवदित्येकेनानुमानेनोपसर्गाणां द्योतकत्वम्, तिष्ठतिरनेकार्थः धातुत्वादिति द्वितीयेनानुमानेन धातूनां नानार्थत्वम्। सम्भवन्तोऽपि भेदा यत्र केवलधातुभिरप्रतीतास्तत्रोपसर्गा व्यञ्जका इत्यर्थः॥ २२॥

(क० टी०) उक्तमेव ध्वनयन् भाष्याद्यनुक्तत्वान्न्यूनतानिरासायान्यत्रापि समासापत्तिं वारयति *प्रपिपठीति। इत्यादावपीत्यर्थः। *सनेति। प्रकृतेरिति शेषः। तथा च न केवलधातुनोपसर्गस्य सामर्थ्यमिति न तयोः स इति भावः। नन्वेवमपि सन्नन्तेनैवास्त्वत आह *तत्तद्विशेषेति। तथाच प्रधानकार्योत्तरमित्यर्थः। अस्याशय 'अयम्भाव' इत्यनेन व्याख्याने उक्त एव। नच"कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम्। सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म, सोपसर्गस्य हि कर्मत्वे धात्वधिकारे ऽपि सनो विशिष्टविषयेच्छाया एव बोधनीयत्वादविधानमकर्मत्वाद्" इति। "एतश्चात्र युक्तं यत्सोपसर्गं कर्म। न च सनो ऽनुत्पत्त्यापत्ति। कर्मण इति पष्ठी, कर्मणो ऽवयवाद्धातोरित्यर्थात्। केवलात्तु व्यपदेशिवद्भावेन। महान्त पुत्र-

मिच्छतीत्यादौ विशिष्टकर्मणो ऽवयवात्सुबन्तात्तु क्यज् न, सापेक्षत्वेनासामर्थ्याद्'' इति च सन्सूत्रस्थवार्त्तिकभाष्यविरोध इति वाच्यम् । सोपसर्गमित्यस्योपसर्गद्योत्यार्थविशिष्टमित्यर्थेनाद्यदोषाभावात्, अग्रिमग्रन्थस्त्वेकदेशिन इति सोऽप्यदोषः । तदुक्तं कैयटेन-'धातुरेव विशिष्टां क्रियामाह, उपसर्गस्तु द्योतक इति सापेक्षत्वाभाव इति । तदेतद् ध्वनयन्नाह *इतोऽपीति । अस्यार्थमाह *विशिष्टायाइति । एतेन 'इषिकर्मत्वमिह विशिष्टाया एव क्रियायाः प्रतिपाद्यमिति पूर्वमुपसर्गेण सम्बन्धाद्धातुग्रहणाभावे विशिष्टात् सन आपत्तिः' इति तत्रत्यकैयटोक्तमपास्तम् । अत्रैव धातूपसर्गयोः समासापत्तेः । भाष्यं तु उक्तसर्वभाष्याविरोधेनैव व्याख्यातम् ।

नन्वेवमपि निविशते इत्यादौ तयोः समासापत्तिस्तयोर्मिथः सम्बन्धमुपजीव्यैवात्मनेपदविधानेन ततस्तस्य पूर्वमावश्यकत्वादत आह *नेर्विश इति । आदिना "परिव्यवेभ्य", "विपराभ्यां जेः" इत्यादिपरिग्रहः । यद्यप्यत्र षष्ठ्या निद्योत्यार्थविशेषार्थप्रतिपादकादित्यर्थेन निर्वाहस्तथाप्यग्रिमसूत्रानुरोधेनाह *ने परत्वेनेति । *इत्यर्थः-क्रमेणेत्याद्यर्थः । तथाच तत्सम्बन्धात्पूर्वमेवात्मनेपदप्रवृत्तिरिति न दोषः । तत्र षष्ठ्यर्थे पञ्चमीकल्पने तु गौरवम् । स्पष्टं चेदं "नेर्विश" इत्यत्र भाष्ये । एतेन सुटो ऽपि सपरिभ्यामुपसृष्टस्येत्यर्थेन, ताभ्यां परत्वयोग्यस्येत्यर्थेन वा समो योगात्पूर्वमेव सुडित्येवमन्तरङ्गत्वं सूचितम् । नन्वेवमपि विभक्त्यभावेन समुदायोच्चारणेन विधेः संस्पर्कीत्यादौ तयोः समासापत्तिरत आह *सपृचेत्यादेरपीति । उक्तभाष्याविरोधायोक्तरीत्या सूत्रे द्वयोरनुकरणेन षष्ठीसमास इति भावः । आयतस्तू' कटप्रूरजस्रमित्यादौ तथा सत्त्वे ऽपि धातूपसर्गयोः क्वापि स नेति तात्पर्यम् । उक्तरीत्या "सम्प्रसारणाच्च" इति भाष्यरीत्या चेष्टमपि सिद्धान्ते सिध्यतीत्याह *गोसन्दाय इति । *विशिष्टात्-तद्विशिष्टार्थप्रतिपादिकात् । पूर्वमसम्बन्धायाह *बुद्धिस्थेइति । ईदृशे स्थले ऽयमेव साधुत्वान्वाख्यानप्रकार इति सर्वतात्पर्यम् । एवं हरिसमतभाष्यसिद्धान्ते हरिविरोधं हर्युक्त्यैव परिहरति *यद्यपीत्यादिना सिद्धान्तितमित्यन्तेन । तत्त्वस्य स्पष्टत्वाद्वाचकमात्रोदाहरणमाह *यथाप्रतिष्ठते इति । भूवादिसूत्रभाष्योक्तमेव । *तिष्ठतेरिति । स्थाधातोरित्यर्थः । *इत्यर्थिकया-इतितात्पर्यिकया ।

चेतनविशिष्टैर्गम्यत इत्यस्य समुच्चयः। एवमन्वयव्यतिरेकयोः सत्त्वेऽपि न वाचकत्व तयोर्द्योतकतयैवोपपत्तेरित्याह *तत्र–तत्प्रतीतिविषये इत्यर्थः। *द्विविधात्–अन्वयव्यतिरेकिणः। पूर्वोक्तमीदृशमेव। प्रादिरुपसर्ग एवेत्याह *क्वचिदिति। *भेदा·–विशेषाः प्रकर्षादयः। तत्र हेतुमाह *उपसर्गेति। यत इत्यादिः ॥ २२ ॥

यत्र तु भावे प्रत्ययः तत्राप्यन्तरङ्गत्वाद्भिन्नपदोपात्तकर्त्रादिना साधनांशे निराकाङ्क्षत्वे उपसर्गयोग इति तत्रापि न समासः। अत एव "णेरध्ययने" इत्यादि सङ्गच्छते। अध्यागच्छति, पर्यागच्छतीत्यादावागच्छतीत्यस्मादेव गमनस्यावगत्या लौकिके शब्दव्यवहारे लाघवानादरात्स्पष्टार्थमेवाधिपर्योः प्रयोगः इति संभूयार्थबोधकत्वात्समुदाय एव विशिष्टार्थबोधक इति। उपसर्गस्यानर्थकत्वमर्थान्तराबोधकत्वादिति बोध्यम्।

क्वचित्तु क्रियागतविशेषबोधकातिरिक्तनिपातानां वाचकत्वमपि। अतएव 'न' इत्यतो ऽभावबोधः, 'कस्य' इति जिज्ञासा च दृश्यते ऽभावशब्द इव।

किञ्च 'पर्वताद् आ' इत्यादौ पर्वतादर्वागित्यर्थप्रतीतेस्तत्र वाचकत्वमेवेति निरुक्ते स्पष्टम्। द्योत्यत्वे हि पञ्चमी न स्यात्तस्य विशेषणता च स्यात् ॥ २३ ॥

(कुं० टी०) ननु स्थीयते इत्यादौ धात्वर्थस्यैव बोध्यत्वाद्धातूपसर्गयोः समासो दुर्वार इत्यत आह *यत्रत्विति। *आगमनस्येति। उपरिभावविशिष्टस्य, सर्वतोभावविशिष्टस्यच आगमनस्य प्रकरणादेवावगत्येत्यर्थः। *सम्भूय–मिलित्वा ॥२३॥

(क० टी०) नन्वेवमपि प्रत्ययो ज्ञानमित्यादौ भावप्रत्यये

उक्तरीतेरसम्भवात्तयो समासापत्तिरेवेति अत आह *यत्र-त्विति । तुरुक्तवैलक्षण्ये । समानपदोपात्तसाधनस्थले तथा, अत्र तु भावार्थकत्वेनान्तरङ्गत्वात् घञादौ प्रोक्तरीत्यैवागत्या बाह्यसाधनसम्बन्धेन क्रियात्वावगतौ उपसर्गसम्बन्ध इत्यर्थ'।तदाह *अन्तरङ्गत्वा-दिति।*निराकाङ्क्षत्वे सति।एवञ्च"वार्णादाङ्गम्"इतिन्यायेन गुणे यणा रूपसिद्धिस्तदाह *अतएवेति।तत्र तथाऽङ्गीकारादेवेत्यर्थ ।*आदिना प्रत्यय इत्यादि।"सम्प्रसारणाच्च"इति सूत्रभाष्य तु समानपदोपात्तसा-धनविषयमिति न तद्विरोध'।एतेनात्र पूर्वमुपसर्गसम्बन्धे ऽपि "अध्य-यने"इत्यादिनिर्देशैः पूर्वं तत. साधनकार्यप्रवृत्तिरिष्यते इति हरदत्ता-द्युक्तम्, उपसर्गाणां वाचकत्वमेवास्तु स्वस्वयुक्तेत्याद्युक्तमेव क-र्मत्व सकर्मकत्व चेत्यनुभूयत इत्यादौ कर्मणि लादिसिद्धिरिति न व्योक्त चापास्तम् । तत्रैव धातूपसर्गयो. समासापत्ते. । नन्वभ्याग-च्छतीत्यादावभ्यादेरनर्थकत्वव्यवहारः सोऽत्रासङ्गतः । क्रियानिरूपि-तसम्बन्धविशेषद्योतकत्व विना कर्मप्रवचनीयत्वस्य दुर्वचत्वात् । किञ्च तत्त्वे क्रियाविशेषणीभूतार्थद्योतकत्वमेव क्रियायोग सच नेति तस्य गत्याद्यपवादत्वस्य दुर्वचत्वादत आह *अभ्यागच्छतीति । आङस्तद्गतविशेषद्योतकत्वमस्तीत्याह *आगच्छतीति । एतेन वैपरीत्य निरस्तम् । तत्प्रयोगासङ्गतिं परिहरति *लौकिके इति । अन्यथा कलशादिप्रयोगो न स्यात् । गतित्वादिप्राप्तये आह*सम्भूये-ति । स्थितयोरिति शेषः । तत्प्रयोगे इति भाव. । *उपसर्गस्येति । तत्त्वाद्यभिमतस्याधिपर्यन्यतरस्य, तत्त्ववत आङश्चेत्यर्थः । *अर्था-न्तरेति । आङ्द्योत्यार्थतोऽन्यार्थेत्यर्थः । कर्मप्रवचनीयसञ्ज्ञा तु वच-नसामर्थ्यादिति तात्पर्यम् । एवमुपसर्गाणां द्योतकत्व तत्समकक्षत-दन्यनिपातानां चोक्तम्, चादीनां वाचकत्वे परोक्तदूषणखण्डनेन तेषां तत्त्व चोक्तम्, तद्विशदयति *क्वचित्त्विति । घटश्चेत्यादावित्यर्थः । प्रादेरपि सग्रहाय *निपातानामिति । द्योतकत्वस्यापिना सग्रहः । तच्च व्यवस्थित बोध्यम् । इदमेवोदाहरणान्तरप्रदर्शनेन पोषयति *अत-एवेति । तेषां वाचकत्वादेवेत्यर्थः । अस्य दृश्यते इत्यत्रान्वयः । तेनानु-भवोऽत्र प्रमाणमिति सूचितम् । *शब्देइति विषयसप्तमी । निपाता-नामित्युक्तिं सफलयन्नाह *किञ्चेति । *नस्यादिति । तथासति तस्य प्रकृत्यर्थतया तस्यादिकृशब्दत्वेन तद्योगाभावादिति भावः । ननु

द्योत्यार्थेनैव तत्त्वमस्तु प्राग्वदत आह *तस्येति । अर्वागित्यस्येत्यर्थः ॥ २३ ॥

अत एव "स्त्रियाम्" इतिसूत्रे स्त्रीत्वस्य प्राधान्ये वचनानुपपत्तिमाशङ्क्य द्योतकतापक्षेण समाहितम् । अत एव च "हेतुमति च" इतिसूत्रे भाष्ये द्योतकतापक्षे 'हेतुमति' इत्यस्य प्रकृत्यर्थविशेषणत्वमुक्तम् । "स्त्रियाम्" इति सूत्रे च 'स्त्रियाः प्रकृतिविशेषणत्वाद्' इत्यनेन स्त्रीशब्दार्थस्य प्रकृत्यर्थविशेषणत्वादित्यर्थकेन द्योतकतापक्ष उक्तः ।

तदुक्तं हरिणा—

निपाता द्योतकाः केचित्पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥ इति ।

केचिदित्युभयान्वयि—केचित्पृथगर्थाभिधायिनः वाचकाः, केचिदनर्थका एवेत्याह—आगमा इवेति, इति तदर्थः ।

प्रातिशाख्ये ऽपि—

नामाख्यातमुपसर्गो निपातः
चत्वार्याहुः पदजातानि शाब्दाः ॥
तन्नाम येनाभिदधाति सत्त्वम्
तदाख्यातं येन भावं सधातुः ॥
उपसर्गा विंशतिरर्थवाचकाः
सहेतराभ्यामितरे निपाताः ॥
क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम निपाताः पादपूरणाः ॥ इति ।

"सधातुरित्यत्र तृतीयार्थे प्रथमा । इतराभ्यां नामा-

ख्याताभ्यां सह। अर्थवाचका इत्यस्य मध्यमणिन्यायेन सम्बन्धः । इतरे नामाख्यातेभ्यो ऽन्ये निपातास्तथा-ज्ञेयाः । उपसर्गो विशेषकृदित्यनेन तेषां द्योतकत्वं दर्शयति । पादपूरणाः पादपूरणा अपि इत्यर्थः" इति तद्भाष्यम्। थाल्जातीयरूकनो ऽत्यन्तस्वार्थिकाः, नतु ते प्रकृतेः प्रकारवद्वृत्तित्वद्योतकाः प्रत्ययं विना ऽपि यो 'हरिः स हरः' 'सिंहो माणवक' इत्यादौ प्रकृ-तिमात्रात्तदर्थबोधनात् । अतएवैषां नित्यत्वं नो-क्तमाकरे ।

एतेन तत्र द्योत्यार्थस्य विशेष्यताऽस्त्येवेति द्यो-त्यत्वे विशेषणत्वापत्तिरित्ययुक्तमित्यपास्तम्। "जा-त्यन्ताच्छ बन्धुनि" इतिच्छस्तु आश्रयरूपबन्धुवा-चक एव । "प्रागदिश" इत्यारभ्य स्वार्थिकत्वं तु प्रायेणेति बोध्यम् ।

एवं "देवतान्तात्तादर्थ्ये यद्"इन्यादेरपि । "तत्प्र-कृतवचने मयट्" इत्यत्राकरे स्पष्टमिदम् ।

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव। इत्यादौ तु द्योतकता । अन्यथा उस्रसदृशस्य करणत्वे ऽपि उस्रस्याकरणत्वादुस्रपदोत्तरतृतीयाया नैरर्थक्यमसा-धुत्वं च स्यात् । इवशब्दात्तृतीयाऽभावेन सदृशस्य करणत्वालाभश्च स्यात् । इवशब्दोत्तरं सर्वविभक्ति-लुक्सत्त्वे ऽपि न ताः सार्थिकाः । विभक्त्यर्थाप्रधान-निपातार्थस्य कारकत्वेनानन्वयात् ॥ २४ ॥

( कुं०टी० ) *वचनानुपपत्तिमिति । स्त्रीत्वे संख्याद्य-

भावात् । *निपाता द्योतका इति । घटश्च पटश्चेत्यादौ पृथगर्थाभिधायिनो निपाता द्योतकाः, अध्यागच्छतीत्यादौ सम्भूयार्थस्य वाचकास्तु अनर्थका एव । वाचकत्वं तु निपातानां नास्ति ।

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः । इति—

हरिणैव निराकृतत्वादिति पुञ्जराजस्वरसः । मूलकारस्तु केषा चिद्वाचकत्वं स्वीकृत्य केचिद् द्योतकाः, केचित्तु पृथगर्थाभिधायिनो वाचका इति व्याख्यत् । *तृतीयार्थे इति । धातुसहितेन येनेत्यर्थ इति भावः । *इतरे निपाताः—उपसर्गभिन्ननिपाताः ॥ २४ ॥

(क० टी०) ननु द्योत्यत्वे ऽपि कुतो न विशेष्यत्वमत आह *अतएवेति । तस्य विशेषणत्वादेवेत्यर्थ । *स्त्रियामिति । चातुर्थिके इत्यर्थः । प्राधान्यात्प्रत्ययविशेषणत्वे आह *स्त्रीत्वस्येति । प्रकृतिप्रत्यययोरिति न्यायात् । *वचनेति । तस्य असत्त्वभूतत्वेन सख्यानन्वयात् । अन्यथा समाधानासङ्गतिस्स्पष्टैव । भाष्यान्तरमप्याह *अतएवचेति । नन्वाद्ये द्योतकतापक्षो न कण्ठत उक्तोऽत आह *स्त्रियामितीति । इदमपि हरिसमतामित्याह *तदुक्तमिति । स्पष्टत्वादाद्यमुपेक्ष्य द्वितीयमाह *केचिदिति । अध्यागच्छतीत्याद्याशयेनाह *केचिदनर्थकाइति । दृष्टान्तलब्धामिदम् । *सम्भूयेत्यत्र स्थिता इति शेषः । वाचकपद बोधकपरम् । क्वचित्तथापाठ एव । तथाच केऽपि ते यतः सम्भूय स्थिता अर्थस्य बोधका अतो आगमा इव स्युरनर्थका एवेत्यर्थो बोध्यः । *प्रातिशाख्येति । द्वितीयाध्यायसमाप्तौ । जात समूहः । तान्येवादावुक्तानि । अत्र सर्वत्र प्रयोक्तु' कर्त्तृत्वम् । *सत्त्वम्—द्रव्यम् । अनेनाव्ययेषु नामत्वाभाव स्पष्टमेवोक्तः । उक्तमेव विशदयति *क्रियावाचकमित्यादि । क्रियेत्यनेन भावपदार्थ उक्त । आख्यातपदवाच्यत्व न प्रत्ययस्य किन्तु विशिष्टस्येति च स्पष्टमुक्तम् । *प्रथमेति । धातुसहितेन वक्ता क्रियामभिदधातीत्यर्थः । इतराभ्यामित्यस्य प्रक्रान्तपरत्वमित्याह *नामेति । इतरेइत्यस्यार्थमाह *नामेति । ब्राह्मणवसिष्ठन्यायलब्धामिदम् । *तथा—ताभ्यां सहार्थवाचका ।

पूर्वतो विशेषमाह *उपसर्गइति । *पूरणा अपीत्यपिना द्योतकत्वादिसंग्रहः । द्योत्यार्थस्य प्रकारत्व व्यभिचरितामिति खण्डनायाह *थालिति । तत्त्वमेव सविशेष विशदयति *नत्विति । प्रकारविशिष्टवृत्तित्वेत्यर्थ । *प्रत्यय–जातावेकवचनम् । आद्य-द्वयव्यतिरेकमाह *योहरिरिति । अन्त्यव्यतिरेकमाह *सिंहइति । *अतएव–तद्द्योतकत्वादेव । कैयटादिसंग्रहायाह *आकरेइति । *एतेन–तद्द्योतकत्वेन । *तत्र–थालादिविषये । अन्यत्रापि तद्व्यभि-चारभ्रममन्यथा निराचष्टे *जात्यन्तादिति । *तुरुक्तवैलक्षण्ये । *आ-श्रयेति । जातेर्व्यक्तिरेव वन्धु । *यदितीति । तेन विहितयदादेरपि ताद-र्थ्यादिवाचकत्वमित्यर्थ । तेषां तत्त्वस्य प्रायेणेत्यादिपूरणेन प्रायिकत्वे मानमाह *तत्प्रकृतेति । तत्रहि–'प्रचुरार्थबोधकात्प्रथमासमर्थात्स्वार्थे मयड्" इति पक्षमुक्त्वा, 'प्राचुर्येण प्रस्तुतान्नादिवचनात्प्रथमासमर्था-दधिकरणेऽर्थे मयड्' इति पक्षान्तरमुक्तम् । तेन भवन्मयो ध्यायति नावनीपतिरिति सिद्धम् । तन्त्रेणार्थद्वये सूत्रतात्पर्य व्याख्यानादिति तदाकूतम् । अप्युक्ति सफलयति *शरैरिति । अत एव तुः । *अ-न्यथा–वाचकत्वे । तत्र प्रतियोगिविशिष्टः सदृश इवार्थः । तत्र प्रति योगिन्युस्रस्याभेदेनान्वय', सदृशस्य च शरेष्वभेदेन । तृतीया तूप-मानोपमेययो समानविभक्तिकत्वानियमात् । एवञ्चोस्राभिन्नप्रतियो-गिविशिष्टसदृशाभिन्नैः शरैरित्याद्यर्थस्तत्पक्षेणाह *उस्रसदृशस्ये-ति । सादृश्यमिवार्थः, तत्र प्रतियोगितयोस्रान्वयः, तस्याश्रयतया शरेष्वन्वयस्तृतीया प्राग्वत्, तत्पक्षे तस्य तदभावसमुच्चायकोऽपिः । नैरर्थक्यस्यान्यत्रेष्टत्वादाह *असाधुत्वचेति । आद्यपक्षे आह *इवे-ति । *तृतीयेति । अभावेनेति च्छेद । ननु "अव्ययाद्" इति ज्ञाप-कात्तत्सत्त्वमिति ततस्तद्बोधोऽत आह *इवशब्दोत्तरमिति । श्रवणापत्तिवारणायाह *लुगिति । अव्ययत्वात्तेनैवेति भावः । *सत्त्वेऽपीत्यपिना तत एकवचनसत्त्वे ऽपि बहुवचनाभावसमुच्चय । उस्रपदोत्तरतृतीयया तु न सदृशगत करणत्व बोधयितुं शक्यम् । अप्रकृत्यर्थत्वाद् । तस्माद् द्योतकत्वमेव युक्तमिति भावः ॥ २४ ॥

**भाष्यकृतोऽपि–पस्पशायाम्, "अधिपरी अनर्थकौ" इत्यत्र, नञ्–सूत्रे, "अव्ययं विभक्ति–" इति सूत्रे च द्यो-**

तकत्वं वाचकत्वं वेत्येव स्वरसः । अत एव निर्मक्षिक-मित्यादौ पूर्वपदार्थप्राधान्यं भाष्योक्तं सङ्गच्छते । अत एव संकटं उद्गत इत्यादावुत्समादेः उद्गतसङ्गतरूप-क्रियाविशिष्टसाधनवाचकतोक्ता भाष्ये ।

ननु "शरैरुस्रैः" इत्यत्र द्योतकत्वेऽपि उस्रसदृशैः शरैरित्यर्थे उस्रपदोत्तरं तृतीयाऽनुपपत्तिस्तदवस्था, उस्राणां करणत्वाभावात् । उपमानोपमेययोः समान-विभक्तिकत्वमिति वचनाभावात् ।

यद्यपि उस्रसदृशरूपोस्रपदार्थस्य करणरूपशरैर-भेदान्वयात्सा सुलभा, तथाऽपि सदृशस्योक्तरीत्या विशेष्यत्वानापत्तिरिति चेद् ।

इष्टापत्तेः । तथाहि—इवादीनां स्वसमभिव्याहृ-ते उपमानताद्योतकत्वं उपमानत्वेन प्रतीतेस्तादृश-धर्मवदुपमेयप्रतीतिं विनाऽनुपपत्त्या उभयत्रापि साधारणधर्मबोधे तात्पर्यग्राहकत्वम् ।

उपमानत्वं च साधारणधर्मवत्त्वेनेषदितरपरिच्छे-दकत्वम् । तद्धर्मवत्तया परिच्छेद्यत्वं चोपमेयत्वम् । इदम् "उपमानानि" इतिसूत्रे भाष्ये स्पष्टमित्यन्यत्र निरूपितम् ।

उभयत्रापि साधारणधर्मान्वय इति लिङ्गभे-दाद्युपमादूषणानिरूपणावसरे दशमशेषे काव्यप्रका-शादौ स्फुटम् ।

एवं च 'चन्द्र इव मुखमाल्हादकम्' इत्यादौ 'आल्हादकोपमानभूतचन्द्राभिन्नमाल्हादकं मुखम्' इत्यादिरीत्या बोधः ।

एवं चोपमानस्योपमेयेन समानविभक्तिकत्वं तेनाभेदान्वयात् ।

साधारणधर्मसम्बन्धश्च विशेषणतया क्वचित् यथोदाहृते । क्वचिद्विशेष्यतया यथा—'चन्द्र इव मुखमाल्हादयति' इत्यादौ। अत्र हि 'उपमानचन्द्रकर्तृकाल्हादाभिन्नो मुखकर्तृक आल्हाद' इति बोधः ॥२९॥

( कुं० टी०) ननु इवशब्दात् तृतीयालुकेष्टसिद्धिरत आह—*न ताः सार्थिका इति । औत्सर्गिकत्वादिति भावः । *अतएव-वाचकत्वादेव । *उद्धतइति । अत्र हि उद्धतमनस्कवृत्तेः उच्छब्दाद्वृतिप्रत्ययः। *करणत्वाभावादिति । सदृशानामेव करणत्वात्। ननूपमानसमानविभक्तिकत्वं सिद्धमत आह *वचनाभावादिति । *विशेष्यत्वानापत्तिरिति । द्योत्यत्वात् । *इष्टापत्तेरिति । विशेष्यत्वाभावे इत्यादिः । *तादृशेति । साधारणधर्मवद् यद् उपमेयं तत्प्रतीतिं विना उपमानत्वप्रतीतेरभावादित्यर्थः । *उभयत्र—उपमानोपमेययोः । *उपमानत्वञ्चेति । साधारणधर्महेतुकपरिच्छेदकरणत्वमुपमानत्वमित्यर्थः । *ईषदितरेति । स्वल्पभेदवदित्यर्थः ॥ २९ ॥

( क० टी०) उभयत्र तेषां भाष्यसमतिमाह *भाष्येति । यथाचैतत्तथा तत्र स्फुटम्।तत्राद्ये "शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्"इत्युक्तम् । एवमन्यत्रापि तत एव बोध्यम् । *अत एव-तेषां वाचकत्वादेव । एवमग्रेऽपि । अव्ययीभावत्वादाह *पूर्वेति । द्योतकत्वे द्योत्यार्थेन पूर्वपदार्थत्वे ऽपि तस्य प्रागुक्तरीत्या प्राधान्यं दुर्घटमेवेति भाव. । अत एव चेतिपाठ. । सङ्कटे सङ्गतमित्यर्थे "संप्रोदश्च" इति कटच् । उद्धत इत्यत्रोद्धतानीत्यर्थे "उपसर्गाच्छन्दसि" इति वतिः । *उद्धतइत्यादि—समादेरित्यादिभ्या निवत इत्यादौ न्यादिसंग्रहः । रूपमित्यस्य साधनेऽन्वयः । *भा-

ष्ये इति । "गतिश्च" इत्यादिसूत्रेष्विति भाव. । तद्विना तस्य दुर्वचत्वेन ततः पूर्वं तदनुक्तावपि तदुत्तर सूचीकटाहन्यायेनान्य-दुक्त्वा सिंहावलोकनन्यायेन तत्र सिद्धान्ते शङ्कते *नन्विति । *इत्य-र्थेइति । वक्ष्यमाणार्थे तु नानुपपत्तिरिति भावः । पदसंस्कारपक्षेणाह *उक्तेति । परोक्तिं खण्डयति *उपमेति । वाक्यसंस्कारपक्षेणाह *य-द्यपीति। *सेति। परोक्तमपि नानुशासनालभ्य किन्तूपमेयेनाभेदान्वय मूलकमेव । योऽन्येनाभेदमापन्नस्स तत्समानशक्तिक इति व्याप्ते । एवञ्च प्रागुक्तद्वितीयपक्षोऽसङ्गत एवेति भाव.। *उक्तेति । द्योत्यार्थस्य प्रका रत्वमेवेति प्रागुक्तरीत्येत्यर्थ । तथाचोक्तबोधासम्भव इति भावः। कथ तर्ह्यर्थोऽत आह *तथाहीति। *इवादीत्यादिना यथादि। न ताव न्मात्रमित्याह *उपमानत्वेनेति । स्वसमभिव्याहृतस्येत्यादि'। *तादृ-शेति । उभयसाधारणधर्मविशिष्टोपमेयेत्यर्थ । तत्कृतमेव हि तत्त्व-मिति भावः । ननूपमानत्वस्योपमेयानिरूपितत्वेन तन्मात्रप्रतीतिं विना तदनुपपत्तावपि न विशिष्टतत्प्रतीतिसापेक्षत्वमिति कथम-न्त्यसिद्धिरत आह *उपमानत्वं चेति । वैशिष्ट्यं तृतीयार्थः। अत एव सर्वांशेन तत्त्वासम्भवादाह *ईषदिति । नन्वत्रैव किं मानमत आह *इदमिति । तत्रहि "किं सर्वथा भेदे उपमानोपमेयभाव उताभेदे" इति प्रश्ने उभयत्रापि साधारणधर्मासम्भवाद्गौरिव गौर्गौरिवाश्व इत्यादौ उपमावाचकेवादेर्नैरर्थक्यापत्तिमुक्त्वा "यत्र विशेषरूपेण भेदावगतिः साधारणधर्मरूपेणाभेदावगतिस्तत्र स" इत्युक्त्वा "कथमेतज्ज्ञातम्" इति शङ्कायां "हीनं मानमुपमानं यन्नात्यन्ताय मिमीते इत्यर्थको पमानव्यवहारादेतन्निर्णीतम्" इत्युक्तम् ।

तस्यायम्भावः—प्रस्थादि हि साकल्येन मानमिति तद् अत्यन्तभे-देनैव परिच्छेदकम् । प्रस्थ. परिमाणमस्येति प्रस्थो व्रीहिरिति वा । इदं तु हीनमिति भेदाभेदाभ्यामेव परिच्छेदकमिति । अत्यन्तायेत्य-व्ययमत्यन्तमित्यर्थः। तदाह *अन्यत्रेति । उद्योतगुरुमञ्जूषयोरित्यर्थः। एतेनोपमानत्व चोपमानिरूपकत्वेन विवक्षितत्वम्, तदाश्रयत्वेन विव-क्षितत्वं चोपमेयत्वमित्यपास्तम् ।

अन्त्यमालङ्कारिकसमतमपीत्याह *उभयत्रेति । तद्बोध इत्य-र्थः । *लिङ्गेति । लिङ्गभेदादिरूपोपमादोषेत्यर्थ । *आदिना वच-नभेदः । *प्रकाशादौ—तत्राप्यादिना प्रदीपादि ।

तत्र हीत्थमुक्तम्–"लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं धर्मं चेद् अन्यरूपं कुर्यात्तदैकतरस्यैव तद्धर्मसमन्वयावगते सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेनापि धर्मेण प्रतीयेतेति प्रक्रान्तार्थस्य स्फुटमनिर्वाहात्तस्य भग्नप्रक्रमरूपत्वम् । यथा—

चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे ।
सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव" इति ।

तत्र बोधं सूचयन् व्यस्ते बोधमाह *एवचेति । तस्य तद्द्योतकत्वे चेत्यर्थः । 'अरविन्दमिव सुन्दरं वदनम्' इत्यादौ सुन्दरोपमानभूतारविन्दाभिन्नं सुन्दरं वदनमित्यादिबोधसंग्राहकं आदिः । एतेन 'चन्द्रनिरूपितसादृश्यप्रयोजकाह्लादवदभिन्नं मुखम्' 'अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं वदनम्' इत्यादिबोधा निरस्ताः । अस्यावश्यकतामाह *एवञ्चेति । इवादिसमभिव्याहारे इति भावः । *विभक्तिकत्वम्–तन्नियमः । अस्यार्थमाह *तेनेति । विशेषमाह *साधारणेति । *इतिबोधइति । अतोऽत्रापि तयोः समानविभक्तिकतैवेति भावः । एवं 'गज इव गच्छति चैत्रः' इत्यादौ बोध्यम् ।

'वनं गज इव शूरः समरभूमिं गच्छति' इत्यादौ 'उपमानगजकर्तृकवनगमनाभिन्नं शूरकर्तृकसमरभूमिगमनम्' इति बोधः । अत्र साधारणधर्मरूपगमनस्य विधेयतयोपमाविधेयिका धीः । 'व्याघ्र इव यः पुरुषः स गच्छति' इत्यादौ 'उपमानव्याघ्राभिन्नशूरपुरुषकर्तृकं गमनम्' इति धीः । शूरत्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धीरित्यादि ॥ २५ ॥

ये त्वत्र 'चन्द्रसादृश्यप्रयोजको मुखकर्तृक आह्लाद' इत्यर्थं वर्णयन्ति, तेषां तयोः समानवचनकत्वं दुर्लभम् । वचनं तु तादृशं न व्याकरणे उपलभ्यते । तत्र यद्यपि चन्द्रमुखयोस्तत्त्वेन भेदस्तथापि विशेषणतया प्रतीतसाधारणधर्मनिमित्ताभेदोपचारेणाभेदः । अत एव 'भेदाभेदप्रधाना उपमा' इति वृद्धाः । चन्द्रमुखयोः

सादृश्यप्रतीतिस्त्वार्थ्येवेति बोध्यम् ।

इदमेव युक्तम् । घनश्याम इत्यादौ विग्रहे समासे च घनशब्दस्य तत्सदृशपरत्वे "उपमानानि सामान्यवचनैः" इत्यनेनोपमानत्वेन बोधकानि सामान्यधर्मविशिष्टोपमेयवचनैः समानाधिकरणैः समस्यन्ते इत्यर्थकेन समासानापत्तिः, घनपदस्याप्युपमेयपरत्वेन उपमानवाचकत्वाभावात् । न च भूतपूर्वगत्या तत्त्वम् । तद्विग्रहवाक्ये ऽप्युक्तरीत्या तत्त्वाभावात् । घनेन तुल्य इत्यत्र तथात्वे ऽपि तस्य विग्रहत्वाभावात् । प्रत्यासत्त्या तत्र वृत्तौ तद्विग्रहवाक्ये चोपमानवाचकत्वस्य ग्रहणौचित्यात् । तस्य तद्विग्रहत्वे 'मृगचपला' इत्यादौ पुंवत्त्वानापत्तिः । वृत्तौ विग्रहे च सामानाधिकरण्ये एव तत्प्रवृत्तेः ।

एतेन पूर्वावस्थाऽऽश्रयेण शक्त्या उपमानवाचित्वमिति कैयटः परास्तः ।

केवलशस्त्रीपदप्रयोगे तु सर्वथोपमानवाचित्वं दुरुपपादम् । एवं मृग्यादेः सादृश्यसम्बन्धेनान्वये ऽपि तदनुपपत्तिः । किञ्च श्यामशब्दस्योपमेयपरतया घने तदन्वयाभावेन तस्य साधारणधर्मवैशिष्ट्येनेतरपरिच्छेदकत्वरूपोपमानत्वाभावः ॥ २६ ॥

(कुं० टी०) *अभेद इति । यदि सर्वथा अभेदे उपमानोपमेयभावस्तदा तद्गतभूयोधर्मपरिच्छेद्यत्वरूपोपमेयत्वस्य तत्रासंभवः । अत एव तयोः सर्वथा भेदो ऽपि न । तस्मात्साधारणधर्मरूपेणाभेदस्तत्तद्रूपेण भेद इति भावः ।

इदं तु चिन्त्यते—उपमानोपमेययोः समानविभक्तिकत्व-नियमे "प्रत्ययोत्तरपदयोश्च" इति सूत्रे "यूयमिवाचरति युष्मद्यते" इति प्रत्युदाहरणासङ्गतिः । अत एव ईश्वर इव मुनय इति प्रयोगो ऽनुभवसिद्ध इति ।

*तत्त्वम्—उपमानत्वम् । *तत्त्वाभावादिति । घनसदृश इत्यस्यैव विग्रहार्थतया तत्राप्युपमानत्वाभावादित्यर्थः । *वि-ग्रहत्वाभावादिति । घनतुल्यसदृश इति रूपापत्तेः ।

अयं भावः-शस्त्रीशब्दो यदि शस्त्र्यामेव वर्त्तते श्यामाशब्दोऽपि तस्यामेव समासेनचोपमेयाया देवदत्ताया अभिधानं तदा शस्त्री-श्यामो देवदत्त इति न स्यात् । अथ श्यामाशब्दो देवदत्तायां वर्त्तते तदा वैयधिकरण्यात्समासो न स्यात् । वचनसामर्थ्या-त्समास इत्युक्तौ तु मृगीव चपला मृगचपलेत्यादौ पुंवद्भावो न स्यात् इति ।

*विग्रहवाक्येचेति । अन्यथा राज्ञी दासीत्यत्रापि पुंव-द्भावापत्तेः । *अस्यैव—श्यामा इत्यस्यैव । *तदनुपपत्तिः—उपमानत्वानुपपत्तिः । *तदन्वयाभावेति । घननिष्ठश्यामत्व-बोधाभावेनेत्यर्थः ॥ २६ ॥

( क० टी० ) परमत दूषयति *ये त्विति । इतिबोध वदन्तीतिपाठ. । एतेन 'अरविन्दमिव वदनं भाति इत्यत्र अरविन्दनिरूपि-तसादृश्यप्रकारकज्ञानविषयो मुखम्' इति बोध इति निरस्तम् । *नोपलभ्यते इति ।

एतेनात्र निपातेवादेरुपसर्गत्ववत द्योतकत्वमेव, कथमन्यथा "शरैरुस्रै." इत्यादावुस्रादिपदोत्तरतृतीयादिसङ्गति । उस्रादेरुद्धरणक्रियां प्रत्यकरणत्वात, इवार्थसादृश्यान्वयित्वेन करणभूतशरविशेष-णत्वाभावाच्च । द्योतकत्वे तूस्रादिपदस्य तत्सदृशपरतयोस्रसदृशैः शरैरिति शरविशेषणत्वेन तृतीयादिसङ्गतिरिति वैयाकरणमततु

न युक्तम्, 'उपास्यते गुरुः' इत्यादौ कर्मत्वानुपपत्तिरूपबाधकस्योप स्योपसर्गस्य वाचकतायामिवेवादिषु वाचकत्वे अभावेन दृष्टान्तवैषम्यात् । विशेषणविशेष्ययो· समानविभक्तिकतायाम्—

विशेष्येण सहैकार्थे भवेद्यत्र विशेषणम् ।
तत्र लिङ्गादय· प्रायो विशेष्यस्था विशेषणे ॥

इत्यनुशासनस्येवोपमानोपमेययोरपि तस्याम्–

लिङ्गसंख्याविभेदेऽपि ह्युपमानोपमेयता ।
विभक्ति· पुनरेकैव उपमानोपमेययोः ॥

इत्यनुशासनस्य सत्त्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थतयोपपत्तेश्च । तस्माद्वाचकत्वमेवेवादीनाम् । अन्यथा सकलालकारिकसमतेवशब्दप्रयोगे श्रौतीत्वस्य दत्तजलाञ्जलित्वापत्तेः। रूढिफलान्यतराभावेन सदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वदोषापत्तेश्च। किञ्चेवादेर्द्योतकत्वे चन्द्राद्युपमानपदार्थैकदेशे तत्र साधारणधर्मान्वयानुपपत्ति·, तस्योपमेयमात्रान्वयाङ्गीकारे च लिङ्गवचनभेदस्य दोषत्वानुपपत्तिरिति वैद्यनाथोक्तमपास्तम् ।

"विशेषणानां च" इत्यादिसूत्रमते आद्यपद्यस्य कल्पितस्योपपत्तावपि प्रामाणिकत्वापत्तेः । अनवस्थापत्तेश्च । किञ्च क्रियागतविशेषबोधकातिरिक्तनिपातेषु पस्पशास्थ–अधिपरी–नञ्–अव्ययविभक्तीत्यादिसूत्रस्थभाष्यस्वरसाद्युक्तेश्चोभयमित्यस्य वैयाकरणमतत्वेन भवदुक्तमतस्यैवाभावात् । तथा कस्य चिदुक्तेस्त्वदुक्तिलयत्वात् । अत एव 'इति वैयाकरणमत तु न युक्तम्'इत्युक्तिरपि 'काकस्य काति वा दन्ता' इतिन्यायायिता । तस्मात् 'शर' इत्यादावुक्तरीत्या द्योतकत्वमेव । एव च 'तस्माद्वाचकत्वमेवेवादीनाम्' इति प्रतिज्ञानमपि शुक्तौ 'इदं रजतम्' इति ज्ञानवदविचारितरमणीयम् । एवम् 'उपास्यते गुरुरितिवदिवादिवाचकतायां बाधकाभावेन दृष्टान्तवैषम्यम्' इत्युक्तिरपि सिद्धान्ताज्ञानविलसिता । किञ्च इवादिप्रयोगे साधारणधर्मसम्बन्धरूपोपमाया वाच्यत्वेन सर्वालङ्कारिकसमतश्रौतीत्वोपपत्तेः। सादृश्यप्रतीतिस्त्वार्थ्येवेति स्फुटमग्रे। अत एव–"सदृशे लक्षणा न" इति निषिद्धलाक्षणिकत्वापत्तिरूपदोषवद् "किञ्चेत्याद्युक्तदोषोऽपि नेति दिक् । *तत्र–चन्द्र इव मुखमित्याभ्याम् । ननूभयो· साधारणधर्मवत्त्वेनाभेदप्रतीतावपि ततो निर्वाहः कथ "सादृश्य·

धियोऽत आह *चन्द्रेति । नञर्थे प्रतीयमानमनियतधर्मकत्वं प्रतीयेन उपस्थितत्वेन बोध्यधर्मयुतस्यैव प्रत्ययात् । 'गजो वन गच्छतीव शूरः समरभूमिं गच्छति' इत्यादौ क्रियासमभिव्याहृते-वादेः सम्भावनाऽर्थत्वेन न तत्रोपमा । 'गजकर्तृकवनकर्मकगमनक्रिया-सम्भावनाविषयः शूरकर्तृकं समरकर्मकं गमनम्' इति बोधः । नच 'घटो न पश्यति' इत्यतो 'घटभेदं पश्यति' इति बोधवारणाय धात्व-र्थनिष्ठविशेष्यतानिरूपितप्रकारतया बोधं प्रति श्रूयमाणविभक्त्यन्तज-न्योपस्थितेर्हेतुत्वादेतद्बोधानुपपत्तिरिति वाच्यम् । ऋते, भू[illegible]म्, आरात्, पृथग् इत्यादीना धात्वर्थान्वयानापत्तेः । घटो न पश्यतीत्या-देस्तूक्तार्थे न साधुत्वम्, भेदार्थकनञोऽविभक्तिसा[illegible]या घटो न पट इत्येव तत्र प्रयोगात् । अधिकरणप्रयोगं विना निषेधार्थे घटत्वस्याभा-वात् । आरोपितघटत्वस्यापि न तथा ऽन्वयः । धात्वर्थ—[illegible]ना-मार्थोभयविषयकभेदसंसर्गकबोधे विभक्तिसाहित्येन उद्बुद्धसंस्का-रस्य हेतुत्वात् । विशेषणविशेष्यभावापन्नसंसर्गस्य वाक्य[illegible] विनाऽबोधाच्चेति स्फुटमग्रे षष्ठीप्रकरणे ।

एतेन 'हसीव' इत्यादौ सादृश्यस्य स्वर्गङ्गावगाहनाश्रये ऽन्वयः, न त्ववगाहने धात्वर्थे । धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासं-सर्गेण शाब्दबोधे विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात् । नच निपातार्थभिन्नवृत्तित्वेन प्रकारता विशेषणीयेति वाच्यम् । 'घटो न पश्यति' इत्यादौ घटाद्यन्विताभावस्य कर्मतासंसर्गेण दर्शने ऽन्व-यापत्तेः । यदि तु धात्वर्थेऽपि तात्पर्यवशात्सादृश्यान्वयो ऽनु-भवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेना-न्वयबुद्धिं प्रति नञ्जन्योपस्थिते प्रतिबन्धकत्वमात्रं परिकल्प्य 'घटो न पश्यति' इत्यादौ तथा बोधो निवार्य इति तदुक्तमपास्तम् । क्रियान्यसमभिव्याहृतस्यात्यन्ताभावार्थकत्वस्याभावाच्चेत्यग्रे स्फुटी-भविष्यति ।

समासस्थले उक्तप्रकारं विना सर्वथा न गतिरिति तत्र तदावश्यकत्वे तदेकरूप्याय प्रागुक्तव्यस्तस्थलेऽपि तथैवो-चितमिति तत्र तथोक्तं समर्थयते *इदमेव युक्तमित्यादिना । तत्र हेतुमाह *घनेति । यत इत्यादि । *विग्रहे इति । अलौ-किकविग्रहे इत्यर्थः । अन्यथा तस्यान्यार्थकत्वेन विग्रहत्वापत्त्या

तत्र तदर्थान्तर्भावेण समासो न स्यात् । इवस्य तत्राप्यभावात्, अ सामानाधिकरण्याच्चेति भाव । सिद्धान्तमाह *उपमानत्वेनेति । अन्यथा ससम्बन्धिकत्वात् "सामान्यवचनै" इत्येव तेन समासला भे तद्वैयर्थ्यं स्पष्टमेव । स्वपरसाधारणमाह *सामान्येति । अधिकृतमाह *समानाधिकरणैरिति । उपमानपरत्वस्यैवाभावेन तत्त्वेन बोधकत्व सुतरां नास्तीत्याशयेनाह *घनपदेति । *अपिना श्यामप दसग्रह. । "साम्प्रतिकाभावे" इति न्यायेनाह *न चेति । *उक्तेति । तत्रापि तस्य तत्परत्वावश्यकत्वमित्युक्तेत्यर्थः । लौकिकविग्रहे तु इवस्य सत्त्वे ऽपि सामानाधिकरण्याय तस्य तत्परत्वमावश्यकमिति तत्रापि तत्त्वाभाव., तद् ध्वनयन्नाह *घनेनेति । श्याम इति शेष. । *तथात्वेऽपीति । घनत्वेनोपमानबोधकत्वेऽपि व्यधिकरणत्वेन तस्य तदविग्रहत्वादित्यर्थ. । ननु तस्य तदविग्रहत्वे ऽपि अगत्या तत्रत्यमेव तद् गृह्यते ऽत आह *प्रत्यासत्त्येति । *तत्र–तस्याम् । अन्यथा नीलोत्पलादावतिप्रसङ्गापत्ते. । अत एवाह *तस्येति । यत्र समासस्तत्र सामानाधिकरण्यापेक्षा नतु लौकिकविग्रहवाक्ये इति तत्र वैयधिकरण्ये ऽपि यावत्तदर्थबोधकत्वमात्रेणागत्या तत्त्वाङ्गीकारे इत्यर्थः । एवञ्च न समासापत्तिर्दोष. । अत एवाह *पुवत्त्वेति। ननु तदपि समासवत्सुसाधमत आह *वृत्ताविति । अत एव दर्शनीयाया माता दर्शनीयामातेत्यादौ द्वयोरेकविशेष्यकप्रतीतिजनकत्वेन तत्र सामानाधिकरण्ये ऽपि न पुवत्त्वम् । अत एवात्र पक्षे पुवत्त्वासिद्धिर्भाष्ये उक्ता । तद् ध्वनयन्नाह *एनेति । पुवत्त्वासाधनेनेत्यर्थ. । कैयटाशयान्तरमाह *केवलति । इयमेव पूर्वावस्था नतु विग्रहवाक्यघटकत्वावस्था । *सर्वथेति । शस्त्रीत्वेन तस्य बोधकत्वेऽपि नियामकासमभिव्याहारेण तस्य तत्त्वेनाबोधकत्वात् अन्यथाऽतिप्रसङ्गापत्ते. ।

एतेन पूर्वपद तत्सदृशे लाक्षणिकमिति द्योतयितु लौकिकविग्रहे इवशब्दः प्रयुज्यते इति लाक्षणिकमिति । अत एव सामानाधिकरण्यान्मृगचपलेत्यादौ पुवत्त्वम् । कथ तर्ह्युपमानपरत्वमिति चेत् । भूतपूर्वगत्या शक्यार्थमादायेत्यवेहीति । अनतिप्रसङ्गायावश्यकस्योभयत्र सामानाधिकरण्यस्य निर्वाहाय तत्र वाक्ये ऽपि तत् सदृशलाक्षणिकम् इवस्त्वस्यैवार्थस्य द्योतक. । 'घनसमानसदृशः

श्याम' इति बोधः सर्वत्रेति च दीक्षिताद्युक्तम्, अरविन्दसुन्दरमिति समासे त्वरविन्दपदेनारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्न वदनमिति बोध । एकदेशान्वयायोगादरविन्दमेव लक्षणया सर्वार्थबोधक सुन्दरपद तु तात्पर्यग्राहकमित्येके इति तदुक्त चापास्तम् । उक्तरीतिभिः समासाद्यनापत्तेस्तथाबोधासम्भवाच्च । उक्तदोषद्वयमसामानाधिकरण्यादन्यपक्षेऽतिदिशति *एवमिति । तत्र पक्षे इवेत्यर्थ । सादृश्यस्य ससर्गतया भान नतु तद्वत् प्रकारतयेति भावः । *तत्—उभयम् । उक्तरीत्या प्राचां मतेन समासमभ्युपेत्य पुंवत्त्वाभावदोष उक्त । वस्तुतः सिद्धान्तरीत्या सो ऽपि नेत्याह *किञ्चेति । तथाबोधे इति शेष । श्यामत्ववैशिष्ट्येनोपमेयस्यैव प्रतीतेराह *श्यामेति । *तस्य—घनस्य । तथाच तेनाबोधकत्वात्समासो नेति भावः ॥ २६ ॥

तदुक्तं भाष्ये "यदि शस्त्रीव श्यामा देवदत्तेति विग्रहस्तदा शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् । यदि यथा शस्त्री श्यामा तद्वद् देवदत्तेति विग्रहस्तदा देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्" इति ।

कैयटेऽपि—'न च शब्दस्यावृत्तिरस्ति येनोभयगतश्यामत्वं प्रतिपादयेद्' इति । एको हि श्यामाशब्द एकगतगुणस्यैव प्रतिपादकः, नहि तस्य शब्दान्वयं विना उक्तमुपमानत्वमिति तद्भावः । श्यामेत्यस्योपमेयपरत्वाभावे तु साधारणधर्मविशिष्टोपमेयपरत्वरूपसामान्यवचनत्वाभावात्समासो न स्यात् ।

अतएव भाष्ये "शस्त्रीशब्दः शस्त्र्यामेव श्यामाशब्दो देवदत्तायामेव" इति पक्षे "सामानाधिकरण्याभावात्समासपुंवद्भावौ न प्राप्नुत" इत्युक्ता "एवं

तर्हि तस्यामेवोभयं वर्त्तते इति युक्तम्" इत्युक्तम् ।

तत्र तस्यामेवेत्यस्योपमेयायामेवेत्यर्थः । उपमानशब्दोऽपि सादृश्यमूलाभेदाध्यवसायात्तत्रेति तद्भावः । तत्र सादृश्यनिर्वाहायास्यैव तन्त्रादिना उपमाने ऽपि सम्बन्धोऽवश्यं वाच्यः ।

तदुक्तं कैयटेन—'यदा देवदत्तायां शस्त्रीत्वमारोप्यते सादृश्यात् तदा कं गुणमाश्रित्य तयोः सादृश्यम्' इत्याशङ्क्य, 'यदा चन्द्रमुखीत्यादौ चन्द्रेऽनेकगुणसत्त्वे ऽपि तात्पर्यवशात्प्रियदर्शनत्वमनिर्दिष्टोऽपि गुणो वृद्धव्यवहारादुपमानिमित्तं तदोपमेये श्रुतः संनिधानात् कथमुपमानं न स्प्रक्ष्यति' इति ।

अत एवैतदुत्तरं 'शस्त्रीशब्देनाभिसंबध्यमानत्वात् श्यामाशब्दस्य सामान्यवचनत्वाभावः' इत्याशङ्कितम् । शस्त्रीशब्देनाप्यभिसंबध्यमानत्वादिति तदर्थः । बहूनां यः सामान्यमाह स एव सामान्यवचन इत्याशयेन शङ्का । ततः सिद्धान्तिनोक्तं "श्यामत्वस्योभयत्र शस्त्र्यां देवदत्तायां च भावात्, उभयगतगुणवाचकत्वाच्च श्यामाशब्दस्य सामान्यवचनत्वम् । नावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह द्वयोरपि यः सामान्यमाह सोऽपि सामान्यवचनः" इति । अत्रोभयगतगुणवाचकत्वादित्यनेनोभयोः साधारणधर्मसंबन्धः शाब्द इति सूचितम् ।

अतएव "सामान्यैः" इति नोक्तं "सामान्यवचनैः" इति चोक्तम् । तच्चोभयान्वयित्वेनोभयगतधर्मवाचकत्वबोधनार्थम् । श्यामाशब्दस्य द्विगतधर्मवाचकत्वेनैव

सामान्यवचनत्वं बोध्यम्। एवं चोपमानश्यामघनाभिन्नः श्यामो देवदत्त इति बोध इति भाष्यस्वरसः॥२७॥

( कुं० टी० ) अपेक्ष्यंस्यादिति। तत्त्वेन बोधार्थमिति शेषः। *शब्दस्य—श्यामाशब्दस्य। *अस्यैव—श्यामाइत्यस्यैव। *इतिचोक्तमिति। उपमानोपमेयसाधारणो धर्मः सामान्यं तद्वाचकत्वं च सामान्यवचनत्वम् ॥ २७ ॥

( क० टी० ) तथार्थबोधलाभो न परोक्तबोधलाभ इत्याशयेनोक्तार्थे तत्समातिमप्याह *तदुक्तमिति । *कैयटेऽपि—उक्तमित्यस्यानुषङ्ग । तदेवाह *न चेति । *उक्तमिति । शस्त्र्याः साधारणधर्मवत्त्वेनेतरपरिच्छदेकत्वरूपामित्यर्थ । तत्त्वायैव हि तदपेक्षेति भावः । भाष्याद्यनुक्तमाह *श्यामेत्येति । गुणव्यक्तेर्विशेष्यतया स्त्रीत्वम्। ननु सामान्यवचत्वन्ताहशामित्यत्रैव किं मानमत आह *अत एवेति। तस्य तद्रूपत्वादेवेत्यर्थ.। *पक्षेइति। सादृश्यसम्बन्धेनान्वय इति भाव । उपमानाभ्रमायाह *तत्रेति। सिद्धान्ते इत्यर्थ. । अनेन तस्य तद्रूपत्व स्पष्टमेवोक्तम्। बाधनिरासायाह *उपेति । नन्वेवमपि सादृश्यस्यान्यमूलकत्वस्य वाच्यत्वादेतन्मूलकत्वस्योक्तरीत्याऽसम्भवात्, भाष्यतो ऽलाभाच्च तादृशोपमानत्वालाभेनोक्तभाष्यासङ्गतिरत आह *तत्रेति। उपमेये इत्यर्थः। *अस्यैव—श्यामत्वस्यैव। *तन्त्रादीत्यादिना बोद्धुरावृत्ति । तथाचात्र तन्त्रमसहविवक्षाविषयाविभक्त्यन्ततन्त्रं बोध्यम । उपात्तधर्मसत्त्वे सांनिध्यात्तेनैव सा प्रतीतिरनुभवसिद्धेति भाव । अत्र समतिमाह *तदुक्तमिति । तात्पर्यग्राहकमाह *वृद्धेति । अत्र भाष्यसमतिमप्याह *अतएवेति । *तस्यैव—तत्रान्वयादेवेत्यर्थ. । अस्योभयत्रान्वय. । एतदुत्तरमितिसूचित नावधारणपर भाष्यमित्यत आह *शस्त्रीशब्देनापीति । नन्वेव शङ्काऽसङ्गतिरत सिद्धान्तानुरोधनाह *बहूनामिति । बहुगतधर्मस्यैव सामान्यत्वमिति तत्र समासे द्विगतधर्मबोधकत्वेनातत्त्वादिति भावः । उभयत्रेत्यस्य व्याख्या *शस्त्र्यामिति। *बहूनामिति। बहूनान्तेषामेव । नन्वेतद्भाष्यत उभयत्र गुणसत्तायाः, शब्दे त-

द्वाचकत्वस्य च लाभे ऽप्युभयत्रान्वयो न लब्धोऽत आह *अत्रेति । सिद्धान्तभाष्ये इत्यर्थः । अन्यथा तद्वत्त्वाच्चेत्येव सिद्धे तथोक्तिरधिकेति स्पष्टमेव । किञ्च तथासति वस्तुतो बहुधर्मवाचकताया अपि श्यामाशब्दे सत्त्वेन "नावश्यम्" इत्यादिभाष्यस्थपूर्वपक्षस्य निरालम्बनताऽऽपत्तिस्तस्माद्यावनामर्थानां शब्दजबोधेऽन्वयस्तावतां तच्छब्दवाच्यतेत्येव भाष्यतात्पर्यम् । एव भाष्यसमते सूत्रसमातिमप्याह *अतएवेति । तस्योभयोः शाब्दत्वादेवेत्यर्थः । तथासति लक्षणया लब्धमर्थमाह *तच्चेति । एतत्सर्वं विग्रहविषयम् । वृत्तौ तु "उपमानानि" इत्युक्त्यैकार्थीभावबलात्तदुपस्थितिरिति बोध्यम् । यद्यपि तयोः स्वरूपतो भेद एव तथाऽप्युक्तरीत्या ऽभेदस्यापि प्रतीतेः सामानाधिकरण्यनिमित्तसमासपुवद्भावौ सिद्धौ । अनेन भाष्येणोपमानश्यामशस्त्र्यभिन्ना श्यामा देवदत्तेति बोध इति स्पष्टमेवोक्तम् । तदभिप्रेत्य प्रकृते आह *श्यामेति । एवेन बहुगतधर्मवाचकत्वव्यवच्छेदः । एतेन तथा लोकप्रवादो निरस्तः । *एवञ्च–तथासत्त्वे च ॥ २७ ॥

काव्यप्रकाशस्वरसो ऽप्येवमेव ।

तत्र हि एवमुक्तम्–"यथेववाशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति । यद्यप्युपमानविशेषणानि ते, तथाऽपि शब्दशक्तिमाहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तेन तुल्यम् इत्यादौ प्रतीततुल्यतोपपत्तये साधर्म्यस्यार्थत्वादार्थी"इति । यत्परा इत्यस्य यदनन्तरमुपात्ता इत्यर्थः । उपमानताप्रतीतिश्च शाब्द्येव । तेषां शब्दानामुपमानविशेषणार्थप्रतिपादकत्वेऽस्याः इतिना हेतुत्वेनोपादानात् । उपमानविशेषणानीति बहुव्रीहिरिति तु न युक्तम् । पुंस्त्वापत्तेः । उपमानविशेषणा एते

१ प्रतीतेरित्यर्थः ।

इति पाठस्तु प्रदीपादिविरुद्ध इत्यन्यत्र विस्तरः ।

नचैवं 'पुरुषो व्याघ्र इव शूरः'इत्यादौ भवदुक्तरीत्या बोधे विशेषणस्य व्याघ्रस्यापि सविशेषणत्वेनासामर्थ्यात्समासो न स्यादिति वाच्यम्। उपमानत्वेन बोधकस्य तस्य साधारणधर्मांशे नित्यसापेक्षत्वेनादोषात् । साधारणधर्मवत्त्वेन परिच्छेदकत्वं हि तत्त्वम् । नच तत्त्वेन ज्ञातस्यैव ।

यद्यप्युपमेयत्वं तद्वत्त्वेन परिच्छेद्यत्वमेव तस्य च तत्त्वं विधेयमिति न तन्नित्यसापेक्षम्, तथाऽपि प्रधानस्य सापेक्षत्वेन भवत्येव समासः । प्रधानेऽनेकविशेषणसम्बन्धसम्भवात् । 'देवदत्तो धनी सुन्दरश्च' इतिवत्। अतएव "सामान्याप्रयोगे" इति चरितार्थम् ।

अस्तु वा उपमेयस्यापि नित्यसापेक्षत्वम्, परन्तु तत्त्वं न समासप्रयोजकम्, किन्तु गमकत्वमेवेति समासवादे वक्ष्यते । तस्य तत्त्वं च बहुशो दृष्टामिति अत्रापि समासः स्यादिति तद्वारणाय "सामान्याप्रयोगे" इति । इदमेव तत्र गमकत्वबोधकामिति बोध्यम् ॥ २८ ॥

( कुं० टी० ) *यथेति । यथादिशब्दा यस्यानन्तरं प्रयुज्यन्ते तस्योपमानत्वमित्यर्थः ।

उपमा द्विविधा श्रौती आर्थीच । उपमानोपमेययोः साधारणधर्मसम्बन्धरूपाया उपमायाः शाब्दबोधविषयत्वं श्रौतत्वम् । अर्थापत्तिविषयत्वमार्थत्वम् । नन्विवादिशब्दानाम्, तुल्या-

दिशब्दानां चार्थप्रतीतौ विशेषाभावादियं शाब्दी, इयमार्थीति विषयाविभागो न युक्तः । नच यथाऽऽदिशब्दैः साधारणधर्मसम्बन्ध उभयत्र शक्त्यैव बोध्यते तुल्यादिशब्दैस्तु नेतीति वाच्यम् । यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानतां प्रतिपादयन्तीति शङ्कते *यद्यपीति । *उपमानविशेषणानीति । उपमानविशेषणार्थप्रतिपादकानीत्यर्थः । एवं चोपमान एव तत्सम्बन्धं बोधयन्ति न तूपमेये अन्यविशेषणस्यान्यत्र सम्बन्धबोधकत्वाभावादिति भावः । शब्दशक्तिस्वाभाव्यादन्यविशेषणस्याप्यन्यत्र सम्बन्धबोधकत्वमस्तीत्याह *षष्ठीवदिति । षष्ठी हि यदनन्तरमुपात्ता तस्यैवोपसर्जनत्वं गमयन्त्यपि प्रधानेऽपि सम्बन्धं बोधयतीति भावः । *आर्थीति । तथाच सम्बन्धबोधे विशेषात् श्रौत्यर्थीविभागः । तथाहि 'चन्द्र इव मुखम्' इत्यादौ रमणीयत्वादिसम्बन्धमनिषयीकृत्य तु न पर्यवसानं यथादिशब्दानां धर्मविशेषसम्बन्धे एव शक्तत्वात् । 'चन्द्रेण तुल्यं मुखम्' इत्यादौ तु सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्ते तस्मिन् धर्मविशेषं विना कथं तुल्यतेति शङ्कायां धर्मविशेषसम्बन्धप्रतीतिरिति । *इतिनेति । 'तस्यैवोपमानताप्रतीतिरिति'इति काव्यप्रकाशवाक्ये इतिशब्देन उपमानविशेषणार्थप्रतिपादकत्वं हेतुर्निर्दिश्यते इत्यर्थः । *भवदुक्तरीत्येति । उपमानशूरव्याघ्रेत्याद्याकारकेत्यर्थः *नस्यादिति । तथाच किं "सामान्याप्रयोगे" इतिनिषेधेनेति भावः । *नित्यसापेक्षत्वेनेति । साधारणधर्मसम्बन्धं विना उपमानत्वस्यैवासम्भवात् । *साधारणधर्मवत्त्वेनेति । साधारणधर्महेतुकपरिच्छेदकरणत्वमित्यर्थः । *तत्त्वम्-उपमानत्वम् । *तच्च-उपमानत्वञ्च । *तत्त्वेन-साधारणधर्मवत्त्वेन । ननूपमानस्य नित्यसापेक्षत्वे ऽप्युपमेयस्य नित्यसापे-

क्षत्वाभावात् समासानुपपत्तिरेवेत्याशङ्कते *यद्यपीति । *तस्य-उपमेयस्य। *तत्त्वम्-परिच्छेद्यत्वम्। *तत्त्वम्-नित्यसापेक्षत्वम्। *गमकत्वमिति । राजपुरुष इत्यत्राकाङ्क्षायाः शान्तत्वान्न ऋद्धाद्यन्वयः। देवदत्तस्य गुरुकुलमित्यादौ तु नित्यसापेक्षत्वेनाकाङ्क्षाया अशान्तत्वाद् भवति विशेषणान्वय इति भावः। *तस्य-गमकत्वस्य । *तत्त्वम्-समासप्रयोजकत्वम् । *इदमेव-सामान्याप्रयोग इति वचनमेव। *तत्र-पुरुषो व्याघ्र इवेत्यत्र ॥ २८ ॥

( क० टी० ) एव सिद्धान्ते आलङ्कारिकसमतिमपि तदविरोधायाह *काव्येति । "तत्र तस्येव" इति विहितवतेरपि पूर्वत्र संग्रह इति ध्वनयन्नाह *तेनतुल्यमिति । तथा वाक्ये, तत्र विहितवतिघटितवाक्येत्रेत्यर्थः। बहुव्रीहावर्थासङ्गतेराह *यदनन्तरमिति । आर्थत्वे विरोधापत्तेराह *उपमानतेति। *तेषाम्-यथेवादीनाम् । *उपमानविशेषणानीत्यस्योपमान विशेषयन्ति उपमानत्ववैशिष्ट्येन बोधयन्तीति व्युत्पत्त्योपमानविशेषणोपमानत्वद्योतकानीत्यर्थं । तदाह *उपमानेति । *अस्या -तत्प्रतीतेः । अस्येत्यपपाठः। उपमानता सादृश्यमिति प्राचां मतमेव प्रकाशाभिमतमिति खण्डयति *उपमानेति । तत्रेष्टापत्तिस्तथैव पाठादिति खण्डयति *उपमानेति। *प्रदीपेति। तत्र हि-नन्वय विभागोऽनुपपन्नः उभयत्र सादृश्यप्रत्ययाविशेषात्। नचेवादिशब्दैः साधारणधर्मसम्बन्ध उभयत्र बोध्यते न तुल्यादिशब्दैरिति विशेषः, यतो यथाऽऽदयो यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरिति उपमानविशेषणानि ते, अत उपमाने तत्सम्बन्धं बोधयन्ति, ननूपमेये, अन्यविशेषणस्यान्यत्र सम्बन्धबोधकत्वादर्शनादिति चेन्न। शब्दशक्तीत्याद्युक्तम् । अन्यविशेषणत्वे ऽप्यन्यत्र सम्बन्धबोधकत्वे ऽदृष्टचरत्वनिरासाय षष्ठीवदिति दृष्टान्त उक्तः । सा यथा 'राज्ञः पुरुष' इत्यादौ स्वस्वामिभावादिसम्बन्धबोधिका प्रकृत्यर्थस्य विशेषणत्वबोधिका च, विशेषणस्येतरविशेषणत्वार्थं सम्बन्धस्याकाङ्क्षणादिति तन्निष्ठाविशेषणत्वस्वामित्वबोधकत्वे ऽपि प्रधाने पुरुषे सम्बन्धस्य द्विष्ठतास्व-

भावत्वात्सम्बन्धघटक स्वत्व बोधयति, तथेवादिना तत्रोपमान त्व तन्निर्वाहकाह्लादकत्वादिसाधारणधर्मसम्बन्धश्च बोध्यते उक्त हेतोरिति तदर्थ । तदाह *अन्यत्रेति । काव्यप्रदीपोद्द्योते इत्यर्थः । *एवम्–"उपमानानि" इति सूत्रविषये घनश्यामादौ तथाङ्गीकारे। "उपमितम्" इतिसूत्रविषये दोषमाह *पुरुषइति । *समासइति। तथाच "सामान्याप्रयोगे" इति सूत्र च व्यर्थ स्यात् । शङ्कायास्त त्रापि तुल्यत्वात । अध्यर्द्धसूत्रसाधारणगत्यन्तरसम्भवे विशिष्य सूत्रवैयर्थ्योक्तेर्हेतुत्वमयुक्तमित्याशयेनाह *उपमग्नेति। "उपमितम्" इत्येतत्स्वारस्यात्, तस्योपमानेन नित्यसाकाङ्क्षत्वाच्च व्याघ्रादीनामुपमानत्वे एव तत्प्रवृत्तेः तस्य रूढत्वात् । *तच्च–तादृशोपमानत्व च। *तत्त्वेन–साधारणधर्मवत्त्वेन । तथाच तस्य सिद्ध त्वान्नित्यसापेक्षत्वमिनि भाव' । नन्वेव पूर्वसूत्रसार्थक्ये ऽपि नोत्तरसूत्रसार्थक्यमित्याशयेन शङ्कते *यद्यपीति। *तस्य तत्त्वम्–उपमेयस्योपमेयत्वम् । *विधेयम्–विधयमेव । तत्रासामर्थ्ये हेतोः प्रसिद्धत्वायाह *सम्भवादेवेति । एतत्सूचकमेव विशेषणमित्याह *अत एवेति । तत्रासामर्थ्याभावादेवेत्यर्थ । ननु विधेयत्वेन पूर्वमप्रतीतावपि तत प्रतीतस्य नित्यसापेक्षत्व दुर्वारमिति तथा प्राचां ग्रन्थासङ्गतिरेव अत आह *अस्तुवेति । अत्र मते वैलक्षण्यमाह *परन्त्विति। *तत्त्वम्–नित्यसापेक्षत्वम्। *गमकत्वम्–अर्थावबोधकत्वम् । अन्यथा दोष इत्याह *इतिसमासेति। *तस्येति। 'राजपुरुष सुन्दर'इत्यादौ प्रधानस्यार्थावबोधकत्वमित्यर्थ । *अत्रापि–सामान्यप्रयोगे ऽपि । प्राग्वदाह *इदमिति । उक्तविशेषणमेवेत्यर्थः। *तत्र–नित्यसापेक्षप्रधानसमासे । अत एव पुरुषव्याघ्र इत्यादौ समाससिद्धिः, अन्यथा आक्षिप्तसाधारणधर्मान्वयस्योभयत्राप्यावश्यकत्वेन तत्रापि समासो न स्यात् ॥ २८ ॥

**एवञ्च इवादियोगे साधारणधर्मसम्बन्धरूपा उपमा वाच्या, सादृश्यप्रतीतिरार्थी । सदृशादिपदयोगे सादृश्यप्रतीतिः शाब्दी उपमा त्वार्थी । सादृश्यं तु साधारणधर्मसम्बन्धप्रयोज्यं सदृशादिपदशक्य-**

तावच्छेदकतया सिद्धम्, सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसंमतत्वेन तत्त्वेन तत्कारणतावच्छेदकतया च सिद्धमखण्डमतिरिक्तः पदार्थः । नचातिरिक्तपदार्थत्वे गोतमकणादोक्तपदार्थसंख्याविरोध इति वाच्यम् । प्रमेयपदार्थे गोतमोक्तेऽन्तर्भावात् ।

किञ्च पदार्थसंख्याबन्धनमुपलक्षणमेव ।

तदुक्तं गोतमेन "संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्" इति ।

'पदार्थगतसंख्यानियमस्यासिद्धिः कारणप्रमाणस्यानुपपत्तेः । उपपत्तौ न तन्नियमः, साधनस्य साध्यातिरेकाद्' इति तदर्थं तद्व्याख्यातार आहुः ।

किञ्च "अकर्त्तरि च कारके" इति सूत्रे भाष्ये "—"नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति, एवमिहापि "अकर्त्तरि" इति कर्तृप्रतिषेधादन्यस्मिन्नकर्त्तरि कर्तृसदृशे कार्यं विज्ञायते । किञ्चान्यत् अकर्तृ कर्तृसदृशं कारकम्" इत्युक्तम् । एवं च सूत्रे कारकग्रहण प्रत्याख्यातम् । "कर्तृप्रतिषेधाद्" इत्यस्यारोपितकर्तृबोधादित्यर्थः । अनेन हि भाष्येणाभेदेऽपि सादृश्यमिति सूच्यते । अन्यथाऽन्यस्मिन्नित्यस्य वैयर्थ्यापत्तिः । तथा इवयोगेऽपि भेदसादृश्ये गम्ये, न तु तद्वाच्ये द्योत्येचेति प्रतीयते । इव-

युक्तोदाहरणम् "इवे प्रतिकृतौ"इत्यधिकारे "शाखादिभ्यो यः" इति थे सोम्य इत्यादि । तत्र सोमसदृशस्तद्भिन्नः प्रतीयते न तु सोम एव ।

एतेन भेदनियतं सादृश्यमित्यपास्तम् । अस्या मुखसदृशमस्या मुखमित्यादावभेदे ऽपि सादृश्यप्रतीतेश्च ॥ २९ ॥

( कुं० टी० )*वाच्या–शब्दलभ्या । *गोतमेति । प्रमाणप्रमेयादयः षोडश पदार्था इति गोतमः, सप्तेति कणादः । *बन्धनम्–नियमनम् । "एकमेवाद्वयम्"इत्यादिश्रुतिबलात् द्वितीयाभावमाशङ्क्याह *संख्यैकान्तासिद्धिरिति । संख्यैकान्तो नियमो न सिद्ध्यति । प्रमाणस्यानुपपत्तेः–असत्त्वात् । वस्तुमात्रस्य ब्रह्मरूपत्वे तद्व्यतिरिक्तस्य प्रमाणस्य वक्तुमशक्यत्वादिति भावः । उपपत्तौ वा अतिरिक्तप्रमाणानि सन्त्येवेति न संख्यैकान्तः । साधनस्य साध्यातिरिक्तस्यापेक्षितत्वादिति तदर्थः । साध्यस्य एकत्वेन साधनीयस्य वस्तुमात्रस्य पक्षतया पक्षातिरिक्तहेतोरभावादिति भावः । एका संख्यैव पदार्थ इत्यत्र, सप्तत्वविशिष्टाः पदार्थाः साध्यन्ते तत्रापि तदतिरिक्तप्रमाणसत्त्वासत्त्वाभ्यामुक्तरीत्या दोषो बोध्यः ।

अन्ये तु सादृश्यस्यातिरिक्तत्वे सुसदृशमीषत्सदृशमित्युत्कर्षापकर्षाभावप्रसङ्गः । सिद्धान्ते तु सामान्याल्पत्वभूयस्त्वाभ्यां तदुपपत्तिरिति सामान्येऽन्तर्भावः । तद्गतभूयोधर्मवत्त्वस्य सादृश्योपाधित्वेन प्रमेयत्वादिवत्सामान्ये ऽपि वृत्तेः ।

न च सामान्यनिष्ठं प्रतियोगिसादृश्यं च सप्रतियोगिकमिति शङ्क्यम् ।

इतरनिरूप्यं हि सप्रतियोगिकत्वं तद्गतधर्मवत्त्वलक्षणं तथा। ननु भाष्ये कर्त्तृप्रतिषेधादित्ययुक्तमकर्त्तरीत्यस्य पर्युदासत्वादत आह *आरोपितेति। भेदसादृश्ये गम्ये इति भावः। *सादृश्यं च-प्रतीयते इत्यर्थः। *भेदनियतमिति। तदुक्तं हरिणा।

साहश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते।

भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते ॥ इति ॥ २९ ॥

( क० टी० ) विशेष वक्तु प्रकाशतात्पर्यमाह *एवञ्चेति। तथा सिद्धान्तेचेत्यर्थः। *आर्थीति। हेतुहेतुमतोर्नित्यसम्बन्धेन तात्पर्यतो वक्त्रादिवैशिष्ट्येन च व्यञ्जनया तत्प्रतीतेरिति भाव । नन्वयुक्तमेतत् सादृश्यस्य धर्मरूपत्वेन ततो भेदाभावादत आह *सादृश्यन्त्विति। अस्य जनकमाह *साधारणेति। ज्ञापक सिद्धान्तमतेनाह *सदृशेति। परमतेनाप्याह *सदृशेति। परमतनिरासायाह *अखण्डमिति। तस्य क्वचिदप्यन्तर्भावासम्भवादाह *अतिरिक्तमिति। *सङ्ख्येति। षोडशत्वसप्तत्वेत्यर्थः। आद्याविरोधसम्भवान्न तथेत्याह *प्रमेयेति। द्वितीयविरोधमाद्योक्त्याऽन्यथा परिहरति *किञ्चेति। पदार्थगतसङ्ख्यानिबन्धनमित्यर्थः। तत्र "अथेमे सङ्ख्यैकान्ताः-सर्वमेकं सदविशेषात्, सर्वं द्वेधा नित्यानित्यभेदात्, सर्वं त्रेधा ज्ञातृज्ञानज्ञेयभेदात्, सर्वं चतुर्धा प्रमातृप्रमाणप्रमेयप्रमितिभेदात्। एव यथासम्भवमन्येष्वपीति। तत्र परीक्षा सङ्ख्यैकान्तेनि। यदि साध्यसाधनयोर्नानात्वं तदैकान्तो न सिध्यति व्यतिरेकात्। अथ साध्यसाधनयोरभेद एवमप्येकान्तो न सिध्यति साधनाभावात्। नहि तमन्तरेण कस्यचित्सिद्धिः।" इति वात्स्यायनभाष्य तदाह *पदार्थेति। *उपपत्तौ-तत्रापि। एतेन तन्नियमपरतया व्याख्यान तत्परिष्कार च कुर्वन्तोऽर्वाचीननैयायिकाः परास्ताः। मूलविरोधात्। सर्वपरमतनिरासाय स्वमते साधकान्तरं विशेषं वक्तुमाह *किञ्चेति। प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इत्याह *नञिवेति। नञ्युक्तमिवयुक्तञ्चेति यत्किञ्चित् दृश्य

सम्पन्नाः" इति श्रौतेन स्मार्त्तेन वा व्यवहारेण एकस्या अप्यावृत्त्या अनेकत्वं सूचितम्। अत एव "सप्तदश सामिधेन्यो भवन्ति" इति श्रुतौ पठितत्रयोदशसामिधेनीमन्त्राणां प्रथमान्त्यमन्त्रयोस्त्रिरावृत्त्या सप्तदशत्वमुक्तं श्रौतसूत्रे। अत एव "एक एवाकारः" इति पक्षे 'घटिक' इत्यादावावृत्तिकृतद्व्यच्त्वेन "नौद्व्यचः ष्ठन्" इतिष्ठन्नुक्तो भाष्ये।

एतेनायं व्यवहारो गौण इति परास्तम्। मुख्यद्व्यचि चारितार्थ्येनात्राप्रवृत्त्यापत्तेः। उत्तरसंख्यया पूर्वसंख्याबाधात्। घटेनेत्यादौ "सावेकाचः" इति स्वरो न स्यादिति चोक्तम्।

एवंचैकस्यैव ब्राह्मणस्यावृत्त्या भोजनदानेन दशादिब्राह्मणभोजनसङ्कल्पः सिद्ध्यतीति बोध्यम्। एवं प्रकृतेऽपि मुख्यस्यानेकत्वेनैकस्यापि धर्मस्य साधारणधर्मत्वम्। नचैकस्यैवावृत्त्याऽनेकत्ववत् कालादिभेदेन भेद प्रकल्प्य मुखमिव मुखमित्यादावुपमैवास्त्विति वाच्यम्। तस्य भेदस्य शब्देनासंस्पर्शात्।

अतएव "उपमानानि" इति सूत्रे भाष्ये "यदेवोपमान तदेवोपमेयं क इहोपमाऽर्थः गौरिव गौः" इति। उपमानोपमेयभावद्योतकेवशब्दप्रयोगे किं प्रयोजनं कर्मकरणरूपोपमानोपमेयभावस्यैकत्रासम्भवात् इवस्यार्थान्तराभावात्। न च द्वितीयसदृशव्यवच्छेदप्रतीतिः फलम् गोसदृशो गौरित्यतोऽपि तत्सम्भवात्। अभेदेऽपि सादृश्याङ्गीकारेण तस्य बोधकत्वादबोधकैतत्प्रयोगो न स्यात्। एवं-

चोपमालंकारस्य, अस्य सूत्रस्य चोक्तिसम्भवाभाव इत्याशयकमुक्का, "तस्मा यत्र किञ्चित्सामान्यं कश्चिच विशेषस्तत्रोपमानोपमेये भवतः" इति सिद्धान्तितम्। तत्र भिन्नगोव्यक्त्योस्तद्बोधनार्थं आरोपितभेदवतोस्तद्बोधनार्थो वा तत्रेवशब्दप्रयोग इत्याशङ्क्य कैयटेनोक्तम्–तस्य भेदस्य शब्देनासंस्पर्शात्सामान्यमुखेन द्रव्यावसायादिति भावः' इति।

अत्र पक्षे 'घन इव श्यामः' इत्यादेः सम्भवेनोपमालङ्कारस्य सूत्रस्य चोक्तिसम्भवः। गौरित्यादौ तूपमानत्वाद्यप्रतीत्या ऽनन्वयालङ्कार एवेत्यादि बोध्यम्।

तस्मादभेदे ऽपि साधारणधर्मसम्बन्धस्तत्प्रयोज्यं सादृश्यं चावश्यं स्वीकार्यम्। काव्यप्रकाशकृताऽपि 'साधर्म्यमुपमा भेदे' इतिवदता भेदे साधारणधर्मसम्बन्धस्याङ्गीकारात्। यत्र साधारणधर्मेण सामान्यरूपताप्रतीतिः, प्रत्येकरूपेण शब्दतो विशेषरूपताप्रतीतिस्तत्रोपमानत्वादिप्रतीतिरिति सिद्धान्तार्थो भाष्ये। एतेन रामरावणयोर्युद्धं रामरावणयोरिवेत्यादौ कल्पभेदेन भिन्नयोर्युद्धयोरुपमैवेति परास्तम्। तस्य भेदस्य शब्देनासंस्पर्शात्।

मुखसदृशं मुखमित्यादावपि आर्थ्याः, गौरिव गौरित्यादौ शाब्द्या उपमाया प्रतीतेरार्थः, शाब्दश्चानन्वयः। उपमासम्बन्धाभाव एवानन्वयः।

तत्रेयती मर्यादा—भेदे सदृशादिशब्दप्रयोगे आर्थी उपमा। गम्यस्योपमानोपमेयभावस्य प्रतीतेः।

अभेदे तत्प्रयोगे तु अनन्वयः । सर्वथा तदप्रतीतेः । तत्र भेदसमानाधिकरणसादृश्यमुपमाव्यञ्जकमिति बोध्यम् । अनन्वयालङ्कारे एकस्यैवोपमानोपमेयत्वमिति व्यवहारस्तु तत्सादृश्यात् ।

अत एव "ऊकाल" इति सूत्रे भाष्ये "ऊअज्" इत्येव सामर्थ्यादुकारसदृशो ऽजित्यर्थेनैव सिद्धे कालग्रहणं श्रूयमाणेनैवोकारेण कालं विशेषयितुमिति द्विमात्रादीनां न ह्रस्वसंज्ञेत्युक्तम् । भेदे एव सादृश्यमिति वदतां मते तूकारस्य ह्रस्वसंज्ञा दुर्लभा स्यात्, भेदाभावादित्यलम् ॥ ३० ॥

( कुं० टी० ) *सप्तदशेति । सामिधेनीमन्त्रेषु पठ्यमानेषु अध्वर्युणाऽऽहवनीयोपरि समिध आधीयन्ते । मन्त्रकाण्डे तु सामिधेनीमन्त्रास्त्रयोदश सन्ति । तत्र प्रथममन्त्रस्य वारत्रयं पाठात् वारत्रयं चान्त्यमन्त्रस्य पाठात्सप्तदशसंख्या भवति । *मुख्यद्यचि-बाहुकादिशब्दे । *उत्तरसंख्यया—आरोपितद्वित्वसंख्यया । *पूर्वसंख्यायाः—अनारोपितैकत्वस्य । *तस्य भेदस्य—कालकृतभेदस्य । *असंस्पर्शात्—अबोधात् । *यदेवोपमानमिति । अयं भावः—शस्त्रीश्यामा देवदत्तेति श्यामत्वं सर्वाश्रयनिष्ठ यद्येकमेव विवक्षितं तदा तद्द्वारेणोपमानोपमेयभावो वाच्यः । श्यामत्वस्य चोभयत्राविशेष इति तद्द्वारा तयोरप्यभेदः इत्यभ्युपगतं भवति । अस्मिन्पक्षे शस्त्रीशब्दप्रयोगवैयर्थ्यापत्तिः । अथाश्रयभेदात् श्यामत्वस्य भेदः । शस्त्रीदेवदत्तागतयोः श्यामत्वयोर्भेदान्नास्ति तद्द्वारक उपमानोपमेयभाव इति कैयटः । कर्मकरणरूपार्थाभेदे ऽपि द्वितीयसदृशव्यवच्छेदफलस्य गौरिव

गौरिति प्रयोगस्य दर्शनात् सर्वत्रैव तथैव किमिति प्रश्न इत्यन्ये । *तदेवेति । उपमानोपमेययोर्भेदे सामानाधिकरण्याभावात् समासाप्राप्तिः । अभेदे उपमानत्वस्यैवासम्भव इत्यर्थः । *कइहोपमार्थ इति । उपमानोपमेयभावबोधकेवादिपदप्रयोगे किं फलम्, कर्मकरणरूपोपमानोपमेयत्वबोधस्यैकत्रासम्भवादित्यर्थः । द्वितीयोपमानव्यवच्छेदार्थत्वे तु नोपमानत्वव्यवहार इति भावः । भाष्यार्थमनुवदति *उपमानोपमेयभावेति । उपमानमिति करणे ल्युट् । उपमेयमिति कर्मणि यत् । नचैकस्य कर्मत्वं करणत्वं च सम्भवतीति भावः । *तत्सम्भवादिति । अभेदे ऽपि सादृश्याङ्गीकाराद्गोसदृशो गौरित्येव प्रयोगः स्यात् । भवति ह्ययं वाचकः, गौरिव गौरिति प्रयोगस्त्ववाचकत्वान्न स्यादित्यर्थः । *उक्तिसम्भवाभावइति । गौरिव गौरित्येवोदाहरणं वक्तव्यं तच्च न सम्भवतीति भावः । *किञ्चित्सामान्यमिति । शब्दोपात्तप्रत्येकधर्मेण शस्त्रीत्वदेवदत्तात्वादिना भेदः, श्यामत्वादिसाधारणधर्मेण चाभेद इत्यर्थः । आश्रयभेदात् श्यामत्वस्य भेदेऽपि श्यामत्वजातेरेकत्वादसाधारणधर्मत्वमिति । *भिन्नगोव्यक्त्योः–वास्तविकभेदवत्योः । *तद्बोधनार्थः–उपमानोपमेयभावबोधनार्थः । *आरोपितेति । एकस्यामेव व्यक्तौ भेदमारोप्य वा तद्बोधनार्थ इत्यर्थः । *अत्र पक्षे–यत्र किञ्चित्सामान्यमिति पक्षे । असंस्पर्शादित्यत्र हेतुः *सामान्येति । तत्तद्व्यक्तित्वेनानुपस्थितेत्यर्थः । *इत्याशङ्क्येति । गौरिव गौरित्यत्र सूत्रस्योक्तिसम्भवमाशङ्क्येत्यर्थः । *तस्य भेदस्य––व्यक्तिगतभेदस्य । *तत्सादृश्यात्–उपमानोपमेयसादृश्यात् । *नह्रस्वसञ्ज्ञेति । यावच्च तपरकरणं तावत्कालग्रहणमित्येकमात्रस्यैव ह्रस्वसञ्ज्ञा ॥ ३० ॥

( क० टी० ) नन्वभेदे सादृश्यमतमपि दुर्घटं तत्प्रयोजकसाधा

रणधर्मसम्बन्धाभावात्, धर्मे साधारणत्वस्य भेदनियतत्वरूपत्वादित्याशयेन शङ्कते *नचेति । धर्मस्यैवेत्येवेनोक्तव्यवच्छेदः । *तत्र-अभेदस्थले । एवञ्च मुखत्वादेस्तत्त्व सिद्धमिति नोक्तदोष. । अत्र मानमाह *अत एवेति । तस्य तत्त्वाङ्गीकारादेवेत्यर्थ । ऋषिसहस्रमित्यत्र कर्मधारय इति सूचयन्नाह *सहस्रमिति । *तया—एककपिलया । *सहस्रेति । सहस्रगोदक्षिणादानफला इत्यर्थः । तस्य छान्दसत्वसूचनद्वारा परसंमतभाष्यीयत्वनिराससूचनायाह *श्रौतेनेति । स्पष्ट श्रौतव्यवहारमाह *अत एवेति । उक्तोऽर्थ. । एवमग्रे ऽपि । *इतीत्यस्य सप्तदशत्वमित्यत्रान्वय । *श्रुतावित्यस्य पठितेत्यत्रैवान्वय । अन्यदाह *अत एवेति । एतेनेत्यस्यार्थमाह *मुख्येति । अन्यदप्याह *उत्तरेति । तत्रैव पक्षे इति भाव । प्रासङ्गिकमाह *एव चेति । तस्या गौणत्वेचेत्यर्थः । प्रकृते तथाऽऽह *एवामिति । तद्वदित्यर्थः । एकस्येति शेष । *धर्मस्य—मुखत्वस्य । नन्वेवमनन्वयालङ्कारोच्छेदापत्तिरित्याशयेनाह *न चैकेति । *भेदेन—तेनापि । एतेनानन्वयव्यवच्छेदः । *असस्पर्श.—तदप्रतिपाद्यत्वम् । तत्त्व प्रतिपादकोच्चारितभिन्नशब्दनियतम् । नन्वारोपिताभेदस्योपमायां यथा शब्दबोध्यत्वं तथा तत्रास्त्वत आह *अत एवेति । तस्य तदसंस्पर्शादेवेत्यर्थः । अस्योक्त्वा सिद्धान्तितमित्यत्रान्वयः । अभेद एव उपमानोपमेयभाव इति पक्षे आह *यदिति । *यदेवतदेवेत्येवाभ्याम् यत्तत्प्रतिपादितयोरत्यन्ताभेद' सूचित । शङ्काशय सार्थमाह *उपमानेति । उपमाशब्दः प्रयोगान्ते लाक्षणिक. । अर्थशब्दः फलवाचीति भावः । *कर्मेति । रूपशब्दो भावशब्दवद् धर्मपर. । तयोरभेदः । कर्मकरणत्वरूप यदुपमानोपमेयत्व तद्बोधस्येत्यर्थः । धर्म्यभेदे तु व्युत्क्रमाद्यथासख्यासम्भवेनासाधुत्वाच्चासङ्गतिः स्पष्टैव । *करणत्वरूपेति पाठस्तु सुगम. । नन्वेवमप्यन्यद्योतकत्वमिवस्यास्तामत आह *इवस्येति । उत्प्रेक्षादेरसम्भवादिति भावः । *नचेति । तदभावेऽपि तत्पदप्रयोगसामर्थ्यात् । तथाच तत्र तथा दर्शनात्सर्वत्र तथैव किमिति प्रश्नतात्पर्यम् । यद्यपि तत्र नोपमानत्वादिव्यवहारस्तथाऽप्यगत्या तदभ्युपगमेऽप्याह *गोसदृशइति । *तत्सम्भवात्-तद्व्यवच्छेदबोधसम्भवात् । *तद्बो-

धेतिच पाठान्तरेऽप्यर्थ स एव। तावता "किम्" इति शङ्कानिरासायास्याप्यावश्यकत्वात् कथ प्रयोग इति शङ्कां निराचष्टे *अभेदेऽपीति। *अबोधकेति। उक्तार्थाबोधकेत्यर्थ । प्रश्नतात्पर्यमाह*एवचेति। फलाभावादप्रयोगापत्तावित्यर्थ । अत्र पक्षेऽस्यवोदाहरणत्वेन तत्र चोपमानत्वाद्यप्रतीत्या सर्वथेवादिघटितप्रयोगस्य बोधकस्य मुख्यस्यासम्भव इति उपमोदाहरणासम्भव, "उपमानानि" इति सूत्रवैयर्थ्यं चेत्यर्थ । *इत्याशयकमिति। एतेन कैयटोक्ताशय परास्त इत्युद्द्योते स्पष्टम् । एवन्तर्हीत्यस्य तत्रत्यस्यार्थ *तस्मादिति। *तत्र–प्रश्नभाष्ये। व्यक्तिभेदे आह *भिन्नेति। *तदिति। उपमानोपमेयभावेत्यर्थ । व्यक्त्यभेदे ऽप्याह *आरोपितेति। *तत्र-गौरित्यत्र। *तस्य–अन्यतरस्य। तत्र बीजमाह *सामान्येति। शब्दैक्यादिति भाव । ननु सिद्धान्ते कथ द्वयोरुक्तिसंभवो ऽत आह *अत्रेति। सिद्धान्ते इत्यर्थ । *इत्यादेः—इवघटितप्रयोगस्येत्यर्थ । अत एव तत्र गतिमाह *गौरिवेति । किञ्चेत्याद्युक्तमुपसहरति *तस्मादिति। अत्रालकारिकसंमतिमप्याह *काव्येति। तत्र भेदपदस्यानन्वयव्यावृत्त्यर्थत्वेनोक्तेः। सिद्धान्तभूतोक्तभाष्यतात्पर्यमाह *यत्रेति। *साधारणधर्मेण–श्यामत्वादिना । *सामान्येति। अभेदेत्यर्थ । *प्रत्येकेति। शाबलेयत्वादिनेत्यर्थ । *विशेषेति। भेदेत्यर्थ । नैयायिकोक्तिं खण्डयति *एतेनेति। *इत्यादौ–अनन्वयलक्ष्ये। एवेन तत्खण्डनम् । एतेनेत्यस्यार्थमाह *तस्येति । नन्वेवमपि प्रागुक्ते गोसदृशो गौरित्यत्र को ऽलङ्कारो ऽत आह *मुखेति । दृष्टान्तविधया आह *गौरिवेति । तत्र तदप्रतीत्या तद्वदत्रापि तदप्रतीते स एवेत्यर्थ । अन्यतरत्रान्यतराप्रतीत्याऽन्यतरोपमा तूक्तरीत्या दुर्वचैवेति भाव । ननु कथ तत्र स तद्वत् द्योतकासमभिव्याहारेणोपमात्वाद्यप्रतीत्या तल्लक्षणानाक्रान्तत्वादत आह *उपमेति। यत इत्यादि । शब्दसंस्पृष्टभेदसमानाधिकरणसाधर्म्यरूपोपमायाः सम्बन्धस्य प्रतियोगित्वादेरभावो यत्रेत्यर्थ । एतेन न विद्यतेऽन्वय सम्बन्ध उपमाया यत्रेति व्युत्पत्त्या ऽन्वर्थमलङ्कारनामानन्वयपदमिति सूचितम् । तदभावश्च भेदाभावकृतः। साधर्म्यस्योक्तरीत्या सत्त्वात् । अत एवोपमानान्तरव्यवच्छेद फलित । तमेव च गृहीत्वा उपमानान्तरसम्बन्धाभावो ऽनन्वय इति प्रकाशप्रदीपादा-

युक्तम् । व्याख्यात तथैव तदुद्द्योते ऽपि गुरुचरणैः । अत एव न मिथस्तैश्च विरोध' । तथा च द्वितीयसदृशव्यवच्छेदबुद्धिफलकवर्णमात्रविषयैकनिष्ठोपमानोपमेयत्व तथेति सिद्धम् । एव चानन्वयविषये आपातत शाब्दबोधोपपत्तये उपमानान्तरव्यवच्छेदबोधाय चाहार्यो भेदाभावे ऽपि भेदविशिष्टसाधर्म्योपचार, इति तत्रेवादेरुद्देश्यभूतस्वसमभिव्याहृतभेदविशिष्टसाधर्म्यस्य निरुपमस्य च द्योतकत्वमिति गोभिन्नो गोसदृशो निरुपमो गौरित्यादिरीत्या बोधः । एवच मुखसदृश मुखमित्यादावपि गौरिव गौरित्यादाविव वस्तुनो भेदाभावेन द्विविधोपमाया अभावेऽपि दृष्टान्ते तद्द्योतकेवादिसत्त्वात् तस्य शाब्दत्व केवलसादृश्यस्यार्थत्वम्, आद्ये सदृशादिपदस्य सादृश्यमात्रबोधकत्वात्तस्य चोक्तरीत्या ऽभेदे ऽपि सत्त्वात्ततो ऽपि तद्व्यवच्छेदसम्भवात्तस्य केवल शाब्दत्वमुक्तान्वयस्यार्थत्वमिति भाव । नन्वेवं चन्द्रसदृश मुखमित्यादावपि तद्व्यच्छब्दतस्तदप्रतीत्या तदभावसत्त्वादनन्वयापत्तिरिति सिद्धान्तविरोधापत्तिरत आह *तत्रेति । उपमाऽनन्वयविषये इत्यर्थः । *भेदे–वस्तुतः । *प्रतीतेरिति । तथाच तत्सम्बन्धस्यैव सत्त्वेन तदभावाभावान्नानन्वय इति भाव. । *सर्वथेति । अर्थत., शब्दतश्चोपमाया अप्रतीतेरित्यर्थः । भेदाभावादिति भाव । ननूपमाया शाब्दत्वे कारणसत्त्वे कार्यसत्ताऽऽवश्यकतया तात्पर्यतया सादृश्यप्रतीतेरार्थत्वेऽपि सादृश्यस्य शाब्दत्वे तत्र कथ उपमाया गम्यत्वमपि । कार्येण कारणानुमानन्यायेन तथेति चेत् तर्हि मुखसदृश मुखमित्यादावपि तदापत्तिरिति प्रागुक्तासङ्गतिरत आह *तत्रेति । भेदविषये तत्प्रयोगे इत्यर्थः । एवच नातिप्रसङ्ग इति भावः । नन्वेवमनेकत्वे तत्र कथ तल्लक्षणसमन्वयस्तस्यैकत्वघटितस्य प्रकाशाद्युक्तत्वादत आह *अनन्वयेति । तथा च समानार्थक एकशब्दो न सख्यापर इति भाव' । अभेदे सादृश्यसत्त्वे भाष्यान्तरमपि गमकमाह *अत एवेति । सादृश्यस्याभेदे सत्त्वादेवेत्यर्थ । यथाश्रुते प्रथमवाक्ये ऽणुदित्सूत्रप्रवृत्त्या प्राप्तातिप्रसङ्गवारणायाह *ऊ आजित्येवेति । अभेदेनान्वयेऽच्पदानर्थक्यादाह *सामर्थ्यादिति । एवेनाणुदित्सूत्रगृहीतव्यवच्छेद । बहुवचन व्यक्त्यभिप्रायम् । अत एवेत्यस्याशयमाह *भेदएवेति । प्रयोगादिभेदेन भेद स्वीकृत्य तदुपपादने

तु तस्य सार्वत्रिकत्वेन व्यावर्त्याभावात्तदुक्तिनैष्फल्यमेव तदाह *इत्यलमिति ॥ ३० ॥

सादृश्यस्यातिरिक्तत्वादेव 'अनेनायं सदृशः' इत्युक्ते केन धर्मेणानयोः सादृश्यमित्येव जिज्ञासा नतु को धर्मो ऽनयोः सादृश्यमिति।अत एव क्षमया पृथ्वी-सदृशः धर्मतः सादृश्यमित्यादि आञ्जस्येनैवोपपद्यते।

तच्च व्यञ्जकधर्मभेदाद्, आश्रयभेदात्, निरूपकभेदाच्च भिन्नम् । अतएवोभयोरुभयं वर्त्तते सादृश्यमूलाभेदाध्यवसायेन उपमानस्योपमेये अभेदान्वय इति सिद्धान्तपक्षे "एवमपि सादृश्यनिमित्तं गुणो न निर्दिष्ट" इति शङ्का "संनिधानात् श्यामत्वमेव गुणः" इति समाधानं च भाष्ये सङ्गच्छते। साधारणधर्मस्यैव सादृश्यरूपत्वे तदसङ्गतिः स्पष्टैव। मम तु-'प्रतीयमानं सादृश्यं किंधर्ममूलकम्' इति शङ्का 'उपात्तधर्ममूलकमेव' इत्युत्तरमिति न दोष इत्यलम् ।

'मातेव हितकारिणीम्' इत्यादौ त्विवस्य सादृश्यवाचकता। इवशब्दार्थसादृश्येच मातुरन्वय इति प्रातिपदिकार्थे प्रथमैव ।

न च षष्ठ्यापत्तिः। प्रतियोगिविशिष्टसादृश्यवत इवार्थत्वेन तदेकदेशे प्रतियोगिनि मातुरभेदेनान्वयात् षष्ठ्यप्राप्तेरिति कश्चित् ।

असाध्वेवेदम् । क्रियान्वये एव प्रथमायास्साधुत्वात् । अत एव "तिङ्समानाधिकरणे प्रथमा" "अभिहिते प्रथमा" इति च वार्त्तिकम्, प्रथमायाः

कारकविभक्तित्वपरं भाष्यं च सङ्गच्छते इत्यन्ये ।

तत्र तेषां गमकसत्त्वे द्योतकता अन्यथा वाचकतैव । वृत्तिद्वयकल्पनागौरवात् ।

न च तस्य वाचकत्वे 'इवास्ति' इत्याद्यपि 'सादृश्यमस्ति' इत्यादिवत्स्यादिति वाच्यम् । तथा शिष्टप्रयोगाभावेनोपमानादिपदोपसंदानेनैव प्रयोगे तेषां साधुत्वाङ्गीकारात् ॥ ३१ ॥

(कुं० टी०)*व्यञ्जकेति । चन्द्र इव मुखमित्यादौ । व्यञ्जकः आल्हादकत्वादिः । आश्रयो—मुखादिः । निरूपकश्चन्द्रादिः । *अतएव—सादृश्यस्यातिरिक्तत्वादेव । अस्य सङ्गच्छते इत्यत्रान्वयः । *उभयोः—उपमानोपमेययोः । *उभयमिति । उपमानवाचक उपमेयवाचकश्चेत्यर्थः । *सिद्धान्तपक्षेइति । एतस्य इतिशङ्केत्यत्रान्वयः । *गुणो न निर्दिष्ट इति । शस्त्रीश्यामेत्यत्र श्यामशब्दस्योपमेयपरत्वे इत्यर्थः । *प्रतियोगिविशिष्टेति । मातृप्रतियोगिकसादृश्यवतीमित्यर्थात् । *कारकाविभक्तित्वपरमिति । पुत्रेण सहागतः पितेत्यत्रोपपदाविभक्तेरिति न्यायेन प्रथमासिद्धावप्रधानेग्रहणं न कर्त्तव्यमिति भाष्यकृतोक्तत्वात् । वस्तुतस्तु इतिन्यायेनेत्यस्य इतिरीत्येत्यर्थः । यथा हि तत्रान्तरङ्गत्वात्प्रबलत्वं तथा प्रथमाया अपीत्यर्थः । *गमकसत्त्वे-तात्पर्यग्राहकसत्त्वे । *अन्यथा—गमकाभावे । *वृत्तिद्वयेति । अभिधाद्योतनारूपेत्यर्थः ॥ ३१ ॥

(क०टी०) तस्यातिरिक्तत्व द्रढयति *सादृश्येति । एवव्यवच्छेद्यमाह *नत्विति । *अतएव—तस्यातिरिक्तत्वादेव । *इत्यादि—इत्याद्यपि । प्रकृत्यादित्वादभेदतृतीययोपपत्तौ क्लेश इत्याह *आञस्येनेति । नन्वेवमपि तस्यैकत्वे बहूपप्लवापत्तिरत आह *तच्चेति । सा-

दृश्य चेत्यर्थः । तथैव तस्य सिद्धिरित्याह *व्यञ्जकेति । नित्यत्वपक्षेणेदमिति न पूर्वविरोधः । ननूपमानस्योपमेयवृत्तित्वं बाधितमत आह *सादृश्येति । अत एवैतस्यार्थं सूचयन्नाह *साधारणेति । *ममत्विति । शास्त्रीयमित्युक्ते इति भावः । एतेन "न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः" इतिसांख्यसूत्रेण प्रत्यक्षेण साधारणधर्मरूपस्यैवोपलब्धेरित्यर्थकेनोक्तमपास्तम् । उक्तप्रमाणसिद्धत्वात् । कम्बुग्रीवादिमत्त्वाद्यतिरिक्तघटत्वादेरपि प्रत्यक्षेणानुपलम्भात्तेषामपि तत्त्वान्तरत्वानापत्तेश्च । तदाह *इत्यलमिति । इवांशे शरैरित्यतो विशेषस्तावत्परीत्या आह *मातेवेति । राजन् हरीतकीं भुङ्क्ष्वेत्यादिः । *प्रतियोगीति । एतेन प्रागुक्ते शुद्धसादृश्यमिवार्थ इतिपक्षे षष्ठ्यापत्त्यनिवारणात्स पक्षोऽयुक्त एवान्यथाऽसाधुत्वमस्य स्यादिति सूचितम् । अत एव सादृश्यस्य भेदेनोपमेयेऽन्वयः नामार्थयोरिति व्युत्पत्तिर्निपातातिरिक्तविषयेत्यपि निरस्तम् । उक्तयुक्तेः । तस्या नामत्वात्, पदार्थ इतिन्यायेन प्रधानान्वये सम्भवति एकदेशान्वयासंभवेनोक्तदोषाच्च । तदेतद्ध्वनयन्नाह *सादृश्यवत इति । अत एवाह *तदेकदेशइति । प्रधानान्वयासम्भवेन व्युत्पत्तिवैचित्र्यादिति भावः । कश्चिदितिसूचितारुचिं कथयन् सिद्धान्तमाह *असाध्वेवेदमिति । तथा व्युत्पन्नस्य दुर्निवारत्वादिति भावः । *वार्त्तिकमिति । जातावेकवचनम् । निपातस्थले तादृशे प्रागुक्तोभयपक्षव्यवस्थां सामान्यत आह *तत्रेति । क्रियागतविशेषबोधकाधिकातिरिक्तनिपातस्थले इत्यर्थः । *तस्य—तादृशनिपातस्य । तेषामित्यस्योभयत्रान्वयः । चैत्रस्येव मैत्रस्य धनमित्यादावुभयत्रापि धनयोगे षष्ठी । चैत्रादधीते इत्यादौ चैत्रादित्यस्य तदपादानकेऽध्ययने लक्षणा, उक्तरीतिर्वा, नत्वधीते इत्यनेनान्वयः । आख्यातवाच्यस्योपमानत्वाभावादित्याद्यूह्यम् ॥ ३१ ॥

'घटो नास्ति' इत्यादावभावस्य विशेष्यतया बोधान्नञो वाचकत्वम् । "नानुयाजेषु" इत्यादौ सप्तम्याः साधुत्वार्थं द्योतकत्वमपि । आरोपितानुयाजेषु यजतिष्विति तदर्थः । भेदे प्रतियोगित्वेनान्वयेनानुयाजभिन्ने-

ष्वित्यर्थे सप्तम्यनुपपत्तिः । आरोपविषयत्वं तत्र नञ्-द्योत्यम् । अतएव 'अघटः' इत्यादौ नञ्तत्पुरुषस्योत्तरपदार्थप्राधान्यं सङ्गच्छते ।

अभावस्य तु प्रतियोगिनिरूपितविशेष्यतयैव भानस्य सर्वसिद्धत्वात्तदनुपपत्तिः स्पष्टैव। अत एव 'असः' इत्यादौ सर्वनामकार्यम्, अन्यथा गौणत्वात्तन्न स्यात्। इतरविशेषणत्वेनोपस्थितिविषयत्वस्यैव गौणत्वात् । यद्वा नञ् स्वसमभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकः । यथा सिंहो माणवक इत्यादौ माणवकादिपदानि सिंहादिपदस्यारोपितसिंहत्ववद्बोधकत्वे। 'अनुदरा कन्या' इत्यादावप्यल्पत्वेनोदराभावमारोप्य नञ्समभिव्याहारे आरोपितोदरबुद्ध्या तन्मूलाल्पत्वादौ विश्रमः। अद्विज इत्यादौ च तद्भेदमूलकमारोपितप्रवृत्तिनिमित्तकत्वमिति भेदे विश्रान्तिः । अधर्म इत्यादौ च विरोधिनि । आरोपितत्वस्य नञ्ग्राह्यत्वे तु तस्य ब्राह्मणादिपदशक्येऽनारोपितब्राह्मण्यवति सम्बन्धो दुरुपपादः । तत्र प्रसिद्धार्थपरित्यागो ऽप्रसिद्धार्थपरिग्रहश्चेत्युभयं द्योतककृत्यमिति नञ्सूत्रे भाष्ये स्पष्टम् ।

इदमेव नञो द्योतकत्वं नाम । एतावतैव तत्रैकार्थीभावव्यवहारः । विशिष्टानुपूर्व्या द्योत्यार्थान्तर्भावेण शक्ततावच्छेदकत्वाद्विशिष्टस्यार्थवत्त्वम् । समासविधायकशास्त्रबलाद् अत्र एवमेव कल्पनोचिता । प्रजयतीत्यादौ तु नैवम् । अडादिव्यवस्थार्थमन्यथा तत्र कल्पनात् । लोकस्य तु तत्रापि विशिष्टशक्त्यैव बोधः।

अवयवशक्तिबोधनद्वारा विशिष्टस्य विशिष्टे शक्तिबोधकमेव व्याकरणमिति दिक्।

अस्तु देह इत्यादावारोपितसन्देह इति बोधः। भेदसम्बन्धेनारोपितज्ञानाच्च तदत्यन्ताभावप्रतीतिः॥ ३२॥

( कुं० टी० ) *विशेष्यतयेति। घटकर्तृकसत्ताऽभाव इत्यर्थात्। *साधुत्वार्थमिति। "यजतिषु येयजामहं करोति, नानुयाजेषु" इत्यत्र नञर्थे अधिकरणस्यान्वयासम्भवेनानुयाजेषु न करोतीत्यर्थासम्भवात्। यजतिलक्षणं तूक्तं श्रौतसूत्रेषु—तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतय इति। अध्वर्युणा यजेति प्रैषे कृते होत्रा प्रयुज्यमानो मन्त्रो याज्या, ब्रूहीति प्रैषानन्तरं प्रयुज्यमानो ऽनुवाक्या। देवं बर्हिरित्यादिना क्रियमाणा होमा अनुयाजाः। *सप्तम्यनुपपत्तिरिति। प्रत्ययानां प्रकृत्यर्थे एवान्वयात्। *तदनुपपत्तिः—उत्तरपदार्थप्राधान्यानुपपत्तिः। तस्मादभावो नार्थ इति भावः। नन्वारोपितत्वार्थकत्वेऽपि गौणत्वमत आह *इतरेति। *नञिति। तात्पर्यग्राहक इत्यत्रान्वयः। *विश्रमइति। "नोदात्तोपदेशस्य" इति वृद्धिनिषेधः। अल्पत्वेनोदराभावारोपादल्पत्वे पर्यवसानमित्यर्थः। *दुरुपपादइति। अनारोपितब्राह्मण्यवति ब्राह्मणपदार्थे आरोपितत्वान्वयो विरोधादसम्भवीति भावः। *प्रसिद्धार्थेति। मुख्यब्राह्मणादीत्यर्थ.। *द्योतकत्वम्—द्योतकस्वभावः। *विशिष्टेति। समुदितानुपूर्व्याः शक्ततावच्छेदकत्वादित्यर्थः। *नैवम्-न समुदायस्यार्थवत्त्वम्। *तादात्म्येतरेति। घटो नास्तीत्यत्र घटसंयोगाभावप्रतीतेः। *तादात्म्याभावइति। घटः पटो नेत्यादौ

घटतादात्म्याभाववान् पट इति बोधपर्यवसानम् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववान् पट इति तार्किकमते बोधः ॥ ३२ ॥

( क० टी० ) अथ प्रसङ्गाल्लिणतविशेषनञर्थं तत्र गम्केत्याद्युक्तस्य तावदुदाहरणमाह *घटो नास्तीति । प्रसज्यप्रतिषेधविषये इत्यर्थः । यथाचैतत्तथा ऽनुपदमेव स्फुटीभविष्यति । पर्युदासविषयमाह *अनृताजेष्विति । स्वमते तत्त्वमुपपादयति *आरोपितेति । "यजतिषु येयजामह करोति" इति वक्ष्यमाणश्रुत्यर्थसिद्ध तदादिरित्याह *यजतिष्विनीति । तथाच तस्य तेन सामानाधिकरण्यात्तदुपपत्ति । विपक्षे बाधकमाह *अन्यथेति । तथाऽर्थानङ्गीकारे इत्यर्थः । भेदस्य वाच्यत्वपक्षे विशेष्यतयैव बोधादाह *भेदइति । तस्य द्योत्यत्वेन विशेषणत्वे ऽपि नञर्थस्य प्रतियोगिन्यन्वयेन तद्वत्तदसामानाधिकरण्यात्तदनुपपत्तिरेव, तदेतद्भूतयत्नारोपमात्र नञर्थो विषयत्व ससर्गो लाघवादिति दीक्षितभूषणादृक्तेः प्रागुक्तरीत्या विना प्रत्यय तेन सम्बन्धेन बोधासम्भवेनासङ्गत्यात्प्रथमपक्षत्वेन तदुक्तमेवाह *आरोपेति । *तत्र-पर्युदासस्थले । समासे तथाऽङ्गीकारे दोषद्वयसत्त्वादिदमत्यावश्यकमिति तदैकरूप्यमपीत्याह *तस्य तत्रेति । तद्द्योत्यत्वादेवेत्यर्थः । *प्राधान्यम्-भाष्योक्तम् । *सर्वेति । तदादिकार्यम् । ननु न गौणमुख्यन्यायघटकगौणत्वमत्र, अत आह *इतरेति । आरोपविषये घटादिपदानां शक्तिर्नञो द्योतकत्वमित्यपि तदुक्तमयुक्तम् । वृत्तिद्वयकल्पने विशिष्टशक्तिकल्पनेऽक्लृप्तकल्पनेच गौरवादतः शक्यतावच्छेदकारोपो लक्षणेति सिद्धान्तरीत्या लघुभूत सिद्धान्तमाह *प्रत्तेति । नञित्यस्य ग्राहक इत्यत्रान्वयः । अन्यत्र तेषामनारोपितप्रवृत्तिनिमित्तबोधकत्वेति शङ्केराह *स्वेति । आरोपित यत् प्रवृत्तिनिमित्तन्तद्रूपेण बोधकत्वे इत्यर्थः । यद्वा बहुव्रीहिरारोपितप्रवृत्तिनिमित्तकबोधे इत्यर्थः । तथाच तद्वति ते लाक्षणिका इति सूचयन्नाह *यथेति । अत एव वृत्त्युद्बोधकत्वमिति प्रागुक्तम् । अत्रेयं रीतिः क्लृप्तेति भाव । एवञ्च लाक्षणिकतामात्रेण न गौणत्वमिति न काऽपि शङ्केति तात्पर्यम् । एव सति तत्सादृश्यमभावश्चे-

साधारणधर्मरूपं वेत्यन्यद् । समनियताभावस्थले एकस्यानेकप्रतियोगिकत्ववदनयोर्घटादिप्रतियोगिकत्वमपि । तत्राद्यस्तिङर्थक्रियान्वय्येव । असमस्तनञर्थात्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेर्हेतुत्वात् । अतएव 'अहं नास्मि, घटो नास्ति' इत्यादौ पुरुषव्यवस्था 'घटौ न स्तः, घटा न सन्ति' इत्यादौ वचननियमश्चोपपद्यते । युष्मदादेः तिङ्सामानाधिकरण्यात् । मदभावोऽस्तीत्याद्यन्वये च स न स्यात् । आख्यातार्थसंख्यान्वयित्वस्य तु न सामानाधिकरण्यपदार्थत्वम् । किंच तिबादिविधिना "द्व्येकयोः" इत्यस्यैकवाक्यतया–एकत्वे तिबित्यादिवाक्यार्थे कस्यैकत्वे इत्याकाङ्क्षायां प्रत्यासत्त्या तिबाद्यर्थान्वयिन इत्यस्यैव लाभेनाभावप्रतियोगिन्यनन्वयात् । घटसत्ताऽभावबोधे समनैयत्यादेव नियमेन घटाभावबोधोऽपीति न तद्विषयसन्देहादि । एवं समनियतभावयोरपि एकज्ञाने नियमेनापरज्ञानं बोध्यम् । अतएव घटज्ञाने तत्सत्तासन्देहादि न । समनियतानामैक्यमेव । नच प्रतीतिभेदे जाग्रति एवंकथनस्य न कश्चिदुपयोगः । लाघवात्पदार्थ एक एव धर्मभेदात्प्रतीतिभेद इत्यस्य वक्तुं शक्यत्वात् । घटत्वाभावघटभेदयोरिव, घटत्वघटभेदाभावयोरिव च सति समनैयत्ये भावयोरपि तत्त्वमुचितमेव । हेतोः समत्वात् इति केचित् । तन्न ।

एक एव धर्मी तत्रैव धर्मभेदकल्पनेन व्यवहारभेदोपपत्तौ धर्मिभेदस्य न्यायादिनये ऽपि विलयापत्तेः । तद्रूपतद्रसादेरप्यैक्यापत्तेश्च । तत्र भासमानता-

वच्छेदकरूपत्वादिना न सम्भेनयत्यम् । तद्रूपं भासते इत्यादे रूपत्वादिना व्यक्तिविशेषो भासते इत्येवार्थः।

एतेन अधिकरणानालिङ्गिताभावबुद्धेरभावाद् 'इह घटो नास्ति' इत्यादावेतदधिकरणकाभावप्रतियोगिघटकर्तृका सत्तेति बोध इत्यपास्तम् ।

वक्ष्यमाणरीत्या प्रतियोग्यधिकरणस्यैवाभावाधिकरणत्वेन तस्य पृथगधिकरणाकाङ्क्षाभावात् । अधिकरणकारकस्य क्रियान्वये क्रियान्वयिकर्तृकर्मान्वये वा साधुत्वेनासाधुतापत्तेश्च । अत्यन्ताभावार्थकनञः प्रतियोगिभूतक्रियान्वयनियमाच्च । एतेन भूतले न घट इत्यादौ तात्पर्यवशात् कदाचिद् भूतलादौ घटाभावः कदाचिद् घटादौ भूतलवृत्तित्वाभावः प्रतीयते । अन्यथा इह घटो नास्तीत्यादिनो बोधानुपपत्तिः ।

तथाहि-पदार्थानां क्रमेणान्वयेन घटसत्तारूपोऽर्थः प्रथमं बुद्धो नञा निवर्त्तयितुमशक्यः सतो निषेधायोगात् । असतस्त्वसत्त्वादेव निवृत्तिसिद्ध्या नञो वैयर्थ्यम् ।

तदुक्तम्—

सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयङ्गतः ॥ इति ।

नच घटास्तिपदाभ्यां या घटविषयाऽस्तिबुद्धिर्जाता सा नञा निवर्त्यते इति वाच्यम् ।

बुद्धेः शब्दावाच्यत्वेन नञा तन्निषेधायोगात् ।

एतेन तस्या बुद्धेर्मिथ्यात्वं नञा क्रियते इत्यपास्तम् ।

घटाभावाद्यनवगतिप्रसङ्गाच्च।

कृष्णादृशाृत्रे ऽपि नास्ति घटो गेहे इति स्तनो घटस्य गेहसंसर्गभागिपेय इत्युक्तम्। स्ततः स्वरूपेण बुद्धस्य। एवं च घटकर्तृकसत्ताऽभावो बोधयितुमशक्य इति विशेषणीभूतगेहसंसर्गाभावप्रतीतिरिति तदर्थः॥ ३३॥

( कुं॰ टी॰ ) ननु संयोगितादात्म्यं संयोग एव तथाच संयोगसम्बन्धावच्छिन्नप्रतियोगिताके संयोगिनोऽत्यन्ताभावे ऽतिव्याप्तिरत आह *अतिरिक्तमिति। ननु तत्र संयोगस्य संयोगत्वेनैव सम्बन्धता नतु तादात्म्यत्वेनेति नातिव्याप्तिरत आह *तद्वृत्तीति। *समानियतेति। वह्न्यभावस्य वह्नित्वेन प्रत्येयाभावस्य चैक्यस्वीकारात्। *एकस्येति। अभावस्येति शेषः। *अनयोः—संयोगादिसंबन्धाभावतादात्म्यसम्बन्धाभावयोः। *घटादीति। वह्निसंयोगाभावस्य वह्निरिव उभयोरप्यभावयोर्घटः प्रतियोगीत्यर्थः। *आद्यः—अत्यन्ताभावः। *अहंनास्मीति। मत्कर्तृकसत्ताऽभाव इत्यर्थादुत्तमः पुरुषः सिद्ध इत्यर्थः। तार्किकास्तु नञ्समभिव्याहारे भावनान्वयप्रतियोगिनि संख्यान्वयो नातो घटौ न स्त इत्यादौ द्विवचनाद्यनुपपत्तिरित्याहुः। तन्न। तेनैव वचनारम्भेण गौरवम्। तार्किकोक्तं युष्मादिसामानाधिकरण्यमनुवदति *आख्यातार्थेति। *नेति। शब्दमर्यादया तस्यार्थस्यालाभात्। *अनन्वयात्—अन्वयासम्भवात्। *समनियतभावयोः—घटतत्सत्तयोः। केषाचिन्मतमाह *समनियतानामिति। समाधत्ते *लाघवादिति। पदार्थो लाघवादेक एव प्रतीतिभेदस्तु धर्मभेदादित्यर्थः। *इवेति। यथा

घटभेदाभावो घटत्वमित्यर्थः । *तत्त्वमिति । अभावयोरिव युक्तिसाम्यात्समनैयत्येन भावयोरप्यैक्यमुचितमित्यर्थः । *एक एवेति । घटत्वपटत्वादिधर्मभेदादेव व्यवहारभेदोपपत्तौ घटपटादीनामपि भेदानापत्तिरित्यर्थः *तद्रूपेति । एकद्रव्यवृत्तिरूपरसयोरित्यर्थः । नन्वेकव्यक्तिनिष्ठयोरूपरसयोरेकस्य भाने अपरस्य भानं कुतो नेत्यत आह *तत्रेति । ननु भासमानयोरूपरसयोः समनैयत्यमेवेत्यत आह *इत्येवार्थ इति । *अधिकरणानालिङ्गितेति । केवलं घटो नास्तीत्यप्रतीतेः । एतदधिकरणको योऽभावस्तत्प्रतियोगी घट इत्यादिरर्थः । अधिकरणानालिङ्गितेति युक्तिं निराकरोति *वक्ष्यमाणेति । *प्रतियोगिभूतेति । प्रतियोगिभूता या क्रिया तद्वाचकेनैवान्वयनियमादित्यर्थः । *कदाचिच्चेति । पटादौ प्रसिद्धस्य भूतलवृत्तित्वस्य घटादावभाव इत्यर्थः । *अशक्य इति । स्वकारणाद् वृत्त्यात्मलाभस्य निवृत्तिरशक्येत्यर्थः । बौद्धपदार्थानभ्युपगमे खण्डनकारोक्तं दूषणं भूतलाधिकरणिका घटकर्तृका सत्तेत्यर्थेऽपि दर्शयति *सताश्चेति । सतो हि निषेधः कर्तुं न शक्यते यथा तथा असतो ऽपि प्रतियोग्यप्रसिद्ध्या निषेधासम्भव इत्यर्थः । तस्माद्बौद्धस्यैव निषेध इति भावः । अत्र तु मते भूतलवृत्तित्वस्य निषेध इत्याशयो बोध्यः । *घटास्तिपदाभ्यामिति । विच्छेदेन 'घटो ऽस्ति' इति बुद्धिर्जाता सा निवर्त्यते इत्यर्थः । *शब्दावाच्यत्वेनेति । शब्दवाच्य एवार्थो नञा निषिध्यते बुद्धिस्त्वर्थाल्लब्धा न शब्दवाच्येत्यर्थः । *कणादसूत्रे ऽपीति । प्राचां मतेऽत्यन्ताभावस्तत्रैव यत्र प्रतियोगिनो ऽसत्त्वमेव । यथा जले पृथिवीत्वं नास्तीति । भूतस्य यो ऽभावः स तु ध्वंस एव । भविष्यतो ऽभावस्तु प्रागभाव एव । एवं सति यत्र गेहे कदापि न

घटस्य सत्त्वं तत्रात्यन्ताभावमुपपादयति *गेहसंसर्गेति । घटश-
ब्दस्य घटसंसर्गे लक्षणया तदत्यन्ताभावबोध इति भावः॥२३॥

( क० टी० ) सिंहावलोकनन्यायेन प्रागोदाहरणमात्रे विशेषं सूचयितुमाह *असन्देहेति । *भेदेति । तन्मूलकसम्बन्धेनेत्यर्थः । *चस्त्वर्थे । "रक्षोहागमलघ्वसन्देहाः" इत्यत्र त्वगत्या तत्प्रागभावधीरित्यन्यत्र स्पष्टम् । अथ घटो नास्तीत्याद्युक्तं विशदयति *असमस्ते त्विति । समासादितो वैलक्षण्यसूचकस्तुः । *न अर्थे –नञ्वाच्यः । *तत्र–तयोर्मध्ये ।

यत्तु नैयायिकाः नित्यसंसर्गाभावस्तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभावो वाऽत्यन्ताभावस्तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाभावो ऽन्योन्याभाव इति ।

तन्न । तस्य प्रागुक्तरीत्या नित्यत्वाभावात्, गुरुत्वाच्च । तद्ध्वनयन्नाह *तादात्म्येतरेति । अन्योन्याभावे ऽतिप्रसङ्गार्थमिदम् । *सम्बन्धाभाव इति । सम्बन्धप्रतियोगिकाभाव इत्यर्थः । एवमग्रेऽपि । ननु तादात्म्यमत्र न धर्मिरूपम्, अशब्दार्थत्वात्, अत एव न सम्बन्धरूपमपि, सम्बन्धलक्षणानाक्रान्तत्वाच्च, अत एव न भेदविशिष्टाभेदरूपमपीत्यत आह *तादात्म्यमिति । सम्बन्धविशेष इत्यर्थः । ततो लाघवादाह *तद्वृत्तीति । साधारणधर्मस्य तत्र ततोऽनुपस्थितेरतिप्रसक्तत्वाच्चाह *असाधारणेति । अत एव तादात्म्याभाव इत्येवोक्तं न तु तत्सम्बन्धाभाव इति । नन्वेवं कथमनयोः सर्वसमतघटादिप्रतियोगिकत्वमत आह *समनियतेति । द्रव्यत्वगुणाश्रयत्वक्रियाश्रयत्वाभावादिस्थले इत्यर्थः । परैस्तेषामैक्याङ्गीकारादाह *एकस्येति । अभावस्येत्यर्थः । घटादितत्तत्तादात्म्यसम्बन्धानां समनैयत्यादित्याह *अनयोरिति । अत्यन्ताभावान्योन्याभावयोरित्यर्थः । एव च न तदतिरिक्त कश्चिद् घटाद्यभावादिरिति भावः । कुत्वारणायाह *तिङिति । फलादिवारणाय *क्रियेति । एवेन द्रव्यादिव्यवच्छेदः । 'तत्रैव तत्प्रयोगसाधुत्वे बीजमाह *असमस्तेति । तत्त्वञ्च समासघटकशब्दघटकभिन्नत्वम् । नन्ववमिदं विशेषणं व्यर्थम्, असन्देह इत्यादौ समासे तथा बोधस्यैवाभावात् । नच पूर्वं तदभावेऽपि पश्चाज्जायमानात्यन्ताभा-

यबोधे व्यभिचार इति तदावश्यकमिति वाच्यम् । एवमपि न-ञ्समासस्यापि वैकल्पिकत्वेन तदीयलौकिकवाक्ये 'न सन्देह' इत्यादावपि तथा बोधेन व्यभिचारतादवस्थ्यादिति चेन्न । तत्त्वस्य समासायोग्यसमूहघटकत्वरूपस्य विवक्षितत्वात् । नन्वेवमप्यसमस्तनञर्थेत्येतावन्मात्रोक्तौ नानुयाजेषु अब्राह्मण इत्यादौ पूर्वं तथा बोधाभावेऽपि पश्चात्तथाबोधेन व्यभिचार एवात आह *अत्यन्तेति । तत्र तु भेदविशेष्यकत्वमिति समासः । तथाच प्रसज्यप्रतिषेधीयो नञिति तात्पर्यम् । तत्र तूक्तहेतो + पर्युदास एव । सामर्थ्यसत्त्वे ऽपि समासो वैकल्पिकत्वान्नाद्ये । एतेनोभयसत्त्वे समासापत्त्या पर्युदासो न किन्तु प्रसज्यप्रतिषेध इत्याशङ्कोक्तरीत्या पर्युदासे एव समासाभावो ऽपि, विभाषेति तु कार्यमेवेति बाधलक्षणे सिद्धान्तोक्त्या तस्य न क्रियान्वयनियमो ऽन्यत्राप्यन्वयसिद्धेरिति परास्तम् । विभाषेत्यस्याफलत्वस्यान्यथा भाष्ये स्पष्टत्वाच्च । अत्रापि बीजमाह *अत एवेति । तस्य तदन्वये एव साधुत्वादेवेत्यर्थः । अस्योपपद्यते इत्यत्रान्वयः । व्युत्क्रमेणाह *अहमिति । औत्सर्गिकैकवचनेन तत्सिद्धेराह *घटाविति । पुरुषविधायकसूत्रक्रमेणाह *युष्मदादेरिति । उक्तक्रमेणाह *मदेति । इत्यादिवदन्वये[2] चेत्यर्थः । नन्वाख्यातार्थसंख्याया भावनान्वयिनीव परमते भावनान्वयिनञर्थप्रतियोगिन्यप्यन्वयो व्युत्पत्तिवैचित्र्याद्, एवञ्च तदर्थसंख्यान्वयित्वमेव तत्सामानाधिकरण्यमिति, पुरुषवचनव्यवस्थोपपत्तिरत आह *आख्यातार्थेति । अभ्युपेत्येदम् । वस्तुतः स एव नेत्याह *किञ्चेति । नन्वेव घटो नास्तीत्यादितो घटकर्तृकसत्ताऽभावादिबोधे ऽपि घ-

---

+ अत्र १ पु० एतेश्चेति खण्डितमुपलभ्यते हेत्वन्तरसमुच्चायकम् । परन्तु २ पु० तदनुपलम्भात्खण्डितत्वाच्चात्र नोपन्यस्तम् ।

(१) 'अन्वयः । औत्सर्गिकैकवचनेन तत्सिद्धेराह घटाविति । पुरुषविधायकसूत्रविधायकसूत्रक्रमेण त्वमित्याद्युक्तिक्रमेणाह युष्मदादेरिति । तत्क्रमेणैवाह त्वदेति' इति पुस्तकान्तरे उपलभ्यमानः पाठः । मूले उपलभ्यमानस्तु स्थापित एव ।

(२) अन्वयेत्वित्यर्थमूले इति पाठ पु-२ ।

टाभावाद्यबोधात् घटादिविषयकसन्देहापत्ति', तद्व्यत्ताज्ञानस्याप्रतिबन्धकत्वापत्तिश्चाविरोधादित्यत आह *घटसत्तेति । आदिना तत्प्रतिबन्धकत्वपरिग्रहः । एतेन 'न पचति चैत्र.' इत्यादौ पाककृत्यभाववांश्चैत्र इत्यादिवत् घटो नास्तीत्यादावपि सत्ताश्रयत्वाभाववान् घट इतिबोधात्तयोर्व्यवस्था सिद्धा । कर्तृत्वनियामक च्चाख्याततत्समभिव्याहृतनञेतवन्यतरार्थाश्रयत्वमेव । सख्या तु भावनाप्रतियोगिकनञर्थान्वय्यन्वयिन्यपीति न दोष इति नैयायिकोक्तमपास्तम् । सर्वानुभवसिद्धघटाभावबोधानुपपत्ते । ममतु घटकर्तृकसत्ताऽभावस्य घटाभावसमानियतत्वेन तद्बोधोपपत्ते ,वक्ष्यमाणदोषाच्च । विशेष वक्तु तुल्ययुक्त्या प्रसङ्गात्तदर्थमाह *एवमिति । समनियताभाववादित्यर्थः । सन्देहादीत्यादिना तदभावबुद्धिपरिग्रह' । खण्डयितुं नैयायिकमत आह *समेति । समनियताभावानामित्यर्थ. । क्वचित्तथा पाठ एव । तत्र बाधकमाह *नचेति । तस्यान्यविषयकतया न बाधकत्वमित्याह *लाघवादिति । स्वत. स्वरूपभेदेऽप्यैक्ये दृष्टान्तमाह *घटत्वेति । एकस्मिन्नेव भेदत्वेन घटप्रतियोगिकता अत्यन्ताभावत्वेन च घटत्वप्रतियोगिकतेति भावः । भावाभावयोरैक्ये दृष्टान्तमाह *घटत्वेति । *भावयोरपि-घटतत्सत्ताऽऽद्योरपि । *तत्त्वम्-ऐक्यम् । *हेतो-लाघवादित्याद्युक्तस्य । असमनैयत्यमादाय दोषमाह *एक एवेति । उभयकल्पनेनेत्यर्थः । आदिना धर्मितात्त्विकत्ववादिसकलान्यमतसग्रह. । *अपि' सिद्धान्तमतसमुच्चये । यथा तत्र तत्त्व तथा प्रागुक्तम् । अत एवेष्टापत्तौ समनैयत्यमादायैव दोषान्तरमाह *तद्रूपेति । उक्तयुक्त्यैव । इद तु नेष्टं तेषां समवायैक्यमादाय दोषापत्तिवारणाय तद्भेदावश्यकत्वात् । अत्र द्वितीयदोष परिहरति *तत्रेत्यादिकेचिदित्यन्तेन । *तत्र-तद्रूपतद्रसादौ । तस्याप्रसक्तत्वात् । ननु रूप भासते इत्यादिप्रतीतिर्नैव, सर्वरूपभानासम्भवात्, किन्तु विशेषप्रतीतिरिति तदवच्छेदकेन तद्रूपत्वादिना तदस्त्येवेत्यत आह *तद्रूपमिति । एवेन तस्य व्यावृत्ति । नन्वेवन्तेषामभावानान्तयोर्भावाभावयो भावयोश्च समनैयत्य न स्यात् रू

---

( १ ) पर उद्धरतीत्यपि पाठः क्वचित् ।

पत्वादिवद्भावत्वभेदत्वजत्वाद्यादेर्भासमानताऽवच्छेदकस्यातिप्रसक्तत्वादत आह *क्रियायामिति । *तत्र-तेषु । तथा च तत्र तत्तद्भावत्वतत्सत्त्वात्वादि भासमानताऽवच्छेदकरूपम्, नोक्तरूपमिति न दोषः । केचिदित्यरुचिबीजं तु तत्रापि तद्रूपत्वादेर्भासमानतावच्छेदकत्वमन्यथा लक्षणाऽऽपत्तेः । किञ्च तद्रूपादेरप्याश्रयविशेषालिङ्गितस्यैव भानम् । किञ्च तस्यास्तदनालिङ्गितायास्तस्य च तदनालिङ्गितस्य भानं प्राक् प्रतिपादितं तथाच उभयतस्पाशा रज्जुरिति न्यायापत्तिः । एवञ्च द्वितीयदोषो ऽपि स्थिर एवेति । स्वपरसाधारणपरमतं खण्डयति *एतेनेति । तस्य तदाकाङ्क्षत्वादाह *अधिकरणतामिति । घटाभावेत्युक्तौ वचनं गुरुपदव्यवस्थादि न स्यादतस्तत्सिद्ध्यर्थमाह *अभावप्रतियोगीति । एतेनेत्यस्यार्थमाह *वक्ष्यमाणे इति । अत्रेव प्रकरणेऽपि भावः । *तस्य-अभावस्य । *आकाङ्क्षाऽभावात्-तस्या अभावात् । साक्षात्तदन्वयाभावादाह *कर्तृकर्मेति । *असाधुरिति । इहेत्यादेरिति भावः । उक्तकार्यकारणभावादाह *अत्यन्तेति । एतेन तादृशो घटः सत्ताऽऽश्रय इति बोधान्न तदनुपपत्तिरित्यप्यपास्तम् । तस्य सत्तायां तत्कर्त्रादावाऽन्वयेतु यत्किञ्चिन्निष्ठाभावप्रतियोगी घट इहास्तीत्येव बोधः स्यात् । तथा च महदनिष्टम् । न च तस्य क्रियान्वयेऽपि तत्समभिव्याहृतनञस्तद्वृत्त्यभावे लक्षणाऽङ्गीकारान्न दोषः ॥ एतद्देशवृत्त्यभावप्रतियोगिनि घटे एतद्वृत्तिसत्ताऽभावनिश्चयसत्त्वात्तत्र तदधिकरणकसत्ताश्रयत्वबोधानुपपत्तेः । नञ्वादाद्युक्तपरमतं निराचष्टे *एतेनेति । चरमदोषेणेत्यर्थः । अस्य विस्तर इत्यपास्तमित्यत्रान्वयः । *अन्यथा-तथाऽनङ्गीकारे क्रियाध्याहारेण तथा बोधाङ्गीकारे । ननूक्तरीत्या एतदधिकरणकघटकर्तृकसत्ताऽभाव इति बोधः सूपपन्न एव, अत आह *तथाहीति । *क्रमेण-आकाङ्क्षाक्रमेण । अत एवाह *घटसत्तेति । तस्य सत्त्वे आह *सत इति । भ्रमत्वे आह *असतइति । *तदुक्तम्—खण्डनकृता ।

*स:-निषेधः । द्वितीये सार्थक्यमाह *न चेति । तस्याः सत्त्वात् क्षणिकत्वाच्चेति भावः । विरोधिबुद्धेस्तद्बुद्धिनिवर्त्तकत्वे ऽपि प्रयुज्यमाननञ्वाच्यनिवृत्तेर्वाच्यसाधारणत्वादत्रासम्भवमाह *बुद्धेरिति । *एतेन-उक्तहेतुना । इत्यप्यपास्तमिति पाठः । उभयसाधारण दो-

षान्तरमाह *घटाभावेति । आदिना भूतलवृत्तित्वाभावपरिग्रह । तस्मान्न तथा बोध । किन्त्वगत्या तथा बोध॰ कादाचित्क इति सिद्धम् । तत्र सङ्गतिमप्याह *कणादेति । इत्यनेन संसर्गस्य प्रतीति पाठ । सतो घटस्येति हेतुगर्भतया सफल नान्यथेत्याह *सत इति । *गेहसंसर्गेति । तद्वृत्तित्वेत्यर्थ ॥ ३३ ॥

नचाव्ययीभावस्य नित्यत्वाद् 'भूतले न घटः' इति वाक्य दुर्लभमिति वाच्यम् । अर्थाभावशब्दे नञो घटकतया सूत्रगृहीताव्ययत्वेन नञा अव्ययीभावाभावात् । अत एव 'पूर्वपदार्थप्रधानो नञ्तत्पुरुषः' इति पक्षे तत्पुरुषेणाव्ययीभावस्य बाधप्राप्त्याऽव्ययीभावासिद्धिस्वरूपं दूषणं भाष्ये नोपन्यस्तम् । अत एव तत्र पक्षे 'अवर्षा हेमन्तः' इत्यादौ लिङ्गसङ्ख्यायोगो न स्यात् पूर्वपदार्थत्वेनासत्त्वभूतत्वादित्याशङ्क्य शब्दशक्तिस्वभावेन परिहृतम् । अत्र तु पक्षे ऽनेकमित्यादावेकवचनासिद्धिं मनसि निधाय उत्तरपदार्थप्रधानत्वं सिद्धान्तितम् । असंहितामिति तु सन्धानरूपसंहिताऽपरपर्यायभावसाधनक्तान्तनपुंसकसंहितशब्देन नञ्तत्पुरुषे बोध्यम् । सूत्रवार्त्तिकप्रामाण्यादुभयलिङ्गः संहिताशब्दः । 'जात्यवद्वा तथा वाऽन्तौ' इति प्रातिशाख्यव्याख्याने संहितवदिति तद्भाष्ये प्रयुक्तमित्यन्यत्र विस्तर इत्यपास्तम् । सत्त्वेन निश्चितस्य निषेधाभावेऽपि तत्त्वेन संभावितस्य निषेधसम्भवाच्च । नञ्समभिव्याहार एव च तस्य तत्त्वे प्रयोजकः । कणादसूत्रे तु सतानियताभावानामैक्यं बोधयितु तथोक्तिः । गेहसंसर्गस्यापि प्रतिषेध इत्यर्थादिति दिक् ।

पृथिव्यां गन्धो न जले इत्यादौ प्रतीतेरेकाविशेष्यकत्वानुभवस्तु स्ववासनाकल्पित इति दिक् ॥३४॥

( कुं० टी० ) *अर्थाभावेति । अभावशब्दे नञोऽन्तर्भूतत्वेन सूत्रगृहीतत्वान्न समासः । सर्वपश्चादिति भाष्यप्रयोगात् । *नोपन्यस्तमिति । तत्पुरुषेण बाधापत्तावव्ययीभावो न स्यादिति दूषणं नोक्तम् । *अत्र तु पक्षे—पूर्वपदार्थप्रधान इति पक्षे । अव्ययीभावस्यात्रानिष्टत्वादेवेत्यर्थः । उत्तरपदार्थप्रधानत्वे क्लीबत्वमुपपादयति *असंहितमितित्विति । *अपास्तमिति । अधिकरणकारकस्याभावादावन्वयासम्भवात् । *तत्त्वेन—सत्त्वेन । ननु कथं तत्र घटादेः सम्भावनेत्यत आह *नञ्समभिव्याहारएवेति । *तस्य—घटस्य । *तत्त्वे-सम्भावितत्वे । *तथोक्तिः—गेहसंसर्गाभावो निषिध्यते इत्युक्तिः । *संसर्गस्यापीति । अपिना घटसत्ताऽभावः । नन्वधिकरणस्य क्रियायामेवान्वये पृथिवीवृत्तित्वजलवृत्तित्वाभावयोर्गन्धे बोधो न स्यादत आह *पृथिव्यामिति । *एकविशेष्यकत्वेति । गन्धविशेष्यकत्वेत्यर्थः ॥ ३४ ॥

(क० टी० ) अत्र मते दीक्षितभूषणादिरीत्या प्राप्तदोषमुद्धर्त्तु शङ्कते *नचेति । नञ्तत्पुरुषस्य वैकल्पिकत्वान्न तत्प्रयुक्तदोष इत्याह *अव्ययीति । पक्षद्वयेऽपीति सूचयन्नाह *भूतले न घट इतीति । *अव्ययीभावाभावादिति । "अचः परस्मिन्" इति सूत्रस्थात् "तत पश्चाद्" इति भाष्यप्रयोगाद्, "यथाऽसादृश्ये" इति सूत्रे "सादृश्यसपत्तीति प्राप्नोति" इति भाष्योक्तेश्च । तत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेन न समासः सः । यथाशब्देन तु भवत्येवोत्तरसूत्रारम्भादित्यर्थः ।

अत्र भाष्यान्तरमपि गमकमाह *अत एवेति । ततस्तदभावाङ्गीकारादेव चेत्यर्थः । *इति पक्षे—द्वितीये । *नोपन्यस्तमिति । तथा च न्यू

नताऽऽपत्ति'। ननूपलक्षण तद्त आह *अत एवेति।उक्तोऽर्थः । *तत्र पक्षे–पूर्वपदार्थप्रधान स इति पक्षे। *शब्देति। वाक्ये नञोऽसत्त्वभूतार्थाभिधायित्वेऽपि समासे सत्त्वरूपार्थाभिधायित्व तत इत्यर्थ । तेनाव्ययीभावस्येष्टत्वे तु तेन तद्योगासिद्ध्या तावत्पर्यन्तगमनासगतिः स्पष्टैव । ननु नेद सिद्धान्तभाष्य तत्पुरुषस्योत्सर्गत उत्तरपदार्थप्रधानत्वादत' कथ ते उक्तार्थसिद्धिरत आह *अत्रात्विति । उक्तदोषद्वयाभावसूचकस्तुरिति तदशे तस्य सिद्धान्तत्वमेवेति भाव । *वचनासिद्धिम्–वक्ष्यमाणाम् । *प्रधानत्वमिति। अथवा पुनरस्तूत्तरपदार्थप्रधान इत्यनेनेति भावः । नन्वेवं कथम् "अद्रुतायामसहितम्" इति सहितासूत्रस्थवार्त्तिकप्रयोगो ऽत आह *असहितमिति स्विति । आरोपित पर' सनिकर्ष इति तदर्थ । *सूत्रेति । एतदुभयप्रामाण्यात्स्त्रीनपुसकलिङ्ग इत्यर्थ. । सहितशब्द इति पाठः । अत्रान्यसमतिमप्याह *अत एवेति । क्लीवाङ्गीकारादेवेत्यर्थ' । एतेन सूत्रवार्त्तिकप्रयोगादव्ययीभावेन सह नञ्तत्पुरुषो वैकल्पिक इति दीक्षिताद्युक्तमपास्तम् । असन्देह इत्यस्य गतिरुक्तैव। तदाह *अन्यत्रेति । शेखरादावित्यर्थ. । तदुक्तदोषमुद्धरति *सत्त्वेनेति । तस्यैव तत्प्रतिबन्धकत्वात्। ननु तत्रैव न मानमत आह *नञिति। *तस्य तत्त्वेघटस्य सम्भावितत्वे । नन्वेवमपि कणादोक्तिविरोध एवात आह *कणादेति । तल्लाभे बीजमाह *ससर्गस्यापीति । अपिना सत्तादिसमुच्चयः । एव च तत् प्रागुक्तरीत्या ऽयुक्तमेवेति तद्रीत्या पूर्व दृष्टान्तदान न स्वरीत्येति न सिद्धान्ते तद्विरोध इति च बोध्यम् । किञ्च उक्तभाष्यादपि अत्यन्ताभावार्थकनञः क्रियादिप्रतियोगिकाभावबोधकत्वेनोत्तरादिपदार्थेनानन्वयादसामर्थ्येनाव्ययीभावो न निर्मक्षिकमित्यादिवदिति तथा वाक्योपपत्तावपि तथा बोधस्यैव लाभ इति तथा बोधो ऽयुक्त एव। न सन्देह इत्यादौ तु सन्देहस्य गुणत्वाद्द्रवत्येव नञा तदभावबोधनमिति सामर्थ्यमस्त्येव । सो ऽप्युक्तरीत्यैवेति न दोष. । इदमनुपदमे-

---

( १ ) नामक्षिकामिति पाठ. ।
( २ ) 'स्वोक्तार्थसाधकतया तदुक्तमेव' इति पाठ. ।

व स्फुटीभविष्यतीति न पूर्वविरोध । एतेन भूतले न घट इत्यादौ घटात्यन्ताभावे भूतलान्वितस्य सप्तम्यर्थाधेयत्व-स्यैव तात्पर्यवशात् घटादौ सप्तम्यन्तभूतलादिवृत्तित्वाभाव-स्यान्वयबोधो ऽनुभवसिद्ध । अन्यथा तादृशबोधजन्यस्याप्रा-माण्यज्ञानानास्कन्दिताभावबोधस्य भूतले घट इत्यादिवाक्यज-न्यघटादिविशेष्यकभूतलाधेयत्वप्रकारकबोधविरोधिताया अनुपप-त्ते । नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसम-भिव्याहाराद्भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभाव प्रतीयते इति अनुभवापलापप्रसङ्गात् इति व्युत्पत्तिवादा-द्युक्तमप्यपास्तम् । उक्तयुक्ते । उक्तरीत्या प्रतिबन्धकत्वोपपत्तेः, ततो ऽपि क्रियाविशेष्यकबोधस्यैवोक्तरीत्या सत्त्वाच्चेति दिक् । त-दाह *इतिदिगिति । यत्तु त्वन्मते पृथिव्यामित्यादौ प्रतीतेरेकविशे-ष्यत्वानुभवो विरुध्येतातो मदुक्तमेव युक्तमिति सा, तत् खण्ड-यति *पृथिव्यामिति । तात्पर्यवशात्कदाचित्प्रातिपदिकार्थवि-शेष्यकविभक्त्यर्थवृत्तित्वाभावप्रतीत्यङ्गीकारेण गन्ध पृथिवी-वृत्तित्ववान् जलवृत्तित्वाभाववांश्चेति बोधादाह *प्रतीतेरेके-ति । अन्यथा न जले इत्यत्र गन्धपदावृत्तिप्रसङ्ग इति तद्भा-व । यत्तु पृथिवीवृत्तिगन्धप्रतियोगिकाभाववज्जलमित्यर्थ इति । त-न्न । जले इति सप्तम्यनुपपत्तेः । तदभावो जलवृत्तिरिति बोधे पृथिव्यामिति सप्तम्यनुपपत्ते', तत्पदवैयर्थ्यापत्तिश्च । तस्मात्सि-द्धान्तरीत्या प्रतीतिद्वय भिन्नविशेष्यकम् । एतेनोक्तरीत्या सप्तम्य-र्थान्विताभावस्य विशेषणतया प्रतियोगिन्यन्वयाद् भूतलवृत्त्यभावप्र-तियोगी घट इतिवज्जलवृत्त्यभावप्रतियोगी गन्ध पृथिव्यामिति विनैवावृत्ति बोध इति मतमपि निरस्तमिति दिक् । तदाह *इति दिगिति ॥ ३४ ॥

"नेक्षेतोद्यन्तमादित्यम्" इत्यादौ तस्य ब्रह्म-चारिणो व्रतमित्यनुष्ठेयत्वाभिधानशब्दोपक्रमादभावस्य चाननुष्ठानादीक्षतेर्नञ्समभिव्याहारादीक्षणाभावसं-कल्पबोधकतेति बोध्यम् ।

यत्त्वत्र पर्युदासस्तत्राभावस्याननुष्ठेयत्वाच्छ्रुतश-ब्दोपक्रमाच्च तद्भिन्नक्रियायाः सामान्यतः प्राप्त्या चानीक्षणसङ्कल्पे लक्षणेति। तन्न।

ईक्षणभिन्नसङ्कल्पे तात्पर्याभावात्। तथा शि-ष्टाचाराभावाच्च। नेक्षिष्यामीति ईक्षणाभावसङ्क-ल्पस्यैव सर्वैराचरणाच्च।

किं च यत्र नञ्समभिव्याहारे पदार्थस्याभेदेना-न्वये आकाङ्क्षा तत्रैव नञ्समभिव्याहारे भेदप्रती-तिर्नान्यत्र। नच प्रकृते तथा। अत एव 'न पचति तिष्ठति' इत्यादौ न भेदबोधः। अत एव तिङन्तसम-भिव्याहृतनञो ऽत्यन्ताभावार्थकत्वमेव।

अयमेव प्रसज्यप्रतिषेध इत्युच्यते। प्रसज्य विधाय विहितस्य प्रतिषेध इति तदर्थः। नञ्सूत्रे भाष्ये तु—"प्र-सज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति" इत्युक्तम्। तेन गुणाभावबोधे ऽपि प्रसज्यप्रतिषेध इति लभ्यते। 'नास्माकमेकं प्रियम्' इत्युदाहरणम्। अत्र हि एक-प्रियप्रतिषेधे बहुप्रियप्रतीतिः। 'न सन्देह' इत्यादौ च सन्देहाभावप्रतीतिः। सन्देहस्य गुणत्वात्। सर्वत्र क्रियाप्रतिषेधे हि गुणपदोपादानं भाष्ये अनर्थकं स्यात्।

प्रसज्यप्रतिषेधो ऽसौ क्रियया सह यत्र नञ्॥—

इत्यत्र क्रियाग्रहणं गुणस्याप्युपलक्षणमिति बहवः॥३८॥

(कुं॰टी॰) *नेक्षेतेति। अत्र प्रतिषेधवाचिनो नञः क्रिया-यामन्वयादीक्षणनिषेधो वाक्यार्थः। निषेधश्च प्राप्तिपूर्व-

क इति यत्र क्रतौ सूर्येक्षणं विहितं तत्रोदयकालिकसू॰ र्येक्षणनिषेधः क्रत्वर्थ इति पूर्वपक्षे ऽभावस्यानुष्ठानासम्भवा- न्नञः पर्युदासपरतयाऽनीक्षणसङ्कल्प एव पुरुषार्थो विधीयते इति मीमांसकाः । *किञ्चयत्रेति । नञो ऽभावे यत्राभेदा- न्वयसम्भावना तत्रैव नञ्समभिव्याहारे भेदान्वयः । घटः पटो नेत्यत्र हि नञो ऽभावे नामार्थयोरिति न्यायादस्त्यभेदप्रा- प्तिरिति भावः । *नभेदबोधइति । पाकस्थित्योरभेदाप्रसङ्गाद् भेदबोधो ऽपि नेत्यर्थः ॥ ३९ ॥

( क॰ टी॰ ) सिद्धान्ते प्राप्तदोषमुद्धरति *नेक्षेतोद्यन्तमिति । अस्त यान्त कदाचन ।

नोपरक्तं न वारिस्थ न मध्य नभसो गतम् ।

इत्यस्य परिग्रह । इद च स्नातकव्रतान्तर्गत न मानवम्, न याज्ञवल्क्यीयम्, नाप्यापस्तम्बीयम्, किन्तु ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गतम् । तदुत्सर्गे "कर्माणि पुरुषार्थाय" इत्यादितुर्याद्यपादस्थजैमिनिसूत्रविषयभूतन्तदाह *तस्येति । अस्य व्याख्या *ब्रह्मेति । *ईक्षणाभावेति । अत एव स्नातकव्रतप्रकरणे "उद्यन्तमस्त यन्तमादित्य दर्शने वर्जयेद्" इत्यापस्तम्ब॰ सङ्गच्छते । एवञ्चोक्तानियमात्प्रसज्यप्रतिषेध एव तत्रेति भाव । तत्सूत्रस्थमीमांसकविज्ञानेश्वरादिमतं खण्डयति *यस्त्विति । *तत्र–पर्युदासे । *व्रतेति । तद्वाचीत्यादि । अत- एव सामान्यप्राप्तिः, तत्र निषेधलब्धमादायाह *तद्भिन्नेति । नञि- वयुक्तन्यायेनाह *क्रियायाइति । *प्राप्त्याचेति । तद्विशेषजि- ज्ञासायां पुरुषक्रियामात्रस्य सङ्कल्पपूर्वकतया प्रत्यासत्त्या तत्स- मभिव्याहारेण चेति शेष । अन्यथा मन्वाश्वलायनापस्तम्बादि- कृततथोपक्रमविरोध॰ स्पष्ट एवेति भाव । उदयास्तमयकालयोः प्रत्यह सङ्कल्प इति तन्त्ररत्नाद्युक्तमसङ्गतमिति ध्वनयन्नुक्तापस्तम्ब- मूलकमेवाह *नेक्षिष्यामीति । यथा चैतत्तथा स्पष्ट मिताक्षराव्या- ख्यायाः सूच्याम् । अतएव विज्ञानेश्वरेणापि मांसभक्षणविधि-

निषेधयोर्मन्वाद्येकवाक्यतया तथैव सङ्कल्पो दर्शित.। इदमप्यभ्युपेत्योक्तम्। वस्तुतस्तदेव नेत्याह *किञ्चेति। *यत्रेति। स्ववाक्योपात्ते इत्यर्थः। एतेन व्रतेन तत्सत्त्वाच्चिन्त्यमित्यपास्तम् । तस्य वाक्यान्तरत्वात् । तथा सति तथाऽन्वयस्यैव सत्त्वेन तदाकाङ्क्षामात्रस्यैवाभावाच्च । अन्वयस्य बाधितत्वादाह *आकाङ्क्षेति । तन्मात्रमित्यर्थः । भिन्नार्थकात्तस्य बोधे ऽपि समानविभक्तिनामार्थयोरितिव्युत्पत्त्या तदाकाङ्क्षा सम्भवति, तस्या असाङ्क्षिषयाया अपि बहुशो दृष्टत्वादिति भाव'। *नच—नहि । तदविषयतया बाधेन च व्युत्पत्त्यन्तरेण भेदसम्बन्धेनैवान्वयस्य तस्य तदाकाङ्क्षायाश्च सत्त्वात्। घटो न नील इत्यादौ च वक्ष्यमाणरीत्या ऽत्यन्ताभावधीरेव, न भेदधी । तत्र तदभावे तथाऽन्वयस्यैव सत्त्वेन तदाकाङ्क्षामात्रस्यासत्त्वाच्च। वक्ष्यमाणरीत्या विपरीतधीरपि न ।

एतेन नञो ऽभावे यत्राभेदेनान्वयबाधस्तत्र नञाऽत्यन्ताभावधीर्यत्र तदभावे ऽभेदेनान्वयस्तत्र तेन भेदधीस्तत्र च तत्तदाकाङ्क्षाज्ञानाद्येव नियामकमिति नैयायिकाद्युक्तपास्तम् ।

तदेतद् ध्वनयन्नाह *अत एवेति । उक्तनियमादेवेत्यर्थ । परमते तु घटः पटो नेत्येतत्तुल्यतया ऽत्रापि स स्यादिति भाव । उपसंहरन्नाह *अत एवेति । उक्तोऽर्थ । अतएव 'न पचति चैत्र' इत्यत. 'चैत्रभिन्नकर्तृकः पाक' इत्यबोधः । विशेष वक्तुमाह *अयमेवेति । तत्समभिव्याहृतनञ्बोध्यात्यन्ताभाव एवेत्यर्थ.। प्रसज्येत्यस्यार्थः *विधायेति । विशिष्टफलितार्थमाह *विहितेति । विधान च तदसमभिव्याहृतवाक्यतो बोध्यम्। तमेव विशेषमाह *नञ्सूत्रे इति । *तेन—भाष्ययितथाकथनेन । "न एक प्रियम्" इति तत्रोक्तम्। नद्वित्वाशयकामित्यर्थत आह *नास्माकामिति । येननाप्राप्तेऽइतिवन्नेत्याह *अत्रहीति । बहुप्रियशब्द' पात्रादि । बहुप्रियतेतिपाठस्तु सुगम एव। प्रागुक्तदाढ्यायोदाहरणान्तरमाह *नसन्देह इति। अभियुक्तोक्तिविरोध परिहरति *प्रसज्येति। एवं च न तथैव कार्यकारणभाव, किन्तु तत्र तादृशधातुगुणवाचकपदान्यतरजन्योपस्थितिः कारणमिति बोध्य. ॥ ३५ ॥

अन्त्यो घटः पटो नेत्यादौ।

यत्त्वत्र भेदो नञर्थः तत्र प्रतियोगितासम्बन्धेन पटस्यान्वयः । नच गृहस्योच्चैरित्यादाविव षष्ठ्यापत्तिः । एवं तर्हि पटपदं पटप्रतियोगिकपरम्, तस्य भेदे ऽभेदान्वयः । भेदस्याश्रयतया घटे ऽन्वयः । अभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया ।

यद्वा भेदवान्नञर्थः । भेदवति लक्षणेति तु न युक्तम् । निपातानामनेकार्थत्वेन लक्षणानवसरात्, केवलभेदस्य क्वाप्यबोधाच्चेति । तन्न ।

न ब्राह्मणैरेतैरुपद्रुतमित्यादौ भेदाश्रयभेदप्रतियोगिनोः समानविभक्तित्वस्य दुरुपपादत्वात्, समासवाक्ययोस्तुल्यार्थत्वौचित्याच्च । तस्मादत्रापि आरोपितपटाभिन्नो घट इति बोधः । नञ् द्योतक एव । एवञ्च समानविभक्तिकत्वं सिद्धम् । घटभेदबोधस्त्वार्थः । तत्समनियतत्वाद् घटत्वाभावबोधो ऽपि तत्रार्थः ।

यद्यपि भेदो निरूपयितुमशक्यः । तथाहि— घटः पटाद्भिन्न इति भेदज्ञानं भिन्नत्वेन गृहीतधर्मिप्रतियोगिज्ञानपूर्वकम् । तत्र स भेदो ऽयमेव चेदात्माश्रयः । भेदान्तरं चेत्तदपि भिन्नयोरेव धर्मिप्रतियोगिनोर्ज्ञातव्यम् । स चेत्पूर्वभेद एव तदाऽन्योन्याश्रयः । तृतीयो भेदोऽन्यश्चेच्चक्रकापत्तिः । भेदपरंपरास्वीकारे अनवस्था । अन्तिमभेदासिद्ध्या मूलभूतभेदपर्यन्तमसिद्धेर्मूलक्षयात् । अत एव भेदस्यासत्सामान्यशब्देन कैयटादौ व्यवहारः । असत्त्वमुक्तरीत्या, सामान्यत्वं केवलान्वयित्वात् । तथाऽप्यविचारितरमणीयेनैव मायिकेन भेदेन व्यव-

हाराद्यावहारिकस्यैव सत्त्वेनाक्षतिः, घटाद्यर्थस्य घटादिपदवाच्यत्ववत् । अन्यथा घटत्वाश्रयत्वेन अयं घटः, घटवृत्तित्वेन चेदं घटत्वमित्यन्योन्याश्रयात् । पदार्थमात्रस्याविचाररमणीयस्यानिर्वचनीयस्यैव व्यवहारप्रयोजकत्वात् ।

अत एवोक्तं श्रीहर्षेण—

समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तवास्तु गतिस्तर्कैर्वस्तुधीव्यवहारयोः ॥
उपपादयितुं तैस्तैर्मतैरशकनीययोः ।
अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः ॥
यथा सतो जनिर्नैवमसतोऽपि जनिर्न च ।
जन्यत्वमेव जन्यस्यानिर्वाच्यत्वसमर्पकम् ॥ इति ।

तथा—

भेदसत्यपरस्तर्को भेदमायापरोऽपरः ।
भेदसत्यपरस्तर्को ह्यसन्वेदविरोधतः ॥
एकविज्ञाननिगमान्नेह नानेति च श्रुतेः । इत्यलम् ।

एवमघटस्य दर्शनमित्यादौ "सर्वं वाक्यं सावधारणम्" इति न्यायेन घटभिन्नस्यैव दर्शनमित्यर्थात् घटस्य दर्शनाभावोऽपि आर्थः प्रतीयते । अघटदर्शनमित्युक्ते तु न । तद्भिन्नदर्शनेऽपि तद्दर्शनाभावाभावेन तयोः समनैयत्याभावात् । एवकारान्तर्भावेण वृत्तौ तु न मानम् । एतच्च "तस्य भावः" "नञो गुणप्रतिषेध—" इत्यादिसूत्रेष्वाकरे स्पष्टम् ॥ ३६ ॥

(कुं०टी०) *अन्त्यः—तादात्म्यसम्बन्धाभावः । *तत्र—भेदे ।

*प्रतियोगिनेति । घटप्रतियोगिकभेदवानित्यर्थः । *गृह-स्योच्चैरित्यादाविवेति । "न लोक–" इत्यत्र पूर्वोत्तरसा-हचर्यात् कृदव्ययस्यैव ग्रहणात् । *षष्ठ्यापत्तिरिति । घटसम्बन्धिभेदवानित्यर्थात् । *नयुक्तमिति । शक्त्यैव निर्वाहात् । *नब्राह्मणैरिति । अत्र भेदप्रतियोगिनो ब्राह्मणाः, भेदाश्रया एते, ब्राह्मणप्रतियोगिकभेदवन्त एते इत्यर्थे सामानाधिकरण्याभावात्समानविभक्तिकतानापत्ति-रित्यर्थः । *तत्समनियतत्वात्–घटभेदसमनियतत्वात् । *ध-र्मिप्रतियोगीति । घटः पटो नेत्यत्र धर्मी घटः प्रतियोगी पटः अनयोर्भेदवत्त्वेनोपस्थितयोरेवेयं बुद्धिरित्यर्थः। *चक्रकमिति । त्रयाणां परस्परापेक्षा चक्रकम् । अत ऊर्ध्वमनवस्था । असत्सा-मान्यपदयोरर्थमाह *असत्त्वमिति। *उक्तरीत्या–भेदासिद्धिरि-तिरीत्या । *अतएवोक्तमिति । यदि घटबुद्धिविशेष्या घटसिद्धि-स्तदा घटबुद्धिरपि घटबुद्धिबुद्धेरेव वाच्या इत्यनवस्था । नन्वेवं सर्वलोकशास्त्राविसंवादेन प्रवर्त्तमानयोर्वस्तुधीव्यवहारयोः का गतिरिति पृच्छति *कागतिरिति । वस्तुधीव्यवहारयोः संप्रति-पत्तिमात्रं विचारतस्तु तयोरुपादानमशक्यमित्याह *उपपादयि-तुमिति। *इत्युक्ते तु नेति । अत्र घटदर्शनाभावबोधो नेत्यर्थः । अत्र हेतुमाह *तद्भिन्नेति । घटभिन्नपटादिदर्शने घटस्य दर्शनं न भवतीति नेत्यर्थः । *तयोः–अघटदर्शनघटदर्शनाभावयोः ॥३६॥

( क० टी० ) एवं तदर्थात्यन्ताभाव निरूप्य भेदं निरूपयति *अन्त्य इति । भेद इत्यर्थः । सोऽपि समासवदार्थ एव, न शाब्द इति प्रतिपादयितुं मीमांसकनैयायिकमतं खण्डयति *यस्त्विति । *नञर्थ–तद्वाच्यः । *एव तर्हीत्यस्य यत इत्यादि· । लक्षणया आह *पटपदमिति । *भेदे–नञर्थे ।

*अभेदान्वय'–अभेदेनान्वयः। ननु व्युत्पत्तिविरुद्धमन्त्यमत आह *अ-भेदेति। नन्वेवमाद्यबोधोऽपि न स्यादत आह *यद्वेति। भेदेत्यस्य प्रतियोगिविशिष्टेत्यादि । तथा च साकाङ्क्षत्वात्प्रतियोगिनि पटस्य अभेदेनान्वयो विशिष्टस्य घटे तथेति। तस्मादन्यथात्वेऽपि न कोऽपि दोषो ऽत्रेति भाव। एकदेश्युक्त खण्डयति परः *भेदवतीति। भेदे शक्तस्य पर्युदासे सामानाधिकरण्यानुरोधेन तत्र लक्षणेत्यर्थः। सिद्धान्तमतेन दूषणमाह *निपातानामिति। परोक्तदोषमाह *केवलेति। घट. पटो नेत्यादौ परमते साधुत्वेन निर्वाहमभ्युपेत्याह *नब्राह्मणैरिति। अत एव तत्साधारणं दोषान्तर समासस्थले पूर्वं तथा प्रतिपादितत्वादाह *समासवाक्ययोरिति । *अत्रापि–वाक्येऽपि तदीये। अपिना समाससमुच्चय । अतएवाह *एवञ्चेति। साधुत्वार्थं प्रथमेति तु न युक्तम्। तथाऽनुशासनाभावात्। औत्सर्गिकैकवचनस्यापि गमके सत्येव संस्वाच्च । नन्वेव कथ तद्भेदधीः सर्वजनप्रसिद्धा ऽत आह *घटभेदेति । समनियताभावानामैक्यमेकास्मिन्नेव भेदत्वेन घटप्रतियोगिकत्वम्, अत्यन्ताभावत्वेन च घटत्वप्रतियोगिकत्वमिति मतस्य दूषितत्वादाह *तत्समनियतत्वादिति। भेदस्य न वास्तवत्वमित्याह *यद्यपीत्यादि । घटो घटाद्भिन्न इत्यादिवारणायाह *भिन्नत्वेनेति। तत्त्वेन गृहीतौ यौ तस्याश्रयप्रतियोगिनौ तयोर्यज्ज्ञान प्रतियोग्यधिकरणयोर्ज्ञानं तत्पूर्वकमित्यर्थ.। *तत्र–पूर्वतनतज्ज्ञाने। स्वस्मिन्साक्षात्स्वापेक्षासत्त्वाद् आह *आत्मेति। इदमुद्धरति *भेदान्तरमिति। *स चेत्–तृतीयभेदश्चेत्। *पूर्वभेद एव–सर्वाद्यभेद एव। एकमन्तरा स्वस्मिन्स्वापेक्षासत्त्वादाह *अन्योन्येति। इदमप्युद्धरति* तृतीयइति । चतुर्थस्य सर्वाद्यरूपत्वे ऽनेकद्वारा स्वस्मिन्स्वापेक्षासत्त्वादाह *चक्रकेति । धातोरिति सूत्रे स्पष्टमेतत् । तत्र हि–"आत" इत्यत्र "धातो." इति विहितविशेषणम्, "आत" इत्यानन्तर्यविशेषणमित्यभ्युपेत्यापि लोपे कृते जुस् नेति समाधावलुनन् इत्यादौ लोप ईत्वेन बाध्यते, तद्भ्रान्तिभावेन, सच जुस्भावेन, सच लोपेन, सचेत्वेनेत्वमन्तिनाऽन्तिर्जुसा सच्च लो-

---

(१) प्रतीतेश्चेति पाठ.।

पेनेति चक्रकमुक्त्वा ऽऽयन्नादिषूपदेशिवद्भावेनान्तरङ्गत्वादादावन्ति-भावे लोपेन व्यवस्थेति परिहृतमेकदेशिना । अन्योन्याश्रयस्तु वृद्धिसूत्रभाष्यादौ प्रसिद्धतर । एतद्दोषाभावाय चतुर्थादेरपि भिन्नत्वाङ्गीकारे आह *भेदेति । अस्या दोषत्वे बीजमाह *अन्तिमेनि । एव सति क्वचिद्विश्रान्तेरसम्भवादाह *पर्यन्तमिति । अ-एवोक्तम्—"एवमप्यनवस्था स्याद्या मूलक्षयकारिणी" इति । *अत एव—तदशक्यत्वादेव । *कैयटादाविति । *उक्तेति । तदश-क्यत्वेनेत्यर्थ । न केवलमत्रैवेद किन्त्वन्यत्रापि सर्वत्रेत्याह *घटाद्यर्थेति । इदमुपपादयति *अन्यथेति । उक्तरीत्यनङ्गी-कारे इत्यर्थ । *अन्योऽन्याश्रयादिति । तद्,पत्तेस्तत्सिद्धेरप्यभा-वापत्तेरित्यर्थ । उपसहरति *पदार्थेति । तस्मादित्यादि । मात्रम् कार्त्स्न्ये । अनिर्वचनीयत्वस्वरूप प्रागुक्तम् । प्रयोजकत्वमिति पाठ । समस्तेत्यादिविशेषणेनाविप्रतिपत्तिर्वस्तुनो धीव्यवहारयोः सूचिता । नर्तन च सर्वदेशसम्बन्ध एव । तव तर्कैस्तयो का गति स्यात्कुत इत्यत आह *उपपादयितुमिति । एव प्रश्ने सिद्धान्तमाह *अनिर्वचनीयेति । ननु तत्त्वमेव कुतो ऽत आह *यथेति । *सत—ब्रह्मणः । *एवम्—तथा। *असत—नृशृङ्गादेः । *नच—नहि। नैवेति पाठेऽप्येवम्। उभयत्र बीजमुक्तमेव। प्रपञ्चे त्वाह *जन्यत्वमेवेति । एव सामान्यत उक्त्वा विशेषतः प्रकृतसमतिमाह *तथेति।सत्यमायाशब्दौ धर्मपरौ तयोर्मध्ये आह *भेदेति । *ह्यसन्—असन्नेव । *विरोधत—पञ्चम्यन्तात्सार्वविभक्तिकस्तसिः । वेदमेवाह *एकेति । एकविज्ञानेन सर्वविज्ञानमित्यपि प्रागुक्तश्रुतेरित्यर्थं । *चश्रुते—श्रुतेश्च । यद्यपि "तत्त्वमसि" इत्यादयोऽभेदप्रतिपादिका,"नित्योऽनित्यानाम्"इत्यादयो भेदप्रतिपादकाश्चेति श्रुतीनामपि द्वैविध्यम्, तथापि लाघवतर्कानुगृहीताभेदश्रुतिबलात्तासामुपाधिककल्पितव्यावहारिकभेदानुवादकत्वमेव । किञ्च श्रुत्यैव भेदतिरस्कारोऽपि कृत—"नेह नानास्ति किञ्चनेति, । "य एतस्मिन्नुदरमन्तर कुरुते ऽथ तस्य भय भवति मृत्योः स मृत्युमाप्नोति यदु ह नानेव पश्यति" इत्यादिस्तन्निन्दापराऽपि । नैवमभेदस्य तत्त्वपरा श्रुतिरस्ति यया भेदवाक्यानुरोधादभेदवाक्यानामविभागलक्षणादिभेदपरत्व यथोक्त शुद्धमाक्षिप्त तादृगेव भवति । किञ्चावि-

भागो नाम विभागाभावो न संयोगविरोधी विभागाभावस्य संयोगस्वरूपत्वेन संयोगाभावरूपविभागाभावस्य सुतरां तत्स्वरूपत्वेन द्वयोर्व्यापकयोर्जीवब्रह्मणोरप्राप्तिपूर्वकप्राप्तिरूपसंयोगाभावेन तदसम्भवात् । तस्माद्विभुनित्यानामविभागो नामाभेदापरपर्याय एव । एतद्ध्वननार्थमेव नेहेत्यादिहेत्वन्तरमुक्तम् । एवं च तादात्म्यमारोपित भेद एव वास्तवो वस्तूनामिति व्यवहारोऽप्यविद्याविलसित एवेति बोध्यम् । तदाह *इतीत्यलमिति । अन्यत्रापि तथा तत्प्रतीतिमुपपादयति *एवमिति । तत्र घटत्वाभाववदित्यर्थः[1] । *अर्थात्—आर्थिकात् । शाब्दस्तु आरोपितघटस्यैव दर्शनमिति । *अभावाभावेनेति । तद्दर्शनाभावे ऽपि तद्भिन्नदर्शनाभावेनचेत्यपि बोध्यम् । *एतच्चेति । समासे तद्ज्ञान चेत्यर्थः । तत्राद्ये "स्वतल्भ्या नञ्समासः पूर्वविप्रतिषेधेन" इत्यत्र युगपद्विवक्षामाश्रित्य व्याख्यातम्, तच्च तत्रैवकारान्तर्भावे सति असम्बद्धं स्यात् । भेदस्यावास्तवत्वमपि तद्भाष्यादौ स्पष्टम् । द्वितीये गुणप्रतिषेधे इत्यस्य गर्दभरथमर्हति "तदर्हति" इति ठक्, गार्दभरथिकादन्य इत्यर्थकस्यागार्दभरथिक इत्यस्य दत्तस्य प्रत्युदाहरणस्योपपत्त्यर्थं व्याख्यातृभिर्व्याख्यातम् । नचास्य गर्दभरथार्हणकर्तृभिन्न इत्यर्थः, तत्रार्थत अर्हत्वाभावस्यापि बोधनादस्त्येव गुणप्रतिषेधः, यथा घटभिन्न इत्युक्ते घटत्वाभाववानिति प्रतीयते इति वाच्यम् । न गर्दभरथमर्हतीति गर्दभरथस्य नञर्थार्हाभ्यां युगपदेकार्थीभावाविवक्षायां परत्वात्तद्धिते एकदेशद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेन समासे आरोपितगर्दभरथमर्हतीत्यर्थके ऽतिप्रसङ्गवारणार्थत्वादिति । अन्यथैतदसङ्गतिरपि स्पष्टैव ॥ ३६ ॥

नञ्द्योत्यो भेदो विशेषणम्, भेदप्रतियोगी घट इत्यर्थ इति तु न युक्तम् । अघटमानयेत्युक्ते यत्किञ्चिन्निष्ठभेदप्रतियोगिनो यत्किञ्चित्प्रतियोगिकभेदवतो वा घटस्यैवानयनापत्तेः । अत ए-

[1] मूलपुस्तकत्रितये भावादिति पञ्चम्यन्तः पाठ उपलभ्यते ।

वोत्तरपदार्थप्रधानत्वे नञ्तत्पुरुषस्य अब्राह्मण इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीत्याशङ्क्य नञः प्रयोगान्नञर्थविशिष्टस्यानयनं भविष्यतीत्युक्त्वा "कः पुनरसौ नञर्थविशिष्टः" इति प्रश्ने "निवृत्तपदार्थकः" इति भाष्ये उक्तम्। निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन्स क्षत्रियादिरित्यर्थः। सादृश्यादिना अध्यारोपितब्राह्मण्यो नञ्द्योतितनतद्वस्थ इत्यर्थः इति कैयटः।

यत्तु निवृत्तेति भावे क्तः, निवृत्तमभावः पदार्थो यस्येति एतद्भाष्यार्थ इति। तद् भ्रान्त्यैवेति स्पष्टं भाष्यविदाम्। किञ्च प्रतियोग्यभावौ तुल्ययोगक्षेमाविति तान्त्रिकोक्तेर्नञ्वाच्यभेदस्य विशेषणता न युक्ता। यत्र प्रतियोगिनः प्रकारता तत्रैव तदभावस्यापि सा, यत्र तस्य विशेष्यता तत्र तदभावस्यापि सेति तदर्थः। बाधबुद्धिप्रतिबन्धकताऽपि यथाऽनुभवं कल्प्येति न तदनुरोधेन ऋष्यनुभवसिद्धबोधान्यथाभाव उचितः। अनेनैव न्यायेन प्रतियोग्यधिकरणमेवाभावाधिकरणमिति दिक् ॥ ३७ ॥

(कुं०टी०) *निवृत्तपदार्थक इति। अयं भावः—यो ऽयं ब्राह्मणार्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रिये अध्यवसित इति स्वाभाविकी ब्राह्मणार्थनिवृत्तिरेव नञा द्योत्यते, तस्माद्वाह्यापेक्षयैव निवृत्तपदार्थकत्वम् उपचारसत्ताऽपेक्षया तु प्रयोग इति। घटप्रकारकभूतलविशेष्यकनिश्चयं प्रति घटाभावप्रकारकभूतलविशेष्यकनिश्चयः प्रतिबन्धक इत्यादि दूषयति *बाधबुद्धीति। *अन्यथाभावः—अन्यथात्वम्। *अनेनैवेति। नञो-

ऽभावे यत् प्रतियोग्यविकरणं तत् नञ्समभिव्याहारे अभावाधिकरणमित्यर्थः ॥ ३७ ॥

( क० टी० ) दीक्षितभूषणकारादिमतमाद्य खण्डयति *नञ्द्योत्य इति । इदञ्च वाक्यसमासोभयपरम् । भेद एव नञर्थः तस्य तत्त्वादेव सर्वनामकार्यम्, तस्य तत्प्राधान्यम्, अत्वं भवसीत्यादौ पुरुषव्यवस्था, अनेकमित्यादौ तन्नियमश्च । अनेके इति त्वेकशेषेण साधु । समासे वक्ष्यमाण त्वन्यथापरामिति न पौनरुक्त्यम् । समासवाक्ययोस्तुल्यार्थत्वात् । अतएवाह *अघटमिति । सामर्थ्यस्योभयत्रापि सत्त्वेन विनिगमनाविरहादाह *यत्किञ्चित्प्रतीति । उत्तरपदार्थप्राधान्ये राजपुरुषमानयेत्यादौ तथा दृष्टत्वात् । *अत एव—तत्र पक्षे तदापत्तेरेव । *नञिति । पूर्वान्वयि । मात्रपदेन शौचाचारादेहीनब्राह्मणस्य, क्षत्रियादेश्च निवृत्तिः । भाष्ये नञ्पदमर्थपरामित्याह *नञर्थेति । भेदस्य नञर्थत्वे तावताऽप्यवारणादाह *कः पुनरिति । नायं नञर्थमात्रविषयकः प्रश्नः, सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गित्वाद्, अतस्तदर्थमाह *नञर्थविशिष्ट इति । अभावस्यैव नञर्थत्वेन प्रसिद्धत्वात्प्रमितोत्तरपदार्थव्यतिरिक्तः कोऽसौ नञ्विशिष्ट उत्तरपदार्थ इत्यर्थः । कप्रत्ययसूचितबहुव्रीहिसूचितमर्थमाह *निवृत्त इति । कर्मणि क्त इति भावः । सर्वथा निवृत्तपदार्थत्वे विशेषणमेव न युज्येतेत्यनस्तत्तात्पर्यार्थमाह *सादृश्यादिनेति । आदिना साहचर्यादि । निवृत्तमुख्यब्राह्मण्यादारोपिततद्वानिति भाष्याक्षरार्थस्तदाह *नञिति । एव चारोपितस्वप्रवृत्तिनिमित्तवानुत्तरपदार्थ इत्यत्र तात्पर्यग्राहको नञिति तात्पर्यम् । उत्तरपदार्थप्राधान्यमप्येतदेवेति बोध्यम् । तदुक्तिमेव खण्डयति *यत्त्विति । *तदिति । उक्तयुक्तेः । पूर्वोत्तरसन्दर्भाच्चोक्तस्यैव भाष्येष्टत्वेन तथाऽर्थसम्भावनाया एवाभावात् । यथाचैतत्तथा स्पष्टमुद्द्योते । अभ्युपेत्य दोषान्तरमाह *किञ्चेति । तान्त्रिकाः—नैयायिकादयः । परमतेनाह *नञ्वाच्येति । प्रसिद्धयोगक्षेमतुल्यत्वाभावादाह *यत्रेति । नन्वेवं घटादिज्ञानस्य तत्प्रतिबन्धकता न स्यात्, ग्राह्याभावानवगाहित्वादत आह *बाधेति । ननु परेषां तथैवा-

नुभवो ऽत आह *ऋष्यनुभवेति । ततस्तस्य प्राबल्यात् । तस्यार्थान्तरमप्याह *अननैवेति । प्रतियोग्यभावावित्युक्तेनेत्यर्थः । विनिगमनाविरहादिति भाव । किञ्चार्थिकतज्ज्ञानमादाय तादृशबाधबुद्धेरपि प्रतिबन्धकत्वसम्भव । वस्तुतो बाधबुद्धेर्नैव ज्ञाने प्रतिबन्धकत्वमिति प्रागुक्तम् । एतेन प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ तेन यत्पदोपस्थापितस्य प्रतियोगिनो ऽनुयोगिनि आधाराधेयभावसम्बन्धेनैवान्वयबोधस्तत्र तत्संसर्गाभावस्यापि तथा, यथा पचति चैत्र इत्यादौ तिङर्थकृत्यादेः प्रथमान्तपदोपस्थाप्ये एव तत्र तथेति, तत्रैतदभावस्यापि तथेति उक्तसिद्धान्त जीर्णशाब्दिकमतत्वेनानूद्य तत्र सर्वत्राभावबोधस्यानुभविकत्वादिति च नैयायिकोक्तमपास्तम् । तदाह *इतिदिगिति ॥ ३७ ॥

यत्तु–"नानुयाजेषु" इत्यादौ पर्युदास एव, न प्रसज्यप्रतिषेधः, शास्त्रीयविहितप्रतिषिद्धत्वाद्विकल्पापत्तेर्वाक्यभेदापत्तेश्च । तथाहि क्रियायाः कारकाकाङ्क्षत्वेन विनिगमनाविरहात्सकलकारकविशिष्टां भावनां प्रतियोगिभूतामुद्दिश्याभावस्य विधिस्तत्र वाच्यः । एवञ्चोद्देश्यस्य प्रतियोगिनः प्रसिद्ध्यर्थं प्राप्तिसापेक्षता प्रतिषेधस्य । प्राप्तिश्च क्वचिद्रागतः, यथा "न कलञ्जं भक्षयेद्" इति । तत्राहि रागेण कलञ्जभक्षणादेरिष्टसाधनत्वावगत्या प्रसक्तायाः कलञ्जभक्षणभावनाया निषेधशास्त्रेण निवृत्तिविषयत्वे ऽवगते ऽर्थात्तद्विषयकलञ्जभक्षणादेरनिष्टसाधनत्वाक्षेपान्नित्यं ततो निवृत्तिः । प्रकृते च येयजामहेशास्त्रात एव सा । साच प्रमारूपेति उपजीव्या चेति तस्या अत्यन्तबाधायोगात् विकल्प एव प्राप्नोति । विकल्पे च प्रथमं व्रीह्यनुष्ठाने यवशास्त्रस्याप्रामाण्यस्वीकारात्मा प्रतीतप्रामाण्यपरित्यागः, वेदे विपर्यासरूपा-

प्रमितिजनकत्वासम्भवात्। ततः प्रयोगान्तरे यवोपादाने यवशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागात्मकं परित्यक्तप्रामाण्योपादानम्, व्रीहिशास्त्रे स्वीकृतप्रामाण्यपरित्यागरूपो ऽप्रतीताप्रामाण्यस्वीकारः, पुनस्तृतीयप्रयोगे व्रीह्युपादाने व्रीहिशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागात्मा त्यक्तप्रामाण्यस्वीकार इति चत्वारो दोषाः। यथाकथञ्चिद्भेदारोपेणाष्टौ वा दोषा इति।

तन्न। निषेधशास्त्रानालोचने सामान्यशास्त्रालोचनमात्रेण भ्रमात्मकप्रतियोगिप्रसिद्ध्याऽभावबोधसम्भवेन विकल्पाप्राप्तेः।

ननु निषेधशास्त्रस्यैव प्रथममालोचने विशेषदर्शनसत्त्वेन सामान्यशास्त्रतो भ्रमानुपपत्त्या तादृशप्रतियोगिनो ऽप्रसिद्धौ तदुद्देश्यकप्रमाऽनुपपत्तिरिति चेन्न।

निषेधशास्त्रस्य प्रथममालोचनं नाम तद्वाक्यज्ञानमुत तदर्थज्ञानम्?। नाद्यः। तावन्मात्रेण विशेषदर्शनासम्भवात्। नान्त्यः। प्रतियोग्यप्रसिद्ध्या तदसम्भवात्। किञ्च निषेधस्य प्रथममालोचने बाधबुद्धेः सत्त्वेन विधिवाक्यतः प्रमा दुरुपपादेति विकल्पापत्त्युक्त्यसम्भवः।

यद्वा तादृशे विषये आहार्यभ्रमात्मिका प्रतियोगिप्रसिद्धिरस्तु। एवमेव हि "नान्तरिक्षे जुहोति" 'ह्रदे वह्निर्नास्ति' इत्यादौ प्रतियोगिप्रसिद्धिः सर्वैरुपपाद्या। प्रतियोगिज्ञानस्याभावधीहेतुत्वेऽपि तत्कारणतावच्छेदककोटावनाहार्यत्वनिवेशो मानाभावात्। ससं-

बन्धिकपदार्थज्ञाने संबन्धितावच्छेदकप्रकारकज्ञानकारणतैव विशेषणतावच्छेदकप्रकारकज्ञानकारणतैव वा प्रतियोगिज्ञानकारणतेति पक्षेऽप्याहार्यानाहार्यसाधारणज्ञानत्वेनैव हेतुता । आहार्यतज्ज्ञानादाहार्य एव स इत्यनेनैवातिप्रसङ्गभङ्गात् । आहार्यः शाब्दबोधो नेति त्वश्रद्धेयमेव । ह्रदवृत्तित्वाभावबोधो वन्हाविस्यादि त्वधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयनियमादयुक्तम् । प्रसक्तं निषिध्यते इत्यस्य प्रसञ्जनार्हमित्यर्थः । यदि निषेधो न स्यात् स्यादेन सामान्येन प्रसक्तिरिति बोध्यम् ।

किञ्च विध्युपमर्दकत्वेन उपजीव्यादपि तस्मान्निषेधो बलवान् । एतदेवाभिप्रेत्य "निषेधाश्च बलीयांसः" इति भाष्यकृतः ।

किञ्च उपजीव्यविरोधो विकल्पवादिनोऽपि । तथाहि—यागत्वावच्छेदेन येयजामहकर्मकभावनारूपवाक्यार्थो निषेधस्योपजीव्यः, तस्य च यत्रानुयाजे तदकरणं तदंशे विरोधः, अवच्छेदकावच्छेदेन प्रतीतेरप्रामाण्यं च । अनुयाजवाक्ये तु एकवाक्यतालाभेन पर्युदास इति तत्त्वम् ।

अतएव "द्वन्द्वेच" "विभाषा जसि" इत्यादीनां चारितार्थ्यम् । अत एव "सुडनपुंसकस्य" इत्यादौ भाष्ये पर्युदासप्रसज्यप्रतिषेधयोः फलाविशेष उक्तः संगच्छते ॥ ३८ ॥

( कुं० टी० ) *शास्त्रीयेति । विधानप्रतिषेधयोः शास्त्री-

यत्वादित्यर्थः । *वाक्यभेदेति । नञः क्रियायामन्वयात् । *सकलेति । सकलकारकविशिष्टक्रियाया एव निषेधादित्यर्थः । *नकलञ्जमिति । नञर्थस्य धात्वर्थेऽन्वयासम्भवाद् भक्षणप्रवर्तनायां नञर्थो ऽन्वेतीति मीमांसकाः । 'ओ३श्रावय' इति अध्वर्युणोक्ते 'अस्तु श्रौ३षड्' इति आग्नीध्रः, 'यज' इति पुनरध्वर्युः । 'ये३यजामहे इत्यादि' होता । "वषट्कार मा मा आयुः प्रमोषीः" इत्यादि च यजमानः, इति येयजामहः। *सा-प्राप्तिः । *प्रमारूपेति । शास्त्रविहितत्वात् । *उपजीव्येति । अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वात् । *बाधायोगादिति–शास्त्राप्रामाण्यप्रसङ्गात् । *विकल्पेचेति । चत्वारो दोषा इत्यत्रान्वयः । *विपर्यासेति । वेदे भ्रमजनकत्वरूपाप्रामाण्यासम्भवात् प्रामाण्यस्वीकार एवेत्यर्थः । *यथा कथञ्चिदिति । प्रामाण्यपरित्यागो ऽप्रामाण्यस्वीकार इति दोषद्वय मीमांसकाः व्यवहरन्ति–तन्मतेऽष्टौ इत्यर्थः । *अभावबोधेति । भ्रमप्राप्तस्यैव निषेध इति भावः । *विशेषेति । करचरणादिविशेषदर्शने स्थाणुर्वा पुरुषो वेति सन्देहाभाववत् । *एवमेव–भ्रमात्मिकैव । *अन्तरिक्षे–अनावृते । *प्रतियोगिज्ञानस्येति । अयं भावः–प्रतियोग्यविषयकाभावप्रत्यक्षस्यानुदयादभावलौकिकप्रत्यक्षे प्रतियोगिज्ञानस्य हेतुता कल्प्यते । नच प्रतियोग्यविषयकाभावप्रत्यक्षस्याभावेनापाद्याभावादेव सिद्धौ किं हेतुत्वकल्पनेनेति वाच्यम् । इन्द्रियसम्बद्धविशेषणताबलादेव अभावप्रत्यक्षस्यैव प्रतियोगिशून्यकालेऽप्यापत्त्यैव फलतः तत्पर्यवसानादिति । अपिशब्देनास्वरसः, तद्बीजं तु पूर्वोक्तहेतुत्वे मानाभावः । प्रतियोगिज्ञानाभावे आपादकाभावेनैवापत्त्यभावात् । नहि केवलसंनिकर्ष एवापादकः इतरकारणस्यापि सहकारित्वादिति ।

यत्तु प्रतियोगिज्ञानस्याहेतुत्वे घटत्वादिनिर्विकल्पकानन्तरं 'विशेष्ये विशेषणम्' इति न्यायेन घटो नास्तीति प्रतीत्यापत्तिरिति । तन्न ।

विशिष्टवैशिष्ट्यबोधात्मकस्यैवाभावप्रत्यक्षस्य स्वीकारात् ।

एतेन प्रतियोग्यमिश्रितनेत्याकारकप्रत्ययापत्तिरित्यपास्तम् । विशेषणतावच्छेदकप्रकारकनिर्णयहेतुतयैव गतार्थत्वात् । तदाह *विशेषणतावच्छेदकेति । अत एव पीतः शङ्खोऽत्र नास्ति किन्तु द्वीपान्तरे इति प्रतारकेण वाक्यं प्रयुज्यते । *आहार्यत ज्ज्ञानादिति । प्रतियोगिज्ञानस्याहार्यत्वात्प्रतियोग्यप्याहार्य एवेत्यर्थः । *नातिप्रसङ्गः—न विकल्पप्रसङ्गः । ननु नौकायां प्रसिद्धस्य ह्रदवृत्तित्वस्याभावो वन्हाविति न प्रतियोग्यप्रसिद्धिरत आह *वह्नावित्यादीति । अयुक्तमित्यत्रान्वयः । अत्रैव हेतुमाह *अधिकरणेति । *यागत्वावच्छेदेनेति । यागत्वसमानाधिकरणाभावाप्रतियोगित्वं च तदर्थः । *प्रतीतेरिति । अवच्छेदकावच्छेदेन या प्रतीतिस्तस्या अप्रामाण्यमित्यर्थः । किमर्थं तदीयानुयाजवाक्ये पर्युदासः स्वीक्रियते इत्यत आह *अनुयाजवाक्येत्विति । *एकवाक्यतेति । वाक्यभेदवारणायैव प्रसज्यप्रतिषेधत्याग इति भावः । *चारितार्थ्यमिति । अन्यथा "द्वन्द्वेच" इत्यनेनैव विकल्पलाभे "विभाषा जसि" इत्यस्य वैयर्थ्यापत्तिरित्यर्थः । *अतएव—प्रसज्यप्रतिषेधे ऽपि विधेरकल्पनादेव । *फलाविशेषइति । तत्र हि "अनपुंसकस्येति निषेधाद्वनानि इत्यादौ सर्वनामस्थानसंज्ञा न प्राप्नोति" इत्याशङ्क्य "सुडिति प्राप्तिरेव प्रतिषिध्यते" इत्युक्तम् । तेन तत्र प्रतिषेधपर्युदासयोः फलसाम्यमिति भावः ॥ ३८ ॥

( क० टी० ) सिंहावलोकन न्यायेन उक्तविषये बाधलक्षणे

मीमांसकोक्त खण्डयति *यत्त्वित्यादि । *नानुयाजेष्विति । "नानुयाजेषु येयजामह कराति" इति आपस्तम्बसूत्राद्युक्ते इत्यथ । तत्राद्यदोषमुपपादयति *तथाहीत्यादि । तस्या एवाभावप्रतियोगित्वादाह *प्रतियोगीति । *तत्र–अनुयाजेषु । *एवञ्च–तस्या उद्देश्यत्वेच । *रागेणेति । कदाचित् वैद्योपदिष्टतद्भक्षणेन रोगनिवृत्तेरनुभूतत्वात्क्षुन्निवृत्त्यर्थत्वाच्चेति भाव. । क्वचिदितिसूचितासार्वत्रिकत्वलब्धमाह *प्रकृते चेति । यत्तु अनुयाजविषये "यजातिषु यजामह करोति" इति तत पूर्ववाक्येन प्राप्तिरिति सकलमीमांसकनैयायिकादिग्रन्थकारा. । तन्न । तस्य खपुष्पायमाणत्वात् । नन्वेव कथ प्राप्तिरिति चेत् । शृणु "ओश्रावयेति चतुरक्षर अस्तुश्रौषडिति चतुरक्षर यजेति द्व्यक्षर येयजामहे इति पञ्चाक्षर द्व्यक्षरो वषट्कार एष वै सप्तदशाक्षर' प्रजापतिर्यज्ञमन्वायत्तं वेद" इति अनारभ्याधीतवाक्येन तदुपदेश इति ततस्तत्प्राप्तिरिति । तदेतदभिप्रेत्याह *येयजेति । यद्यपि तेन सर्वप्राप्तिस्तथापि प्रकृतत्वात्तावन्मात्रमुक्तम्, । तद्बोधकोक्तश्रुतिकल्पितशास्त्रत एव सा प्राप्तिरित्यर्थ. । ननु निषेधस्य विध्युन्मूलकत्वेन बलवत्त्वमत आह *उपजीव्येति । तथाच तस्या अपि बलवत्त्वमिति भाव । ननु विकल्पे इष्टापत्तिर्ग्रहणाग्रहणवदू अत आह *विकल्पेचेति । दोषान्वयो ऽस्य । ननु कथमनयोरैक्यमाद्यस्यान्यार्थकत्वादत आह *वेदेति । तत्र सर्वत्रोक्तरीत्या प्रमाणशब्दत्वात् । नन्वेवमष्टदोपदुष्टस्स इति मीमांसकादिसिद्धान्तविरोधोऽत आह *यथाकथञ्चिदिति । अय तेषामाशय.–यद्यपि प्रामाण्यपरित्यागो नाम प्रामाण्याभावस्वीकार एव, अप्रामाण्यस्वीकारो ऽपि स एव, वेदे विपर्यासरूपप्रतीतिजनकत्वस्यासम्भवादिति नानयोर्भेद., तथापि प्रामाण्याभावस्वीकारे दोषत्वबीजं द्विविधम्, प्रामाण्ये प्रमाणस्य निर्दोषत्वादे सद्भावरूपमेकम्, प्रामाण्याभावे प्रमाणस्य प्रामाण्यानुपलम्भस्याभावरूपमपरम् । एव च भावप्रमाणसद्भावोपाधिक आद्य', अभावप्रमाणाभावोपाधिको द्वितीय इति द्वैविध्यविवक्षेति । वस्तुत एतावता भिन्नदोपत्वाङ्गीकारो न युक्त इति दोषचतुष्टयमेव सारम् । सर्वथाऽपि विकल्पो दुष्ट एवेति यथाकथञ्चिदित्यनेन सूचितमिति बोध्यम् । *आलोचने·

सति । प्रथममित्यादिः । मात्रपदमवधारणार्थकम् । तेन भिन्नदेश स्थत्वेन तदा तदालोचननिरास । बाधकसम्भावनया सर्वांशे प्रमात्वासम्भवादाह *भ्रमेति । *बांधेति । प्रमेत्यर्थः । अतएवाग्रे प्रमेत्यादि वक्ष्यति । तस्या भ्रमत्वादेवाह *विकल्पेति । तच्छरीरे प्रामाण्यनिवेशादिति भाव । तदाशय प्रकाशयन्नुक्तदोष खण्डयति *नन्विति । प्रत्यक्षत्वाह *निषेधेति । उक्ताशयेनैवाह *शास्त्रस्यैवेति । *तादृशेति । भ्रमात्मकेत्यर्थ । *प्रमेति । तदभावेत्यादि । *चेन्नेति । तस्यैवासम्भवादिति शेष. । तमेवाह *निषेधेति । तदभ्युपगमे मूले एव कुठारमाह *किञ्चेति । उक्त एवाशयः । *विकल्पेति । तस्या एवासम्भव इत्यर्थ । ननु परैरप्रसिद्धप्रतियोगिकाया अप्यभावबुद्धे स्वीकारस्य वक्ष्यमाणत्वात्तन्मते प्राक्निषेधज्ञानसम्भवेन नन्वित्युक्तदोष एवातस्तन्मतेनैवाह *यद्वेति । *तादृशे इति । निषधशास्त्रस्य प्रथमालोचनविषये इत्यर्थ । इच्छायास्तत्रोत्तेजकत्वादाह *आहार्येति । इदमन्यत्रावश्यकमित्याह *एवमेवेति । एतेन खण्डशः प्रसिद्धिरित्यपास्तम् । प्रतियोगिप्रसिद्धिर्हि यस्य प्रतियोगितापर्याप्त्यधिकरणप्रसिद्धिरित्यर्थात् त्वन्मते ऽपि तत्र तद्वृत्तित्वाप्रसिद्धेः, अन्यथाऽतिप्रसङ्गापत्तेश्च । सिद्धान्त्यन्यद्द्वेस प्रहायाह *सर्वैरिति । नन्वनाहार्यप्रतियोगिज्ञानस्यैव तत्कारणत्वात्कथ तावताऽपीष्टसिद्धिरत आह *प्रतियोगीति । ननु नाय पृथक् कार्यकारणभाव. इतो व्यापकसामान्यकार्यकारणभावेनैव निर्वाहात् तत्र चातिप्रसङ्गभङ्गाय तथा निविष्टमत आह *ससम्बन्धिकेति । ततोऽपि सामान्य व्यापकमाह *विशेषणमिति । नन्वेवमाहार्यज्ञानादनाहार्यज्ञानापत्तिरप्यत आह *आहार्येति । *आहार्येति । बाधकालिकेच्छाजन्यज्ञानविषय एव । *स—प्रतियोगी । एवञ्च तथा कार्यकारणाभावेन न विशिष्टबुद्धिरित्यर्थ. । तथैव कारणसामग्रीसत्त्वात् । नन्वेतावता प्रत्यक्षे निर्वाहे ऽपि न

---

(१) यथेति । तथाच प्रमारूपत्वरूपोक्तबलवत्ताबीजाभावेन तस्य ततो बलवत्त्वे प्रमेत्यर्थो मानस इति भाव. । पाठोऽय १ पुस्तके ।

(२) विशेष वक्तुमभ्युपेत्यैव सम्भावितमन्यत्र दृष्टं पक्षान्तरमाहेति पाठ २ पु० ।

शाब्दे, तत्र तस्याभावाद्, एव च तत्रानतिप्रसङ्गाय तत्र तन्नि-वेशावश्यकत्वे उक्तदोष एवात आह *आहार्येति । निर्युक्तिक-त्वादिति भाव । एवमेवेत्येवव्यवच्छेद्य परोक्तमाह *इदेति । इत्या-दि प्रकारान्तर त्वित्यर्थः । नन्वेव प्रसक्त निषिध्यते इति नैयायिकाद्युक्तेरसाङ्गत्य स्यादत आह *प्रसक्तामिति । अहृता-मेवाह *यदीति । तन्मते दोषान्तरमाह *किञ्चेति । *तस्माद्-विधे । *एतदेवेति । तत्त्वेन ततोऽपि ते बलीयांस इति तदर्थ । अत्यन्तबाधे उपजीव्यविरोधापत्तिर्विकल्पसाधकतयोक्ता बाधकत्वे पर्यवस्यतीति तन्नैव बलवत्त्वबीजमित्याह *किञ्चे-ति । *यत्र-यस्मिन् । दोषान्तरमाह* अवच्छेदकेति । नन्वेव तद्यधिकरणस्य का गतिरत आह *अनुयाजे-ति । द्वितीयहेतोर्युक्तत्वात् । समासस्तु वैकल्पिकत्वान्नेत्युक्तमेव *अतएव—उक्तरीत्या सामान्यविशेषस्थले विकल्पाभावादेव । अन्यथा विधिनिषेधाभ्यां विकल्पापत्त्या जसि तत्रेष्टसिद्धा "वि-भाषा जसि" इति व्यर्थम् । ननु तत् नियमार्थम्, उत्तरार्थत्वे ऽपि सामान्यभिन्नसूत्रस्य तत्त्वसम्भवात् । अन्यतरपद विना ऽन्यतर-पदस्य तु न तत्त्वम्, अक्षरमर्यादया ऽप्रतीतेरत आह *आदीति । तेन प्रथमेत्यादिसूत्रचतुष्टयसग्रहः । यद्यपि पूर्वेत्यादिसूत्रत्रयस्य तयनेमयोश्च प्राग्वन्नियामकत्वं सम्भवति प्रथमादौ त्वप्राप्तवि-भाषैव, तथापि तेषां लाघवेन तदभावज्ञापकतयैव सार्थक्यमु-चितमिति तात्पर्यम् । *अतएव-पर्युदासवत्तत्र विकल्पानवसरादेव । अन्यथा तदसङ्गति स्पष्टैव ॥ ६८ ॥

एतदेव सकलमभिप्रेत्योक्तं "नवा"-इतिसूत्रे भाष्ये नवेत्यखण्डनिपातार्थस्य विभाषासंज्ञित्वे यद्यप्यप्रा-प्तविभाषाविषये निषेधकल्पितविधेश्चारितार्थ्येन वि-कल्पः सिद्ध्यति तथापि प्राप्तविभाषायां कृतसामर्थ्यो विधिरिति प्रतिषेध एव स्यान्न विकल्प इति । "अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्याद्" इति जैमिनिसूत्रे "प्रतिषेधे विकल्पः स्याद्"

इत्यभ्युच्चयः । युक्तिसिद्धपतञ्जलिवाक्यविरोधात् । वाक्यशेषत्वादित्यस्यैकवाक्यत्वलाभादित्यर्थः ।

ननु तत्तच्छास्त्रैः साधुत्वाविकल्पे एकस्यैव शब्दस्य साधुत्वेन धर्मजनकत्वम्, असाधुत्वेन अधर्मजनकतेति विरुद्धमापद्येतेति न तद्विकल्प इति नवेति सूत्रे भाष्ये सिद्धान्तितम् । एवं च "अतिरात्रे षोडशिनं गृह्णाति" इति ग्रहणवाक्येन तस्य धर्मजनकता बोध्यते, "नातिरात्रे षोडशिनं गृह्णाति" इत्यनेन निषेधेन तस्याधर्मजनकतेति विरुद्धस्वीकारः कथमिति चेद् ।

सत्यम् । उभयत्र संकल्पलक्षणया संकल्पद्वयस्यापि धर्मत्वबोधनात् । तयोरन्यतरस्य चेच्छयापरिग्रहः । एवं सर्वत्र स्मार्तवैदिकाविकल्पस्थले बोध्यम् ।

अत एव वैकल्पिकेष्वादिनोऽवधारणमित्युद्घोष इति ।

तत्र प्रतिषेधे द्वयी गतिः—प्रतिषेधं दृष्ट्वा पश्चादुत्सर्गस्य तद्विषयत्वाभावज्ञाने प्रामाण्यग्रह इत्येका, एवमुत्सर्गापवादस्थलेऽपि । तदुक्तं हरिणा—

ब्राह्मणानां श्रुतिर्दध्नि प्रक्रान्ता माठरं विना ।
माठरस्तक्रसम्बन्धात्तत्राचष्टे यथार्थताम् ॥ इति ।

'दधि ब्राह्मणेभ्यः' इत्यादौ माठरवर्जमेव दधिदानमुपक्रान्तम् उत्तरकालं 'तक्रं माठराय' इत्येतत् तस्य यथार्थत्वं गमयतीति भिन्नवाक्यतायामप्राप्त्यनुमानं बाध इति पुञ्जराजः ।

उत्सर्गापवादनियमनिषेधानामेकवाक्यतेत्यपरा। तदुक्तम्—

अनेकाख्यातयोगे ऽपि वाक्यं न्याय्यापवादयोः ।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥
नियमः प्रतिषेधश्च विधिशेषस्तथा सति । इति ।

न्याय्यः, उत्सर्गः । आपाततो भिन्नवाक्यत्वावभासे ऽपि सर्वस्याप्युत्सर्गस्य विशेषविधिनियमनिषेधविध्याकाङ्क्षानियमेन तल्लाभे वाक्यैकवाक्यता तयोः । तदलाभे तु स्वार्थे एव पर्यवसानम् ।

एकवाक्यता चेत्थम्—यतो माठराय तक्रमतस्तदतिरिक्तेभ्यो दधीत्येवेत्यलम् ॥ ६९ ॥

(कुं०टी०) *अखण्डेति । निषेधार्थस्य नवेत्यखण्डनिपातस्य ग्रहणे इत्यर्थः । *विकल्पः सिद्ध्यतीति । निषेधबलेन विधेरपि कल्पनाद्विकल्पः सिद्ध्यतीत्यर्थः । *कृतसामर्थ्य इति । क्लृप्तशास्त्रेणैव विधि· कृतसामर्थ्यो विहितशक्तिकः प्रतिषेधाविषयातिरिक्ते इत्यर्थः । *न विकल्पइति । तत्र विधिकल्पनाभावान्निषेधमात्रप्रत्ययः स्यादिति भावः ।

*साधुत्वविकल्पे इति । शब्दाना नित्यत्वाद् व्याकरणेन साधुत्वमेव बोध्यते, ततश्च विकल्पोऽपि साधुत्वस्यैव स्यात् । तस्मात्कार्यशब्दवाद एवाश्रयणीय इति भावः । *षोडशी—ग्रहविशेषः । गृह्यते सोमादेरसोऽनेनेति ग्रहः । अतिरात्रो यागविशेषः । *आदितोऽवधारणामिति । वैकल्पिकपदार्थाना मध्ये यो जिघृक्षितस्तस्य कर्मादौ निश्चयः कर्त्तव्य इत्यर्थः ।

वैकल्पिकेषु सर्वेषु स्वयमेकैकमादितः ।
अङ्गीकरोति यं कर्त्ता स विधिस्तस्य नेतरः ॥ इति–

स्मृतेः । माठरवर्जमेव दधिदानमुपक्रान्तमिति यदुक्तं तत्र हेतुः *तस्य यथार्थत्वं गमयतीति । उक्तविषयपरिहारेणैवार्थवत्त्वां गमयतीत्यर्थः । *तस्य—पूर्वोक्तार्थस्य । यथा "तुल्यास्यप्रयत्नम्" "नाज्झलौ" इत्यनेन इत्यादिरीत्या उत्सर्गस्यापवादादिभिः सहैकवाक्यतेत्यर्थः । *तदुक्तमिति । अनेकाख्यातयोगेऽपि क्रियाभेदे ऽपि उत्सर्गापवादयोस्तत्कालं भिन्नवाक्यत्वप्रतीतावपि एकवाक्यत्वमित्यर्थः । *नियम इति । तथा सति "इकोगुणवृद्धी" इति नियमः "सार्वधातुकार्धधातुकयोः" इति विधेरेव शेषः, "अलुगुत्तरपदे" इति निषेधश्च 'सुपो धातुप्रातिपदिकयोः" इतिविधेरेव शेपः । अन्यथा "भुक्तवन्तम्" इति न्यायविरोधात् । *विशेष विधिः–अपवादः । अत्र त्रयाणा द्वन्द्वः । *तल्लाभे—विशेषविध्यादिलाभे । *तयोः—उत्सर्गापवादादिवाक्ययोः । *तदलाभे–विशेषविध्याद्यलाभे ॥ ६९ ॥

( क० टी० ) अत्र भाष्यान्तरसंमतिमप्याह *एतदेवेति । 'तन्ननिषेध" इत्याद्युक्त सर्वमित्यर्थः । *सङ्कीर्णत्वे–अस्थिततत्पक्षे । *विधे- समानविषयस्य । *विभाषायाम्—तद्विषये । *कृतेति । क्षीणेत्यर्थः । एव सति जैमिनिविरोध परिहरति *अपित्विति । *अभ्युच्चय इति । आर्षत्वाविशेषेऽपि निर्युक्तिकत्वेनोक्तरीत्याऽयुक्तमित्यर्थ । तदाह *युक्तिसिद्धेति । अत एव तत् पश्चादुपात्तम्, मुख्य तत्त्वबाधक वाक्यत्वसम्पादनमेव, अतएव तत् प्रागुपात्त तदाह *वाक्येति । तस्मात्सामान्यविशेषस्थले विकल्पाभावे ऽपि तुल्यविषयस्थले दुष्टस्याप्यगत्या तत्स्वीकार इति न तदुच्छेदः । अत एव "तुल्यार्थास्तु विकल्पेरन्" इति जैमिनिना सूत्रितम् । तत्र नवेतिसूत्रभाष्यप्रसङ्गादन्य-

था आह *नन्विति । *तत्तदिति । विकल्पविधायकैरित्यर्थ । शास्त्र साधुत्वविधायक साक्षादिति पक्षे इति भावः । *एव च–समानविषये विरुद्धापत्त्या.तत्त्यागे च । समानविषयमेवाह *अतीति । *षोडशिनमिति । तैत्तिरीयश्रुतौ मन्त्रादौ तथा स्पष्टत्वात् । एवं च षोडशी गृह्णातीति पाठः केषाञ्चिद् ग्रन्थेषूपलभ्यमानश्चिन्त्य एवेति बोध्यम् । *वाक्येनेति । विधिवाक्येनत्यर्थः । *तस्य–षोडशिग्रहणस्य । यत्तु तत्र षोडशिग्रहण नेष्टसाधनमिति नार्थ ग्रहणविधिविरोधात्, किन्तु षोडशिग्रहणाभाव इष्टसाधनमिति । व्युत्पन्नश्च नञ्समभिव्याहृतधात्वर्थस्याभावे विभक्त्यर्थान्वय इति नैयायिकादय. । तन्न । प्रत्ययानामिति न्यायविरोधापत्तेर्दोषान्तरस्य विधिवादे वक्ष्यमाणत्वाच्च । तदेतत् ध्वनयन्नाह *उभयत्रापीति । तत्रानुष्ठानव्यवस्थामाह तयोरिति । सर्वादाविति भावः । व्रीह्यादावपि परिग्रहस्तथैवेत्याह *एवमिति । अल्पाच्तरत्वेन स्मार्तस्य पूर्वनिपात । *अत एव–तत्रैश्वन्यनियामकत्वाभावादेव । *आदित —ऐच्छिकप्रथमारम्भात् । स्पष्टश्चेद त्रिकाण्डमण्डने । तत्र ह्युक्तम्—

> द्रव्य वैकल्पिक किञ्चिद्यत्र सङ्कल्पित भवेत् ।
> तदभावे सदृग्ग्राह्यं नतु वैकल्पिकान्तरम् ॥

एवञ्च कातीयानां तथा अनुष्ठान चिन्त्यमिति बोध्यम् । *इति —उक्तसमाप्तौ । प्रसङ्गादाह *तत्रेति । भिन्नविषयस्थले इत्यर्थ. । *प्रतिषेधे–तद्विषये । पश्चादित्यस्य ग्रहे ऽन्वयः । उत्सर्गस्येत्यस्याभावे ऽन्वय' । ज्ञाने पूर्वे जाते प्रामाण्यति पाठ । अप्रामाण्येत्यपपाठ । तुल्यन्यायादाह *एवमिति । *श्रुति –सम्प्रदानत्वेन । *दध्नि–विषये । नन्वेवमुत्तरवाक्यवैयर्थ्यमत आह *माठर इति । इत्यादौ । तद्विषयवर्जमिति णमुलन्तम् । *कालमिति–क्रियाविशेषणम् । उक्तहेतोरेवाह *अपवादेति । *निषेधानामिति । मिथ इति शेष' । *तदुक्तमिति । तदप्युक्त तेनैवेत्यर्थ । भिन्नरूपमिवेत्यस्यार्थमाह *आपातत इति । *तल्लाभे–सति । अत एवाह *तदेति । अनेकेत्यनेन तल्लक्षणानाक्रान्तत्वात्पदैकवाक्यत्वाभावप्रतिपादनाद्वाक्यैकवाक्यताऽत्रेष्टेत्याह *एकेति । एव यत. अञ्जलोर्न सावर्ण्यमतस्तदन्येषामेव

तद्, यत स्वादिविधावेव नलोपो ऽसिद्धो ऽतो ऽन्यत्र नासिद्धत्वमिति बोध्यम् । एतेन यत्तु तत्र करणनिषेधे विकल्पापत्तेर्भेदपरतेति । तद् सत् । विशेषनिषेधे सामान्यविधेस्तदन्यपरताया ब्राह्मणेभ्यो दधि दातव्य कौण्डिन्याय न दातव्यमित्यादौ व्युत्पत्तिसिद्धत्वेन विकल्पानवकाशात् । नच तत्रापि कौण्डिन्यभेदो बोध्य इति तद्भिन्नेभ्य इत्यर्थ । कौण्डिन्यपदस्य विरुद्धैकवचनावरुद्धत्वात् । नहि खलु महतो राज्ञो न महतो राज्ञ इत्यत्रेव महतो राज्ञो न महता राज्ञ इत्यत्र राजनि महदभेदभेदौ प्रतीयेते । एको न द्वावित्यादिवत्कथञ्चित्समर्थनेऽपि द्वितीयस्य दातव्यमित्यस्यानन्वयप्रसङ्गादिति नैयायिकोक्तमपास्तम् । द्वितीयतद्घटितप्रयोगस्य ऋष्यनुभवविरुद्धत्वाद् । अत एव भाष्ये "ब्राह्मणेभ्यो दधि दीयतां तक्र कौण्डिन्याय" इत्येवोक्तम् । तदाह *इतीत्यलमिति ॥ ६९ ॥

नचात्यन्ताभावार्थकनञः क्रियाऽभावबोधकत्वे-

न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥

इत्यादावनेकनञां वैयर्थ्यमनन्वयश्चेति वाच्यम् । प्रत्येकं तद्भवनाभावस्य समुदितानां च भवनाभावस्य बोधनायानेकनञां भवन्तीति बहुवचनस्य च सत्त्वात । तत्र प्रत्येकं भवतीत्यध्याहारः । भवन्तीत्यत्र चैतेनेत्यस्यानुकर्षः ।

एतेन—

न तं विरिञ्च्यो न भवो न लक्ष्मीर्न धनाधिपः ।
दातुमर्हन्ति विभवं विष्णोराराधने न यः ॥

इत्यपि व्याख्यातम् । समुदितानां बलवत्त्वेऽपि दानयोग्यत्वाभावप्रतिपादनाय च बहुवचन समुदितानां वैमत्येनादातृत्वे ऽपि प्रत्येकं दातृत्वाभावबोधफलकं नञनेकत्वमित्यदोषात् ।

'मैत्रस्येदं न चैत्रस्य' इत्यादौ आरोपितचैत्रस्वामिकत्ववदिदं मैत्रसम्बन्धीति बोधः ।

यत्त्वत्र स्वत्ववान् षष्ठ्यर्थः, चैत्रस्वत्ववद्भिन्नमिति बोध इति । तन्न । यन्निरूपिते यन्निष्ठेऽर्थे वा या विभक्तिस्तदर्थस्य तेनैव तत्रैवान्वयौचित्येन विभक्त्यर्थस्य प्रतियोगितया नञर्थेऽनन्वयात् । अन्यथा एकत्वाभाववन्तौ पाककर्त्तारौ चैत्रौ इत्यर्थे न पचति चैत्रौ इत्यस्याप्यापत्तिः, एको न द्वावितिवत् ।

किञ्च चैत्रस्येत्यादेः संबन्ध्यन्तराकाङ्क्षाया विशेषाकाङ्क्षाया वा नियमतः सत्त्वेन तत्सम्बन्धं विना नञर्थस्य प्रतियोग्याकाङ्क्षया तत्सम्बन्धो वक्तुमशक्यः, स्वाकाङ्क्षानिवृत्त्युत्तरमेवान्याकाङ्क्षापूरणस्यौचित्यात् ।

एवं च कृतिर्व्यापारसामान्य वा निङर्थ इति चिन्त्यमेव । न पचतीत्यादितस्तदभावबोधानापत्तेः । प्रथमान्तार्थनिष्ठस्य नियमतस्तदाकाङ्क्षस्य च कृत्यादेरेव तव प्रत्ययार्थत्वात् ।

अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वं चाभावे व्युत्पत्तिबललभ्यम् । नीलघटवति 'अत्र घटो नास्ति' इत्यव्यवहारात् 'पीतघटो नास्ति' इति व्यवहाराच्च । ध्वनित चेदं "विरामोऽवसानम्" इत्यत्र भाष्ये । अत एव वायौ रूपं नास्तीति प्रतीत्या सामान्याभावसिद्धिः । विशेषाभावकूटस्य ततो बोधासम्भवात् ।

अन्वयितावच्छेदकशब्देन नञर्थान्वयिविशेषणमुच्यते । यथा—पीतघट इत्यत्र पीतरूपम् । प्रतियोगितावच्छेदकं च तत्रापि घटत्वमेव*। विशिष्ट-

बोधे विशेष्यवृत्तिधर्मस्यैव प्रतियोगितावच्छेदकत्वात् । तदवच्छिन्ना प्रतियोगिता च पीतेत्याद्यादिविशेषणबलात् पीतघटव्यक्तिनिष्ठैव । विशिष्टं च प्रधानान्नात्यन्तमतिरिक्तम् । सर्वथाऽतिरिक्तत्वे तु वैशेषिकाणां पदार्थविभागन्यूनतापत्तिः ।

अत एवाभियुक्तैः'अन्वयितावच्छेदक'-इत्युक्तं न तु प्रतियोगितावच्छेदकेति । यथा घटपटादीनां घटत्वादिना शक्तावपि प्रकरणादिना कासांचिदेव व्यक्तीनां बोधः, तथा प्रकृते विशेषणबलात् । एवमाधारतावच्छेदकावच्छेदेनाभावान्वयः । घटे पीतघटत्वाभाव इत्यव्यवहारात् । एवं नीलघटो न घट इत्यपि न । आरोपितघटत्वस्य तत्राभावात् । अज्ञानशब्दे अधर्मशब्दे इव विरोध्यर्थको नञ्, तेन भावपदार्थ एव स सविषय इत्यन्यत्र विस्तरः ।

अभावपदे च विरोध्यर्थक एव सः । भावविरोधीत्यर्थः । एवं चाभावस्य भावप्रतियोगिकत्वमेव । अभावाभाव इत्यादिर्व्यवहारो वर्बराणामप्रामाणिक एव । घटाभावो नास्तीत्यादौ तत्कर्तृकसत्तायामेवाभावप्रतियोगित्वम् । एवमेव नासहस्रदस्तत्रास्ते इत्यादावपि बोध्यम् ।

'येन नाप्राप्ते' 'नाविष्णुः पृथिवीपतिः' इत्यादौ नञ्द्वयस्य प्रकृतार्थगतदार्ढ्यद्योतकत्वम् ।

तदुक्तं "विनञ्भ्याम्" इति सूत्रे भाष्ये "द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः, न न सह सहैव" इति ।

यद्वा अविष्णुः पृथिवीपतिर्न भवतीत्यन्वयः ।

मथ्नामि कौरवशतं समरे न कोपादित्यादौ काकुसहकारेण नञा मन्थनादिगतं निश्चितत्वं द्योत्यते । तदेवाभिलष्यते—मथ्नाम्येवेति ।

शशश्रृङ्गं नास्तीत्यादौ बौद्धप्रतियोगिप्रसिद्धेः सत्त्वान्न दोषः ।

वह्नित्वेन घटो नास्तीत्यादौ अप्रसिद्धप्रतियोगिकाया अभावबुद्धेःसोन्दडादिभिः स्वीकाराच्च॥७०॥

(कुं० टी०) *प्रत्येकमिति । प्रत्येकं क्रोधाद्यभावाय अनेकनञां प्रयोगः, समुदिताभावबोधनाय तु भवन्तीति । *वैमत्येन ऐकमत्याभावेन । *यन्निरूपितेइति । यथा चैत्रस्येदं धनमित्यत्र चैत्रनिरूपिते धननिष्ठे स्वत्वसम्बन्धे षष्ठी । *तदर्थस्य-ताद्विभक्त्यर्थस्य । *विभक्त्यर्थस्य—स्वत्ववतः । *नञर्थे—भेदे । *अनन्वयात्—अन्वयासम्भवात् । *अन्यथेति । पचतिपदोपात्तैकत्वाभावबोधसम्भवात् । *सम्बन्ध्यन्तरेति । धनादीत्यर्थः । *विशेषः—सम्बन्धविशेषः । *आकाङ्क्षेति । स्वार्थे परिपूर्णयोरेव चैत्रस्य धनमित्यनयोर्नञर्थसाकाङ्क्षत्वात् । *नञर्थस्येति । प्रतियोग्याकाङ्क्षया नञर्थे षष्ठ्यर्थान्वयोऽसम्भवीत्यर्थः । *तत्सम्बन्धंविनेति । चैत्रधनयोः सम्बन्धमपहायेत्यर्थः । *तत्सम्बन्धः—प्रतियोगिसम्बन्धः स्वत्वादिरूपः । *एवं चेति । यन्निरूपिते यन्निष्ठेऽर्थे विभक्तिरित्यादिनियमसत्त्वे इत्यर्थः । *व्यापारसामान्यमिति । फलं धात्वर्थो व्यापारास्तिङर्थ इति मण्डनमिश्रमतम् । *बोधानापत्तेरिति । चैत्रादिनिष्ठयत्ने तिङ्विधानेन यत्नस्य चैत्राद्यावन्वयानापत्तेरित्यर्थः । *तदाकाङ्क्षस्य—प्रथमान्तार्थसाका-

क्षस्य । ननु नीलघटवर्त्तिपीतघटाभावसत्त्वाद् घटो नास्तीति प्रयोगापत्तिः, घटकर्त्तृकसत्ताऽभावबोधे घटत्वावच्छिन्नप्रतियोगिताकाभावबोधाभावाद् अत आह *अन्वयितावच्छेदकेति । नीलघटाभावस्य प्रतियोगिता नीलघटत्वावच्छिन्ना न शुद्धघटत्वावच्छिन्नेति न नीलघटाभाववति शुद्धघटो नास्तीति प्रत्ययः । यद्यपि घटत्वेन वह्निर्नास्तीति प्रतीतेरप्यनुभवसिद्धतया तत्र घटत्वावच्छिन्नत्वमेव प्रतियोगितायां प्रतीयते तथापि प्रतियोगितावच्छेदकत्वमिवान्वयितावच्छेदकत्वमपि घटत्वे स्वीक्रियते । विशेषाभावकूटमेव सामान्याभाव इति मतं निराकरोति । *अत एवेति । अन्वयितावच्छेदकेत्याद्युक्तव्युत्पत्तेरेव । यत्तु विशेषाभावापेक्षया सामान्याभावो ऽन्यः प्रतियोगितावच्छेदकभेदस्याप्यभावभेदहेतुत्वात् । अन्यथा 'न' इत्यत्यन्ताभावान्योन्याभावप्रागभावाना भेदानापत्तिः, मम तु क्वचित्तादात्म्यम्, क्वचित्संसर्गो ऽवच्छेदक इति । तन्न । सर्वसाधारणस्यावच्छेदकस्य दुर्वचनत्वात् । तादात्म्यस्यावच्छेदकत्वे मानाभावाच्च । तस्मादभाववद् भावभेदो ऽपि विरुद्धधर्माध्यासादेव । ननु पीतघटत्वावच्छिन्नाभावबोधो ऽसम्भवी, तत्रापि घटत्वादेरेव प्रतियोगितावच्छेदकत्वाद् अत आह *नञर्थान्वयीति । यथा नीलघटो नास्तीत्यत्र नञर्थान्वयी घटस्तद्विशेषणं नीलत्वादि, पीतघटत्वं तु नान्वयितावच्छेदकं गुरुत्वात् । अन्वयितावच्छेदकावच्छिन्नाया एव च प्रतियोगिताया ग्रहणान्न पीतघटाभावप्रत्ययः । प्रतियोगितावच्छेदकेत्यपहाय अन्वयितावच्छेदकेति यदुक्तं तत्र बीजमाह *प्रतियोगितावच्छेदकश्चेति । *विशिष्टबोधे इति । नीलघटबोधे घटत्वमेव प्रतियोगितावच्छेदकमित्यर्थः । *प्रधानात्—केवलात् । *का-

सांचिदेवेति । घटमानयेत्युक्ते तात्पर्यविषयीभूतानामेवानयनदर्शनात् । *तथाप्रकृते इति । घटत्वमात्रस्यैवावच्छेदकत्वेऽपि पीतघटत्वावच्छिन्नैव प्रतियोगिता प्रतीयते इत्यर्थः । *आरोपितघटत्वस्य—नञ आरोपितोत्तरपदार्थबोधकत्वात् । *अज्ञानेति । अधर्मशब्दे इव अज्ञानशब्दे विरोध्यर्थको नञित्यन्वयः । *अप्रामाणिकएवेति । अभावो नाम हि भावविरोधी, तथाचाभावबोध इत्यत आह *सत्ताया एवेति । घटाभावकर्तृकसत्ताऽभाव इति बोधः । यदपि घटाभावाभावो घटस्वरूप इति । तदपि न। घटाभावो नास्तीत्यबाधितप्रतीतेर्भावरूपत्वासम्भवात् । *मथ्नामीति । यावत्कौरवशतं न मथ्नामि तावद्युधिष्ठिरः सन्धि करोत्विति कुपितभीमसेनवाक्ये मथ्नाम्येवेति प्रतीतिः । *अप्रसिद्धेति । तत्र वह्नित्वावच्छिन्नघटस्यैव प्रतियोगित्वात्, अन्यथा घटवति तादृशाभावप्रत्ययानापत्तेः । *स्वीकाराच्चेति । यद्यपि वह्नित्वेन घटो नास्तीत्यत्र घटस्यैव प्रतियोगित्व सोन्दडोपाध्यायैः स्वीक्रियते तथाऽपि वह्नित्वस्य तत्राविद्यमानस्याप्यन्वयितावच्छेदकत्वं स्वीक्रियते ऽन्यथाऽन्वयितावच्छेदकेत्यादिन्यायविरोधात् ॥ ७० ॥

(क०टी०) सिद्धान्ते आह *नचेति । चो व्युत्क्रमे । यथासङ्ख्यमन्वय । यथाश्रुते तदलाभाद् आह *तत्रेति । पूर्वार्द्धे इत्यर्थ । तत्रत्यचबोध्यसमुच्चयलब्ध योग्यमाह *एते इति । इत्यध्याहार इत्यनुषङ्गः । *एतेन—उक्तरीतिसम्भवेन । *नतमिति । वैष्णवमिदम् । य इन्यस्य लभ्यते इति शेष. । इत्यपीत्यपिना—

नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसश्रया ।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदाद् ॥

इति भागवतसमुच्चयः । पूर्वत्र कवितात्पर्य सूच-

यन्नत्र कवितात्पर्यमाह *समुदितानामिति । तथा च भगवद्भक्त्याराधनादेर्माहात्म्यातिशयसूचनद्वारा ऽत्यन्तोपादेयतासूचनाय तथोक्तिरिति* गूढाकूतम् । भेदस्योदाहरणान्तरमाह *मैत्रस्येदमिति । नैयायिकोक्तिं खण्डयति * यत्त्विति । *स्वत्ववानिति । तस्यापि शेषत्वात् । नतु स्वामित्ववान् । तस्य धनाद्यवृत्तित्वेन चैत्रीये ऽपि धने 'नेद् चैत्रस्य' इति प्रसङ्गात् । निरूपकत्वादे' सम्बन्धस्य प्रतियोगितानवच्छेदकत्वादिति भाव । *चैत्रेति । चैत्रसम्बन्धिस्वत्ववद्भिन्नमिद मैत्रसम्बन्धिस्वत्ववदिति बोध इत्यर्थ. । एतेनात्र स्वत्वाभावस्य बोधात्प्रतिषेधार्थकनञ. क्रियामात्रान्वयित्वमयुक्तमित्यपास्तम् । विनिगमनाविरहादाह *यन्निष्ठेइति । *तदर्थस्य—तद्विभक्त्यर्थस्य । आद्ये आह *तेनैवेति । अन्त्ये आह *तत्रैवेति । प्रत्यासत्तेरिति भाव । *अन्यथा–प्रत्यासत्त्यनङ्गीकारे । *एकत्वेति । सति तात्पर्ये एककृत्यभाववांश्चैत्र इतिवत्तथा बोधसम्भवात् । दोषान्तरमाह *किञ्चेति । सामान्यतस्तस्यापि लाभादाह *विशेषेति । अन्तरङ्गन्यायमूलकमाह *स्वाकाङ्क्षेति । *एवञ्चेति । नैयायिकमतखण्डनम् । तदर्थं सूचयन्नाह *नपचतीति । *तदभावेति । कृत्याद्यभावे इत्यर्थः । *सच—तत्समत । आद्यरीत्या आह *प्रथमान्तेति । द्वितीयरीत्या आह *नियमतइति । *प्रत्यय—तिङ्विभक्तिः । नैयायिकाद्युक्तमपि युक्तिसिद्धत्वात्सिद्धान्तिसमतत्वेनाह *अन्वयीति । तत्रात्यन्ताभावे आह *नीलेति । तत्समतिमेवाह *ध्वनितश्चेदमिति । तत्र हि लक्षणयोर्दोषो "भावाविरामभावित्वाच्छब्दस्यावसानलक्षण न" इति दत्त' । वर्णानामभाव इत्युक्तेर्वर्णत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थ., स च न वर्णसत्त्वे इति तदर्थः । *अत एवतस्य तत्र तल्लभ्यत्वादेव । यद्यपि सिद्धान्ते तत्सत्ताऽभावः शाब्दो न तदभावस्तथाऽप्युक्तरीत्या तस्य आर्थत्वेन रूपसामान्याभावस्यापि सिद्धिरित्यर्थ' । अत एव सामान्येनोक्तम् । ननु सामान्यरूपेण विशेषप्रतीतिरिति तदभावकूटस्यैव ततो बोधेन न तत्सिद्धिरत आह *विशेषेति । तथा सत्येकस्यैव बोधो न सर्वेषामिति तदलाभ इति भावः । नन्वेवमपि तत्र पीतघटो ना-

स्तीति व्यवहारो न स्यात् तत्र घटस्यैवान्वयितावच्छेदकत्वेन तदवच्छिन्नाभावप्रतीतेर्बाधितत्वादत आह *अन्वयितेति । प्रत्यासत्तेराह *नञर्थेति । सत्तावत् घटस्यापि आर्थिकनञर्थान्वयित्वादाह *पीतरूपमिति । पीतघट इति तद्वाक्यैकदेशः । प्रतियोगितावच्छेदकेत्युक्ते तु उक्तदोष एवेत्याह *प्रतीति । अपिना केवलसमुच्चयः । नचैवन्तद्वृत्तस्यापि विशेष्यमात्रनिष्ठत्वान्न साऽन्वयिताऽवच्छेदकावच्छिन्नेत्युक्तदोष एवेत्यत आह *तदवच्छिन्नेति । विशेष्यवृत्तिधर्मावच्छिन्नेत्यर्थः । ननु विशेषणसत्त्वेऽपि विशिष्टस्यातिरिक्तत्वात्केवलनिष्ठायाः कथं तन्निष्ठत्वमत आह *विशिष्टचेति । सर्वथाऽनतिरिक्तत्वे दोषबाहुल्यस्य स्पष्टत्वादाह *सर्वथेति । एत्र च विशेषणविशिष्टव्यक्तिनिष्ठत्वात्साऽन्वयिताऽवच्छेदकावच्छिन्ना भवतीति तथोक्तौ नोक्तदोषस्तदाह *अत एवेति । ननु शक्तिग्रहादेः समानविषयत्वात्कथं तावताऽपि व्यक्तिविशेषधीरत आह *यथेति । तथा च गमकासत्त्वविषयकः स नियम इति न दोषः । तद्वत्तदनुक्तं व्युत्पत्त्यन्तरमाह *एवमिति । एवमत्यन्ताभावे उक्त्वाऽन्योन्याभावे आह *एवमिति । अपिना घटो न नीलघट इत्यस्य समुच्चयः । नीलघटो न पीतघट इत्यादि तु भवत्येवेति भावः । प्राचां तस्य तत्रोदाहृतत्वादाह *अधर्मेति । नन्वेवमपि सोऽभावरूप एवास्तु तस्यापि तत्त्वादिति चेन्न । अस्ति कश्चिदेतद्वाक्यार्थ इति सामान्येन जानतो विशेषरूपेण तमजानत एतदुक्तस्यार्थं न जानामीत्यनुभवात् । अभावरूपत्वे हि तत्प्रत्यक्षादावभावज्ञानस्य विशिष्टबुद्धित्वात्तज्ज्ञाने प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्य कारणत्वस्य यथाकथंचिदावश्यकत्वात्प्रतियोगिज्ञानापेक्षा । नहि तत् सम्भाव्यते वाक्यार्थज्ञानत्वस्य तदानीं विद्यमाने सामान्यज्ञाने सत्त्वेन प्रतियोगितानवच्छेदकत्वात् । अभावाधिकरणवृत्तिपदार्थावृत्तिधर्मस्यैव प्रतियोगितावच्छेदकत्वात् । तादृशस्य विशेषज्ञानत्वस्य तु प्राग् विशेषानवगतेर्ज्ञातुमशक्यत्वम् । तस्मादज्ञानम् भावरूपं सविषयम् । नहि सविषयस्य ज्ञाने विषयतावच्छेदकावच्छिन्नविषयज्ञानापेक्षानियमः । जिज्ञासाज्ञाने व्यभिचारात् । अनवगतशास्त्रार्थविशेषज्ञानेच्छाया शास्त्रार्थे जि-

ज्ञासे इत्यवगतसामान्याकारावच्छेदेन अनुभवात् । अत एवौपनिषदैरज्ञान तथाऽङ्गीकृत साक्षिण्यध्यस्त साक्षिभास्यमिति चोक्तम् । तदाह *इत्यन्यत्रेति । गुरुमञ्जूषादावित्यर्थ । एवेनाभावार्थकत्वव्यच्छेद । तथा सति आत्माश्रयापत्तिरिति भाव । एवेनाभावप्रतियोगिकत्वव्यवच्छेद. । अत एवाह *अभावेति । नन्वेव घटाभावो नास्तीत्यादे. का गतिरत आह *घटाभाव इति । नन्वेवमपि येन नाप्राप्ते इत्यादौ का गतिरत आह *येनेति । आदिना "नारुद्र क्रमपाठक" इत्यादि । विशेषणत्वायाह *प्रकृतेति । निपातानामनेकार्थत्वात् । एकस्य तु न तथा, तथा प्रयोगाभावात् । तदेतद् ध्वनयन्नाह *तदुक्तमिति । *प्रतिषेधो-नञौ । नञ्द्वयाभावेनोक्तगतेरसम्भवादभावस्यैवासत्त्वेनैकेनैव नञा तद्बोधनासम्भवाच्च । सिद्धान्ते प्रसक्तदोषमुद्धरति *मथ्नामीति । वेणीसवरणे भीमवाक्य सहदेव प्रति । आदिना दु.शासनस्य रुधिर न पिबाम्युरस्तः । सञ्चूर्णयामि गदया न सुयोधनोरू सन्धि करोतु भवता नृपति पणेनेत्यस्य सङ्ग्रहः । काकुर्ध्वनिविकारविशेष. । आदिना 'जातौ जातिर्नास्ति' 'ह्रदे वह्निर्नास्ति' 'नान्तरिक्षे जुहोति' इत्यादि । अय सिद्धान्त ,प्रागुक्त तु पररीत्येति न विरोध. । तदेतद् ध्वनयन्नत्रापि तथैवाह *वह्नित्वेनेति । अत्रत्य तत्त्व तु कारकप्रकरणे स्फुटीभविष्यति । एतेन सर्वत्र विशेष्ये विशेषणाभावा नञा बोध्यते इत्येकीयमते 'जातौ न सत्ता' इत्यादावगतिर्दोष' जातिसमवेतत्वस्य तत्राप्रसिद्धत्वात्सम्बन्धान्तरेण जातिवृत्तित्वस्य तत्रासत्त्वादिति नैयायिकोक्तमपास्तम् ॥ ७० ॥

अत्रेदं बोध्यम्—प्रतियोग्यारोपोऽभावज्ञाने तद्व्यवहारे च हेतुः, प्रतियोग्यनालिङ्गिताभावबुद्धेरभावात् । सर्षपे सुमेरुभेदतदत्यन्ताभावयोर्व्यवहाराभावाच्च । नच 'न न' इत्यत्र तदनालिङ्गिताभावबोधो भाष्ये स्वीकृत इति वाच्यम् । तादृशभाष्याप्रसिद्धेः । नञ्सूत्रे "न न एकं प्रियम्" इति भाष्ये प्रयुक्तम् । तस्य च नोऽस्माकमेकं प्रियं नेत्यर्थः कैयटेनोक्त इति प्र-

तियोग्यालिङ्गितैव तत्राभावबुद्धिः । तथा "आबाधे च" इति सूत्रे भाष्ये 'न न' इति द्वित्वे उदाहृतं तदपि 'न न जागर्त्ति' इत्येकदेश इति कैयटेन व्याख्यातम् । एवमन्यदपि भाष्ये परिदृश्यते तदप्येवमेव व्याख्येयमिति सूचितम् ।

किंच विपरीतं नञ्सूत्रे "नेत्युक्ते सन्देहः स्यात्—कश्च पदार्थो निवर्त्तते" इति ग्रन्थेन नित्यं प्रतियोग्याकाङ्क्षैव दर्शिता ।

एतदेवाभिप्रेत्य नञ्सूत्रे भाष्ये उक्तं ब्राह्मणदृष्टगुणस्य गौरत्वादेर्दर्शनात् दुष्टोपदेशाद्वा अब्राह्मणे पूर्वं 'ब्राह्मणोऽयम्' इत्यध्यवस्यति ततः पश्चादुपलभते 'नायं ब्राह्मणः' इति, तत 'अब्राह्मणोऽयम्' इति प्रयुङ्क्ते । अतश्च तद्दृष्टगुणदर्शनाद् दुष्टोपदेशाद्वा ब्राह्मणत्वाध्यवसायपूर्वकमेव 'अयं न ब्राह्मणः' इति ज्ञानम् । नह्ययं कालवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति 'ब्राह्मणोऽयम्' इति यथास्थितं वस्तुतत्त्वं तस्य निर्ज्ञातं भवतीति तदारोपाभावान्न तदभावज्ञानं तत्रेति ब्राह्मणाब्राह्मणशब्दयोरुभयोरपि तत्र प्रयोगाभाव इत्यर्थकम् । एतेन प्रतियोग्यारोपस्यान्वयव्यतिरेकाभ्यां स्पष्टमेवाभावज्ञाने कारणतोक्ता । एतदेवाभिप्रेत्य आरोपितरजतत्वाद्यभावमेव शुक्तौ 'नेदं रजतम्' इति प्रतीतिरिति लीलावत्युपाये उक्तम् । अत एव प्रतियोग्यधिकरणाभ्यामभावो निरूप्यते इति वृद्धाः । अधिकरणपदेन संनिधानात्प्रतियोग्यारोपाधिकरणमेव, तदेव चाभावाधिकरणम् । आरोपस्यैव

शब्दप्रयोगकारणत्वात्, बोद्धुरपि तदारोपितविषयस्यैव प्रतीतेरारोपितत्वमेव नञर्थ इति युक्तम् । 'अत्र ब्राह्मणो नास्ति' इत्यादावपि एतद्देशाधिकरणिका आरोपितब्राह्मणकर्तृका सत्तेत्येव बोधः, आर्थस्तु तदभावबोधः । अत एव तत्र तत्सदृशेतरसत्ताप्रतीतिः । अत एव 'न न एकं प्रियम्' इत्यादौ "स्वसम्बन्ध्येकाप्रियनिषेधे ऽनेकप्रियप्रतीतिः" इति भाष्ये उक्तम् ।

एवञ्च यत्र तादात्म्यारोपस्तत्रारोपितत्वं नामार्थगतम्, एवं यत्र संसर्गारोपस्तत्र क्रियागुणगतं तदिति व्यवस्था ।

इदमेव युक्तम्, अन्यथा 'न कलञ्जं भक्षयेद्' इत्यादावनुपपत्तेः । यदि कलञ्जभक्षणाभावः प्रेरणाविषय इति बोधः तदा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गः । तस्मादारोपितकलञ्जभक्षणं प्रेरणाविषय इति बोधः । अनिष्टसाधनत्वं बुध्यते इति तु विधिवादे दूषयिष्यते ।

अत एव—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥

इत्यभियुक्तवाक्ये सादृश्याद्यार्थिकार्थेषु अभावभेदयोर्गणनमिति दिक् ॥ ७१ ॥

(कुं०टी०) *सर्षपेइति । सर्षपे सुमेरुत्वारोपासम्भवान्न सर्षपे सुमेरुभेदप्रत्ययः अतिविसदृशत्वादिति भावः । *ब्राह्मणदृष्टेति । तदुक्तं भाष्ये—"गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वा-

ऽध्यवस्यति–'ब्राह्मणोऽयम्' इति ततः पश्चादुपलभते नायं ब्राह्मण इति"इति । *दुष्टोपदेशाद्वेति । अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेत्येवमविवेकेनोपदेश इत्यर्थः । *आतश्चेति । अस्माच्च हेतोरित्यर्थः । *कालवर्णमिति । रूपाभावकथनमेतत् । *आपणे आसीनमिति । आचाराभावकथनम् । *निर्ज्ञातमिति । संदेहबीजाभावाद्ब्राह्मण्यमेव तत्र निर्ज्ञातं भवतीति ब्राह्मण्यारोपाभावान्नाब्राह्मणशब्दप्रयोग इत्यर्थः । *प्रतियोग्यधिकरणाभ्यामिति । सद्भ्यामिति शेषः । अन्यथा शशविषाणस्याप्यभावप्रतियोगित्वापत्तिरिति भावः । *निरूप्यते–प्रत्याय्यते । *आरोपितेति । असमस्तनञः क्रियायामन्वयात्सत्ताया एवारोपितत्वम् । *तत्सदृशेति । तत्सदृशोऽयम् इतर इत्यर्थः । नामार्थः–प्रातिपदिकार्थः । तद्गतमारोपितत्वं तत्रेत्यन्वयः । *व्युत्पत्तिभङ्ग इति । भक्षणे एव प्रेरणान्वयौचित्यात् । *अभावभेदयोरिति । तयोरप्यार्थिकत्वात् ॥ ७१ ॥

( क० टी० ) भूषणाद्यसाङ्गत्यं ध्वनयन्सिद्धान्ततत्त्वमाह *अत्रेदमित्यादिना । आद्ये आह *प्रतियोग्यतेति । द्वितीये आह *सर्षपे इति । आद्यहेतु विघटयति *नचेति । अप्रसिद्धिमेवाह *नञ्सूत्रे इति । *एवम्–एतादृशम् । दृश्यते इत्यत्रान्वय. । यदीत्यनेनादर्शनमेवेति ध्वनितम् । *सूचितमिति । सूचितमेव, कैयटेनेत्यर्थः । एवं तत्साधकभाष्यानुपलम्भमुक्त्वा तत्साधकतदुपलम्भमाह *किञ्चेति । *विपरीतमिति । दर्शनक्रियाविशेषणम् । *नेत्युक्ते इति । उत्तरत्वेनोक्ते इत्यर्थ. । *सन्देहइति । समभिव्याहृतपदस्य बोधकस्याभावान्निवृत्तिरूपार्थस्य प्रतियोग्याकाङ्क्षाया अनिवृत्तेरबोधकत्वेन च तदप्रयोग एव स्यात् । वाचकत्वे तु सन्देह स्यादित्यर्थ. । तदाकारमाह *कस्येति । कस्य पदस्य पदार्थ इत्यर्थ• । अभिधेयपरः पदार्थशब्दः सन्देहपदेन निर्णयाभावो विवक्षित इति तत्त्वम् । एतदाशयेनैवात एव नेत्युक्तमिति प्रागुक्तम् । एतेन

तत्र तथाङ्गीकारादिद चिन्त्यमित्यपास्तम् । तत्र परानुवादसत्त्वेना- सिद्धान्तत्वात्। तप श्रुतश्चेत्याद्युक्त्वा तेषामपि तत्त्वस्य तत्रोक्तत्वा- दाह *गौरत्वादेरिति । अन्वयमुक्त्वा व्यतिरेकमाह *आनश्चेति । इतोऽपीत्यर्थ । काल -श्याम । आपणे-हट्ट। तत्तात्पर्यार्थमाह *तदा रोपेति। *एतेन-भाष्येण। नैयायिकसमतमपीदमित्याह *एतदेवेति। *उक्तम्-वर्धमानोपाध्यायै. । *अतएव-तस्य तत्र कारणत्वादेव। नन्वेवमभावस्य पृथगधिकरणाकाङ्क्षा समागतेति प्रागुक्तविरोधो ऽत आह ॰-अधीति । एव सति क्रियागुणान्यसमभिव्याहृतनञ इव तत्समभिव्याहृतनञोऽप्यारोपितत्वार्थकत्वमेवेति सर्वत्रैकरूपते- त्याशयेनाह *आरोपस्येति । एवञ्चेत्यादि । *नञर्थ -नञ्द्यो- त्य । अस्मिन्सिद्धान्ते तत्र बोधाकारमाह *अत्रेति । वाक्यघटक- मिदम् । अपिना "न न एक प्रियम्" इत्यादि । *सन्देह इत्यादि । आदिना 'पीत शङ्खो नास्ति' इत्यादिपरिग्रह । नच विशिष्टसत्ताया अप्रसिद्धे कथमारोप । उक्तोत्तरत्वात्। एवेन प्रागुक्तबोधव्यवच्छेदः। नन्वनुभवसिद्धाभावबुद्धेरपलाप कथम् अत आह *आर्थस्त्विति । तमादायैव प्रतियोगिज्ञानप्रतिबन्धादि सङ्गमनीयम् । उक्तरीतिर्वा । *अत एव—तत्रापि तथैवाङ्गीकारादेव । नञिवयुक्तन्यायेनेति भाव । अत्राप्रमाणत्व निराचष्टे *अतएवेति । तथाप्रतीतेरेवे- त्यर्थ । नन्वेवमसमासे क्व द्रव्यान्वय, क्व क्रियाद्यन्वय इत्यत्र नियामकाभावादव्यवस्थापत्तिस्तव, मम तु भेदार्थकत्वे-आरोपिता- र्थकत्वे द्रव्यान्वयो ऽन्यन्ताभावार्थकत्वे क्रियाद्यन्वय इति व्यवस्था- सम्भवोऽत आह *एवञ्चेति । तथाऽर्थस्य प्रमाणसिद्धत्वे चेत्यर्थ. । *ससर्गेति। तदितरेत्यादि.। उक्त समर्थयते *इदमेवेति । *अन्यथा- अभावार्थकत्वे। तामेवाह *यदीति। नच तत्र लक्षणा नञ् द्योतक । तथा सति तस्य विशेषणतापरया प्रागुक्तदोषापत्तेः । तदू ध्वन- यन्नाह *तस्मादेति । इष्टसाधनत्व विध्यर्थो नञ्समभिव्या- हारे त्वनिष्टसाधनत्वम्, इति नोक्तदोषो ऽत आह *अनिष्टेति । एतेन कलञ्जभक्षणाभावविषयक कार्यमिति प्राभाकरोक्तमप्यपा- स्तम् । *अत एव—तस्यैव तच्छब्दार्थत्वादेव । अन्यथा तदसङ्गतिः स्पष्टैव । एतेन चिन्त्यमिदम् अनुभवसिद्धाभावबुद्धेरप- लापे मानाभावात् । किञ्च उक्तरीत्या तत्र अव्यवस्थापत्तेः । उक्तरी-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) २

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) २

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीब्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड. प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च . १

(२९) अनुमानचिन्तामणि व्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठि सकलित ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो -प्रकाश गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाटीकाद्वयसवलिता ।

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । ६

(४८) विरमित्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ६

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलकृत । ४

(५०) विरमित्रोदय । राजनीतिप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ४

December 1916.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 228.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।

श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-

कुञ्जिकाकलाख्यटीकाद्वयसंवलिता ।

गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनमवलम्बमानेन

शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा

संशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU-MANJUSHÂ

BY

MAHAMAHOPADHYAYA ŚRÎ NAGEŚA BHATTA,

With Two Commentaries, i.e. Kunjika of

Durbalâchârya and Kalâ of Bâlam Bhatta.

Edited by Pandit Sitarama Sastri Shende.

FASCICULUS VIII.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES

AGENTS -

OTTO HARRASSOWITZ, LEIPZIG

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY

PROBSTHAIN & CO, BOOKSELLERS LONDON

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press*

BENARES.

*Price Rupee one.*

॥ श्री. ॥

आनन्दवनविद्योतिसुमनोभि सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—सम्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुल कुर्यादमन्दाऽऽमोदमोहितम ॥ २ ॥

स्तवकः—२२८

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमास पृष्ठशतके सुन्दरै सीसकाक्षरैरुत्तमेषु पत्त्रेषु एक स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्त।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्ट्यो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयै,ब्रह्मदेशीयै,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देय वार्षिकमग्रिम मूल्यम्- मुद्रा ७आनका ८

५ अन्यैर्देयं प्रतिस्तवक

६ प्रापणव्यय पृथग् नास्ति।

साम्प्रत मुद्र्यमाणा ग्रन्था —

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता खण्डे २

(२) शब्दकौस्तुभ। भट्टोजिदीक्षितकृत १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया- व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्योपबृंहित तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाष्यभाषाप्रकाशसहित सम्पूर्णम् (वेदान्त) २

(५) करणप्रकाश। श्रीब्रह्मदेवविरचित १

(६) भाट्टचिन्तामणि। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपाद (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्त) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभि श्रीश्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्त १

(११) न्यायमकरन्द। श्रीमदानन्दबोधभट्टारकाचार्यसगृहीत। आचार्यचित्सुखमुनिविरचितव्याख्योपेत (वेदान्त) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायविरचित। सम्पूर्ण (न्याय) ६

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) .. २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १६

स्या व्यवस्थातु न, संसर्गारोपानियामकस्यैवात्यन्ताभावनियामकत्वसम्भवात् । सर्वदाऽप्यभावस्य बुध्यत एव व्यवजिहीर्षावशाद्व्यवहारस्य कादाचित्कत्वमित्युपपत्तेश्च । किञ्च 'घटो नास्ति' इति बोधोत्तरं घटवत्ताबुद्धिप्रतिबन्धो न स्यात् । नचाग्रेतनेन तेन प्रतिबन्ध, नियमतस्तज्ज्ञापकाभावात् । नचारोपितत्वज्ञानमेव तथा, इद च तवाप्यावश्यकम् । अन्यथाऽत्यन्ताभावभेदबोधयोर्व्यवस्था न स्यात् । ममतु संसर्गारोपे आद्यस्तादात्म्यारोपे द्वितीय इति न दोषः इति वाच्यम् । संसर्गाद्यारोपानियामकस्यैव तन्नियामकत्वसम्भवात् । लौकिकप्रत्यक्षस्थळे एवारोपस्य हेतुत्वाच्च । प्रतियोग्यधिकरणसंसर्गज्ञानमेव ह्यारोपः । अत एव नेत्यत्राभावबोधो भाष्ये उक्तः । तेन लीलावत्युपायोक्तमपास्तमिति भूषणाद्युक्तं समासे एव आरोपितत्व नञर्थः, असमासे त्वभाव एवानुभवसिद्धाभावबुद्धेरपलापे मानाभावादिति नव्यशाब्दिकमनमनूद्य, तन्न, सर्वत्राभावबोधस्यानुभविकत्वात् । आरोपत्वस्यानुगतस्य ब्रह्मणोऽपि दुर्वचत्वेन तस्य नञर्थत्वे गौरवाच्च । एतेन तत्सादृश्यमित्याद्यपि निरस्तम् । सादृश्यादिबोधस्य लक्षणयैवोपपत्तावभावस्यैव नञर्थत्वादिति नैयायिकोक्तमपास्तम् । उक्तयुक्तिगणात् । एवं चार्थतदभावबोधानुसारात् प्रत्यक्षमपि तद्विषयमेव । नतु घटसत्ताप्रतियोगिकभूतलाधिकरणकाभावविषयम्, नापि भूतलाधिकरणकत्वविशिष्टघटप्रतियोगिकाभावविषयम्, कारकाणां भावनान्वयेन तस्य शब्दस्येदृशार्थपरताया दुर्वचनत्वात् । एव च भूतले तादृशसत्तारोप सिद्ध । 'घटः पटो न' इत्यत्राप्येवमेवोभयमिति अधिकरणे प्रतियोगितादात्म्यारोपः सिद्धः । अत एवोभयत्र प्रथमासिद्धिः । उभयत्र भूतले घटोस्तीति यत्तत्र, घटः पट इति यत्तत्रेत्यन्वयात्तत्सिद्धिर्बोध्या । तदाह *दिगिति ॥ ७१ ॥

यत्तु प्रमायां गुणस्य कारणत्वानुरोधेन प्रतियोग्यारोपस्याभावप्रमायां हेतुत्वमिति । तन्न । प्रमाया गुणजन्यत्वे मानाभावात् । चक्षुर्गतापित्तदोषाभावे शङ्खे इवैत्यप्रमा, तत्सत्त्वे न, तद्गतमण्डूकवसाञ्जनाभावे

षंशप्रमा, तत्सत्त्वे न, इत्यन्वयव्यतिरेकाभ्यां तत्तत्प्रमायां तत्तद्दोषस्य प्रतिबन्धकताया एव कल्पनात् । सत्यां सामग्र्यां कार्यविरोधित्वमेव प्रतिबन्धकत्वम्। आरोपे गुणत्वाभावाच्च । प्रत्यक्षे निर्दुष्टेन्द्रियसंनिकर्षादिः, शाब्दे आप्तोक्तशब्दज्ञानस्य गुणस्य सत्त्वाच्च ।

यत्तु 'अघटः' इत्यादौ समासे षष्ठ्याद्यप्रत्याधभावात् घटभिन्न इत्येव बोधः । 'अवर्षा हेमन्तः' 'अनर्थः स्त्री' इत्यादौ हेमन्तादिगतलिङ्गं तु न, लोकाश्रयत्वाल्लिङ्गस्य। 'असः' इत्यादौ सर्वनामकार्यं तु "एतत्तदोः सुलोपोऽकोरनञ्समासे" इति ज्ञापकेन पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थप्रयुक्तकार्यज्ञापनात् । अत एव 'अभवसि' इत्यादौ पुरुषव्यवस्था। "अनेकमन्यपदार्थे" इत्येकवचनं तु विशेष्यभूतसुबित्यस्य एकवचनान्तत्वात्। 'सेव्यते ऽनेकया' इत्यत्रापि 'योषया' इति विशेष्यानुरोधादेकवचनम् । अत एव 'पतन्त्यनेके' इत्यादौ बहुवचनमपि । नञो द्योतकत्वेन भिन्नो ऽपि तच्छब्दाद्यर्थ इति तु न युक्तम्। द्योत्यार्थस्य विशेषणताया एव भाष्यसंमतत्वादिति ।

तन्न । 'ताभ्यां भिन्नोऽस्ति' इत्यर्थके 'अतौ स्तः' इति प्रयोगे द्विवचनानापत्तेरेकवचनापत्तेश्च ।

किञ्च विशेष्यानुरोधाद् 'अनेकम्' इत्यादावेकवचने 'अवर्षा हेमन्तः' इत्यादावपि एकवचनापत्तिः, स्वगतान्यसंख्यासत्त्वे विशेष्यगतसङ्ख्यया वचनं भवतीत्यनुशासनाभावाच्च । पतन्त्यनेके इत्याद्यसाध्वेव । एकेनैवानेकशब्देन सकलार्थप्रतीतेरनेकानेक-

शब्दप्रयोगाप्राप्त्याऽनेको रथो गजो ऽश्व इत्यर्थादेकशेषेण बहुवचनमित्यपास्तम् ।

किञ्च विशेष्यबोधकरथादिपदानां पृथग्विभक्तिकत्वे एकस्यैवानेकपदस्यान्वय इत्येकशेषानुपयोगः । तेषां द्वन्द्वनिर्देशे ऽपि समुदिते एकस्यैवान्वयसम्भवात्तदनुपयोग एव । एतदेवाभिप्रेत्य भाष्ये "इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये संगृहीतम्, किम्, अनेकमित्यत्रैकवचनम्, आरोपितैकत्वबद्बोधाद्बहूनां संप्रत्ययः" इत्युक्तम्। "अनेकस्तिष्ठति" इति भाष्योदाहृते विशेष्यादर्शनाच्च । अनेको जना आगता इत्यस्य साधुतापत्तेश्च । अनञ्समासे इत्यनेनोत्तरपदार्थप्राधान्यस्यैव ज्ञापयितुमुचितत्वाच्चेति दिक् ।

'न क्वाचिदस्ति' इत्यादौ न क्वापीत्यर्थः। पूर्वनञ्समभिव्याहृतक्वचिदादिपदान्तर्गतचिदित्यस्याप्यर्थत्वात्। अत एव "न ङिसम्बुद्ध्योः" इति सूत्रे भाष्ये न क्वचिन्डिर्लोपेन लुप्यते"इत्यस्य"सर्वत्र लुमतैव लुप्यत"इति प्रतिनिर्देशः कृतः। 'क्वचिन्न'इत्यादौ तत्रनिर्द्धारितविशेषावच्छिन्ने कस्मिंश्चिदेवाभावः प्रत्याय्यते । 'स्रजं न काचिद्विजहौ जलाविलाम्' इत्यत्रापि 'काऽपि न विजहौ' इति प्रतीतौ 'सर्वा न विजहुः' इति प्रतीत्या दुष्टत्वम् । जलक्रीडावर्णने कस्याश्चिदेकस्या एव तथा वर्णने कवितात्पर्यात् ॥ ७२ ॥

( कु०टी० ) *प्रमाया गुणस्येति । अयं भावः—योग्यतालक्षणेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावस्य तन्नि-

ष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वाभावस्य वा ऽननुगमा-न्निवेशो न सम्भवति । नच ग्राह्यसंसर्गविरोधिविरहज्ञानत्वेन द्वयोरप्यनुगमः । अन्योन्याभावगर्भाया योग्यताया ज्ञानेऽसत्यपि अत्यन्ताभावगर्भयोग्यताज्ञानादन्वयबोधापत्तेः । तस्मात्स्वरूपसती योग्यता गुणत्वविधया हेतुः । सा चात्रारोपितैवेति । अत्र तार्किकाः—यथा अप्रमां प्रति दोषः कारणम्, तथा प्रमां प्रति गुणः कारणम्, यथा प्रत्यक्षे भूयोऽवयवेन्द्रियसन्निकर्षः अनुमितौ सल्लिङ्गपरामर्श इति । दोषास्त्वननुगताः । यथा पीतादिभ्रमे पित्तादिः, चन्द्रादेः स्वल्पत्वे दूरत्वम्, वंशोरगभ्रमे मण्डूकवसाञ्जनम्, इत्येवमननुगतदोषाभावस्य कारणत्वापेक्षयाऽनुगतगुणस्यैव कारणत्वमुचितम् गुणश्च प्रत्यक्षे विशेषणवद्विशेष्यसंसर्ग इत्याद्याहुः । *मानाभावादिति । तादृशकार्यकारणभावस्य निष्फलत्वादिति भावः । *तत्सत्त्वेति । पित्तदोषाभावसत्त्वे शङ्खे श्वैत्यप्रमा भवति, दोषासत्त्वे तु न भवतीत्यन्वयः । *तद्वतेति । चक्षुषि मण्डूकवसाञ्जनेन वंशे सर्पभ्रमो भवति । *तत्तत्प्रमायामिति । विशिष्य प्रतिबन्धकताया आवश्यकतया किं सामान्यकार्यकारणभावेनेति भावः । ननु वचनारम्भे गौरवमत आह *सत्यामिति । सत्यामपि सामग्र्यां कार्यानुदयात् प्रतिबन्धकत्वं न्यायसिद्धमित्यर्थः । *गुणत्वाभावात्—गुणत्वव्यवहाराभावात् । *निर्दुष्टेति । एवं च दोषान्तरसद्भावे ऽपि प्रत्यक्षाद्यापत्तिः । *षष्ठ्यापत्तीति । घटस्य भेदवानित्यर्थाद्वाक्ये षष्ठीसम्भवे ऽपि समासे तदसम्भवादित्यर्थः । *भिन्नोपीति । घटभिन्नो ऽपि घटशब्दार्थ एवेति उत्तरपदार्थस्यैव प्राधान्यमिति भावः । *द्विवचनानापत्तेरिति । तद्भिन्नस्यैकत्वात् ।

*स्वगतान्येति । अनेकं सुबन्तामित्यत्र विशेषणे बहुत्वसङ्ख्यासत्त्वे सुबित्येतदनुरोधादेकवचनमित्यत्र वचनं नास्तीत्यर्थः । *एकेनैवेति । रथो गजोऽश्वोऽनेक इत्येवमेकशेषेण बहुवचनमित्यपास्तम् । एकेनैवानेकशब्देनेष्टार्थलाभे ऽनेकानेकशब्दप्रयोगप्राप्त्यभावादिति योजना । *पृथग्विभक्तिकत्वे–सर्वस्य सविभक्तिकत्वे । *अन्वयेति । रथोऽनेको गजो ऽनेक इत्याद्यन्वयेत्यर्थः । ननु कथमप्यर्थलाभ इत्यत आह *पूर्वेति । *दुष्टत्वमिति । काचिन्न विजहौ इति बोधयितव्ये सर्वा न विजहुरित्येतद्बोधनापत्तिर्दोष इत्यर्थः ॥ ७२ ॥

( क० टी० ) भूषणोक्तमेव प्रकारान्तरनिरसनमाह *यत्त्विति । *गुणस्य–प्रमाणगतस्य । तत्र तस्यैव गुणत्वादाह *प्रतियोग्येति । *प्रमायाम्–नतु ज्ञानमात्रे । एवं चोक्तमयुक्तमिति भावः । *तद्गतेति । चक्षुर्गतेत्यर्थः । वशप्रमा तत्रैव । नन्वेव समागत तदभावस्य कारणत्व कारणीभूताभावप्रतियोगित्वस्यैव तत्त्वात्तथा च लाघवाद् गुणस्यैव कारणत्वम्—अत आह *सत्यामिति । एवेन तद्व्यवच्छेदः । साक्षादविरोधिनो ऽपि ज्ञानस्य जनकज्ञानविघटकस्य प्रतिबन्धकताया बहुशो दर्शनात् । पारिभाषिकगुणत्वाभावमाह *आरोपे इति । [2]तरया गुणजन्यत्वाग्रहे आह *प्रत्यक्षेइति । एतेन तदनुरोधेन तत्र तस्य हेतुत्वावश्यकत्वेन सर्वत्रैव स हेतुरित्यप्यपास्तम् । उक्तरीत्या प्रतियोग्यनालिङ्गिताभावबुद्धेरेवाभावात् 'नं न' इत्येव प्रत्यक्षापत्तिरिति तद्रीत्याऽपि न तस्य तत्र हेतुत्वमिति बोध्यम् । भूषणाद्युक्तमेव खण्डयति *यत्त्विति । आदिना 'नामार्थयो.' इतिव्युत्पत्तिभङ्गः । *घटभिन्न इति । पूर्वपदभूतनअर्थभेदवद्विशेष्यक एवेत्यर्थः । सामान्यापेक्ष ज्ञापकमित्याह *उत्तरेति । तत्फलमाह *अत एवेति । सामान्यतस्तत्र तज्ज्ञापनादेवेत्यर्थः । *सुबित्यस्य–"सुबामन्त्रित' इत्यतो ऽनुवृत्तस्य ।

( १ ) तदनुरोधेनापि तद्दुर्वचमित्यधिकः पाठ पु० २ ।
( २ ) अभ्युपेत्येत्यधिकम् पु० २ । ( ३ ) न्मनेत्येति पाठः । ।

*अनुरोधात्—योषापदोपात्ततदनुरोधादेव । एतन्मतोपपत्तिः स्वयमेव कृता । यत्तु भूषणकारादिभिरिदं मतमित्थमुपपादितम्-अत्वं भवसीत्यादौ नञो द्योतकत्वेन युष्मदस्तद्भिन्नलाक्षणिकत्वाद्भिन्नरूपयुष्मदर्थेन सामानाधिकरण्यात्पुरुषव्यवस्था । अत एव 'असः' इत्यादौ सर्वनामकार्यं लाक्षणिकत्वे ऽप्युपसर्जनत्वाभावाद् । अत एव "अनञ्समासे" इति सङ्गच्छते इति, तत् खण्डयति *नञ इति । आदिना युष्मदादि । दोषान्तरमाह *स्वगनेति । अत एव गुणवचनानामिति सत्त्वे ऽपि न दोषस्तस्यान्यविषयत्वात् । नन्वेव 'पतन्त्यनेके' इत्यस्य का गतिरत आह *पतन्तीति । नन्वेकशेषेण साधुतेति तत्पक्षे तैरुक्तमेवात आह *एकैनेति । अनेकेतिशब्देन । एवमग्रेऽपि । अप्राप्तिरपासने हेतु । *पृथगिति । बहुव्रीहि । *एतदेव—वचनासिद्धिरूपदोषस्य सर्वथा अन्यथा अपरिहार्यत्वमेव । अनेकमित्यादौ बहुत्वैकत्वस्यारोपादाह *आरोपीति । अन्यथा भाष्यविरोधोऽपीति भाव । दोषान्तरमाह *अनेकास्तिष्ठतीति । *साधुनेति । उत्तरपदार्थप्राधान्ये इत्यर्थ । *प्राधान्यस्यैवेति । लाघवादिति भावः । एतेन तत्पुरुषे तत्प्राधान्यनियमस्यैवाभावादुक्तज्ञापकादस इत्यादौ सर्वनामकार्यसिद्धौ नञो ऽभावार्थकत्वं युक्तमिति नैयायिकोक्तं तथाऽन्योक्तं चापास्तम् । तस्मादुक्तप्रथमपक्ष एव युक्ततर इति बोध्यम् । तदाह *इतिदिगिति । विशेषमाह *नकचिदिति । अत्र मानमाह *अत एवेति । तस्योक्तार्थकत्वादेवेत्यर्थः । पूर्वेत्युक्ते फलमाह *क्वचिन्नेत्यादाविति । विरुद्धमतिकृत्त्वदोषे प्रकाशाद्युदाहृतस्यात एव सङ्गतिरिति आदिपदसंग्राह्यमाह *स्रजामिति । ननु कुतोऽस्य विरुद्धत्वमत आह * जलेति । अत्रानुपूर्वीव्यत्यासेन विवक्षितार्थबोधे ऽपि झटिति विरुद्धार्थप्रतीतिजनकत्वेन दुष्टत्वमित एवानित्यदोषत्वमस्येति तात्पर्यम् । इति नञर्थनिरूपणम् ॥ ७२ ॥

एवशब्दोऽवधारणे । "एवे चानियोगे" इतिवार्त्तिके नियोगोऽवधारणमिति कैयटाद्युक्तेः । अस्मादेवासम्भवाद्यपि तदर्थः । अवधारणं ज्ञानविशेषः । सचैव-

कारयोत्य एवसमभिव्याहृते विशेषणम् । तच्च 'पार्थ एव धनुर्धरः' इत्यादौ विशेष्यसङ्गतं स्वातिरिक्तावृत्तित्वेन गृहीतसमभिव्याहृतपदार्थप्रकारकज्ञानरूपं पार्थविशेषणम् । अवधारणाविशेष्यः पार्थो धनुर्धर इति बोधः । साधारण्येन धनुर्धरत्वज्ञानवन्तं प्रति तद्भ्रमनिरासायैवं प्रयोगात् । तदन्यो न धनुर्धर इति तु फलति ।

कदाचित्स्पष्टत्वार्थं तत्प्रयोगो ऽपि । यथा—'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केन चिद्' इति । आर्थ्या वृत्त्या लब्धस्य शब्देन प्रतिपादने पौनरुक्त्याभावस्यालङ्कारिकैरुक्तत्वात् ।

'लवणमेवाश्नौ भुङ्क्ते' इत्यादौ प्राचुर्याद्यर्थकस्य, 'घट एव प्रसिद्धः' इत्यादावप्यर्थकस्य, 'क्व भोक्ष्यसे' इत्यादावसम्भवार्थस्य च तस्य सत्त्वेन तदर्थकत्वव्यावृत्तये तदुक्तेश्च ।

'शङ्खे पाण्डुरत्वमेव' इत्यादौ स्वातिरिक्तरूपानाश्रयत्वेन गृहीतसमभिव्याहृतप्रकारकज्ञानरूपमवधारणम् । शङ्खे ऽनेकरूपवत्त्वज्ञानवन्तं प्रति अयं प्रयोगः । एवमग्रे ऽप्यूह्यम् ।

'शङ्खः पाण्डुर एव' इत्यादौ विशेषणसङ्गते स्वातिरिक्तरूपानाश्रयसमभिव्याहृतपदार्थविशेष्यकज्ञानरूपं तत् । अवधारणप्रकारपाण्डुराभिन्नः शङ्ख इति बोधः ।

क्रियासङ्गते 'चैत्रो हसत्येव' इत्यादौ स्वातिरिक्तबुद्धिस्थक्रियानाश्रयसमभिव्याहृतपदार्थप्रकारकज्ञानरूपं तत् । 'न रोदिति' इति प्रतिनिर्देशात् ।

'नीलं सरोजं भवत्येव' इत्यादौ नीलभवनाद्यभावानधिकरणसमभिव्याहृतप्रकारकज्ञानरूपं तत् । 'न भवतीति न' इति प्रतिनिर्देशात् ।

'ज्ञानमर्थं गृह्णात्येव' इत्यादाववच्छेदकावच्छेदेनार्थग्रहणाद्यभावानधिकरणज्ञानादिप्रकारकज्ञानरूपम् । 'न गृह्णातीति न' इति प्रतिनिर्देशात् । ज्ञानकर्तृकमर्थकर्म्मकमवधारणविषयो ग्रहणमिति बोधः ।

'शीत एव स्पर्शो जले' इत्यादौ शीतान्यस्पर्शानधिकरणसमभिव्याहृतपदार्थप्रकारकज्ञानरूपम् । 'नान्यः स्पर्शो जले' इति प्रतिनिर्देशात् ।

'चैत्रेणैवायं दृश्यते' इत्यादौ चैत्रान्याकर्त्तृकसकलकारकविशिष्टदर्शनादिक्रियाविशेष्यकबोधरूपं तत् ।

'घटत्वं पृथिवीवृत्त्येव' इत्यादौ पृथिव्यन्यावृत्तित्ववद्घटत्वविशेष्यकज्ञानरूपम् । 'नान्यवृत्ति' इति प्रतिनिर्देशात् । अवधारणविषयपृथिवीवृत्तित्ववद् घटत्वमित्यादिप्रकारेण बोधः ।

'ऋतौ स्वभार्यामुपेयादेव' इत्यादौ स्वाभावानाश्रयकारकप्रकारकज्ञानरूपं तत् । 'नोपेयादिति न' इति प्रतिनिर्देशात् । एवञ्च ऋतुकालाधिकरणकस्वभार्याकर्मकमवधारणविषयो गमनं प्रेरणाविषय इति बोधः । तेन तस्य प्रत्यवायाभावरूपेष्टसाधनत्वलाभः । इष्टस्य प्रत्यवायाभावरूपत्वं तु—

"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पच्यते" इत्यादिवचनैकवाक्यतया बोध्यम् । तेन ऋतुकालाधिकरणकस्वभा-

योगमनाभावस्य प्रत्यवायसाधनत्वं लभ्यते ।

सकलसाधारणमवधारणत्वमखण्डोपाधिः तेनैव रूपेण शक्तिर्बोधश्चेति बोध्यम् ।

'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ अवधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसंख्यावति पञ्चपदस्य लक्षणा । अवधारणं चात्र स्वातिरिक्तसंख्याधिकरणासम्बन्धिसमभिव्याहृतप्रकारकज्ञानरूपम् । तेन 'अन्येऽभक्ष्याः' इति फलति । एवकारस्य तदर्थलक्षणाया वा फलं तु प्रापकप्रमाणबोधितस्य तदतिरिक्तविषयत्वाभावकल्पनामिति इष्टसिद्धिः ॥ ७३ ॥

( कुं० टी० ) *अस्मादेवेति। "अनियोगे"इति निषेधादेवेत्यर्थः । *तच्चेति । विशेष्यसङ्गतमित्यत्रान्वयः । *स्वातिरिक्तेति । पार्थेतरावृत्तित्वेन गृहीतो यः पदार्थो धनुर्धरत्वं तत्प्रकारकं पार्थविशेष्यकं ज्ञानम् । अयमेवान्ययोगव्यवच्छेद इति तार्किकाः । ज्ञानरूपमवधारणं पार्थे विशेषणमित्यन्वयः । *तस्य-एवकारस्य । *व्यावृत्तयेइति । प्राचुर्याद्यर्थसम्भावनानिवृत्तये नान्येन केनचिदित्यस्य प्रयोगाच्चेत्यर्थः । अयोगव्यवच्छेदमुदाहरति *शङ्ख इति । पाण्डुरत्वातिरिक्तरूपानाश्रयत्वेन गृहीतः शङ्खो ऽत्र प्रकारः । *हसत्येवेति । अत्र हासातिरिक्ता बुद्धिस्था या रोदनादिक्रिया तदभावो गम्यते । *नभवतीति नेति । किन्तु भवत्येवेत्यर्थः । अत्रात्यन्तायोगो व्यवच्छिद्यते । *अवच्छेदकावच्छेदेन-अवच्छेदकावच्छेदेन यो ऽर्थग्रहणाभावस्तदनधिकरणज्ञानमित्यर्थः । *ऋतावितिति । अत एव न तत्र गमनादिनिमित्तकब्रह्मच-

र्थस्य हानिः । ऋतुशब्देन रजोदर्शनावधिकः षोडशदिवसावच्छिन्नः कालविशेष उच्यते । तत्र तादृशदिवसन्वव्यापकीभूताभावप्रतियोगिनो गमनस्य ग्रहणादेकदिवसगमनेऽपि शास्त्रस्य चारितार्थ्यम् । *स्वाभावेति । गमनाभावाश्रयो भार्या । *पञ्चपञ्चेति । अवधारणविषयो यो बुद्धिस्थस्तद्वृत्तिर्या पञ्चत्वसंख्येत्यर्थः । *लक्षणेति । तेनावधारणलाभः । *एवकारस्येति । क्वचिदेवकारः प्रयुज्यते, क्वचित्तु तदर्थे लक्षणा क्रियते, तत्फलं त्विसर्थः । *प्रापकेति । प्रापकं प्रमाणं "पञ्चपञ्च–" इत्यादि शास्त्रम् । तेन बोधितस्य भक्षणस्यान्याविषयत्वमित्यर्थः ॥ ७३ ॥

( क० टी० ) अथैवकारार्थं निरूपयति *एवशब्द इति । यत्तु जीर्णनैयायिका –अत्यन्तायोगव्यवच्छेदो ऽयोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्चैवकारार्थः । तत्राद्य' अन्वयितावच्छेदकव्यापकत्वाभावविशिष्टो योऽभाव' प्रतियोगिनासम्बन्धेन तद्विशिष्टव्यवच्छेदः । अय च क्रियासङ्गैवस्थले, तथाविधबोधे तादृशानुपूर्वीज्ञानस्य हेतुत्वात् । तथाच नीलं सरोज भवत्येवेत्यादौ सरोजत्वव्यापकत्वाभावविशिष्टाभावव्यवच्छेदवन्नीलभवनाश्रयत्ववत्सरोजमित्यादिबोध । तादात्म्याभावव्यवच्छेदो द्वितीय । सच विशेषणसङ्गतैवस्थले, तद्बोधे तज्ज्ञानस्य हेतुत्वात् । तथाच शङ्ख पाण्डुर एवेत्यादौ पाण्डुरतादात्म्याभावव्यवच्छेदवान् शङ्ख इत्यादिबोध । अन्यतादात्म्यादिव्यवच्छेदो ऽन्त्य. । सच विशेष्यसङ्गतैवस्थले, तद्बोधे तज्ज्ञानस्य हेतुत्वात् । तथा च पार्थ एव धनुर्धर इत्यादौ पार्थान्यतादात्म्याभाववद्धनुर्धराभिन्न' पार्थ. इत्यादिबोध इति ।

तन्न । अक्षरमर्यादया ततस्तदर्थालाभात् ज्ञानमर्थं गृह्णात्येवेत्यादावयोगव्यवच्छेदमात्रप्रतीते । पचत्येवायमित्यादावन्ययोगव्यवच्छेदप्रतीतेश्च । आद्यविषये सर्वत्रात्यन्तायोगव्यवच्छेदाप्रतीतेः । सरोजत्वादे. प्रागुक्तरीत्याऽन्वयितावच्छेदकत्वाभावात् । चैत्रेणैव सदृश मुखमित्यादौ द्वितीयविषये ऽप्यन्ययोगव्यवच्छेदप्रतीत्या

तथा नियमस्य दुर्वचत्वात् । प्रागुक्तरीत्या ऽभावाभावस्यासत्त्वाच्च । यदि तु अयं सर्वोऽप्युत्सर्गो नतु सर्वथा नियम इति यथाऽनुभवं तात्पर्यतो ऽन्यथाऽपि बोधस्तत्र तत्तदानुपूर्वीज्ञानस्य हेतुत्वादिति न प्रागुक्तदोष इत्युच्यते तदाऽप्यवशिष्टोक्तदोषगणसत्त्वमेव । किञ्च विशिष्टशक्त्यनेकशक्तिकल्पनजं गौरवतरं दुष्परिहरमेव । तदेतत्सर्वमभिप्रेत्याह *अवधारणइति । प्रागुक्तविपर्येष्वित्यर्थः । सर्वत्र तथेति तथा तदुक्त्यसाङ्गत्यायाह *अस्मादेवेति । उक्तवार्त्तिकादेवेत्यर्थ । अन्यथा लक्ष्यासम्भवेन नदसङ्गति स्पष्टैव । आदिपदसङ्ग्राह्यमनुपदमेव स्फुटीभविष्यति । *सच–ज्ञानविशेषश्च । प्रागुक्तरीत्या तस्य विशेषणत्वावश्यकत्वादाह *द्योत्य इति । *समेति । तत्प्राग्वर्त्तिनि । सच नैकरूपइति प्रागुक्तक्रमवैपरीत्येन सर्वस्वरूपप्रतिपादनायादौ विशेष्यसङ्गते ऽभेदविषये आह *तच्चेति । अवधारणचत्यर्थ. । *स्प पार्थ. । *रामेति । पार्थसमभिव्याहृतधनुर्धररूपेत्यर्थ । ननु कथं प्रसिद्धबोधापलापोऽत आह *तदन्यइति । अत एव कविप्रयोगविरोधोऽपि त्वन्मते स्फुट. मम मते नेत्याह *कदाचिदिति । नन्वेवं तत्र पार्थ एव धनुर्धरो नान्य इत्यादौ च नान्येनेत्यादे पौनरुक्त्यापत्तिरुक्तरीत्या तल्लाभादत आह *आर्थ्येति । व्यञ्जनयेत्यर्थ. । शब्दमर्यादया तथैव प्रतीतेरिति भाव. । अभ्युपेत्येदं वस्तुतस्तदेव नेत्याह *लवणमेवेति । निपातानामनेकार्थत्वादिति भाव । इदमेव प्रागुक्तादिपदसङ्ग्राह्यम् । अत्रावधारणार्थकत्वं तु न, बाधात् । तात्पर्येण प्रयोगाच्च । एवमग्रेऽपि । *क्वेति । एवमुक्ते स्थलसङ्कीर्णत्वादिना नास्ति सम्भवस्तव भोजनस्येति प्रतीत. । *तस्य–एवस्य । तत्रैव भेदविषये आह *शङ्ख इति । स्वम्–पाण्डुरत्वम् । *समेति । पाण्डुरत्वसमभिव्याहृतशङ्खरूपपदार्थेत्यर्थ. । *शङ्ख इति । यतइत्यादि । असुब्वत इतिवद् *अनेकेति प्रयोग. । शङ्खाधिकरणकमवधारणविशेष्यं पाण्डुरत्वमिति बोध. । अथ द्वितीये आह *शङ्खइति । स्व पाण्डुररूपम् । *रूपानाश्रयसमेति । तदनाश्रयत्वेन गृहीतपाण्डुरसमभिव्याहृतशङ्खरूपपदार्थेत्यर्थ । *अवधारणप्रकारेति । बहुव्रीहि । शङ्खोऽनेकरूप इति ज्ञानवन्तं प्रत्येतत्प्रयोगात् । तृतीये आह *क्रियेति । स्व ह्रासः । तदन्या च प्रकर-

णादिवशाद्विशेषरूपैवेत्याह *बुद्धिस्थेति । तदनाश्रयत्वेन गृहीतक्रियासमभिव्याहृतचैत्ररूपपदार्थेत्यर्थः । चैत्राभिन्नकर्त्तृकावधारणविशेष्या हासक्रियेति बोध । तत्रैव विशेषादन्यदाह *नीलमिति । अत्र शुद्धस्य ग्रहणे विशेषणवैयर्थ्यादाह *नीलेति । सामानाधिकरण्येन तदभावानधिकरण यत् सरोज नीलभवनसमभिव्याहृत तत्प्रकारकेत्यर्थः । नीलाभिन्नसरोजाभिन्न कर्त्तृकमवधारणविशेष्य भवनमिति बोधः । तत्रैवतोऽपि विशेषादाह *ज्ञानमिति । परमते शीत एवेत्यादौ जलाद्याधिकरण कसत्ताकर्त्तृतावच्छेदकस्पर्शत्वावच्छेदेन शीतान्यतादात्म्यव्यवच्छेदवतोऽन्वयो वाच्यो व्युत्पत्तिवैचित्र्याद् अन्यथा यत्समभिव्याहृत एवस्तदन्वितान्ययोगव्यवच्छेदस्य तदन्वयिन्येव प्रतीतेः गन्धे पृथिव्यन्यावृत्तित्ववत्तत्र शीतान्यतादात्म्यव्यवच्छेदवान् स्पर्शो जलवृत्तिरित्यर्थापत्त्या शीतएव स्पर्शो द्रव्ये इत्यस्याप्यापत्तेरिति गौरवान्तर सूचयन् द्वितीये विशेषादाह *शीत एवेति । *ज्ञातेति । स्वाश्राविकेत्यादि । तदनधिकरणशीतस्पर्शसमाभिव्याहृतजलरूपपदार्थेत्यर्थ । जलाधिकरणकावधारणविषयशीताभिन्न स्पर्श इति बोध । परमते चैत्रेणैवेत्यादौ स्वेतरकारकान्वितक्रियात्वावच्छेदेन चैत्रान्यतादात्म्याभाववत्कर्तृकत्वप्रत्ययो व्युत्पत्तिवैचित्र्यादेति नोभयदृश्यमाने तथा प्रयोगइति सूचयन् कर्मप्रत्यये विशेषादाह *चैत्रेणैवेति । अन्यत्र समभिव्याहारादाह *सकलेति । बुद्धिस्थ यावदित्यर्थ । नान्येनेत्यर्थ । नान्येनेत्यादिप्रतिनिर्देशात् । अवधारणविषयचैत्रकर्तृकमेतत्कर्मक दर्शनमिति बोधः । परमते घटत्वमित्यादौ पृथिवीवृत्तिपदस्य पृथिव्यन्यतादात्म्याभाववद्वृत्ति परता एवस्तात्पर्यग्राहक. । समासे उपसर्जनस्य पृथिवीपदार्थस्यान्वयासम्भवात् । तथात्वे वा व्युत्पत्तिवैचित्र्यस्वीकार इति, तत् सूचयन् विशेषात् तत्रैवाह *घटत्वविशेष्यकज्ञानेति । तद्वृत्तित्वेन गृहीतपृथिवीवृत्तिसमभिव्याहृतघटत्वरूपपदार्थविशेष्यकेत्यर्थ. । घटत्वप्रकारकेत्यपपाठ' । पृथिवीवृत्तित्वस्य घटत्वेप्रसिद्धत्वात्तद्वृत्तित्व तत्रेतिज्ञानवन्त प्रति न प्रयोग, किन्तु तत्र अन्यवृत्तित्वज्ञानवन्त प्रत्येव प्रयोग इति पृथिव्यवृत्ति नेति न प्रतिनिर्देश इत्याह *नान्यवृत्तीति । *अवधारणेति । पृथिवीत्वसामा-

नाधिकरण्येनेत्यादिः । परमते ऋतावित्यत्र क्रियासङ्गतत्वे ऽन्ययोगव्यवच्छेदबोधकत्वेन ऋतुकालाधिकरणकभार्याकर्मकस्वकर्तृकगमनाभावाभावः प्रेरणाविषय इति बोधे एवार्थविशेष्यके प्रत्ययानामिति व्युत्पत्तिभङ्गः, प्रागुक्तदोषाक्रान्तत्व चेत्यत आह *ऋताविति । स्वपद स्पष्टार्थम् । स्वमुपगमनम् । तदनाश्रयत्वेन गृहीतकर्त्तृकारकेत्यर्थः । *स्वभार्यैति । स्वकर्त्तृकमित्यपि बोध्यम् । *तस्य-उपगमनस्य । ननु तस्य तत्त्वे एव किं मानमत आह *इष्टस्येति । सन्निधौ स्थिते इति शेष. । *तेन-अगमने दोषश्रवणेन । अत एकऋतौ गमने ऽपि ऋत्वन्तरे प्रत्यवायपरिहारार्थं प्रवृत्ति. । एव च ऋतुकालिकविशेषणतया भार्याकर्मकगमनाभावः कर्तृतासम्बन्धेन स्वनिष्ठ' प्रत्यवायसाधनमिति बोध्यम् । नन्वेवमवधारणानां नानात्वेन तद्वदनेकशक्तिकल्पनापत्तिरत्रापीत्यत आह *सकलेति । प्रागुक्तरीत्यैव तत्सिद्धिः । परमतेनाह *अखण्डोपेति । एवाघटितपरिसङ्ख्योदाहरणे ऽपि तत्रैवसमभिव्याहारे तथैव बोधात् एवमेवेत्याह *पञ्चपञ्चेति । इत्यादावपीत्यर्थः । अतिप्रसक्तत्वादितरत्वावच्छेदायाह *बुद्धिस्थेति । उभय पञ्चत्वविशेषणम् । तद्रूपसङ्ख्येत्यर्थः । स्व तादृशपञ्चत्वम् । तदसम्बन्धि यद् भक्ष्यत्वं तद्वान् यः पञ्चपञ्चनखसमभिव्याहृतभक्ष्यपदार्थस्तत्प्रकारकेत्यर्थः । नन्वितस्तेषामर्थतस्तत्त्वलाभेऽपि रागतः प्राप्तस्य न निवृत्तिरिति तत् स्यादेवेत्यनिष्टमेवात आह *एवेति । तत्प्रयोगे इदम् । तदभाव आह *लक्षणेति । प्रापकप्रमाण राग । *बोधितस्य-भक्षणस्य । *तदतिरिक्तेति । तादृशपञ्चपञ्चनखान्येत्यर्थः । अन्यथाऽदृष्टार्थमपूर्वविधौ तदकरणे प्रायश्चित्तापत्तिरनुक्तान्यभक्षणे तदुक्त्यसाङ्कर्यापत्तिश्चेति भावस्तदाह *इष्टेति ॥ ७३ ॥

यत्तु एवकारार्थो ऽन्ययोगव्यवच्छेदः । 'पृथिव्यामेव गन्धः' इत्यादौ पृथिव्यामित्यस्य एवकारार्थे ऽन्यत्वे गन्धे चान्वयः । पृथिव्यन्यावृत्तिः पृथिवीवृत्तिर्गन्धः इत्यादिक्रमेण बोधः । विभक्त्यर्थरहितस्यापि पृथिवीपदार्थादेरन्वयो व्युत्पत्तिवैचित्र्यादिति ।

तन्न। अनेकव्युत्पत्तिवैचित्र्यकल्पनाया अन्याय्यत्वात्। तादृशे ऽर्थे विभक्तेः साधुत्वमात्रार्थिकायाः शास्त्रेणानन्वाख्यानाच्च। विभक्तिं विना तन्त्रेणोच्चारणासम्भवाच्च। पृथिवीवृत्तित्वस्य मानान्तरेण लाभाच्च।

अत एव एवकारसमभिव्याहृते न विधेयतायां तात्पर्यं किन्त्वार्थ्यामन्यनिवृत्तावेव इति तान्त्रिकाः।

एवञ्च एवकारसमभिव्याहारे ऽपि आर्थ्यैव परिसंख्या, सा चोपात्तातिरिक्ते समभिव्याहृतपदार्थाभावप्रत्ययरूपा। यथा 'पार्थ एव धनुर्धरः' इत्यादौ 'नान्यो धनुर्धरः' इति। सच नैवकारघटितवाक्यार्थः, किन्तु आर्थ एव। उक्तरीतेः।

शाब्दी तु 'त्वन्मुखं त्वन्मुखेनैव' इत्यादौ। "पञ्च पञ्चनखा भक्ष्याः"इत्यादावप्युक्तरीत्या आर्थ्यैव परिसंख्या। अत एव "युष्मद्युपपदे" इत्यादौ "नियमार्थोऽयमारम्भः। युष्मदि मध्यम एव युष्मद्येव मध्यमः" इति चेति भाष्ये उक्तम्। तेन हि नियमशास्त्राणामेवकाराभावे ऽपि तदर्थान्तर्भावेण बोधकत्वं सूचितम्।

यत्तु पञ्चपदस्य पञ्चातिरिक्ते लक्षणा भक्ष्यपदस्य भक्ष्यत्वाभाववति, तेन पञ्चातिरिक्ता भक्ष्यत्वाभाववन्त इति बोध इति। तन्न।

पदद्वये लक्षणापेक्षया उक्तप्रकारस्यैव न्याय्यत्वात्।

किञ्चैवं शास्त्रप्राप्तस्य शास्त्रीयनियमे विकल्पवा-

रणाय सामान्यविशेषन्यायेन विधेस्तद्विषयत्वाभावकल्पनमित्यतिगौरवम् ।

'किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः' इत्यार्थपरिसङ्ख्योदाहरणमिति प्रकाशादिग्रन्थासङ्गतेश्च । त्वद्रीत्या हि द्युसरित्सविधातिरिक्तमनासेव्यमिति बोधेन तस्याः शाब्दत्वात् । अत एव शाब्दपरिसंख्यायां "किं भूषणं सुदृढमत्र यशो न रत्नम्" इत्युदाहृतम् ।

भाष्यकारोऽपि पस्पशायामाह "किं शब्दापशब्दयोरुभयोरुपदेशः कार्यः उतान्यतरोपदेशः? अन्यतरोपदेशेन कृतं स्यात् । तद्यथा भक्ष्यानियमेनाभक्ष्यप्रतिषेधो गम्यते । पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यते एतत् अतोऽन्ये न भक्ष्या इति । अभक्ष्यप्रतिषेधेन भक्ष्यानियमः । तद्यथा अभक्ष्यो ग्राम्यकुक्कुट इत्युक्ते गम्यते एतत् आरण्यो भक्ष्य इति । एवमिहापि गौरित्युपादिष्टे गम्यते एतत् गाव्यादयः अपशब्दा इति । गाव्यादिषु चोपदिष्टेषु गम्यते एतत् गौरित्ययं शब्द इति" इति ।

तत्र सुशब्दोपदेशः साधुत्वबोधनद्वारा प्रयोगविध्यर्थः । अपशब्दोपदेशस्तत्प्रतिषेधार्थः । अत्र "गम्यते" इत्युक्त्या तस्य तज्जन्यशाब्दबोधाविषयत्वं स्पष्टमेवोक्तम् ।

किंच लक्षणावादिमते दृष्टान्तदार्ष्टान्तिकयोर्महद्वैषम्यम् । नियमेनेत्यस्य चोपदेशेनेत्येवार्थः संदर्भबलाद् गम्यते । शब्दान्तरेणानुपदेशात् अर्थतो लाभा-

च अयं न मुख्य उपदेश इति नियमपदप्रयोगः । ईदृश इतरनिवृत्तिफलक उपदेश एव च नियमप- देनोच्यते इति प्रामाणिकाः ॥ ७४ ॥

( कुं० टी० ) *अन्ययोगव्यवच्छेद इति । शङ्खः पाण्डुर एवेत्यत्र पाण्डुरान्ययोगव्यवच्छेद इत्यादि । *रहितस्यापीति । पृथिव्यन्येत्यत्र सप्तम्यर्थाप्रतीतेः । *मानान्तरेण—इतरवृत्तित्वनिषेधद्वारकेण । *परिसंख्यानिवृत्तिः । *सच—अन्ययोगव्यवच्छेदश्च । *नैवकारेति । एवकारघटितवाक्यप्रयोगगम्यो नेत्यर्थः । *त्वन्मुखमिति । अत्र 'नान्येन' इतिशब्दप्रयोगात् शाब्दी । *पञ्चेति । पञ्चनखाः—शल्यकशशश्वाविद्गोधाखड्गकच्छपा भक्ष्या इत्यर्थः । शल्यको वराहविशेषः, यस्य बाणाकाराणि लोमानि । श्वावित् शल्यः, यस्य चर्मणा तनुत्राण क्रियते । *उक्तप्रकारस्यैवेति । पञ्चपदस्य लक्षणेत्युक्तस्यैवेत्यर्थः । *किञ्चैवमिति । शास्त्रस्य साक्षान्निषेधबोधकत्वे इत्यर्थः । *शास्त्रप्राप्तस्येति । "शेषो घ्यसखि" इत्यनेन प्राप्ताया घिसंज्ञायाः "पतिः समासे" इत्यनेन निषेध इत्यर्थः । *अतिगौरवमिति । तस्मात् प्राप्ताया एव घिसंज्ञायास्तत्र पुनर्विधानेन अर्थादितरनिवृत्तिः सिद्ध्यतीति भावः । *तस्याः-परिसङ्ख्यायाः । *अन्यतरोपदेशइति । पस्पशायां स्पष्टम् । तत्स्वीकरोति *कृतं स्यादिति । इष्टं सिद्धं भवेदित्यर्थः । यथा अश्वरशनायां गर्दभरशनायां च मन्त्रपाठः प्राप्तः अश्वाभिधानीमित्युक्तेर्गर्दभरशनातो निवर्तते तद्वत् । *दृष्टान्तदार्ष्टान्तिकयोः—भाष्यकारोक्तयोः । संदर्भबलमेवाह *शब्दान्तरेणेति । नियमस्य विधानसापेक्षत्वादिति भावः । नन्वेव-

मुपदेशशब्द एव कुतो न प्रयुक्त इत्यत आह *अर्थत इति । इतरनिवृत्तौ सत्यां तस्यैव लाभादिति भावः । ननु इतरनिवृत्त्यभावे कथं भाष्यकृतोक्तं भक्ष्यनियमेनेति अत आह *नियमेनेत्यस्यचेति ॥ ७४ ॥

(क०टी०) नव्यनैयायिकोक्तिं खण्डयति *यत्त्विति । सर्वत्रेति शेषः । *व्यवच्छेदः-स एव । तेन तदुभयव्यावृत्तिरिति नानेकशक्तिकल्पन तद्वत् । अन्ययोगश्चान्यसम्बन्धमात्रम् । एव च नील सरोजमित्यादौ आख्यातस्याश्रये लक्षणया नीलभवनवदन्यत्वव्यवच्छेदः सरोजत्व सामानाधिकरण्येन प्रतीयते, शङ्ख पाण्डुर एवेत्यादौ शङ्खत्वावच्छेदेन पाण्डुरान्यत्वव्यवच्छेदबोधः । पार्थ एवेत्यादौ धनुर्धरत्वावच्छेदेन पार्थान्यत्वव्यवच्छेदबोध । ऋतावित्यत्र तादृशगमनवदन्यत्व व्यवच्छेदबोध. । पृथिव्यामित्यादौ पृथिव्यन्यवृत्तित्वव्यवच्छेदबोधो गन्धादाविति तदाकूतम् । तदाह *पृथिव्यामिति । *गन्धेचेति । अत एव पृथिव्यामेवाकाश इति न, तस्यावृत्तित्वात् । यस्पदसमभिव्याहारेण यः सम्बन्ध. प्रतीयते एवसमभिव्याहारेपि तस्यैवान्ययोगस्य व्यवच्छेदधीरिति न दोष. । ननु सप्तम्यर्थविशेषणतयोपस्थितपृथिव्या. कथमेवार्थान्यत्वेऽन्वयः एकविशेषणत्वेनोपस्थितस्यान्यत्रान्वयस्याव्युत्पन्नत्वादत आह *विभक्तीति । एवस्थले तद्व्युत्पत्तिसङ्कोच इति भाव. । प्राचीनमते तु नायम् एवस्य द्योतकत्वेन पृथिव्यन्यतादात्म्याभाववतो लक्षणया पृथिवीपदार्थत्वेन सप्तम्या. साधुत्वार्थकत्वेन पृथिव्यन्यतादात्म्याभाववद्वृत्तिर्गन्ध इति बोधेनैवोपपत्ते. । एतदर्थभियाऽस्योल्लेखः एवार्थबलादेव । समभिव्याहृतपदार्थतावच्छेदकावच्छेदेन तद्वृत्तित्वस्य बोधान्न पृथिव्यामेव रूपमिति प्रयोगः । पृथिव्यामेव घटत्व घटत्व पृथिवीवृत्त्येवेति तु भवत्येवोक्तरीत्येति बोध्यम् । प्राचीनमतसाधारणं दोषमाह *अनेकेति । *तत्र-प्राचीनमते । शीत एवेत्यादौ यथा तत् तथोक्तम् । पार्थ एवेत्यादौ धनुर्धराभिन्न पार्थान्यतादात्म्याभाववानिति बोधेन नव्यमतोक्तव्युत्पत्तिवैचित्र्यम् । शङ्खे पाण्डुरत्वमेवेत्यादावप्येवं पाण्डुरत्वान्यतादात्म्याभाववच्छङ्ख-

वृत्तीति बोधात् । शङ्ख पाण्डुर एवेत्यादावपि शङ्खत्वावच्छेदेन पाण्डुरतादात्म्याभाववान् शङ्ख इति बोधेन, एव नील सरोज भवत्ये वेत्यादौ तु उक्त एव बोध इति तत् स्फुटमेव । एवमुभयमतेऽपि अन्ययोगव्यवच्छेदादौ अन्यादिषु भिन्नशक्तावधिकगौरवम्, विशिष्टशक्तावप्येवम् । घटादन्य इत्यादाविवैकदेशान्वयो व्युत्पत्तिवैचित्र्यादेकपदजोपस्थितिविषयाणामन्वयो ऽपि मिथो व्युत्पत्तिवैचित्र्यादेवेति बोध्यम् । एतेन व्यवच्छेदे शक्तिरन्यत्र लक्षणेत्यपि नव्यनैयायिकोक्तमपास्तम् । साधारणमेव दोषान्तरमाह *तादृशइति । ननु घटान्पश्येत्यादिवदत्र प्रातिपदिकतन्त्रेण निर्वाहोऽत आह *विभक्तिमिति । तत्र सहविवक्षाविषयत्वेन तत्सत्त्वेऽप्यत्रासहविवक्षाविषयत्वेन न तथेति भाव । एतेनावृत्तिप्रयुक्त गौरवम प्यत्र मते सूचितम् । अभ्युपेत्येदम् । वस्तुतो ऽफलत्वान्नैव सेत्याह *पृथिवीति । गन्धे इत्यादिः । मानान्तर प्रत्यक्षम् । तथाचावधारणविषयपृथिवीवृत्तित्ववान्गन्ध इत्येवोक्तरीत्या बोध । अवधारण च पृथिव्यन्यावृत्तित्वेन गृहीतसमभिव्याहृतगन्धविशेष्यकज्ञानरूपं तत् । एतद्दोषचतुष्टयेन पार्थ एवेत्यादौ पार्थो धनुर्धरः पार्थान्यो न धनुर्धर इत्यादिर्बोध इत्यप्यपास्तम् । *अत एव—तत्र तस्य ततो लब्धत्वादेव । उक्तरीत्या शाब्दत्वासम्भवादाह *आर्थ्येवेति । *एव च–तस्यार्थत्वे च । अपिना तदसमभिव्याहृतपञ्चपञ्चेत्यस्य समुच्चय' । तत्स्वरूपमाह *साचेति । परिसङ्ख्याचेत्यर्थ' । तस्यास्तत्त्वमेवोपपादयति *सचेति । निषेधइत्यर्थ. । नन्वेव सिद्धान्ते शाब्दुच्छेदापत्तिः । परमते तु नाय दोषः, एवासत्त्वासत्त्वाभ्यां तद्विभागसम्भवादत आह *शाब्दीत्विति । *इत्यादौ–इत्यादावेव । आदिना कि भूषणमित्यादि॰ । अपिसमुच्चेयमाह *पञ्चेति । *अतिरिक्तेति । प्राप्तानुवादवैयर्थ्येन तस्य तत्र लक्षणयेत्यर्थः । नन्वेवाभावे तदर्थघटितलक्षणायामेव न मानमिति कथ तथा परिसङ्ख्या ऽत आह *अत एवेति । प्रायेणात्र शास्त्रे नियमपदेन परिसङ्ख्यैवोच्यते इति भावः । *तदभावेति । तदभावेऽपि तथार्थाङ्गीकारेणेत्यर्थ. । तदेवाह *तेनहीति । भाष्यव्याख्यानेनेत्यर्थः । मीमांसकधर्मशास्त्रकारादयस्तु इय शाब्दी परिसङ्ख्येत्याहुस्तन्मत खण्डयति *यत्त्विति । "युष्मद्युपपदे"इत्यादौ दोषमाह *किञ्चेति । यत-

इति शेष । *एवम्—तद्वद्‌शाब्दीत्वस्य तत्रार्थापत्तौ । नियमशास्त्रस्य निषेधपरत्वादाह *शास्त्रीयेति । *किमेति । किमेकान्ते ध्येय चरणयुगल कौस्तुभभृतः। किमाराध्यम् पुण्य किमभिलषणीयश्च करुणा यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवतीति एतच्छेष । *आर्थेति । प्रश्नपूर्वकेत्यादि. । एवमग्रे ऽपि । आदिना प्रदीपादि । *अत एव—तस्या आर्थत्वादेव । *किम्भूषणमिति ।

किं कार्यमार्यचरित सुकृत न दोष. । कि चक्षुरप्रतिहत धिषणा न नेत्र जानाति कस्त्वदपर' सदसद्विवेकमिति एतच्छेषः । *उदाहृतमिति । प्रकाशकारादिभिरिति भावः । तत्र भाष्यविरोधमपि सूचयन्नाह *भाष्येति । *कृतम्—इष्टम । *इतीतीत्यत्राहेत्यस्यान्वय. । *तत्र—तयोर्मध्ये । *तादिति । तत्प्रयोगेत्यर्थः । यथा भाष्यत प्रकृतलाभस्तदाह *अत्रेति । भाष्ये इत्यर्थ. । अय भाव - शब्दस्य वृत्तित्रय अर्थस्य तु व्यञ्जकत्वमेवेति प्रकाशादौ स्पष्टम् । एव च यत्र भाष्ये शब्दप्रस्तावस्तत्र शक्यत्वमेवाभिमतम्, इहत्वर्थप्रस्तावाद्व्यञ्जकत्वमेव । एव च गम्यते इत्येतदभावे ऽपि तल्लाभे तदुक्त्या स्पष्ट तत्प्रतीतिः। एतेन विप्रतिषेधसूत्रस्थभाष्यं विरुद्धमित्यपास्तमिति । दोषान्तरमाह *किञ्चेति । *लक्षणेति । पदद्वयेत्यादिः । एकार्थतो ऽर्थान्तरप्रतीतेर्दार्ष्टान्तिकप्रतिपाद्यायास्तथा सति दृष्टान्ततोऽलाभादित्यर्थः । स्वमते साम्यमाह *नियमेनेति । दार्ष्टान्तिके तथोक्तेराह *सन्दर्भेति । उपदेश. आद्योच्चारणमित्याशयेनाह *शब्दान्तरेणेति । नन्वेव तथैव कुतो नोक्तमत आह *अर्थत इति । न केवलमत्रैवेत्थ किन्तु तद्विषये सर्वत्रैवेत्याह *ईदृशइति । शब्दतोऽप्राप्तिरर्थत. प्राप्तिर्यस्य तद्बोधक इत्यर्थ. । लोके इति शेषः ॥ ७४ ॥

परंतु "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र लिङ्गाद्गर्दभरशनायामपि प्राप्तस्य मन्त्रस्यापूर्वविधिद्वारा परिसङ्ख्या ।

तदुक्तं तन्त्रवार्त्तिके,

अपूर्वविधिरेवायमतो मन्त्रश्च निश्चितः ।

परिसंख्याफलेनोक्ता' इति,

आलङ्कारिका अपि परिसङ्ख्याप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादन प्रयोजनान्तराभावात् स्वतुल्यान्यव्यवच्छेदं गमयन्तीति ।

भागवतेऽपि—

लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ।

व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" ॥ इति ।

नित्या रागतः प्राप्ताः । जन्तोः प्राणिमात्रस्य । अतस्तत्र चोदनाविधिर्नास्ति ।

नन्वेवम् "ऋतौ भार्यामुपेयात्", "हुतशेषं भक्षयेत्" "सौत्रामण्यां सुराग्रहान्गृह्णाति" इत्येतेषां वैयर्थ्यम् । भार्यां विवाहितामित्यर्थः । तत्राह–व्यवस्थितिरिति । तेषु पुनः प्रापणमित्यर्थः । रागतो नित्यप्राप्तत्वात् नैते नियमविधयः, पाक्षिक्यां हि प्राप्तौ नियमो भवति, किन्तु प्राप्तस्याप्यर्थस्य पुनःप्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्य निवृत्तिः फलति तदाह–आसुनिवृत्तिरिति ।

भाष्येऽपि नियमपदेनाभ्यनुज्ञा "ऋतुस्नातां तु यो भार्याम्" इति दोषश्रवणं तु मनसि कामे सत्यपि तस्यां द्वेषादिनाऽनुपगमे बोध्यम् ।

एवं च "ऋतौ भार्याम्" इत्यस्य ऋतावेव, तत्र भार्यामेव, तत्र तामुपेयादेव, इत्यर्थत्रये तात्पर्यम् ।

अत एव गृहस्थस्यानृतौ अनुपगमे ब्रह्मचर्यमुक्तम् । अविवाहितागमने, ऋतौ भार्यागमनाभावे प्रायश्चित्तं प्रोक्तं स्मृतिषु ।

तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ।

इत्यस्य शाब्दी आर्थी चेत्यर्थः ।

"इजादेः सनुमः" इतिसूत्रे कैयटोऽप्याह—नियमे प्राप्तबाधः सिद्धस्य पुनरुपादानात्, अनुवाददोषश्चेति ।

"यस्य हलः" इति सूत्रेऽपि नियमे श्रुतार्थत्यागे-नाश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानु-वाददोषश्चेति ।

"अनुपराभ्यां कृञः" इति सूत्रे भाष्ये ऽपि "प्रतिषिध्यते तत्र परस्मैपदम् । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" आत्मनेपदं भवति" इत्युक्तम्, तेन हि विधेरेव प्रतिषेध आर्थं फलमिति शब्दमप्रोक्तम् ।

एवकारोऽपि स्वसामर्थ्ये स्फुटं तदर्थद्योतक एव, नतु तत्समभिव्याहारेऽपि शाब्दबोधे तद्भानम् । तत्समभिव्याहारेण मनसा बुध्यमानत्वमपि द्योतकत्वम् । एवकारासमभिव्याहारे ऽपि अनुवादबलादेव तदर्थ-लाभः ।

शाब्दपरिसङ्ख्या तु—

त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केनचित् ।

किम्भूषणं सुदृढमत्र यशो न रत्नम्,

इत्यादिष्वेव । "युष्मदि मध्यम एव युष्मद्येव मध्यमः" इति भाष्येणैवकारसमभिव्याहारासम-भिव्याहारयोस्तुल्यार्थत्वमेव सूचितमित्याहुः ।

पक्षद्वये ऽपि स्वार्थहानिपरार्थकल्पनाप्राप्त-

बाधरूपदोषत्रयं तु यथाश्रुते प्रतीयमाने स्वार्थे तात्पर्याभावात्, तात्पर्यतस्त्यागोऽन्यार्थे तात्पर्याङ्गीकारेण तात्पर्यतः परार्थकल्पना प्राप्तबाधश्चेति सूपपादम् ।

ननु "व्रीहीनवहन्ति" इत्यादौ पक्षप्राप्तस्य नियमे अवहननेनैव व्रीहीन् संस्कुर्यात् न नखविदलनादिनेति प्रतीतेस्तत्रापि त्रैदोष्यं प्राप्तमिति परिसङ्ख्यायाः तस्य लघुत्वव्यवहारानुपपत्तिरिति चेन्न ।

पक्षे स्वरसत एव तस्याप्राप्त्या क्लृप्तबाधकल्पनम्। परिसङ्ख्यायां तु नित्यप्राप्तस्याक्लृप्तबाधस्यैव बाधकल्पनामिति ततः परिसङ्ख्यायाः गुरुत्वात् । क्लृप्तप्राप्तिकस्यैव च प्राप्तिबोधनेनापूर्वविधेरपि नियमस्य लघुत्वम् । अस्मच्छास्त्रे नियमस्तु आत्मनेपदविधायके मध्यमादिविधायके च प्रकृत्युपपदनियमरूपः । तद्विषये हि प्रत्ययानां पाक्षिकी प्राप्तिः ।

अत एव "युष्मदि–" इतिसूत्रे उपपदनियमं प्रकृत्य समे देशे यजेतेतिवत् पाक्षिक्यां प्राप्तौ नियम इति कैयटः ।

नच तत्सूत्रे भाष्योक्तप्रत्ययनियमानुपपत्तिः प्रत्ययनियमस्य परिसङ्ख्यात्वेन गुरुत्वादिति वाच्यम् ।

एतदनपेक्ष्येतरत्फलमस्ति नवेत्येतावन्मात्रेण प्राप्तबाधसत्त्वेन द्वयोः समतामाश्रित्य भाष्ये विचारसत्त्वेनादोषात् ।

एवञ्च "पञ्च पञ्चनखाः" इत्यादेः, "पतिः समास एव" इत्यादेश्च विधिमुखेनैव प्रवृत्तिः । अव-

*निषेधेनेति । विधानस्य फलमार्थः प्रतिषेध एवेत्यर्थः । *सत्त्वे–एवकारसत्त्वे । *तद्भानम्–इतरनिवृत्तिभानम् । ननु इतरनिवृत्तेरभाने द्योत्यत्वं कथमत आह *तत्समभिव्याहारे–तत्समभिव्याहारे सति मानसबोधोदयादेव च द्योतकत्वमित्यर्थः ।

ननु प्रथमकल्पे परेत्वित्यादिकल्पे च परिसंख्याया अर्थलभ्यत्वाद्दोषत्रयप्रवादासङ्गतिरत आह *दोषत्रयंत्वितीति । सूपपादमित्यत्रान्वयः । *तात्पर्याभावादिति । स्वार्थे तात्पर्यं नास्तीत्येतावतैव स्वार्थत्याग इत्यर्थः । *पक्षोऽस्वरसत एवेति । अप्राप्तपक्षे स्वत एव नखविदलनमप्राप्तम् । परिसंख्यायां तु [illegible] प्राप्तस्यैव बाधः कल्प्यते इति भेदः । अदन्तः [illegible] बहुव्रीहिः । *[illegible]स्येति । युष्मदुप[illegible] अनुज्ञात[illegible]मित्याकारकस्येत्यर्थः । *[illegible]नपेक्ष्य—पुरुषमनपेक्ष्य ।

इति श्रीभट्टाचार्यकृष्णमित्रकृतायां कुञ्चिकायाम् धात्वर्थनिपातार्थनिर्णयः ॥ ७८ ॥

---

( क० टी० ) स्वोक्तलक्षणाविनोतिलाघवात् सिद्धान्ततत्त्वमाह *परेत्विति । *लिङ्गात्–[illegible]रूपात् । शब्दान्तरदप्राप्तेराह *अपूर्वेति । तल्लक्षणे तथैव विवक्षितमिति भावः । *आदत्ते इति । लेट् । अनेन मन्त्रेण तामादद्यादित्यर्थः । *निश्चित–निश्चितार्थबोधकः । एवं भट्टसम्मतिमुक्त्वा मम्मटादिसम्मतिमप्याह *आलङ्कारिका इति । आहुरिति शेषः । व्यवायः सुन्दरीगमनम् । *मद्यसेवेति । तथाच तैत्तिरीयब्राह्मणम्—"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं यदि ब्राह्मणं न विन्देत वल्मीकवपायामवनमयेत् सा तत्र प्रायश्चित्तिः" इति । ब्राह्मणो

ह्याहुत्या उच्छेषणस्य पाता । अकरणे प्रत्यवायाभावरूपनित्यत्वाभावादाह *रागत इति । तथोक्तिस्वारस्यादाह *प्राणीति । अन्यथा तिरश्चां विधिनिषेधाविषयत्वात् तत्र प्रवृत्तिर्न स्यादिति भाव । तदाह *अत इति । ह्यर्थोऽयम् । यौगिकव्यवच्छेदायाह *विवाहेति । *तेषु-व्यवायामिषमद्येषु । विवाहादिहेतुना विशेषेण शब्दतः अवस्थितिः प्रापणमिति शब्दार्थस्तदाह *तेष्विति । व्यवस्था नियम इति श्रीधरस्वाम्युक्तं खण्डयति *रागत इति *फलति । फलिततां सूचयति *आसु—तेषा सेवासु । नन्वत्र पक्षे न तादृशोपदेश इति भाष्यविरोधो ऽत आह *भाष्येऽपीति । नन्वेव दोषश्रवणमनर्थक विधिवशादेवाकरणे प्रत्यवायलाभात्, अत आह *ऋतुस्नातामिति । *एव च-प्राप्तस्य पुन प्रापणेनेतरनिवृत्तौच । *अ एव-विनिगमनाविरहेण सर्वत्र तात्पर्यादेव । क्रमेणाद्ये आह *गृहस्थेति । द्वितीये आह *अविवाहितेति । तृतीये आह *ऋताविति । *चोभाभ्याम्—उक्ताभ्यां । *स्मृतिष्वित्यस्योभयत्रान्वयात्समुच्चय । एतेन ऋतावित्यत्र नियम एव युक्तो न परिसख्येति न्यायविदां भारद्वाजस्वरूपविज्ञानेश्वरादीनां चोक्तिः परास्तेति स्पष्ट मत्कृतमिताक्षराव्याख्याया लक्ष्म्याख्यायाम् । नन्वेव मीमांसकोक्तशाब्दतल्लक्षणानाक्रान्तत्वात्कथमस्यास्तत्त्वमत आह *तत्र चेति । उक्तलक्षणमिद न तस्या एवेति भाव. । अत्र कैयटसमतिमप्याह *इजादेरिति । इतरनिवृत्तिफलकसाम्यादत्र शास्त्रे परिसख्याया अपि नियमपदेन व्यवहारादाह *नियमेति । कैयटान्तरमाह *यस्येति । कयट आहेत्यस्यानुषङ्ग । भाष्यसमतिमप्याह *अनुपरेति । *तत्-तत । * कर्त्रभिप्राये क्रियाफले-हियत. इति शेष । द्वयोरभेदात्तया एवमेवासमभिव्याहारे तत्त्वमुपपाद्य तत्समभिव्याहारेऽपि प्रागुक्तभाष्यात् तथैवेत्याह *एवकारोपीति । *तदर्थेति । ततः फलितान्तरनिवृत्तीत्यर्थ । एवव्यवच्छेद्यमेवाह *नत्विति । अपिस्तदभावसमुच्चये । नन्वेव प्रागुक्तत्रिविधद्योतकत्वासम्भवात्कथ तथोक्तिरत आह *तदिति । एवेत्यर्थः । *मानत्वमिति । द्योतकत्वमिति पाठ । तस्यार्थस्य यतस्तथाऽत एव तत् द्योतकत्वमित्यर्थ. । एवमन्यदप्यूह्यमित्यस्यैक लक्ष्यमुक्त द्वितीयमिदमिति भावः । नन्वेव तदभावे तत्प्रतीतिर्न स्यादत आह *एवेति ।

अत एव स्फुटमिति तत्रोक्तम् । नन्वेव शाब्दुच्छेदापत्तिरत प्रागुक्तमेवाह *शाब्देति । अत्र बीज प्रागुक्तमेवाह *युष्मदीति । नहिस्विनमिति पाठ । ननु परिसख्यायां दोषत्रयमिति निर्विवाद तत्राद्यदोषौ पदनिष्ठौ अन्त्यो ऽर्थनिष्ठ । तच्च पदद्वयलक्षणावादिमते एव सम्भवति नात्रेतीद पक्षद्वयमयुक्तमेवात आह *पक्षद्वयेऽपीति । नियमोदाहरण प्रतिपादयन्नाह *नन्विति । *प्रतीतेरिति । एवसमभिव्याहारे ततस्तथैव बोधात् । आदिना-पादमर्दनादि । *स्वरसत इति । स्वभावत एवेत्यर्थ । *क्लृप्तबाधेति । बहुव्रीहि । एवमग्रेऽपि । इदमेवाभिप्रेत्य न्यायविदादिभिस्तत्र नियम एवोक्त इति बोध्यम् । ननु अथ नखविदलनाद्यसम्भवे ऽपूर्वविधिरेवास्तामिति कथ नियामकत्वमत आह *क्लृप्तेति । "व्रीहीनवहन्ति" इत्यादाविति शेष । यद्यप्येतत्क्लृप्तलाघवे ऽपि दोषत्रयकल्पनजगौरवमस्त्येव तथाऽप्यदृष्टानुरोधेन तत्र तथैवेति भाव । अत्र शास्त्रे तु तद्गौरवादेव विधिनियमसम्भवे विधिरेव ज्यायानिति सिद्धान्त इति तद्विरोध इति बोध्यम् । तदेतद् ध्वनयन्नाह *अस्मादिति । यथाक्रममाह *प्रवृत्त्युपेति । *अत एव-इदमभिप्रेत्यैव । *समेइति । "दर्शपूर्णमासाभ्याम्" इतिवाक्यविहितयागस्य देश विना दुष्करत्वेनार्थाद्देशप्राप्तावपि समविषमयोर्युगपद् दुर्ग्रहत्वादिति भावः । *प्रत्ययेति । 'युष्मद्येव मध्यम' इत्यादीत्यर्थ । *एतदिति । एतेन विधिनियम इत्यस्याप्युक्तरीत्या गतिरुक्तप्रायेति बोध्यम् । उपसहरन्नाह *एव चेति । उक्तपक्षद्वयस्य युक्तत्वे चेत्यर्थ । एतच्छास्त्रीयपरिसख्योदाहरणान्तरमाह *पतिरिति । आद्यपक्षेणाह *अवधारणेति । द्वितीयपक्षेणाह *पुनरिति । अर्थत प्राप्त्याशयेनेदम् । सामान्यप्रापकप्रमाण यथायथ राग शास्त्र च । द्वितीये आह *नान्यत्रेति । अत एव वृद्धा नियमशास्त्राणां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रसकोचकता चेति । एतेन तेषां निषेधमुखेनापि प्रवृत्तिरिति प्राचोक्तमपास्तम् । पतिरित्यत्रैव विपरीतसकोचवारणायापि सः । तस्य गतिस्तूक्तैव ।

ननु पञ्चेत्यत्र शशादिषु श्वादिषु च भक्षणस्य पक्षेण यौगपद्येन च प्राप्तेर्नियमपरिसख्ययोर्मध्ये आद्ये शशाद्यभक्षणे दोषप्रसङ्गाच्छ्वादिभक्षणे च दोषाप्रसङ्गेन प्रायश्चित्तस्मृतिविरोधाच्च, परिसख्यायां च द्वितीयदोषाभावे ऽपि आद्यदोषः सिद्धान्तमते तदव-

स्थ इति चेन्न। नियमपक्षे तत्र तात्पर्यमिति तथा, अत्र तु न तत्र तात्पर्यमिति भेदात् ।

अन्ययोगव्यवच्छेदाद्येवकारार्थ इत्यस्यापि स एवकारोपादानस्य स्फुट फलमित्येवार्थ इति न कोऽपि दोष इति बोध्यम्। तदाह *इत्यन्यत्रेति । गुरुमञ्जूषादावित्यर्थः ।

इति धात्वर्थनिपातार्थनिर्णयः ।



इति मञ्जूषा-कुञ्चिका-कलासु द्वितीय प्रकरण समाप्तम् ।

# सूचीपत्रम्

| | | रु आ पा |
|---|---|---|
| १ | शुक्लयजुर्वेद संहिता मुलम् | २–०—० |
| २ | " " पदपाठ स्थुलाक्षर | ३–०—० |
| ३ | " " मध्यमाक्षर | २–०—० |
| ४ | " उव्वटमहीधरभास्य सहित ( भाग १—२—३—४ ) | ४—०–० |
| ५ | कात्यायनश्रौतसुत्र सभास्य सम्पूर्ण | ३०–०–० |
| ६ | शतपथब्राह्मण काण्ड १ सभास्य | १५–०–० |
| ७ | " काण्व ७ सभास्य | ५—०–० |
| ८ | पारस्करगृहसुत्र ४ भास्य सहित | २५–०–० |
| ९ | " हरिहरभास्य सहित | १–४—० |
| १० | शुक्लयजुः प्रातिसाख्य सपूर्ण सभास्य | ६–०—० |
| ११ | शुक्लयजु सर्वानुक्रम् सभास्य सपूर्ण | ४–०—० |
| १२ | मन्त्रार्थदीपीका | २–०—० |
| १३ | शुक्लयजु वेंदकाण्वसहीता सायणाचार्य वीरचित भास्य सहित २० अध्यायपर्यन्त | ६–०—० |
| १४ | रीगवेद सहीता सभास्य | ९०–०–० |
| १५ | अथर्ववेदसहीता सभास्य | ४०–०–० |
| १६ | सामवेद सहीता सभास्य | १०–०–० |
| १७ | तैत्तिरिय सहिता सभास्य | ४८ १० ० |
| १८ | गोभिलगृहसुत्रसटीक | २—८–० |
| १९ | तैत्तिरिय यारण्डक सभास्य | ९—१–० |
| २० | ऐतरेय थारण्डक सभास्य | ३—०–० |
| २१ | ऐतरेय ब्राह्मण सभास्य | १० १० ० |
| २२ | तैत्तीरीय ब्राह्मण सभास्य | ४—८–० |
| २३ | दशोपनीषद सभास्य | २३–१–० |
| २४ | तैत्तीरीयोपनीषदभास्यवार्तीक सटीक | २—२–० |

# अथ मंजूषायां तिङर्थनिरूपणम्।



धातुप्रकृतिकतिङां कर्तृकर्मरूप आश्रयोऽर्थः। तत्र कर्त्तरि व्यापाराश्रयः। कर्मणि फलाश्रयः। धात्वर्थमात्रानुवादकस्तु भावे तिङ्। "लः कर्मणि च भावे चाकर्मकेभ्यः" इतिसूत्रात्। चेन तत्र कर्त्तुरनुकर्षः। आश्रयत्वं चाखण्डं शक्यतावच्छेदकम्। तस्याश्रयनिरूपकसम्बन्धभेदाद्भेदे ऽप्याश्रयतात्वेनानुगमान्न शक्त्यानन्त्यम्। नचाश्रयः प्रथमान्तपदलब्धः। आश्रयत्वेनालाभात्।

वस्तुतः कर्तृत्वादिशक्तिमत्त्वेनैव स प्रत्ययार्थः।

सा शक्तिश्चाश्रयनिरूपकभेदे ऽपि एकैवेति "गत्यर्थलोटा" इति सूत्रे कैयटः।

तन्न। "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रतद्भाष्यतत्रत्यस्वग्रन्थविरोधात्। तस्मात्तद्भेदाद्भिन्नैव सा, कर्तृत्वत्वेन चानुगम इत्येव तत्त्वम्।

यत्तु कृत्याश्रयस्य कर्तृत्वेन तत्र शक्तौ शक्यतावच्छेदकगौरवात् कृतिरेव शक्या। नच "कर्त्तरि कृद्" इत्यतोऽनुवर्त्तमानस्य कर्तृपदस्य कृतिपरत्वे वैषम्यम्। शानजादौ सत्त्वभूतो भावोऽर्थः, भूयते इत्यादौ तिङन्ते ऽसत्त्वभूतः स इति वैषम्यस्य तवापि सत्त्वेनास्य वैषम्यस्यादोषत्वात्। कृतित्वं च जातिरूपं शक्यतावच्छेदकम्। पचति पाकं करोतीति-

धात्वर्थात्पृथग्विवक्षियमाणत्वेन तस्या धात्ववाच्यत्वात् । तस्मात्तदतिरिक्तव्यापार एव धातुशक्यः । रथो गच्छति, जानाति, यतते इत्यादावाश्रयत्वे लक्षणा । वर्त्तमानत्वाद्यन्वयस्तु सर्वत्र धात्वर्थ एव । कर्माख्यातप्रत्ययस्याश्रयत्वे शक्तिः, फलं तु धात्वर्थ इत्याहुः ।

तन्न । लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्यापि गुरुणि स्वीकारे बाधकाभावात् । अन्यूनानतिरिक्तवृत्तित्वरूपस्यावच्छेदकत्वस्य गुरुण्यपि सत्त्वात् । अवच्छेदकत्वस्यातिरिक्तपदार्थत्वे मानाभावात् । स्वरूपसम्बन्धस्तत्तत्स्वरूपमेवेति गुरुधर्माणामपि सत्त्वान्न किञ्चित्कल्प्यम् ।

अस्तु वा सम्भवति लघौ गुरौ नावच्छेदकत्वमिति, परन्तु यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादस्तत्रैव लघुधर्मावच्छिन्ने शक्तिर्गुर्ववच्छिन्ने लक्षणेति युक्तम् । प्रकृते च प्रत्ययात्कृतित्वेन बोधः सविवादः धातुत एव तद्बोधात् ।

किञ्चेदं गौरवं गुरुतरभारोद्वहनमिव शरीरस्य, चित्तस्य वा न खेदजनकम्, कर्तृपदादेस्तथाशक्तिग्रहेण तत्र तदननुभवात् । विशेष्यस्यानेकत्वेऽपि तदखेदवच्छक्यतावच्छेदकानेकत्वेऽपि तदखेदात् । अतादृशस्य तु न दुष्टत्वं बीजाभावात् ।

नच इत एवानुपपत्तेर्जातौ शक्तिः, तच्छक्तिज्ञानस्य जातिव्यक्त्युभयाविषयकज्ञानत्वं कार्यतावच्छेदकमित्यङ्गीक्रियते इति न दोष इति वाच्यम् ।

सकलव्यक्तिनामानन्त्येन कार्यतावच्छेदककोटौ निवेशासम्भवात् । एवञ्च गोव्यक्त्यन्तरबोधानापत्तिः । ईदृशकारणताज्ञानस्यावश्यकत्वात् । अन्यथा गोत्वेनाश्वादिबोधस्याप्यापत्तेरित्यग्रे वक्ष्यामः ॥ १ ॥

## अथ कुञ्चिकायां तिङर्थनिरूपणम् ।



(कुं०टी०) धात्वर्थनिरूपणानन्तरं तिङर्थनिरूपणे सङ्गतिं दर्शयितुमाह *धातुप्रकृतिकेति । *कर्त्तरीति । तिङि सति इति शेषः । *तस्याश्रयेति । त्रयाणां द्वन्द्वः । *न शक्यानन्त्यमिति ।

यत्तु स्वरूपसम्बन्धविशेषरूपस्याश्रयत्वस्य शक्यतावच्छेदकत्वमिति । तन्न । अनन्तस्वरूपाणां सम्बन्धत्वे गौरवात् । आधाराधेयभावानापत्तेश्च । अत एवाभावानामधिकरणात्मकत्वमुक्तयुक्त्यैव तार्किका अपि निराचक्षते । अत एव जातिपक्षे सरूपसूत्रं प्रत्याख्यातं भाष्ये । भवन्मते आश्रयौ पाचकौ इत्यादौ जातिवाचकत्वाभावात्तदसङ्गतेः ।

कैयटोक्तिं निराकरोति *साशक्तिश्चेति । *स्वग्रन्थेति । तत्र हि क्रियाभेदेन शक्तिभेदात् कारकमध्यत्वमुक्तम् ।

*तद्भेदात्–आश्रयादिभेदात् । *सा–शक्तिः । *कृतिरेव शक्येति ।

नन्वेवं पाकगोचरनिवृत्त्याख्ययत्नकाले पचतीति प्रयोगापत्तिरिति चेत् ।

अत्राहुः–तस्य पाकानुकूलत्वाभावाददोष इति ।

तन्न । अनुकूलत्वस्य संसर्गतया वाच्यत्वाभावेन विषयताख्यसंसर्गमादायोक्तदोषध्रौव्यात् । तस्मात्प्रवृत्त्यभावातिरिक्तनिवृत्त्याख्ययत्नसत्त्वे मानाभाव इत्येव तत्त्वम् ।

स्यादेतत् । 'आत्मा पचति' इति प्रयोगापत्तिः । नच पाकानुकूलकृतिमानात्मेति योग्यताज्ञानस्य तत्र हेतुत्वकल्पनाददोष इति वाच्यम् । चैत्रत्वादिधर्मितावच्छेदकभेदेन कार्यकारणभावकल्पने गौरवात् । कृतिप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तादृशयोग्यताज्ञानस्य हेतुतया आत्मन्येतदापत्तेर्दुर्वारत्वादिति चेत् ।

अत्र केचित्—अवच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तादृशयोग्यताज्ञानं कारणम्, पचतीत्याद्यानुपूर्व्यास्तु पृथगेव हेतुत्वमिति वदन्ति ।

अत्रेदं चिन्त्यते—अवच्छेदकतासंबन्धेन तथोक्तौ 'चैत्रः स्वर्गं गतः' इत्यादावगतिः । किञ्च 'आत्मा पचति' इति वाक्यस्याव्यावर्त्तकतया न प्रयोगप्रसङ्गः । अत एव 'ईश्वरः पचति' इत्यपि न प्रयोगः, 'कार्यमात्रमीश्वरः करोति' इति च सिद्धम् ।

*जातिरूपमिति । कार्यमात्रं प्रति कृतेः कारणतया कारणतावच्छेदकत्वादिति भावः ।

इद तु न युक्तम् । प्रागभावे ऽपि ध्वंसप्रतियोगित्वरूपकार्यत्वसत्त्वेन तत्र कृतिजन्यत्वाभावेन व्यभिचारात् । ध्वंसस्य कृतिजन्यत्वास्वीकारेण तत्र व्यभिचाराच्च ।

किञ्च संयोगजनकतावच्छेदकक्रियात्वजातेः शक्यतावच्छेदकत्वमन्यत्र तु लक्षणेत्यपि विनिगमनाविरहादस्तु ।

वस्तुतः सर्वाख्यातशक्यतावच्छेदकतयाऽऽश्रयत्वं जातिः । कारणतावच्छेदकतयेत्यादितार्किकपरिभाषायां लाघवस्यैव बी-

जत्वात् । उत्पादादिव्यवहारस्तु निरूपकत्वाद्युत्पत्त्यैव ।

*तस्याः—कृतेः । *सर्वत्रेति । जानात्यादावित्यर्थः । पचतीत्यत्र तु यत्ने एव । यत्नविगमे अग्निसंयोगादिरूपव्यापार-सत्त्वेऽपि 'न पचति' इति प्रयोगात् । नन्ववच्छेदकत्वं स्वरूप-सम्बन्धविशेषस्तत्राह *तत्तत्स्वरूपमेवेति । *नाकिञ्चित्कल्प्य-मिति । नातिरिक्तं कल्प्यमित्यर्थः । *किञ्चेदं गौरवमिति ।

अयं भावः—गौरवस्य कथं दूषकत्वं यावद्व्यक्तिज्ञानासम्भवो वा शक्यतावच्छेदकाननुगमो वा । व्यापारव्यापारत्वयोरुभयो-रप्यननुगतत्वेन धातोरपि शक्त्यनापत्तेः । *कर्तृपदादेरिति । भवन्मते कर्तृपदस्यापि कृत्याश्रये शक्तिर्न स्याद् गौरवादिति भावः । *अतादृशस्य—खेदाजनकस्य । *इत एवेति । व्यक्त्या-नेकत्वदोषादेवेत्यर्थः । ननु माऽस्तु सकलव्यक्तीनां निवेश इत्यत आह *एवं चेति । *अन्यथा—व्यक्तीनामनिवेशे ॥ १ ॥

## अथ कलायां तिङर्थनिरूपणम् ।

(क० टी०) अथ तिङर्थं निरूपयन्ससगतिक सिद्धान्तार्थ-माह *धात्विति । *तत्र—तयोर्मध्ये । इदमपि प्रायिकमित्याह *धात्वर्थेति । भावे तङिति पाठ । सर्वत्र मानमाह *ल. कर्मणिचे-ति । तत्रत्यन्यूनतां निराचष्ट *चेनेति । "कर्त्तरि कृत्" इत्यत । तत्र फलव्यापारयोर्धातुलभ्यत्वादनन्यलभ्यस्य शब्दार्थत्वादाश्रय-मात्र तदर्थ इति आश्रयत्वमेव शक्यतावच्छेदकमिति, कर्त्ता ना-ख्यातार्थ, कृतिमतो व्यापारवतो वा कर्तृत्वे तत्तद्व्यक्तावनन्त-कृत्यादौ शक्यतावच्छेदकत्वे गौरवादिति नैयायिकाद्युक्तदूषणा-नवकाश इत्याह *आश्रयत्व चेति । तस्यापि सखण्डत्वे गौ-

रवतादवस्थ्यादाह *अखण्डमिति । उपाधिरूप, जातिरूप वेत्यर्थ. । द्वितीयातृतीयासप्तमीनां पर्यायतापत्तिवारणायावश्यकमाह *तस्येति । आश्रय., कर्त्रादि । निरूपको–व्यापारादि. । सम्बन्ध.–साक्षात्परपरासाधारण' । *शक्त्यानन्त्यम्–शक्यतावच्छेदकानन्त्यप्रयुक्तम् । फलव्यापारवत्तत्राप्यन्यलभ्यत्वान्न शक्तिरित्याह *नचाश्रय इति । *पदेति–तेनैव । इदमपि दीक्षितभूषणादिरीत्योक्तमिति सूचयन् सिद्धान्तमाह *वस्तुनइति । कर्त्रादिपदात्तेनैव रूपेण बोधादाह *कर्तृत्वादीति । एवेनोक्तव्यवच्छेदः । तस्य तदप्रवृत्तिनिमित्तत्वात् । *स –तदाश्रय । एतावदेव वैलक्षण्यमन्यत्प्राग्वदेवेति सूचयन्नाह *सेति । *चो ऽप्यर्थे । अत्र सम्बन्धभेदासम्भवात्तत्याग । जीर्णतदुक्तिं खण्डयति *यत्त्विति । *शक्यतेति । तदानन्त्यप्रयुक्तशक्त्यानन्त्यजगौरवादित्यर्थ' । *ज्ञानजादाविति । आस्यमाने शय्यमाने गत इत्यादावित्यर्थः । अत्र पक्षे न तदानन्त्यप्रयुक्त गौरवमित्याह *कृतित्वञ्चेति । नन्वेवमपि तस्या धातुलभ्यत्वेनान्यलभ्यत्वात्कथ तत्र शक्तिरत आह *पचतीति । *तस्या.–कृते' । उभयान्वयीदम् । नच घञादिसमभिव्याहृतधातो' फले एव शक्तिरिति वाच्यम् । 'ग्रामो गमनवान्' इति प्रतीत्यापत्ते । 'काष्ठै' पाक.' इत्यादौ कारकान्वयानापत्तेश्च । तव भावनायां कारकान्वयनियमात् । तद् ध्वनयन्नाह *तस्मादिति । कृत्यन्य इत्यर्थः । एवेन कृतिफलव्यवच्छेदः । ननु 'रथो गच्छति' इत्यादौ कृतेर्बाधाद्धात्वर्थानुकूलव्यापार एवाख्यातार्थो वाच्यो ऽत आह *रथइति । आदिना करोति, द्वेष्टि, निद्रातीत्यादि । एव 'घटो नश्यति' इत्यादौ प्रतियोगित्वे लक्षणेत्यपि बोध्यम् । नन्वेवमपि एकप्रत्ययोपात्तत्वात्कृतावेव कालान्वयापत्तिरत आह *वर्तमानेति । *सर्वत्र–आख्यातसामान्ये । एवेन कृत्यादिव्यवच्छेदवदाश्रयत्वव्यवच्छेदो ऽपि । ज्ञानाद्यसत्त्वे ऽपि स्वरूपसम्बन्धविशेषरूपस्यातिरिक्तस्य वा ऽऽश्रयत्वस्य सत्त्वेन जानातीत्यादिप्रयोगापत्ते. । ज्ञानादिविशिष्टे आश्रयत्वादौ तदन्वये तु विशेषणे ज्ञानादावपि तदन्वयस्यावश्यकत्वेन तस्यैव स्वीकारौचित्यादिति भाव । नन्वेव कर्माख्याते ऽपि तस्यास्तत्त्वापत्तिरत आह *कर्मेति । आख्यातशब्दस्य "आख्यातमा-

ख्यातेन" इत्यादौ प्रत्ययान्ते प्रसिद्धेराह *प्रत्ययेति । एवञ्च कृति-व्यवच्छेदः । फलस्यान्यलभ्यत्वमाह *फलत्विति । व्यापारावच्छिन्नमित्यर्थ । एव व्यापारो ऽपि फलावच्छिन्नो ग्राह्य इति बोध्यम् । ननु बाधकाभावे ऽपि सम्भव एव नात आह *अन्यूनेति । न-न्वतिरिक्तं तत् तत्र शक्यतावच्छेदक तद् व्यावृत्तमेव स्वीक्रियते ऽत आह *अवच्छेदेति । स्वरूपसम्बन्धविशेष एवावच्छेदकत्व ना-तिरिक्तम्, नापि तद्रूपमिति मते ऽप्याह *स्वरूपेति । ननु गुरुध-र्मस्यावच्छेदकत्वमेव नेति न ममाभिमत किन्त्वन्यथेत्याह *अ-स्तुवेति । अन्यत्रेति शेष । यथा घटत्वादेरेत्रावच्छेदकत्व न कम्बु-ग्रीवादिमत्त्वादेः, प्रकृते तस्यापि न विषय इत्याह *परत्विति । *गुर्विति । गुरुधर्मेत्यर्थ । *प्रत्ययात्–आख्यातप्रत्ययात् । *त-द्बोधात्—कृतित्वेन कृतिबोधात् । कष्ट कर्मेति न्यायादिना स्वत-स्तत्राप्रवृत्तेराह *भारोद्वहनमिति । शरीरे स्वारसिकखेदाभावादाह *चित्तस्येति । दृष्टान्ततयाऽऽह *कर्तृपदेति । *तथा–कर्तृत्वादिना विशिष्टे । *तत्रेति । अन्त.करणे । *तदननुभवात्–दु.खानुभवाभा-वादित्यर्थ । ननु शक्यतावच्छेदकानेकत्वप्रयुक्त' कुतो न खेदो ऽत आह *विशेष्यस्येति । ननु तदजनकत्वे ऽपि दुष्टत्वमास्तामत आह *तादृशेति । चित्तखेदाजनकस्येत्यर्थ' । ननु दृष्टान्ते ऽपि तत्प्रयुक्तखेदसत्त्वेन तदसङ्गतिरेवेति न तेनात्र तदभावसिद्धिरिति तत्प्रयुक्तखेदादेव दुष्टत्वमित्याह *नचेतएवेति । विशेष्यानेक-त्वप्रयुक्तखेदादेवेत्यथ. । नन्वेव शक्तिग्रहादे समानविषयकत्वा-त्ततो व्यक्तिबोधो न स्याद्, अन्यथा व्यक्त्यन्तरबोधो ऽपि स्याद-त आह *तच्छक्तीति । *न दोष.—न व्यक्त्यन्तरबोधापत्ति. । किं तत्र सकलव्यक्तीनां निवेश उत कस्याश्चिदेव ? । तत्र नाद्य इत्या-ह *सकलेति । अन्त्ये आह *एव चेति । कस्याश्चिद् बुद्धिस्था-या निवेशे चेत्यर्थ. । *ईदृशेति । बुद्धिस्थव्यक्तिविशेषजात्युभयवि-षयकज्ञाननिष्ठकार्यतानिरूपितशक्तिज्ञाननिष्ठकारणताज्ञानेत्यर्थ. । *अन्यथा–तदभावेऽपि सामान्यकारणताज्ञानमात्रेण बोधाङ्गीकारे । *अग्रे–प्रातिपदिकार्थनिरूपणावसरे ॥ १ ॥

**विवरणे धातोः पृथग्विवरणं तु तवाख्यातप्रत्यया-**

र्थसङ्ख्याकालकृतीनां मध्ये कृतेः कृधातुना सङ्ख्यादेस्तदुत्तरतिङा विवरणवत् धात्वर्थकृतेरप्युपपन्नमिति न तत्प्रत्ययार्थत्वसाधकम् । प्रत्युत प्रकृतिभूतकृञा विवरणात् पचतीत्यत्रापि तस्याः प्रकृत्यर्थत्वमेव युक्तम् । तथा विवरणं तु सति सम्भवे सर्वत्र तस्याः प्रकृतिवाच्यतां बोधयितुम् ।

किञ्च कृञ् व्यापारसामान्यार्थ एव न यत्नार्थः । वातरोगादिना कम्पमाने 'नाहं स्पन्दं करोमि' इति व्यवहारस्तु व्यापारमध्ये कृतेरपि प्रवेशात्तदभावेन समुदायाभावतात्पर्यकः । 'काष्ठानि पाकं कुर्वन्ति' इत्यादौ तद्राहित्यव्यापारस्यैवात्र तस्या एव धात्वर्थत्वाद्वा । एवमेव 'अङ्कुरो न कृतो, बीजादिना कृतः' इत्याद्युपपत्तिः ।

अत एव "कथं ज्ञायते क्रियावचनाः पचादयः इति यदेषां करोतिना सामानाधिकरण्यं किं करोति पचति" इति भूवादिसूत्रे भाष्ये उक्तम् ।

अनेन विवरणमपि धातोरेवेति, कृञ् व्यापारसामान्यवाचीति च स्पष्टमेवोक्तम् ।

नच तवाख्यातार्थाश्रयबोधं प्रति प्रथमान्तपदजन्यबोधो हेतुः, तदर्थसङ्ख्याप्रकारकबोधे तदर्थाश्रयज्ञानं हेतुः, तदर्थकालप्रकारकबोधे धातुजज्ञानं हेतुरिति कार्यकारणभावत्रयम्; मम तु कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थबोधे प्रथमान्तपदजन्यं ज्ञानं हेतुरिति सङ्ख्याभावनयोरेक इति वाच्यम् । आख्यातत्वाद्यजानत ईदृशकार्यकारणभावग्रहासम्भवात् ।

किञ्चाख्यातेन क्वचित्कृतेः क्वचिदाश्रयत्वस्य बोधः। कृतेः क्वचिद्धातुना क्वचित्प्रत्ययेन बोध इत्यर्थस्य पर्यवसितत्वेन तव मते ऽनेकक्लिष्टकार्यकारणभावापत्तेः । तत्तद्व्युत्पत्त्यनुसारेण तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावाना सर्वेषामावश्यकत्वेन तल्लाघवगौरवविचारस्यायुक्तत्वाच्च ।

किञ्च कृतौ शक्तिः, 'वृक्षो वर्धते' 'रथो गच्छति' इत्यादावाश्रयत्वे लक्षणेत्ययुक्तम् । वृद्धिगमननिरूपिताश्रयत्वेन वृक्षरथनिष्ठेन कृतेः सम्बन्धाभावात् । यथाकथञ्चित्परम्परासम्बन्धस्योपपादने ऽपि तज्ज्ञानपूर्वक बोधस्याननुभवात् । परम्परासम्बन्धस्य लक्षणानियामकत्वाभावाच्च ।

अत एव काव्यप्रकाशकृता प्रयोजने न लक्षणा सम्बन्धाभावादित्युक्तम् । अर्थनिर्देशवैयर्थ्यापत्त्या ऽव्ययानुशासनादिवैयर्थ्यापत्त्या च विभक्तौ लक्षणानौचित्याच्च। अर्थनिर्देशस्यान्यार्थे ऽसाधुत्वबोधनफलकत्वेन लक्षणयाऽन्यार्थे ऽन्यशब्दमात्रस्यासाधुत्वाच्च ।

किञ्च "युष्मद्युपपदे" इतिसूत्रोक्तस्य ऋष्यनुभवसिद्धसामानाधिकरण्यस्य त्वन्मते ऽनुपपत्तिः । तिङर्थाभिन्नत्वं हि तिङ्सामानाधिकरण्यम् । तिङर्थसङ्ख्यान्वयिवाचकत्वादेर्यौगिकसामानाधिकरण्यशब्दावाच्यत्वात् ॥ २ ॥

(कुं०टी०) *तवेति । यथा तव मते आख्यातार्थविशेषस्य

कृञा विवरणं तथाऽस्मन्मते धात्वर्थविशेषस्येत्यर्थः । रथो गच्छतीत्यादौ कृतेरबोधात् । *व्यापारसामान्यार्थ एवेति । रथो गमन करोतीति प्रयोगात् । *समुदायाभावेति । कृतिपर्यन्तस्य व्यापारस्याभावात् तथा प्रयोग इत्यर्थः । *काष्ठानीति । अत्र यथा यत्नभिन्नो व्यापारो ऽर्थः, तथा 'स्पन्दङ्करोमि' इत्यत्र यत्न एवार्थ इत्यर्थः । *एवमेवेति । व्यापारसामान्यार्थत्वादेवेत्यर्थः ।

*आख्यातार्थाश्रयेति । कर्मधारयः । *कालेष्टेति । लिङर्थस्येष्टसाधनत्वस्य धात्वर्थे ऽन्वयादतिरिक्तेति ।

*अयुक्तमिति । शक्यसम्बन्धाभावेन लक्षणाया अयुक्तत्वात् ॥ २ ॥

( कु० टी० ) एव गौरवाख्यमाद्यदोष सखण्ड्य कृतेर्धात्वर्थत्वे उक्तरूपविवरणविरोधरूप द्वितीयदोष खण्डयति *विवरणे इति । *धातो -तदर्थात् । कृतेस्तदर्थत्वस्य नेष्टत्वेनानभ्यर्हितत्व सूचयन्नाह *सख्येति । किञ्च त्वया साधकत्वे उपन्यस्तं बाधकत्वे एव पर्यवस्यतीति वैपरीत्यमवेत्याह *प्रत्युतेति । नन्वेव तथा विवरणमफलमेव । किञ्च धात्वन्तरेणापि विवरणापत्तिर्मम तु सफलत्वमुक्तरीत्या स्पष्टमेव । अन्यस्यातदर्थकत्वेनायोग्यत्वेन च नान्यथा विवरणमत आह *तथेति । तदर्थककृञेत्यर्थ. । द्वितीयदोषस्तूक्तरीत्यैव नेति भावः । इदमपि सर्वमभ्युपेत्य, वस्तुतस्तदेव नेत्याह *किञ्चेति । इदं धात्वर्थनिरूपणे प्रतिपादितम् । अत्र सिद्धान्ते परोक्तदोषमुद्धरति *वातेति । *तदभावेति । कृत्यभावेत्यर्थ. । एवमग्रेऽपि । विशेषणाद्यभावप्रयुक्तविशिष्टाभावन्यायेनेति भावः । एवञ्च कम्पसत्त्वे ऽपि न दोष इति तात्पर्यम् । तत्र तात्पर्ये विवादे आह *काष्ठानीति । धातूनामनेकार्थत्वेन लक्षणानुपयोगादाह *धात्वर्थत्वाद्वेति । व्यवहारेऽस्यान्वय । इद तवापि स्थलविशेषे आवश्यकमित्याह *एवमेवेति । तदर्थकव्यापारविशेषार्थकत्वेनेत्यर्थः । बीजेत्युभयान्वयि । उभयत्र भाष्यसमतिमाह *अत एवेति । "क्रियावचनो धातुः" इति लक्षणमुपक्रम्ये-

दमुक्तम् । तत्र उत्तरमाह *यदिति । यत इत्यर्थः । अत एवे-त्यस्यार्थं स्पष्टयति *अनेनेति । भाष्येणेत्यर्थः ।

नव्यनैयायिकोक्तिं खण्डयितुमाह *नचेति । प्रकारतासंबन्धेनेति शेषः । आख्यातार्थाश्रयबोध प्रतीति पाठ । तद्विशेष्यकबोध प्रतीत्यर्थः । तत्प्रकारकबोधमित्यपपाठः । दीक्षितभूषणादिमतेनाह *तदर्थेति । आख्यातार्थेत्यर्थः । विशेष्यतासंबन्धेनेत्यादि । एवमग्रेऽपि । आत्मनिष्ठप्रत्यासत्तेः सङ्ग्रहायात्र संबन्धविशेषानिवेशो बोध्यः । कालादेर्धात्वर्थेऽन्वयादाह *कालेष्वेति । आदिना कृतिसाध्यत्व विशेष्यतासंबन्धेनेति भावः । अयं भावः जीर्णनैयायिकमते भावनाया इतराविशेषणीभूतप्रथमान्तपदोपस्थाप्ये एवान्वयः, तथैवाकाङ्क्षितत्वात् । सङ्ख्याभावनयो समानपदोपात्तत्वेनैकान्वयित्वस्यौचित्येन भावनान्वयिन्येव सङ्ख्यान्वय इति । तत्र भावनान्वयिनि सङ्ख्यान्वय इत्ययुक्तम् । न पचतीत्यत्र भावनानन्वयिन्येव कर्त्तरि तदन्वयेन व्यभिचारात् । विशेष्यतया आख्यातजन्यसङ्ख्याप्रकारकबोधं प्रति तेनैव सम्बन्धेन भावनाप्रकारकबोधसामग्रीत्वेन हेतुत्वपर्यवसानेन गौरवाच्च । समानपदोपात्तान्वयित्वमपेक्ष्य समानपदोपात्तत्वस्यैव लाघवेन सङ्ख्यान्वयनियामकत्वौचित्याच्च । भावनान्वयनियामकस्यैव तद्धेतोरिति विशेष्यतासम्बन्धेनाख्यातार्थसङ्ख्याप्रकारकबोधं प्रति इतराविशेषणकप्रथमान्तपदजन्योपस्थितिर्विषयतया हेतुरिति लघुभूतः कार्यकारणभावः फलित इति । नारायण इव नरो हन्ति, चन्द्र इव मुखं दृश्यते इत्यादौ नारायणचन्द्रादौ सङ्ख्यान्वयवारणाय–इतराविशेषणेति । चैत्रेण सुप्यते इत्यादौ चैत्रनिष्ठः स्वाप इत्यादिबोधविशेष्यस्वापादौ तद्वारणाय प्रथमान्तेति । अत एव भावलकारे प्रथमान्तपदजन्योपस्थित्यभावादनन्वितैव सङ्ख्या । अत एव तत्रौत्सर्गिकमेकवचनमेव ।

तन्नव्याः—सङ्ख्याभिधानानभिधानाभ्यामप्युक्तानुक्तविभागे सङ्ख्यायाः कर्त्तृकर्मसाधारण्येनान्वये बाधकाभावेन कर्मादावपि द्वितीयाद्यनापत्तिः, अत एकपदोपात्तत्वेनाख्यातार्थकर्त्तृत्वाद्याश्रय एव तदाश्रय इति कर्त्तृत्वाद्याश्रयरूपे भावनाविशेष्ये सङ्ख्यान्वयनियमस्वीकारः । भावनायास्तत्रैवान्वयः । तत्र भावनापदेन च सङ्ख्या-

कालातिरिक्त आख्यातबोध्यो गृह्यते । तेन जानात्यादीनां सग्रहः ।

यत्तु घटो नित्य इत्यादितो ऽबोधादितरविशेषणत्वेनोपस्थिते शाब्दमात्रे प्रतिबन्धकत्वादत्र विशिष्य तदनिवेशो ऽपि क्षत्यभाव इति ।

तन्न ।

नारायण इवेत्यत्र इतरविशेषणत्वेनोपस्थित्यभावात् ।

वस्तुतो यथा नारायणो हन्ति तथा नरो हन्तीति बोधादुभयत्रापि सख्यान्वयोऽस्त्येवेति व्यर्थमेव तत् । सख्याभेदे तु दुष्टोपमैव उपमानोपमेयभावाप्रतीते तत्रैव सख्यान्वय इति । एतद् ध्वनयितुमेव “ल कर्मणि” “शेषात्कर्त्तरि” इत्यादिसूत्रेषु धर्मिनिर्देश. ।

एव हि वाक्यार्थ–लकारा कर्तृत्वे कर्मत्वे च भवन्ति तत्स्थाने तदाश्रयगतसख्यायामेकवचन तिबादिकमिति ।

एव च कालेष्टसाधनत्वाद्यतिरिक्ताख्यातार्थबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलित. । एव च ‘न पचति’ इत्यत्र भावनानन्वयिन्येव कर्त्तरि तदन्वयेऽपि न दोष । भावना हि तत्र नञर्थान्वयिनी । चैत्राः पचतीति तु न, भिन्नसख्यावरुद्धे प्रथमान्तार्थे एकत्वान्वयासम्भवात् । आख्यातोपात्तसख्याऽन्वये तद्विरुद्धसख्याराहित्येनोपस्थितेस्तन्त्रत्वात् । चैत्रो मैत्रश्च गच्छत इत्यत्रैकत्वद्वयस्य द्वित्वेनाविरोधान्न दोष इति ततो ऽपि तन्नव्या इति ।

उभयमतसाधारणदोषमाह सिद्धान्ती *आख्यातत्वेति । बोधस्तु तस्यापीति भाव । भावनांशेऽभ्युपेत्याप्याह *किञ्चेति । *क्वचित्–पचतीत्यादौ । *क्वचित्–रथो गच्छतीत्यादौ । *क्वचित्—तत्कृत्रादौ । विशिष्य तत्तन्निवेशादाह *क्लिष्टेत । तत्र दोषान्तरमाह *नत्वादिति । एव द्वितीयदोष सखण्ड्य तन्मतोपपादिकां युक्तिं खण्डयति *किञ्चेति । *यथाकथञ्चिदिति । पुरुपद्वारेत्यर्थः । *अननुभवादिति । तथा च नात्र तस्य लक्षणात्वमिति भावः । लक्षणाप्रकरणोक्त मूले कुठारमेवाह *परम्परेति । *अत एवेति । व्यञ्जनाप्रतिपादनार्थमिति भाव. । सुब्विभक्तौ न लक्षणेति तदीयसिद्धान्ते न्यूनतां ध्वनयन्मूलसाम्येनाह *अर्थेति । त्वद्रीत्या लक्षणया सर्वत्र साधुत्वस्येष्ट-

त्वादिति भावः । आदिना-बहुलग्रहणादि । *विभक्तौ-तत्सामान्येन तु सुब्विभक्तावेव । अयमेव हि सिद्धान्त' । न केवल विभक्तित्वाव-च्छिन्ने एवेद किन्तु प्रकृत्यादावपीत्याह *अर्थेति । मात्र कात्स्न्र्ये । एव तद्युक्तिजात सङ्कुण्ड्य कृतिर्वाच्येति तत्सर्वसिद्धान्त खण्ड-यति *किञ्चेति । *तिङर्थाभिन्नत्वम्-तिङर्थाभिन्नार्थत्वम् । *हि-यत' । सामानाधिकरण्येनान्वय इत्यादौ तथा प्रसिद्धेर्न रूढिरि-त्याह *यौगिकेति ॥ २ ॥

यत्तु पचतीत्येतावन्मात्रोक्तावपि कर्तर्यैकत्व-संशयानुत्पत्त्या तत्र लक्षणावश्यकत्वेन लक्षितेन सामानाधिकरण्यमिति ।

तन्न । शक्तेरेवोचितत्वात् । अन्यथा विशिष्ट-शक्त्युच्छेदः । कृतिमात्रबोधस्य क्वाप्यभावाच्च ।

किञ्च 'एकः पचति'इतिवद् 'अनेकः पचति'इत्य-स्यापि सत्त्वेन पचतीत्येतावन्मात्रोक्तौ तत्संशयस्ये-ष्टत्वात् ।

किञ्च युष्मदस्मच्छेषरूपकर्तृकर्मणोस्तिङर्थस-ङ्ख्यान्वयिनोर्योग एव प्रथमादीनां तन्मतं साधुत्वेन तत्र सङ्ख्यान्वयेनैव तत्सन्देहानुत्पत्तेः । अत एव पचतीत्येतावन्मात्रोक्तौ 'कः कीदृशः' ? इति प्रश्नो 'देवदत्तः घनश्यामः'इत्युत्तरं च स्वरसतः सङ्गच्छते ।

किञ्च । पच, अजर्घाः, अचकादित्यादौ प्र-त्ययस्य लोपेन तत्र यत्नकालसङ्ख्यानां धातुवाच्य-त्वावश्यकत्वेन प्रत्ययशक्तिकल्पने गौरवम् । प्रत्यय-द्योत्यत्वे तु यत्नस्य विशेषणतापत्तिः ।

किञ्च तव अभिधानानभिधानव्यवस्थानुपपत्तिः ।

सङ्ख्यानभिधाने इत्यर्थे चैत्रः पक्तेत्यादौ तृतीयाप-

त्तेः। नच कृतामपि सङ्ख्या वाच्या । अनुशासनाभावे ऽपि स्वभावात्तद्वाचकत्वाङ्गीकारे "कर्तरि कृत्"इत्यादेर्वैयर्थ्यम् । स्वभावेनैव तद्वाचकत्वस्यापि सम्भवात् । अर्थबोधकानुशासनानां नियमार्थत्वेन तस्यासाधुत्वापत्तेश्च । प्रत्ययशक्तिग्राहकतायाः, क्वचित् प्रकृतिशक्तिग्राहकतायाश्च व्याकरणमात्रे सत्त्वाच्च । शक्तिग्रहं व्याकरणोपेत्यादिना वृद्धोक्तशक्तिग्राहकेष्वत्र कस्यापि सम्भवाभावाच्चेति यत्किञ्चिदेतत् ।

सङ्ख्याकर्त्राद्यन्यतरानभिधाने इत्यर्थे गौरवं दुर्ज्ञेयत्वं च । तद्भिन्नभिन्नस्यैवान्यतररूपत्वात् ।

किञ्च तिङ्विधावुपस्थितस्य "द्व्येकयोः" इत्यस्य किं लकारार्थस्यैकत्वादावित्यर्थः, उत तिङुपात्तभावनान्वयिगतैकत्वादाविति ? ।

आद्ये सिद्धं न इष्टम् । अन्त्ये एतद्विधेयतिङां तदर्थाना चैतद्वाक्ये उद्देश्यत्वानुपपत्तिः । अस्मदादीन्प्रति अस्यैव व्याकरणस्य तदर्थशक्तिग्राहकत्वात् ।

ननु तिङ्वाच्यकारकवाचिनीति त्वदीयानां व्याख्याने ऽपि कथं तस्योद्देश्यकोटौ निवेशः । सर्वैकवाक्यतया तिबादिसूत्रस्य विधायकत्वमिति सिद्धान्ते मानान्तरेणालाभात् ।

नच तिङ्पदेन स्वस्थानी लकारो लक्ष्यते लकारवाच्यकारकवाचिनीत्यर्थ इति न दोष इतिवाच्यम् ।

परमत्व पचसि, त्वत्कल्पः पचसीत्याद्यसिद्ध्यापत्तेः । अत्र हि त्वत्कल्पशब्दस्य तद्वाचकत्वे ऽपि यु-

ष्मच्छब्दस्य तत्त्वाभावात् । युष्मदस्मदिति विशिष्ट-रूपपरिग्रहादस्य च शब्दान्तरत्वादिति कैयटोक्तेश्च ।

नच युष्मदीत्येतत्सौत्र्या लक्षणया युष्मद्वतीत्ये-तदर्थकमिति वाच्यम् । अतित्वं भवतीत्यत्र म-ध्यमापत्तेः । स्पष्टश्चेदं भाष्ये इति चेन्न ।

"युष्मदि साधने इत्येवं भविष्यति" इति भाष्ये एव समाधानात् । युष्मदर्थेन यत्र लान्तस्य सामा-नाधिकरण्य तत्र मध्यम इति सूत्रार्थेन तल्लाभ इति कैयटः । एवञ्च लवाच्यसाधनसमानाधिकरणयु-ष्मदर्थप्रतिपादकशब्दे उपपदे मध्यम इति सूत्रा-र्थः । सामानाधिकरण्यञ्च तदर्थप्रवृत्तिनिमित्तयोर्बो-ध्यम् ॥ ३ ॥

(कुं०टी०) *विशिष्टशक्त्युच्छेदइति । लक्षणयैव विशेष्य-बोधात् । *इत्यस्यापि सत्त्वेनेति । पचतीत्युक्ते एकः अनेकः इत्युभयोः सम्भवादित्यर्थः । *कः कीदृश इति । कर्तृविषयक-प्रश्नस्यानुभवसिद्धत्वात्कर्तुर्वाच्यत्वमित्यर्थः ।

*व्याकरणमात्रे इति । व्याकरणे एवेत्यर्थः ।

*अन्यतरानभिधाने इति । अन्यतरस्याप्यभिधानाभावे इत्यर्थः । उद्देश्यत्वासम्भवमुपपादयति *सर्वैकवाक्यतयेति । *युष्मदिसाधने इति । युष्मदर्थे आख्यातार्थसाधने इत्यर्थः । *बोध्यमिति ।

यत्तु आख्यातस्य कर्तरि शक्तौ पाकानुकूलकृत्याश्रयत्व-प्रकारकगुरुयोग्यताज्ञानस्य कारणत्वकल्पने गौरवमिति ।

तन्न । तादृशसामग्रीकाले कृतिसंबन्धाभाववानाश्रय इति

प्रत्यक्षवारणाय प्रतिबन्धकत्वकल्पने गौरवात् । अत एव कारणीभूतज्ञानविषयस्य शरीरगौरवमेव लाघवसंवादकमिति तार्किकाः ॥ ३ ॥

तन्नव्योक्तिं खण्डयति *यत्त्विति । *पचतीति । किंकरोतीति प्रश्ने इत्यादिः । मात्रपदेन प्रथमान्तपदव्यवच्छेदः । अपिना तत्सहिततत्समुच्चयः । *अनुत्पत्त्या–तददर्शनेन । *तत्र–केवलस्थले । कर्त्तरि आख्यातस्येति शेषः । सर्वत्राह *लक्षितेनेति । अनुपपत्तिप्रतिसन्धानं विनाऽपि बोधादाह *शक्तेरेवेति । *अन्यथा–स्वारसिकतदभावे ऽपि तदङ्गीकारे । तत एवाह *कृतीति । एवं च तत्र शक्तिकल्पनं मुधैवेति भावः । एतद्दोषाभावाय तन्मात्रोक्तौ तन्मात्रबोधाङ्गीकारे तु मूले एव कुठार इत्याह *किञ्चैक इति । इदमप्यभ्युपेत्य । वस्तुतस्तावन्मात्रोक्तावपि अन्यथा स नैवेति न ततस्तत्सिद्धिरिति तथा दुर्वचमेवेत्याह *किञ्चेति । सौत्रक्रमेणाह *युष्मदिति । *योगएवेति । प्रयोगाभावेऽपीति भावः । *तन्मते–पाणिन्यादिमते । *तत्र–कर्त्रादौ । इदं द्रढयति *अत एवेति । उक्तरीत्या तत्सन्देहाभावात्सामान्यज्ञानस्य सत्त्वाच्चेवेत्यर्थः । *क इति । विशेषविषयकः प्रश्नः । *कीदृशइति । स्वरूपविषयक इत्याह *देवेति । त्वन्मते द्वयोः सङ्ख्यापरतया तथा सामान्यज्ञानपरतया च योजने क्लेशादाह *स्वरसत इति । तत्र सिद्धान्ते दोषान्तरमाह *किञ्च पचेति । अनतिप्रसङ्गायाह *आवश्यकत्वेनेति । लुप्तस्मरणाद्बोध इत्यस्य प्राक् निरस्तत्वादिति भावः । *तत्र–श्रूयमाणस्थले यत्ते । ननु न तत्र मया तस्य शक्तिः कल्प्यते किन्तु तस्य द्योतकत्वमात्रं स्वीक्रियते इति नायं दोषोऽत आह *प्रत्ययेति । तत्र दोषान्तरमाह *किञ्चेति । कर्त्तरि तिङि तव मते कृतेः सर्वत्राभिधानं न कर्त्तुरिति तदन्यतरतदाश्रयणं दुर्वचमिति भावः । अत एवाह *सङ्ख्येति । तन्नव्योक्तिं खण्डयति *नचेति । *अनुशासनेति । यत इत्यादिः । शङ्काशयमाह *स्वभावादिति । कृतः कर्तृवाचकत्वेत्यर्थः । ननु "नासूया" इति भाष्यनिरस्तमिदम् अत आह *अर्थेति । *तस्य–कृतः । तत्रेति शेषः । ननु तेषामेव प्रकृते ऽभावोऽत आह

*प्रत्ययेति । *क्वचित्-संख्याशब्दस्थले । मात्र कात्स्न्र्ये । नन्वत्र व्याकरणातिरिक्त शक्तिग्राहकमत आह *शक्तिग्रहमिति । उक्तदोषाभावायाह *सख्याकर्त्रेति । आदिना कर्म । एतद्दोषाभावाय क्वचित्सख्यानभिधाने, क्वचित्कर्त्राद्यनभिधाने इत्यर्थे तु आवृत्तिलक्षणवाक्यभेदापत्तिरिति बोध्यम् । गौरवाद्यभ्युपेत्याप्याह *किञ्चेति । *इत्यस्य-इत्यादे. । लस्येत्यधिकारात् आह *लकारेति । *एकत्वादावितीति । अर्थ इत्यस्यानुषङ्ग । द्वयोरेकवाक्यतया विधिरिति भाव । *इष्टमिति । कर्त्तुर्वाच्यत्वमित्यर्थ. । तेषां साक्षादनुद्देश्यत्वादाह *तदर्थानाञ्चेति । ननु तेऽपि तत्र तच्छास्त्रान्तरेण विहिता इति नाय दोषो ऽत आह *अस्मदादीनिति । अन्यथा व्याकरणस्य शक्तिग्राहकतोच्छेद । तिङां तदर्थेति पाठ. । तथा च तथा ऽर्थासम्भव इति भावः । स्वमते परोक्तदोषमुद्धरति *नन्वित्यादिना । *तस्य-तिङादेः । ननु तिप्तस्झीतिसिद्धिरेवात आह *सर्वैकेति । द्व्येकयोरित्यादिवद्युष्मदीत्यादिनापीत्यर्थ. । "लः कर्मणि" इति सिद्धाशयेनाह *नचेति । असिद्धिमेवोपपादयति *अत्रहीति । *शब्दस्य-तदादे. । तेनाद्यादिसग्रह' । ननु घटकतया तस्यापि तत्त्वमस्त्येवात आह *युष्मदिति । असिद्धिमुदाहरति *न चेति । अन्यत्राप्रयोगादाह *सौऽस्येति । उभयसग्रहायाह *युष्मद्वतीति । *भाष्ये इति । "युष्मदि" इति सूत्रे एवेति बोध्यम् । ननु युष्मच्छब्दस्य न साधनत्व तदर्थस्य केवले तत्त्वेऽपि कैयटोक्तरीत्या न तत् तत्रेति कथं तावताऽपि निर्वाहो ऽत आह *युष्मदर्थेनेति । सर्वैकवाक्यतयैवाह *लान्तस्येति । *तल्लाभ.-युष्मदि साधने इत्यस्य लाभ । तस्यापि तात्पर्यमाह *एव चेति । तथा कैयटोक्तौ चेत्यर्थ ॥ ननु सामानाधिकरण्यमुक्तरीत्या शब्दनिष्ठमिति कथं साधनसमानाधिकरणप्रवृत्तिनिमित्तकयुष्मदर्थे इत्यत आह *सामेति । तथा च नोक्तरूपमत्र सामानाधिकरण्यं किन्तु एकाधिकरणवृत्तित्वरूपमिति साधनप्रवृत्तिनिमित्तसमानाधिकरणप्रवृत्तिनिमित्तकस्य युष्मदर्थेत्यर्थेन तादृशशब्दोपपदत्व त्वत्कल्पादावस्ति नातित्वमित्यादाविति न दोषः ॥ ३ ॥

परेतु "युष्मदि क्रियासमानाधिकरणे" इति व्याख्यानम् क्रियाक्रियावतोरभेदात्तत्सुलभम् । इदमग्रे सङ्ख्याप्रकरणे स्फुटीभविष्यति । अत एव कैयटेन लान्तस्येत्युक्तम् । अन्यथा लस्येत्येव वदेदित्याहुः ।

नच व्याकरणं साधुत्वमात्रतात्पर्यकं नार्थव्यवस्थापकमिति वाच्यम् । 'व्याकरणं शक्तिग्राहकम्' इति त्वद्वृद्धोक्त्यसङ्गतेः । अर्थविशेषपुरस्कारेणैव साधुत्वस्य भाष्यसम्मतत्वाच्च । 'पदसमयज्ञानार्थं व्याकरणम्' इति न्यायभाष्योक्तेश्च ।

तदुक्तं हरिणा—

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥ इति ।

किञ्चैवं कृतामपि कर्तृवाचकत्वानापत्तिः । नच 'मित्रा पक्त्री' इति विशेष्यसमानलिङ्गकत्वदर्शनात्कृतिकर्ता वाच्य इति वाच्यम् । 'वेदाः प्रमाणं' 'गावो धनम्' इत्यादौ सामानाधिकरण्ये भिन्नलिङ्गत्ववत् क्वचिद्वैयधिकरण्येऽपि समानलिङ्गत्वस्य स्वीकारे बाधकाभावात् ।

अत एव भाष्ये पठ्यते "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति । केवलकृतौ प्रयोगस्तु "पक्ता जातः" इत्यादिरस्त्येव ।

नच कृति कृतेर्वाच्यत्वे चैत्रे गन्तेत्याद्यापत्तिः । आख्यातार्थकृतेः प्रथमान्तपदोपस्थाप्य इव कृदर्थकृतेः कृदन्तसमानविभक्तिकनामार्थे एवाश्रयतयाऽ

न्वयस्वीकारेणादोषात् । अन्यथा तव चैत्रे पचतीत्यादेरापत्तिः । विपरीतं केवलकृतौ तिङन्तप्रयोगाभावेन लिङ्गमपि तत्र शक्त्यसिद्धिः । कृत्यनभिधानेनैव च तृतीयाऽव्यवस्था । भोक्ता तृप्यतीत्यादौ कृतः कर्तरि लक्षणा अस्तु । तस्मादभेदान्वयानुभव एव कृत्सु कर्तरि शक्तौ प्रमाणं वाच्यम् । एवं च ऋष्यनुभवसिद्धाभेदान्वयादाख्यातप्रत्ययस्यापि धर्मिवाचकत्वसिद्धिः ।

किञ्च कर्माख्याते तव कृतेराख्यातार्थत्वाभावेन तृतीयान्तासमभिव्याहृते 'किं क्रियते' इति प्रश्ने 'पच्यते' इत्युत्तरानापत्तेः । कृञस्तव यत्नार्थत्वात् । तत्र कृतेरप्याख्यातार्थत्वे तु कृत्यभिधानेनाभिधानापत्तौ कर्तरि तृतीयानापत्तेः । "कर्तृकरणयोः" इति सूत्रे कर्तृसंख्ययोरिव कृतेरप्युपस्थितत्वात् ।

किञ्च करोतीत्यादौ कालान्वयस्य धात्वर्थेऽङ्गीकारेण पचतीत्यादौ त्वाख्यातार्थे तदन्वयेन कार्यकारणभावद्वयापत्तिः । मम तु सर्वत्र धात्वर्थे एवान्वय इति न दोषः ।

किञ्च कृतौ कालान्वये पाकशालायां काष्ठज्वलनाद्यनुकूले यत्ने नष्टे पच्यमानमोदनं पश्यति देवदत्ते पचतीत्यनापत्तिः । मम तु पाक्यवस्तुनिष्ठविक्लित्तिविशेषानुकूलस्य पाकशालावस्थानरूपव्यापारस्य धात्वर्थस्य विद्यमानत्वान्न दोषः ।

अपिच पाचक इत्यादेः पचतीत्यादिविवरणादाख्यातस्यापि कर्त्रर्थकत्वमावश्यकम् । विशेष्यविशे-

षणऽव्यत्यासे ऽपि चित्रगुरित्यादेश्चित्रा गावो यस्येति विवरणवन्न दोषः ।

वस्तुतस्तु समान एव विशेष्य-विशेषणभावो वृत्त्यर्थोपदर्शके वाक्ये इत्यग्रे निरूपयिष्याम इति दिक् ।

एतेन यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थः । यत्न आख्यातार्थः । सच लिङ्येव नान्यत्र । अप्रतीतेः । धात्वर्थे कारकान्वयः । काष्ठैः पाक इतिवष्टमेवेति समन्वयसूत्रे वाचस्पत्युक्त गुरुमतमप्यपास्तम् ॥ ४ ॥

(कुं०टी०) *भेद्यभेदकेति । भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः संबन्धः तन्निमित्तकं साधुत्वमित्यर्थः । *कृतामपीति । तत्राप्युक्तगौरवात् । *क्वचिदिति । कृतेश्चाश्रयतया मित्रायामन्वयः । *पक्वाजात इति । पाकयत्नो जात इत्यर्थो ऽस्त्विवति भावः । *तव-तार्किकस्य । *कृत्यनभिधानेनैवेति । अनभिहिते कर्तृत्वे इत्यर्थः । अस्ति च पाचक इत्यादावपि विशेषणतया कृतेरभिधानम् । *धर्मीति । कर्त्रादीत्यर्थः । *किञ्चेति । किं क्रियते इति प्रश्ने किंविषयको यत्न इत्यर्थः । पच्यते इत्यत्र यत्नबोधाभावे तथोत्तरं न स्यादित्यर्थः । *कृतेरपीति । यथा कर्तृसंख्ययोरनुक्तयोरित्यर्थस्तथा कृतावनुक्तायामप्यर्थः । ननु पाचक इत्यत्र कर्तुः प्राधान्य पचतीत्यत्र तु क्रियायाः प्राधान्यात्कथं विवरणत्वमत आह *व्यत्यासे ऽपीति । *लिङ्येवेति । तत्रैव प्रवृत्त्यादिप्रतीतेः । लिङ्ग्रहणं लोटो ऽप्युपलक्षणम् । तेन क्वचिदाश्रयत्वादिकमपि व्यापारः । केषांश्चिन्मीमांसकानां धा-

त्वर्थस्याक्रियात्वेन कारकान्वयासम्भवात्काष्ठैः पाक इति न भवति । तत्राह *त्विष्टमेवेति ॥ ४ ॥

(कं०टी०)इत एवारुचेः सिद्धान्तमाह *परेत्विति । भाष्येण सूचितं सूत्रार्थमाह *युष्मदीति । क्रियाऽभिन्नसाधनार्थके युष्मदीत्यर्थः । ननु बाधितमिदमत आह *क्रियेति । कैयटस्यापीदमेव समत नतु प्राचीनवर्णितमुक्तमित्याह *अत एवेति । अत्र पक्षे सामानाधिककरण्यमुक्तरूपमेवेति न दोष इति भाव. । अन्त्ये उक्तदोषे परिहारं परोक्त खण्डयति *नचेति । मात्रव्यवच्छेद्यमेवाह *नार्थेति । अस्वाद्वादिप्रयोगव्यवस्थार्थमाह *अर्थविशेषेति । *तदुक्तम्–तदेतदभिप्रेत्योक्तम् । भेद्यम्–विशेष्यम् । भेदकम्–विशेषणम्,तयोर्यः सम्बन्धश्च तद्रूपा ये उपाधयस्तेषां यो भेदस्तन्निमित्त साधुत्वमित्येकोऽर्थ । तज्ज्ञानस्य बोधे न हेतुत्वम्, न वा तदभावनिश्चयस्याबोधे प्रतिबन्धकतेत्याह *तदभावेऽपीति । प्रतिपादितमिदमधस्तात् । तत्र दोषान्तरमाह *किञ्चैवमिति । तिङां कृतिवाचकत्वे इत्यर्थ' । तत्र लस्थानिककृतां साम्य भूषणादावुपपादितमेवेत्यतस्तदन्यत्रापि तत्व प्रतिपादयन्सामान्येनाह *कृतामपीति । तत्र परोक्तवैषम्यं खण्डयति *नचेति । आदिना क्षुदुपहन्तु शक्यम्,शैत्य हि यत्सा प्रकृतिर्जलस्येत्यादिपरिग्रहः । प्रयोगानुसारेणाह *क्वचिदिति । इद समूलयति *अत एवेति । लिङ्गस्य प्रयोगानुसारित्वादेवेत्यर्थः । केवलकृतौ प्रयोगाभावरूपवैषम्यमपि खण्डयति *केवलेति । उत्पन्ने विद्यमाने एव देवदत्ते तथाप्रयोगासम्भवात्कृत्याश्रयस्यात्मनो जननासम्भवाच्च कृतिमात्रविषयक एवाय प्रयोग इति भावः । वैषम्यान्तरं खण्डयति *न चेति । *कृति–प्रत्यये । *अन्यथा–तथानियमानङ्गीकारे । आपत्तिप्रसङ्गेन प्रागुक्तसाधकं बाधकत्वे पर्यवस्यतीति सिंहावलोकनन्यायेनाह *विपरीतमिति । प्रथमासिद्धये तथेत्यपि नेदानीं वैषम्यमित्याह *कृत्यनभीति । साम्यादिति भावः । नन्वेवमपि भोक्ता तृप्यतीत्यादावगतिः, कृतिमान्देवदत्त इतिवत्कृतिमती कृतिरिति प्रतीत्यभावेन सामानाधिकरण्यस्यासम्बन्धत्वेन कृदर्थकृतावाख्यातार्थकृतेरन्वयासम्भवादत आह *भोक्तेति । उक्तैतद्दोषतात्पर्यमाह *तस्मादिति । उक्तसर्वसाम्येऽपि परैस्तथाङ्गीकारादि-

त्यर्थ. । *एव च-तस्य तत्र प्रमाणत्वे च । मानुषानुभवतो ऋष्यनुभवस्य प्राबल्यादाह *ऋष्यनुभवेति । तत्र दोषान्तरमाह *किञ्चेति । *तत्र-तत्प्राचीनमते । आश्रयत्वस्याख्यातार्थत्वादाह *तवेति । कर्माख्याते फलमेवार्थ. कृतेस्तृतीयया लाभात् । फलानभिधानमेव कर्मानभिधानमिति तन्नव्यमतासाङ्गत्यायाह *तृतीयान्तेति । एतद्दोषाभावायाह *नत्रेति । कर्माख्याते इत्यर्थ । ननु तत्र कृतेनैवोपस्थितिरिति कथ तदभिधानेनाभिधानापत्तिरत आह *कर्तृकरणेति । कृञ सत्त्वात । तत्र दोषान्तरमाह *किञ्चेति । एतेन कालस्य धात्वर्थे ऽन्वयात्पदद्वयघटित. कार्यकारणाभावस्तव, मम तु आख्यातार्थे एवेति लाघवमित्यपि तदुक्तमपास्तम् । भूत पक्ष' जानातीत्यादौ कालान्वयाय तस्य तवाप्यावश्यकत्वाच्च । तत्र दोषान्तरमाह *किञ्चेति । *पश्यतीति । सप्तम्यन्तम् । व्यापारान्तरशून्यतया तिष्ठतीति यावत् । तत. पूर्वजातविक्लित्त्यनुकूलत्वाभावादाह *विशेषेति । दर्शनमात्रस्य कर्मत्त्वाद् आह *अवस्थानेति । तत्र दोषान्तरमाह *तस्यापि-तत्तिङोऽपि । ननु तयोर्विशेष्यविशेषणभावोऽन्यादृश इति कथ तवापि तत्त्वमत दीक्षितादिमतेनाह *विशेष्येति । दृष्टान्ते चित्रगवीसबन्धीति हि वृत्तौ बोध' । यत्सबन्धिन्यश्चित्रा गाव इति च विवरणवाक्ये तव तु तदर्थाश्रयस्य विवरणे ऽभानात्तत्त्वासङ्गतिरेव । सिद्धान्तमाह *वस्तुत इति । *अग्रे समासप्रकरणे । स्वतन्त्रे वाक्ये तु क्रियाया एव विशेष्यत्वम् । एव च तुल्यन्यायात् चित्रगुरित्येतद्विग्रहवाक्येऽपि प्रकृत्यर्थस्य विशेष्यत्व तत् ध्वननार्थमेव तद्विग्रहवाक्ये तच्छब्दप्रयोग. । एतेन य पचति स पाचक इति प्रथमान्तपदघटित तस्य विवरणमित्यपास्तम् । तदघटितस्यापि विवरणस्य दर्शनात्सर्वसमतत्वाच्च । तदाह *इतिदिगिति । *एतेन-उक्तदूषणजातेन । पूर्वतो वैलक्षण्यमात्रमाह *स चेति । नन्वेव प्राधान्यात्तत्रैव कारकान्वयापत्तिरत आह *धात्वर्थेति । सम्भवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वात् । नचैवमनिष्टापत्तिरत आह *काष्ठैरिति । ईदृशगुरुमतस्य तद्ग्रन्थे ऽनुपलम्भादाह *समेति । "तत्तु समन्वयाद्" इति सूत्रे इत्यर्थः ॥ ४ ॥

**यदपि कर्त्रधिकरणे नव्यमीमांसकाः फलावच्छि-**

न्व्यापारानुकूलः कृत्यादिराख्यातार्थः । सच व्यापारत्वेनैव । कृत्यादिव्यापारस्तु विशेष्यत्वानुरोधात्तिङ्वाच्यः । 'रथो गच्छति' इत्यादावाश्रयत्वमेव तिङर्थव्यापारः । तस्याप्यसत्त्वभूतस्यैव तिङोक्त्या व्यापारत्वात् व्यापारान्तरस्याननुभवात् । कालान्वयो धात्वर्थव्यापारे । "अनभिहिते" इत्यस्याबोधितकर्त्रादावित्यर्थः । बोधश्च शक्त्या आक्षेपाद्वा लक्षणया वा । तत्र कृति शक्त्या तिङि भावनयाऽऽक्षेपेण लक्षणया वा । विपरीतं तु न । भावनायाः प्राधान्येन प्रतीयमानतया प्रत्ययवाच्यत्वात् । कृदन्ते ऽपि भावनया कर्तुराक्षेपे तिङीव तस्याः प्राधान्यापत्तिः । तत्र कर्तुरेव प्राधान्यात् । आक्षिप्तादिधर्मिणमादायैवच सामानाधिकरण्यम् । सङ्ख्यान्वयश्च तत्रैव । अनुशासनमपि आक्षिप्ताद्यर्थानुशासकमेव । कारकान्वयः प्रत्ययार्थे एव साक्षात्परम्परया वा । अन्यथा काष्ठैः पाक इति स्यात् । अत एव "नानृतं वदेद्" इतिनिषेधस्य दर्शपूर्णमासप्रकरणपठितस्य विनिगमनाविरहाच्छब्दानृतार्थानृतोभयपरस्य क्रत्वर्थत्वसिद्धिः । कर्तुर्वाच्यत्वे श्रुत्या पुरुषार्थत्वप्रसङ्गात् । प्रकरणाद्धि क्रत्वर्थत्वम् । तस्य च श्रुत्यपेक्षया दुर्बलत्वं स्पष्टमेव । प्राग् लिखितलाघवादितश्च नैयायिकोक्तात्कृतिर्वाच्येति ।

तदपि न । 'शाब्दयामि' इत्यनुभवविरोधेनाक्षेपस्यायुक्तत्वात् । आक्षिप्ते शब्दोपस्थितसङ्ख्यान्वयायोगाच्च । किञ्च लक्ष्याया अपि व्यक्तेः

प्राधान्यस्य तव मते सत्त्वेन प्राधान्यानुरोधेन शक्तिकल्पना अयुक्ता । वाच्येन कर्त्रा लक्षितभावनाया अपि प्राधान्योपपत्तेः । अन्यथा व्यक्तेरपि वाच्यत्वापत्तावाकृत्यधिकरणोच्छेदः । परिच्छेद्यत्वं च व्यक्तेरिव कर्तुरपीति तस्यैवाख्याने विशेष्यत्वापत्तेश्च । पठति चैत्रः पचति चैत्र इत्यादौ स्पष्टं परिच्छेद्यताप्रतीतेः ।

किञ्च कृधातोर्भावनार्थत्वस्य दृष्टत्वेन सर्वत्र धातोरेव तदर्थत्वं युक्तम् । पूर्वोत्तरमीमांसयोरपि कृभ्वस्तीनां भावनासामान्यवाचकत्वोक्तेः ।

किञ्च कर्माख्याते पच्यते इत्यादौ पक्त्वेत्यादौ च पाकः क्रियते इत्यादि विवरणात्, "किं क्रियते" इति प्रश्ने "पच्यते" इत्युत्तराच्च, कारकान्वयानुरोधाच्च भावनालक्षणावश्यकत्वेन सर्वत्र भावनाया एव लक्ष्यत्वमुचितम् ।

किञ्चैवं कृत्स्वपि कर्तुर्वाच्यत्वानापत्तिः । वैषम्ये बीजाभावात् । आक्षिप्तकर्तुर्व्यक्तेरिव प्राधान्योपपत्तेः । लिङ्गसङ्ख्यान्वयस्तु तिङन्ते सङ्ख्यान्वय इव लक्षिते एवोपपन्नः ।

किञ्च कोशव्याकरणयोर्लाक्षणिकार्थान्वाख्यायकत्वे तयोः शक्तिग्राहत्वोच्छेदः । तयोर्लाक्षणिकार्थान्वाख्यानस्यादर्शनाच्च । अत एव तटादिपर्यायेषु गङ्गादिपदानुल्लेखः कोशे। शुक्लादिशब्दानां गुणिष्वपि शक्तिरेव, विनापि बाधप्रतिसन्धानं बोधात् ।

किञ्च कृतौ शक्तस्य विशिष्टे कर्तरि लक्षणायां

तस्य विशेष्यत्वापत्तिः । कृतौ शक्तिराश्रये लक्षणा । तत्र लक्ष्यार्थस्य शक्यार्थे विशेषणतेति न क्वापि दृष्टचरम् । गङ्गादिपदशक्यस्य तल्लक्ष्ये विशेषणताया एव दर्शनात् । व्युत्पत्त्यन्तरकल्पने गौरवम् ।

किञ्च यथा "लः कर्मणि" इत्यादिभिः शत्रादिविध्येकवाक्यतया धर्मिणि शक्तिर्बोध्यते तथा तिबादिविध्येकवाक्यतया ऽपि युक्तम् । वैषम्ये बीजाभावात् ।

नच "लः कर्मणि" इत्यस्य "द्व्येकयोः" इत्यनेनैकवाक्यतया कर्त्रादिगतैकत्वादिष्वित्यर्थेन विशेषणत्वात्कर्त्रादिर्न प्रत्ययार्थ इति शबरस्वाम्युक्तं युक्तम् । तिबादिविधिना "द्व्येकयोः" इत्यस्यैकवाक्यत्वे ऽपि तत्र कर्मणीत्यादेरभावात् तथावाक्यार्थस्यायुक्तत्वात् । लकारेण द्विवचनादिसंज्ञाभावेन लविधिनैकवाक्यता दुर्लभा । तथैकवाक्यतायामपि सुप्स्विव तिङ्क्ष्वपि कर्त्रादीना प्रत्ययार्थता सङ्ख्यायास्तद्विशेषणत्वं च दुर्वारम् ।

किञ्च संख्यायाः प्रत्ययार्थत्वे आख्यातजन्यबोधे तस्या विशेष्यत्वापत्तिः ।

अपिच कर्मांशेष्वेवमेवापत्तौ तस्याप्यप्रत्ययार्थत्वे भावनायाः कर्मव्यभिचारात्तदनाक्षेपे च पच्यते तण्डुल इत्यादौ कर्मप्रतीतिर्न स्यात् । नच संख्यया ऽऽक्षेपः । कर्मत्वशक्तिमत्त्वेन बोधार्थं शक्तेरावश्यकत्वात् । आक्षेपो ह्याश्रयत्वेन स्यादित्यूह्यम् ॥ ५ ॥

(कुं०टी०)*कृत्यादीति । मीमांसकैः कृतिरेव भावनाशब्देनोच्यते ।

अन्ये त्वाहुः। धातुना सिद्धो भावो यागदानादिरुच्यते तद्गतं साध्यत्वं त्वाख्यातेन ।

तदाहुः—

धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते ।

तथाऽपि सर्वसामान्यरूपेणैवाभिधीयते ॥ इति ।

*विशेष्यत्वेति । प्रत्ययार्थः प्रधानमिति न्यायात् । *आश्रयत्वमेवेति। तदेव चात्र भावनाशब्दवाच्यम् । व्यापारत्वं न क्रियात्वरूपमित्याह *तस्यापीति । ननु तिङि कर्तैव वाच्यो ऽस्तु भावनाया एवाक्षेपो ऽस्त्वित्यत आह *विपरीतं तु नेति । ननु तिङीव कृत्यपि भावना वाच्याऽस्तु माऽस्त्वाक्षेप इत्यत आह *प्राधान्यापत्तिरिति । ननु कर्तुरवाच्यत्वे युष्मदादिसामानाधिकरण्यं कथमत आह *आक्षिप्तेति । *धर्मिणम्—कर्त्रादिकम् । *अनुशासनम्—कर्तरि ल इत्यादि । *साक्षादिति। कर्तुः साक्षात्कर्मणः परम्परया । *अन्यथा—धात्वर्थे ऽपि कारकान्वये। शब्दानृतम्,अवाचकादिशब्दप्रयोगः । *पुरुषार्थत्वेति । वदनस्य पुरुषधर्मत्वेन निषेधस्यापि तद्धर्मत्वौचित्यात् । ननु स्मार्त एव निषेधो ऽस्तीति चेत्सत्यम् । तेन पुरुषस्य प्रत्यवायो बोध्यते, अनेन तु वैगुण्यम् । *परिच्छेद्यत्वमिति । परिच्छेदो विशेषावसायः । *आक्षिप्तकर्तुरिति। व्यक्तेरिव कर्तुरपि प्राधान्योपपत्तेरित्यन्वयः । *लिङ्गसंख्यान्वयस्त्विति । यथा तिङन्ते कर्तरि संख्यान्वय एवं कृदन्ते आक्षिप्तकर्तरि लिङ्गसंख्यान्वय इत्यर्थः । *कोशे इति। पूर्वान्वयि।कथं तर्हि शुक्लादिशब्दानां लाक्षणिकानां परिगणनमत आह *शक्तिरेवेति । अत्रैव हेतुमाह *विनापीति । *लक्ष्यार्थस्येति । लक्ष्यमाश्रयं प्रति शक्याया भावनायाः प्राधान्यमित्यर्थः ।

लक्ष्यस्य प्राधान्ये दृष्टान्तमाह *गङ्गादीति । *विशेषणत्वादिति । किन्तु एकत्वादीनामेवैकवचनादिवाच्यता ॥ ५ ॥

(क०टी०) जीर्णानां युक्तत्वस्य वक्ष्यमाणत्वादाह *नव्येति । *सच-कृत्यादिश्च । नन्वेव कुतो भिन्नशक्तिकल्पनाऽत आह *कृत्यादीति। *तिङ्वाच्य.-तिङ एव वाच्यः।कृत्यादीत्यादिसंग्राह्यमाह *रथइति। ननु तस्य सत्त्वरूपत्वात्कथं व्यापारत्वमत आह *तस्यापीति । स्वभावात् विकल्पादिवदिति भावः । नन्वन्य एव स्वारसिको ऽस्त्वत आह *व्यापारान्तरेति । नन्वेव समानपदोपात्तत्वप्रत्यासत्त्या तत्रैव कालान्वयापत्ति', प्राधान्याच्चात आह *कालेति।व्युत्पत्तिवैचित्र्यात्। प्रत्ययार्थव्यापाराश्रयत्वमेव कर्तृत्व धात्वर्थफलाश्रयत्व च कर्मत्वमिति भावः । अभिधानानभिधानव्यवस्थामाह *अनभिहिते इति । *तत्र-त्रयाणां मध्ये । आक्षेपे ऽशाब्दत्वापत्तेराह *लक्षणयावेति ।

अत एव कर्त्रधिकरणे भट्टैरुक्तम्—

यादृशस्तु गुणभूत. कर्त्तात्रावगम्यते न तादृशेन विना भावनोपपद्यते इत्यर्थापत्त्या ऽनुमानेन वा शक्या गमयितुम्—

इत्यादिना । ननु कृति आक्षेपादितः, आख्याते शक्त्येति वैपरीत्य कुतो न भावनायास्तत्राक्षेपादिलभ्यत्वसंभवादत आह *विपरीतमिति । *प्रतीति । अन्यथा तादृश्या तया तदाक्षेपस्य युक्तत्वात्तस्या अन्यथात्वे प्राधान्यानुपपत्तेः । नन्वेवं कृदन्ते ऽप्येवमेवास्त्वत आह *कृदन्तेऽपीति । *तत्र—कृदन्ते । एव च तत्र तस्या वाच्यत्वमावश्यकमिति युक्तस्तेन भावनाक्षेप. । अत एव तैरुक्तम्—"यदि कर्त्रा, धात्वर्थफलेन, वाऽऽख्यातेन भावनागम्यते तत' पाचकपाठकादिपदेष्विव तिरोहितस्वरूपा ऽवगम्येत प्राधान्यात्तु शब्दार्थत्वाध्यवसानम्" इति । पुरुषव्यवस्थामाह *आक्षिप्तादीति । चैत्रः पचतीत्यादाविति भावः । अत एव संख्यान्वयानुपपत्तिरपि नेत्याह *सख्येति । *तत्रैव—आक्षिप्तादिधर्मिण्येव। "लः कर्मणि" इत्याद्यनुशासनविरोध परिहरति *अन्विति । प्राधान्यादाह *कारकेति । कृत्याद्यनाश्रयविषयाणां साक्षादन्वयासम्भवादाह *परंपरेति । विपक्षे दोषमप्याह *अन्यथेति । धात्वर्थे तदनङ्गीकारे इत्यर्थः । *इति स्यात्—इत्यपि स्यात् ।

*अत एव–कृत्यादेरेवाख्यानार्थत्वादेव । एतत्फलितविपक्षासिद्धौ हेतुमाह *कर्त्तुरिति । *लाघवादित इत्यादिना विवरणम् । तत्रादौ आद्य पक्षे दोषद्वयमाह *शाब्देति । कर्त्तारमित्यादि । *आक्षिप्तेइति । "शाब्दी हि" इति न्यायादिति भावः । सख्यान्वयेति पाठ । लक्षणायामेतद्दोषद्वयाभावाद्दोषान्तरमाह *किञ्चेति । यत इति शेषः । एवमग्रे । *सर्वत्र–गान्दोग्धीत्यादाविति भावः । *अन्यथा-आख्याते तथाऽनङ्गीकारे । व्यक्तेरविशेष्यत्वे तु वाहदोहाद्यनन्वय स्पष्ट एव । ननु कर्त्रा स्वस्वरूपनिरूपकत्वेन भावनाया आक्षेपाद् गुणत्व जात्या तु लोके परिच्छेद्यतया ऽवगत द्रव्य तथै वाक्षिप्यते इति नतु गुणत्वमतस्तत्र दोषान्तरमाह *परिच्छेद्यमिति । ननु तदेव न मानाभावादत आह *पठतीति । प्रागुक्तरीत्या भूवादिसूत्रभाष्यसिद्धान्तावलम्बेन तत्र दोषान्तरमाह *किञ्चेति । युक्तमित्यनेन कृधातौ भावनाया धातुलभ्यत्वादाख्यातस्य धात्वर्थभावनानुवादित्वमाश्रयत्वार्थकत्वमेव वेति तन्मतश्रद्धाजाड्यनिरास' । ननु तस्य तत्त्वं न ममाभिमतमत आह *पूर्वोत्तरेति ।

कुर्यात् क्रियेत कर्त्तव्य भवेत्स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियत विधिलक्षणम् ॥ इति—

वार्त्तिकव्याख्यावसरे इति भाव । तत्र दोषान्तरमाह *किञ्चेति । एवमग्रेऽपि । क्रियते इत्यादीत्यादिना पाक कृत्वेत्यादि । तत्रैवाह *कारकेति । *सर्वत्र–कर्त्तर्यपि । एवेन कर्तृव्यवच्छेद । *एवम्–आख्याते भावनया कर्तुराक्षेपे । *वाच्यत्वानापत्तिः–तदभावापत्ति. । प्रागुक्तमभिसन्धायाह *वैषम्येइति । ननु प्राधान्यमेव बीजमत-आह *आक्षिप्तेति । नन्वेवमपि लिङ्गाद्यन्वयानुपपत्तिरेव बीजमत आह *लिङ्गेति । आदिना क्रियाविशेषणादि । इष्टापत्तावाह *तयोरिति । अन्यत्र क्वापीति भावः । कोशोल्लिखफलमाह *अत एवेति । एव च दृष्टान्तविधया कोशोक्तिसङ्गतिरिति बोध्यम । नन्वन्यत्र शुक्लादिषु तद्दर्शनमस्तीतीदमप्ययुक्तमत आह *शुक्लादीति । नन्वाख्यातस्य कृतौ शक्तस्य कि कृत्याश्रयविशिष्टे लक्षणा, उत शुद्धाश्रये ? । तत्राद्ये आह *विशिष्टेति । कृतेस्तत्र प्रकारतया निवेशात् । अन्त्ये आह *कृताविति । *तत्र–तयोर्मध्ये । वैपरीत्य तु दृष्टचरमित्याह *गङ्गादीति । ननु प्रकृते व्युत्पत्तिवैचित्र्यमत

आह *व्युत्पत्त्यन्तरेति । कर्मणीत्यादिना वर्तमाने लट् बहुवचने च लिडादि । आदिना कानजादि । पूर्वमीमांसाभाष्यकारोक्त तद्बीज खण्डयति *न चेति । *इत्यनेन—इत्यादिना । एवमग्रे ऽपि । ननु तद्बललविधिनाऽपि कुतो नैकवाक्यताऽत आह *लकाराणामिति । "द्व्येकयो." इतिसूत्रक्रमादाह *द्विवचनादीति । अभावेनेनि च्छेदः । ननु "ल· कर्मणि" इत्यत्र ल इति ङसन्तमादेशविवक्षाया षष्ठी । लस्य य आदेश· स तद्वते तत्रेत्येकवाक्यतासम्भव·, ततश्च "वर्तमाने लड्" इत्यादिनैव विहित इति न दोषोऽत आह *तथेति । समुच्चये ऽयम्, किञ्चेत्यर्थ· । अत एवाह *एकेति । *सुप्स्विवेति । तथा च न तथा ऽर्थ· किन्त्वेकत्वादिविशिष्टे कर्त्रादाविति। तदाह *कर्त्रादीनामिति । *अन्यथा सुबन्तेऽपि तदापत्तिरिति भाव· । यथाश्रुते त्वयं ग्रन्थो ऽनुपपन्न एवेति बोध्यम् । ननूक्तरीत्या एकवाक्यता निर्विवादा, तत्रेष्टानुरोधेन सुबन्ते ऽन्यथा सत्त्वे ऽप्यत्रैवमेवाङ्गीक्रियते ऽत आह *किञ्चसख्याया इति । तत्र तथाऽन्वये ऽतिप्रसङ्गमाह *अपिचेति । *एवमेवेति । कर्मगतैकत्वादावित्यर्थेन सख्याया एव प्रत्ययार्थत्वापत्तावित्यर्थ· । *तस्यापि—कर्मणो ऽपि । अकर्मकस्थले कर्मणोऽभावे ऽपि भावनायास्सत्त्वादाह *भावेति । अत्र धातुवाच्याया इत्यर्थ· । *तदिति । तयेत्यादि· । अत एवाह *कर्मेति । इम दोष परिहरति *न चेति । सिद्धान्तमतेनाह *कर्मत्वेति । यद्विना यदनुपपत्तिस्तावन्मात्रस्यैव तेनाक्षेप इति सिद्धान्तेनाह *आक्षेपो हीति । एव च दीक्षितभूषणादिमतमप्ययुक्तम् । अनुपपादकस्याप्याक्षेपेऽतिप्रसङ्गापत्तिस्तदाह *ऊह्यमिति ॥ ५ ॥

लाघवात्कृतौ शक्तिरिति तूक्तरीत्या दूषणीयम् ।

किञ्चैवं दण्डिपिङ्गाक्ष्यादिपदानामपि सबन्धे एव शक्तिः स्यात् । लक्षितेन च सम्बन्धिना सामानाधिकरण्यं स्यादित्यरुणाधिकरणोच्छेद इति समासे निरूपयिष्यामः ।

किञ्चैवं "तप्ते पयसि दध्यानयति सा वैश्वदेव्या-

मिक्षा वाजिभ्यो वाजिनम्" इत्यत्र वाजेनान्नेनामिक्षारूपेण सम्बन्धाद्वाजिनो विश्वेदेवास्ताननूद्य वाजिनगुणो विधीयते । तेनोभयरूपं वैश्वदेवमेकमेव कर्मेति पूर्वपक्षे वैश्वदेव्यामिक्षेत्यत्र श्रौतः सम्बन्धः, वाजिभ्यो वाजिनमित्यत्र वाक्येन । सत्यपि पदान्तरापेक्षणे स्वाभिन्नार्थकपदान्तरापेक्षायामपि श्रौतत्वम् । यत्र तु भिन्नार्थकपदान्तरापेक्षा तत्र वाक्यं प्रमाणम् । एवं च "वैश्वदेव्यामिक्षा" इत्येतद्वाक्यविहितयागानुवादेन न वाजिनद्रव्यविधानम् श्रौतद्रव्येण निराकाङ्क्षत्वात् तस्मात्कर्मान्तरविधिः । वाजिभ्य इति चापूर्वदेवताविधानमिति गुणाधिकरणस्य सिद्धान्तस्य भङ्गः ।

नच लक्षितद्रव्यमादाय श्रौतत्वं वाजिनं तु न तथेति वाच्यम् । एवं हि "नानृतं वदेद्" इतिनिषेधस्यापि श्रुत्या पुरुषार्थताया एव प्राप्त्या कर्तुरवाच्यत्वसाधनस्य वैयर्थ्यापत्तेः । क्रत्वर्थत्वसिद्धान्तासिद्ध्या कर्त्रधिकरणोच्छेदाच्च ।

नचाकृत्यधिकरणन्यायेन दण्डादिपदानां सम्बन्धे शक्तिरिति वाच्यम् । तत्र शक्तावपि आनन्त्यादिदोषसत्त्वात् ।

नच तदनुगमकसम्बन्धत्वे शक्तिरस्तु । दण्डीत्यादिजन्यबोधे नियमतस्तदभानात् । तत्तत्सम्बन्धेन दण्डविशिष्ट इत्येव बोधात् । नीलादिभ्यश्च नीलत्वविशिष्टनीलवत्ताप्रतीतेरनुभवसिद्धत्वात्तेषां गुणगतजातावेव शक्तिरिति म-

तोपपत्तिः । एवं च यज्जन्यबोधे नियमेन प्रकारतया भानम्, अननुगतत्वं च तत्रैवाकृत्यधिकरणन्यायप्रवृत्तिरिति बोध्यम् ।

किञ्च प्रत्ययार्थस्य प्राधान्ये "क्रियाप्रधानमाख्यातम्" इति निरुक्तस्थस्य क्रियाशब्दस्य प्रत्ययार्थपरत्वे आख्यातसामान्यलक्षणस्य भावाख्याते ऽव्याप्तिः । चैत्रेण सुप्यते इत्यत्र धात्वर्थविशेष्यतायास्त्वयाऽप्यङ्गीकारात् । अन्यलभ्यस्य तस्य शास्त्रबलात्प्रत्ययार्थत्वस्याप्यङ्गीकारे कर्तृकर्मणोरपि शास्त्रबलात्तद्वाच्यता दुर्वारा ।

किञ्च "नानृतं वदेद्"इत्यत्र तवाऽपि प्रकरणोपस्थाप्यार्थापेक्षया श्रुत्युपस्थापितभावनालाक्षितकर्तुः प्रथमोपस्थित्या क्रत्वर्थत्वासिद्धिः । प्रथमोपस्थितत्वमेव हि श्रुतेर्बलवत्त्वे बीजम् । मम श्रुतिप्रकरणाभ्यामस्य क्रतुयुक्तपुरुषधर्मता । अविरोधात् । विरोधे एव बलाबलचिन्ताप्रवृत्तेः । अन्यथा "जञ्जभ्यमानो ऽनुब्रूयान्मयि दक्षक्रतू" इत्यत्र क्रतावपि जञ्जभ्यमानपुरुषसत्वादविरुद्धाभ्यां वाक्यप्रकरणाभ्यां पुरुषसंस्कारमुखेन क्रत्वर्थत्वसिद्धान्तस्त्वदीय उच्छिद्येत ।

तदुक्तं भट्टैः—

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।

प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ इति ।

अनारभ्याधीतो "नानृतं वदेद्" इति स्मार्तनिषेधस्तु अर्थानृतपर एव । विदितवेदितव्याः परावरज्ञाः केचिदृषयो यद्वानस्तद्वानः इति प्रयोक्तव्ये यर्वाणस्त-

र्वाण इति प्रयुञ्जते याज्ञे कर्मणि पुनर्नापभाषन्ते तेन यर्वाणस्तर्वाणो नाम बभूवुरिति पस्पशास्थभाष्यस्वरसात् । तद्भाष्यादेव दर्शपूर्णमासप्रकरणपठित— स्योभयनिषेधकत्वम् । ते हेलयो हेलय इति कुर्वन्तः पराबभूवुरिति क्रतुप्रकरणपठितभाष्यलिखितश्रुत्यन्तराच्च ।

अत एव शिष्टा व्यवहारकाले स्वस्वदेशभाषया व्यवहरन्तो न प्रत्यवायं मन्यन्ते ।

अत एव कर्त्रधिकरणत्वेन तव सम्मते ऽधिकरणे "अकर्म क्रतुसंयुक्तं सयोगान्नित्यानुवादः स्यात्" इति पूर्वपक्षसूत्रम् । क्रतुसंयुक्तं क्रतुप्रकरणपठितम् न कर्मनिषेधकं "नानृतं वदेद्" इति वाक्यमनारभ्याधीतत्वेन 'नानृतं वदेद्' इति वाक्येन संयोगात्समानाकारत्वान्नित्यानुवादः स्यात् । एवं च क्रतावप्यनृतवदने स्मार्तमेव प्रायश्चित्तमिति तदर्थः । तदुत्तरं "विधिर्वा संयोगान्तराद्" इति सिद्धान्तसूत्रम् । अत्र संयोगपदं संयुज्यते कारणमनेनेति व्युत्पत्त्या प्रयोजनपरम् । स्मार्तेन हि तेनानृतवदने पुरुषस्य प्रत्यवायः । वर्जने च तदभावः । नतु क्रतोः किञ्चित्तद्भावाभावयोर्वैगुण्यमवैगुण्यं वा ।

एवं च यः स्वस्य प्रत्यवायमङ्गीकृत्य क्रतुमविगुणमिच्छति तेन अनृतं न वर्ज्यं स्यात् । क्रतुप्रकरणस्थेन तेन क्रतोर्वैगुण्यमुच्यते इत्यतो नानुवादः, किन्तु विधिरेवेत्यर्थ इति ॥ ६ ॥

( कुं० टी० ) *सम्बन्ध एवेति । आकृत्यधिकरणन्यायात् ।

येत्" "न मांसं भुञ्जीत"इत्यादिर्निषेधः पुरुषार्थो ऽपि प्रकरणात्क्रत्वङ्गमपीत्यर्थः । *अर्थानृतपरएवेति । क्रतोरन्यत्र शब्दानृतस्यादोषत्वात् । अत्रैव दृष्टान्तमाह *विदितेति । ननु "विभाषा गमहनविदविशाम्"इति वेट्कत्वाद् "यस्य विभाषा"इति निषेधः प्राप्नोति । सत्यम् । तौदादिकस्य विकल्पः । यदुपाधेर्विभाषा तदुपाधेर्निषेधः, "आदितश्च"इति "विभाषा भावादिकर्मणोः" इति योगविभागात् । ननु "उदितो वा"इति भावार्थे क्त्विविकल्पविधानात् भावार्थे निष्ठायामेव निषेधः स्यादिति चेत् । मैवम् । प्रत्ययार्थो नोपाधिः, "तेन निर्वृत्तम्" इति निर्देशात् । परः परमात्मा । अवराः, हिरण्यगर्भादयः । *पठितेति । "नानृतं वदेद्" इतीत्यर्थः । *श्रुत्यन्तराच्चेति । याज्ञे कर्मणि शब्दानृतस्यापि दोषत्वश्रवणादित्यर्थः ।

*नित्यानुवादइति । उपनयनप्रभृत्यामरणं स्मार्तो ऽनृतवदननिषेधस्तस्यैवायमनुवादः इत्यर्थः । *प्रयोजनपरमिति । स्मार्तेन निषेधेनानृतवदने पुरुषस्य प्रत्यवायो बोध्यते, नतु क्रतुवैगुण्यमित्यर्थः ॥ ६ ॥

(क० टी०) *एवम्—लाघवात्कृतौ शक्त्यङ्गीकारे । एवमग्रेऽपि । *पदानामपीति । यौगिकानामपीत्यर्थः । एवेन द्रव्यवाचित्वव्यवच्छेदः । ननु सामानाधिकरण्यानुरोधेन तत्र नैवमत आह *लक्षितेनेति । नन्वक्षरमर्यादया कथं तत्रैव शक्तिलाभो ऽत आह— *समासे इति । इदमपि पररीत्या । सिद्धान्तस्त्वनुपदमेव स्फुटीभविष्यति । अरुणाधिकरणोच्छेदवद् गुणाधिकरणोच्छेदो ऽपि तव मते इत्याह *किञ्चैवमिति । *इत्यत्रेति । किमामिक्षावाक्यविहितयागे वाजिनाख्यो गुणो विधीयते, अथवा द्रव्यदेवतासंयोगेन कर्मान्तरमिति संशये द्वितीयपक्षे गौरवात्तत्रेति शेषः । द्रव्यदेवतयोर्योगस्वरूपत्वादुभयरूपत्वादुभयरूपत्वं द्रव्यकृतम्, एकत्वं

देवताकत्वमित्याह *तेनेति । *श्रौत.-द्रव्यदेवतयोः । एवमग्रे ऽपि । नन्वामिक्षाया अपि तत्पदसमभिव्याहारादेव देवतासम्बन्धावगमात्कथं तस्य श्रौतत्वमत आह *सत्यपीति । प्रकृते तत्कृतसाम्ये सत्यपीत्यर्थः । विशेषमाह *स्वाभिन्नेति । अभिधानपर्यवसानायेत्यादि । अपिना तदनपेक्षासमुच्चयः । *भिन्नेति । पर्यवसिताभिधानस्येतरप्रत्यायनायेत्यादि । अवधारणमुभयत्रापि बोध्यम् । *एवञ्च—उक्तरीत्या प्रमाणभेदेच । ननु देवतकये कथं तत्त्वमत आह *वाजिभ्य इति । यौगिकानां द्रव्यानभिधायकत्वेन तदसङ्गतेराह *भङ्गइति । *एव हि—लक्षणयाऽपि श्रौतत्वाङ्गीकारे हि । किञ्चेत्याद्युक्तदोषद्वयमुद्धरति *नचेति ।

अयम्भावः-आकृत्यधिकरणन्यायानङ्गीकारे ऽधिकरणद्वयमुक्ताशयकम्, तदङ्गीकारे तु तत्र सम्बन्धे एव शक्तिस्तत्राद्यसाध्यस्य लक्षितेन सामानाधिकरण्येन सिद्ध्या तदुच्छेदेन दोषः, द्वितीयस्य तु नचलक्षितेत्यादिरीत्योपपत्तिरिति न तदुच्छेदः । यद्यप्युक्तदोषद्वयात्तथा दुर्वचमिति तदुच्छेद एव, तथाऽप्युत्पत्तिशिष्टेन बलीयसा ऽरुणोवाक्तोक्तकर्मानुवादेन तद्विधिरिति न तदुच्छेद इति सम्बन्धः । तत्रैव यद्वा स्वसिद्धान्ते तन्न्यायेनाशङ्कते *नचेति । *तत्र-सम्बन्धे । एवं च व्यक्तिपक्षादविशेष इति न्यायाश्रयणवैफल्यमिति भावः । तन्न्यायेनैवाह *नचतदन्विति । *दण्डीति । तदादिजन्यबोधे बुद्धिस्थत्वादिवदिति भावः । कादाचित्कत्वे ऽप्याह *नियमत इति । नन्वेवं कथं नीलादीनां गुणगतजातौ शक्तिरत आह *नीलादिभ्यश्चेति । [1]नीलत्वविशिष्टनीलेति पाठः । एवं सति तद्विषयतामुपसंहरति *एव चेति । नीलादौ भाने दण्ड्यादावभाने चेत्यर्थः । तत्रैव च लक्षितेन सामानाधिकरण्यनिर्वाहो नान्यत्रेति भावः । 'प्रकृतिप्रत्यययोः' इति न्यायेन भावनायास्तदनुरोधेन प्रत्ययवाच्यत्वमिति युक्तिं दूष-

---

(१) एतत्कलानुरोधान्मूले नीलत्वेन नीलवचेति पाठः प्रतीयते । उपलब्धकलापुस्तकान्तरे नीलत्वेनेति प्रतीकमादाय गुणगतेनैवेत्यर्थ इति व्याख्यानमपि दृश्यते परन्तु उपलब्धमूलपुस्तकद्वितये तदनुपलम्भान्मूलपुस्तकानुरोध्येव पाठो मूलेऽवस्थापितः ।

यति *किञ्चप्रत्ययेति । एकवाक्यन्वार्थमाह *क्रियेति । अन्यथा तद्विरोधापत्तिरिति भाव । *परत्वे—वाच्ये इति शेष । *धात्वर्थेति । प्रत्ययार्थकालसंख्यानिष्ठप्रकारतानिरूपितेत्यादिः । त्वयापीत्यपिना सिद्धान्तिसमुच्चयः । ननु तत्र तस्य धातुलभ्यत्वे ऽपि तदर्थं तेनानुवाद इति तदर्थत्वमप्यङ्गीक्रियते इत्यत आह *अन्येति । धातुलभ्यस्य भावस्येत्यर्थ । *अपिः—स्थितधात्वर्थत्वसमुच्चायकः । *तद्वाच्यता-तिङ्वाच्यता । अभ्युपेत्यापि तन्मतमत एवेत्यादूयुक्तिं खण्डयति *किञ्च नानृतमिति । *प्रथमोपेति । श्रुतेः सर्वथा निरपेक्षत्वमुत्तरोत्तरस्य पूर्वपूर्वसापेक्षत्वमिति तत्सिद्धान्तादिति भावः । नन्वयं दोष सिद्धान्ते ऽपि तदुक्त एवेति समत्वाद्चोद्य एवेति आह *ममात्विति । कर्त्रादेराख्यातार्थत्ववादिन इत्यर्थ । तुरुक्तवैलक्षण्ये । तथा च सिद्धान्ते न दोष इति न समत्वमिति भावः । तक्रकौण्डिन्यन्यायवन्नेत्याह *विरोध एवेति । *अन्यथा—तत्तुल्यत्वाङ्गीकारे । मदुक्तमेव त्वन्मूलभूतवार्त्तिककृत्संमत न त्वदुक्तमित्याह *तदुक्तमिति । आदिना ऽनृतवदनादि ।*पुरुषार्थमित्यन्तमेक पदम् । स्त्रीगमनमांसभक्षणादिरूपो य पुरुषार्थस्त समाश्रितो ऽपि प्रतिषेध प्रकरणाश्रयात् क्रतोरप्यङ्गमिष्ट इत्यर्थ । अत एव पुरुषार्थोऽपीति वाच्ये 'तमपि श्रित' इत्युक्तिः सफला । अत एव च "अकर्म" इति वक्ष्यमाणाधिकरणे—

वदेदिति श्रुतेरत्र पुरुषः सम्प्रतीयते ।
विधिरप्यर्थवानेव क्रत्वर्थे ह्यन्यथा भवेद् ॥ इत्युक्त्वा,

तस्माद्विधयस्तावत्पुरुषार्थास्ततश्च प्रतिषेधानामपि तदनुसारित्वात्पुरुषार्थत्वसिद्धि ।

अत आत्मोपकाराय पुरुषो नानृत वदेदिति शास्त्रार्थो ऽवधार्यते इति तैरेवोक्तम् । एतेन भक्षादिरिति व्यस्तपाठ प्रत्युक्तः । तथाच तत्त्वान्निषेधस्यापि तत्त्वतस्तत्त्व च । अन्यथा प्रकरणपाठासगतिरेवेति भावः । यत्तु अनारभ्याधीतेन स्मार्त्तनिषेधेनैव सर्वत्र पुरुषप्रत्यवाये सिद्धे तत्प्रकरणपाठितस्य क्रत्वर्थत्वमेव युक्तमिति, तन्नेति ध्वनयन्नाह *अनारभ्येति । क्रतुप्रकरणापाठित इत्यर्थः । मनुयाज्ञवल्क्याद्युक्तत्वादाह *स्मार्तेति । गुणोपसहारपादे "कार्याख्यानादपूर्वम्" इत्यधिकरणे ( उ० मी० अ० ३ पा० ३

अ० ९ सू० १८ ) भामत्यां स्पष्टमिदम् । श्रुत्यनुवादकभाष्यस्यार्थतोऽल्पानुवादमाह *विदितेति । अनेन श्रवणमननिदिध्यासनरूपमुक्ता । *परावरेति । विद्याऽविद्याप्रविभागज्ञा इत्यर्थं । *प्रयुञ्जते इति । वर्त्तमानसमीपे भूते लट् । एवमग्रेऽपि । अत एव बभूवुरित्याग्रिमसङ्गति. । *याज्ञे इति । अनेन तत्त्वज्ञानिनामपि कर्माधिकार सूचयति । *पुनस्त्वर्थं । *तेयर्वाणइति । योगिन एते विरक्त्यतिशयाल्लौकिकेष्वर्थेषु आग्रहविरहिणः यथा तथाऽस्माक भवत्विति विवक्षवः, ते ऋषयस्तथा वक्तव्ये तथोक्त्या तन्नामानो बभूवुरित्यर्थ. । सैव तेषां सज्ञा जातेति तात्पर्यम । दोषसत्त्वे तु तथोक्तेरसम्भवेन श्रुतौ तथाऽऽख्यानासङ्गतिरिति भावः । नन्वेव तस्यापि तत्त्वमेव कुतो नात आह *एतदिति । याज्ञे कर्माणि स्यादित्यर्थः । एव. प्रसिद्धाविति न पूर्वविरोध' । अप्यर्थो वा । अत एवाह *ते इति इति । *कुर्वन्त'–अपशब्दभाषण कुर्वन्तस्ते ऽसुरा इत्यर्थः । *क्रत्विति । ज्योतिष्टोमेत्यर्थः । उभयाकाङ्क्षा प्रकरणम् ।

शिष्टाचारसवादो ऽप्यत्रेत्याह *अत एवेति । अय भाष्यादिसंमतस्तयोर्भेदो जैमिन्यादिसमतो ऽपीत्याह *अत एवेति । उक्तरीत्या तयोर्भेदादेवेत्यर्थः । सूत्रद्वयेऽन्वयः । गामश्वमितिवत्समुच्चय । सङ्गच्छते इति शेष. । तत्र अन्यथाऽधिकरणार्थो वक्ष्यमाण इति तथा स्वस्यानिष्टत्वादाह *तवेति । भावार्थाधिकरणं त्वितो भिन्नमिति भाव । एतेन तन्मते मिथो विरोधो ऽपि सूचितः । कर्त्तुर्हि वाच्यत्वसाधकमेवेदं सूत्रमिति तृतीयतुर्यपादे इत्यर्थ । साकाङ्क्षत्वाच्छेषमाह *अनारभ्येति । सयोगादित्यस्य व्याख्या *समानेति । अनुवादत्वस्य सफलत्वनियतत्वात्पूर्वपक्षतात्पर्यमाह *एव चेति । तस्य तदनुवादत्वेचेत्यर्थः । *स्मार्तमेवेति ।

निन्दितेभ्यो धनादानं वाणिज्य शूद्रसेवनम् ।
अपात्रीकरण ज्ञेयमसत्यस्य च भाषणम् ॥

सङ्करापात्रक्रियासु मासः शोधनमैन्दवमिति—
मन्वाद्युक्तमेवेत्यर्थः ।

एवेन यजुर्भ्रेषप्रायश्चित्तादिनिरासः । फलभेदमेवाह *स्मार्ते नहीत्यादिना । *तेन—निषेधेन । एवमग्रेऽपि । बोध्यते इत्यग्रे शेष । तस्याग्रे ऽप्यनुषङ्ग । किञ्चिदर्थमेवाह *तद्धिति । *वा चार्थ । *एव चेति । आत्मदोषपरिहाराय पुरुषेणानृतन्न वाच्यमिति तत्तात्पर्यं चेत्यर्थः । *अङ्गीकृत्य—अङ्गीकृत्यापि । तदुक्त तैरेव यदा दर्शपूर्णमासस्थोऽपि तदतिक्रम करोति तदा बाह्यातिक्रमवदस्य स्वय प्रत्यवायमात्र स्यान्न कर्मफलप्रतिबन्ध । नहि शुद्धपुरुषधर्मातिक्रमै क्रतव. प्रत्यवयन्ति ।

तथाहि—

यो नाम. क्रतुमध्यस्थ. कलञ्जादीनि भक्षयेत् ।
न क्रतोस्तत्र वैगुण्य यथाचोदितसिद्धितः ॥ इति ।

क्रतवो हि स्वसम्बधिनो विधिप्रतिषेधावपेक्षमाणास्तदतिक्रमे सति विगुणा भवन्ति । ये तु पुरुषगता विधिप्रतिषेधास्ते क्रत्वन्तरगता इवास्य सदसद्भावयोरविशिष्टा । नहि तेषु गुणत्वबुद्धिरुत्पन्ना येनातिक्रमे वैगुण्यबुद्धिः स्यात् । तेन दर्शपूर्णमासयोरनृत वदन्नरकं च प्राप्नुयाद्दर्शपूर्णमासफलञ्चाविकलमवाप्नुयादिति स्मृत्यर्थ. । श्रौतस्तु प्रकरणयुक्तपुरुषधर्म इत्यत्रैषोऽर्थो विज्ञायते वर्जितानृतवदनकेन पुरुषेण कृतौ दर्शपूर्णमासौ फल साधयत इति प्रकरणसामर्थ्यात् पुरुषगतापूर्वसाधनत्व लक्षयित्वाऽनृत प्रतिषिद्धम् । अतश्च तदतिक्रमे दर्शाद्यपूर्वमेव वैगुण्यान्न स्यान्न तु पुरुषस्य कश्चित्प्रत्यवाय. । नहि तदानीं कल्प्यमानः प्रत्यवाय. स्वतन्त्रपुरुषसम्बन्धित्वेन कल्पयितु शक्यते इति । तदाह *क्रतुप्रकरणेति । *क्रतोः—तस्यैव । 'वा स्याद्' इति कोशाद्वाऽवधारणे सूत्रेइत्याह *विधिरेवेत्येति । *केचित्—भट्टप्रभृतय ॥ ६ ॥

**परेतु "अथ ब्रह्मचारिणो व्रतम्" इत्युपक्रम्य "नेक्षेतोद्यन्तमादित्यम्" इतिवदस्यापि पाठात् स्मार्त "नानृतं**

---

( १ ) वा स्याद्विकल्पोपमयोरेवार्थेच समुच्चये इति विश्वः ।

( २ ) केचिदित्युपलब्धमूलपुस्तकेष्वनुपलब्धमिति मूले नोपन्यस्तम् । कलानुरोधात्तद् 'विधिरेवेत्यर्थ' इति एतन्मूलोत्तर ज्ञेयम् ।

घदेद्" इति तत्संकल्पपरम् । इदं तु संयोगान्तरात् क्रतुप्रकरणपाठाद् व्रतोपक्रमाभावाच्च, अनुवादफलाभावाच्च, प्रयोजनसम्भवाच्च प्रतिषेधविधायकमेवेत्यर्थ उचितः । नहि केवलप्रयोजनमात्रेण वाक्यार्थव्यवस्थितिः । नहि प्रयोजनानुवर्त्ति प्रमाणामिति न्यायात् ।

न्यायेन वाक्यार्थे निर्णीते प्रयोजनासिद्धिरित्यन्यत् ।

नच तादृशोपक्रमानुपलम्भ इति वाच्यम् ।

ब्रह्मचारिप्रकरणे—

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ।

ब्राह्मणोऽत्र ब्रह्मचारी । ततस्तद्व्रतप्रदर्शनपरम्—

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।

भास्करालोकनाश्लीलपरिवादादि वर्जयेद् ॥ इति—

याज्ञवल्क्योक्तेः । व्रतमपीडयन् मध्वादिपरिहारेण । अश्लीलमसभ्यभाषणमिति मिताक्षराव्याख्यातेनाश्लीलपदेनासभ्यानृतभाषणयोः संग्रह इति सूचितम् । भास्करालोक उदितादेरिति च मिताक्षरा । शुक्तं परुषवच इति च । आदिपदेन स्मृत्यन्तरोक्तगन्धमाल्यादिवदनृतस्यापि सग्रह इत्यन्ये ।

"नेक्षेतोद्यन्तम्" इत्यादिविषये—

उपक्रमे श्रुतं ब्रह्मचारिव्रतपदे यतः ।
तदन्वयबलात्कर्मविशेषो ह्यत्र बोध्यते ॥

इति मिश्रोक्तेश्च ।

प्रकृताधिकरणे शबरस्वाम्यपि । "संयोगान्तराद्" इति सूत्रैकदेशमुपादाय नियमानुष्ठानेन पुरुषस्य

संबन्धः स्मर्यते पदार्थप्रतिषेधेन संयोग इह पुरुषस्ये-त्ययमिह संयोग इत्याहेत्याहुः ।

नियमश्च सङ्कल्प एव । तदनन्तरं क्रतुसंयुक्ते पूर्वोक्तनिषेधवाक्ये, "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति विधिवाक्ये च साधारणतया पूर्वपक्षोपपादकम् "अहीनवत्पुरुषधर्मस्तदर्थत्वाद्" इति सूत्रम् । उभयमपि पुरुषधर्मस्तदर्थत्वात् । आद्ये "वदेद्" इतिश्रुत्या, द्वितीये "जञ्जभ्यमानो ऽनुब्रूयाद्" इति वाक्येन पुरुषार्थत्वावगमात् । ज्योतिष्टोमप्रकरणपठितम् "द्वादशोप सदास्तिस्र एवोपसदो द्वादशाहीनस्य" इत्यहीनसंयोगात्प्रकरणादुत्कृष्यते तद्वत् । श्रुतिवाक्याभ्यां च प्रकरणं दुर्बलमिति तदर्थः ॥ ७ ॥

(कुं० टी०) *संकल्पपरमिति । "अथ व्रतम्" इत्युपक्रमादुदयकालिकादित्यानीक्षणसंकल्पवदनृतवदनाभावसंकल्प इत्यर्थ इति भावः । संयोगान्तरादित्यस्यार्थमाह *क्रतुप्रकरणेत्यादि । स्मार्ते ब्रह्मचारिव्रतोपक्रमः कथमिति शङ्कते *नचेति । असभ्यं व्रीडादिदायकम् । *आदिपदेनेति । केचिदनृतवदनेऽश्लीलं सगृह्णन्ति, अन्ये आदिपदेनेत्यर्थः । ब्रह्मचारिव्रतविषयत्वं प्रकारान्तरेण द्रढयति *इत्यादिविषये इति । मिश्रोक्तेश्चेत्यत्रान्वयः । ब्रह्मचारिव्रतविशेषो ऽत्र बोध्यते इति कारिकार्थः । कर्मविशेषश्चानीक्षणसङ्कल्परूपः । *स्मर्यते इति । स्मार्तेन "नानृतम्" इत्यनेन नियमानुष्ठानसम्बन्धः

---

( १ ) परार्थेतिपाठ परिकल्प्य कुञ्जिकाकारो व्याख्यत् परन्तु कलाऽनुरोधेन मूलपुस्तकत्रितये उपलम्भाच्च पदार्थेति पाठ एवा वस्थापित. ।

पुरुषे बोध्यते । *परार्थेति । इह क्रत्वर्थनिषेधेन पुरुषस्य संयोगो बोध्यते इत्यर्थः । *ज्योतिष्टोमेति । ज्योतिष्टोमप्रकरणे श्रूयते-"तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य" इति । एकेनाह्ना निष्पाद्यत्वात्साह्नो ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वमभिषवदिवसात्पूर्वं कर्तव्या होमा उपसदः । चतुर्विधा हि सोमयागाः—एकाहाहीनसत्रायनात्मकाः । एकैकादिवससाध्या अग्निष्टोमादयः एकाहाः । द्विरात्रादयो ऽहीनाः द्वादशाहः सत्राहीनोभयात्मकः । त्रयोदशरात्रादीनि सत्राणि । संवत्सरादिसाध्यानि अयनात्मकानि । अत्र न हीन इति व्युत्पत्त्या ज्योतिष्टोम एवाहीनशब्देनोच्यते । स हि सर्वस्य यागस्य प्रकृतिः । तथा च प्रकरणाज्ज्योतिष्टोम एव द्वादशत्वत्रित्वयोर्विकल्पः इति पूर्वपक्षः । द्विरात्रादावहर्गणे अहीनशब्दो रूढः इति सवनप्रकरणादुत्कृष्य तत्रैव द्वादशत्वविधिरिति सिद्धान्तः ॥७॥

(क टी) केचिदितिसूचितामरुचिं वक्तुं सिद्धान्तसूत्रस्य सिद्धान्तार्थमाह *परेत्वित्यादिना आहुरित्यन्तेन । अस्यापीत्यस्यार्थं सूचयन्नाह *स्मार्त्तमिति । प्रजापतिव्रतान्तर्गत मन्वाद्युक्तचेत्यर्थः । *तदिति । यावद्ब्रह्मचर्यानृतवदनाभावेत्यर्थ । *इदन्त्विति । श्रौतन्त्वित्यर्थं । तच्च स्थलत्रितये । तत्र-द्वितीयाष्टके तैत्तिरीये "विश्वरूपो वै" इति प्रश्ने "नासोमयाजी" इत्यनुवाके दर्शपूर्णमासमहाप्रकरणावान्तरदाक्षायणयज्ञप्रकरणे "तस्यैतद् व्रत नानृत वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वास. पल्पूलयेयुरेताद्धि देवा सर्वं न कुर्वन्ति" इत्येकम्, प्रथमाष्टकब्राह्मणे "ब्रह्मसन्धत्तम्" इतिप्रश्ने "द्वादशासु" इत्यनुवाके आधानप्रकरणोत्तर "तस्मादाहिताग्निर्नानृत वदेन्नास्य ब्राह्मणो ऽनाश्वान् गृहे वसेद्" इत्यादि द्वितीयम्, आरण्यके "सहवै" प्रश्ने कुष्माण्डहोमप्रकरणे "न माꣳसमश्नीयान्न स्त्रियमुपयान्नोपर्यासीत जुगुप्सेतानृतात्पयो ब्राह्मणस्य व्रतम्" इति तृतीयम् । तत्र आद्यतृतीययो. सयोगान्तरादित्यस्यार्थ.—*क-

त्विति । आद्यद्वितीयतृतीयसाधारणम् अर्थान्तरमाह *व्रतोपक्रमेति । सर्वत्र तद्व्रतोपक्रमाभावाच्चेत्यर्थः । तथैवाह *अनुवादेति । अत्र सर्वत्र प्रायश्चित्तान्तरोक्तेस्तत्प्रायश्चित्ताप्राप्तिरिति भाव । आद्यतृतीयाशयेनाह *उक्तेति । क्रतुवैगुण्येत्यर्थः । *प्रतिषेधेति । तत्राद्य "तस्यैतद् व्रतम्" इत्युपक्रमाद्यावत्क्रतुसंकल्पविषयप्रतिषेधविधायकम्, द्वितीय श्रुतोपक्रमाभावेऽपि क्रतोर्ग्राह्यत्वादनन्तरम् 'आहिताग्निव्रतानि "नानृत वदेद्" इत्याद्यापस्तम्बोक्तत्वात्तस्य यावज्जीवसकल्पविषयप्रतिषेधविधायकत्वम् । अत एव प्रयोगकारैराधानप्रयोगोत्तरम् 'अथाहिताग्नेर्व्रतसङ्कल्प—अनृत न वदिष्यामि, अनाश्वास ब्राह्मण न वासयिष्ये, सूर्योढमतिथि नापरोत्स्ये, ऋचीषपक्व नाशिष्यामि, क्लिन्न दारु नाग्नावाधास्यामि, अन्तर्नौव्यपो नाशिष्यामि, स्वकृते इरिणे जात न खादिष्यामि, पुण्यो भविष्यामि, हिंकृत्य वाग्यत स्त्रियमुपैष्यामि, हिंकृत्य स्त्रियमुपैष्यामीति वा, सायमुद्धरणानन्तरमाहुतावहुताया नाशिष्यामि, नक्तमन्नादन्यन्न दास्ये नक्तमन्नादन्यदपि दास्ये इति वा, एतस्मिन्सवत्सरे पशुनाऽनिष्ट्वा मास न भक्षयिष्यामीत्याहिताग्नेर्व्रतसंकल्पा यावज्जीवमनुष्ठेयाः' इत्युक्तम् । तृतीय तत्र पाठात्तदनुपक्रमाच्छुद्धक्रतुगतप्रतिषेधविधायकमित्यर्थः । *विधायकमेवेत्येवेन तन्मात्रव्यावृत्तिः । औचित्यमेव प्रतिपादयस्तत्रारुचिमाह* नहीति । केवलशब्देन सजातीयव्यवच्छेद । मात्रपदेन विजातीयस्य । सिद्धस्य गतिश्चिन्तनीया । दृष्टान्तसाधारण्येन शङ्कते *न च तादृशोपेति । "तस्यैतस्य स्नातकस्य व्रतानि" इत्युपक्रम्याश्वलायनेन, "अथ स्नातकव्रतानि" इत्युपक्रम्यापस्तम्बेन "व्रतानीमानि धारयेद्" इत्युपक्रम्य मनुना यथा स्नातकव्रतान्युक्तानि तद्वदत्र नोक्तमित्यर्थः । तथा च तस्य तत्परत्व दुर्घटमिति भाव । शाब्दतदुपक्रमाभावे ऽप्यार्थस्तदुपक्रम इत्याह *ब्रह्मचारीति । 'ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि' इति पूर्वार्द्धादाह *ब्राह्मण इ-

---

१ अत्र कलापुस्तके ईरिणे नावसास्यामीत्युपलभ्यते परन्तु कात्यायनश्रौतसूत्रे ईरिणे उत्पन्न न खादिष्यामीत्युक्ते, तद्व्याख्याकारैश्च उत्पन्न तिन्तिड्यादि न भक्षयिष्ये इति व्याख्यानात्तदेवात्रावस्थापितम् ।

ति । तद्ग्रहण श्राद्धादेः श्राद्धभोजनव्युदासार्थम् इति भावः । *तत-अव्यवधानेन । *परामधुमासेति पाठे परा इतिरूपा या याज्ञवल्क्योक्तिस्तस्या इत्यर्थः । *परस्येति पाठे परस्येत्यस्य याज्ञवल्क्यवचनादित्यर्थः । नन्वेतावता दृष्टान्तसिद्धावप्यनृतवदननिषेधस्य तत्त्व न लब्ध "नाहित नानृतञ्चैव" इति याज्ञवल्क्योक्त तु स्नातकप्रकरणस्थमतो मिताक्षरामाह *व्रतमिति । आदिना मांसादि । तामेवाह *अश्लीलमिति । नन्वेवमपि दृष्टान्तासङ्गतिः सामान्यतो रविदर्शनाभावस्यैव तत्त्वलाभादत आह *भास्करेति । पर्युषितस्याभक्ष्यप्रकरणे उक्तेराह *परुषमिति । मिताक्षरेत्यस्यानुषङ्गः । नन्वश्लीलमसभ्यभाषणमित्येव पाठ इति कथ तत्सग्रहो ऽतस्तदुक्तयुक्त्यैवाह *आदीति । *स्मृत्यन्तरेति । तत्प्रकरणे द्यूत च जनवाद च परिवाद तथा ऽनृतमित्यादि मन्वापस्तम्बाद्युक्तेरित्यर्थः । दृष्टान्ते उपक्रमः शाब्दोऽप्यस्तीति पार्थसारथिमिश्रसंमतिमप्याह *नेक्षेतोद्यन्तमिति । ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गते इत्यर्थः । स्पष्ट चेदमादौ नञर्थवादे, लक्ष्म्यां च मिताक्षराव्याख्यायाम् । स्वोक्तभिन्नार्थे तद्भाष्यसमतिमप्याह *प्रकृतेति । "अकर्मक्रतुसयुक्तम्" इत्यधिकरणे इत्यर्थः । *संयोगान्तरादिति सूत्रैकेति । "विधिर्वा संयोगान्तराद्" इति सूत्रस्य विधिर्वा सयोगादित्येकदेशमित्यर्थ. । तावदेव सूत्रमिति भ्रमनिरासायेदम् । *नियमेति । विधिर्वाऽयन्दर्शपूर्णमासयोर्नानृतवदेदिति, नानुवादः, कुत. सयोगान्तरादित्यादिः । सयोगभेदस्यैव प्रतिपादको नियमेत्यादिग्रन्थः । *स्मर्यते–स्मृत्या प्रतिपाद्यते । *पदार्थेति । क्रतुगतसङ्कल्पविषयानृतवदनपदार्थेत्यर्थः । *इह–श्रौतविशेषे । पुरुषस्येत्यग्रे इति कथमन्यत्र श्रूयमाणोऽन्यस्यानुवादो भविष्यतीति तत्र शेष. । तत्फलितमाह *इत्ययमिहेति।नतु भट्टाद्युक्त इत्यर्थ ।ननु तावताऽपि तस्य तत्सङ्कल्पपरत्वालाभ एव नियमानुष्ठानेनेत्युक्तेरत आह *नियमश्चेति । *सङ्कल्प एवेति । यावद्ब्रह्मचर्यानुष्ठीयमानानृतवदनाभावसङ्कल्पविशेष एवेत्यर्थः । तस्मादुक्ताधिकरणतस्तस्य क्रतुयुक्तपुरुषधर्मतैव न तदुक्तक्रत्वर्थतेति सिद्धम् । इदमेवैतदग्रिमाधिकरणेन द्रढयति *तदनन्तरमित्यादिना । *क्रत्विति । दर्शपूर्णमासप्रकरणपठिते इत्यर्थः । यद्यपि पूर्वं निषेधपरम् अकर्मेत्युक्तेः

परिशेषादिद विधिपरमिति भाष्ये उक्तम्, श्रुत्या सह प्रकरण विरुध्यते नवेति पूर्वत्र विचारितम् इदानीं लिङ्गवाक्याभ्यां सह विचार्यते इति वार्त्तिके उक्तम्, तथापि सिद्धान्तमतेन तुल्यत्वेन अत्र विनिगमनाविरहादाह *पूर्वोक्तेति । तत्रैव "त्वष्टाहतपुत्र" इत्यनुवाकपठितमाह *जञ्जभ्येति । *उभयम्-अनृतवदनाभावतदनुवचनरूपमित्यर्थः । पुरुषपदार्थमाह *पुरुषधर्मइति । तात्स्थात्ताच्छब्द्यमिति भावः । हेतोर्व्याख्या *आद्येइति । दृष्टान्तार्थमाह *यथेति । तिस्र एव साह्नस्योपसद इति पाठः । श्रुतेस्तैत्तिरीयाया. तथैव सत्त्वात् । साह्न' एकाहिको ज्योतिष्टोम । अहीनः द्व्यहादिद्वादशाहान्ताहर्गणसाध्य । उपसद इष्टिविशेषाः । तत्तात्पर्यमाह *श्रुतीति ॥ ७ ॥

तदनन्तरं "प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवद्"इति सिद्धान्तसूत्रम् । प्रकरणात्तद्युक्तस्य तत्क्रतुयुक्तस्य अनृतवदनाभावानुवचनादि संस्कार इति तदर्थः । विरोधे हि श्रुतिवाक्ये बलवती । प्रकृते च तयोरविरोधात् श्रुतिप्रकरणाभ्यां वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषसंस्कारत्वम् । यथा क्रतुयुक्तव्रीह्यादीनामेव प्रोक्षण संस्कारकम् । तेनोभयत्रापि वैपरीत्ये क्रतुवैगुण्यं सिद्धम् । अवैपरीत्ये तत्साद्गुण्यं च । याजुषप्रैषनिमित्तं प्रायश्चित्तं च सिद्धम् ।

नच "नानृतं वदेद्" इत्यस्य क्रतुगतपुरुषधर्मत्वे यजमानस्य प्राधान्यात् प्रधानभूतकर्त्रा यजमानेनैव वर्ज्यं स्यात् । क्रत्वर्थत्वे प्रतिषेधस्य वर्जनीयतया कर्त्रनपेक्षत्वेन यज्ञप्रवृत्तेन यजमानेन ऋत्विग्भिश्च वर्जनं सिध्यतीति विशेष इति वाच्यम् । श्रुतिप्रकरणाभ्यां क्रतुसम्बद्धपुरुषकर्तृकानृतवदना-

भाव इति बोधेन तत्सम्भवात्। क्रतुकर्तृकर्तृकेति बोधे मानाभावात्।

किञ्च वर्ज्यभावनायाः कर्त्रनपेक्षत्वे व्यभिचारेण भावनायाः कर्त्राक्षेपकत्वमेव भवदुक्तं भज्येत।

किञ्च युष्मदस्मद्भिन्नसामानाधिकरण्ये प्रथम इत्यर्थकेन "शेषे प्रथमः" इत्यनेन तत्सामानाधिकरण्ये एव प्रथमस्य साधुत्वाद्धदेदित्यस्य साधुत्वाय पुरुष इतिपदस्य, तदर्थस्य वाऽध्याहारावश्यकत्वेन जञ्जभ्यमानवाक्यतो वैषम्यं दुरुपपादम्।

नच तत्सामानाधिकरण्याभावे प्रथम इत्येव तदर्थः। "उपपदे समानाधिकरणे" इत्यधिकारेण शेषपदस्वारस्येन च तादृशार्थासम्भवात्।

नचैवं 'त्वं च चैत्रश्च पचथः' इत्यत्र परत्वात् प्रथमापत्तिः। उपयुक्तासमभिव्याहृतस्य उपयुक्तादन्यस्य शेषपदार्थत्वात्। स्पष्टं चेदं भाष्ये।

न्यायसुधाकारोऽपि क्रत्वर्थत्वे क्रतुफलसिद्ध्यर्थत्वात्पुरुषार्थत्वमप्यस्तीति वदन् क्रतुसम्बद्धपुरुषधर्मतापक्षमेव साधु मेने।

एवञ्च जञ्जभ्यमानसंस्कारोऽपि क्रतुसम्बद्धपुरुषमात्रस्येति बोध्यम्। तव तु विपरीतम् यजमानस्यैव स स्यात्।

एतेन प्राधानात् यजमानसंस्कार एवेति परास्तम्।

यद्यपीदं द्वयमपि दर्शपूर्णमासप्रकरणे एव पठितं तथाऽपि तद्गतक्रतुत्वसामान्यापेक्षमेव, पूर्वोक्तमहाभाष्यात्। भगवान् शबरस्वामी तु "नानृतं वदेद्"

इत्यस्य पुरुषधर्मत्वमुत्सूत्रमेवाशङ्क्य उत्सूत्रमेव कर्तुराख्यातप्रत्ययार्थत्वनिरासेन प्रौढ्या समाहितवान् ।

तथा भावार्थाधिकरणे भगवन्तो भट्टपादाः प्रौढिवादेनैव प्राधान्यादियुक्तिभिर्भावनाया अप्रत्ययार्थत्वमुत्सूत्रमेवोक्तवन्तः ।

"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते" इति हि तत्र सूत्रम् । कर्मशब्दा यजेत दद्याज्जुहुयादित्यादयस्ते भावार्थाः प्राधान्येन क्रियाऽर्थाः । "क्रियाप्रधानमाख्यातम्" "भावप्रधानमाख्यातम्" इत्युक्तेः, अतस्तेभ्यः क्रिया प्राधान्येन प्रतीयेत हि । प्रधान्यादेवैषोऽर्थः क्रियारूपः सर्वत्र विधीयते न नामार्थः । तस्याश्च शीघ्रनाशित्वाद्वारमपूर्वं स्वीकार्यमिति तदर्थः । नह्यनेन भावनायाः प्रत्ययार्थत्वं न धात्वर्थत्वमित्यर्थः स्पृश्यते । नव्यमीमांसकानां तु प्रौढिवादेनाप्युक्ते ऽर्थे मुख्यसिद्धान्तत्वभ्रम इति सुधियो विभावयन्तु ।

तस्माद्भावना धातुवाच्यैव ।

तदुक्तं "कारके" इति सूत्रे भाष्ये—"अधिश्रयणोदकासेचनैधोपकर्षणादिक्रियाः कुर्वन् देवदत्तो यदा पचतीत्युच्यते तदा तत्राधिश्रयणादिषु पचिर्वर्तते, ज्वलनक्रियां कुर्वन्ति काष्ठानि यदा पचन्तीत्युच्यन्ते तदा तत्र पचिर्वर्तते, सम्भवनं धारणं च कुर्वती स्थाली यदा पचतीत्युच्यते तदा तत्र पचिर्वर्तते" इति । सम्भवनं ग्रहणम्, धारणम् आसमाप्ति स्थापनमिति कैयटः ।

कर्तृकर्मरूपो धर्मी प्रत्ययार्थः । स्पष्टं चेदं "तिङ्भ्यामेकं द्रव्यमभिधीयते" इत्यादिना "गत्यर्थलोटा"इति सूत्रे भाष्ये । कर्त्रादिपदानां शक्तिपरत्वेऽपि शक्तिशक्तिमतोरभेदात्स एव प्रत्ययार्थः । कर्त्रादिविभक्त्या शक्तिमदभेदमापन्नाया एव शक्तेरुक्तिरिति "सार्वधातुके यक्" इत्यत्र कैयटोक्तेः । प्रत्ययार्थः प्रधानमित्युत्सर्गस्यापि भाष्यनिरुक्तकाराद्यनुभवबलेन त्याग इति । तदर्थकारकस्य धात्वर्थं प्रति विशेषणतेति केचित् ॥ ८ ॥

( कुं० टी० ) *श्रुतिप्रकरणाभ्याम्—"नानृतं वदेद्"इत्यत्र । *उभयत्रापि—उक्तवाक्यद्वयेऽपि । *वैपरीत्ये—अनृतवदने, अनुवचनाभावेच । *भ्रेष इति । भ्रेषो भ्रंशो यथोचितादित्यमरः । *वैषम्यमिति । "नानृतम्" इत्यत्र पुरुषार्थत्वस्य त्यागो "जञ्जभ्यमान"इत्यत्र तत्स्वीकार इत्येतदित्यर्थः। *त्वंच चैत्रश्च पचथ इति । उपयुक्तादन्यः शेषः, इह चोपयुक्तस्य त्वंपदस्य सत्त्वान्न प्रथमः इत्यर्थः । *तद्गते—ज्योतिष्टोमगते इत्यर्थः। तेन क्रत्वन्तरेऽप्ययं विधिः। *महाभाष्यादिति । यर्वाणस्तर्वाणो नाम ऋषयो याज्ञे कर्मणि नापभाषन्ते इत्यादिकात् । *धातुवाच्यैवेति । व्यापारातिरिक्तभावनायां तु मानाभावः । शक्तिपरत्वेऽपि कर्तृत्वादीनामेव वाच्यताया वक्ष्यमाणत्वात् । *उत्सर्गस्यापीति । बहुशो व्यभिचारदर्शनात् ॥ ८ ॥

( क० टी० ) *तदनन्तरम्—पूर्वपक्षानन्तरम्। प्रकरणविशेषादित्यत्र कर्मधारयो न तु षष्ठीतत्पुरुषो व्यावर्त्याभावात् । तथाचास्याविवक्षितत्वं फलितमित्याशयेनाह *प्रकरणादिति । *युक्तस्य—पु-

रुषस्य । तदर्थमाह *अनृतेति । तद्वतसङ्कल्पविषयेत्यादिः । अ नुवचनादीति पाठः । अनुब्रवणादीनि पाठे ब्राह्मणो ब्रवणादिति बहुनिर्बोध्या । अत एव ब्रवणो वचन वाचा जल्पित गदित गिरेति शब्दार्णव । साच प्रागुक्तरीत्या कौस्तुभे स्पष्टा । आदिना ज्योति ष्टोमप्रकरणे "अङ्गिरसो वा इत उत्तमा. सुवर्ग लोकमायन् तेऽप्सु दीक्षातपसी प्रावेशयस्तीर्थे स्नाति तीर्थमिव हि सजातानां भ वति" इति श्रूयमाणतीर्थस्नानपरिग्रह. । निपातानामनेकार्थत्वाद्वे त्वर्थकवासूचितप्रागुक्ततुल्यत्वोपपादनायाह *विरोधेहीति । *त- यो -श्रुतिप्रकरणयोः,वाक्यप्रकरणयोश्च । तदेवाह *श्रुतीति । य- द्यपि सिद्धान्ते द्वितीयेऽपि श्रुतिरस्ति तथा ऽपि ततस्तत्सामान्य सस्कारत्वसिद्धिरत उक्तरीत्या तद्विशेषसस्कारत्वायाह *वाक्ये ति । दृष्टान्तमाह *यथेति । विचारफलमाह *तेनोभेति । सि द्धान्ततात्पर्यमाह *याजुषेति । यजुर्वेदोक्तेत्यर्थ. । भुवः स्वाहे- त्यादिकमित्यर्थ । स्वसिद्धान्ते भट्टाद्युक्तदोषमुद्धरति *नचेति । *वर्ज्यम्-तत्रानृतवदनम् । प्रतिषेध्यस्येत्यस्य वर्जनमित्यत्राप्यन्वय. । *पुरुषेति । तत्सामान्येत्यर्थ. । विशेषग्रहणे बीजाभावात्तदाह *क्र- त्विति । पत्नीग्रहण तु उभयथा ऽपीष्टमेवेति भाव. । *इतीति । इत्या दीत्यर्थ । ननु वर्ज्यतया तस्य तदनपेक्षत्वमुक्तमिति तथा बो धस्याप्यसम्भवेन कथ तत्सिद्धिरतस्तदुक्तौ दोषान्तरमाह *किञ्चे- ति । तत्रैव दोषान्तरमाह *किञ्चेति । तयोरेव प्रकृतत्वादाह* युष्म- दिति । तस्यैव प्रकृतत्वादाह *भिन्नेति । *साधुत्वात्-साधुत्वबो- धनात् । परमतेनाह *पुरुषइतीति । अर्थाध्याहारमतेनाह *तदर्थेति । *वैषम्यमिति । तत्र वाक्यमत्र श्रुति., सर्व सर्वगत तद्, अत्र यजमानगतमेवेत्येव चेत्येवमित्यर्थः । अन्य एव शेषपदार्थ इत्याह *नचतदिति । युष्मदस्मदित्यर्थ । एवे- नोक्तार्थव्यवच्छेद । तदनङ्गीकारे आह *शेषेति । अन्यथा न प्रथ म इत्येव ब्रूयात् । *एवम्-उक्तार्थाङ्गीकारे । उपयुक्तान्यसामानाधि- करण्यसत्त्वात् आद्यविशेषणेन व्यावृत्तिरित्याह *उपेति । अत्र मानमाह *स्पष्टचेदमिति । तत्रैव सूत्रे इत्यर्थ. । तत्रहि-'तत्र युष्म दस्मदन्येषु प्रथमप्रतिषेधः शेषत्वाद्' इत्याद्युक्तम् । स्वोक्तसिद्धान्ते राणककारसमातिमप्याह *न्यायेति । भट्टसोमेश्वरो ऽपीत्यर्थ. ।

*क्रत्विति । क्रतुफलमपूर्वं तत्सिद्धिः । *पुरुषेति । तदर्थत्वमपीत्यर्थः । तुल्यन्यायत्वादाह *एवञ्चेति । तत्र तथासिद्धान्तेनेत्यर्थः । *संस्कारोऽपीति । तस्य तदनुवचनरूपसंस्कारोऽपीत्यर्थः । मात्र कात्स्न्यें । नव्यमीमांसकमते दोषमाह *तवात्विति । प्राधान्यादाह *यजमानेति । शानच् कर्त्रर्थत्वात् । तन्मतं खण्डयति *एतेनेति । विशेषबोधे मानाभावेनेत्यर्थः । *द्वयमपि—विधिनिषेधात्मकमपि । एवञ्च क्रत्वन्तरे न तथेति भावः । *पूर्वोक्तेति । याज्ञे कर्मणीतीत्यर्थः । नन्वेवम् अत्रत्याग्रिमभाष्यविरोधोऽत आह *भगवानिति । प्रौढिसाधक हेतुगर्भविशेषणमिदम् । एवमग्रेऽपि । सूत्राभिमतस्योक्तत्वादाह *उत्सूत्रमिति । तदनारूढमेवेत्यर्थः । एवमग्रे ऽपि । आहेत्यादिनेति भावः । *उत्सूत्रमेवेति । अत्र ब्रूम इत्यादिनेति भावः । तथा च सूत्रविरोधान्न तस्यापि तद् अभिमतं सिद्धान्तत्वेनेति न तद्विरोध इति तात्पर्यम् । एवम् अत्रत्यवार्त्तिककारविरोधोऽपि सिद्ध एवेति तमुपेक्ष्य स्थलान्तरस्थवार्त्तिक विरोधमप्याह *तथेति । आदिना प्रागुक्तान्ययुक्तिसङ्ग्रहः । ननु तदधिकरणसूत्रस्यैव सोऽर्थो न तु प्राग्वदिति कथमुत्सूत्रत्वमत आह *भावार्था इति । *हि-यतः । *तत्र—भावार्थाधिकरणे द्वितीयाध्यायादौ । सूत्रार्थमाह *कर्मेति । स्वसिद्धान्तैकवाक्यतया आह *प्राधान्येति । भाष्यमाह *क्रियेति । निरुक्तमाह *भावेति । इद हेतुगर्भमित्याह *अत इति । *एषोऽर्थ-एष एव । अत एवाह *ननामार्थइति । पराभिमतम् अधिकरणतात्पर्यमाह *तस्याश्चेति । ननु स एवार्थः सूत्रस्य कुतो नात आह *नह्यनेनेति । उक्तसूत्रेणेत्यर्थः । स्पर्शोऽपि न तस्य किमु वाच्यम् स इतीति सूचयन्नाह *स्पृश्यते इति । नन्वेव कथ नव्यमीमांसकैस्तथा सिद्धान्तितमत आह *नव्येति । एवात्वर्थवादोक्तसिद्धान्त प्रत्ययार्थत्वनिरासेन विशेष वक्तुमुपसहरति *तस्मादिति । एवेन प्रत्ययवाच्यत्वनिरासः । तत्र भाष्यसमतिमप्याह *तदुक्तमिति । आदिना तण्डुलावपनादि । तत्रेत्यस्य भाष्यस्य व्याख्या *अधीति । एवमग्रेऽपि बोध्यम् । अत्रत्यप्रागुक्तसिद्धान्त विशेष वक्तुमुपसहरति *कर्तृकर्मेति । तत्सिद्धमित्यादिः । अत्र भाष्यसमतिमप्याह *स्पष्टमिति । आगच्छ चैत्र ग्राममोदनं भोक्ष्यसे इत्यादौ वारणायाह *तिङ्भ्या-

मिति। *इत्यादीत्यनेन यत्र तत्र निघात इत्यस्य परिग्रहः। लोट्लटोः सांनिध्यात्तद्वाच्यमेवात्र कारक लोडन्तलडन्तयोश्चार्थ लक्षणो निमित्तनिमित्तीभाव इति कैयटः। ननु सप्तमीपञ्चम्याविति सूत्रे तथा स्पष्टत्वात्तत्रापि तथेति कथमेकद्रव्याभिधानमत आह *कर्त्रादीति। उक्ते क्वचित् सुब्नियामकेषु तेषान्तत्परत्वेऽपीत्यर्थं । सर्वत्राह *श क्तीति। *स एव-शक्तिमानेव। नन्वभेदे ऽपि नियम कथ तिङन्ते ऽत आह *कर्त्रादीति। तत्र विहितविभक्त्येत्यर्थं । नहि शक्ति साक्षात् क्रिया गता। अत एव शक्तिः कारकमिति पक्षे कर्तृकर्मादिजबोधे शक्तिरूपकर्तृत्वादेर्नियमतः प्रकारतया भानेन तत्रैव शक्तिसिद्धौ सामानाधिकरण्योपपत्तिरिति बोध्यम् । नन्वेवं प्रत्ययार्थं प्रधान मिति न्यायविरोधो ऽतस्तावत्प्राचां मतेनाह *प्रत्ययार्थं इति। कृदादौ क्लृप्तस्येत्यर्थः। *त्याग -तिङन्ते। सर्वसङ्ग्रहायाह *धात्व र्थमिति। *केचित्-दीक्षितभूषणकृदादय ॥ ८ ॥

परे तु 'प्रत्ययार्थः प्रधानम्' इति यत्र प्रत्ययस्य वाचकता तद्विषयम् । "कर्तरि" इत्यादेः स्वाद्विषया-द्धातोरित्यर्थेन तिङां तद्द्योतकत्वाद्विशेषणत्वमेव। भावे इत्यस्य तथाऽन्वयस्यैव युक्तत्वात् ।

अत एव "स्नुक्रमोः"इतिसूत्रे भाष्ये "भावकर्मणोः" इति सूत्रस्य "भावकर्मवृत्ताद्धातोः" इत्यर्थकथनं कृतम् । तस्य च भावकर्मविषयाद्धातोरित्यर्थं कैयट आह। तद्विषयत्वं च धातोः कर्मादिविशिष्टक्रियावाचकत्वेन, कर्मादीनां स्वप्रकृतिकप्रत्ययवाच्यत्वेन वा। तत्र तिङ्विषयलकारस्थले आद्यम् । "क्रियाप्रधानमाख्यातम्" इति स्मृत्यन्तरात् । शत्रादिविषये त्वन्त्यम् । "सत्त्वप्रधानानि नामानि" इति स्मृतेः । "लः कर्मणि च" इत्यादेरप्ययमेवार्थः भावकर्मादिवृत्तादिति । शानजादौ कारकप्राधा-

न्यमुक्तरीत्यैव । अन्यथा शानजादिस्थानिलेन भावस्य सत्त्वभूतस्य बोधनम्, तिङ्स्थानिलेन त्वसत्त्वभूतस्य बोधनामिति तवापि न सिद्ध्येत् । तस्मादुभयत्राप्यर्थे तदंशे सूत्रतात्पर्यं चेदत्रापि तथैवास्तु । "वर्तमाने लट्" इत्यादिविहितलानुवादेन चैतद् अर्थनियामकम् ।

अत एव "कर्तरि कृद्" इत्यादिना कर्त्रादेः प्रत्ययार्थत्वबोधनमेव । भाव[1]बोधकादित्यस्य केवलक्रियामात्रबोधकादित्यर्थः ।

किञ्च "द्व्येकयोः" इत्यादीनां तिङ्विषयाणामपि नियमत्वमिति भाष्ये स्पष्टम् तद्विदाम् । सिद्धौ च नियमो भवति । धातुवाच्यत्वे च "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति सामान्यसूत्रेण सर्वत्र सिद्धौ नियमत्वं युज्यते नान्यथा । संख्यायाश्च कारकस्येव क्रियायामेवान्वय इत्युपपादयिष्यते ।

स्पष्टं चेदं "बहुषु" इति सूत्रे भाष्ये ।

तत्राहि "तिङो ऽविशेषेण धातुमात्राद्विधीयन्ते इति नियमार्थं द्व्येकयोः" इत्याद्युक्तम् । एकवाक्यतया विधानमिति पक्षे ऽपि फलतो नियम एव, तद्विनाऽपि तत्र सिद्धेः ।

अत एव "अनुदात्तङितः" इति सूत्रे भाष्ये अत्र पक्षे तेषां सूत्राणां परिभाषात्वव्यवहारः ।

अत एव अजघांः, अचकादित्यादौ धातुमात्रात्सर्वबोधः सङ्गच्छते । लुप्तस्मरणाद्बोध इति तु

---

१ विषयादिति पाठः ।

एकशेषसूत्रे प्रत्ययलक्षणकार्यसिद्धेर्लोपफलत्वं वदता भाष्यकारेण तिरस्कृतम् । लोपमजानतां तथा बोधानापत्तेः ।

यत्तु कैयटेन तिङां स्वभावतः संख्यावाचकत्वाश्रयेण तिङ्विषयाणां तेषां नियमार्थत्वमुक्तम् ।

तन्न । एवं स्वभावाश्रयणे तेनैव तत्तत्तिङां तत्तत्संख्यावाचकत्वसम्भवेन नियमशास्त्राणामपि वैयर्थ्यापत्तेः । सुब्विषयाणामप्यनेन एकद्वित्र्यादिपक्षेष्वपि नियमार्थत्वसम्भवेन तत्र नियमोपपादनाय विशिष्य तत्र पञ्चकपक्षालम्बनवैयर्थ्यापत्तेश्च । शास्त्रमात्रस्यैव वैयर्थ्याच्चेत्यन्यत्र विस्तरः ।

"सार्वधातुके यक्" इति सूत्रस्थस्य "सार्वधातुकार्थाः कर्त्रादयः" इति भाष्यस्य तद्द्योत्या इत्येवार्थः । विकरणस्त्वत्र पक्षे साधुत्वार्थ एव । "विकरणार्थाः" इति पक्षे विकरणद्योत्या अपि । "भावकर्मवाचिनि" इत्यादेरपि तद्बोधके इत्यर्थः । तत्र 'सार्वधातुकार्थाः' इति पक्षे एकत्वादीनामपि तद्द्योत्यत्वान्नियमानुपपत्तिमाशङ्क्यार्थनियमाश्रयणेन परिहृतं भाष्ये ।

न च 'विकरणार्थाः' इति पक्षे लेनाभिधानाद्विकरणो न स्यादिति भाष्यदूषणानुपपत्तिः, द्योतकसमुच्चयस्य व्यतिलुनीते गार्ग्यायणीत्यादौ दर्शनादिति वाच्यम् । लिङ्लिटोर्विकरणरहितयोः, अदादौ च लकारमात्रेणापि तद्द्योतनेन तेनैव कृतकृत्यतया विकरणानुत्पत्त्यापत्तिरित्याशयात् । व्यतिलुनीते इत्यादौ नात्मनेपदमात्रेण तद्द्योतनम् । अन्यत्राप्यात्मनेपददर्शनात् ।

गार्ग्यायणीत्यादौ च न ष्फमात्रेण तद्द्योतनम् । गार्ग्यायणे ऽप्यायनस्य दर्शनात् । तत्र शब्दशक्तिस्वभावात्क्वचिद्विकरणसहितस्य तद्द्योतकत्वम्, क्वचित्केवलसार्वधातुकस्यापीति तद्दूषणपरिहारः । विकरणानां नैरर्थक्यप्रवादस्तु तं विनाऽपि सार्वधातुकमात्रेणार्थद्योतनात् । क्वचित्तत्साहाय्येनार्थप्रतीतेरर्थवत्त्वव्यवहारो ऽपि ।

अत एव "स्त्रियाम्" इति सूत्रे भाष्ये स्त्रीत्वस्य प्रत्ययार्थत्वपक्षे प्राधान्याद्विवचनाद्युत्पत्तिमाशङ्क्य प्रधानस्यापि द्रव्याभेदेन प्रतीत्या समाहितम् । न तु तस्य प्रकृत्यर्थं प्रति विशेषणत्वाश्रयेण द्योत्यत्वपक्षविशेषणतोक्ता ।

एवं सुपामपि द्योतकतैव । पञ्चकं च प्रातिपदिकार्थः । एतन्मूलकमेव "सत्त्वप्रधानानि नामानि" इति । तत्र हि नामपदेन सुबन्तम् इत्यनुपदमेव स्फुटीभविष्यति ।

स्त्रीप्रत्ययान्तस्य तु नामत्वम् । शास्त्रप्रक्रियायां ततो ऽपि अर्थबोधात्तत्र प्रत्ययार्थत्वपक्षे द्विवचनाद्यनुत्पत्तिराशङ्किता । तेन 'प्रत्ययार्थः प्रधानम्' इति व्युत्पत्तिरजेत्यादौ व्यभिचरितेति परास्तम् ।

अत एव सूत्रकृता प्रधानप्रत्ययार्थवचनमशिष्यमर्थस्यान्यप्रमाणत्वादित्येवोक्तम्, न तु व्यभिचरितत्वादित्यप्युक्तमिति वदन्ति ॥ ९ ॥

( कुं० टी० ) *तथाऽन्वयस्यैवेति । धात्वर्थस्यैव प्रत्ययेन

द्योतनात् । *स्वप्रकृतिकेति । धातुप्रकृतिकेत्यर्थः । *उभयत्रापीति । सत्त्वभूते ऽसत्त्वभूते च । *तदंशे–भावांशे । *अत्रापि–"लः कर्मणि"इत्यादावपि । *तथैवेति । तेनैव प्रकारेण विशेष्यत्वं चेत्यर्थः । *अत एवेति । "कर्तरि कृद्"इत्यत्र कर्तृविषयाद्धातोरित्यर्थेनेत्यर्थः । *तिङ्विषयाणामपीति ।

अयं भावः–"तिङो ऽविशेषेण धातुमात्राद्विधीयन्ते" इति भाष्यात्संख्याविशेषानुपादानेनेत्यर्थः । एवं च प्रातिपदिकस्येव धातोरपि संख्याकारके अर्थः । "लः कर्मणि" इत्यस्यापि कर्माणि वृत्ताद्धातोर्ल इत्यादिरेवार्थः इति ।

*सामान्यसूत्रेणेति । "तिप्तस्झि" इत्यादिना, "स्वौजसमौट्" इत्यादिनाच । *क्रियायामेवेति । आरोपात् । ननु पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्याकारकयोरपि प्रातिपदिकार्थत्वादस्तु नियमः, तिङि तु कथं नियमो ऽत आह *तिङो ऽविशेषेणेति । *एकवाक्यतयेति । अनभिहिते कर्मणि यदेकत्वं तत्र एकवचनमित्यादिकम् । *तद्विनाऽपीति । तादृशविधानं विनाऽपि सामान्यसूत्रेण सिद्धेरित्यर्थः । *परिभाषात्वेति । यत्रात्मनेपदं भवति तत्र "अनुदात्तङितः" इत्युपतिष्ठते । तेन प्रथमं लादेशा इति विकरणं न व्यवधायकमिति भावः । *तिरस्कृतमिति । लोपस्य प्रत्ययलक्षणमात्रफलकत्वोक्तेः । *यत्तुकैयटेनेति । कर्तृकर्मणोर्विधीयमानास्तिङः संख्यायुक्तयोरेव तयोर्बोधका भविष्यन्ति । संख्याविशेषश्च स्वभावतः प्रयोगदर्शनादेव गम्यते इति भावः । *नियमार्थत्वमुक्तमिति । भाष्यांशे ऽप्युक्त इत्यर्थः । *सार्वधातुकार्था इति । भावकर्मवाचिनि सार्वधातुके यक् कर्त्रर्थे सार्वधातुके शबित्यर्थात् । *साधुत्वार्थ एवेति । तिबादिभिरेव

द्योतितया पुनर्द्योतकार्थताया अभावात् । *विकरणार्था इति । भावकर्मणोर्यगित्याद्यर्थात् । *अर्थनियमेति । एकस्मिन्नेकवचनमेवेत्याकारकेत्यर्थः । तेन कर्त्रादिमात्रद्योतकत्वाभावे ऽपि भवत्येष नियम इति भावः । *विकरणो न स्यादिति । तथाच तच्छास्त्रवैयर्थ्यमिति भावः । *व्यतिलुनीते इति । अत्रात्मनेपदव्यतिशब्दौ कर्मव्यतिहारद्योतकौ । *लिङ्लिटोरिति । तत्र विकरणाभावेऽपि कर्त्रादिबोधाल्लकारमात्रस्यैव द्योतकत्वावश्यकतया ऽन्यत्र विकरणो न स्यादेवेत्यर्थः । दृष्टान्तस्तु विषम इत्याह *व्यतिलुनीते इत्यादाविति । कारीषगन्ध्येत्यादौ ष्यङो ङित्त्वसामर्थ्यात्ष्यङ्ङीषौ । *व्यवहारोऽपीति । अत एव विकरणानामन्वर्था प्रत्ययसंज्ञा । *द्रव्याभेदेति । यद्यपि गुणमात्रे प्रत्ययः, तथाऽपि गुणगुणिनोरभेदाध्यवसायात्कुमारी शब्देन द्रव्यमेवाभिधीयते इति वचनसिद्धिरिति भावः । ननु द्रव्याभेदापन्नस्त्रीत्वस्य प्राधान्यात् "सत्त्वप्रधानानि" इत्यस्य व्यभिचारोऽत आह *न नामत्वमिति । ननु सुब्रहितस्य यान्तस्य लोके बोधकत्वाभावात्कथं तदर्थे द्वित्वाद्यनन्वयः शङ्कित इत्यत आह *ततोऽपीति । *व्यभिचरितेति । प्रत्ययार्थस्य स्त्रीत्वस्याप्राधान्यात् । *परास्तमिति । स्त्रीत्वस्यापि द्रव्याभेदेन प्रतीत्या न प्राधान्यविघात इति भावः । *ननु व्यभिचरितत्वादिति । अजेत्यादौ ॥ ९ ॥

( क० टी० ) एतत्सूचितारुचिं कथयन् सिद्धान्तमाह *परे त्वित्यादिना वदन्तीत्यन्तेन । *विषयम्—विषयकम् । नैव सति सूत्रासङ्गतिरित्याह *कर्तरीति । तवाप्यस्यार्थस्यान्याशे आवश्यकत्वेन सम्भवत्यैकरूप्ये इति न्यायेनात्रापि तथैवेति सूचयन्नाह *भावे इति । अन्यलभ्यत्वेनान्यार्थस्य तत्रासम्भवात् इति भावः । अत्र भाष्यसमातिमप्याह *अत एवेति । उक्तहेतोरेवेत्यर्थः । ननु तस्यान्य ए-

थार्थो ऽत आह *तस्य चेति । तद्विषयत्व च नैकरूप सर्वत्रे-त्यत आह *तद्विषयत्व चेति । इदमपि व्यवस्थितमित्याह *तत्रेति । तयोर्मध्ये इत्यर्थ । तदेकवाक्यतया प्रकृते ऽप्याह *लः कर्मेति । "वर्त्तमाने लट्" इतिवत् । एवमेवेत्यस्यैवार्थो *भावेति । अत एव तस्य पूर्वनिपात. । कर्मादीत्यादिना–कर्ता । नन्वेव शानजादिविषये लस्यापि द्योतकत्वापत्तौ तत्रापि कारकस्य विशेषणत्वापत्तिरिति महदनिष्टम । तिङनुरोधेनाद्यरीत्या तद्विषयत्वाङ्गीकारात्स-कृदुच्चरितादर्थद्वयप्रतीतेरसम्भवादत आह *शानजादाविति । *उक्तेति । द्वितीयेत्यर्थः । वक्तुस्तन्त्र बोद्धुरावृत्तिः । इदमन्यांशे तवाप्यावश्यकमित्याह *अन्यथेति । शङ्कोक्तरीत्यङ्गीकारे इत्य-र्थः । आस्यमाने शय्यमाने च गत इत्यादौ सत्त्वभूतभाव प्रतीत्या तत्स्थानिलस्यापि तदर्थत्वावश्यकत्वात् । तङो ऽसत्त्व-भूतभावार्थकत्वेन तत्स्थानिलस्य तत्त्वमेवावश्यकमित्याह *तिङि ति। तङित्यर्थ ।क्वचित्तथैव पाठः। *तदंशे–भावांशे। *अत्रापि–क-र्त्राद्यशेऽपि । भाव इत्यस्यावृत्त्याऽर्थद्वयबोधकत्ववत्कर्त्राद्यशे ऽप्या वृत्त्या कर्त्रादौ वर्त्तमानात्कर्त्रादावर्थे च लविधिरिति भावः । ननु लविधावेव तत्सूत्रतात्पर्यम् अन्याविहितत्वात्स्वार्थ एवेति कथमुभय-त्रार्थे इत्यत आह *वर्तमाने इति । *इत्यादीत्यादिना । स्वार्थवि-हितेत्यर्थः । *नियामकम्–नियामकमेव । करणादि च व्यावर्त्यम्, पाकेन कृत वैरामित्यादौ तत्प्रतीते. । तिङ्नियमे द्योतकाभावा त्तदप्रतीतिरित्यन्यत्र । *अत एव—शत्रादावुक्तरीत्या कारकप्रधा-न्यादेव । नन्वेवमपि भावविषयत्व नोक्तरीतिद्वयेन सम्भवति । तद्बो-धकत्वमात्र त्वतिप्रसक्तम् अत आह *भावेति । मात्रम्–कार्त्स्न्ये । नतु कृतिरेव विवक्षिता । तथाचानिर्दिष्टार्थाः प्रत्यया इति न्यायेन स्वार्थे स इति तस्यानुवादकत्व तत्फल च तस्य प्राधान्यसिद्धिरिति भावः । द्योतकत्वे युक्त्यन्तरमाह *किञ्चेति । सुब्विषयाणां तत्त्व-स्येव सर्वाप्रसिद्धत्वादाह *तद्विदामिति । भाष्यविदामित्यर्थ. । *सामान्येति । लस्य तिप्तस्झीत्यनेनेत्यर्थः । ननु ति-ङन्ते संख्यायाः कारके ऽन्वयस्य परप्राचीनोभयसमतत्वात्कथ-मुक्तरीत्या नियामकत्व तेषामत आह *सख्यायाश्चेति । एतेन मतान्तरव्यवच्छेदः । अत्रैव ऽप्रकरणे नुपदमेवेति भाव । तदे-

व भाष्यमाह *स्पष्टं चेदमिति । "किमर्थं पुनरिदमुच्यते" इति प्रश्ने आह *तिङ इति । *अविशेषेण–सङ्ख्याविशेषाद्यनुपादानेन । एवं च प्रातिपदिकस्येव धातोरपि सङ्ख्याकारके अर्थ इति भाव । नन्वेवमपि एकवाक्यतया विधिरिति भाष्योक्तपक्षान्तरे न द्योतकत्वसम्भवो ऽत आह *एकेति । साच वाक्यैकवाक्यता । इत्थं च लस्थाने तिबादयो भवन्ति ते चानुदात्तङितः परस्य लस्य स्थाने तादृशा भवन्ति येषां जातानामात्मनेपदसञ्ज्ञा भवतीति । इयञ्च मन्दमतिना दुर्ज्ञानेति वाक्यभेदेन नियम उक्त इति तात्पर्यम् । *तद्विनाऽपि–एकवाक्यतया विधानं विनाऽपि । उक्तरीत्येति भावः । अत्र भाष्यसमतिमाह *अत एवेति । तत्र फलतो नियमादेवेत्यर्थः । *अत्रपक्षे–तथाविधिपक्षे । *तेषाम्–"अनुदात्तङित." इत्यादीनाम् । *परिभाषेति । "यदि पुनरियं परिभाषा विज्ञायेत"इत्यनेनेति शेष.। अनियमे नियमकारिणीत्वात्तस्या इति भावः। द्योतकत्वमेव युक्तमित्याह *अत एवेति । तिङां द्योतकत्वादेवेत्यर्थ । मात्रमवधारणे । व्यतिसे इत्याद्यसाध्वेवेति भाव.। ननु तत्र लुप्तस्मरणाद्बोधो भविष्यत्यत आह *लुप्तेति । *एकेति । सरूपसूत्रे इत्यर्थ । अग्निचिदित्यतो लोकत एव कर्त्रर्थप्रतीत्या लोपशास्त्र प्रकृतसूत्रवत्किमर्थमिति शङ्कायामाह *प्रत्ययेति । तेन लोपेनानुत्पत्तेरेवान्वाख्यानमित्युक्तम् । तदाशयमाह *लोपमिति । तत्रत्यकैयट दूषयति *यस्त्विति । *तेनैव–स्वभावेनैव । एवमग्रे ऽपि । *नियमेति । 'द्व्येकयो " इत्यादीत्यर्थः । सामान्यवद्विशेषलाभो ऽपि तत एवेति भाव. । स्वोक्तिविरोधमप्याह *सुबिति । पञ्चक प्रातिपदिकार्थ इति पक्षवत्तन्मतेनैवाह *एकेति । आदिना चतुष्कम् । *तत्र–सुब्विषये । "तस्यापत्यम्" इत्यादेर्वैयर्थ्यमप्याह *शास्त्रेति । *एवम्–एव सति । शास्त्रारम्भवैयर्थ्यमपीत्याह *अन्यत्रेति । उद्द्योतादावित्यर्थ. । नन्वेव "सार्वधातुके यक्"इति सूत्रभाष्यविरोधो ऽत आह *सार्वेति । एतेनाभिधीयते इति प्रागुक्तभाष्यस्यापि द्योत्यते इत्येवार्थ. सूचित । ननु तस्यैव द्योतकत्वे किमर्थं विकरणो ऽत आह *विकेति । नन्वेवमपि पक्षान्तरासङ्गतिरेवात आह *विकरण इति । तत्रत्याग्रिमभाष्याविरोधमप्याह *भावेति । *इत्यर्थ.–इत्येवार्थ. । दोषपराग्रिमभाष्यानुपपत्तिरपि नेत्याह *त-

त्रेति । तयोः पक्षयोर्मध्ये इत्यर्थः । *नियमेति । "ह्येकयोः" इत्यादीत्यर्थः । अर्थान्तरस्यापि सत्त्वात्प्रत्ययनियमानुपपत्तेरिति भावः । आदिना प्रकृतार्थापेक्षप्रत्ययनियम । "सुपां कर्मादय." इत्यादिनेति भाव. । एवमपि तदग्रिमाविरोधमाह *नचेति । *व्यतिलुनीत इति । छान्दसम् । *तेनेति । तं विना तदसम्भवात् वैपरीत्य न । दृष्टान्ते तु नैव सुवचमित्याह *व्यतीति । न केवलेति निषेधाद्वैपरीत्य नेत्याह *आत्मनेपदेति । त विना तस्यैवासम्भवाद्वैपरीत्य नेत्याह *नष्फेति । तस्य तत्राप्यश्रवणादाह *आयनस्येति । नन्वेव तद्दोषोपपत्तावपि कथं तत्परिहारोऽत आह *तत्रेति । विकरणार्था इति पक्षे इत्यर्थः । एतन्मूलिकयैवोपपत्त्याऽन्यविरोधोऽपि नेत्याह *विकरणेति । *अत एव-प्रत्ययार्थे प्रधानमित्यस्य वाचकविषये ऽव्यभिचरितत्व द्योतकविषये त्वप्रवृत्तिरेवेत्यस्मादेव । उभयत्रास्यान्वयः । तत्रैकत्वसत्त्वादाह *द्विवचनेति । प्रसङ्गादाह *एवमिति । ननु कथ तस्य तन्मूलकत्व तत्र तेन प्रातिपदिकग्रहणस्य परप्राचीनसमतत्वादत आह *तत्रहीति । निरुक्ते यत इत्यर्थ. । क्वचित्सुपोऽश्रवणेनान्यत्रापि तत्त्वसत्त्वात्कथ सुबन्तमेवेति भ्रमनिरासायाह *स्त्रीप्रत्ययेति । तन्मात्रस्येत्यर्थ । सुप्संस्कार विनेति यावत् । *प्रक्रियायाम्-सत्यामेव । अनेनान्यथा तन्निरास इति तत्त्वव्यवच्छेद । *तत -स्त्रीप्रत्ययान्तात् । अपिर्दध्यादिसमुच्चायक. । नन्वेव स्त्रीत्वस्य प्रत्ययार्थत्वपक्षे तन्न्यायव्यभिचार एवात आह *तत्रेति । स्त्रीप्रत्ययान्ते इत्यर्थः । न्यायस्य तत्र व्यभिचरितत्वे तु तदाशङ्कैवायुक्तेति भाव । भूषणोक्ति खण्डयति *तेनेति । तदाशङ्कनेनेत्यर्थ । एतेनेति पाठान्तरम् । *अजादौ । अजाएडकेत्यादौ । *अतएव-तन्न्यायस्य तत्र नियतत्वादेव । अन्यथा तदपि वदेत् ॥ ९ ॥

तत्र कर्तृत्वशक्त्याश्रयस्य व्यापारे ऽन्वयः । योग्यत्वात् । परस्मैपदशब्दनमादिस्वयमेवेत्येतत्समभिव्याहृतयकृतङादिरूपतात्पर्यग्राहकवशाच्च । कर्मत्व-

शक्तिमतश्च फले ऽन्वयः । योग्यत्वात् । तद्व्यक्-चिणादिसमभिव्याहाराच्च । ननु कारकविशेष्यक-बोध एव कुतः स्वीक्रियते इति चेन्न । "रमते ब्राह्म-णकुलम्" इति "क्रियाप्रधानम्"इति "ह्रस्वो नपुसके" इति सूत्रस्थभाष्यविरोधात् । तत्रैतन्नामाख्यातयोर्ल-क्षणं "सत्त्वप्रधानानि नामानि भावप्रधानमाख्यातम्" इति निरुक्ताविरोधाच्च । तत्राख्यातशब्देन नियमतो जनकाकाङ्क्षं विभक्त्यन्तम् । पाचक इत्यादावेकदेशार्थ-स्य तदाकाङ्क्षत्वेऽपि विभक्त्यन्तार्थस्य न तदाकाङ्क्ष-त्वम् । "आख्यातमाख्यातेन"इत्यादौ तथैव प्रतीतेः । "चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः" इ-त्युपक्रमाच्च । "भावकालकारकसंख्याश्चत्वारोऽर्था आ-ख्यातस्य तत्र भावः प्रधानम्"इति भाष्याच्च । निष्कौ-शाम्बिरित्याद्युदाहरणविषये "लुप्ताख्यातेषु च" इति समर्थसूत्रस्थवार्त्तिके कृति आख्यातपदप्रयोग उपचा-रादिति बोध्यम् । भवतीति संबुद्ध्यन्तस्य तिङन्तस्य च समत्वात्तल्लक्षणापेक्षा बोध्या ।

एतेनाख्यातपदेन धातुः, आख्यायते सर्वप्रधानी-भूतो ऽर्थो ऽनेनेति व्युत्पत्तेरित्यपास्तम् ।

शिश्ये इति तिङन्ते ऽतिव्याप्तेश्च । कृत्प्रकृतिभूत धातावव्याप्तेश्च । क्रियावाचकत्वमात्रे वक्तव्ये प्राधा-न्यनिवेशस्य व्यर्थत्वाच्च । एतदेवाभिप्रेत्य निपातवा-दोक्तप्रातिशाख्ये "तद् आख्यातं येन भावं स धातुः" इत्यत्र "तृतीयार्थे प्रथमा"इति तद्भाष्ये व्याख्यातम् । अत एव "प्रशंसायां रूपप्"इति सूत्रे भाष्ये पचति-

रूपं पचतोरूपमित्यादेरसिद्धिमाशङ्क्य "क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नाम, यतः क्रियां पृष्टः तिङाऽऽचष्टे किं देवदत्तः करोति, पचतीति । द्रव्यं पृष्टः कृताऽऽचष्टे कनरो देवदत्तः यः पाचकः", इत्युक्तम् । "नामान्याख्यातजानि" इत्यत्र तु आख्यातपदं तदवयवधातुपरम् । "सर्वं नाम धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्" इति "उणादयः" इति सूत्रे भाष्योक्तेः । नाम्नस्तिङन्तजन्यत्वाभावाच्च । कृतेत्यस्य तत्प्रकृतिकसुबन्तेनेत्यर्थः । भाष्ये नामपदेन च सुबन्तमेव, उक्तयुक्तेः । प्रकृतिः प्रत्ययो विभक्तिरित्येतावन्नाम, सत्ता द्रव्यं लिङ्गं संख्येति नामार्थः । तेषु द्रव्यं प्रधानमिति निरुक्तभाष्योक्तेः । 'नमत्याख्यातार्थं प्रति विशेषणीभवतीति नाम' इति च निरुक्तभाष्यम् । इदम्—अव्ययातिरिक्तनामलक्षणम् । उपसर्गनिपाता इत्यत्र निपातपदमव्ययमात्रोपलक्षणमिति तद्भावः । तत्र द्रव्यस्य सत्तालिङ्गसंख्यानिरूपितप्राधान्ये ऽपि तस्य क्रियाकारकभावसंबन्धं प्रति विशेषणत्वेन काण्डे इत्यादेर्विभक्त्यर्थप्रधानत्वोक्तिर्न विरुद्धा । "क्रियाप्रधानम्" इत्यत्र क्रियात्वं साध्यत्वरूपम् । तेन हिरुगादिषु नाख्यातलक्षणातिव्याप्तिः । हिरुगादीनां क्रियाप्रधानत्वं तु क्रियामात्रविशेषणत्वरूपम् । अत एव तदर्थे न कारकान्वयः । तदन्वययोग्यस्य साध्यत्वस्य तत्राभानात् ।

वस्तुतो हिरुगाद्यर्थस्य सिद्धत्वेनाभानमात्रेण गौणः क्रियात्वव्यवहारः ।

ये तु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्यस्य कारकान्वये नियामकत्वं वदन्ति तेषामोदनं भुक्त्वा ग्रामं गच्छतीत्यादौ क्त्वाप्रकृत्यर्थे कारकान्वयो न स्यात्। तत्प्रतिद्वन्द्विताया नामलक्षणे सिद्धत्वापरपर्यायसत्त्वत्वस्य निवेशः। एधितव्य भुक्त्वा कर्तुं पचतिरूपमेधां पाचयामित्यादि नामरूपमाख्यातमेव। किं कर्तव्यमित्यादिक्रियाप्रश्ने वक्तव्यमित्याद्युत्तरात्।

नियमतो जन्यतया क्रियाकाङ्क्षं यत्तदत्र नाम। भाष्ये "तिङा ऽऽचष्टे" इत्युपलक्षणम्। कृताऽऽचष्ट इति च तद्धितादेरुपलक्षणम्। धात्वर्थफलस्याप्युक्तक्रियात्वसत्त्वान्न कर्माख्याते एतल्लक्षणाव्याप्तिः। द्योतकत्वात् क्रियासमभिव्याहारनियमाच्च निपातादुपसर्गस्य पृथगुक्तिः। एवं च "क्रियाप्रधानम्"इत्यस्य प्रत्ययार्थापेक्षया यत्र धात्वर्थः प्रधानं तदाख्यातमित्यर्थः।

नच धात्वर्थापेक्षया कृतिः प्रधानमिति तदर्थः, भावशब्देनापि कृतिरेवोति वाच्यम्। प्रत्ययार्थः प्रधानमित्येव सिद्धेः। भावाख्याते ऽव्याप्तेश्च।

नन्वेवं प्रथमान्तसमभिव्याहारे एककर्तृविशिष्टक्रियाश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोध एवास्त्विति चेन्न।

तथाबोधाननुभवात्। "यत्रोभे भावप्रधाने भवतः" इत्युत्तरनिरुक्तविरोधाच्च। तदर्थस्तु तद्भाष्ये एवमुक्तः नामाख्यातयोः परस्परविनाभूतयोः स्वस्वपदार्थोक्तावेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम्। अथ पुनर्यत्र ते उभे भवतो वाक्ये तत्र भावप्रधाने आ-

ख्यातार्थप्रधाने । वाक्ये ह्याख्यातं प्रधानं तदर्थत्वाद् गुणभूतं नाम । तदर्थस्य भावनिष्पत्तावङ्गत्वात् । एवं तावद्वाक्ये आख्यातं प्रधानमिति । अत्र नामपदेन निपाताद्यतिरिक्तस्य ग्रहणमुक्तम् । तेन क्रियाया नञर्थविशेषणत्वेऽपि न क्षतिः ।

अत एव हरिर्वसन्ददर्शेत्यादौ "धातुसंबन्धे प्रत्ययाः"इत्यनेन प्रधानतिङन्तवाच्यक्रियानुरोधेन गुणभूतक्रियावाचिभ्यः कालान्तरे प्रत्ययाः, न तु तिङ् कालान्तरे इति व्यवस्थासिद्धिः ॥ १० ॥

(कुं०टी०) *स्वयमेवेत्येतदिति । पच्यते तण्डुलः स्वयमेवेत्यादौ । *क्रियाप्रधानमिति । नन्वेवं "व्रीहीनवहन्ति" इत्यत्र ईप्सिततमे कर्मणि द्वितीयाविधानाद् व्रीहीणां प्राधान्यमिति सिद्धान्तासङ्गतिरिति चेत् । सत्यम् । तत्रावघातेनैव तुषविमोकः कार्य इति नियमादृष्टबोधनार्थमेव वाक्यम्, प्राधान्यं तु व्रीहीणामेव । *नामाख्यातयोर्लक्षणमिति । अयं भावः—पदवाक्ययोरंशांशिभावकल्पनायां कारकात्मा क्रियात्मा चेति सिद्धसाध्यलक्षणो नामाख्यातरूपो द्विविध एव पदार्थविभागो न्याय्यः । निपातोपसर्गकर्मप्रवचनीयलक्षणस्तु पदविशेषोऽत्रैवान्तर्भवति । तथाहि सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन्निपातो ऽत्रैवान्तर्भवति । सिद्धं ह्यर्थं साक्षादभिदधातु तद्गतं विशेषं वा द्योतयतु नैतावता भेदो न्याय्यः । स्वरादयस्तु ये सत्त्वप्रधानाः ते नामस्वेवान्तर्भवन्ति । ये तु हिरुगादयः क्रियाप्रधानास्तेषामाख्यातेऽन्तर्भावः । क्रियाप्रधानं यत् तदेव ह्याख्यातम् । अत एवोपसर्गनिपातपदा-

न्यपि आख्यातमेव । साऽन्यार्थविशेषद्योतनात् । *जनकाकाङ्क्षमिति । पचतीत्याद्युक्ते नियमतः पाकादिजनकाकाङ्क्षोदयात् । *एकदेशेति । विभक्तिप्राग्भागेत्यर्थः । *तथैवेति । तिङन्तस्यैव । तस्मादाख्यातशब्दोऽत्र तिङन्तवाचीति भावः । *चत्वारीति । अयं भावः—निपातोपसर्गौ न साक्षादर्थं वदतः, किन्तु नामाख्यातार्थगतविशेषं द्योतयत इति वाचकाभ्यां ताभ्यां भिन्नावेव । उपसर्गाणां साध्यैकविषयत्वान्निपाततोऽपि भेदः । कर्मप्रवचनीयास्तु संबन्धविशेषद्योतनद्वारेण क्रियाविशेषप्रकाशकत्वाभावात्तदपि पञ्चमं पदमिति कैश्चिदुक्तम् । *तद्भाष्याच्चेति । तत्र तिङन्तार्थे एव भावनायाः प्राधान्यमुपपद्यते इति भावः । *निष्कौशाम्बिरिति । उपसर्गाणां क्रियाविषयत्वेन पूर्वोत्तरपदयोरसामर्थ्यात्समासो न प्राप्त उपसंख्यायते । *लुप्ताख्यातेषु चेति । आख्यातपदेन क्रियाप्रधानं क्तान्ताद्यपि गृह्यते । *अपास्तमिति । "चत्वारि पदजातानि"इति निरुक्तादिबलादाख्यातशब्देन तिङन्तस्यैव ग्रहीतुमौचित्यात् । *अतिव्याप्तेरिति । तत्र तिङन्तेन प्रधानार्थप्रतिपादनात् । *अव्याप्तेश्चेति । तत्र धात्वर्थस्य प्राधान्याभावात् । *वक्तव्ये इति । आख्यातलक्षणे इति शेषः । *असिद्धिमाशङ्क्येति । अयं भावः—"प्रशंसायाम्" इति यदि प्रत्ययार्थविशेषणं स्यात्तदा वैयाकरणस्य प्रशंसा वैयाकरणरूपा इति प्राप्नोति, तस्मात्प्रकृत्यर्थविशेषणमेतत् प्रशंसाविशिष्टात्स्वार्थेरूपबिति । एवं च पचतिरूपमित्यत्र प्रकृतेरलिङ्गसख्यत्वाल्लिङ्गवचने न सिध्यतः । पचतोरूपमित्यत्र रूपबन्तात् द्विवचनापत्तिश्चेति । *क्रियाप्रधानमिति । एवं च क्रियाया एकत्वात् रूपबन्तादेकवचनं सिद्धम् । "क्रियाप्रधानमाख्यातम्" इत्यत्र हेतुमाह *क्रियां पृष्ट

इति । *तिङा–तिङन्तेन । *कृता–कृदन्तेन । शकटस्य तोकमपत्यम् । *सुबन्तमेवेति । तेन नामार्थेषु जातिद्रव्यलिङ्गसंख्यासु द्रव्य प्रधानमित्यर्थः । ननु अव्ययानां नामार्थविशेषणत्वाभावान्नामत्वानापत्तिरत आह *प्रकृतिरिति । एतत्समुदायो नामेत्यर्थः । ननु अव्ययानां नामार्थाविशेषणत्वाभावान्नामत्वानापत्तिरत आह *अव्ययातिरिक्तेति । नन्वेवमप्यव्ययाना भिन्नत्वापत्तौ नामाख्यातोपसर्गनिपाताश्चेति चातुर्विध्यासङ्गतिरत आह *उपलक्षणमिति । ननु काण्डे इत्यादौ काण्डादिशब्देन जात्याद्याश्रयप्रतिपादनाद् द्रव्यस्यैव प्राधान्यमुचितमत आह *तत्रेति । क्रियाकारकभावसम्बन्धस्य सर्वथा प्रतिपादनाद्विभक्त्यर्थस्यैव प्राधान्यमित्यर्थः । *क्रियात्वमिति । क्रियाशब्देन साध्यरूपैव गृह्यते इत्यर्थः । *नाख्यातेति । साध्यरूपक्रियाऽभिधायित्वाभावात् । कथं तर्हि एषा क्रियाप्रधानत्वव्यवहारस्तत्राह *क्रियामात्रेति । *तदर्थे–हिरुगाद्यर्थे । *सिद्धत्वेनाभानेति । सिद्धत्वेन भानं न भवतीत्येतावतैव क्रियात्वमित्यर्थः । *एधितव्यमिति । तव्यत्कातुमुन्णमुलादिसमभिव्याहारे सुबन्तत्वेन नामत्वेऽपि क्रियाप्रधानत्वादाख्यातत्वमेव । एधांचक्रे इत्येकदेश एधामित्यपि । *उपलक्षणमिति । कृदन्तस्यापीति शेषः । *उक्तक्रियात्वेति । साध्यत्वरूपक्रियात्वेत्यर्थः । ननु उपसर्गनिपातयोः पार्थक्यानुपपत्तिरत आह *द्योतकत्वादिति । निपातानामपि द्योतकत्वस्वीकारादाह *क्रियासमभिव्याहारेति । क्रियायोगेत्यर्थः । ननु हिरुगादीनामपि क्रियाप्रधानत्वात्तत्रातिव्याप्तिरत आह *एवं चेति । *अव्याप्तेश्चेति । तत्र कृत्यभावात् । *अनुभवादिति । अत एव किङ्करोतीति प्रश्ने क्रियामेव निर्दिशति न त्वोदना-

दिकमिति क्रियायाः प्राधान्यम् । *तदर्थस्य—नामार्थस्य । *व्यवस्थासिद्धिरिति । गौणत्वात्कृदुपस्थाप्यकालस्यैव बाधः न तु तिङुपस्थाप्यस्येति व्यवस्था क्रियाविशेष्यकबोधस्वीकारे एव निर्वहतीत्यर्थः ॥ १० ॥

(क०टी०) नन्वेतावता धर्मी तिङर्थस्तस्यच कारकस्य विशेषणत्वाद्धात्वर्थे ऽन्वय इति सिद्धं परन्तु फले कुत्रान्वय कुत्रच व्यापारे इत्यतः फलव्यापारयोस्तत्रेत्याद्यनुरोधेनैवाह *तत्रेति । कर्त्तृकर्मणोर्मध्ये इत्यर्थ. । सिद्धान्तमतेनाह *कर्तृत्वेति । तच्छक्तेस्तदाश्रये एवाङ्गीकारादाह *योग्यत्वादिति । एवमग्रेऽपि । अभ्यर्हितत्वात्परेत्यस्य पूर्वनिपातः । श्नमादीत्यादिना श्यनादि । अनतिप्रसङ्गायाह *स्वयमिति । प्राक् सक्षेपेणोक्तसिद्धान्ते श्रद्धालु प्रत्ययार्थः प्रधानमिति व्युत्पत्त्यनुरोधेन शङ्कते *नन्विति । *तत्र—चतुर्णां मध्ये । जातावेकवचनम् । आख्यातशब्देन तिङितिपरभ्रमनिरासपूर्वक भाष्यैकवाक्यत्वायाह *तत्रहीति । निरुक्ते यत इत्यर्थः । नामव्युदासायाह *नियमेति । तदाकाङ्क्षाया. क्वचिदन्यत्रापि सत्त्वात्तद्वारणाय तसन्तमिति भाव. । विभक्त्यन्तमित्यस्य कृत्यमाह *पाचकइति । *तदिति । नियमतो जनकेत्यर्थः । निर्मूलत्वमत्र निराचष्टे *आख्यातमिति । मयूरव्यसकाद्यन्तर्गणसूत्रम् । पाणिनीयमिदम् । *तत्र—चतुर्णां मध्ये । तदग्रे अयमुत्सर्गो बोध्य इत्यपाठ. । फलव्यापारयोर्भावशब्देन ग्रहणात् । नन्वेव वार्त्तिकविरोधो ऽत आह *निष्कौशाम्बिरिति । बहुव्रीहि. । *क्रान्ति—कृदन्ते । क्रान्तादौ । ननु एव लोकत एव तज्ज्ञाने किमर्थं पृथग् लक्षणमत आह *भवतीति । यत्तु भूषणे उक्त निरुक्ते आख्यातपदेन धातुर्वक्ष्यमाणव्युत्पत्त्या नामादिप्रकृतीनामेवोद्देशात् । अग्रे ऽपि तत्र नामान्याख्यातजानीत्युक्तमिति मत तद् खण्डयति *एतेनेति । उक्तदोषगणेनेत्यर्थ । अव्याप्तिवारणायैवाह *क्रियेति । अत्रान्यदपि साधकमाह *एतदेवेति । विशिष्टस्याख्यातत्व न धातोरित्येतदेवेत्यर्थ. । अन्यथा तस्यैवार्थकथनेन सामानाधिकरण्येन निर्वाहे तु तथा

---

१ हिशब्दाघटितः पाठ उपलब्धेष्वादर्शभूतेपु सर्वेषु मूलपुस्तकेषु ।

व्याख्याऽसङ्गतिः स्पष्टैव । अत्र भाष्यसंमतिमप्याह *अत एवेति । तस्य विशिष्टनिष्ठत्वादेवेत्यर्थ । प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृतेरम्भाववचनमित्यनेनाह *असिद्धिमिति । प्रसङ्गादाह *द्रव्येति । भाष्यीययदर्थमाह *यत इति । *तिङेति । तृतीयान्तच्छेद. । एवमग्रे ऽपि । तदन्तेनेति तदर्थं । अन्यथा एतदसगति. स्पष्टैवेति भाव । नन्वेव "नामान्याख्यातजानि" इत्यस्य कागतिरत आह *नामानीति । समुदाये दृष्टा इति न्यायेनेति भावः । तत्रैव बीजमाह *सर्वमिति । ननु यथाश्रुतार्थं एव कुतो न तत्रैव तद्घटितसमुदायपरत्वमस्त्वत आह *नाम्नइति । अविरोधायाह *भाष्ये इति । *तदिति । कृदन्तेत्यर्थ. । ननु यथाश्रुत एवार्थं कुतो नात आह *नामेति । *उक्तेति । चत्वारीत्युपक्रमोक्तेरित्यर्थ. । अन्यत्रैव सर्वऽपि प्रकृते विवक्षित कथयितुमाह *प्रकृतिरिति । साधकान्तरमाह *नमतीति । तदेवाह *इदञ्चेति । नन्वेव न्यूनता तत्राह *उपेति ।*अव्ययेति। उपसर्गान्येत्यादिः । *तद्भाव –तद्भाष्याशय. । नन्वेवं "ह्रस्वो नपुसके" इति सूत्रभाष्यविरोधो ऽत आह *तत्रेति । उक्तनामार्थेष्वित्यर्थ । *तस्य-द्रव्यस्य । *सम्बन्धम्–विभक्त्यर्थसम्बन्धम । विशेष वक्तुमुक्तमाह *क्रियेति । *साध्यत्वेति । निष्पाद्यत्वेत्यर्थः । *तेन–शब्दशक्तिस्वभावेन तदर्थस्यातत्त्वेन । नन्वेव तेषां कथं क्रियाप्रधानत्व भाष्ये उक्तमत आह *हिरुगादीति । यथाश्रुते दोषमाह *अत एवेति । अस्यार्थमाह *तदन्वयेति । ननु तत्र क्रियामात्रविशेषणत्वेन तत्त्वाङ्गीकारे कारकादावतिप्रसङ्गो ऽत आह *वस्तुत इति । सादृश्यप्रयोजकधर्ममाह *सिद्धत्वेनेति । मात्रपदेनोक्तक्रियात्वव्यवच्छेद । भूषणकारादिमत खण्डयति *येत्विति । साध्यत्वस्वरूपमाह *क्रियान्तरेति । कौदन भुङ्क्ते इत्यादौ विशेषस्य वक्ष्यमाणत्वादाह *ओदनमिति । *तत्प्रतीति । क्रियात्व प्रतीत्यर्थ' । प्राचां ग्रन्थासाङ्गत्यमाह *सिद्धत्वेति । तत्त्वं च निष्पन्नत्वम् । सत्त्वत्वेति पाठ.। नन्वेवमेधितव्यादौ नामलक्षणाव्याप्तिराख्यातलक्षणातिव्याप्तिश्चात आह *एधीति । तत्र हेतुमाह *किंकर्तव्यमिति । ननु सुबन्तत्वरूपनामत्वस्य,क्तादेर्घञादिवैषम्ये ऽपि तत्र लिङ्गाद्यन्वय

१ ननु नामान्याख्यातजानीत्यादौ नामपदेन सुबन्तमित्यस्या

दर्शनात् सत्त्वप्राधान्यस्य च सत्त्वादुभयधर्माक्रान्तत्वेन कथ नामस-रूपत्वमतस्तत्प्रतिद्वन्द्वितयैवाह *नियमत इति । *अत्र—नामलक्षणे । एधितव्यमित्यादौ कादाचित्कक्रियाकाङ्क्षत्वे ऽपि न नियमत इति न दोषः। भुक्त्वेत्यादौ नियमतस्तदाकाङ्क्षत्वे ऽपि दोषाभावाय *जन्ये-ति। तत्त्वस्य तत्रैव सत्त्वेन अनतिप्रसङ्गात्प्रागवदत्र विभक्त्यन्तत्वस्या-निवेश.। तत्त्वस्य तत्रैवोक्तत्वाच्च। इदमेव तत्रैवव्यावर्त्यम्। नामस-रूपमित्यत्र सारूप्य सुबन्तत्वमात्रेणेति भाव.। नन्वेषामप्याख्यातत्वे प्रागुक्तभाष्यविरोधो ऽत आह *भाष्येइति । ईदृशसुबन्तस्यापीति भाव'। अस्यावश्यकतां ध्वनयन्प्रसङ्गात्तत्र न्यूनतां निराचष्टे *कृतेति। विजातीयकृतेत्यर्थ.। तदर्थं प्रागुक्त एव । *तद्धितादे.—तस्यापि। आ-दिना?। ननु कर्माख्याते तल्लक्षणाव्याप्तिस्तत्र फलस्यातत्त्वादत आह *धात्वर्थेति । अनेन परमतनिरासः सूचितः। *एतदिति । आख्या-तेत्यर्थ । ननु नामाख्येत्यत्र निपातपदस्योपलक्षणत्वावश्यकत्वस्य तद्भाष्याभिमतत्वस्योक्तत्वेन तत्रापि निपातत्वस्य सत्त्वेन च तेनैवोपसर्गसग्रहोऽपि सिद्ध इति पृथक् तदुक्तिर्व्यर्थाऽत आह तावत्परमतेन *द्योतेति । सिद्धान्तमतेनाह *क्रियेति। एतेन वैपरीत्यशङ्काऽपि निरस्ता । विशेषं वक्तु क्रियाप्रधानमित्य-स्य सिद्धान्तार्थमाह *एवञ्चेति । तथा भाष्याद्युक्तौ चेत्यर्थः। अत एवेत्यस्य परमतसाधारण्येनाह *प्रत्ययेति। कर्माख्यातसग्रहायाह *धात्वर्थ इति । नैयायिकमीमांसकाद्युक्तिं खण्डयति *नचेति । *तदर्थ.—भाष्यार्थः । तस्या कृते. अन्यत्र विशेषणत्वेऽपि धात्वर्थापेक्षया प्राधान्यमस्त्येवेति भाव.। निरुक्तार्थमाह *भावेति। भावयतीति व्युत्पत्ते.। एव च तदविरोध एव तेषामिति भावः। ननु विशेषोक्तेस्तस्यैवात्र विवरणमत आह *अभावेति । तदुक्तिमेव खण्डयति *नान्विति। एवमप्युक्तरीत्या तदसमभिव्या-हारे तथा बोधेऽपि सिद्धान्तमतेनाह *एककर्त्रिति। *प्रथमान्तेति। तदर्थस्य विशेष्यत्वात्तस्यापि तत्त्वमिति भावः। एवमग्रेऽपि। परमा-त्रानुभवे ऋष्यनुभवविरोधमाह *यत्रोभे इति। ननु कथ तद्विरोधो

---

नुपदमेव प्रतिपादितत्वेन सुबन्तत्वस्यात्रापि सत्त्वेन तत्त्वस्यैव कथ नामस्वरूपत्वमत आहेति पाठ. कलायाः २ पुस्तके ।

ऽत आह *तदर्थस्त्विति । *एकस्य–आख्यातस्य प्रधानस्य । *एकस्य–अन्यस्य नाम्न. । *पुनस्तु । *उभे ते–नामाख्याते । यत्रेत्यस्यार्थो *वाक्येइति, तदुपपादयति *वाक्येतीति । हेतोर्व्याख्या *तदर्थेति । उपसहरति *एवमिति । प्राचीनमते ऽपि स्वरीत्या अविरोधमाह *अत्रेति। निरुक्तादावित्यर्थः। आदिना स्वरादीनामुपसर्गाणां च ग्रहणम् । *पक्षेऽपि–प्राचोक्ते । *उक्तम्–अनुपदमेव । अपिना सिद्धान्तसमुच्चयः । *अत एव–वाक्ये क्रियाप्राधान्यादेव । तन्मते उभयोरपि तत्र विशेषणत्वात्तदसिद्धि· स्पष्टैव ॥ १० ॥

किञ्च सर्वत्र प्रथमान्तार्थं प्रत्येव क्रियाया विशेषणत्वमिति पक्षे पाकक्रिया भवतीत्यर्थे पचति भवतीत्यस्य तवासिद्धिः ।

तदुक्तं भूवादिसूत्रे भाष्ये "का तर्हीयं वाचोयुक्तिः पचति भवति, त्वं पचसि भवति, पक्ष्यति भवति" इति प्रश्ने उत्तरं "पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इति । पक्ष्यति भवतीत्यस्य भविष्यन्ती पाकक्रिया सत्कार्यवादाङ्गीकारात्सूक्ष्मरूपेण भवतीत्यर्थान्न दोषः ।

न च सत्कार्यवादे कार्यस्य नित्यतया सामग्रीवैयर्थ्यमिति वाच्यम् । तस्य अभिव्यक्त्यर्थत्वात् ।

नचाभिव्यक्तेर्जन्यत्वे सत्कार्यवादबाधः । नित्यत्वे सर्वदाभिव्यक्त्यापत्तौ व्यवहारापत्तिः, अभिव्यक्त्यन्तरापेक्षायां त्वनवस्थेति वाच्यम् । अभिव्यक्त्यभिव्यक्तेस्तदनतिरेकात् तवोत्पत्तेरुत्पत्तिवत् ।

परेतु सूक्ष्मतया विद्यमानस्यैव स्थूलरूपस्य विद्यमानाया एव चाभिव्यक्तेस्तमसा प्रतिबद्धतया व्यवहाराक्षमत्वेन सामग्र्या तस्य प्रतिबन्धकतमसो

निवृत्तौ व्यवहारक्षमतेत्यदोषात्। एवं व्यवहारादिविषये ऽपि सत्कार्यवादाबाधो बोध्य इत्याहुः।

युक्तश्च सत्कार्यवादः। असदुत्पत्तिवादे मालतीकुसुमादौ विकासस्य गन्धोत्पादकत्वं वाच्यम्। एवं च निर्गन्धे ऽपि विकासेन गन्धोत्पत्त्यापत्तिः। वैजात्यनिवेशादिना तद्वारणे तु सत्कार्यवादाभ्युपगम एव युक्तः। विषयनिष्ठतमसा प्रतिबन्धाद्व्यवहाराक्षमत्वं च सूक्ष्मत्वम्।

केचित्तु कारणात्मना स्थितसूक्ष्मरूपेण सत् स्थूलरूपेण त्वसदेव कार्यमिति सदसत्कार्यवादः। सूक्ष्मत्वं च कारणाभेदेन स्थितत्वात्ततः पृथग्ज्ञानायोग्यत्वम्। तत्र सूक्ष्मरूपमादाय सत्कार्यवादः सांख्यादीनाम्। स्थूलरूपमादायासत्कार्यवादो गोतमीयानामित्याहुः।

वस्तुतो ऽनिर्वचनीयमेव जन्यत्वमित्युक्तम्।

अत एव "किंकिलास्त्यर्थेषु" इति सूत्रे "अस्ति भवति विद्यते वा त्वं शर्द्रीं गमिष्यसि" इति वृत्त्यादावुदाहृतम्।

अपि च "कर्मणा यमभिप्रैति" इतिसूत्रे "क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि हि क्रियया ईप्सिता भवति। कया क्रियया, संदर्शनादिक्रियया" इति भाष्ये उक्तम्। त्वद्रीत्या धावनकर्मकं दर्शनम् इत्यर्थे भाष्यकृदिष्टं पश्य मृगो धावतीति वाक्यं न स्यात्। कर्मत्वस्य चात्राकाङ्क्षावशात्संसर्गतया भानम्। मृगस्य तु कर्मत्वेन न तत्रान्वयसम्भवः। विभक्त्यर्थमद्वारीकृत्य नामधात्वर्थयोर्भेदेनान्वयायोगात्।

मृगाद् द्वितीयायां तु प्रागुक्तवाक्यासिद्धिः । अप्रथमासामानाधिकरण्येन तिङो बाधित्वा शत्राद्यापत्तेश्च । वासरूपन्यायेन तु न तिङः । लादेशेषु तदभावस्य भाष्ये स्पष्टत्वात् । यो धावति मृगस्तं पश्येत्यध्याहारेणान्वयेऽपि भाष्यसंमतस्य पदैकवाक्यतयाऽन्वयस्य भङ्गः ।

एतेन विशिष्टवाक्यार्थस्य कर्मतया दर्शने ऽन्वयः, एवं च न व्युत्पत्तिविरोधः । व्युत्पत्तेर्नामार्थविषयकत्वात् । विशिष्टबोधकस्याप्रातिपदिकत्वाच्च न द्वितीयापत्तिः । श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभा इतिवदित्यपास्तम् ।

नीलविशिष्टघटस्य दर्शनकर्मत्वे प्रतिपिपादयिषिते नीलं घटं जानामीत्यादौ द्वितीयानापत्तेश्च । न च तवापि मृगीयधावनस्य विशिष्टस्य दर्शनकर्मत्वे ऽपि विशेषणस्य मृगस्यापि कर्मत्वात्प्रातिपदिकत्वाच्च तद्वाचकाद् द्वितीयापत्तिरिति वाच्यम् । मृगस्य धावनविशेषणत्वेन तत्प्रयुक्तस्यान्तरङ्गसंस्कारस्य प्रथमारूपस्यानिवृत्तेः । तव तु तस्य धावनविशेष्यत्वाद् दृशौ साक्षाद्विशेषणत्वात्प्रधानकार्यस्यान्तरङ्गादपि बलवत्ताया "हेतुमतिच" इति सूत्रभाष्यसंमतत्वेन द्वितीया दुर्वारा । उत्पत्तयः शुभा इति त्वार्षमित्यलम् ।

किञ्च चैत्रः पचतीत्यादौ कृतिप्रकारकः प्रथमान्तार्थविशेष्यको बोध इति न युक्तम् । एकविशेषणवैशिष्ट्येनोपस्थिते विशेष्ये तत्सजातीयसम्बन्धेन विशेषणान्तरसम्बन्धस्याव्युत्पत्तेः ।

अत एव राजपुरुषो भार्यायाश्चेति न । घटो द्रव्यमित्यर्थे घटो द्रव्यत्वस्येति च नेति समर्थसूत्रे भाष्ये स्पष्टम् ।

किञ्च तव पचाति व्रजतीत्यस्य साधुतापत्तिः । स्व-स्वव्युत्पत्त्यनुसारेण बोधस्य दुर्वारत्वेऽपि तत्र साधु-त्वस्यापाद्यत्वात् । साधुत्वं च तत्तदर्थनिरूपणाभियु-क्तवैयाकरणसंमते एवार्थे नान्यत्रेति भेद्यभेदकसंब-धेत्यादिना स्पष्टमेव हरिणोक्तम् ॥ ११ ॥

(कुं० टी०) *त्वं पचसि भवतीति । त्वत्कर्तृकपाकक्रिया भवतीत्यर्थः। ननु भविष्यत्क्रियायां वर्तमानत्वमसम्भवीत्यत आह *सत्कार्यवादेति । *तस्या इति । सामग्र्या अभिव्यक्तिर्भवती-त्यर्थः । *लादेशेष्विति । "हशश्वतोर्लङ्च" इत्यस्यारम्भात्। *सा-धुतापत्तिरिति । पाकानुकूलकृतिमांश्चैत्रो गमनानुकूलकृतिमानि-ति बोधसम्भवात् । दण्डी पुरुषः सुन्दरइति विशेषणद्वययोगा-दुक्तं *सजातीयेति । *आपाद्यत्वादिति । साधुत्वापत्तिरेव दोष इत्यर्थः । *साधुत्वमिति । तत्तदर्थनिरूपणे अभियुक्तो वैयाकर-ण इत्यर्थः । *सांख्यादीनामिति । पूर्वान्वयि। वस्तुतः सत्कार्य-वादः परिभाषामात्रं नतु लौकिकः । अत एव विकारे "कोशाड्ढञ्" "संभूते" इत्यर्थानुपपत्तिरित्युक्तं वार्तिककृता । आविर्भाव-एवोत्पत्तिरिति तु न युक्तम्। गेहान्निस्सरति देवदत्ते उत्पत्तिप्रत्य-यापत्तेः। कूर्माङ्गानां तु विद्यमानानामेव प्रवेशनिर्गमौ । तस्मादु-पादानानां योग्यत्वात्तत्र सूक्ष्मरूपेण व्यवहारः । निर्गन्धे सौरभं सूक्ष्मरूपेण नास्तीत्यत्र स्वभावस्यैव त्वयाऽपि वक्तव्यत्वात् । *अनिर्वचनीयमेवेति । नहि सर्वथा कार्यस्य सत्त्वं नापि सर्व-

था असत्त्वं द्वैविध्यस्योपपादितत्वात् । *वृत्त्यादाविति । तत्र भविष्यतोऽपि वर्तमानत्वबोधात् । *संदर्शनमिति । पत्ये शेते इत्यत्र दर्शनादिपूर्वकारम्भकर्म पत्युद्देश्यकं शयनं करोतीत्यर्थः । *वाक्यं न स्यादिति । क्रिययोः परस्परं तार्किकैरन्वयानभ्युपगमात् । ननु कर्मत्वबोधकं किमत आह *संसर्गतयेति । ननु तार्किकमते ऽपि मृगस्यैव कर्मतासम्बन्धेनान्वयोऽस्तु कर्मत्वस्य संसर्गत्वाच्च न द्वितीयापत्तिरत आह *मृगस्यत्विति ॥ ११ ॥

(क० टी० ) शङ्कोक्तपक्षे न दीक्षितभूषणाद्युक्तदोषावसर इति ध्वनयन्नाह *किञ्चेति । *सर्वत्र—तत्समभिव्याहारासमभिव्याहारयो. । अर्थान्तरे तत्सिद्धेरनिष्टत्वादाह *पाकेति । तदेव ध्वनयन्नाह *तदुक्तमिति । *कातर्हीति . भाववचनो धातुरिति लक्षणे पच्यादीनां भावावाचकत्वाद्धातुत्व न प्राप्नोतीति पूर्वपक्षे इत्यादि. । तत्पक्षे कथ सम्बन्ध इति तदर्थ. । *त्व पचेति । एतदभावापत्त्या पूर्वत्र पाकानुकूलव्यापारवानस्तीत्येव बोध । *पचेति । घञर्थे के साधु । ननु भाष्ये पक्ष्यति भवतीति विरुद्धमत आह *पक्ष्यतीति । अर्थादित्यत्रान्वय. । प्रसङ्गादाह *नचेति । इष्टापत्तावाह *व्यवहारेति । द्वितीये प्रोक्तदोषाभावायाह *अभिव्यक्त्यन्तरेति । इदमुद्धरति *अभिव्यक्तीति । इदं तवाप्यावश्यकमित्याह *तवोत्पेति । नन्वेतावताऽनवस्थापरिहारे ऽपि पूर्वदोष एवात आह *परेत्विति । *तस्य-घटादे । *एवम्-उक्तप्रकारेण । अभिव्यक्तिविषयोक्तशङ्कानिरासायाह *व्यवहारेति । आदिना अभिव्यक्ति. । न्यायमते दोपमाह *असदिति । आदिना ऽदृष्टादि । *युक्त इति । लाघवात् । अत एव सुश्रुते उक्त यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तु नैव वा नास्तीति, अथ चास्ति सतां भावानामभिव्यक्तिरिति कृत्वा केवल सौक्ष्म्यान्नाभिव्यज्यते स एव विवृतपत्रकेसरैः कालान्तरेणाभिव्यक्ति गच्छति । अन्यथा पुष्पान्तराणामपि विकासे उत्पद्येत, एव बालानामपि वयःपरिणामाच्छु

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) १

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मज भट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सपूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम् , द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप. । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १२

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित । ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । १

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो।-प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय • ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ८

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद ।

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य- बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसवलिता । ८

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । १

(४८) वीरमीत्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ६

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकय समलकृत । ४

(५०) विरमित्रोदय । राजनीतिप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ४

पुस्तकादिप्रेषणस्थानम्



हरिदासगुप्तः,
चौखम्बा बनारस सिटी ।

September 1917.

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 237.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता।
श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-
कुञ्जिकाकलाह्वटीकाद्वयसंवलिता।
गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनमवलम्बमा[illegible]
शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा
संशोधिता।

# VAIYÂKARANA SIDDHÂNTA LAGHU-MANJUSHA

BY

MAHAMAHOPADHYAYA ŚRÎ NÂGEŚA BHATTA,
With Two Commentaries, i. e. Kunjikâ of
Durbalâchârya and Kalâ of Bâlam Bhatta
Edited by Pandit Parvatiya Nityananda Panta
with theassistance of Sitarama Sastri Shende.

FASCICULUS IX-१

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES
AGENTS -
OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAM MUKUNDAJI BOMBAY
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press*
BENARES

*Price Rupee one.*

॥ श्रीः ॥

—·०·—

आनन्दवनविद्योतिसुमनोभि सुसस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा–सस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुल कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवक —२३७

१ अस्या चौखम्बा– सस्कृतग्रन्थमालाया प्रतिमास पृष्ठशतके सुन्दरे सीसकाक्षरैरुत्तमेषु पत्रेषु एक स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमासावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्ट्यो विद्वास एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीये ,ब्रह्मदर्शीये ,सिहलद्वीपवासिभिश्चैतद्ग्राहकैर्देय वार्षिकमग्रिमं मूल्यम्–मुद्रा ७आनका'८

५ अन्यैर्देय प्रतिस्तवक

६ आपणव्यय पृथग् नास्ति ।

साम्प्रत मुद्र्यमाणा ग्रन्था —

(१) सस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे २
(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत १२
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृहित तत्त्वत्रयम् । विशिष्टाद्वैत-दर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाश-सहित सम्पूर्णम् ( वेदान्त ) ३
(५) करणप्रकाश । श्रीब्रह्मदेवविरचित १
(६) भाट्टचिन्तामणि । महामहोपाध्यायश्री-गागाभट्टविरचिता । तर्कपाद (मीमासा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्ण ( मीमासा ) २
(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्त-सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्त ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभि श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण ( वेदान्त ) १
(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टारकाचार्यसगृहीत । आचार्यचित्सुखमुनि-विरचितव्याख्यापेत ( वेदान्त ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायविरचित सम्पूर्ण ( न्याय ) ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमासा ) २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमासा ) १६

क्रमभिव्यक्तं भवति । एवं सर्वत्र सत एवाभिव्यक्तिर्द्रष्टव्येति । न-न्वत्र सूक्ष्मत्वं स्फोटवादोक्तं चेत्स्थूलरूपस्यासतो जन्यत्वला-भेनासत्कार्यवाद एव सिद्धो ऽत आह *विषयेति । वेदान्तिम-तमाह *केचित्त्विति । कारणं वासना । *ततः—कारणात् । व्यव-स्थामविरोधायाह *तत्रेति । तयोर्मध्ये इत्यर्थः। आदिना योगप्राची-नवेदान्तादि । पूर्वत्रारुचिं सूचयन् स्फोटवादोक्तसिद्धान्तमाह *व-स्तुत इति । *अत एव—उक्तरीत्या भाष्यप्रयोगोपपत्तेरेव । एतेनायं लट् कालसामान्ये सर्वलकारापवादोऽतोऽस्तीत्यादिना न विरोध इत्यपास्तम् । तत्र दीक्षिताद्युक्तदोषान्तरं न पूर्ववत् किन्तु साधारण-मिति सूचयन्नाह *अपि चेति । तादृशवाक्यस्य भाष्ये ऽश्रुत-त्वात्तत्तात्पर्यमाह *कर्मणेति । क्रिययेति वार्त्तिकप्रत्याख्यानायाह *क्रियापीति । *धावनेति । मृगीयेत्यादि. । मम तु तस्य तत्कर्मत्वा-न्न दोष. । सिद्धान्तविरोधस्तु न, प्रत्यासत्त्या आख्याताघटकप्र-त्ययार्थापेक्षया तस्यास्तत्त्वबोधनात् । ननु शब्दजोपस्थितेरे-व शाब्दबोधजनकत्वे कथमत्र कार्यत्वभानमत आह *कर्मत्व-स्येति । ननु तथासत्त्वे ऽप्यत्र मृगस्यैव दर्शनकर्मत्वाशयेनैक-वाक्यत्वमस्त्वत आह *मृगस्येति । पररीत्यैवाह *नामार्थेति । ननु ततो द्वितीयाऽस्त्विति नायं दोषोऽत आह *मृगादिति । न तन्मात्रकृतैव तदसिद्धिः किं त्वन्यकृताऽपीत्याह *अप्रथमे-ति । तथा सतीत्यादिः । ननु वासरूपन्यायेन पक्षे तिङो ऽपीत्यत आह *वासरूपेति । तदुक्तं प्रकारान्तरं खण्डयति *यो धावतीति। *एतेन—तदर्थे तादृशवाक्यासाधनेन । *विशिष्टेति । धावनानुकू-लकृत्याश्रयमृगस्येत्यर्थ. । *एवं च—तस्य तत्र तत्त्वे च । अनेनाद्य-दोष उद्धृत. । दोषान्तरमुद्धरति *विशिष्टेति । वाक्यस्येत्य-र्थः । दोषान्तरमाह *नीलेति । परः शङ्कते *नचेति । *तस्य—मृगस्य । *सूत्रेति । तत्रहि गत्यादिसूत्रस्य नियमार्थत्वम् उ-

---

( १ ) स्फोटवादे सिद्धान्तितमिदम् । तदेवमभिव्यक्तेर्नित्यत्वप-क्षे सत्कार्यवाद उपपादितः । अथाभिव्यक्तेर्जन्यत्वेऽपि न सत्कार्य-वादबाधः परसंमतजन्यत्वानङ्गीकारस्य स्फोटवादे प्रतिपादितत्वा-दाह *वस्तुतइति, इतिपाठः क० २ पु० ।

कम् । नच वाचनिकी प्रथमैव तत्र द्वितीयार्थे इति वाच्यम् । तादृशवचनानुपलम्भात् । क्रियायाः कर्मत्व तूक्तभाष्यरीत्या तण्डुलादिवत्स्वारसिकमेव । तयोस्तथाऽन्वये तथा नियमो ऽप्युक्त भाष्यादेव । न जानामि सीता जनकप्रसूतेत्यादावित्यबोधि स इत्यादिवन्निर्वाह. । अधिक भावप्रकाशे स्पष्टम् । अपाक्षीद्देवदत्तो ऽवेहीत्याद्यसिद्धिरपि तन्मते दोषो बोध्य इत्यन्यत्र स्पष्टम् । तदाह *इत्यलमिति । तत्र दोषान्तरमाह *किञ्चेति । सजातीयेत्यस्य व्यावर्त्यं स्पष्टतरम् । द्वितीय प्रदर्शयन्नाह *घटो द्रव्यमिति । एवं घटः सुन्दरो राजपुरुषः सुन्दर इत्यादि भवत्येव । नीलघटः सुन्दर इत्यादि तु नेति बोध्यम् । साजात्य च भेदाभेदकृत बोध्यम् । पचतिभवतीत्यादिवत्तत्र दोषान्तरमाह *किञ्चेति । मन्मते तु तथाऽन्वयासम्भवान्न दोषः । ननु तदापत्तिरेव वाच्येति साधुत्वपर्यन्तधावन व्यर्थमत आह *स्वस्वेति । तथा व्युत्पन्नाना तयोर्जायमानत्वादिति भाव. । *तत्र—अर्थे । तस्येति शेषः । साधुत्वस्यार्थघटितत्वात् । नन्वेवं तत्रापि साधुत्वमिष्टमेवात आह *साधुत्वञ्चेति । *वैयाकरणेति । पतञ्जल्यादीत्यर्थः । *स्पष्टमेवेति । प्रतिपादितमिदम् ॥ ११ ॥

"ते विभक्त्यन्ताः पदम्" ( न्या० सू० अ० २ आ० २ सू० ६० ) इति गोतमसूत्रे न्यायवार्तिककारोऽप्याह "द्वयी विभक्तिः स्वादयस्तिबादयश्च । तत्र स्वाद्यन्तं नाम, तिबाद्यन्तमाख्यातम् । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम । यथा ब्राह्मण इति क्रियाकारकसमुदायः कारकसंख्याविशिष्टः । क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातं यथा पचति" इति ।

अत्र वाचस्पतिमिश्राः । क्रियान्तरं क्रियाविशेषस्तत्सम्बन्धाद्विशिष्यमाणरूपः पर्यवसितार्थः शब्दो नाम । यस्याभिधेयं नियमेन क्रियाविशेषमाकाङ्क्षति

तन्नामेति फलितम् । यत्रापि क्रियापदं नास्ति तत्राप्यस्तीत्यस्त्येव । उदाहरणं ब्राह्मणः इति । राज्ञः पुरुष इत्यादौ राज्ञ इत्यादेरपि पुरुषादिद्वारा तदाकाङ्क्षत्वं बोध्यम् ।

यद्वा तदभिधेयस्य राजेत्यादौ तदाकाङ्क्षत्वम् । अथ नामार्थमाह क्रियेत्यादि । क्रिया जात्यादि । कारकन्तदाश्रयः । सच व्यक्तिगतसंख्यायुतो नामार्थः । यद्वा कारकं कर्मादिशक्तिः । संख्याग्रहणं लिङ्गस्याप्युपलक्षणम् । अयमव्ययातिरिक्तनामार्थ इति बोध्यम् ।

एवं च सर्वत्र नामपदेनाव्ययातिरिक्तमेव । एवं च नामार्थादिव्युत्पत्तिषु अव्ययातिरिक्तत्वविशेषोपादानामिति प्रलाप एव । आख्यातलक्षणमाह क्रियाकालेति । क्रियाया यः कालयोगः पौर्वापर्यक्रमः कालयोगेन तस्य भावात् । तेन घटादिनामव्यवच्छेदः । नन्विदं भुक्त्वेत्यादावतिव्याप्तमतः क्रियाप्रधानमिति । क्त्वाऽन्तादौ क्रियान्तरेणापर्यवस्यन्ती क्रिया गम्यते । पचतीत्यादौ तु न सर्वत्र तथा । क्वचित्तु तत्सम्बद्धाऽपि, यथा पचति भवतीति । एवं च यद्वाच्या क्रिया क्वचित्क्रियान्तरानाकाङ्क्षा स्वयमेव प्रधानन्तदाख्यातमिति फलितम् । एतत्पक्षेऽपि कर्तव्यमित्यस्य नामलक्षणाक्रान्तत्वाभावात् क्रियान्तरानाकाङ्क्षत्वादाख्यातत्वमेवापतति । एवं पचतिरूपमित्यादेरपि । अत्र क्रियाप्रधानमिति निरुक्तसमानार्थमहाभाष्यसमानाकारशब्देन निरुक्तभा-

ष्योक्तरीत्या प्रत्ययार्थकालकारकसंख्यापेक्षया धात्वर्थप्राधान्यं सूचितम् ।

पञ्चमे न्यायभाष्ये ऽपि "क्रियाकालयोगाभिधाय्याख्यातं धात्वर्थमात्रं च कालाभिधानविशिष्टम्" इति । तत्र कालेनाभिधानेन कारकेण विशिष्टं धात्वर्थमात्रमाख्यातार्थ इति तदर्थः । तस्यैव व्याख्यानं क्रियाप्रधानमिति वार्त्तिककृताऽत्र कृतम् ।

तत्रैव सूत्रे प्रघट्टकान्तरे वार्त्तिककार आह विशेषणविशेष्यभावस्यैकविषयत्वाद्यदि गोशब्दस्य तिष्ठतिशब्दस्य चैकमभिधेयं भवति ततो विशेषणविशेष्यभावापन्नयोर्गोशब्दतिष्ठतिशब्दयोः सामानाधिकरण्यं युज्यते नान्यथेति । अनेन च स्पष्टमेव कारकस्य प्रत्ययार्थतोक्ता । विशेषणता चोक्ता । एवञ्च कृतिर्वाच्या प्रथमान्तविशेष्यको बोध इत्यर्वाचां शुष्कलाघवतर्कैकशरणानां कुकल्पनाविलसितामिति स्पष्टमेव ॥ १२ ॥

(कुं०टी०)*अभिधेयस्येति । नामवाच्यस्य । क्रियाविशेषसंबन्धाद्विशेषविषयार्थः शब्दो नामेत्यर्थः । *क्रियेति । क्रिया नाम जात्यादिः, कारकं कारकगता संख्या च तद्विशिष्टो नामार्थ इत्यर्थः । *तदाश्रयः—जात्याश्रयः । प्रलापोऽनर्थकं वचः । *अपर्यवस्यन्तीति । क्रियान्तरसाकाङ्क्षत्वान्नाख्यातत्वमित्यर्थः । *नसर्वत्रेति । क्वचित्क्रियान्तरसाकाङ्क्षत्वे ऽपि न सर्वत्र साकाङ्क्षत्वमित्यर्थः । *क्रियाकालेति । क्रियाया यः कालयोगस्तदभिधायीत्यर्थः । अभिधानेनेत्यस्य विवरणम् *कारकेणेति ।

कारकस्य-कर्त्रादेः । *प्रत्ययार्थेतेति । ता विना सामानाधिकरण्यासम्भवात् ॥ १२ ॥

( क० टी० ) प्राक् पराज्ञानप्रकाशनाय तन्मूलसंमतिमप्याह *तेविभक्त्यन्ता इति । द्वितीयाध्यायशेषपरीक्षादिमसूत्रमिदम् । *वार्तिककारः—उद्द्योतकारः । अन्तरशब्दो नान्यार्थः किन्तु विशेषार्थं इत्याह *क्रियाविशेषइति । *विशेषेत्यादि । बहुव्रीहिद्वयम् । रूपमर्थ इत्याह *पर्यवसितार्थइति । तत्तात्पर्यमाह *यत्रापीति । व्यभिचारभ्रम निराचष्टे *राज्ञ इति । *तदाकाङ्क्षत्वम्—तदाकाङ्क्षार्थत्वम् । इदमुपलक्षणम् न विशेषणम् । तत्त्वोपलक्षितस्वाद्यन्तत्व लक्षणमित्याशयेनाह *यद्वेति । चतुष्टयी शब्दानां प्रवृत्तिरिति क्रियाग्रहणमुपलक्षणमित्याह *जात्यादीति । तत एवाह *तदाश्रय इति । *स च—समुदायः । तत एवात्र तदर्थमाह *व्यक्तीति । शेषमाह *नामार्थ इति । अत्र मते कारकपदवैयर्थ्यापत्तेर्न्यूनतापत्तेश्चाह *यद्वेति । न्यूनतानिरासायाह *सख्येति । प्रागुक्तमतैकवाक्यत्वमाह *अयमिति । पक्षद्वयेऽपीति भावः । *एव च—तथा तल्लक्षणेच । परेषामज्ञानमाह *एवञ्चेति । सर्वत्र तेन तदन्यग्रहणे चेत्यर्थः । प्रलापो ऽनर्थक वच । द्वन्द्वनिरासायाह *क्रियाया इति । तज्ज्ञत्वात्ताच्छब्द्यमित्याह *कालयोगेनेति । *घटादीति । तत्प्रकृतिकनामेत्यर्थः । *अतिव्याप्तमिति । तत्राऽपि पूर्वापरीभूतक्रियाप्रचयप्रतीतेः, अन्यथा कारकसम्बन्धो न स्यादिति भाव । तत्र तदभावमाह *क्त्वान्तेति । आदिना तुमुन् । *क्रियान्तरेण—अन्याक्रियया । पर्यवस्यन्तीति पाठः । साकाङ्क्षेति तदर्थः । अपर्यवस्यन्तीति पाठे अन्तरशब्दो विनाऽर्थः । क्रियामन्तरेणेति वा पाठः । नन्वेवमव्याप्त्यापत्तिरत आह *पचतीति । *सर्वत्र—आख्यातमात्रे । *तथा—क्रियान्तरसाकाङ्क्षा । *तदिति । अन्यक्रियेत्यर्थः । *एव च—क्रियाप्रधानमित्युक्तौ च । नाकाङ्क्षेत्यस्य व्याख्या *स्वयमेवेति । भुक्त्वेत्यादौ नैवमिति भावः । स्वसिद्धान्ततो विशेषः क्त्वातुमुन्नादावेव अन्यत्र त्वेकवाक्यतैवेत्याह *एनादिति । तद्वार्तिकोक्तलक्षणपक्षे । अपिना प्रागुक्तसिद्धा-

न्तपक्षसमुच्चय । आख्यातलक्षणाक्रान्तत्वमस्तीत्याह *क्रियान्त-रेति। क्वचिदित्यादि। आदिना एधामित्यादि। *इतिमिश्रोक्तिसमाप्तौ। सिद्धान्तैकवाक्यतामाह *अत्रेति। वार्तिके इत्यर्थ.। निरुक्तसमानार्थमहाभाष्येति पाठ । स्वसिद्धान्ततो विशेषमाह *अत्रेति। वार्त्तिके इत्यर्थ। तद्भाष्यादिसमतिमप्याह *पञ्चमे इति। तत्राध्याये द्वितीयान्हिके द्वितीयप्रकरणस्याद्ये "प्रकृतादर्थादसबद्धार्थमर्थान्तरम्" इति सूत्रे इत्यर्थः ।*भाष्येपि–भाष्यादावपि। तत्रहि निग्रहस्थानप्रसङ्गे वादादिकथायां "हेतुत साध्यसिद्धौ प्रकृतायां वादी साधन ब्रूयान्नित्य शब्दो ऽस्पर्शत्वादिति हेतुरिति। अत्रान्तरे सुखादिभिर्व्यभिचारेण हेतोरसामर्थ्य पश्यन् तत्प्रच्छादनाय प्रसक्तानुप्रसक्त्या तमर्थमुपन्यस्यन्नर्थान्तरेणाय निगृह्यते हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्त पदम्। पदम् च नामाख्यातोपसर्गनिपाता" इत्युक्त्वा तदग्रे "अभिधेयस्य"इत्यादि विशिष्टेत्यन्तमुक्त्वा प्रागुक्तयदुक्तं तदग्रे तदाह *क्रियेति। भुक्त्वेत्यादावनतिप्रसङ्गाय *धात्वर्थेति। समाहारद्वन्द्व। मात्रपदेन सख्या। धात्वर्थ फलविशिष्टव्यापारः। अस्यार्थमाह *तत्रेति। भाष्ये इत्यर्थः । शेषमाह *आख्यातार्थ इति । अनेन पञ्चकं धात्वर्थ इति सूचितम्। *तदर्थः—धात्वर्थेत्यादेरर्थः। एवञ्च क्रियाकालयोगाभिधायित्वे सति तत्पञ्चकाभिधायित्वमाख्यातत्वमिति फलितमिति भुक्त्वेत्यादौ नातिव्याप्ति.। सख्याकालकारकानभिधानात्। तेन तदपेक्ष क्रियाप्राधान्यमनेनापि सूचित तदाह *तस्यैवेति। धात्वर्थत्वादेरेवेत्यर्थः। *अत्र–प्रागुपक्रान्ते। एतेन यत्पञ्चमे मिश्रोदयनाभ्यामन्यथोक्त तदपास्तम्। *तत्रैवेति। "ते विभक्त्यन्ताः पदम्" इति सूत्रविषये एवेत्यर्थः। समानाधिकरणस्थले आह *विशेषणेइति। *अनेन–उक्तेन सर्वेण। द्वितीयलब्धमाह *प्रत्ययेति। आद्यलब्धमाह *विशेषणेति। उक्तेत्यनुषङ्ग। पराज्ञानमाह *एवचेति। तन्मूलभूतैस्तथा प्रतिपादितत्वे चेत्यर्थः । *प्रथमान्तेति। तदर्थेत्यर्थ। आदिना ऽन्यलभ्यत्वम्। एकत्वम मुख्यत्वम्। तत्र शुष्कत्व च मुन्याद्यनुभवाविरुद्धत्वम् ॥ १२ ॥

पदसमयपरिपालनाय व्याकरणं प्रवृत्तमिति वदता वात्स्यायनेन स्पष्टमेव व्याकरणबोध्योऽर्थ ऐ-

श्वरसमयविषय इत्युक्तम् ।

एवंचार्वाचीननैयायिकमीमांसकानां व्याकरणातिरिक्तेऽर्थे पचतीत्यादि प्रयुञ्जानानां याज्ञे कर्मणि प्रत्यवायो यज्ञवैगुण्यं च दुर्वारम्, तदतिरिक्ते ऽर्थे तेषामसाधुत्वात् ।

नच निर्मूलमेतदनुशासनम् । "तस्माद्ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुतेर्मूलत्वात् ।

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥ इति–
पराशरोपपुराणाच्च ।

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरित्यभियुक्तोक्तेश्च । उक्तवास्यायनोक्तेश्च । शक्तिग्रहं व्याकरणोपमानेत्यादिना वृद्धैर्व्याकरणस्य शक्तिग्राहकतोक्तेश्च ।

नचासाधुत्वे एषान्ततस्तदर्थबोधो न स्यादिति वाच्यम् । साधुत्वज्ञानस्य बोधकारणत्वाभावात् । असाधुत्वज्ञानस्य तत्प्रतिबन्धकत्वाभावाच्च । क्रियायाः कर्तृकर्मभावेनान्वये ऽपि नदितरकारकत्वेन क्रियान्तरे ऽनन्वयात् । क्रियानाधारकारकत्वेनानन्वयाद्वा लिङ्गसङ्ख्यानन्वयाद्वा असत्त्वरूपत्वं बोध्यम् । यद्वोपमानत्वाभावस्तस्या असत्त्वम् । अत एव रोदितीव पठतीत्यादौ नोपमा । कर्त्रोस्तु न सा । क्रियां प्रति विशेषणत्वात् ।

तदुक्तं सन्सूत्रे भाष्ये "न वै तिङन्तेनोपमानमस्ति"

इति। किं तु तत्र सम्भावनाऽर्थं इवशब्द इति कैयटः। तिङन्तेन शब्देन उपमानबोधो नास्तीति भाष्यार्थः। उपमेयत्व त्वस्त्येव ब्राह्मणवद् अधीते इत्यादौ तथा प्रतीतेः। तथा "अनद्यतने लुट्"इतिसूत्रे भाष्ये "इयं नु कदा गन्ता येयं पादौ निदधाति"इत्यादावद्यतनभविष्यद्विषये लुट् कथमित्याशङ्क्य गन्तेत्यर्थेनैव तिङन्तेनोपमानमस्तीति दूषयित्वा अनद्यतन इवानद्यतन इति व्याख्यातम्। प्रयोगदर्शनवशाद्गौणे ऽप्यनद्यतने प्रत्यय इति कैयटः। "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन"इत्यादौ यथाशब्दस्य भेदकधर्मवद्वाचकतायाः प्रकारवचने थालिति सूत्रस्थाकरसंमतत्वेन यत्प्रकारवत्श्येनकर्तृकानिपत्यादानं तत्प्रकारवद्देवदत्तकर्तृकं रिप्वादानमिति बोधोत्तरमेव धर्मं तत्तयुक्तामादानक्रियां वा निमित्तीकृत्य उपमानश्येनाभिन्न उपमेयोऽयमिति बोधः। लक्षणामूलशाब्दव्यञ्जनास्थल इवात्रापि बोधद्वयस्य शाब्दत्वम्। यथाशब्दसमभिव्याहारे सर्वत्रैवमेव बोधद्वयम्बोध्यम्। आदावेवोपमानत्वबोधे "न वै तिङन्तेन" इति भाष्यविरोधः। कर्त्रोस्तु विशेषणत्वान्न प्राथमिकबोधे सा। थालः सादृश्यार्थकत्वे यत्सदृशो हरिस्तत्सदृशो हर इति बोधेऽपि हरिसदृशो हर इत्यर्थालाभ इति बोध्यम्।

अत एवालङ्कारिका अपि लिम्पतीव तमोऽङ्गानीत्यादावुत्प्रेक्षामेव वदन्ति।

हरिरप्याह—

साध्यस्यापरिनिष्पत्तेः सोऽयमित्यनुपग्रहः ।
तिङन्तैरन्तरेणेवमुपमानं ततो न तैः ।

तिङन्तार्थस्य साध्यत्वादपरिनिष्पत्तेः सिद्धत्वेनाभानात् तदर्थयोरिवमन्तरेण सिंहो माणवक इतिवत् पठति रोदितीवेत्यादौ सोऽयमित्यभिसम्बन्धाभावात्तिङन्तार्थो नोपमानं साधरणधर्मान्वयाभावात् । यस्य उपमानस्य इवमन्तरेण उपमेयेन सह सोऽयमित्यभिसम्बन्धः तस्य इवसमभिव्याहारे उपमानत्वेन प्रतीतिरित्यङ्गीकारात् ।

ननु रोदितीव पठतीत्यादौ कर्तुरेव तत्त्वं स्यादत आह—

साधनत्वं प्रसिद्धं च तिङ्क्षु सम्बन्धिनां यतः ।
तेनाध्यारोप एव स्यादुपमा तु न कल्पते ॥

सम्बन्धिनाम्, गुणभूतानाम् । अध्यारोप उत्प्रेक्षा । न्यूनत्वोत्कृष्टत्वाभावाच्च नोपमानत्वमित्याह—

न्यूनेषु च समानार्थमुपमानं विधीयते ।
क्रिया चैवाश्रये सर्वा तत्र तत्र समाप्यते ॥
येनैव हेतुना हंसः पततीत्यभिधीयते ।
आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते ॥ इति ।

समानार्थं साधारणधर्मवत् । येनैव हेतुना पक्षादिना । हस इवातिः पततीत्यत्र तु साधनयोरुपमानोपमेयभावो इति हेलाराजः । पचतिकल्पं देवदत्त इत्यादौ आख्यातार्थे देवदत्तस्य विशेषणतेति बोध्यम् ।

नन्वेवं पचति भवतीत्यादौ समानवाक्ये तिङ्क्ष-

यलाभेन तद्व्यावृत्त्यर्थं "तिङ्ङतिङः" इति सूत्रे ऽति-ङ्ग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानपरभाष्यविरोध इति चेन्न ।

लौकिकैकवाक्यत्वसत्त्वे ऽपि "एकातिङ् वाक्यम्" इति परिभाषितस्यासत्त्वादिति भाष्याशयात् । लौकवाक्यत्वं च—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।—

इत्यमरोक्तम् । अत्र वाशब्दश्चेदर्थे । बोध्येति शेषः। कारकान्वितक्रियाबोधकसुप्तिङन्तचय इत्यर्थः । सुप् च तिङ् च सुप्तिङ्, सुब्विशिष्टं तिङ् सुप्तिङ् तयोरेकशेषे चयशब्देन समासः । तेन सुबन्तचय-तिङन्तचयसुप्तिङन्तचयानां त्रयाणामपि लाभः । तत्र सुबन्तचयः चैत्रेण शयितव्यमिति । तिङन्त-चयः पचति भवतीत्यादि । अन्त्यः चैत्रः पचतीति । क्रियावेत्यनेन निरर्थकपदसमुदायव्यावृत्तिः । सुप्-तिङन्तचयपदेन केवलस्य पचतीत्यादेर्व्यावृत्तिः । तस्यापि कर्त्रादिविशिष्टक्रियाबोधकत्वात् । एत-देव एकोद्देश्यकैकविधेयकत्वगर्भैकवाक्यलक्षणम् ।

तदुक्तं हरिणा—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।

कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते ॥ इति ।

वाक्यमित्यस्यैकं वाक्यमित्यर्थः।"अर्थैक्यादेक वाक्यं साकाङ्क्षं चेद्विभागे स्याद्"इति जैमिनिसूत्रात् । गुणव-दित्यस्य साक्षात्परंपरया वा यद्विशेषण तद्वदित्यर्थः ।

यत्त्वमरे क्रियावेति लक्षणान्तरमर्थनिष्ठवाक्यत्व-

बोधकामिति । तन्न । "वचोऽशब्दसंज्ञयाम्" इति कुत्वनिषेधेनार्थे वाक्यशब्दाप्रयोगादिति समर्थसूत्रस्थभाष्यप्रदीपोद्द्योते विस्तरः ॥ १३ ॥

( कुं० टी० ) *चोपमेति । रोदितीव गायतीत्यत्र तु उत्प्रेक्षा । अत उक्तम्—इवशब्दप्रयोगेऽपि अध्यारोपस्तु विद्यते इति । *तिङन्तेनेति । तिङन्तार्थेनेत्यर्थः । अयं भावः सिद्धरूपतया प्रतीयमानस्यैव वस्तुन इदं तदिति परामर्शयोग्यत्वं भवतीति तदभावान्नोपमानत्वम् । क्रिया हि साध्यस्वभावान्नैकपरामर्शयोग्या । तिङन्तेनोपमानोपमेयभावो नास्तीति कैयटे उपमेयशब्दो न युक्त इत्याह *उपमेयत्वं त्वस्त्येवेति । *एवमिति । विलम्बेनेत्यर्थः । *अयम्—प्रयोगः पतनविषयः । *यथाश्येन इति । यद्धर्मवच्छ्येनकर्तृकमादानं तद्धर्मवद्देवदत्तकर्तृकमादानमिति वाक्यार्थे ऽवगते यत्तद्भ्यामुपमानधर्मैक्यं निमित्तीकृत्य श्येनयागयोः सादृश्यं प्रतीयते इति न तत्र क्रिययोरुपमानोपमेयभावः प्रतीयते इति । *लिम्पतीवेति । तमः, अङ्गानि लिम्पति इव अञ्जनमिव वर्षतीति रात्रिवर्णने उत्प्रेक्षैव नोपमा, उपमेयाभावादिति भावः । *साध्यस्येति । अयं भावः—साध्यस्वभावोऽपरिनिष्पन्नार्थस्तिङन्तार्थः । स चोपमेयेन सह सोऽयमित्यभिन्नरूपतया निर्देष्टुं न शक्यते यथा सिंहो माणवक इत्यत्र सोऽयमित्यभेदेनाध्यवसीयते नैवमत्रेत्यन्तरेणेवशब्दमुपमानभावो नास्ति । रोदितीव नृत्यतीत्यादौ तु क्रियायाः साध्यायास्तदसंभवाद् गुणीभूतस्य साधनस्य प्रत्यवमृश्य संबन्धः । यः पचति तस्यापत्यमिति । ननु क्रियायाः स्वतो मा भूदुपमानत्वं साधनद्वारा तु भविष्यतीत्याशङ्क्याह *साधनत्वमिति । तिङन्तवा-

क्यविषये ये संबन्धिन उपादीयन्ते तेषां साध्यार्थापेक्षया साधनत्वं निश्चितम् । तथा च पर्वतं भिनत्तीत्यादौ पर्वतं भिनत्तीवेत्यादि न गम्यते किन्तु संभावितसामर्थ्यं साधनमेवाध्यारोप्य समन्वयो नतु कारकेण, नापि क्रियायामुपमानोपमेयभावोऽस्ति । इत्थमेव इयं नु कदा गन्तेत्यादावध्यारोपः । भविष्यत्सामान्ये भविष्यदनद्यतनत्वेन दीर्घकालतया गमनस्य विवक्षेत्यत्र गन्तृत्वाध्यारोपः । क्रियाया उपमानत्वाभावे युक्त्यन्तरमप्याह *न्यूनेषु चेति। चन्द्र इव मुखमित्यादावुपमानं पूर्णगुणमुपमेयं तु न्यूनगुणं प्रसिद्धं क्रिया तु साधनसाध्या स्वाधारे परिसमाप्या सर्वाऽपि समैवेत्यर्थः । अत्रोदाहरणमाह *येनैवेति । पक्षाभ्याङ्गमिक्रिया साधयन्तो हंसाः पतन्तीत्युच्यन्ते । आतिरपि स्वपक्षाभ्यां तथैव गमिक्रिया निष्पादयन्ती पततीत्यभिधीयते इति प्रत्याश्रयं क्रियायाः परिसमाप्तत्वेन न्यूनाधिकभावाभावः । आतिः पक्षिविशेषः । *प्रत्याख्यानपरेति । तिङन्तद्वये समानवाक्यत्वे तदुक्ते । *परिभाषितेति । अनुदात्तङिद्द्विधावस्यैव वाक्यस्य ग्रहणात् । तदुक्तं हरिणा—

निपातादिव्यवस्थार्थं शास्त्रे यत्परिभाषितम् ।
तस्यातिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥ इति ।

आख्यातं सविशेषणमिति लक्षणे ऽप्याख्यातमित्येकत्वस्य विवक्षितत्वम् । सूत्रकारमते तु साकाङ्क्षावयवं भेदे इति मीमासकमतमाश्रित्य प्राप्तिर्बोध्या । ननु भिन्नवाक्ये "समर्थः पदविधिः" इति परिभाषयैव नातिव्याप्तिरिति चेन्न । शालीनां ते ओदनं दास्यामीत्यत्र शालीनां ते इत्यनयोरसामर्थ्येऽप्यादेशस्येष्टत्वात्। *साकाङ्क्षेति । भेदे विश्लेषे परस्परसाकाङ्क्षं चेदित्यर्थः । अविभागे तु परानाकाङ्क्षाः शब्दाः पदानि यस्मिन् । *कर्मप्र-

धानम्—क्रियापदप्रधानम् । *गुणवत्-विशेषणविशिष्टम् । *एकार्थम्—एकप्रयोजनकम् ॥ १३ ॥

( क० टी० ) विशेष वक्तुमाह *पदेनि । परिपालनायेत्युक्तिस्वारस्यात् । अन्यथा करणायेत्येव वदेत् । आरम्भे ऽप्युक्तमिदम् । तमेवाह *एव चेति । तस्य तत्त्वे चेत्यर्थ । प्रागुक्तरीत्या आह *याज्ञे इति । ब्राह्मणेनेत्यादि श्रुतिपाठः । नस्मादित्याद्यावपाठ. । भाष्ये आगमत्वेन तथैवोल्लेखात् । श्रुत्यर्थ उद्द्योतच्छायाभ्यामवगन्तव्यः । जैमिन्यादेस्त्वत्र तात्पर्यान्न तदुक्तिः साधुत्वनिर्णायिका । तद् ध्वनयन्नाह *पाणिनीयमिति । *उक्तेति । अनुपदमिति भाव' । उक्तमेव दार्ढ्यायाह *नचेति । ननु पचतिभवतीत्यादौ क्रियाया कर्तृत्वादिनाऽन्वये तस्या असत्त्वरूपता भज्येतात आह *क्रियाया इति । ततो लाघवादाह *क्रियानाधारेति । हरि नमेच्चेत्सुख यायादित्यादौ हेतुहेतुमद्भावेनान्वयो न क्रियाकारकभावेनेति न दोष । स्ववाचकधात्वर्थ प्रति तु कर्मत्वान्वय' करणत्वान्वयश्च नासत्त्वरूपताप्रतिबन्धकः । शोभन पचति ज्योतिष्टोमेन यजेतेत्यादौ दर्शनात् । ततोऽपि लाघवादव्ययसाधारणमाह *लिङ्गेति । इदमपि दीक्षिताद्युक्तरीत्या । सिद्धान्तमाह *यच्चोपमानेति । *नोपमेति । अन्यथा तिङन्तोत्तरमिवशब्दश्रवणेन तदर्थस्य साम्यात् । एतेन प्रत्ययोत्तरमिवश्रवणेन धात्वर्थस्य तत्त्व दुर्लभमित्यपास्तम् । ननु कर्त्रोरेव सा अस्त्वत आह *कर्त्रोस्त्विति । *सनिति । "धातो. कर्मण." इति सूत्रे इत्यर्थः । तत्र हि "आशङ्कायाम्" इति वार्त्तिकप्रत्याख्यानायोक्तस्य "उपमानाद्वा सिद्धम्" इति पक्षान्तरस्य पूर्वाशयखण्डक "नवै" इति । उपमानोपमेयभावो ऽपि न तद्भाष्याभिमत इत्याह *तिङन्तेनेति । अत एव तथैव प्रतिज्ञातम् । तस्या सम्प्रदानत्वाद्यभाववद् सादृश्यप्रतियोगित्वस्याप्यभाव इति तद्भाव । स्पष्ट चेद प्रकाशादौ । उत्प्रेक्षा तत्रेत्याह *किन्त्विति । *प्रतीतेरिति । एतेन साधारणधर्माधारत्वरूप सत्त्व "तेन तुल्यम्" इति सूत्रे कैयटोक्तमपास्तम् । उपमेये ऽधीत इत्यादौ कारकान्वयानापत्ते. । एतेन रोदितीवेत्यादौ तयोस्तत्सत्वात्तादृशसत्त्वरूपतासत्त्वेन तत्त्वभङ्ग इत्यपास्तम् ।

भाष्यान्तरमाह *तथेति । व्याख्यातमित्यत्रान्वयः । ननु "यथा वै" इत्याद्यर्थवादवाक्ये भिन्ननिष्ठयोरेकधातूपात्तयोरपि क्रिययोरुपमानोपमेयभावदर्शनादिदमसङ्गतमत आह *यथावे श्येनइति । प्रकारशब्देन भेदो, न सादृश्यमित्याह *यथेति । लिनिगमनाविरहादाह *वाचकतायाइति । प्रागुक्तरीत्या आह *उपमानेत । अयं व्यञ्जनाजन्य शाब्द एवेत्याह *लक्षणेति । साहेन्ती सहि सुहअमित्यादाविवेत्यर्थः । *अत्रापि–अभिधामूलव्यञ्जनायामपि । न केवलमत्रैवेत्थमित्याह *यथेति । अन्यथा भाष्यविरोध एवेत्याह *आदाववे ति । *सेति । उपमेत्यर्थ । अनन्तर तु तत एव न दोष । तन्नियमस्याभिधाविषयत्वात् । इदमावश्यकमित्याह *थाल इति । *अत एव–तस्या उपमानत्वाभावादेव । अन्यथा साऽपि वाच्या स्यात् । अत्र हरिसमतिमप्याह *हरिरिति । अग्रे ऽप्युभयत्रायमेव कर्त्ता । अन्त्येते पूर्वमुभयत्रापि सम्बन्ध इति हेलाराज इत्यस्येव बहुवचन प्रयोगभेदाभिप्रायमित्याह *तदर्थयोरिति । अनुपग्रहार्थेऽभीति फलितमाह *तिङन्तार्थं इति । हेतु विशदयति *साधारणेति । विशेषणत्वान्यहेतुमप्याह *न्यूनेष्विति । आतिर्बलाका । नन्वेव हस इवातिरित्यादौ का गतिरत आह *हसइवेति । पदान्तरवाच्यत्वादिति भाव. । ननु स्वसिद्धान्ते ऽपि पचतिकल्प चैत्रा इत्यादावन्वयो दुरुपपाद । आख्यातस्य धर्मिवाचकत्वे ऽपि कल्पाद्यन्तेन क्रियाविशेष्यकबोधजननेनाभेदस्य बाधात्, भेदेनान्वयस्तु नामार्थयोरव्युत्पन्नो ऽत आह *पचतीति । *आख्यातार्थे–प्रकारभूते कर्त्तरि' अभेदस्यासम्बन्धत्वादाह *विशेषणतेतीति । तस्य विशेष्याकाङ्क्षायाः सत्त्वेन तदन्वयस्यैवौचित्यात् । पचति चैत्र इत्यादाविव नामार्थयोरित्यस्याश्च नामजप्रतीतिविशेष्ययोरभेदेनैवान्वय इत्यर्थो नतु तयोरेवाभेदान्वय इतीति न दोषः । सिद्धान्ते एव शङ्कते *नन्विति । *एवम्—क्रियाया कर्तृत्वादिनाऽन्वये । एवमपीति पाठे पचतिकल्पमित्यादावदोषेऽपीत्यर्थः । तस्यासत्त्वमिति पाठ । प्रत्यासत्त्या एककर्तृकत्वात्तत्र तस्यैव ग्रहणम् । अन्यथा तदानर्थक्य चेति भावः । लौकिकैकवाक्यत्व वक्तु तद्घटकलक्षणमाह *लौकिकेति । निपातानामनेकार्थत्वादाह *अत्रेति । साकाङ्क्षत्वादाह *बोध्येतीति ।

समुदितार्थमाह *कारकेति । यथाश्रुते न्यूनतापरिहारमाह *सुप्चेति । *तत्र-तेषां मध्ये । *इति-इत्यादि । एव मग्रेऽपि । उभयगतिमाह *क्रियेत्यादि । *निरर्थकेति । घट कर्मत्वमित्यादेरित्यर्थः । *एतदेव—अमरोक्तमेव । स्योनन्त इत्यस्य सदनप्रकाशकस्य विभागेन साकाङ्क्षत्व तस्मिन्सीदेत्यस्य सादनप्रकाशकस्य विभागे साकाङ्क्षत्वेऽपि परानाकाङ्क्षशब्दकत्वेनेति नैकवाक्यत्वमित्युभयमुपात्तम् । तत्र परेति स्पष्टार्थम् । तद्विनाऽपि अतिप्रसङ्गाभावात् । अत एवोद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेद इति मीमांसकोद्घोष । *एकार्थम्-एकोद्देश्यकैकविधेयकम् । अत एवाविरोधायाह *वाक्यमित्येति । समर्थसूत्रभाष्यैकवाक्यतया सर्वसंग्रहायाह *गुणवदिति । मुकुटाद्युक्त खण्डयति *यद्वेति । वाशब्दस्वारस्यात् । एतेन सुप्तिङन्तचय इत्यनेन सुबन्ततिङन्तचययोर्ग्रहणम् । वाशब्द समुच्चये । कारकान्वितक्रियावोधक घटमानयेत्याद्यपि उभयात्मक वाक्यमिति द्वितीयार्थ इति रत्नाश्रमोक्तम्, भाष्यमतेन प्रथमपक्षः, "एकतिङ् वाक्यम्" इति वार्त्तिकमतेनापर इति केनचिदुक्त चापास्तम् । आद्ये ऽतिप्रसङ्गापत्तेरुक्तत्वात् । द्वितीयस्य भाष्यार्थाज्ञानमूलकत्वात् । तत्रत्यकैयटादेस्तु प्रमाद इत्युद्द्योते स्पष्टम् । तदाह *समर्थेति ॥ १३ ॥

संख्या तु आख्यातार्थाश्रयविशेषणम् । "लः कर्मणि" "तिप्तस्झि" "द्व्येकयोः" इत्येकवाक्यतया एकत्वादिविशिष्टकर्त्रादौ तद्विधानादिति केचित् । परे तु "लः कर्मणि" इत्यादेर्वाक्यैकवाक्यता—लकाराः कर्मादौ भवन्ति तेषां च स्थाने एकत्वादौ तिबादय इत्येवंरूपा । नहि तत्र द्वितीयं कर्मणीत्याद्यस्ति यस्य संख्या विशेषणं स्यात् । आवृत्तौ च न मानम् । तस्मात् संख्याया धात्वर्थे ऽन्वयः । कस्यैकत्वादावित्याकाङ्क्षायामुपस्थितप्रकृत्यर्थस्यैवान्वयौचित्यात् प्रकृत्यर्थगतैकत्वादावित्येवार्थः । एवं च सुप्तिङ्-

विषये तेषामेकरूपता भवति । कर्मणीत्यादेर-पि विधेयं प्रति गुणत्वाद् गुणानां च परार्थत्वा-दिति न्यायेन संख्यया तदसंबन्धात् । कर्मणत्त्या-देरपि कस्येत्याकाङ्क्षासत्त्वेन तत्र धात्वर्थान्वयस्य क्लृप्तत्वाच्च । "कर्मणि द्वितीया" इत्यादौ प्रातिपदि-कार्थस्यैव कर्मत्वशक्तिमत्त्वेन कर्मण एकत्वे द्वितीया इत्यादिभाष्यादिग्रन्थानां नासङ्गतिः । स्वप्रकृति-कप्रत्ययवाच्यसाधनगतसङ्ख्यायास्तत्रारोपात् । न द्वित्वादिसङ्ख्याबाधस्तत्र ।

ध्वनितश्चेदं याग्विधायके कैयटेन अथैकपदवाच्य साधनगतसङ्ख्याश्रयं द्विवचनादीति पक्ष इति वदता।

अत एव साधने न द्वित्वादिसंशयः । क्रियागत-सङ्ख्यारोपस्य साधनगतसङ्ख्याज्ञाननिमित्तत्वात् । शब्दशक्तिस्वभावाच्च न भिन्नपदवाच्यसाधनगतस-ङ्ख्यायास्तत्रारोपः । अतो न भावे द्विवचनादि । अ-नेकः पचतीत्यादौ साधने ऽप्यारोपितसङ्ख्याया एव तव प्रतीतेः । पञ्चकृत्वः पच्यते इत्यादौ पदान्तरसम-भिव्याहारेण सङ्ख्याऽवगमे ऽपि न बहुवचनं लक्ष्या-नुसारेणात्र पदसंस्कारपक्षस्यैवाश्रयणात् । धातुना च स्वतो निवृत्तभेदैव क्रियोच्यते ।

तदुक्तं हरिणा—

एकत्वे ऽपि क्रियाख्याते साधनाश्रयसङ्ख्यया ।
भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः ॥ इति ।

अत्र हेलाराजः एकपदोपात्तकर्तृकर्मलक्षणसाध-नाधारकद्वित्वबहुत्वाभ्यां पचतः पचन्ति पच्येते पच्य-

न्ते इति क्रिया विशेष्यते। नहि द्विबहुसाधनसाध्यत्वं प्रतीयते क्रियायाः । एवं तद्गतलिङ्गयोगो न । शब्दार्थप्रतीतेः स्वाभाविकत्वेन युक्त्यगम्यत्वात् ।

अत एव 'देवदत्तः पचति' इत्यादौ द्रव्येण क्रियायाः सामानाधिकरण्यम् ।

अत एव द्रव्यवादिना आख्यातार्थो ऽपि द्रव्यमिति स्वीकार इति ।

तथा 'सम्बन्धाज्ज्ञातभेदो ऽयम्' इति हरिकारिकाप्रतीकमुपादाय यथाऽऽख्याते प्रत्ययवाच्यकारकभेदे तत्सम्बन्धाद्धात्वर्थक्रियाया अपि भेदः प्रतीयते यथा पचतः पचन्तीति इति पुञ्जराजः ।

अत एव 'घटपटौ न स्तः' इत्यादौ व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावप्रतीतिरिति सङ्गच्छते ॥ १४ ॥

( कुं० टी० ) *आख्यातार्थाश्रयेति । कर्मधारयः । ननु क्रियाया एकत्वाद् द्विवचनाद्यनापत्तिरत आह *स्वप्रकृतिकेति । स्वं धातुः । कर्त्रादिगतसंख्याया धात्वर्थे आरोप इत्यर्थः । *कैयटेनेति यदुक्तं तदनुवदति *अथैकेति । अयं भावः—क्रियाया एकत्वाद् द्विवचनादि न प्राप्नोति साधनभेदात् क्रियाभेदमाश्रित्य द्विवचनाद्युपपादने तु भावार्थकेऽपि तदापत्तिः। अथैकपदवाच्यसाधनसंख्याश्रयं द्विवचनादीति चेत् पाकौ इत्यादि न स्यात् । साधनस्य घञाऽनभिधानादिति । ननु धात्वर्थे संख्यारोपे बीजाभाव इत्यत आह *साधनेपीति ।

---

( १ ) तेन हीति पाठः पुस्तकान्तरे ।

*आख्यातार्थोऽपि द्रव्यमिति । क्रियाविशिष्टः कर्त्रादिरेवा-ख्यातार्थ इत्यर्थः । *संबन्धादिति । कर्तृभेदे सति क्रियाया अपि भेदः प्रतीयते । वस्तुतस्तु न भेदः । अत एव पक्त्वौदनं भुङ्क्ते इत्यत्र समानकर्तृकत्वमुपपन्नम् । *व्यासज्यवृत्तीति । उभयत्वावच्छिन्नेत्यर्थः ॥ १४ ॥

( क० टी० ) *केचित्—दीक्षितभूषणकृदादयः । सिद्धान्त-माह *परेत्विति । *वाक्यतेति । तयोर्ह्येकयोरित्यादीनाम् । ननु सुब्विषये न प्रकृत्यर्थगतैकत्वादावित्यर्थः किन्तु सा-काङ्क्षतया सम्भवेन च कर्मगतैकत्वादावित्यर्थ इति कथमे-करूपताऽत आह *कर्मणीत्यादेरपीति । तथा च तत्र तथैवान्वय इत्येकरूपतैवेति भावः । प्रकृते तत्रान्वये साधकान्तरमाह *क-र्मणीत्यादेरपीति । *तत्र—कर्मादौ । ननु सुब्विषये गुणानामिति न्यायेन तदसम्बन्धेन तथैवान्वये कर्मण एकत्वादौ द्वितीयेत्या-दिभाष्यविरोधोऽत आह *कर्मणीति । कर्मादिशब्दस्तत्र शक्ति-मत्परो न तु शक्तिपर. । सच प्रकृत्यर्थ एवेति न दोष इति भाव. । *एकत्वे-एकत्वादौ । ननु वक्ष्यमाणरीत्या द्वित्वादेस्तत्र बाधात्कथ तदन्वयस्तत्रात आह *स्वेति । स्व धातुः । वाच्यान्तसाधनविशेषणे-नातिप्रसङ्गनिरास । *तत्र–धात्वर्थे । *वदतेति । वदता कैय-टेनेत्याद्यन्वय । कर्माणि सर्ववचनानि भावे त्वेकवचनमेव केनैतदेक भवतीति भाष्यीयप्रश्नाशय । पक्षान्तर तु न सदोषमिदानीमुक्त तेन। अत एवेत्यस्यार्थ सूचयन्नाह *क्रियागतेति । *साधनेति । बहुव्रीहिः। ननु तद्वत् भिन्नपदवाच्यसाधनगतसङ्ख्यारोपोऽपि कुतो नेति भावा-ख्याते दोषोऽत आह *शब्देति । *चस्त्वर्थे । ननु साधनगताना-रोपितसङ्ख्याप्रतीतिसम्भवे किमर्थमारोपिततत्प्रतीतिस्वीकारो ऽत आह *अनेकइति । आरोपे निमित्ताभावादेवाह *पञ्चकृत्व-इति । अन्तरङ्गत्वाज्ज्ञातसंस्कारस्य तेन बाधायोग इति भावः। ननु एवमपि वाक्यसंस्कारपक्षे दोष एवात आह *लक्ष्येति । एकत्वं तु क्रियायां स्वतो न त्वारोपितमित्याह *धातुनाचेति । *शब्दा-र्थेति । शब्दादर्थप्रतीतेरित्यर्थः । *अत एव-तत्र स्वभावत. तद्ग-

संख्याभानेन पारिभाषिकद्रव्यत्वसत्त्वादेव । अनेन तत्र स्वाभाविकत्व समर्थितम् । *द्रव्येति । द्रव्यमेवैकः सर्वत्र शब्दार्थ इत्येकशब्दपक्षवादिनामित्यर्थः । *आख्यातार्थे-तिङन्तजन्यप्रतीतिविशेष्यभूतः । इत्यन्तराद्याह *तथेति । दृष्टान्तमाह *यथेति । तमेव विशिष्याह *यथेति । *अतएव-तत्र तदारोपेण तस्यास्तत्त्वेन भानादेव । अन्यथा प्रसज्यप्रतिषेधे क्रियान्वयनियमेनान्यथा दोषेण च तत्र तदभावे तदभावमात्रप्रतीत्या तदसङ्गतिः स्पष्टैव ॥ १४ ॥

यत्र तु भावे लेऽपि संख्यावगमस्तत्र भवत्येव बहुवचनम् यथा हतशायिकाः शय्यन्ते इत्यादौ । तत्र हि यादृशानि हतानां शयनानि तादृशानि शयनानीत्यर्थः । तत्रोपमानबहुत्वेनोपमेयेऽपि तत्प्रतीतेः । अन्यथोपमाने बहुत्वोपादानं व्यर्थं स्यात् ।

नच

संख्यावान्सत्त्वभूतोऽर्थः सर्व एवाभिधीयते ।
भेदाभेदाविभागोऽपि लोके संख्यानिबन्धनः॥इति।

संख्यासमुद्देशे इत्युक्तेः कथमसत्त्वभूतक्रियायाः संख्यावत्त्वम् । इदं तादिति सर्वनामपरामर्शयोग्योऽर्थः सत्त्वभूतः । तत्र द्वित्वादि भेदव्यवहारकृत् । एकत्वं चाभेदव्यवहारकृत् ।

नच राजपुरुषादिवृत्तावुपसर्जनार्थे संख्यानवगमात् सर्व एवेत्यनुपपन्नम्, तस्याप्यर्थस्य वाक्ये पृथगुपस्थितौ तदवगमसत्त्वादिति वाच्यम् ।

यथा न्यायनये गुणत्वात् द्रव्यगतयैव संख्ययाऽऽरोपेण गुणादौ द्वित्वादिव्यवहारस्तथा मम क्रियायामपि तत्सम्भवात् । क्रियायां तद्योग्यत्वव्यवहारश्चानारोपितसर्वसंख्यानाश्रयत्वेन बोध्यः ।

नच न्यायनये गुणादावपेक्षाबुद्धिविशेषविषयत्वरूपा गौणी संख्या नतु द्रव्यगताया आरोप इति वाच्यम् ।

अयमेकोऽयमेक इत्यादिबुद्धेरेव तवापेक्षाबुद्धित्वेन गुणादौ तस्या अभावात् । एकत्वस्यापि गुणरूपत्वेन गुणादावसम्भवेन तथा बुद्धेरसम्भवात् ।

किञ्चैवं तेनैव द्रव्येऽपि तद्व्यवहारोपपत्तावतिरिक्तसंख्यापदार्थविलयापत्तिः । एवं च तिङर्थप्रकारकबोधे धातुज ज्ञानं कारणमित्येक एव कार्यकारणभाव इति लाघवम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गश्च ।

अत एव ङ्याप्सूत्रे भाष्ये तत्सूत्राभावे पचति पश्येत्यादौ तिङन्तात् स्वाद्युत्पत्तिमाशङ्क्य "एकत्वादीनामुक्तत्वान्न" इत्युक्तम् । तव तु तिङा कर्तृगताया उक्तत्वेऽपि क्रियागताया अनुक्त्या तदापत्तिर्दुर्वारा । सुपां प्रकृत्यर्थविशेष्यगतसंख्याभिधायित्वात् ।

तथा रूपप्सूत्रे तिङन्तप्रकृतिकरूपबाद्यन्ते पचतिरूपं पचतोरूपमित्यादौ संख्यालिङ्गाभावादमोऽनुपपत्तिमाशङ्क्य क्रियाप्रधानमाख्यातं क्रिया चैका न द्वित्वादिमती तिङन्ताद्भेदानवगतेः । क्लीबत्वञ्च स्वभावात् यद्येका पचत इत्यादौ कथं द्विवचनादीत्याशङ्क्य साधनापेक्ष तदित्युक्तम् । तत्र साधनान्वयीति नार्थः । एकत्वं क्रियान्वयि द्वित्वादि साधनान्वयीति

(१) तस्येतिपाठ कलानुरोधी ।

वैरूप्यापत्तेः। तस्मात्साधनगतसंख्यारोपापेक्षमित्यर्थ उचितः ।

यत्त्वनभिहितसूत्रे भाष्ये प्रातिपदिकार्थसूत्रे ऽनुवृत्तमनभिहित इति अन्यस्यासम्भवात्संख्याया एव विशेषणं स्यात्। एवं च पचत्योदनं चैत्र इत्यादावेकत्वात्प्रथमा न स्यादित्युक्तम्। तस्यायं भावः–साधनगतसंख्यारोपानिमित्तत्वेन वस्तुतः साधननामार्थगताया उक्तत्वम्।एकवचनमपि साधने द्वित्वाद्यभावबुद्धिनिमित्तके तदनारोप एव, वक्ष्यमाणयुक्तेः। एवं च तदभावबुद्धौ द्रव्यस्य निस्संख्यत्वाभावेनैकत्वमप्यवगतमेव साधने इतीति न तद्विरोधः।अन्यथा तिङर्थाश्रयगताया उक्तत्वेऽपि चैत्रत्वविशिष्टनामार्थगताया अनुक्तत्वात्तत्रापि तदसङ्गतिरेव। पचतोरूपामित्यादौ द्विवचनादि तु न।द्वयोरेकस्य बहुषु त्रयाणामित्यादिनिर्देशैः प्रातिपदिकार्थसूत्रे प्रवृत्तिनिमित्तभूतसंख्याबोधकवचनशब्देन च संख्याप्रवृत्तिनिमित्तकेषु "न केवला प्रकृतिः" इति समयस्यानुवादकविभक्त्यैव पालनेऽपि अन्यत्रौत्सर्गिकैकवचनेनैव तत्पालनं लक्ष्यानुसारात् भाष्यप्रामाण्याच्चेति बोध्यम्

एवं च भावे स्वगतैकत्वेनैवैकवचनम्। अन्यथा तव पचाति भवति पचतो भवतीत्यादौ भवत्यर्थसङ्ख्यान्वयः क्व स्यात् । "भवतिः पुनर्वर्तमानकालत्वं चैकत्वं च" इति भाष्येण तस्य संख्यार्थकत्वबोधनात्। पचतो भवत इति तु न। आरोपितस्यान्यत्रारोपादर्श-

**नात् । तादृशस्यारोपे मानाभावात् । अत्र चेदमेव भाष्यं मानम् ॥ १५ ॥**

( कुं० टी० ) *यथेति । शयनं शायिका क्रियाविशेषणत्वात् शस् । *संख्यावानिति । इदं तदिति परामर्शयोग्यं द्रव्यम् । तत्सर्वं सङ्ख्याविशेषान्वयार्हम् । द्वित्वेन भेदः, एकत्वेन चाभेद इति तदर्थः । अभिन्नप्रत्ययाविषयत्वरूपस्यैकत्वस्य गुणेऽपि सम्भवादाह *द्वित्वादीति । *तस्या अभावादिति । तादृशबुद्धिविशेषविषयत्वरूपसंख्याया अभावादित्यर्थः । अत्रैव हेतुमाह *एकत्वस्यापीति । एकत्वस्याभावे एकोऽयमिति बुद्धेरप्यसम्भवादित्यर्थः । *तेनैव–तादृशबुद्धिविशेषविषयत्वेनैव । *तद्व्यवहारेति । सङ्ख्याविशेषव्यवहारेत्यर्थः । *विलयापत्तिरिति । अभेदप्रत्ययविषयत्वमेकत्वं भेदप्रत्ययविषयत्वं द्वित्वादीति विभागसम्भवात् । *एकएवेति । तार्किकाणां तु तिङर्थकालस्य धात्वर्थे ऽन्वयः, संख्यायास्तु कर्त्रादाविति भेदः । अत एव तिङर्थस्य कर्त्रादावन्वयाद् व्युत्पत्तेरपि भङ्गः । क्रियायां संख्याबोधार्थं स्वाद्युत्पत्तिः स्यादिति यदुक्तं तत्रैव बीजं दर्शयति *सुपामिति । *क्रियाप्रधानमिति । पश्य मृगो धावतीत्यत्र दर्शिं प्रति धावनस्याप्रधानत्वे ऽपि समानपदोपात्तकारकापेक्षया प्राधान्यं तदर्थः । *क्रियाचैकेति । एवं च द्वित्वाद्यभावेन द्विवचनाद्यनुत्पत्तावौत्सर्गिकमेकवचनमिति भावः । नद्वित्वादिमती इत्यत्र हेतुमाह *तिङन्तादिति । *क्लीबत्वं चेति । लिङ्गमशिष्यमिति न्यायात् । *यद्येकेति । क्रियेति शेषः । यद्यपि साधनभेदात् क्रिया भिन्ना संख्याभावादेकत्वमपि चायुक्तं तथाऽपि भेदाभावरूपमेकत्वं बोध्यम् । *साधनापेक्ष-

मिति । साधनगतसंख्याऽऽरोपापेक्षमित्यर्थः । *अन्यस्यासम्भवादिति । अनभिहिते प्रातिपदिकार्थे इत्यर्थासम्भवात् । *साधनगतेति । साधनगतसंख्यायाः क्रियायामारोपात् आरोपमूलभूतायाः साधनगतसंख्याया अपि उक्तत्वमेवेत्यर्थः । ननु पचतः पचन्तीत्यादावनारोपितक्रियाया एकत्वादेकवचनापत्तिरत आह *एकवचनमपीति । *द्वित्वाद्यभावेति । आरोपितद्वित्वादिप्रतीतेरौत्तरकालिकत्वेन पूर्वप्रतीतस्यैकत्वस्य बाध इति भावः । *तदभावबुद्धौ—द्वित्वाद्यभावबुद्धौ । ननु द्वौ त्रय इत्यादाविव पचतोरूपमित्यादावप्यनुवादकत्वाद् द्विवचनादि उचितमित्याशङ्क्याह *द्विवचनादि तु नेति । द्वावित्यादावनुवादकविभक्तिप्रयोगे ऽपि पचतोरूपमित्यादावेकवचनादिलक्ष्यानुसारादेवेत्यर्थः । *क्व स्यादिति । साधने तदन्वये तु पचतो भवति न स्यात् । *करोति पुनरिति । यथा हि किं करोषि पचामीत्येवं करोतिः पचादीनां सर्वान्पुरुषवचनादीनाचष्टेनैवं पक्ष्यति भविष्यति पचतो भवत इत्यादिप्रयोगो भवति किन्तु भवतिर्वर्तमानकालमेकत्वमेव चाहेति भाष्यार्थः । यौ पचतः तौ भवत इति तु नार्थः। आख्याते क्रियाया एव प्राधान्यात्। तस्मादत्र पच्यर्थ एव भवतेः कर्ता तत्र क्रियायामेव संख्यान्वयः। *आरोपितस्येति। क्रियायामारोपितस्येत्यर्थः॥१५॥

(क० टी०) विशेषमाह *यत्रत्विति । *सङ्ख्येति । एकत्वान्यसङ्ख्याविशेषेत्यर्थः । अत एवाह *बह्विति । *इत्यादावित्यादिनोष्ट्रासिका आस्यन्त इति । तत्र हेतुमाह *तत्रोपमानेति । *अन्यथा—तेन तत्राप्रतीतौ । यत इति शेषः । लिङ्गादिभेदे उपमाया दुष्टत्वात् । तां विना तत्र गत्यभावात्। साऽत्र लुप्ता बोध्या । तथाच लक्ष्यानुसारेण तत्र वाक्यसंस्कारपक्षस्यैवाश्रयणेन पदान्तरवाच्यसाधनगतसङ्ख्याया अप्यगत्या

तत्रारोपाङ्गीकार इति तत्साधुत्वम्। एतेन "सार्वधातुके यक्"इति सूत्रस्थोक्तभाष्यप्रयोगादेव तत्र तत् साध्विति भूषणाद्युक्तमपास्तम्। हरेर्ह्यन्तरविरोध परिहराति *नचेति। यद्यपि प्रागुक्तयद्वेतिसिद्धान्तमते ऽस्य सामञ्जस्यमेव तथापि प्राचनिमते ऽप्यविरोधायायमुप क्षेप। *सङ्ख्येति। सत्त्वभूतोऽर्थ एव सर्वं सख्यावानभिधीयते लोके इत्यर्थ। अन्यदप्याह *भेदेति। तन्निबन्धन एवेत्यर्थः। उद्देश्यविधेययोर्भेदायाह *इदमिति। अत्रेत्यादिः। ननु भेदस्य तत्त्वेऽपि कथमभेदस्य तत्त्वमत आह *तत्रेति। सख्यानां मध्ये इत्यर्थः। विभागपदार्थमाह *व्यवहारेति। तस्यातन्निबन्धनत्वे ऽपि तद्व्यव हारस्य तन्निबन्धनत्वमिति भाव. । सिद्धान्तरीत्येयमाशङ्क्येत्याह *सख्येति। सख्यासामान्येत्यर्थ। गमकाभावस्थले इति भाव। विशेष वक्तु सदृष्टान्तमाह *यथेति। गुणे द्रव्यस्य कारणत्वेन तन्मूलकगुणनिष्ठगुणानङ्गीकारादाह *गुणत्वादिति । *गुणादावित्यादिना कर्मादि। उपक्रमानुरोधेनाह *द्वित्वादीति। एकत्वसत्त्वादाह *सर्वेति। तमेव कथयन् दृष्टान्तासङ्गतिमाह *नचेति। तत्र तदभावे हेतुमाह *एकत्वेति। *आपिना बुद्धिसमुच्चय । भेदमभ्युपेत्यैवेदम्। वस्तुतो न सा भिन्नेत्याह *किञ्चैवमिति। गुणादौ तादृशसख्याङ्गीकारे इत्यर्थ.। *तेनैव–अपेक्षाबुद्धिविशेषाविषयत्वेनैव। *तादिति। द्वित्वादीत्यर्थः। फलान्तरमप्याह *एव चेति–सख्याया धात्वर्थे ऽन्वये च। अस्योभयत्रान्वय. । *अत एव–तिङर्थसख्यायास्तत्रान्वयादेव । धातोर्लस्य बाधकस्य सत्त्वादाह *तिङन्तादिति। ननु राजपुरुषमानयेत्यादौ तदन्वयवारणाय स्वाव्यवहितार्थान्वय्यभिधायित्वस्यावश्यकत्वेन सुपामपि युक्तमेव भाष्यमत आह *सुपामिति । अव्ययीभावादौ दोषापत्त्या तथा दुर्वचत्वात् इति भावः। भाष्यान्तरमपि गमकमत आह *तथेति। तत्र तस्यैवेष्टत्वादाह *अमइति। *तिङन्तादिति। स्वत इत्यादि। अत एव भावत्वे न द्विवचनादि। एव सख्यांशे उक्ता लिङ्गांशे आह *क्लीबत्व चेति। *स्वभावादिति। समाधायेति पाठ.। दीक्षितभूषणाद्यभिमत खण्डयति *तस्येति। भाष्योक्तस्येत्यर्थः। *साधनेति। साधनविशेषेत्यर्थ। उक्तभाष्यान्तरैकवाक्यतालाघवादित आह *उचितइति। अत्र भाष्यान्तरविरोधं परिहरति *यत्त्विति। भाष्ये इत्यस्योक्तमि-

त्यत्रान्वय । 'सख्या विभक्त्यर्थ.' इति पक्षे कर्मादावभिहिते ऽप्य-नभिहितसख्याया द्वितीयादिवारणायानभिहितकर्मादिगतैकत्वादौ द्वितीयादय इत्यर्थलाभार्थमनभिहिताधिकार इत्यस्याग्रिमग्रमाह *प्रातिपदिकेति । *उक्तत्वादिति । तिङेति शेष' । इद विरुद्ध तव तिङा नामार्थगतसख्याया अनुक्तेरिति भाव. । *साधनेति । साधनगता या सख्या तस्या धात्वर्थे य आरोपस्तन्निमित्तकत्वस्य धात्वर्थसख्याया उक्तौ सत्त्वेनैक्यात्साधनत्वेन साधनरूपतिङ-र्थगतसख्यावत् वस्तुतः साधन यो नामार्थश्चैत्रत्वादिविशिष्टस्त-द्गताया अप्युक्तत्वमित्यर्थ. । अत एव साधने द्वित्वादिसशयो नेति तात्पर्यम् । नन्विय युक्तिरेकवचने दुर्वचा । तत्रारोपस्यैवाभा-वात्स्वगतैकत्वमादायैवैकवचनोत्पत्ते । एवञ्च तदशे भाष्यविरोध एवात आह *एकेति । कर्मकर्त्राख्याने इत्यादि. । साधने या द्वित्वाद्यभावबुद्धिस्तन्निमित्तको यो धात्वर्थे द्वित्वादेरनारोपस्त-त्रैव भवतीत्यर्थ. । अन्यथा धात्वर्थे सर्वत्रैकत्वस्याकाशादिवत्स्वत. सत्त्वेनैकवचनापत्त्याऽत्र द्विवचनादेर्विलयापत्तिस्तस्मात्तत्र सति स्वगतैकत्वमादायैकवचन न तु तदभावे तन्मात्रमादायेत्येवेन सूचि-तम् । कुत एवमित्यत आह *वक्ष्येति । गौणी मुख्या वेति भाष्यो-क्तयुक्तेरित्यर्थः । नन्वेतावताऽपि प्रकृतसिद्धि कथमत आह *एवञ्चे-ति । त विना तदभावे चेत्यर्थः । *तदभावेति । साधने द्वित्वाद्यभा-वेत्यर्थ. । लोकासिद्धत्वादाह *द्रव्यस्येति । *साधनेइति । तस्या-स्तत्रावगमे वस्तुत. साधने नामार्थे ऽप्यवगतत्वमेव । यद्यप्यत्रैकत्व-योर्भेदस्तथापि तन्मात्रेण तदभावेनास्यावश्यकत्वेनोक्तरीत्या साध-नत्वेन साधनगतैकत्वस्यावगमावश्यकत्वेन तदभेदान्नामार्थगतमप्य-वगतमेव, अत एव पचतीत्युक्ते साधने एकत्वसशयो ऽपि न, एक पचतीतिवदनेक पचतीत्यस्य दर्शनेन एकत्वस्यारोपानारोपविष-यसशयसत्त्वे ऽपि तद्विषयत्व तस्य न उभयत्र एकत्वेनैव भानादिति भाव. । *आद्येतिर्भावसमासौ । *अन्यथा–उक्तरीत्यनङ्गीकारे । दीक्षितादिमतेन आह *तिङर्थाश्रयेति । नन्वेव पचतिरूपमित्यत्र तिङोक्तत्वे ऽप्येकवचनवत्पचतोरूपमित्यादौ द्विवचनादि स्यादत आह *पचतइति । ननु "न केवला" इति समयस्य परिपालन वक्ष्यमाण यदि सार्वत्रिक तर्हि ह्यादिशब्देभ्योऽपि तदापत्तिरत आह

*द्वयोरिति । यत इत्यादिः । "आदशतः सख्या सख्येये" इत्याद्युक्तेराह *प्रवृत्तीति । सख्येत्यनेनार्थान्तरव्युदास. । *निमित्तकेषु-सर्वेष्विति बोध्यम् । *एव च-क्रियायां स्वत एकत्वसत्त्वे च । एवेन औत्सर्गिकैकवचननिरासेन तथा प्राचीनग्रन्थानां चिन्त्यत्व सूचितमित्यनुपदमेव स्फुटीभविष्यति । *अन्यथा—स्वगतैकत्वानङ्गीकारे । *नव—भूषणकारादेर्मते । आदिना पचन्ति भवतीत्यादि । ननु तत्र सा नैव तदर्थ औत्सर्गिकैकवचनेन तद्विर्वाहादत आह *भवतिरिति । अनुवर्त्तते इत्यस्यानुषङ्गः । अथ तत्र तदारोप इति चेत् तत्रैव तदनवगमः, अथोक्तसत्त्व चेत्तर्हि आवश्यकत्वात् द्वित्वादेरप्यारोपोऽस्तु कृत तत्राश्रयान्वयकृतवैरूप्येणेति भावः । ननु सिद्धान्ते पचत इतिवत्पचतो भवत इति स्यात् वक्ष्यमाणरीत्या, नतु पचतो भवतीत्यत आह *पचतोभवत इति । *तादृशस्य-आरोपितस्य । नन्वत्रापि कि मानमत आह *अत्रचेति । *इदमेव-भवतिः पुनरित्युक्तम् भूवादिसूत्रस्थमेव । भाववचनो धातुरिति लक्षणे पचादेर्धातुत्वाप्राप्ति. पूर्वलक्षणे तेषां करोतिसामानाधिकरण्यनिर्देशवदत्र तेषां तदनिर्देशादिति तत्रोपक्रमः ॥ १५ ॥

किञ्च "करोतिः पचादीनां सर्वान् कालान्सर्वाणि वचनान्यनुवर्तते" इत्यत्र भाष्ये श्तिपा निर्देशादिना धात्वर्थे एव कालान्वयवत्संख्यान्वयः स्पष्टमुक्तः । वचनं संख्या । पचत इत्यादौ तु न स्वगतैकत्वप्रयुक्तमेकवचनम् । गोणी मुख्या चोत्तरा संख्या पूर्वसंख्यां बाधते इत्यइउण्सूत्रे भाष्योक्तेः ।

नच किञ्चिदव्ययं विभक्त्यर्थप्रधान किञ्चिक्रियाप्रधानम् । उच्चैर्नीचैरित्याद्यम् । हिरुगित्यादि अन्त्यम् । तिबन्तमपि काण्डे इत्यादि विभक्त्यर्थप्रधानं रमते इत्यादि क्रियाप्रधानम् । "नचैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगः" इति "तद्धितश्च" इति सूत्रस्थ-

भाष्यविरोध इति वाच्यम् । तत्राव्ययेषु काण्डे इ-त्यादौ चोभयायोगः, रमते इत्यादौ लिङ्गायोगः इत्यर्थात् । प्रायेणेति च शेषः । अन्यथा हतशायिकाः शय्यन्ते पचतिरूपमित्यादौ ताभ्यां योगेन तदसंगतेः । अनारोपितैकत्वातिरिक्तसंख्ययाऽयोग इति वा तदर्थः ।

नचैवं "न वै तिङन्तान्येकशेषं प्रयोजयन्ति क्रियाया एकत्वाद्" इति सरूपसूत्रस्थभाष्यासङ्गतिरिति वाच्यम् । स्वतो ऽन्यसंख्याया असत्त्वात् । आरोपितसंख्यामादाय तु नानेकशब्दप्रवृत्तिः ।

अत एव जातिपक्षे सूत्रं प्रत्याख्यातम् । जात्याश्रयगतसंख्याया आरोपे ऽप्यनेकशब्दाप्रवृत्तेः। अन्यथा तदसङ्गतिः स्पष्टैवेत्यदोषात् ।

अत एव "विधिनिमन्त्रण–"इति सूत्रे विध्यादिषु वाच्येषु "लिङि प्रवर्तनाया एकत्वाद् द्विवचनाद्यनापत्तिः" इति दूषणमभिहितं भाष्ये । तेनाहि तिङर्थसंख्याया आख्यातजन्यबोधविशेष्येऽन्वय इति सूचितम् ।

यत्तु कैयटेन कर्त्राद्यर्थानां विधिरूपार्थेन बाधस्तेन न कर्त्रादिगतसङ्ख्यानिबन्धनं द्विवचनादीति तदाशय उक्तः । विरोधाभावात् "लः कर्मणि"इतिसूत्रे ल इति बहुवचनाच्च तदबाध इति सिद्धान्ताशय उक्तः, तन्न । "प्रवर्तनाया एकत्वाद्"इति भाष्यासङ्गतेः । तिबादेरप्यनापत्तेश्च । भावकर्मकर्त्रर्थकलस्यैवात्मनेपदपरस्मैपदविभागेन तद्विधानात् । युष्मदस्मच्छेषसामाना-

धिकरण्याभावेन प्रथमपुरुषाद्यनापत्तेश्च । अर्थनियमे उपपदनियमेऽप्यानियमापत्तेश्च । सिद्धान्ताशयोऽप्ययुक्तः । अविरोधेऽपि तर्केण दधिर्बाधदर्शनात् । "एतावांश्च लः, ल एतेषु साधनेषु यथा स्यात् । यावदत्र लग्रहणम्" इति "लः कर्मणि च" इतिसूत्रस्थभाष्येण ल इत्यस्य प्रथमैकवचनान्तताया एव बोधनाच्च। कर्त्रादिगतसङ्ख्यायाः स्वनिष्ठधात्वर्थे आरोपवत् तद्विषयप्रवर्तनायामारोपे न मानमित्याहुः ॥ १६ ॥

( कुं० टी० ) *करोतिरिति । कृधात्वर्थे इत्यर्थः। यजतिषु येयजामहं करोतीतिवत् धात्वर्थनिर्देशे श्तिप् । एवं च क्रियायामेव कालाद्यन्वयो दर्शितः । *सर्वान्कालानिति । यथा किं करोति पचति, किमकार्षीदपाक्षीदिति प्रयुज्यते, तथा किं करोषि पचामीति विपरीताऽपि पुरुषानुवृत्तिः सर्वग्रहणेन विवक्षिता । भाष्यस्थवचनशब्दस्यार्थमाह *सख्येति । *गौणीति । "एक एवाकारः" इति पक्षे घटेन तरति घटिक इत्यत्र आवृत्तिकृतेन द्व्यच्त्वेन एकाच्त्वस्य बाधात् द्व्यज्लक्षणः ष्ठन् भवति । बाहुक इत्यत्र तु मुख्यं द्व्यच्त्वम्। *नचेति । "तद्धितश्चासर्वविभक्तिः" इत्यपहाय "अविभक्तिरव्ययम्" इत्येव सूत्रमस्तु शब्दस्वभावाच्चाव्ययमविभक्तिकं भवति। यथाहि उच्चैरित्याधिकरणप्रधानं सप्तम्यर्थे वर्तमानत्वात् । हिरुक् पृथगित्यादि तु क्रियामात्रविशेषणत्वात् क्रियाप्रधानम् । हिरुग्देवदत्त इत्यत्रापि तिष्ठतीत्यादिक्रियाऽऽक्षेपः । एवंचानयोरर्थयोर्लिङ्गसंख्यायोगाभावाद् उक्तन्यासः सुस्थ इति भाष्यम्। *विरोध इति । क्रियायां संख्यायोगात् पचतिरूपमित्यादौ च लिङ्गस्या-

पि योगात् । *उभयायोगः–लिङ्गसंख्ययोरयोगः । *अनारोपितेति । अनारोपिता या एकत्वातिरिक्ता संख्या तयेत्यर्थः। *नवैतिङन्तानीति । 'पृथक् सर्वेभ्यो विभक्तावेकशेषः' इति पक्षे द्वन्द्वः प्राप्नोति एकशेषस्तु तिङन्ते सावकाशः, साधनभेदेन क्रियाभेदसम्भवादित्याशङ्क्य भाष्यकार आह *नवैतिङन्तानीति । आख्याते निवृत्तभेदायाः क्रियायाः प्रतिपादनादिति भावः । *स्वतइति । अनारोपितद्वित्वादेरभावादित्यर्थः । आख्यातार्थसंख्यायाः क्रियायामन्वयः क्रियाया द्वित्वादि चारोपितमिति स्वमतानुसारेणाह *जात्याश्रयेति । *अप्रवृत्तेः- अप्राप्तेः । बाध इति स्यादिति शेषः । एवं द्विवचनादि इत्यत्रापि । *तदाशयः–दूषणाशयः । *भावेति । भावाद्यर्थकलकारानुवादेनैवात्मनेपदपरस्मैपदयोर्विधानादित्यर्थः । *अर्थनियमे इति । भावकर्मणोरात्मनेपदमेवेत्याकारके । युष्मदि मध्यम एवेत्युपपदानियमः । *एतावांश्चेति । परस्मैपदमात्मनेपदं चेति । *लएतेषु इति । एतदर्थं सूत्रमित्यर्थः । *तद्विषयेति । प्रवर्तनाविषयगतसंख्यायाः प्रवर्तनायामारोपाद् द्विवचनादीत्यर्थः । *नमानमिति । प्रत्ययानां प्रकृत्यर्थेति न्यायविरोधादित्यपि बोध्यम् ॥ १६ ॥

एतद्भाष्यप्रसङ्गात्केचिन्मते भाष्यविरोध सूचयन् सिद्धान्ते साधकान्तरमाह *किञ्चेति । तद्भाष्याव्यवहितप्राक्तनमाह *करोतिरिति। यद्यपि भाष्ये मध्ये सर्वान्पुरुषानित्यपि वर्त्तते तथापि प्रकृते ऽनुपयोगान्नोक्तम् । तिङन्तत्वनिरासायाह *श्तिपेति । आदिना सुः । भवन्मते तु सख्याशे तदसङ्गति' स्पष्टैव । तत्रत्यवचनपदार्थमाह *वचनमिति । ननु भाववत्, पचति भवतीत्यादिवच्च पचत इत्या दावपि कुतो नैकवचनमत आह *पचतइति । क्रियायां स्वत एकत्वमारोपित द्वित्वादीति । सिद्धान्ते शङ्कते *नचेति । सु-

पः पकारेण प्रत्याहारादाह *तिबन्तमपीति । *तत्र—भाष्ये । इत्यर्थादित्यत्रान्वय. । लिङ्गांशे उभयत्र सर्वावश्यकशेषमाह *प्रायेणेति, *चेति । यै क्रियायां सख्यासामान्याभाव उच्यते तेषां केचिन्मतवादिनामपि शेषावश्यकत्वमित्याह *अन्यथेति । शेषानङ्गीकारे इत्यर्थ' । *ताभ्याम्—लिङ्गसख्याभ्याम् । सख्यांशे प्रकारान्तरमाह *अनारोपितेति । *एवम्—आरोपिताद्वित्वाद्यङ्गीकारे । *एकशेषम्—तदारम्भम् । अत्र हेतुमाह *स्वत इत्यादिनाऽऽदायेत्यन्तेन । असत्त्वादित्यस्य नानेकशब्दप्रयोग इति शेष । भाष्यतात्पर्यवर्णनमिदम् । *प्रवृत्तिरिति । तावन्मात्रेण तत्कार्यसिद्ध्या विनाऽप्येकशेषेण तन्मूलकल्पने मानाभावादित्यर्थ । अत्र भाष्यसमतिमाह *अत एवेति । अस्यार्थमाह *जात्येति । *अदोषात्—तत्प्रयुक्तानेकशब्दप्रयोगापत्तिरूपदोषाभावात् । प्राचीनमते दोषान्तर सूचयन् सिद्धान्ते साधकान्तरमप्याह *अत एवेति । *लिङि—लिङिति पक्षे । *अनापत्ति.—तदभावापत्तिः । अत एवेत्यस्यार्थं सूचयन्नाह *तेनहीति । *तदाशयः—दूषणाशय । *वचनाच्चेति । तस्य सर्वसग्राहकत्वादिति भावः । दोषानुपपादकत्वादाह *प्रवर्त्तनाया इति । तेन तद्बाधे आह *तिबादेरिति । एकवचनस्येत्यर्थ. । अत्र हेतुमाह *भावेति । तत्र दोषान्तरमाह *युष्मदिति । तिप्तस्झीत्यादिक्रमेणाह *प्रथमेति । लविधावाह *अर्थेति । पुरुषविधावाह *उपपदेति । आद्ये दोषमाह *अविरोध इति । द्वितीये दोषमाह *एतावानिति । *लग्रहणमिति । अन्यथा लग्रहणमित्युचितम् । नन्वेवमारोपेण निर्वाहे दोषस्यैवासङ्गतिरत आह *कर्त्रादीति । सिद्धान्ताशयस्त्वन्यतोऽवगतव्यः ॥ १६ ॥

कालान्वयस्तु धात्वर्थव्यापारे, न फले, नापि कारके । तेन व्यापारापगमे विक्लित्तिसत्त्वे पच्यत इति स्यादपाक्षीदिति च न स्यादतीतक्रिये कर्त्तरि च पचतीति स्यादित्यपास्तम् । सच द्योत्य एव । विशेषणतया ऽन्वयानुभवात् ।

वर्तमानक्रियावाचकाद्धातोर्लडित्यादि "वर्तमाने लट्" इत्यादेरर्थः । एकधातुप्रकृतिकानेकलडादेशानां शक्तिकल्पने गौरवाच्च । आमवातजडीकृतकलेवरे उत्थानानुकूलयत्नसत्त्वे ऽपि नोत्तिष्ठतीति प्रयोगः । तस्योत्थानोद्देश्यकत्वे ऽपि तत्प्रयोजकत्वाभावात् । अत एव तत्रोत्थानाय यतते इत्येव प्रयोगः । यागपाकाद्युद्देश्यककुण्डमण्डपतण्डुलक्रयणादिव्यापारमादाय यागाद्यर्थं यतते इत्यादिवद्यजतीत्यादिवारणाय प्रयोजकताविशेषस्यैव सम्बन्धतया अभ्युपेयत्वात् ।

तत्राभिमतफलजनने सति तन्निष्पादकसकलव्यापारापगमे भूतत्वम् । फलावच्छिन्नतादृशसकलव्यापारस्य भावित्वे भविष्यत्त्वम् । यावच्चाभिमतफलप्रयोजकक्रियायाः समाप्तिर्न भवति तावद्वर्तमानत्वमित्यनुपदं वक्ष्यामः ।

एवञ्च चैत्रः पचतीत्यादावेकचैत्रकर्तृकैका वर्तमाना पाकक्रियेति बोधः ।

ननु धात्वर्थविशेषणतयैव बोधविषये कर्त्रादौ कथं चैत्र इत्याद्यर्थस्य विशेषणतयाऽन्वय इति चेन्न । सामान्यरूपार्थस्य नियमेन विशेषाकाङ्क्षाबलाद्विशेषणभूतेनापि तेन विशेषणतया तदन्वयात् । यथा नियताकाङ्क्षावशादेव चैत्रेण गतो ग्राम इत्यादौ विशेषणभूतक्रियायां कारकान्वयस्तद्वत् ।

नन्वेवं कर्तुः क्रियान्तरेणापि सम्बन्धः स्यात् । एवञ्च पचति पठतीत्याद्यपि स्यात् । एककर्तृकपाठक्रियाकर्तृकर्तृका पचिक्रियेति बोधसम्भवादिति चेन्न ।

तदाकाङ्क्षाऽभावात् ।

अत एव क्रियायाः कारकनिरूपिता प्राधान्यता । प्राधान्यभावस्य न भङ्गः । यथा वनिता स्वाकाङ्क्षितं स्नानादिसंस्कारं पत्युः सहते न वनितान्तरसम्बन्धं स्वानाकाङ्क्षितं तद्वत् ।

तण्डुलः पच्यते चैत्रेणेति कर्मलकारे तु एकचैत्राश्रयिका या वर्तमाना भावना तज्जन्यैकतण्डुलाश्रयिकैका विक्लित्तिरिति फलविशेष्यको बोधः । पक्वतण्डुल इत्यादौ फलस्य विशेष्यताया आवश्यकत्वात् ।

अत एव प्रत्ययार्थे साक्षात्प्रकृत्यर्थविशेषान्वयित्वस्य सर्वत्र क्लृप्तस्य न त्यागः । अन्वयित्व विशेष्यतया विशेषणतया वा ।

अत एव कर्तृलकारे न फलविशेष्यको बोधः ।

एतेन कर्मलकारे ऽपि भावनाविशेष्यको बोध इत्यपास्तम् ।

अत एव इष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वात् । किन्तु पुत्रमिच्छतीत्यत्रार्थ एव । क्यजन्तात्कर्मणि प्रत्ययस्तु दुर्लभो ऽकर्मकत्वादिति स्पष्टं "सुप आत्मनः" इत्यत्र भाष्ये । अन्यथा उयत्रापि पुत्रकर्मकेच्छानुकूलो व्यापार इति बोधेन भिन्नार्थत्वासङ्गतिः । इच्छानुकूलो व्यापारश्चात्ममनःसंयोगादिरेव । मम त्वेकत्र व्यापारो विशेष्यो ऽपरत्र फलमिति भिन्नार्थत्वं स्पष्टमेव । उक्तश्च कैयटेन यदा क्रियाफलस्य प्राधान्यं तदा वाक्यमेव—इष्टः पुत्रः इष्यते पुत्र इति, न तु क्यजन्तस्तस्याकर्मकत्वात्क-

र्मणि प्रत्ययानुत्पादादितीति दिक् ।

भावलकारे तु भावनैव विशेष्या। तथैवानुभवात्। तिङ् त्वनुवादक एव। कालद्योतकश्च । क्रियाया एकत्वादेकवचनमेवेत्युक्तम् ॥ १७ ॥

( कुं० टी० ) *तत्प्रयोजकत्वाभावादिति । तेन यत्नेनोत्थानस्याजननात् । *कथमिति । गुणानां चेति न्यायात् । *सामान्येति । कर्तृसामान्यस्य तद्विशेषचैत्राद्याकाङ्क्षाऽस्तीत्यर्थः । इषधातोरिच्छामात्रमर्थः, आख्यातस्याश्रयत्वे लक्षणेति तार्किकाः, तदयुक्तम्। फलव्यापारोभयवाचकत्वाभावे सकर्मकत्वानापत्तेरिति सूचयितुमाह *इच्छानुकूलो व्यापारश्चेति। *एकत्र-कर्तृलकारे। *स्पष्टमिति । इदं तु बोध्यम्—इष्यते पुत्र इत्यत्र क्यच् न भवति भिन्नार्थत्वात् "यश्चेहार्थो वाक्येन गम्यते, नासौ जातुचित्प्रत्ययान्तेन गम्यते" इति भाष्यमुपादाय प्रत्ययान्तस्याकर्मकत्वेन कर्मणि प्रत्ययासम्भवादिति कैयटेन व्याख्याततया इष्यते पुत्र इत्यर्थे पुत्रीयते इति न प्रयोग इत्यस्यैव भाष्यार्थस्य न्याय्यत्वात् ॥ १७ ॥

( क० टी० ) व्यापार इत्युक्तेर्व्यावर्त्यमाह *फलेइति । आद्यव्यावर्त्यमाह *कारके इति । आद्ये आह *व्यापारेति । द्वितीये आह *अतीतेति । *सच-कालश्च । अत्र सूत्रविरोधं परिहरति *वर्त्तमानेति । ननु तत्त्वेऽपि वाच्यत्वमेवास्तु यथाश्रुतसूत्रानुरोधात्, औपगवादावुपग्वादिवदत आह *एकेति । लस्य प्रयोगेऽश्रवणादाह *लादेशानामिति । नन्वेव यत्नस्य वर्तमानत्वमादायातिप्रसङ्गोऽत आह *आमेति । *प्रयोजकत्वाभावादिति । तत्प्रयोजकयत्नस्यैव धात्वर्थत्वादिति भावः । *अत एव-तत्प्रयोजकत्वाभावादेव । *तत्र-तादृशकलेवरे पुरुषे । एवेनोत्तिष्ठतीत्यस्य निरासः। ननु तदनुकूलत्व यथाकथंचिन्नतु विशेषरूपमिति तदुद्देश्यकत्वमादायाति-

प्रसङ्ग इति तथैव प्रयोगे किं नियामकमत आह *यागेति । यथा-सख्यमन्वयः । एतेन धात्वर्थफले एव व्यापारान्वयो नाख्याता-र्थव्यापारे आमवातजडीकृतकलेवरस्य उत्थानानुकूलयत्नसत्त्वेनो-त्तिष्ठतीति प्रयोगापत्तेरिति सिद्धान्तलेशोक्तमपास्तम् । ननु वर्त्तमा-नत्वादि कालगत न क्रियागतम् । किञ्च तत्राप्यनतिप्रसक्त तद् दुर्वच-मिति तथा सूत्रार्थासङ्गतिरत आह *तत्रेति । यस्मिन् व्यापारे इत्य-र्थः। भूतभविष्यद्वर्तमानानामिति भाष्यप्रयोगीयक्रमेणाह *अभिम-तेति । *तादृशेति । अभिमतफलनिष्पादकेत्यर्थः । नन्विद यद्यप्यनति-प्रसक्त तथापि कालनिष्ठभेदस्य तत्र कथ सत्त्वमत आह *इत्या-द्यनुपदमिति । कालनिरूपणावसरे इति भावः । *एव च-काल-देस्तत्रान्वये च । "पदार्थः पदार्थेन"इति न्यायेनाशङ्कते *नन्वि-ति । नित्यसाकाङ्क्षभिन्नविषयः स न्याय इत्याशयेन समाधत्ते *सामान्येति । इदमन्यत्राप्यावश्यकमित्याह *यथेति । *एवम्-कर्तु-र्विशेषणसम्बन्धस्वीकारे । *क्रियान्तरेणापि । विशेष्यभूतेन । क्रि-याकारकयोस्तत्त्वेन नित्यसाकाङ्क्षत्वात् । इष्टापत्तावाह *एव चेति । *इत्याद्यपि-एक वाक्यं स्यादिति भाव । स्वक्रियान्वयसत्त्वादाह *एकेति । *तदेति । क्रियान्तराकाङ्क्षाया अभावादित्यर्थः । तयोर्नि-त्यसाकाङ्क्षत्वेऽपि उपात्तक्रिययैव निराकाङ्क्षत्वादिति भावः । *अत एव-तदाकाङ्क्षाया अभावेन तथा ऽन्वयासम्भवादेव । तस्यास्तन्नि-रूपितप्राधान्याभङ्गस्य तदानीमपि सत्त्वान्नअद्वयनिवेशः । युक्ति-युक्त भाष्यादिसमतं भाष्योक्तमेवाह *तण्डुलइति । कर्मकृत्स-मभिव्याहारे फलव्यापारयोर्व्यत्यासेन बोधावश्यकतया क-र्माख्याते ऽपि तथैवोचितमित्याह *पक्वइति । *अत एव-तत्र फ-लस्य विशेष्यत्वादेव । साक्षात्सम्बन्धेन तस्य सार्वत्रिकत्वायै-वाह *अन्वयित्वमिति । *अत एव-क्लृप्तोक्तनियमभङ्गापत्तेरेव । दीक्षितभूषणाद्युक्तिं खण्डयति *एतेनेति । उक्तनियमभङ्गप्रसङ्गे-नेत्यर्थः । *भावनेति । एकतण्डुलाभिन्नाश्रयिका या विक्लित्तिस्तद-नुकूला एकचैत्राश्रयिका वर्त्तमाना भावनेत्येवमित्यर्थः । अत्र भाष्यसमतिमप्याह *अत एवेति । उक्तोऽर्थः । ननु वाक्यवत् क्य-जन्तादपि कर्मणि प्रत्ययोऽस्त्वत आह *क्यजन्तादिति । *अ-न्यथा-फलविशेष्यकबोधस्य तत्रानङ्गीकारे । *भिन्नार्थत्वेति ।

तदुक्त्यसङ्गतिरित्यर्थः । ननु तदनुकूलो व्यापारोऽप्रसिद्ध ज्ञाने तदनुकूलत्वसत्त्वे ऽपि तदर्थकत्वमस्य नेष्टमत आह *इच्छेति । आदिना मनोविषयसयोगः । *एकत्र–कर्त्तृप्रत्यये । *अपरत्र-कर्मप्रत्यये । कैयटसंमतमपीदमित्याह *उक्तं चेति । विग्रहे फलस्य विशेष्यतया पुत्रीयतीत्यादौ व्यापारस्य विशेष्यतया भिन्नार्थत्वान्न तदर्थे, किन्तु पुत्रमिच्छतीत्यत्रार्थे एव । कर्मणि च फलस्य विशेष्यत्वम् इष्टः पुत्रः, इष्यते पुत्र इत्यादौ सामानाधिकरण्यानुरोधेनाप्यवश्यमङ्गीकार्यम् । एतेन कर्मकृदन्ते तथाङ्गीकारे ऽपि कर्माख्याते न तथेत्यपास्तम् । सामानाधिकरण्यान्वयस्याविशिष्टत्वेन वैषम्ये बीजाभावाद् । अत एव भाष्ये इष्टः पुत्रः इष्यते पुत्र इति कृत्तिङोः साम्येनोपादानम् । अन्यथा त्वदुक्तरीत्या वैषम्यात्तदसङ्गति । इष्यते पुत्र इत्यत्र समाधानानुक्त्या न्यूनताचेति स्पष्टमेवेति भावः । यद्यप्ययं कैयटः स्वशब्देनोक्तत्वादिति प्रतीके दृश्यते तथापि भिन्नार्थत्वोपपादके "इह भवन्तः" इति मतेऽपि बोध्य. । अत्रैव वा सोऽर्थ उचित इति बोध्यम् । एतेन तदनुयायिनो ऽन्येऽपि तत्र तथा बोधं वदन्तो निरस्ताः । फले प्रधानं व्यापार इति तु कर्त्तृप्रत्ययसमभिव्याहारपरम् । तन्त्रेणाप्रधानमित्यपि छेदेनोभयपर वेति न तद्विरोधस्तदाह *इति दिगिति । वैयर्थ्यं परिहरति *कालेति ॥ १७ ॥

अन्ये तु क्रिया सङ्ख्याऽयोग्येति मत्वा औत्सर्गिकमेकवचनम् । सङ्ख्याऽन्वयिकर्तृकर्मणोरप्रतीतेः । मध्यमोत्तमावपि न । तिङ्समानाधिकरणयुष्मदाद्यभावादित्याहुः ।

तदयुक्तमित्युक्तम् ।

अत एवाव्ययेभ्यः संख्याद्यभावाद्वचनानुत्पत्तिमाशङ्क्यौत्सर्गिकमेकवचनमुक्तं भाष्ये न तु भावार्थेभ्यो ऽपि तदनुत्पत्तिमाशङ्क्येति बोध्यम् ।

ननु भावे प्रथमो ऽपि न स्यात् तस्यापि शेषे नि-

यनत्वादिति चेन्न । शेषे इति पदं त्यक्त्वा प्रथमस्योत्सर्गताया भाष्ये उक्तत्वेनादोषात् । सूत्रे शेष इत्यवयुत्यानुवाद इत्याहुः ।

यदा तु सकर्मकाणामपि सौकर्यातिशयविवक्षया कर्तृव्यापारत्यागे धातोः फलसमानाधिकरणव्यापारपरत्वेन फलमात्रपरत्वेन वा कर्मणः कर्तृत्वविवक्षा तदा कर्मस्थक्रियाणां पच्यादीनां लवाच्यकर्तुः कर्मवद्भावेन पच्यते ओदनः स्वयमेवेति प्रयोगः । अन्येषां तु पश्यति राजेति । विक्रियते, ज्ञानविषयो भवतीति चार्थः । अत्र स्वयमेवेति कर्त्रन्तरनिवृत्तौ तात्पर्यग्राहकम् । नचैकस्य धातोरर्थत्यागपूर्वकमर्थान्तरे वृत्तौ शब्दार्थसम्बन्धनित्यताहानिरिति वाच्यम् । धात्वन्तरत्वात् । डुपचष् पाक इत्यादिस्तु तन्त्रेण निर्देशः ।

तदुक्तम्—

एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥ इति ।

यत्र कर्मणि क्रियाकृतो विशेषः प्रत्यक्षगम्यस्तत्र कर्मस्था क्रिया । तत्रैव च कर्मवद्भावः । यथा पक्वापक्वतण्डुलेषु छिन्नाच्छिन्नकाष्ठेषु । गमिदृश्यादिषु तु नैवम् । नहि गतागतग्रामे दृष्टादृष्टवस्तुनि वा कश्चित्प्रत्यक्षगम्यस्तत्कृतविशेषोऽस्ति । क्वचित्कर्तरि तत्कृतः श्रमादिरूपो दृश्यत इति कर्तृस्थैव सा । अत्र यद्वक्तव्य तदुक्तं प्राक् ।

तदयमत्रानुगमः—निर्वर्त्यविकार्यकर्मणि कर्मस्था

प्राप्ये तु नेति । तदुक्तम्—

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते ॥ इति ।

निर्वर्त्ये स्वरूपलाभ एव क्रियाकृतो विशेषः । विकार्ये विकाररूप एव सः । आद्यं घटं करोति । अन्त्यं सुवर्णं कुण्डलं करोति, काष्ठं भस्म करोति । अनुमानाद्यथा—पुत्रः सुखं करोतीत्यादौ । सुखरूपलाभो मुखप्रसादादनुमेयः । एतद्रहितं प्राप्यं यथा रविं पश्यतीति । यद्यपि विषदृष्टिसर्पदृष्टे विषज्वालावलीढतारूपो विशेषो दृश्यते, तथाऽपि न सर्वत्र तत्सत्त्वमिति भावः । अत्र वस्तुनो दृश्यस्वभावता आलोको दर्शनयोग्यदेशावस्थितिर्दर्शनकारणं बोध्यमिति दिक् ॥ १८ ॥

(कुं० टी०) *औत्सर्गिकमिति । अयं भावः—प्रत्ययः परो भवत्येवेति नियमार्थं "परश्च" इति सूत्रम् । तेन सुप्तिङ्रहितो न शब्दः प्रयोक्तव्य इत्यर्थः । तेन न पक्तव्यादिशब्दप्रयोगप्रसङ्गः । अत एव "अपदं न प्रयुञ्जीत" इत्युद्घोषः । "द्व्येकयोः" इत्यत्रैकशब्दस्य कैवल्यवाचकस्य ग्रहणादेकत्वाभावे ऽपि पचतिकल्पमित्यादौ तत्सिद्धिः । "न केवला" इत्यस्य च सुप्तिङ्रहितेत्यर्थान्न तिङन्तात्तदापत्तिः । नन्वत्रापि कर्त्रादिगतद्वित्वाद्यारोपेण द्विवचनाद्यापत्तिरत आह *संख्यान्वयीति । *तदनुत्पत्तिम्—एकवचनानुत्पत्तिम् । *अन्येषाम्—कर्तृस्थक्रियाणाम् । ननु स्वयमेवेत्यस्य कर्तृत्वात् शुद्धे कर्मण्येव लकारो ऽस्त्वित्याशङ्क्याह *कर्त्रन्तरेति । *धात्वन्तरत्वादिति । धातूनामनेकार्थत्वमित्यस्याप्ययमेवाशयः । *सुवर्णं कुण्डलं

करोतीति। सुवर्णं विकार्यं कुण्डलं निर्वर्त्यम्। दृश्यादावपि क्रिया कृतो विशेषो ऽस्तीति शङ्कते *यद्यपीति। *विषदृष्टीति। केषांचित्सर्पाणां दृष्टौ विषम्। इदं तु चिन्त्यते ज्वालादर्शने ऽपि सर्पदर्शनजन्येयमिति कथं ज्ञातुं शक्यमिति। ननु घटादीनां दृश्यता परमाणूनामदृश्यतेति वैषम्ये दर्शनक्रियैव नियामिकेत्याशङ्क्याह *वस्तुन इति। दृश्यत्वं वस्तुस्वभावादित्यर्थः। एवं च रूपमहत्त्वादिविशिष्टस्यैव दर्शनमिति भावः। नन्वेवमन्धकारादावपि प्रत्यक्षापत्तिरत आह *आलोक इति। कारणान्तरमाह *योग्यदेशावस्थितिरिति ॥ १८ ॥

(क० टी०) दीक्षितभूषणाद्युक्तिमाह *अन्येत्विति। अयोग्येतिच्छेदः। असत्त्वभूतत्वात्। *तदिति। भाष्यसमतस्वगतैकत्वेनैवोपपत्तेरित्यर्थः। अत्र भाष्यान्तरमपि साधकमित्याह *अत एवेति। तथैकवचनस्य सिद्धत्वादेवेत्यर्थः। आदिना कारकम्। एवव्यवच्छेद्यमेवाह *नत्विति। *शेषे–युष्मदादिभिन्ने तिङ्समानाधिकरणे। नन्वेव केवलयुष्मदादिसत्त्वे मध्यमादेस्तदभावे प्रथमस्य च चारितार्थ्येन विशेषविहितत्वे ऽपि निरवकाशत्वाभावेनोत्सर्गापवादयोरपि तातङ्न्यायेन समबलत्वात् त्वं च स च पचथ इत्यत्र परत्वात्प्रथमापत्तिरत आह *सूत्रे इति। एतेन पाणिनेरज्ञानमपि निरस्तम्। यदि तु स्वविषयत्वावच्छेदेन स्वेतरबाधस्तदा ऽदृष्टार्थमेव तदित्यरुचिराहुरित्यनेन सूचिता। कर्मकर्तृस्थले विशेषमाह *यदात्विति। प्राचाम्मतेनाह *फलेति। सिद्धान्तमतेनाह *फलमिति। *अन्येषाम्—कर्मस्थक्रियभिन्नानाम्। क्रमेणार्थमाह *विक्लिद्यत इति। *चार्थः–अर्थश्च। प्रयोगसमुच्चायकश्चः। ननु स्वयमेवेत्यस्यात्मनेत्यर्थकत्वे तस्यैव रूपान्तरेण कर्तृत्वमिति कर्मण्येव ल. स्यादत आह *अत्रेति। *धात्वन्तरेति। अर्थैक्ये ऽपि शब्दभेदे तत्त्ववदर्थभेदेन शब्दैक्येऽपि तत्त्वादित्यर्थः। नन्वेव तदनुक्त्या पाणिनेर्न्यूनतापत्तिरत आह *उपचाषिति। *तदुक्तम्–हरिणेति शेषः। एवमग्रेऽपि। सिद्धा

स्तमतमेवाह *एकेति । उक्तमेव विशदयति *यत्रेति । तदन्येषु कर्तृस्थक्रियत्व न सार्वत्रिक किन्तु काचित्कमित्याह *क्वचिदिति । गन्त्रादावित्यर्थः । नन्वेव पच्यादावपि कर्त्तर्यपि श्रमादिरूपविशेष-सत्त्वात्तत्वस्याप्यापत्त्या कथ तन्मात्रप्रयुक्तकर्मवद्भावो ऽत आह *अत्रेति । तत्प्रयुक्तकर्मवद्भावविषये इत्यर्थः । *प्रागिति । धात्वर्थवादे ऽधात्वर्थनिरूपणावसरे विशेषदर्शन यत्रेत्यादिह-रिग्रन्थेनेत्यर्थः । तथा च नेद तत्त्वनियामक किन्तु तत्रोक्तमेवेति नात्र दोष इति भावः । तल्लब्ध निष्कृष्टमाह *तदयमिति । *कर्मणीति । जातावेकवचनम् । इदमपि निर्वर्त्यमेवेत्याह *सुखरू-पेति । घटादिक स्वपरप्रत्यक्षविषयः, सुखादिक तु स्वस्यैव न परस्येत्याह *सुखेति । सिद्धान्ते शङ्कते *यद्यपीति । तादृशा-तात्पर्यविशेषेत्यर्थः । करणल्युडन्तदर्शनादित्यस्यार्थमाह *अत्रेति । हरिकारिकायामित्यर्थः । तेन पदेनेति भावः । निर्वर्त्यादिलक्षण-प्रपञ्चो ऽन्येषामत्रैवान्तर्भावश्च भूषणादौ स्पष्ट । एतेन तथा कर्मस्थ-क्रियत्व वदन्तो दीक्षितभूषणादयो निरस्ता । स्तदाह *इति दिगिति ॥ १८ ॥

ननु को ऽसौ कालो यस्य वर्तमानादिभेदेन त्रैवि-ध्यमिति चेत् ।

उच्यते । प्रकृतेः परिणामस्य विवर्तस्य वाऽतिभङ्गुरस्य विभोः क्षणस्य धारायाः कालत्वात् । तस्यैव क्षणस्य प्र-चयविशेषैर्लवपलघटीमुहूर्ताहोरात्रादिद्विपरार्धपर्यन्त-व्यवहारः । तेच क्रमिकानेकक्षणावयवका बौद्धाः क्षण-समाहाराः प्रवाहाविच्छेदरूपाः । तत्तत्पानीययन्त्रादि-परिच्छिन्नकिञ्चित्क्षणसमूहपरिच्छिन्ना सूर्यादिक्रिया च निमेषादिपरार्द्धपर्यन्तं तत्तद्भेदानुमापिका । क्षणानां त्वतीन्द्रियत्तयाऽननुमेयत्वेन चास्मदादीन्प्रत्यहराद्यु-पाधित्वासम्भवात् । अतीन्द्रियद्रष्टृभिर्योगिभिस्तत्त-

त्क्षणसमूहपरिच्छिन्नसूर्यक्रियापरिच्छिन्नत्वमहरादीनां ज्ञात्वा तत्तत्कालनियामकत्वेन यन्त्रपानीयपलानां छायादीनां च निर्णयपूर्वकं नियमनात् ।

यद्वा शब्दतन्मात्रपरिणाम एव दिग्वत् कालः । अत एव सांख्यशास्त्रे आकाशत्वेनैव तत्त्वेषु तयोर्गणनं कृतम् ।

भूतादिव्यवहारासाधारणहेतुत्वम्, सकलपरिणामहेतुत्वम्, चिरक्षिप्रव्यवहारहेतुत्वं च लक्षणम् । तदुक्तं "क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्" इति पातञ्जलसूत्रे भाष्ये इतरेतरव्यावृत्ततया सर्ववस्तूनामशेषविशेषैः साक्षात्करणरूपं सत्त्वपुरुषान्यताख्यातिरूपाद् विवेकाज्जायमानं ज्ञानं क्षणतत्क्रमयोः संयमादपि भवति । प्रतिक्षणं सर्ववस्तुपरिणात् । तत्र क्षणो नाम कालस्य तद्द्वारारूपस्यापकर्षावधिभूतः पूर्वापरांशशून्यः । क्रमस्तु तत्प्रवाहाविच्छेदरूपः । मुहूर्त्ताहोरात्रादयो बुद्धिसमाहारा एव । क्षणिकत्वादेव वस्तुतस्तन्मिलनासम्भवात् । क्षणस्तु वस्त्वेव प्रकृतेः शब्दतन्मात्रद्वारा परिणामविशेषः । आनन्तर्यरूपक्रमस्य क्षणरूपप्रतियोग्यनुयोगिघटितत्वेन तस्य वस्तुत्वात् । स एवास्माकमस्थिरो नतु पदार्थमात्रमिति बौद्धमताद्विशेष इत्यादि ।

स चायमुक्तः कालो भावमात्रस्योत्पत्तिस्थितिनाशहेतुः । शरदादिरूपेणाम्रादीनां पुष्पफलप्रसवशक्तीः प्रतिबध्नाति, वसन्तादिरूपेण च ता अनुजानातीति तान्नितयहेतुता तस्य ।

तत्र जन्महेतुता उक्ता । एवं स्थितिरपि नियतकाला तदधीनैव ।

एवं वृद्धिक्षयनाशाद्यपि तदधीनम् । घटीयन्त्रसदृशीभिर्वसन्तादिप्रवृत्तिभिः सकला मूर्त्तीस्तत्तदवस्थारूपेण प्रतिक्षणं परिणामैः कलयतीति काल इत्युच्यते । क्षणानां क्रमिकत्वात्तस्य क्रमवत्ता । क्रियाभेदादौपाधिकी च तत्तत्क्षणसमूहस्य वसन्ताद्याख्या ।

किं चाक्रमब्रह्मविवर्त्तस्य विश्वस्य यदिदं क्रमेण भासनं तत् कालाख्याविद्याशक्तिकृतमेव । एवमेवाधिकक्षणसमूहापेक्षं चिरम्, अपचितक्षणसन्तानोपाधिकं क्षिप्रमिति चिरक्षिप्रव्यवहारोऽप्याञ्जस्येनोपपद्यते ।

अत एव रामायणे हिरण्यगर्भदूतत्वेनागतस्य कालस्य रामं प्रति वाक्यम्—

तवाहं पूर्वसद्भावे पुत्रः परपुरञ्जय ।
मायासम्भावितो वीर कालः सर्वसमाहरः ॥ इति ।

पूर्वसद्भावे—सत्तारूपब्रह्मसद्भावे । करिष्यमाणसंसारस्यानुज्ञाप्रतिबन्धाभ्यां सृष्टिस्थितिसंहारनिग्रहानुग्रहनिर्वाहकः कालाख्यो मायायाः परिणाम इति तदर्थ इति दिक् ॥ १९ ॥

(कुं०टी) ननु कालसत्त्वे प्रत्यक्षं न मानम् । नीरूपत्वात् । नाप्यनुमानम्, हेत्वभावात् । न च परत्वापरत्वादिकारणतया तत्सिद्धिः । परत्वापरत्वयोः कालगुणत्वास्वीकारात् । नापि तदसमवायिकारणं कालः । संयोगस्यैवासमवायिकारणत्वात्—इति शङ्कते *ननु को ऽसाविति । अत्र-

ण्डस्य कालस्य परिच्छेदकत्वासम्भवाद्यैरुपाधिभिः कालभेदस्तेषामेवातीतादिव्यवहारनियामकत्वे किमतिरिक्तकालेनेति सांख्यमतं निराकरोति *उच्यते इति । वस्तुमात्रस्य प्रकृतिपरिणामत्वात् । *अतिभङ्गुरस्य—शीघ्रनश्वरस्य । विभोरित्यनेन कदाऽप्यविच्छेदः सूचितः । *क्षणधाराया इति । क्षणसमूहस्यासम्भव इत्युक्तम् ।

अत्र तार्किकाः—तपनपरिस्पन्दविशेषेण दिवसमासादिव्यवहारो दृश्यते।तथाहि बहुतरसूर्यक्रियाऽन्तरितजन्मत्वं ज्येष्ठत्वम् । तथा अल्पतरसूर्यक्रियान्तरितजन्मत्वं कनिष्ठत्वम् । तथा च सूर्यक्रियायाः सूर्यसमवेतत्वेन सा पिण्डे न साक्षात्संबन्धेन सम्भवति इति परंपरासंबन्धार्थं तद्धटकतया कालः स्वीकार्यः । सूर्यक्रियायास्तु पिण्डे स्वीकारे 'पिण्डः चलति' इति प्रत्ययापत्तिः । नच विशेषणतासम्बन्धेन पिण्डे सूर्यक्रियावैशिष्ट्यं शङ्क्यम् । स्वरूपसम्बन्धातिरिक्तसम्बन्धे बाधकं विना द्रव्यस्य तदसमवायिनि विशेषणतायाः परम्परासम्बन्धव्याप्तत्वात् । नचाकाश एव सम्बन्धघटकोऽस्त्विति वाच्यम् । घटनिष्ठसूर्यक्रियाविशिष्टं ज्ञानं नाकाशात्मघटितसम्बन्धजन्यं घटनिष्ठक्रियाविशिष्टज्ञानत्वात् । घटः चलतीति विशिष्टज्ञानवद् इति बाधाद् इति । *प्रचयो धाराविशेषः । *द्विपरार्धेति । तदुत्तर प्रलयोत्पत्तेः । यदुक्तं गुणकिरणावल्यां निमेषस्य चतुर्थो भागः क्षण इति । तन्न । प्रलयक्षणव्यवहारानापत्तेः । क्षणव्यवहाराभावे च तद्धटितप्रलयपरिमाणस्याप्यसिद्धिः । एतेन सूर्यपरिस्पन्दादेरप्युपाधित्वासम्भवो बोध्यः । किं पुनः क्षणसिद्धौ मानम् । न हि क्षणज्ञानं प्रत्यक्षात्मकमस्ति । नापि प्रत्यस्तमितपूर्वापरभावं वस्तु । तादृशे वस्तुनि मानाभावात् । प्रत्यक्षे द्वी-

न्द्रियसंयोगः कारणम्, नच तदुत्तरक्षणे तादृशविषयोऽस्ति। नाप्यनुमानम् । व्याप्तिग्रहाभावात् । नानाक्षणवर्तिनो घटादय इति व्यवहार एव तत्र मानमिति चेत् । उक्तयुक्त्या क्षणिकस्य प्रत्यक्षाभावेन क्रमिकसंयोगविभागाद्युपाधिसम्बन्धादेव तत्प्रतीतेः । क्षणशब्दप्रयोग एव तत्र मानमिति चेत् । विषये निरूपिते शब्दप्रयोगरूपव्यवहारः व्यवहाराच्च विषयसिद्धिरित्यन्योन्याश्रयापत्तेः ।

अत एवान्यस्यासाधारणकारणस्याभावात् क्षणशब्दप्रयोग एव तदनुमापक इत्यपास्तम् ।

अत्र वदन्ति–क्षणव्यवहारे व्यवहर्तव्यज्ञानविशेषः कारणम् । तत्र ज्ञानविशेषस्य विषयः कर्म तज्जनितविभागप्रागभावादिश्चोपाधिः । तदुक्तं वल्लभाचार्यैः—

रवेः स्पन्दः क्षणस्तस्य नानाक्षणविशिष्टता ।
क्रमिनानाविधोपाधिसम्बन्धः परिकीर्त्यते ॥ इति ।

अस्यार्थः–विभागप्रागभावाद्युपाधिविशिष्टो रवेः स्पन्दः क्षणः केवलस्पन्दस्यानेककालवृत्तित्वात् । नन्वेवं रविस्पन्दे कथं क्षणचतुष्टयस्थायित्वव्यवहारः स्वस्मिन् स्वस्यावृत्तेरत आह *तस्येति । क्रमवद्विभागप्रागभावाद्युपाधिचतुष्टयसम्बन्धात् तत्र क्षणव्यवहार औपचारिक इत्यर्थः इति । एतच्चासङ्गतम् । प्रलये सूर्यक्रियायाः परिच्छेदकत्वासम्भवात् । *तेच क्रमिकेति । क्षणेनाप्यनन्तरितः पूर्वापराभावः । ननु क्षणानामाशुविनाशित्वात्कथं क्रमः कथं वा समाहार इत्यत आह *बौद्धाइति । ननु बुद्धिरेका निर्विभागा न क्रमावगाहिनीति कथं तस्याः कालव्यवहारप्रयोजकत्वम् ।

तदुक्तं हरिणा—

तातेभ्यो या जायते बुद्धिरेका सा भागवर्जितेति ।

पदार्थमात्रा एव क्षण इत्यभिप्रेत्योक्तम् ताभ्यइतीति चेत्सत्यम् । स्वशक्त्यैव बुद्धिः क्रमावगाहिनी भवति । सा हि स्वशक्त्या भिन्नेव क्रमप्रत्यवमर्शिनीति हरिणोक्तेः । पानीययन्त्रादिना क्षणसमूहः परिच्छिद्यते तेन च सूर्यादिक्रिया तद्भेदाच्च कालभेदः भ्वतस्तु सूर्यक्रियाया अप्रत्यक्षत्वान्न परिच्छेदकत्वम्। ननु प्रकृतेर्महान् महतोऽहङ्कारः तस्मात्पञ्चतन्मात्राणि इति सृष्टिक्रमे कथं कालस्य प्रकृतिपरिणामत्वमत आह *यद्वेति । *आकाशत्वेनैवेति । "दिक्कालावाकाशादिभ्यः" इति सांख्यसूत्रम् । आकाशादिभूततन्मात्राविशेषौ दिक्कालौ इति तदर्थः । त्रयाणामप्येकारब्धत्वात् स्पर्शादिशून्यत्वाच्चेति भावः । *तदुक्तमिति । भाष्ये इत्यत्रान्वयः । *क्षणतत्क्रमयोरिति । अयं पूर्वः क्षणः अयमपर इति क्रमस्य पौर्वापर्यस्य संयमादतिसूक्ष्माणां भेदसाक्षात्कारो विवेको भवतीति तदर्थः । सूत्रमन्यथा व्याचष्टे *इतरेतरेति । परस्परव्यावृत्ताविशेषैः साक्षात्कारो विवेकजं ज्ञानं तद् भवतीत्यर्थः । सत्त्वं बुद्धिसत्त्वं पुरुष आत्मा, अनयोर्विवेकग्रहे सति कैवल्यं भवति । *स एवेति । क्षण एव । *बौद्धमतादिति । बौद्धा हि पदार्थमात्रस्य क्षणिकत्वं वदन्ति प्रतियोगिमात्रस्यैव नाशं प्रति हेतुत्वे लाघवात् । यथा-हि विरुद्धधर्माभ्यामाद्धटपटादीनां भेदः, एवं कार्यसमर्थत्वकार्यासमर्थत्वरूपविरुद्धधर्माभ्यासाद्धटादीनामपि परस्परं भेदसिद्धौ क्षणिकता । सोऽयमिति प्रत्यभिज्ञा तु बाल्ययौवनादिभिन्ने सोऽयमितिवत् । नच क्षणिकस्य पुरुषस्य कथं कालान्तरभाविफलमिति वाच्यम् । पुत्रफलार्थं पितृप्रवृत्तिवत्तत्सम्भवात् । *भावमात्रस्येति । अस्मन्मते परमाण्वादीना-

मप्यानित्यत्वात्। ननु भावशब्देन पदार्थमात्रग्रहणे प्रागभावे जन्यत्वाभावाद् ध्वंसस्य च नाशाभावाद्व्यभिचार इति चेन्न। अवस्थाविशेषातिरिक्ताभावपदार्थे मानाभावात्॥ १९॥

(क० टी०) प्रसङ्गात्कालं निरूपयति *नन्वित्यादिना। *परिणामस्येति। विवर्तस्यवेत्यपाठस्तस्येहासम्भवात्। क्षणस्य धाराया' कालत्वमिति पाठ'। नन्वतिभङ्गुरस्य कथ विभुत्वमतो *धाराया इत्युक्तम्। एव च विभुत्वस्यैव विवरणमिदमत एवम्। क्वचित्तत्पाठो ऽपि। कालत्वादित्यपाठः। पञ्चम्यनन्वयात्। प्रचय–समूहः। *ते–लवादयश्च। अतिभङ्गुरत्वादेव क्रमिकत्वं बौद्धत्व च। नन्वस्मदादे' कथ तज्ज्ञानमत आह *तत्तादिति। आदिना वालुकायन्त्रादि। किञ्चित्पद वैवक्षिकपरम्। नन्ववयवक्षणानामेव कुतो न ज्ञापकत्वमत आह *क्षणानांत्विति। तत एवाह *नन्विति। नन्वस्माक पानीययन्त्रादिपरिच्छेद एव तावत्कथ परिच्छेदकान्तरस्वीकारेऽनवस्थाप्रसङ्गो ऽत आह *अतीन्द्रियेति। *यन्त्रेति। द्वन्द्व। त्रयाणामित्यर्थः। अत्र मते कालस्य तत्त्वान्तरत्वापत्तेराह *यद्वेति। *तयो·—दिक्कालयोः। तथा च तत्सूत्रम्–"दिक्कालावाकाशादिभ्यः" इति–आकाशादिभूत यत् शब्दतन्मात्रं तत्परिणामविशेषावित्यर्थ'। त्रयाणामप्येकारब्धत्वेन स्पर्शादिराहित्येन चाकाशत्वेनैव तयोस्तत्त्वेषु गणनम्। बहुवचन तु तन्मात्रव्यक्तिबहुत्वाभिप्रायमिति तद्भावः। नैयायिकोक्तलक्षणमाह *भूतेति। पातञ्जलसमतलक्षणमाह *सकलेति। सम्भवात्तन्त्रोक्तमन्यदप्याह *चिरेति। अत्र मानमाह *तदुक्तमिति। इत्यादिनेत्यनेनान्वेति। भगवता व्यासेनेति शेषः। ज्ञानस्वरूपमाह *इतरेतरेति। प्राक् सूत्रोक्तविवेकस्वरूपमाह *सत्त्वेति। अपिना सर्वज्ञतासाधकप्रागुक्तसयमान्तरसमुच्चय। अनेनास्य सूत्रस्य तदन्यसयमपरता सूचिता। *परिणामादिति। क्षणेषु तत्क्रमेषु च साक्षात्कृतेषु सर्ववस्तूनां परिणामतत्क्रमयो· साक्षात्कारात्सर्ववस्तूनां विवेकज्ञानं भवतीति भाव। *तत्र—तयोर्मध्ये। भिद्यमानस्य लोष्टादे परमापकर्षावधिः सत्त्वादिगुणविशेष' परमाणुर्यथा तथा ऽऽह *कालस्येति। *तद्भा·

रा-क्षणधारा । *शून्य इति । अवयवविशेष इति शेष । *तत्प्रवाहेति । तेषां क्षणानां यः प्रवाह' उत्तरोत्तरभावेनावस्थान तस्या विरलतेत्यर्थः । नन्वेव कथ, मुहूर्तादिसिद्धिरत आह *मुहूर्तेति । *क्षणिकेति । क्षणानामव्यवहितानन्तर्य्यरूपतक्रमाणां चेत्यादि । नच स्थूलकालस्य वस्तुनोऽभावे कथ लोकानां तत्र यथार्थत्वप्रतीतिरिति वाच्यम् । तस्यावस्तुनो बुद्धिनिर्माणस्यापि शब्दज्ञानानुपातित्वात् । व्युत्थितदर्शनानां भ्रान्तानां वस्तुस्वरूपत्वाभिमानादिति भावः । नन्वेव क्षणोऽप्येवभूत एवास्तु अत आह *क्षणास्त्विति । वस्तुतत्त्वमेव विवृणोति *प्रकृतेरिति । एतदनुरोधेनापि प्राक् यद्वेतिमतमुक्तम् । एतावता तस्य वस्तुकोटिपतितत्व सिद्धम् । तत्र हेतुमाह *आनन्तर्य्येति । *वस्तुत्वात्—वस्तुरूपत्वावश्यकत्वात् । तस्यैव कालविद्धि कालत्वेन कथनात् । तस्य च क्षणद्वयावस्थायित्वाभावात् द्रव्यान्तरेभ्यो विभाग इति बोध्यम् । मात्र कार्त्स्न्ये । प्रागुक्तसिद्धान्तलक्षणमुपपादयति *सचेति । तत्त्वमेव विशदयति *शरदादीति । *तत्र—तेषां मध्ये । *उक्तावसन्तादीत्यनेन । *नियतेति । हेतुगर्भ विशेषणम् । प्रसङ्गादाह *वृद्धीति । क्षयो ह्रासः । आदिना सत्ता । ननु कुतस्तस्य कालत्वमत आह *घटीयन्त्रेति । *कलयतीति । प्रेरयतीत्यर्थः । तदुक्त शैवागमे भोजराजेन—

पुसो जगत' कृतये मायातस्तत्त्वपञ्चक भवति ।
कालो नियतिश्च तथा कलाऽविद्या च रागश्च ॥
नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ ।
भाविभवद्भूतमय कलयति जगदेष कालोऽतः ॥ इति ।

नैयायिकाद्यभिमतनित्यकालनिरासाय भावीति कालतत्त्वविशेषणम् । भूतत्वादिरूपेण त्रिविधत्वादचेतनतत्त्वेनास्यानित्यत्व सिद्धम् । केन कार्येणास्य सिद्धिरत आह *कलयतीति । चिरक्षिप्रादिप्रत्ययोपाधिद्वारेण कलयति आक्षिपति इत्यर्थ

(१) वस्तुतत्त्वमेव प्रतिपादयन् हेतुगर्भविशेषणमाहेति पाठः पुस्तकान्तरे ।

इति तद्व्याख्याकृत् । कलाकाष्ठादिरूपेण परिणामप्रदायिनीति मार्कण्डेयोऽपि । "यदकालयत्तत्कालस्य कालत्वम्" इति श्रुतिश्च । *तस्य-कालस्य । ननु केवलसन्तानादयोऽत आह *क्रियेति । अ-स्यात्यन्तावश्यकत्वमाह *किञ्चेति । *अविद्येति । प्रकृते शब्द-तन्मात्रद्वारा परिणामविशेषेत्यर्थः । तृतीयलक्षणमुपपादयति *एव-मेवेति । तद्वदेवेत्यर्थ । तत्तत्स्वभावादिना तन्निर्वाहेऽपि क्लेश एवे-त्याह *आञ्जस्येनेति । *अत एव-जन्योक्तरूपकालसत्त्वादेव । सर्वे-त्यस्यार्थमाह *करिष्येति । उक्तरीत्येति भावः । *दिगिति । दिगर्थस्तु तदुक्तमित्यादिनोक्त एव ॥ १९ ॥

यत्तु प्रसिद्धपरिमाणा सूर्यक्रियैव क्रियान्तरपरि-च्छेदहेतुत्वात् कालः, कालत्वेनैव रूपेण तस्याः कालिकसंबन्धावच्छिन्नाधारतावत्त्वेन 'एतत्क्रियायां घटः' इति न प्रयोग इति ।

तन्न । क्रियायास्त्रिक्षणावस्थायित्वेन क्षणव्यवहा-रानापत्तेः । नवोत्तरदेशसंयोगावच्छिन्नक्रिया क्षण इति वाच्यम् । विशिष्टक्रियाया विशेष्यविशेषणत-त्संबन्धरूपत्वे त्रयाणामपि स्थिरत्वेन क्षणव्यवहारा-सम्भवात् । यदि विशिष्टमतिरिक्तं तर्हि परिभाषा-मात्रमतिरिक्तो न काल इति ।

किञ्चैकक्षणेऽनेकासामुत्तरदेशसंयोगावच्छिन्न-क्रियाणां जायमानत्वेन विनिगमनाविरहात्तावत्तीनां क्षणत्वापत्तौ युगपदनेकक्षणव्यवहारापत्तिः । सूर्यक्रि-यापरिमाणत्वस्यापि क्रियान्तरादौ स्वीकारेऽनव-स्थापत्तिश्च ।

---

( १ ) इयं श्रुतिः कुत्रत्या किमनुपूर्वीकेति स्पष्ट न प्रतीयते ।

एतेनाखण्डो महाकालस्तस्योपाधिभेदादनेकत्व-मित्यपास्तम् ।

नच "वर्तमाने लट्" इतिसूत्रभाष्ये "तस्थुः पर्वताः, स्थास्यन्ति पर्वताः । तिष्ठन्ति पर्वताः, अस्ति आत्मा । एको ह वै नारायण आसीद्" इत्युपपत्तये "भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेर-धिकरणम्" इत्युक्तम् । यद्यपि पर्वतादेः स्थितिसत्तारू-पा व्यापाराः सदृशावयवत्वाद् दुरवधारभेदा इति तत्र कालभेदाभावस्तथापि राजक्रिया विसदृशसन्तानत-या ऽवधृतभेदा, यथा ऽधिश्रयणादिविसदृशस्वभावा-वयवक्रियाः पाकादयः प्रसिद्धकालभेदा इति सह-चरिताभिः ताभिः पर्वतादिस्थितिर्भिद्यते । राज-क्रियाः पर्वतादिस्थितिभेदकत्वेनाश्रीयन्ते इति तदा-शयः, तदसङ्गतिरिति वाच्यम् । तत्र क्रियापदस्य तत्परिच्छेदककालपरत्वेन तदीयकालस्य पर्वतादि स्थितावात्मसत्तायां चारोप इत्याशयात् ।

नित्यो विभुरखण्डः काल इति तु न युक्तम् । का-लस्याधिकरणत्वेनैव तत्तत्कार्यं प्रति कारणतयोपा-ध्यनालिङ्गितस्येदानीं घट इत्यादिव्यवहारोपयोग्य-धिकरणत्वासम्भवेनापरिच्छिन्नसूर्यक्रियाया उपाधि-त्वासम्भवेन तत्परिच्छेदकान्तरस्वीकारे ऽनवस्थाप-त्त्या दोषात् । अद्वैतवादे तदसम्भवाच्च ।

अत एव "कालाः परिमाणिना" इति सूत्रे भाष्ये "येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं काल-मित्याहुः । तस्यैव हि कया चित् क्रियया युक्तस्याह-

रिति, रात्रिरिति च भवति कयाचित् क्रियया" इति। कया क्रियया आदित्यगत्या । तयैवासकृदावृत्तया मास इति संवत्सर इति च भवतीति । अत्रोपचयादिहेतुत्वेन लक्षितस्यौपाधिकभेदकथनात्स्पष्टमेवाविच्छिन्नक्षणधारारूपत्वमुक्तम् ।

अत एव देवीपुराणे—

विभुर्नित्यो ऽस्थिरः कालो ऽवस्था तस्य तु हेतुता।

इत्युक्तम् । तत्र नित्यत्वमविच्छिन्नधारारूपत्वेन बोध्यम् । अस्थिरत्वेन तु स्पष्टं क्षणरूपतोक्ता । क्षणसमूहरूपश्च स षडिन्द्रियवेद्यः । इदानीं पश्यामि जिघ्रामीत्यादिव्यवहारादित्यलम् ॥ २० ॥

(कुं० टी०) *प्रसिद्धपरिमाणेति । सूर्यक्रिययैव दिवसादिव्यवहारात् । रात्रौ तु लोकान्तरवर्त्तिसूर्यादिक्रियामादाय तद्व्यवहारः । त्रिक्षणावस्थायित्वेनेत्युक्तं दोषं परिहरति *नचोत्तरदेशेति । *विशिष्टक्रियायाः—उत्तरदेशसंयोगावच्छिन्नायाः । *तर्हीति । अतिरिक्तत्वे कालस्यैवातिरिक्तत्वं कुतो नेत्यर्थः । विशेष्यविशेषणयोः सम्बन्ध एव हि वैशिष्ट्यशब्देनोच्यते स चात्र न सम्भवतीत्यर्थः । ननु वैशिष्ट्यं ज्ञानविशेष एव तज्ज्ञानं तत्सामग्र्यधीनं कदाचिदेव भवति । तथा च विजातीयज्ञानविशेषविषयकर्म तज्जन्यविभागप्रागभावौ क्षणशब्दप्रयोगाविषयावित्यरुचेराह *विजेति । *अनेकासामिति । साधनभेदात् । *तस्येति । सूर्यक्रियाया अपि । परिच्छेदकान्तरापेक्षणात् । क्रियाया एव कालत्वं भाष्याल्लभ्यत इत्याशङ्कते *नचेति । *वर्तमानराज्ञामिति । टजापत्तेश्चिन्त्यमेतत् ।

*यद्यपीति । पर्वतादिस्थितीनामेकरूपतयाऽवयवभेदाभावेन साध्यरूपत्वासम्भवे ऽपि राजादिक्रियाणामवयवभेदवत्त्वात् साहचर्यात्पर्वतादिक्रियाणामपि वर्तमानत्वादीत्यर्थः । *सदृशावयवत्वात्–अवयववैलक्षण्याभावात् । *पाकादय इति । पाकादीनामवयवक्रिया विलक्षणा इत्यर्थः । *प्रसिद्धकालेति । भूतादिकालस्तत्र प्रसिद्ध इत्यर्थः । *सहचरिताभिरिति । साहचर्यं कालकृतम् । वैशेषिकमत निराकरोति *नित्यइत्यनेन । अखण्डः काल इति मते तस्य परिच्छेदकत्वासम्भवात् । "कालाःपरिमाणिना" इति सूत्रमयुक्तमित्याशङ्क्य भाष्यकार आह *येनेति । तृणादीनां कदाचिदुपचयः कदाचिदपचयः कारणान्तराभावे ऽपि यत्कृतः स काल इत्यर्थः । ननु कालस्यैकत्वात्कथमहरादिविभाग इत्यत आह *तस्यैवेति । क्रियाया एकत्वात्तस्या अपि भेदकत्वं नास्तीति पृच्छति *कयेति । *आदित्येति । आदित्यादिसाधनभेदात् क्रियाभेदत औपाधिकः कालभेद इत्यर्थः । *षडिन्द्रियवेद्य इति । अन्यथा चक्षुषा गृहीते ऽपि घटे वर्तमानत्वादिसन्देहः स्यात् । नच रूपाभावात्कालस्याप्रत्यक्षत्वम् । नीरूपस्य रूपस्यापि प्रत्यक्षानापत्तेः । अथ द्रव्यप्रत्यक्षे एव रूपं कारणमिति चेत् । कालभिन्नद्रव्यप्रत्यक्ष एव कारणमस्तु ॥ २० ॥

( क० टी० ) "वर्तमाने लट्" इतिसूत्रस्थकैयटभूषणादिमत दूषयति *यत्त्विति । *क्रियान्तरेति । एतेन कालस्य क्रियारूपत्वे क्रियाभेदाय कालस्त्विति वाक्यपदीयविरोधः, स्वस्य स्वपरिच्छेदकत्वासम्भवादित्यपास्तम् । तादृशसूर्यक्रियारूपकालस्यान्यक्रियापरिच्छेदकत्वसम्भवात् । ननु क्रियाया एव कालत्वे इदानी घट इतिवदेतत्क्रियायां घट इत्यपि स्यादत आह *कालत्वेनैवेति । क्रिया सूर्यक्रिया । अनतिरेके आह *वि-

शिष्टेति । अभ्युपेत्येदम् । अत्र दोषान्तरमाह *किञ्चेति । *एकक्षणे–तादृशसूर्यक्रियारूपे। *क्रियाणाम्–अस्मदादिगमनानाम्। कैयटाद्युक्तौ दोषान्तरमाह *सूर्येति । एव सति सिद्धान्ते तन्मूलतत्रत्यभाष्यविरोधमाशङ्कते *नचेति । वर्तमानानां राज्ञामिति पाठ । अन्यथा टजापत्तेः । तत्रादौ पूर्वपक्षाशयमाह *यद्यपीति । आदिना आत्मा । अत एवाह *सत्तेति । क्रियात्वायाह *सदृशावयवत्वादिति । सिद्धान्ताशयमाह *तथापीति । *राजक्रियेति । भिन्नम् । तत्र दृष्टान्तमाह *यथेति । *स्थितिः–स्थित्यादिः । एवमग्रेऽपि । तात्पर्यमाह *राजक्रियाइति । शाब्दत्वायाह *आरोपइति । नैयायिकादिमतं खण्डयति *नित्यइति । *कारणतयेति । अन्यथाऽनुपपत्त्या आवश्यिकयेत्यर्थ । नच तस्योपाध्यनालिङ्गितस्य जन्य कचित्प्रत्यण्यधिकरणता । इदानी घट इत्यादिरूपेणैव व्यवहारात् । इदानीमित्याद्यखिलव्यवहाराणां खण्डकालमात्रविषयत्वात्, काले इदमिति सामान्यतो ऽव्यवहाराच्च, तदाह *उपाध्यनेति । परिच्छिन्नसूर्यक्रिया खण्डकालस्यैवोपाधिः नतु तस्य । अपरिच्छिन्नायास्तु उपाधित्वमेव न सभवतीत्याह *अपरीति । *दोषादिति । असिद्धेरित्यर्थः । *अत एव–उक्तमतद्वयातिरिक्तप्रागुक्तकालसत्त्वादेव । *असक्तादिति । यावदभिमतमिति भाव । अत एवेत्यस्यार्थमाह *अत्रेति । भाष्ये इत्यर्थः । *हेतुत्वेनेति । उपचयापचयहेतुत्वरूपलक्षणलक्षितस्य पश्चादौपाधिकभेदकथनादित्यर्थः । नचैतावताऽस्य क्रियारूपकालपरत्वाभावे ऽपि वैशेषिकेष्टकालपरत्वाभावो न स्पष्टः, उपचयादिजनकतोपपत्तये एव "तस्यैव हि" इत्यादि भाष्यप्रवृत्तेरिति वाच्यम् । अपरिच्छिन्नाया आदित्यगतेस्तदुपाधित्वासम्भवेन तत्परिच्छेदकान्तरस्वीकारे ऽनवस्थापत्तेः, मम तु न दोषः किञ्चित्क्षणसमूहपरिच्छिन्नाया अहराद्युपाधित्वस्वीकाराद्, अग्रे प्रागुक्तमेव । तदेतद् ध्वनयन्नाह *स्पष्टमेवेति । अत्र संमत्यन्तरमाह *अत एवेति । तस्य तद्रूपत्वादेवेत्यर्थ । विरोधं परिहरन् तदर्थमाह *तत्रेति । *धारेति । क्षणेत्यादिः । क्षणरूपस्य व्यवहाराविषयत्वादाह *क्षणेति । चस्त्वर्थः । *सः–कालः । परोक्तमतद्वये त्वेतदनुपपत्तिर्भाष्यविरोधश्चेत्यपि दोषो बोध्यस्तदाह *इत्यलमिति ॥ २० ॥

तत्र वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियाधिकरणसमयत्वम् ।

तदुक्तं भाष्ये–"न्याय्या त्वेषा वर्तमानकालता आरम्भानपवर्गात्। अवश्यं भुञ्जानो हसति जल्पति पिबति निमिषति च" इति। नान्तरीयकत्वात्तासां न भेदकत्वमिति भुङ्क्ते इत्युपपत्तिः। फलावसानः क्रियासमूहश्च क्रिया । यद्वा तासामपि तदनुकूलत्वेन भुज्यादिधात्वर्थत्वविवक्षेति तद्भाव इति कैयटः।

भूतत्वं विद्यमानध्वंसप्रतियोगिसमयत्वम् ।

भविष्यत्त्वं वर्तमानप्रागभावप्रतियोगिसमयत्वम् । प्रागभावपदव्यवहार्यतायाः क्वचित्स्वीकारावश्यकत्वेन स नास्तीत्यसंगतमेव । तदाश्रयस्य तत्तत्कालस्य धात्वर्थव्यापारेऽन्वय इत्युक्तम् । कालघटितलक्षणादेव भूत इत्यस्यानद्यतन इत्यादि विशेषणम्। अद्यतनभिन्न इत्यादिः तदर्थः। अद्यतनत्वं च तस्य व्यपदेशिवद्भावेन । अद्यत्ववर्तमानत्वादि कालगतामिति "लुङ्" "वर्तमाने लट्" इत्यनयोर्भाष्ये स्पष्टम् ।

एतेन वर्तमानध्वंसप्रतियोगित्वं भूतत्वम्, प्रारब्धापरिसमाप्तत्वं वर्तमानत्वम्, वर्तमानप्रागभावप्रतियोगित्वं भविष्यत्त्वं सकलभावगतम् । कालस्य तु तत्तद्भावोपाधिकं तत्त्वम । वर्तमानावस्थया गृहीतं घटादिस्वरूपं स्वाधारे काले आरोप्य तत्र वर्तमानत्वभूतत्वग्रहः। समर्थहेतुसंनिधाने भावित्वे यद्रूपं बुद्धौ निश्चितं तत्प्रातिबिम्बस्य निर्मलादर्शरूपे काले सम्भ-

वाद्बिम्बप्रतिबिम्बयोरेकत्वाध्यवसायात्तद्गतं भावित्वं काले आरोप्य तस्य भावित्वमध्यवसाय तदुपाधितद्भावेषु व्यवह्रियते । तदुक्तम् नित्यो विभुरखण्डः काल इति वैशेषिकमतोपपादने हरिणा—

वस्त्वभिन्नस्य कालस्य व्यवहारे क्रियाकृताः ।
भेदा इमे त्रयः सिद्धा यान्न लोको ऽतिवर्तते ॥

इतीत्यपास्तम् ।

तेषा कालमात्रधर्मत्वाच्च । वर्तमाना क्रियेत्यादि तु तत्कालवृत्तिक्रियेत्याद्यर्थकम् । आदिकर्मविषये प्रकृतः कटं देवदत्तः प्राकार्षीत्कटमित्यादिरवयवगतातीतत्वस्य समुदाये आरोपेण प्रयोगः । अत एवानेकादिनप्राप्यग्रामं जिगमिषुः प्रथमे दिने किञ्चिद्गत्वा ऽऽह 'इदमद्य गतम्'इति । तद्दिने तत्फलावच्छिन्नगतिक्रियाया असमाप्तावपि यत्किञ्चिद्गतिक्रियाया अतीतत्वेन समुदायेऽतीतत्वमादाय तथा प्रयोग इति स्पष्टं "निष्ठा" इति सूत्रे भाष्ये ।

एवं भूतानद्यतनपरोक्षार्थकाल्लिट् । पपाचेत्यादितो बोधे तत्तद्विषयसन्देहानुदयाद् भूतत्वादेरिवानद्यतनत्वादेरपि बोधविषयत्वम् । साक्षात्करोमीत्येतादृशविषयताशालिज्ञानत्वं ज्ञाननिष्ठमपरोक्षत्वम् । तद्विषयत्वं चार्थनिष्ठम् । तद्भिन्नं च परोक्षत्वम् । तादृशविषयता च ज्ञानाकरणकज्ञाने एव । "दशमस्त्वमसि" इत्यादिशब्दजपरोक्षज्ञानसहकृतमनसा 'दशमो ऽहमस्मि' इति साक्षात्कारो न तु ततः शब्दादेव सः ।

अत एव "तत्त्वमस्मि"इत्यादिशास्त्राचार्योपदेशः,

"शमदमादिसंस्कृतं मन आत्मदर्शने कारणम्" इति गीताभाष्ये उक्तम् ।

ननु साध्यत्वेनाभिधीयमानो गुणभूतावयवः क्रमिकव्यापाराणामेकफलजनकत्वविषयैकबुद्ध्या विषयीकृतः समूहः क्रिया । तत्रावयवानां मेलनाभावेन समुदायो ऽप्रत्यक्ष एव ।

किञ्च पचेर्यथोदकसेचनादयोऽवयवास्तथा तेषामप्यन्ये ऽवयवा इति ते ऽपि समूहरूपा एव । यस्तु क्षणरूपो ऽवयवः स तु शुद्धो न धातुवाच्यः किंत्ववयवसमूहात्मनैव आश्रितक्रमरूपत्वात्तद्वाच्यस्य । एवं च सदसद्रूपा क्रिया न सद्वस्तुविषयेन्द्रियग्राह्या ।

तदुक्तम्—

क्रमात्सदसतां तेषामात्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्याति सम्बन्धं चक्षुरादिभिः ॥ इति ॥२१॥

( कुं० टी० ) आरम्भेति । कर्मणि घञ् । *आरब्धस्यानपवर्गात्—आसमाप्तेर्वर्तमानत्वमित्यर्थः । यत्र तु स्वयं वर्तमानत्वं भवान्मन्यते मोदते इत्यादौ तत्रापि व्यवधानमस्तीत्याह *अवश्यमिति । *पठेति । पठतीत्यादौ भोजनादेरपि पाठानुकूलत्वेन पठधात्वर्थत्वमेवेति न व्यवधायकत्वमित्यर्थः । *भविष्यत्त्वमिति । वर्तमानप्रागभावेति कर्मधारयः । ननु वर्तमानकालोत्पत्तिकत्वमेव भविष्यत्त्वमस्तु किं प्रागभावस्वीकारेण । नचोत्पन्नस्य पुनरुत्पादवारणाय तत्स्वीकार इति वाच्यम् । जन्यद्रव्यं प्रति बाध्यसमवायेन द्रव्यस्य प्रतिबन्धकत्वम् अनन्तप्रागभावकल्पनापेक्षया एकप्रातिबन्धकत्वस्यैव युक्तत्वादित्याशङ्क्याह *स्वीकारावश्यकत्वेनेति । *एतेनेति ।

कालगतत्वसाधनेनेत्यर्थः। ननु विद्यमाने घटे कथं श्याम आसीत् रक्तो भविष्यतीत्यादिप्रत्यय इति चेत् । रूपगतभविष्यत्त्वादेर्घटे आरोपात् भावकार्यगतमेव वर्तमानत्वादि काले आरोप्यत इत्यर्थः । *तत्त्वम्–वर्तमानत्वादि । *आरोप्यत इति । आधाराधेययोः कालघटयोरैक्यारोपेण घटादिवर्तमानत्वादि काले आरोप्यत इत्यर्थः । *समर्थहेत्विति । एतच्च भावित्वे साधकम् । यद्रूपं यद्वस्तुनि तत् प्रतिविम्बस्येति बौद्धभाविप्रतिबिम्बत्वं घटे भविष्यत्त्वमित्यर्थः । *निर्मलादर्शेति । निर्मल आदर्शः दर्पणं तत्सदृशकालेत्यर्थः । *अपास्तमिति । अत एव क्रियाभेदायकालस्तु संख्या सर्वस्य भेदिकेति हरिणा कालस्यैव क्रियाभेदकत्वमुक्तम् । *अवयवगतेति । अवयवे क्रियात्वमारोप्य तदतीतत्वादेव तन्निष्ठतेत्यर्थः ।

तदुक्तं हरिणा—

समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततस्तेन कालभेदस्य सम्भवः ॥ इति ।

प्रतिभेदं प्रत्यवयवं समूहिषु अवयवेषु समाप्यते आरोप्यते ।

*ज्ञानाकरणकेति । एतच्च प्रत्यक्षलक्षणम् । तथाहि–अनुमितौ व्याप्तिज्ञानं करणमुपमितौ सादृश्यज्ञानं शाब्दबोधे पदज्ञानमिति तद्भिन्नं प्रत्यक्षम् । *ज्ञाननिष्ठमिति । प्रत्यक्षत्वं ज्ञानगतमेव, तद्विषयत्वादर्थोऽपि प्रत्यक्ष इत्यर्थः । विषयज्ञानयोरनुगतस्य प्रत्यक्षलक्षणस्याभावान्न घटादेः प्रत्यक्षत्वमिति भावः । *तादृशविषयता–साक्षात्करोमीत्येतादृशविशिष्टविषयता । ननु दशमस्त्वमसि तत्त्वमसीत्यादिवाक्यार्थज्ञानजन्ये दशमोऽहमिति साक्षात्कारे ज्ञानाकरणकप्रत्यक्षलक्षणाव्याप्ति । नचेन्द्रियजन्यत्वाभावादस्य प्रत्यक्षत्वाभावः शङ्क्यः । प्रत्यक्षे इन्द्रियजन्यतायाः

प्रयोजकत्वस्य अन्यत्र निराकृतत्वात् । नच निमीलिताक्षस्यापि त्वग्व्यापारदर्शनादन्तःकरणमेवापरोक्षज्ञानं जनयतीति वाच्यम् । शब्दश्रवणात्प्रागपि तत्प्रसङ्गात् । नन्वत्र शब्दोऽपि सहकारी । घटादिप्रत्यक्षे शब्दस्य सहकारित्वादर्शनात् । नच तज्ज्ञानं परोक्षं शङ्क्यम् । अविद्यादेरनिवृत्तिप्रसङ्गादित्यत आह *मनसेति । नन्वेवं "यन् मनसा न मनुते" इति श्रुतिविरोध इति चेत् । न । तस्य संस्कृतमनोविषयत्वात् । अत एव "दृश्यते त्वग्र्यया बुद्ध्या" इति स्मृतिः । *तेषामपि- अवयवानामपि । *क्रमादिति । तेषां समूहिनामात्मानश्चक्षुरादिभिः संबन्धं न यान्ति । अत्रैव हेतुगर्भं विशेषणम् *सद्वस्तुविषयैरिति । क्षणरूपादपि मुख्यावयवत्वस्य क्षणरूपतायां विश्रान्तत्वादिति भावः ॥ २१ ॥

( क० टी० ) एवं कालं निरूप्य सूत्रोपयोगितद्भेदत्रयमाह *तत्रेति । काले इत्यर्थः । पूर्वत्र तु क्रियागतमुक्तमिति भेद । कैयटमाह *नेति । तत्र हेतुतदनपवर्गमाह *फलेति । चो यत इत्यर्थे । अत एवारब्धाध्ययनस्य तदसमाप्तौ मध्ये भोजनादिकरणकाले ऽनध्ययनेऽप्यधीमह इति प्रयोगोपपत्तिः । प्रागभावानङ्गीकारे शब्दप्रयोगाधिकरणकालध्वसाधिकरणसमयत्व भविष्यत्त्वमिति केचित्तन्नेत्याह *प्रागभावेति । तदङ्गीकार इत्यस्यातिरिक्ततदनङ्गीकार इत्येवार्थ इति भावः । विशेष वक्तुमनुवदति *तदेति । वर्तमानत्वाश्रयस्येत्यर्थः । धात्वर्थेत्यनेन समूहरूपता सूचिता । वृत्तिसम्बन्धेनेति भाव । नन्वनद्यतनत्वमन्यत्रापि कुतो नात आह *अद्यतनेति । *हि—यतः । अद्यतनत्व च कालगतमेवेति तदपि तन्निष्ठमेवेति भावः । तत्स्वरूप त्वग्रे स्फुटीभविष्यति । ननु तस्याद्य भव इति व्युत्पत्त्यसम्भव स्वस्मिन्स्वभवत्वाभावादत आह *अद्येति । सर्व चेदम् "अनद्यतने लङ्"इति सूत्रभाष्ये । नन्वद्यपदेनान्यस्यैव ग्रहण कुतो नात आह *अद्यत्वेति । परमत खण्डयितुमा-

ह *वर्त्तेति । यथासंख्यमन्वयः । तत्राद्ये ऽपवादनिमित्तेऽपवा-
दस्तदभावे नेति अद्य ह्यो ऽभुङ्क्ष्महीति व्यामिश्रादौ लुङ्वेत्युक्तम् ।
द्वितीयभाष्य त्वग्रे मूले एव स्फुटम् । नैयायिकादिमत खण्डय-
ति *एतेनेति । नन्वेव नित्याखण्डकालस्य तत्त्व कथमत
आह *कालस्यत्विति । तदेवोपपादयति *कर्त्तेति । *तत्र
काले । आदिना भूतपरिग्रह इत्याह *भूतत्वेति । एवं भविष्यति
दुर्वच तत्स्वरूपासिद्धेः । तत्रान्यथा आह *समर्थेति । *तद्गत-प्र
तिबिम्बगतम् । *तस्य-कालस्य । *तदुपेति । कालोपाधिबाह्य-
भावेष्वित्यर्थ । क्रियाग्रहण भावमात्रोपलक्षणम् । कारिकायाम् इमे
वर्तमानत्वादय । एतेनेत्यस्यार्थमाह *तेषामिति । वर्त्तमानत्वा-
दीनामित्यर्थ । धर्मत्वादिति पाठ । नन्वेवं वर्त्तमाना क्रिये-
त्यादे' का गतिरत आह *वर्तेति । अनेनैवाशयेन तत्राभिमते-
त्यादिना तत्र भूतत्वादिकमुक्तम् । वर्त्तमानध्वसेत्याद्यप्येवमेत्र । त-
दर्थमेवात्रादिपदम् । क्वचिद्विशेषमाह *आदीति । नच प्रकृत इत्य-
त्रादिकर्मणि निष्ठेति वचनेनादिकर्मणि भूते इत्यर्थकेन सिद्धिरि-
ति वाच्यम् । तत्रैव विषये प्राकार्षीत्कटमिति प्रयोगस्यापीष्टत्वात् ।
तद् ध्वनयन्नाह *प्राकार्षीदिति । अत एवेत्यस्य स्पष्टमित्यत्रान्वय. ।
गतमिति सामान्योक्तौ हेतुमाह *तद्दिने इति । उभयत्राह *तद्भिन्नत्व-
मिति । तद्भिन्नत्व च परोक्षत्वमित्यपि सूचितम् । नन्वेव 'दशम-
स्त्वमसि'इत्यादिशाब्दस्यापरोक्षत्वानापत्तिरत आह *दशम इति ।
लिडर्थमाह *एवमिति । यथा वर्त्तमानक्रियार्थकाद्धातोर्लट् तद्वदि-
त्यर्थः । तत्र बीजमाह *पपाचेति । *बोधे-सति । सर्वसमत्या दृष्टा-
न्तन्या आह *भूतत्वादेरिवेति । ननु तत्र परोक्षत्व किमत आह
*साक्षादिति । प्रयोगवृत्तीत्यादि । अत्र मानमाह *अत एवेति ।
तथाऽर्थाङ्गीकारादेवेत्यर्थः । आदिना मननिदिध्यासने । "यन्मनसो
न मनुते" इति श्रुतिस्त्वसस्कृतमनोविषयेति न तद्विरोधः । "दृश्य-
ते त्वग्र्यया बुद्ध्या" इत्यादिशास्त्रान्तराच्च । तत्राग्र्यत्व तत्सस्कृतत्व-
मेव । तदेतद् ध्वनयन्नाह *सस्कृतमिति । पर्वताग्रशो ऽ[illegible]न्नामिति'
परोक्षैव । तत्रापरोक्ष्यभ्रमस्तु तदानीन्तनापरोक्षज्ञाना[illegible]
शब्दज्ञानलिङ्गज्ञानयोरपरोक्षप्रमाहेतुत्वस्य क्लृप्तत्वाच्च ।
त्यभिज्ञायामपि बोध्यम् । तद्विशेषणांशे शङ्कते *नन्वित्याद-

ना चेन्नेत्यन्तेन । प्रागुक्तमनुवदति *साध्येति । *तयोर्मध्ये । नन्वेवमपि अधिश्रयणाद्यवयवस्य प्रत्यक्षत्वमस्त्येव अत आह *किञ्चेति । पचेस्तदर्थक्रियाया । अवयवः प्रत्यक्षभूतः । अत एव पश्य मृगो धावतीत्याद्युपपत्ति । शुद्ध स्वरूपावच्छिन्न एव । *तद्वाच्यस्य-धातुवाच्यस्य । एवञ्च तस्य तत्त्वेऽपि व्यवहाराविषयत्वेच अवयविन. सद्रूपत्वे समुदायतोऽसद्रूपत्वम् । *तदुक्तम्-हरिणा । क्रमादित्यस्य जायमानानामिति शेष. । इदमपि भूषणादि मतेनोक्तम् ॥ २१ ॥

वस्तुतः क्षणरूपा अवयवा अप्यप्रत्यक्षा एव । शतपत्रभेत्तुरतिनेदिष्ठस्यापि स्वाङ्गुल्यादिगतशतक्रियाभेदत्तत्कृतसंयोगभेदानवगमेन वस्तुसौक्ष्म्यवत् सूक्ष्मकालावच्छिन्नत्वस्यापि प्रत्यक्षप्रतिबन्धस्वावश्यकत्वेन त्रिक्षणावस्थायिन्या अपि क्रियायाः प्रत्यक्षासम्भवात् ।

ये तूत्तरदेशसंयोगस्यैव पूर्वदेशसंयोगनाशात्मकत्वेन क्षणस्थायित्वमेव क्रियाया मन्यन्ते तेषां सुतरां तदसम्भवः ।

तदुक्तं भाष्ये-"क्रिया नामेयमत्यन्तापरदृष्टा न शक्या पिण्डीभूता निदर्शयितुम्, अतो ऽसावनुमानगम्या" इति । परेण प्रत्यक्षप्रमाणेनात्यन्तमदृष्टाऽवयवरूपेण समूहरूपेण चेत्यर्थः । अत्यन्तापरदृष्टेति प्रतीकमुपादाय "निष्ठा" इति सूत्रे कैयटेनैवमेव व्याख्यानात् । पिण्डीभूतेति । अवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाभावादित्याशयः । तस्माद् उत्तरदेशसंयोगादिरूपफलानुमेयैव सर्वा क्रिया । पश्य मृगो धावतीत्यादौ दृशेर्ज्ञानसामान्यपरता, धावतेः फलमात्रपरता वा ।

अन्यथाऽवयवस्य प्रत्यक्षत्वेऽपि तस्य धात्ववाच्यतया तत्प्रयोगानुपपत्तिरेव ।

तदुक्तं भूवादिसूत्रे 'यदा त्वेकस्मिन् क्षणे पचतीति प्रयोगः तदाऽपि तत्र समूहरूपारोपणम् । शब्दशक्तिस्वभावाच्च नैकक्षणो धातुवाच्यः' इति कैयटेन ।

अत एव "वर्तमाने लट्" इति सूत्रे भाष्ये—नास्ति वर्तमानः कालः क्षणभङ्गुरेषु पदार्थेषु द्वितीयक्षणे नाशात्समवायिकारणाभावेन क्रियाभावात्तदाश्रयवर्तमानकालाप्रसिद्धेः । तदप्रसिद्धौ भूतभविष्यतोरप्यसिद्धिः । कदाचिद्वर्तमानस्यैव तदवस्थाप्रतीतेः ।

यद्यपि प्रत्यभिज्ञानुपपत्त्या आञ्जस्येन व्यवहारोपपत्त्यभावाच्च क्षणवादो ऽयुक्त एव ।

नच—

न वर्तते चक्रमिषुर्न पात्यते
न स्पन्दन्ते सरितः सागराय ।
कूटस्थो ऽयं लोको न विचेष्टिता ऽस्ति
यो ह्येवं पश्यति सोऽप्यनन्धः ॥ इति

भाष्यश्लोकेन क्षणभङ्ग उक्तः। प्रयोक्तुः क्रियाश्रयस्य च क्षणद्वयमपि स्थैर्याभावात्परिवर्तते चक्रमित्यादिव्यवहारः खपुष्पायमाणः। यतो ऽयं लोकः क्षणस्थायी कूटस्थः। स्वरूपस्थ एव न चेष्टाश्रयः। क्षणद्वयं स्थितौ हि तत्कारणिका क्रिया उत्तरक्षणे भवेदपि। नच तावदपि स्थैर्यमस्तीति तदर्थ इति वाच्यम्। अत्यन्त-

संसारानित्यत्वबोधने तत्तात्पर्यात् । यो ह्ययं संसारानित्यत्वं कथंचिदपि पश्यति जानाति सोऽप्यनन्धो ज्ञानी किंपुनर्यो योगानुष्ठानेन सम्यगेव प्रत्यक्षीकृतदृश्यः ज्ञानीति किं वक्तव्यमिति वाक्यशेषेण तथा-बोधनात् । नहि क्षणभङ्गवादी अनन्ध इति शिष्ट-सम्मतम् । क्षणभङ्गवादिना आपातभासमानार्थमादायायं श्लोकः स्वमतसाधकत्वेनोक्त इति तदनुवादो भाष्येऽपि कृतः पूर्वपक्षे इति न दोषः, तथा ऽपि वर्त्तमानः कालो नास्त्येव अनुपलब्धिप्रमाणेन तदभावनिश्चयात् ।

तदप्युक्तं श्लोके—

मीमांसको मन्यमानो युवा मेधाविसंमतः ।
काकं स्मेहानुपृच्छति किं ते पतितलक्षणम् ॥
अनागते न पतसि अतिक्रान्ते च काकत ।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम् ।
हिमवानपि गच्छति ।
अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते॥इति।

मीमांसको विचारकः। स्वयं चात्मानं तथा मन्यमानः मेधावी, तेषां सम्मतश्च। अनेनास्यास्तिकत्वमुक्तम्। पतितं पातः तस्य किं लक्षणम्, नास्त्येव स इत्यर्थः । कालत्रयेऽप्यनुपलब्धेः। काकपर्यायकाकतशब्दस्य सम्बोधन काकतेति । सम्प्रति वर्तमानकाले सूक्ष्मकालावच्छिन्नत्वेनानुपलब्ध्याऽभावनिश्चये ऽपि क्षणस्य पूर्वापरीभूतावयवक्रियानाश्रयत्वे-

ऽपि यदि पतनीत्यादिव्यवहारस्तदा सर्वोऽयं लोकः पतति अपरिदृष्टसंयोगविभागो हिमवान् गच्छतीत्यपि व्यवहारापत्तिः । एवं च कालत्रये ऽप्युक्तरीत्या गत्यभावाद्गच्छतीत्यादिव्यवहारोऽसङ्गतः । सूत्राणि चासङ्गतानीति पूर्वपक्षे एकं समाधानमुक्तम्

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥ इति।

क्षणभङ्गनिरासं मनसि निधाय उत्तरदेशसंयोगपर्यन्तं क्रियास्थैर्याभिप्रायेणेदम्। क्रियाप्रवृत्तौ यो हेतुः इच्छाविषयउत्तरदेशसंयोगादिरूपं फलं तस्य विना निमित्तमसम्भवात्तन्निमित्तं यद्विचेष्टितं क्रियासमूहरूपं तत्समीक्ष्य बहिरविद्यमानं बुद्ध्या विषयीकृत्य बुद्धिविषये तत्र बुद्ध्या वर्तमानत्वं विषयीकृत्याविचारयन् तत्स्वरूपमविचारितरमणीयेनैव तेन गच्छतीत्यादिप्रयोगङ्कुर्यादित्यर्थः ।

तदुक्तं हरिणा—

क्रियाप्रबन्धरूपं यद् बुद्ध्यात्मनि निगृह्यते ।
संक्रान्तबिम्बमेकत्र तामाहुर्वर्तमानताम् ॥

बुद्ध्यात्मनि बुद्धिस्वरूपे । क्रमेण भूतानामपि एकबुद्धौ संकलना भवत्येव । अनुभवपूर्वकं हि स्मरणं न तु क्रमोपलब्धम् युगपन्नसमर्थेत इति ।

ततोऽपरं समाधानमुक्तम्—“अपर आह अस्ति वर्तमानः कालः आदित्यगतिवन्नोपलभ्यते इति। अनुपलब्ध्या हि वर्तमानकालाभाव उक्तस्त्वया, अनुपल-

ङ्धिश्चौपाधिकीति न सा तदभावसाधिका । यथा क्रियाप्रत्यक्षत्ववादिन आदित्यगतेर्दूरत्वदोषेणानुपलम्भस्तथा सूक्ष्मकालावच्छिन्नत्वदोषेणास्यानुपलम्भः"। अनेन स्पष्टमेवाद्यसमाधानस्य वर्तमानकालसत्त्वाभावमङ्गीकृत्यैव प्रवृत्तिर्दर्शिता । अत्र न क्रियासमूहस्य वर्तमानकालो विषयः समूहस्य युगपदसन्निधानादसत्त्वेन प्रत्यक्षत्वाभावात्तदप्रत्यक्षस्य दोषाजन्यत्वाचादित्यगतिवदिति दृष्टान्तोपादानवैयर्थ्यापत्तेः ।

तदप्युक्तम् हरिणा—

कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा ।
आत्मतत्त्वेन गृह्येत सा चास्मिन्वर्तमानता ॥ इति ।

कार्योत्पत्तौ समर्थं समूहरूपम् । फलजनकत्वादेकक्षणोऽपि तदभेदेनाध्यवसितः क्रियात्वेन गृह्यते इति तत्र वर्तमानत्वं मुख्यमेव । स्वेन धर्मेण फलजनकत्वेन । तत् क्षणरूपमपि । तथा फलजनकम् । अत आत्मतत्त्वेन क्रियात्वेनेत्यर्थः । सा तत्क्षणवृत्तितैव । नन्वेवं सत्त्वं कुतस्तत्रोक्तम्—

बिसस्य बाला इव दह्यमानाः
न लक्ष्यते विकृतिः सन्निपाते ।
अस्तीति तां वेदयन्ते त्रिभावाः ।
सूक्ष्मो हि भावोऽनुमितेन गम्यः ॥ इति ।

बिसे दह्यमाने तदन्तर्गता बाला दह्यमाना अपि तत्त्वेन प्रत्यक्षेण न गृह्यन्ते किन्तु बिसदाहेन तदन्तर्गन्तत्वात्तद्दाहोऽनुमीयते तथा फलानुपपत्त्या

कल्प्यमानसमूहे क्षणिकावयवसद्भावो ऽनुमीयते । ननु समूहस्य बौद्धत्वमेव वाच्य युगपत्तस्याभावात्, एवञ्चावयवसत्ता न मानसिद्धाऽत आह अस्तीति । त्रिषु कालेषु भावो भावना येषां ते योगिनस्तामवयवक्रियां वेदयन्ते पश्यन्तीत्यर्थः । अनेन योगिप्रत्यक्षं मानं दर्शितम् । अन्येषां त्वनुमानेन तज्ज्ञानमित्याह सूक्ष्मोहीति । स्वरूपेण सूक्ष्मकालावच्छिन्नत्वेन वा सूक्ष्मः सर्वो ऽप्यनुमानगम्य एव फलानुपपत्त्या कल्प्यमानो बुद्धिविषयः समूहः। "वर्तमाने लट्" इत्यादि शास्त्रं च तदनुमापकम् । एवं चावयवशः समूहशश्च क्रियाऽप्रत्यक्षैवेति स्पष्टमेवोक्तम् । यदपि भूवादिसूत्रे कैयटेन समूहस्याप्रत्यक्षत्वेऽपि एकैकस्य क्षणस्य प्रत्यक्षत्वेन बुद्ध्या तान् क्षणान्सङ्कलय्य पचतीति प्रयुज्यते इति । तदपि योगिप्रयोगविषयम् । अस्मदादिप्रयोगस्तु व्यवहारपरम्परया विकल्पात्मकज्ञानविषय एव । अत एव तिष्ठतीत्यादेर्विकल्पोदाहरणत्वं पातञ्जलैरुक्तम्—यथा क्षणसमूहे बुद्ध्या सङ्कलिते योगिनां घटिकामुहूर्तादिव्यवहारो ऽस्माकं तु यन्त्रच्छायाद्यनुमिते तद्व्यवहारपरपरंया घटिकादिव्यवहारस्तद्वत् । योगिनां क्रमेणानुभवविषयाणामपि एकबुद्धौ सङ्कलना भवत्येव । अनुभवपूर्वकं हि स्मरणं ननु क्रमोपलब्धं युगपन्न स्मर्यते इति । किञ्चावयवस्य प्रत्यक्षत्वे प्रकृतः कट इत्यादाववयवातीतत्वेन समुदायातीतत्वमादाय कताद्युपपादनवदवयवप्रत्यक्षत्वेन समुदायप्रत्यक्ष-

त्वमादाय परोक्ष इत्यस्य चारितार्थ्ये भाष्यस्थपूर्वपक्षसिद्धान्तयोरसङ्गत्यापत्तेः। तस्मात्परोक्ष इत्यसङ्गतमितिचेन्न।

तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यस्येह विवक्षितत्वात् । भूतानद्यतनी या क्रियाविष्टपरोक्षसाधनिका क्रिया तद्वृत्तेर्लिडित्यर्थात् । तेन क्रियानाविष्टसाधनप्रत्यक्षे ऽपि लिङ् भवत्येव।यद्वा क्रियाफलस्य प्रत्यक्षत्वबुद्धिस्तत्पारोक्ष्येण च तस्याः पारोक्ष्यम्। स्पष्टं चेदं द्वयमपि भाष्ये । एवं स्वव्यापारस्य व्यासङ्गादिना मनसो ऽसन्निधाने स्वयमप्रतिसन्धाने पश्चात्सख्याद्युक्त्या ज्ञाने तत्कार्येणानुमितौ वा लिङ् भवत्येव । यथा बहु जगद् पुरस्तात्तस्य मत्ता किलाहमित्यादौ ॥ २२ ॥

( कुं० टी० ) *शतपत्त्रभेत्तुरिति । युगपत् ।मया शतं शतपत्रपत्राणि च्छिन्नानीत्यत्रातिक्षिप्रत्वात्त यौगपद्यव्यवहारवत् । नेदिष्ठमन्तिकतमम्। *अवयवरूपेणेति । क्षणरूपस्यावयवस्याप्यप्रत्यक्षत्वात् । समूहस्य तु युगपदनुत्पादात्क्षणस्य क्षणिकत्वेनानवस्थानाच्च । *ज्ञानसामान्येति । धावनज्ञानस्यानुमानात्मकत्वात् । *लमात्रेति । तथा च संयोगरूपप्रत्यक्षानुरोधेन तथा प्रयोगः । *नास्तीति । निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावित्वात् निष्पन्नानिष्पन्नव्यतिरिक्तरूपस्य चाभावाद्वर्तमानक्रियाऽभावे "वर्तमाने लट्" इति सूत्रमनुपपन्नमिति भावः । *क्षणभङ्गुरेष्विति । प्रतिक्षणं नश्वरत्वाद्वर्तमानाक्रियाश्रयत्वं नास्तीत्यर्थः । *नाशादिति । क्रियां प्रति द्रव्यस्य का-

रणतया उत्तरक्षणे क्रिया वाच्या तदुत्तरक्षणे चान्यदेव द्रव्यमिति भावः । *कदाचिदिति । कदाचिद्यो वर्तमानस्तस्यैव भूतभविष्यद्व्यवहारादित्यर्थः । *प्रत्यभिज्ञेति । सोऽयमिति प्रत्ययो व्यवहारश्च पितापुत्रादिन्यायेनारोपित एव वाच्य इत्यर्थः । *नवर्तते इति । परिवर्तनक्रियाया वर्तमानाया अभावात् वर्तते चक्रमित्यादिवर्तमानप्रयोगो निरालम्ब इत्यर्थः । *कूटस्थ इति । स्वरूपस्थो न तु वर्तमानक्रियाविशिष्ट इत्यर्थः । अत एवाह *नविचेष्टितेति । व्यापारस्य न कर्तेत्यर्थः । अत्र विचेष्टिता लोको नास्तीत्यनेन दृश्यस्य क्षणभङ्गुरता सूचिता । एवं यथाकथंचिदपि यो वेत्ति सोऽप्यनन्धः किं पुनर्योऽनुष्ठाना योगीत्यर्थः । *तत्कारणिकेति । क्रियां प्रति द्रव्यस्य कारणत्वात् । *संसारानित्यत्वेति । क्रियाश्रयो नात्मा यतो ऽयं कूटस्थोऽपरिणामी, नापि दृश्यपदार्थः, प्रतिक्षणपरिणामित्वेनास्थिरत्वादित्यर्थ इति भावः । *आपातेति । आपाततः प्रतीयमानोऽयमर्थो न वास्तविक इत्यर्थः । *अनुपलब्धिप्रमाणेनेति । यदि स्यादुपलभ्येतेत्येतदर्थकेनेत्यर्थः । *मीमांसकामिति । आत्मानं विचारकं मन्यमानः । *युवा इत्यनेन प्रज्ञापाटवं दर्शयति । काक पृच्छति स्म तव पतनस्य लक्षण रूपं किम् । तथाहि अनागते पतने पतसीति व्यपदेशो न सम्भवति । अतिक्रान्ते ऽपि पतने क्रियाया असत्त्वान्न सम्भवति । क्रियाया अवर्तमानत्वे ऽपि पतसीति प्रयोगश्चेत् सर्वो लोकः पततीति व्यवहारविषयः स्यात्तथा च पर्वतादावपि पततीति स्यादिति तदर्थः । *अनागतमिति । एक एव हि क्षण उपलब्धियोग्यो भवितुमर्हति नातीतो नाप्यनागतः । एकक्षणवर्तिपदार्थस्य च गमनादिक्रियावेशज्ञानं न सम्भवतीति भावः । *सर्वत्र-सर्व-

स्मिन्काले । *गतिर्नास्तीति । उपलब्धियोग्या गतिर्नास्तीत्यर्थः । एवं चानुपलब्धिप्रमाणेन गत्यभावनिश्चयः । क्षणभङ्गवाद्येवात्र वक्तेति न युक्तम्—मेधाविसंमत इति विशेषणासामञ्जस्यात् । मेधावी चासौ संमतश्चेति कर्मधारयः नतु षष्ठीसमासः, "क्तस्य च वर्तमाने" इति निषेधात् । तत्र संमतोऽपि मेधाविनामेव । *सूत्राणि—"वर्तमाने लट्" इत्यादीनि । *क्रियाप्रवृत्तौ इति । गम्यादिक्रियाप्रवृत्तौ यो हेतुर्निमित्तं संयोगादिरूपं फलं तदर्थं यद्विचेष्टितं गमनादि तत् समीक्ष्य बुद्ध्या विषयीकृत्य गच्छतीति प्रयुञ्जीत । *अविचारयन्निति । कुविकल्पकलङ्करहितमित्यर्थः । *गच्छतीत्यबाधितप्रत्यय एव तत्सत्तायां मानमिति भावः । क्षणभङ्गवादे बुद्धेरप्येकस्या अभावादाह *क्षणभङ्गनिरासमिति । सोऽयमिति प्रत्यभिज्ञाविरोधात् । *विना निमित्तमिति । निर्हेतुकाप्राप्तिर्न सम्भवतीति गमनक्रियैव तस्यां निमित्तमित्यर्थः । *बुद्ध्येति । बौद्धसमूहस्य बौद्धं वर्तमानत्वमित्यर्थः । *ततो ऽपरमिति । भाष्ये इति शेषः । पूर्वं वास्तवं वर्तमानाक्रियाऽभावमङ्गीकृत्य बौद्धक्रियां वर्तमानत्वं चाङ्गीकृत्य प्रयोग उपपादितः । इदानीं वास्तववर्तमानकालमाश्रित्य समाधत्ते *अस्ति वर्तमानः काल इति । क्रियाणां त्रिक्षणावस्थायित्वादिति भावः । *आदित्यगतिवन्नोपलभ्यते इति । प्रत्यक्षेणेति शेषः । किन्त्वनुमेयैवेति भावः । *आद्यसमाधानस्येति । बौद्धसमूहस्य बौद्ध वर्तमानत्वमित्यस्येत्यर्थः । *क्रियासमूहीयेति । समूहस्याप्रत्यक्षत्वे हि असत्त्वमेव हेतुः तत्र दोषस्य हेतुत्वाभिधानमसंगतं तस्मान्न वर्तमानकालाभाव एवाभिप्रेत इति भावः । ननु परमाणौ स्वावरुद्धनभोदेशत्यागोपलक्षित कालः क्षणः, क्षणद्वयं च लव इति

व्यवहारोऽसङ्गतः, कालस्य नित्यत्वात् ।

तदुक्तं हरिणा—

न नित्यः परमात्राभिः कालो भेदमिहार्हति । इति ।

नच पूर्वापरीभूताः पदार्थमात्रा एव भिन्नाः कालस्तदाश्रयेणैव क्रमयौगपद्यव्यवहारो न त्वतिरिक्तः कालोऽस्तीति वाच्यम् । पदार्थमात्राणामप्याशुविनाशिनां क्रमासम्भवात् ।

तथाच हरिः—

व्यावर्तिनीनां मात्राणामभावे कीदृशः क्रमः ।

इतीत्यतः समाधत्ते *कार्योत्पत्ताविति । *बिसस्येति । कारकसंनिधाने विकृतिरवयवक्रिया न लक्ष्यते । *तत्त्वेन—दृश्यमानत्वेन । *विकल्पोदाहरणत्वमिति । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प"इति हि तत्सूत्रम् । शब्दश्रवणानन्तरं निर्विषया वृत्तिर्जायते स विकल्प इत्यर्थः । अवस्तुनोऽपि वर्त्तमानस्य विषयीकरणाद्वस्तुशून्यत्वम् । *क्रियाफलस्य—विक्लित्त्यादेः । *मनसइति । मनस्संनिधानस्यैव ज्ञानहेतुत्वात् । *तत्कार्येण—प्रणयादिकार्येण ॥ २२ ॥

( क० टी० ) सिद्धान्तमाह *वस्तुतइति । नन्ववयवक्रियाया अपि क्षणत्रयावस्थायित्वेन कुतो न प्रत्यक्षमत आह *ज्ञातेति । पात्रादित्वादाह *त्रिक्षणेति । उक्तमर्थं मानान्तरेण द्रढयति *यस्त्विति । परशब्दस्योत्कृष्टवाचकत्वादाह *प्रधानेनेति । प्रकृतमाह *प्रमाणेनेति । आर्थिकमाह *प्रत्यक्षेणेति । अत्यन्तमित्यस्यार्थमाह *अवयवेति । नन्वत्यन्तापरिदृष्टेति पाठो भूषणादौ धृत इति कथमयमर्थोऽत आह *अत्यन्तेति । एव च तथा पाठ एवेति तेषामज्ञानमेवेति भावः । नन्वेव पिण्डीभूतेतिविशेषणासङ्गतिरत आह *पिण्डीभूतेति । अनेन ज्ञानाकरणकज्ञानत्वमपरोक्षत्व तद्भिन्नत्वम् च परोक्षत्वम् । यद्वा अवयवानां सौक्ष्म्या-

दप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्व स्यादिति शङ्कानिरासायो-क्तस्य तस्याशयमाह *पिण्डीभूतेति । साऽसावित्यस्यार्थमाह *तस्मादिति । अनेन तस्योपसहारपरत्व सूचितम् । नन्वेव पश्य मृगो धावतीत्यादे॰ का गतिरत आह *पश्येति । लक्षणाया उभयत्र तौल्येऽपि 'न विधौ परः शब्दार्थ' इति न्यायेन 'समुदाये दृष्टा' इति न्यायेन चाह *धावतेरिति । भूषणादिमते ऽप्यस्यैवा-वश्यकत्वमित्याह *अन्यथेति । तदनङ्गीकारे इत्यर्थ॰ । तस्य तदवाच्यत्वे संमतिमाह *तदुक्तमिति । कैयटेनेत्यत्रान्वय॰ । च-स्त्वर्थे । वस्तुतइतिमते भाष्यान्तरसमतिमाह *अत एवे ति । *इत्यत्रेति । पूर्वपक्षे एक समाधानमुक्त्वा द्वितीय स-माधानमुक्तमित्यन्वय॰ । क्रियाऽभावादित्यत्राकारप्रश्लेष । एव बौद्धमतेन पूर्वपक्षे शङ्कते *यद्यपीति । तथापीत्यत्रान्व-यः । सर्वत्र विकल्पाकारत्वापत्त्या आह *आज्ञस्येनेति । तत्र शङ्कते *नचेति । श्लोकार्थमाह *प्रयोक्तुरिति । नञ-र्थमाह *खपुष्पेति । तत्र हेतुत्वेनाह *यत इति । तदर्थमाह *क्षणेति । कूटस्थ इत्यस्य व्याख्या *स्वरूपेति । तदाशय-माह *क्षणेति । अपि॰ सम्भावनायाम् । *नच–नहि । *तदिति । भाष्यश्लोकेत्यर्थ॰ । तुर्यपादार्थकथनद्वारा तदेवाह *योह्येवमिति । *कथञ्चिदिति । परोक्षमपीत्यर्थ॰ । तस्य दर्शनासम्भवादाह *जा-नातीति । अपिसूचितमाह *किंपुनरिति । *सम्यक्–पुनर्बाधकाबा ध्यः । *एवम्–ससारानित्यत्वम् । ज्ञानीति वक्तव्यमिति पाठ॰ । पुन॰ किमोऽनुपयोगात् । *शेषेण–तुर्य्यपादेन । तथा च क्रियाश्रयो नात्मा यतो ऽय कूटस्थापरिणामी, नापि लोकदृश्य॰ पदार्थो यतोऽदृश्यश्चे ष्टाश्रय स्थिरो नास्ति प्रतिक्षणपरिणामित्वात्पदार्थानामिति तदर्थो बोध्य॰ । तदाह *तथेति । तस्य तत्र तात्पर्येत्यर्थः । तथा च चक्रादे॰ क्रियाराहित्यज्ञानवानपि योगितुल्य॰ अत्यन्तास्थिरत्वस्य दृश्येषु ग्रहात् आत्मन्यपरिणामित्वास्थिरत्वग्रहाच्चेत्युक्त भवति । इदमेव व्यतिरेकमुखेन द्रढयति *नहीति । भाष्यासङ्गतिं परिहरति *क्षणेति । *आपातेति । प्रागुक्तमित्यर्थ॰ । तदा हि तुर्यपादस्य यो ह्येव पदार्थानां क्षणिकत्व वेत्ति सो ऽप्यनन्ध इत्यर्थः । *तथा-पीति । तदयुक्तत्वेन पदार्थानां स्थिरत्वे ऽपीत्यर्थः । श्लोकार्थमाह

सत्तावर्त्तमानतेत्यादीत्यर्थ । *ततोऽपरामिति । वास्तववर्त्तमानक्रियाऽभावमङ्गीकृत्य बौद्धसमूहरूपक्रियां तद्वर्त्तमानत्व च बौद्धमाश्रित्य प्रयोगोपपादनानन्तर तत्तत्क्षणवर्त्तियोगिप्रत्यक्षप्रमाणकवास्तववर्त्तमानक्रियाऽऽशयकमित्यर्थः । *अस्तीति । क्रियाणां क्षणत्रयस्थायित्वमिति भावः । *नोपेति । प्रत्यक्षेणेति शेषः । तदाशयमाह *अनुपेति । उपाधिमेवाह *यथेति । *अस्या.—एकैकक्षणावच्छिन्नक्रियाया. । *अनेन—अस्तीत्यादिकथनेन । *अत्र—द्वितीयसमाधाने । तत एवाह *तदग्रेति । तदर्थमाह *कार्यौत्पेति । *यद्येवेति । पक्षान्तरे । तस्यैव ग्रहणे हेतुमाह *फलेति । नन्वेवमेकक्षणे प्रयोगो न स्यादत आह *एकेति । एवेन गौणत्वव्यवच्छेद । *स्वेन—स्वीयेन समूहीयेन। शेषेणान्वयमाह *अतइति । *एवसत्त्वमिति।एकैकक्षणवर्त्यतिसूक्ष्मवर्त्तमानक्रियात्वे सत्त्व किंप्रमाणकमित्यर्थः । *बिसस्येति। यथेत्यादि । *तथेति । यद्यपि कारकसन्निपाते विकृतिरेकैका क्रिया न लक्ष्यते तथाऽपीति शेष । वेदयन्त इति स्वार्थणिजन्तमित्याह *पश्यन्तीति । समूहाशयेनाह *सूक्ष्मकालेति । तस्यानुमापकद्वयमाह *फलेति । अतएवेति प्रागुक्तार्थमाह *एवञ्चेति । अस्माकं सर्वथाऽनुमानगम्यत्वे चेत्यर्थः । अत्र पक्षे ऽनुमितैकैकक्षणवृत्तिक्रियायां धात्वर्थसमूहरूपारोपेण वर्त्तमानप्रयोग इति भावः । उक्तार्थे कैयटविरोध परिहरन्नाह *यदेति । उक्तमिति शेषः । *अतएव—तस्य तद्विषयत्वादेव । दृष्टान्तेनोक्तभेदमुपपादयति *यथेति। ननु क्रमेणानुभूतानां क्रमेणैव स्मरण न तु युगपदिति कथ तेषामेकबुद्धौ सङ्कलनमत आह *योगिनामिति । *हि—यतः। भूषणादिमते दोषान्तरदानेन स्वमत पोषयति *किञ्चेति । *भाष्यस्येति । "परोक्षे लिड्" इति सूत्रस्थेत्यर्थ । पूर्वपक्षस्याज्ञानेनासम्भवादाह *सिद्धान्तेति । बहिर्भूतसाधनादिप्रत्यक्षत्वेन तत्प्रत्यक्षत्वरूपेत्यर्थः । नन्विति पूर्वपक्षमुपसहरति *तस्मादिति । *तदिति । क्रियेत्यर्थः । यथा सूत्राल्लाभस्तथाऽऽह *भूतेति । क्रियाविष्टेऽन्यस्य फलमाह *तेनेति । यथा 'अय पपाच'इत्यादौ भूषणादौ पक्षान्तराकथनमज्ञानविलसितमिति सूचयन् ततोऽन्तरङ्गमाह *यद्वेति। *स्पष्टमिति। तत्रैव सुत्रे "एव तर्हि साधनेषु परोक्षेषु"इत्यनेनाद्यम्, "अथ य एते क्रियाकृता विशेषाश्चीत्काराः फूत्काराश्च तेषु परोक्षेषु"

इत्यनेन द्वितीयमित्यर्थः । एतेन पारोक्ष्यं क्रियान्वय्येव लाघवात् अधिकृतधातोस्तदर्थलक्षणाया स्ववाच्यत्वसम्बन्धः, साधन-लक्षणायां स्ववाच्यसाधनत्व सम्बन्ध इति गौरवम् । वैयर्थ्यं तु न, समूहस्य तत्त्वेऽपि प्रत्येक प्रत्यक्षत्वात् । अत एव पिण्डीभूतेति भाष्ये उक्तम् । अत एव च पश्य मृगो धावतीत्याद्युपपत्ति. । प्रत्येक न क्रियात्वमिति न । तावताऽपि धात्वर्थत्वाक्षतेः, परोक्षत्वमपि भाष्योक्त क्रियायां सङ्गच्छत इति भूषणाद्युक्तमपास्तम् । *एव-मिति । उक्तवदित्यर्थ ॥ २३ ॥

मनश्चान्तःकरणस्य परिणामविशेषो मध्यमप-रिमाणं सङ्कोचविकासशालि । अन्यत्रमना अभूवं नाश्रौषमिति सिद्धम् । अत एव सदा न ज्ञानद्वय-यौगपद्यङ्कदाचित्तद्यौगपद्यश्च ।

वस्तुतोऽण्वेव मनः ।

लक्षण मनसो ज्ञानस्याभावो भाव एव च ।
वैधृत्यान्मनसो ऽज्ञानं सांनिध्यात्तच्च वर्तते ॥

अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ । इति-
चरके पतञ्जल्युक्तेः ।

विकासस्तु योगिमनस एव । अस्मदादीनां तु क्षणविलम्बे ऽपि यौगपद्यभ्रमः शतपत्त्रभेद इव । अन्यथा दूरदेशस्थमपि ज्ञायेत ।

किञ्च विकासे नियतनियामकाभावः । अदृष्ट-विशेषादपि तस्य विकास इति केचित् ।

अन्तःकरणं विभु । अत एव तस्यानन्तवासनाऽऽ-धारतया सर्ववृत्तिनिरोधेन योगिनां सर्ववस्तुज्ञानं अन्यथा सन्निकर्षाभावान्न गृह्येत । योगजधर्मस्य प्र-त्यासत्तित्वकल्पने गौरवम् । तेन च तमआ-

ख्यप्रतिबन्धनिवृत्तौ संयोगादिप्रत्यासत्त्यैव तेषां प्रत्यक्षम् । भूतभाविनोरपि तदीयसूक्ष्मावस्थासंनिकर्षेणैव "इदमेवं भावि भूतं च" इति ज्ञानं भग्नघटीकपालचक्षुस्संयोगेनापि "घट आसीद्" इत्यस्मदादिज्ञानवत् । नचान्तःकरणानां विभुत्वे ऽदृष्टवासनादेः साधारणत्वापत्त्या दोषः । एवं ज्ञानेच्छाद्याश्रयात्मनां नानात्वविभुत्वे स्वीकुर्वतामपि दोषः । तदवच्छेदेन तत्तदन्तःकरणादेरेव स्वीकारे विभुत्वभङ्ग इति वाच्यम् । सर्वस्य मायिकत्वेन जलनलिनीपत्रवददोषात् । "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति योगसूत्रेण तथाबोधनात् । कथमेकमनष्टं च नष्टं चेत्युपपद्यते,यदि काकोलूकनिशासमत्वमिह नेष्यत इत्यभियुक्तोक्तेः, अविवेककृतबन्धस्य विवेकापगमं वदतां मायावादपर्यवसानाच्च ।

गौतमो ऽपि "स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः" "मायागन्धर्वनगरमृगतृष्णावद्वा" "हेत्वभावादसिद्धिः" इत्याह ।

प्रत्यवतिष्ठते विज्ञानवादीत्येवं वाचस्पतिनाऽवतारितेनाद्यसूत्रद्वयेन स्वप्ने यथा विषया न सन्ति अथ चाभिमानो भवति एवं प्रमाणप्रमेयानि न सन्ति अथ च तदभिमानः । एवं च विज्ञानधारारूपचित्ताव्यतिरेकिणो विषयाः,जाग्रत्प्रत्यया अपि निर्विषया दृष्टाःमायागन्धर्वनगरादिप्रत्यया इति पूर्वपक्षं कृत्वा यद्यपि स्वाप्नादिविषयाणामसत्त्व प्रतिबोधादावनुपलम्भात्, त-

१ यो० सा० सू० २२, २ न्या० अ० ४ आ० २० सू० ३१-३३

थापि जाग्रदवस्थायां समीप एवोपलभ्यमानानां याव-द्व्यवहारमबाध्यमानजातीयानां चित्तव्यतिरेकेणोपल-भ्यमानानां तत्त्वेन हेतुरिति भाष्यवार्तिकादौ तृतीयं सिद्धान्तत्वेन व्याख्यानम् । एवं चानिर्वचनीयतावा-दस्य सूत्रसमतत्वमर्थादुक्तप्रायम् । तस्य श्रुतिमूलक-त्वेन "हेत्वभावादसिद्धिः" इत्यनेन खण्डनासम्भवाच्च । तद्वदेवानिर्वचनीयस्य व्यावहारिकसत्यत्वाङ्गीका-राददोषः । अग्रे च चित्तातिरिक्तबाह्यसद्विषयसा-धनोत्तरमेवं तर्ह्यपवर्गेऽपि बाह्यविषयसत्त्वान्मुक्त-स्यापि तद्बुद्धिप्रसङ्ग इति सूत्रेण पूर्वपक्षं कृत्वा चे-ष्टेन्द्रियार्थाश्रये शरीरे सति तदिन्द्रियसंयुक्तस्यैव बा-ह्यविषयस्य ज्ञानोत्पत्तिकारणत्वमपवर्गे च धर्माधर्म-योर्नाशेन स्थूलसूक्ष्मसकलशरीराभावान्न तदुत्पत्तिरि-त्युत्तरितम् । एवं च तुल्यन्यायाच्छरीराभाववत् तद्ध-र्माधर्मसाध्यविषयाभावोऽप्युक्तप्रायः, तदुक्तं "कृतार्थं प्रति नष्टमप्यनष्टम्" इति । तदुत्तरं चापवर्गः कथ-मित्याशङ्क्य "तदर्थं यमनियमाभ्यामात्मसंस्कारो यो-गाच्चात्मविध्युपायैः" (न्या० सू० अ० ४ आ० २ सू० सं० ४६) इत्युक्तम् । तस्यापवर्गस्याधिगमाय यमनियमाभ्या-मधर्मनाशधर्मोपचयरूप आत्मसंस्कारः कार्यः । ततो योगात्पातञ्जलाख्ययोगशास्त्राच्चित्तैकाग्रतासम्पादकै-रध्यात्मविध्युपायैस्ततः प्राणायामप्रत्याहारादिरूपोऽ-ध्यात्मविधिः प्रत्येतव्यः । अनेन तदुक्तार्थे सर्वस्मि-नन्स्वस्याप्यभ्यनुज्ञा सूचिता । योगपदं वेदान्तानामप्यु-पलक्षणम् । नन्वेवं तेनैव सिद्धे इदं शास्त्रं व्यर्थमत उक्तं

"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवद्" ( न्या० सू० अ० ४ आ० २ स० ५० ) इति । "अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामुपाय एतद्" इति तद्भाष्यम् । तस्यामवस्थायां सौगतादिकृततर्कैः प्राप्तस्य तन्मतविश्वासस्य नाशाय जल्पवितण्डाभ्यां तन्मतखण्डनतात्पर्यकमिदं शास्त्रं स्थूलसूक्ष्मशरीरातिरिक्तात्मसाधनद्वारा ऽध्यात्मशास्त्राङ्गमिदामिति तदाशयः । गुर्वादिभिर्वादेन तत्त्वनिर्णयार्थं चैतदित्यपि तत्रैवोक्तम् । अनेनाद्वैतशास्त्रातिरिक्तशास्त्राणामेवंविधत्वं सूचितम् ।

किञ्च "प्रमाणप्रमेय–" इति सूत्रे न्यायभाष्यकृता संशयादीनामपि प्रमेयत्वात्पृथग् ग्रहणं व्यर्थमित्याशङ्क्य तेषां पृथग् ग्रहणे उपनिषद्वदिदमप्यध्यात्मविद्यामात्रं स्यादित्युक्तम् । प्रमेयं मुख्यं ब्रह्मैवेति तस्यैव ग्रहणं स्यादिति तदाशयः ।

एतेन उपनिषदेव मुख्या अध्यात्मविद्येति सूचितम् ।

अत एवास्य तन्त्रस्य—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिताः ॥ इति–

प्रयोजनं भाष्ये एवोक्तम् । विद्योद्देशे आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चतुर्थिकीत्यत्र ।

तथा तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यमिति च भाष्यकारः । चतुष्टुं व्यावहारिकविद्यानाम् । अध्यात्मविद्या तु न व्याव-

ह्यारिकीति नाम्नोक्ता । तस्मात् मुख्यं तत्त्वज्ञानमध्यात्मविद्योपनिषदुक्तमेव । अन्यत्तु तदुपाय इति स्पष्टमेवोक्तमित्यन्यत्र विस्तरः ॥ २३ ॥

( कुं० टी० ) ननु मनो विभु निःस्पर्शद्रव्यत्वादात्मवदिति मीमांसकमते कथं मनसो ऽसंनिधानमत आह *मनश्चेति । मनसो विभुत्वे भिन्नेन्द्रियग्राह्याणामपि युगपद्ग्रहणप्रसङ्ग इति भावः। *मध्यमपरिमाणमिति । देहानुरूपपरिमाणमित्यर्थः । प्राणनादिशक्त्याश्रयस्य तस्यैवोत्क्रान्तिश्रवणात् न विभु, नाप्यणु देहव्यापिसुखाद्युपलब्धेरिति भावः । *संकोचेति । विकासे तु सति योगिनां दूरदेशस्य ग्रहः। ननु मनसो देहाद्यनुरूपपरिमाणत्वे युगपन्नानेन्द्रियजन्यज्ञानापत्तिः। नचाणुत्वे सर्वदेहव्यापिशैत्योपलम्भानापत्तिः। मनसोऽतिलघुत्वेन तत्सम्भवात् । त्वगिन्द्रियस्य सर्वदेहव्यापितया एकदेशसंयोगेनैव तत्सम्भवाच्च । दीर्घशष्कुलीभक्षणादावपि मनसो लघुत्वादेव नानेन्द्रियसन्निकर्ष इत्यत आह *वस्तुत इति । *अण्वेवेति । न मध्यमपरिमाणम् । *एकत्वमिति । तच्चैकस्मिन् शरीरे । अन्यथा शरीरान्तरे युगपज्ज्ञानापत्तेः । यत्तु त्रुटिभिरेव निर्वाहान्नातिरिक्तं मन इति । तन्न । आत्ममानसम्प्रति मनस्संयोगस्य हेतुतायामनन्तपदार्थावच्छेदकल्पने गौरवात् । *वैधृत्यात्—विप्रकर्षात् । विकासो देशान्तरगमनम्। ननु मनसो ऽणुत्वे द्वित्रिच्छिन्नानामपि पल्लयादीनां कथमुपसर्पणा दृष्टा । नह्यविभुना एकेनानेकाधिष्ठानसम्भव इत्याशङ्क्याह *यौगपद्यभ्रमइति । *अन्यथा—मनसो विभुत्वे। ननु मनसो ऽन्तःकरणपरिणामत्वात्तस्याप्यणुत्वापत्तिरत आह *विभ्विति । नन्वणोरप्यन्तःकरणस्य चक्षुरादिद्वारा

बहिर्निस्सृत्य वृत्तिर्भवतीत्यत आह *सर्ववृत्तिनिरोधेनेति । *अन्यथा—अन्तःकरणस्य निरुद्धत्वाभावे । ननु योगजधर्म एव प्रत्यासत्तिरत आह *गौरवादिति । कस्तर्हि योगजधर्मस्योपयोगः तदाह *तेन चेति । ननु भूतभाविनोरिन्द्रियसन्निकर्षाभावात्कथं प्रत्यक्षमत आह *भूतेति । सूक्ष्मरूपदर्शनेन स्थूलरूपज्ञाने दृष्टान्तमाह *भग्नघटीति । *नचेति । युगपत्सर्वानुभवप्रसङ्गवारणाय मध्यमपरिमाणत्वमेव न्याय्यमिति भावः । *तदवच्छेदेनेति । चैत्रशरीरावच्छेदेनैव चैत्रीयमन्तःकरणमित्यर्थः । नच अन्तःकरणस्य विभुत्वे निष्क्रियत्वापत्तिः, तथाचोत्क्रान्त्यादिश्रुतिविरोध इति चेन्न । श्रुतेरन्तःकरणविशेषमनोऽभिप्रायकत्वात् । *मायिकत्वेनेति । 'अहं सुखी' इत्यादिप्रतीतेराविद्याकृतत्वेन भ्रान्तत्वात् । चैत्रादिसुखभ्रमे च चैत्रादिशरीरमवच्छेदकम् । ननु दृढप्रयोजने सिद्धे सति कर्तव्याभावाद् अदृश्यं प्रधानं स्यात् तथाचेदानीं संसारो नोपलभ्येतेत्यत आह *कृतार्थं प्रति नष्टमिति । तत्र यं पुरुषं प्रति नष्टमदर्शनं गतमपि ततोऽन्यं प्रति अनष्टं पुरुषान्तरसाधारणत्वादित्यर्थः । *काकोलूकेति । या काकस्य निशा सोलूकस्य दिवस इत्यत्यन्तानिर्वचनीयत्वमेव । *मायावादे इति । "नेह नाना"इत्यादिश्रुत्या ब्रह्मातिरिक्तस्य सर्वस्यैव मिथ्यात्वात् । नच प्रपञ्चमिथ्यात्वस्यासत्यत्वेऽद्वैतहानिः मिथ्यात्वस्यासत्यत्वे च सत्यत्वापत्तिरिति चेन्न । संयोगतदभावयोरिव सत्यत्वमिथ्यात्वयोः समुच्चयात् । "स्वप्नविषयाभिमानवद्" इति परमतमाशङ्क्य गोतमः समाधत्ते "हेत्वभावादसिद्धिः" इति । असता प्रमाणप्रमेयाणामभिमान इत्यत्र हेतुर्नास्ति जाग्रद्दशायामनुपलम्भात् । स्वप्नविषयाणामसत्त्वमिति वदतो मते हि उपलम्भानुपलम्भावेव

सत्यासत्यत्वनियामकौ। तथाच जाग्रद्दशायामुपलभ्यमानानां सत्यत्वं दुपरह्वमिति। *विज्ञानवादीति। स हि बौद्धो योगाचार इत्थं मन्यते—सर्वो हि प्रमाणप्रमेयव्यवहारो बुद्ध्यारूढेन रूपेणान्तस्थ एव,बाह्यार्थस्वीकारे ऽपि बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात्। घटज्ञानं पटज्ञानमिति ज्ञानं हि ज्ञानगतविशेषमन्तरेण नोपपद्यते इत्यवश्यं विषयसारूप्यं ज्ञानस्याभ्युपेयम्।स्वीकृते च तस्मिन् ज्ञानेनैव विषयाकारस्यावरुद्धत्वादनर्थिका बाह्यार्थकल्पना। सहोपलम्भनियमाच्च ज्ञानविषययोरभेदो न्यायः। नह्यन्यतरस्यानुपलम्भे इतरस्योपलम्भो भवति। यथाहि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्यार्थेन भवन्ति, एवं जागरितगोचरा अपि घटादिप्रत्यया भवितुमर्हन्ति। यद्धि प्रत्ययवैचित्र्यं तद् वासनावैचित्र्यात्। स्वप्नादिष्वपि हि अन्तरेणापि बाह्यार्थं वासनावैचित्र्येणैव ज्ञानवैचित्र्यं भवद्भिरप्यभ्युपेयते। विज्ञानस्य च क्षणिकत्वे ऽपि पूर्वपूर्ववासनाया उत्तरोत्तरविज्ञाने उपसंक्रान्तत्वात्स्मरणादेर्नानुपपत्तिरिति। *एवमिति। विज्ञानव्यतिरिक्ता विषया न सन्तीत्यर्थः। *जाग्रादिति। जाग्रद्दशायामपि गन्धर्वनगरादिप्रत्ययानां निर्विषयत्वदर्शनादित्यर्थः। *यथेति। स्वप्नविषयाणां जाग्रद्दशायां बाधितत्वप्रत्ययादस्तु निर्विषयत्वं जाग्रत्प्रत्ययानां तु न कस्यामपि दशायां निर्विषयत्वमास्ति। प्रत्यक्षेणोपलभ्यमानस्य घटादेरपलापितुमशक्यत्वाच्च। घटज्ञानं पटज्ञानमिति तु विशेषणयोरेव भेदो न विशेष्यस्य। *इतिसूत्रेणेति। इत्येतदर्थकेन "अपवर्गेष्वेवं प्रसङ्गः" इति सूत्रेणेत्यर्थः। *एवं प्रसङ्गः। अर्थरूपाविशेषणवत्त्वाद्विषयावभासप्रसङ्गः। *इत्युत्तरितमिति। "तदभावश्चापवर्गः"इति तत्र सूत्रम्। तस्य शरीरादेरारम्भकधर्माधर्मविरहादिति तदर्थः। धर्मनाशस्तु "उभे सुकृ-

दुष्कृते" इति श्रुतिसिद्धः। पञ्चभूतसर्वेन्द्रियमनोबुद्ध्युपेतं सूक्ष्मशरीरम् । *विषयाभावः–मुक्तं प्रति विषयाभावः । ननु एकस्य मुक्तावविद्यानाशे सर्वस्य मुक्तत्वापत्तिरिति चेन्न । एकस्या एवाविद्याया जीवभेदेनावरणशक्तिनानात्वात् । *तदर्थमिति । अपवर्गार्थमिति तद्भाष्यादौ । समाध्यर्थमित्यन्ये । यमाः पातञ्जले उक्ताः–अहिंसासत्यास्तेयब्रह्मचर्यपरिग्रहा यमाः ( यो० पा० २ सू० ३० ) । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( यो० पा० २ सू० ३२ ) । स्वाध्यायः स्वाभिमतजपः । *आत्मसंस्कारः—आत्मनो ऽपवर्गाधिगमक्षमता । साधनान्तरमाह *योगादिति । प्रतिपाद्यत्वं पञ्चम्यर्थः । *अपवर्गइति । अपवृज्यन्ते जन्मान्तराण्यनेन इत्यपवर्गः । आत्मविधिः–आत्मसाक्षात्कारविधायकं वाक्यम्–"आत्मा वा अरे द्रष्टव्यः"इत्यादि । तथाच योगशास्त्रोक्तात्मतत्त्वाधिगमसाधनैश्चात्मसंस्कारः कर्तव्य इत्यर्थः । यद्यपि "युज समाधौ"इत्यस्मान्निष्पन्नो योगशब्दःसमाधिवाची तथाऽपि "योगश्चित्तवृत्तिनिरोधः" । एष समाधिस्तु योगाङ्गम् । अङ्गाङ्गिनोरभेदविवक्षया तु धात्वर्थलाभः । *तत्त्वाध्यवसायेति । तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणनिराकरणेनाप्रामाण्यशङ्काविघटनं तदर्थं जल्पवितण्डे कथयेत् । जिगीषुकथा जल्पः स्वपक्षस्थापनाहीनकथा वितण्डा । वस्तुतस्तु मुमुक्षोर्न तादृशैः संवादो वीतरागत्वात् । तत्त्वबुभुत्सोः कथा वादः। *अस्य तन्त्रस्येति । प्रयोजनमित्यत्रान्वयः । *भाष्ये–वात्स्यायनभाष्ये। *आन्वीक्षिकीति । श्रुतस्यान्वीक्षणं तर्कविद्या आन्वीक्षिकी । सा च मुख्या आत्मविद्या। त्रयी ऋग्यजुः सामरूपा। आथर्वणस्त्वत्रैवेति। तत्कर्मणां यजुःसाध्यत्वात् । कृषिगोरक्षवाणिज्यं कुसीदं चेति वार्ता । *अध्यात्मेति । आत्मविषयिणी या विद्या उपनिषत् त-

दुक्तमेवेत्यर्थः । कथं पुनर्वेदान्तवाक्यानामक्रियार्थानामर्थवत्त्वं यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति जैमिनिना सूत्रितम् । आम्नायस्य विध्यर्थवादादिरूपस्य सर्वस्य साक्षात्परम्परया वा कार्यार्थत्वादक्रियार्थानामानर्थक्यं फलवदर्थशून्यत्वमिति हि तदर्थः । वेदान्तवाक्यानां च परिनिष्ठितवस्तुप्रतिपादकतया हेयोपादेयशून्यत्वेन पुरुषार्थत्वाभावात् । न ह्यनुवादकवाक्यानां फलवत्त्वरूपं प्रामाण्यमस्ति । नचाज्ञातब्रह्मज्ञापकत्वादेव विधित्वं शङ्क्यम् । विधीनां क्रियाविषयत्वेन परिनिष्ठिते वस्तुस्वरूपे तदसम्भवात् । अत्रोच्यते । "सदेव सोम्येदमग्र आसीद्" "एकमेवाद्वितीयम्" इत्यादिवाक्यानां ब्रह्मस्वरूपविषयत्वं निश्चितम् । तत्र च परिनिष्ठितवस्तुविषयत्वे ऽपि नानुवाददोषः । शास्त्रमन्तरेण "तत्त्वमसि" इति ब्रह्मभावस्यानवगमात् । एवं हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशप्रहाणे सति पुरुषार्थस्यापि सिद्धिः । किञ्च "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" "आत्मेत्येवोपासीत" "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतिषु विधौ बोधिते कोऽसावात्मा ब्रह्मेत्याकाङ्क्षायां तत्स्वरूपसमर्पणाय सर्वेषां वेदान्तानामुपयोगात् । तदुपासनाच्च शास्त्रदृष्टं मोक्षरूपं फलं भविष्यति । यद्यप्यन्यत्र भेदवाक्यानां विधिस्पर्शं विना प्रामाण्यं न दृष्टं तथाऽप्यात्मविज्ञानस्य फलपर्यन्तत्वान्नाप्रामाण्यं शङ्कनीयम् । इदन्तु बोध्यम्—"आत्मेत्येवोपासीत" इत्येतावन्मात्रस्य स्ववाक्यगतोपासनार्थत्वेऽपि न सर्वेषां वेदान्तानामुपासनापरत्वं निरस्तसमस्तभेदप्रपञ्चस्य ब्रह्मणो वेदान्तप्रतिपाद्यस्याद्वितीयत्वेनोपास्योपासकभावासम्भवात् इति ॥ २३ ॥

( क० टी० ) ननु व्यासङ्गादिना ऽप्रतिसन्धानं कुत. मन.

पदवाच्यस्यान्त करणस्य पातञ्जलनये व्यापकत्वादत आह *मनश्चेति । *शालीति । ज्ञानकारणमिति शेष । अत्र मानमाह *अन्यत्रेति । इद तैरपि स्वीकृतमिति भाव' । सङ्कोचेत्यादिफलमाह *अत एवेति । तच्छालित्वादेवेत्यर्थः । इदमपि प्राचीनमतेन। सिद्धान्तमाह *वस्तुतइति । ज्ञानस्य भावो ऽभावश्चेत्युभय मनसो लक्षण ज्ञापकम् । तत्त्वमेवाह *वैधृत्यादिति । विधृतस्य भावो वैधृत्यं तत्त्व चान्यसम्बन्धित्वम्। अज्ञानमिति च्छेदः। *नच-ज्ञान च। सङ्कोचविकासशालित्वमपि तद्धर्मेत्याह *विकासस्त्विति । *अन्यथा-अस्मन्मनसो ऽपि विकासाङ्गीकारे। दोषान्तरमाह *किञ्चेति । मतान्तरमाह *अदृष्टेति । अपिर्योगसमुच्चये । केचिदित्यरुचिबीज तु अदृष्टविशेषस्य नियतविकासनियामक त्वस्वीकारे गौरव सङ्कोचशालित्वभङ्गापत्त्योक्तदोषापत्तिश्चेति तथैवोचितमिति । नन्वेवमन्त.करणस्यापि ऐक्यात् तत्त्वापत्तिरतः पातञ्जलसिद्धान्तमाह *अन्त.करणञ्चेति । तस्य तत्त्वे हेतुद्वयमाह *अत एवेति । तस्य विभुत्वादेवेत्यर्थः । अस्योभयत्रान्वय' । एवं च तदुभयोपपत्तये तस्य तत्त्वमिति भाव. । तत्र द्वितीयमुपपादयति *अन्यथेति । तस्याविभुत्वे इत्यर्थ. । ननु योगजधर्मवशात्तत्त्वाभावो ऽपि भविष्यत्यत आह *योगजेति । नन्वेव क्वोपयोगो योगजधर्मस्यात आह *तेनचेति । योगजधर्मेण चेत्यर्थ. । नन्वेवमपि योगिनां भूतभाविप्रत्यक्षानुपपत्तिस्तत्र सन्निकर्षाभावादत आह *भूतेति । भग्ने ये घटीकपाले तयोः किञ्चित्सयोगेन तदभावादाह *कपालेति । स्पष्टीकृतश्चैतद् गुरुचरणैः पातञ्जलवृत्तौ । मनस एकत्वे ऽपि स्वतो जीवोपाध्यन्तःकरणानां नानात्वादाह *नचान्त करणानामिति । प्रसङ्गान्नैयायिकमते ऽपि दोषमाह *एवमिति । उभयत्र दोषमुद्धरति *तदेवेति । आदिना तदात्मा सर्वस्येति । एवञ्च विभुत्वे ऽपि तस्य साधारण्य नेति नातिप्रसङ्ग इति भाव. । अत्र मानमाह *कृतार्थमिति । कृतार्थं बुद्ध्या समापितार्थम् । एक कञ्चिन्मुक्तपुरुष प्रति दृश्य गुणादिकं प्रयोजनकरणाद्राज्ञो राज्यवन्नष्टमपि सामान्यतो न नष्ट तस्मिन्कृतार्थेऽन्यस्मिन्नकृतार्थे साधारणत्वादित्यर्थः । कुशलं मुक्तं पुरुषं प्रति नाश प्राप्तमप्यकुशलानमुक्तान् पुरुषान्प्रति न

कृतार्थमिति तेषां दृशिरूपक्रियां प्रति विषयतामापन्नं परस्य पुरुषस्य रूपेण दर्शनेन लभत एवात्मसत्त्वमित्येवं दृक्दर्शन शक्त्योः पुरुषबुद्ध्योर्नित्यत्वाच्छास्त्रेषूक्तस्तयोरनादि संयोगो ऽप्युपपन्नः । विनाशित्वे हि गुणानामनादित्व न घटेत, ततश्च तत्कार्यबुद्धेस्ततश्च बुद्धिपुरुषसंयोगस्येति भाव. । इदमेवाविरोधबीजप्रदर्शनेनोपपादयति *कथमिति । एव वस्तु निरूप्य भेदमाह *यदीति । वेदान्त्यादिसमतमपीदमित्याह *अविवेकेति । अन्यथा तदपगमनासङ्गति स्पष्टैव । एव सति तथा नैयायिकोक्तमपि सङ्गतमेव । तत्र तन्मूलसङ्गतिमप्याह *गोतमोऽपीति । क्रमेण सूत्रत्रयमाह *स्वप्नेति । तुर्याध्यायशेषे बाह्यार्थभङ्गनिरासप्रकरणे ऽव्यवहितसूत्रत्रयमिदम् । *विज्ञानेति । विज्ञानमेवात्मेति वादीत्यर्थः । इत्येनेत्यस्य कृत्वेत्यत्रान्वय. । तत्राद्यसूत्रार्थमाह *यथेति । तत्तात्पर्यमाह *एवञ्चेति । तदभावे ऽपि तदर्थभावे चेत्यर्थः । विज्ञानपदार्थमाह *चित्तेति । द्वितीयसूत्राभिप्रायमाह *जाग्रदिति । वार्थमाह *अपीति । तथाच न केवल स एव दृष्टान्त किन्त्वयमपीति भावः । अनूद्य दूषयति *यद्यपीति । आदिना ते जाग्रद्विषयाः । आदिना सविधगमनम् । दूरत्वरूपप्रतिबन्धक नेत्याह *समीपे एवेति । *उपेति । कर्मधारय । शुक्तिरजतादिवन्नेत्याह *यावदिति । किञ्चिद्व्यक्तिनाशेऽपि तत्सजातीयसत्त्वादाह *जातीयानामिति । उक्ततात्पर्यनिरासायाह *चित्तेति । *तत्त्वे–असत्त्वे । नन्वेतावताऽपि प्रकृते क उपयोगो ऽत आह *एवञ्चेति । तद्भेदेन तादृशसत्त्वप्रतिपादने चेत्यर्थः । उक्तरीत्या सत्त्वेऽपि न परमार्थत इत्याह *अनिर्वचेति । ननु सामान्यसूत्रत्वात् तस्यापि खण्डन तृतीयसूत्रेण कुतो नात आह *तस्येति । अनिर्वचनीयतावादस्येत्यर्थः । ननु वेदान्तिमतेनानिर्वचनीयेन व्यावहारिकसत्यत्वमिति तथा भाष्यवार्त्तिकोक्त्या तत्त्वप्रतिपादनेन कथ तस्य तत्त्वमुक्तप्रायमत आह *तद्वादेचेति । अनिर्वचनीयत्ववादे चेत्यर्थ । वेदान्तिमत तु प्राग् दूषितमिति भावः । तै-

---

( १ ) अनादित्व न घटेतेति सबन्धः, एवमुत्तरत्रापि ।

( २ ) अयं ग्रन्थः एकस्मिन् एव कलापुस्तके उपलभ्यमानोऽप्युपयुक्तत्वादत्र सन्निवेशित. ।

त्त्वबुभुत्सो कथा वादः । *अदोषः–व्यवहारोच्छेदरूपदोषो न ।

एतेन तथा नैयायिकोक्तमपास्तम् ।

अत्राहुर्मूलकाराः—

यत्तु प्रमाणादिपदार्थजातस्य सत्त्वानभ्युपगमे द्वयोर्वादिनोः कथोच्छेद इति नैयायिकादयः। तन्न ।

द्वयोर्वादिनोर्वाग्व्यवहारस्य तत्सत्ताभ्युपगमनैयत्याभावात् । चार्वाकादीनां वाग्व्यवहारस्य दर्शनात् । अन्यथा परेषां तत्खण्डनकथोच्छेदः स्यात् । नच तद्वाग्व्यवहारस्य स्वपक्षसाधनपरपक्षबाधनक्षमत्वाभावेन तादृशवाग्व्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वनियमः । एवञ्च चार्वाकादिवाग्व्यवहारः साधनबाधनाक्षमः प्रमाणादिसत्तानभ्युपगमेन प्रवर्त्तितत्वादुन्मत्तवाग्व्यवहारवदिति वाच्यम् । सद्वचनाभासत्वस्यात्रोपाधेः सत्त्वात् । अत एव प्रमाणादिसत्तामभ्युपगम्य प्रवृत्तकथयोर्नैयायिकमीमांसकयोरन्यतरेणान्यतरवाग्व्यवहारस्य साधनबाधनाक्षमत्वव्यवहारोपपत्तिः ।

किञ्च यद्यनभ्युपगतप्रमाणसत्तावाद्युक्तत्वेन तद्वचनामामाभासत्व ब्रूषे तदाऽभ्युपगतप्रमाणसत्तावाद्युक्तत्वेन त्वद्वाग्व्यवहारोऽपि वचनाभासः किं न भवेत् ।

नच तत्सत्तानभ्युपगमे धर्मिणो व्यवहारस्यैवासिद्धिर्दूषणाद्यनुपपत्तिश्च सर्वविधिनिषेधानां प्रमाणाधीनत्वादिति वाच्यम् । सत्त्वासत्त्वोदासीनैः प्रसिद्धिसिद्धप्रमाणादिना व्यवहारसिद्धेः ।

किञ्च प्रवृत्तकथं प्रति हि इदं दूषणं परेण वाच्यम् । तत्र प्राक्तनकथारम्भवत् अग्रे ऽपि अभ्युपगतप्रमाणादिसत्त्वेन नैयायिकादिनाऽनभ्युपगततत्सत्त्वस्यापि प्रसिद्धिसिद्धेनाग्रिमवाग्व्यवहारोपपत्तेः । किञ्च त्वया प्रमाणादिसत्तामनभ्युपगम्य विचारः कर्त्तव्य इत्युभयोः समतौ कथारम्भो निर्विघ्नः । उभयाभ्युपगममपि कथारम्भानियामकं स्वीकृत्य प्रमाणादिसत्त्वाभ्युपगमस्यापि तन्नियामकत्वाङ्गीकारे गौरवम् ।

किञ्च चार्वाकादेर्दुर्वैतण्डिकस्य कथाप्रवेशाङ्गीकारे तं प्रमाणादिसत्त्वानभ्युपगमप्रयुक्तैतद्दोषदानमयुक्तम्, तदनङ्गीकारे उक्तदोषदानार्हत्वाभावः । कथायामेव निग्रहस्य प्रसिद्धत्वात् ।

नच वादिप्रवर्तनीयवाग्व्यवहारं प्रति तत्सत्ताभ्युपगमो हेतु । चार्वाकादिवाग्व्यवहारस्वरूपापलापस्याशक्यत्वात् । नच तद्व्यवहारं प्रति प्रमाणादीनां हेतुत्व यो हेतु. स सम्भित्यन्वयबलाच्चैतेषां सत्त्व यत्सत् तद् अभ्युपगम्यते इति तत्सत्ताभ्युपगम.। कथारम्भोत्तर तत्सत्त्वसाधनम, सिद्धे च सत्त्वे तत्कथारम्भ इत्यन्योन्याश्रयापत्ते· । अन्या कथा चेदनवस्थापत्ति । तस्या अपि सत्त्वसाधनपूर्वकत्वात् । तस्मात्कथात पूर्वं तत्त्वबुभुत्सुभ्यां विजिगीषुभ्यां वादिप्रतिवादिभ्यां व्यवहारनियम एव कार्यः । सच–प्रमाणेन तर्केण च व्यवहर्तव्य वादिना । प्रतिवादिना च कथाङ्गप्रमाणादिस्वरूपनिश्चयाभावज्ञापक वक्तव्यम् । प्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थान च प्रदर्शनीयम्, तत्प्रदर्शने इतरस्य भङ्ग·, अन्यथा स्वस्येत्यादिरूप ।

नच व्यवहारनियमे ऽपि हेतुर्वाच्य. । सच कथायामारब्धायामेव वक्तु शक्य प्रमाणादिसत्त्वाभ्युपगमहेत्वभिधानवत् । एवं च पूर्वं समयबन्धो ऽपि न सिध्यतीति वाच्यम् । वादिभ्यां तत्त्वबोधजयमूलकतया व्यवहारनियमस्य स्वेच्छयैव परिग्रहात् ।

नच प्रमाणामूलकस्येच्छामात्रमूलकसमयबन्धस्य मूलाशुद्ध्याऽशुद्धिसम्भावनया विचारस्य विचार्यस्य जयादेश्च विप्लव. । अनादिपारपर्यायातस्य लोकव्युत्पत्तिगृहीतसवादस्य समयबन्धस्य नाशुद्धिसम्भावना, स्वत एव शुद्धत्वात् ।

नचोक्तरीत्यैव प्रमाणादिसत्ता ऽप्यङ्गीकर्त्तुमुचिता । अन्वयव्यतिरेकाभ्यां तादृशव्यवहारनियमस्यैव कथाऽङ्गत्वाङ्गीकारात्, नतु प्रमाणादिसत्त्वाभ्युपगमो व्यतिरेकाभावात् ।

नच लोकसिद्धत्वात्प्रमाणादीनामपि तद्बाध्यत्वेऽनभ्युपगमापत्ति· । अन्यथा सन्तु सन्ति न तूक्तानुपपत्त्या । नच तत्सत्ताऽनभ्युपगमे तत्त्वबोधविजयरूपकथाफलस्यातिप्रसङ्गः । समयबन्धाङ्गीकारेण तत्परिहारात् तस्य च सत्त्वमभ्युपेतम् । असत सत्त्वप्रापणस्यैव निष्पादनत्वात् । एव प्रमाणैर्व्यवहर्त्तव्यमिति समयबन्धेन प्रमाणानां कारणविशेषत्वरूप करणत्वमुक्तम् । कारणत्व च नियतपूर्वसत्त्वमिति तेषामपि सत्त्वमभ्युपेतम् । तथा दूषणानामसत्त्वे भङ्गावधारणासमयबन्धौ न स्यातामिति तत्सत्त्वमिष्टम् । हेतोर्व्याप्त्यादीनां च सत्त्वे तद्विषयस्य सत्त्वरूपता सिध्यतीति तेषामपि सत्त्वमिष्ट

भवत इति ज्ञायत इति चेन्न ।

उक्तव्यवहाराणां सत्ताज्ञानमात्रेण चरितार्थतया वास्तवसत्तानाक्षेपकत्वात् ।

किञ्च सत्तावगममात्रात्तत्सत्ताऽभ्युपगमे मरुमरीचिकादौ जलरूपतासत्ताया अप्यभ्युपगमापत्तिः । नच वादिप्रतिवादिमध्यस्थानामबाधितसत्तावगम एव तदभ्युपगमहेतुरिति वाच्यम् । पुरुषत्रयावगतस्य गन्धर्वनगरादेरन्यैस्तदैव बाधदर्शनेन तैरपि दोषावगमे कालान्तरे बाध्यतादर्शनेन तावन्मात्रेण सत्त्वसिद्धावतिप्रसङ्गात् । एवमपि सत्त्वाभ्युपगमे भ्रमबाधप्रसिद्ध्योर्विलयापत्तिः ।

नच सर्वकाले सर्वेषां बाधग्रहाविषयत्वात् तत्सदिति वाच्यम् । प्रमाणादौ सार्वकालिकसर्वपुरुषीयबाधग्रहाविषयत्वस्यासर्वज्ञेन ज्ञातुमशक्यत्वात् ।

नच सम्यक्त्वावगमे ऽप्यभिमतसम्यक्त्वानिर्वाहायात्यन्ताबाध्यत्वमेष्टव्यम् । 'ब्राह्मणोऽहम्' 'कृष्णकेशोऽहम्' इत्यादिप्रतीते प्रागात्मनिश्चयादबाधितत्वावगत्यैव सम्यक्त्वाभिमतविधिविधेयादिव्यवहारदर्शनेन त्वदुक्तव्याप्तेरभावात् । तादृश एवाय प्रमाणादिसत्तावगम । तदुक्तम्–'व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ' इति । तस्माद्यद्वाग्व्यवहारे कृतसमयादौ उल्लङ्घनव्यवहारो न मध्यस्थस्य, तस्य जय, इतरस्य पराजय' । 'अनेन नियमेन वक्तव्यम्' इत्यस्य हि 'अनेन नियमेनानेनोक्तम्' इति मध्यस्थावगमस्य विषयीभवितव्यमित्यर्थ इति न नियमसत्त्वापत्ति । नचैवमप्यवगमसत्ताऽवश्यमङ्गीकार्या तेनैव तव सर्वव्यवहारनिर्वाहादिति वाच्यम् । तत्सत्तावगमान्तरस्यैव तत्सत्तायां शरणत्वात् । न चावगमसत्तावीक्षाया अप्यवगमोऽस्तीत्यवगमान्तरस्य शरणत्वे ऽनवस्था तत्र यत्रैव ज्ञाने तद्विषयज्ञानान्तरानुत्पत्तिस्तस्यासत्त्वे पूर्वपूर्वस्याप्यसत्त्वापत्तिरिति वाच्यम् । त्रिचतुरज्ञानपर्यालोचनमात्रविश्रान्तेन ततः परमपरीक्षणरमणीयेनैव विचारेण समयबन्धपूर्वक कथाप्रवृत्त्या ऽदोषात् । यथा स्वर्णमुद्रापरीक्षणे त्रिचतुरवाक्यात्सम्यङ्निर्णये न पुनर्ज्ञानान्तरमपेक्ष्यते तद्वत् । अन्यथा प्रमाणादिसत्ताभ्युपगमज्ञानानवस्था दुष्परिहरैव । ज्ञानसत्तायास्तत्प्रमाणज्ञानान्तराननुसरणे सिद्ध-

भावात् । नच चक्षुर्वदज्ञातमेव ज्ञान स्वरूपसत्तामात्रेण स्वकार्यकरमिति नानवस्था । एवमपि ज्ञाने जाते 'जानामि न वा' इतिसन्देहाद्यनुदयेनानुव्यवसायावश्यकत्वे ऽनवस्थाया दुष्परिहरत्वात् । नच तवासत एव ज्ञानस्य व्यवहारोपपादकत्वे शशविषाणादिकमपि तथा स्यादिति वाच्यम् । यथा तव स्वरूपसत्ताऽविशेषे ऽपि ज्ञानस्वरूपसत्तैव व्यवहारोपपादिका न घटादिसत्ता तथा मया ऽसत्त्वाविशेषे ऽपि ज्ञानमेव व्यवहारोपपादक न शशशृङ्गादीत्यभ्युपगमात् ।

नचासदुपपादक चेति व्याहतम् । सद् उपपादकमित्यस्यापि व्याहतत्वापत्तेः । नहि यदुपपादक नासदिति क्वचिदावयोः सिद्धमस्ति । नचैवमसत एव कारणत्वे बीजवापानन्तरमिवान्यदा ऽप्यङ्कुरोत्पत्त्यापत्तिः । तवापि कार्योत्पत्तिक्षणे ऽसत्यैव सामग्र्या यथा कार्य जायते तथा ऽन्यदप्यापत्तेः । नच मम प्राक् सामग्रीसत्त्वमेव कार्यजन्मनियामकमिति न दोषः । ममापि प्राक्कालावच्छिन्न कारणासत्त्वमेव कार्यजनकमित्यदोषात् ।

नच मम कारणाव्यवहितोत्तरत्वं कालगतं कार्यजन्मनियामकं त्वया तु नैतच्छक्यमसत्त्वाविशेषादिति वाच्यम् । अव्यवहितोत्तरत्वस्यापि कार्येण समकालत्वादागन्तुकत्वान्नियामकत्वानुपपत्तेः । तस्मादन्यकालिकसामग्र्यास्तदा कार्यजन्मनियमस्तथा दर्शनादेव वाच्य तर्हि ममापि तुल्यम् ।

ननु कः कार्यजन्मकाल इति चेत् यत्र कार्यजन्म सः । न च कार्यकालस्यानुगतं रूप वक्तव्यमन्यथा यत्र कार्यजन्मेति यच्छब्देन परामर्शायोग इति वाच्यम् । अनुगत रूप वक्तव्यमिति नियमाभावात् । अन्यथा कार्यसत्तावैशिष्ट्य कस्येति प्रश्नपरम्परायामनवस्थापात ।

किञ्च सद्व्यादिना सत्ताविशिष्ट बीजमङ्कुरकारणमुच्यते तदा सत्ताविशिष्टे सत्तान्वयाभावादसत्त्वमेव कारणस्यायातम् ।

तथा हि विशिष्ट किं तयैव सत्तयोत सत्तान्तरेण । नाद्यः । विशिष्टस्य विशेष्यविशेषणानतिरेकेण विशेषणांशे तस्यावृत्तावात्माश्रयापत्ति. । तस्यातिरिक्तत्वे ऽपि दण्डविशिष्टदण्डस्य वृत्यभावनियमदर्शनेन तस्याः स्वविशिष्टे वृत्त्यसम्भवः । एवञ्च सत्ताविशिष्टे

सद्व्यवहार शुक्तिरूप्यव्यवहारवत्स्यात् । नान्त्य । अनवस्थापत्ते । यस्यामेव सत्ताया सत्ताभेदादर्शन तस्या असत्त्वे मूले क्षतिरित्यनवस्था दुष्टिबीजम् ।

नच सद्बीज कारण सन्तस्तन्तव इत्यादेः स्वरूपसत्त्वविषयकत्वम् । अनुगतबुद्धेरपि भिन्नस्वरूपालम्बनत्वे सर्वजात्यपह्नवापत्तेः अनुगतबुद्धिव्यवहारावेव हि तत्कल्पकौ ।

किञ्च स्वरूपसत्ताया कारणतावच्छेदकत्वादनुगतकारणताग्रहो दुरुपपाद ।

किञ्च घटादे पृथुबुध्नोदराकारत्वादि स्वरूप न ततो ऽधिकं किञ्चित्स्वरूपसत्त्व नामास्ति । असतो ऽपि चेत्तद्रूप स्वरूपं तद्योगान्निषेधानुपपत्ति । असन् घट इति व्यवहारश्च भज्येत । असत्त्वाश्रयाभावात् ।

अथ सदपि बीजादि सत्तामनन्तर्भाव्य बीजत्वेनैव कारणमुच्यते । तर्ह्यसतो ऽपि असत्त्वमनन्तर्भाव्य कारणत्वमस्तु । नचासतः कार्याव्यवहितसत्त्वरूप कारणत्वमनुपपन्नम् । असत्यैव सत्तया तदुपपत्तेः । यदि सा स्वरूपेणैव नेष्यते तर्हि असती सत्तेति व्यवहारोऽपि न स्यात् ।

किञ्च तवापि सत्ता स्वरूपसत्येवोत सत्तान्तरवैशिष्ट्येन । आद्ये इष्टमेव न । अन्त्ये ऽनवस्था । नचासतः कारणत्वे शालिबीजमेव शाल्यङ्कुरस्य कारणमिति नियमः कथम् । सद्वादिनस्तु शालिबीजस्य तज्जातीयस्य वा सत्त्वे शालिसत्त्व तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां तज्ज्ञानम् । असद्वादिन केवलो व्यतिरेकः स्यात् । सो ऽप्यनियत कारणाभावे कार्याभावावश्यभावाभावात् । असत कारणस्यासत्त्वे एव कदाचित्कार्योत्पत्तेरिति वाच्यम् । तवापि बीजसत्त्वे सति अङ्कुरसत्त्वमित्यन्वयस्य दुर्घटत्वात् । विशेषणीभूतसत्तानङ्गीकारात् । यदि स्वरूपसत्त्वमादाय तवान्वयग्रहणम्, तदा ऽसद्वादेऽपि तुल्यम्, स्वरूपस्यानपलापात् । नचासतः कारणत्वे—

आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।
रसवीर्यविपाकादि तुल्य तेषा प्रसज्यते ॥ इति—

दोष', तवापि तुल्यत्वादिति गृहाण । तस्मात्—

पूर्वसम्बन्धनियमो हेतुत्वे तुल्य एव नौ ॥

वस्तुतत्त्वबहिर्भूत्तसत्त्वासत्त्वकथा वृथा ॥ इति ध्येयम् ।

वस्तुतोऽसत कारणत्वम् इमदस्मान्नियमेन पूर्वं सदिनि बुद्ध्योपपादनीयम् । नच रासभादेरपि तादृशभ्रान्तबुद्ध्या कारणत्वापत्ति । यादृश्या हि त्रिचतुरादिकक्ष्यास्वबाधितया बुद्ध्या तव सत्त्वनिश्चयस्तादृश्यैव बुद्ध्या विषयीकृतस्यासतो मम कारणतानिश्चयात् तदग्रे बाधाच्चासत्त्वावधारणमस्माकम् । नच त्रिचतुरकक्षासु यत्र बाध्यते तस्याऽग्रे बाधोऽसम्भवी । बह्वीष्वपि भूमिष्वनुपलब्धबाधस्य परसिद्धान्तस्यान्यप्रयुक्तयुक्तिबाध्यत्वदर्शनात् । तस्य तयाऽपि बाधानङ्गीकारे दर्शनानां परस्परं विप्रतिपत्त्यभावादेकदर्शनपरिशेषापत्ति· ।

नच सत्त्ववादिना परपक्षोऽसन्निति दूष्यते स्वपक्षोऽप्यसन्नेवेति कथमेतदुपपद्यते इति चेन्न । व्यवहाराविसवादकृतोऽसत्त्वे विशेष इत्युक्तत्वात् ।

नच गिरिगुहागतबीजादौ इदमस्मान्नियत प्राक् सदिति बुद्धिविषयत्वाभावेन कथ कारणत्वमिति वाच्यम् । तज्जातीये कादाचित्कतादृशबुद्धिविषयत्वस्यैव कारणतानियामकत्वात् । अन्यथोत्तरकालिकसत्त्वबुद्धिविषयतया पूर्वकालिक सत्त्व तवापि कथ सिध्येत् । नच पूर्वकालिकमज्ञात सत्त्वम् उत्तरकालिकेन प्रमाणेन गृह्यत इति अन्यकालिक सत्त्वग्रहणमेव कारणत्वव्यवहारोपयोगीति प्रत्यक्षे युक्तम् । असद्वादे तु सत्तानङ्गीकारात्कालान्तरे बुद्धिरेव कथमिति वाच्यम् । ममाप्यसतः प्राक् सत्त्वग्रहस्यैव तद्व्यवहारोपपादकत्वेनादोषात् ।

तदेतत्संवृतिसत्त्वमिति गीयते बौद्धै । संवृतिर्लौकिकबुद्धिरविद्या । तया सत्त्व सर्वस्येति तदर्थ· ।

नच ज्ञान सद् असद्वा । आद्ये ऽपसिद्धान्तः । असतस्तु कथ विशिष्टव्यवहारप्रवर्तकत्वमिति वाच्यम् । त्रिचतुरादिकक्षासु व्यवहाराविसम्वादमात्रेण वस्तुतोऽसतापि तेन व्यवहारोपपत्ते· । तावता च न परमार्थसत्तासिद्धिरित्यावेदितम् । भ्रमविषयेण शुक्तीदमशसस्पृष्टरूप्येणा-

सतैव भ्रमस्य विशिष्टताव्यवहारदर्शनात् । अतीतानागतादिविषयाविज्ञाने विशिष्टव्यवहारकाले ऽसतो ऽपि विषयस्य विशिष्टज्ञानव्यवहारकारणतायाः त्वया स्वीकाराच्च । कारणताग्रहकाले ऽसत एव कार्यस्य विशेषकत्वाङ्गीकाराच्च । अन्यदा तस्य सत्त्वं तु चौरलुण्ठिते यामिकजागरणवृत्तान्तसदृशामिति दिक् ।

तच्च ज्ञान स्वप्रकाशम् । स्वप्रकाशत्व च स्वत एव प्रमितस्वरूपत्वम् । तथाहि विचारकस्यापि ज्ञाने सति "जानामि न वा" इति सशयो "न जानामि" इतिविपर्ययज्ञान ज्ञानाभावप्रमा च न दृश्यते । तेनैतद्दर्शनाभावव्यापक च प्रमितत्वम् । यथा प्रमितघटे । अतस्तद्दर्शनाभावो ज्ञानस्य प्रमितत्व ग्राहयति । अन्यथा जिज्ञासोत्तरं निद्रादिप्रतिबन्धाभावे प्रमितत्वाव्यतिरेकस्य व्यापक तदभावावगाहिज्ञानं स्यात् । अतः सतो ज्ञानस्य प्रमितत्वमवश्य वाच्यम् । तच्चान्यासम्भवात्स्वत एव । एव च स्वात्मकज्ञानज्ञेयमेव ज्ञानस्वरूपम् । नच "घटो ऽयम्" इत्यादिविषयज्ञानरूपव्यवसायोत्तर "घट जानामि" इत्यादिज्ञानरूपानुव्यवसायस्य नियतत्वात् न सशयादीति वाच्यम् । यत्रैवानुव्यवसाये व्यासङ्गान्तरापलापभिया ज्ञेयत्व न स्वीक्रियते तत्र, जिज्ञासायामप्यनुव्यवसायो ऽस्ति नवेति प्रमात्राश्रितसशये तदारभ्य व्यवसायविषयपर्यन्त सशयस्य दुष्परिहरत्वात् । यथा "धूमो ऽय धूलिर्वा" इति ज्ञापकसन्देहज्ञाप्यवह्निसन्देहस्तथेहानुव्यवसायसन्देहे तज्ज्ञाप्यव्यवसायसन्देहेन विषयानिश्चयासम्भवात् त्रिचतुरानुव्यवसायकक्षाभिरग्रे ऽविचारितरमणीयज्ञानसत्त्वावगमे ऽपि तत्सशयमारभ्य कदाचिद्विषयपर्यन्त सन्देहो दुर्वार एव । नच स्वप्रकाशत्वे ऽपि यत् प्रमाण तेषु तस्य प्रामाणान्तरेण सत्त्वानिश्चये तवापि सशयः स्यादिति वाच्यम् । तत्पक्षे मानमेयव्यवस्थाया अभावात् । मेयत्वे तस्यापि घटादिवद्बोधत्वप्रसङ्गः, 'घट जानामि' इति प्रत्यक्षवत् 'बोध पश्यामि' इत्यनुभवाभावाच्च ।

नच बोध स्वातिरिक्तवेद्यो वस्तुत्वात् घटवदित्यनुमानन्तथा । स्वतोगृहीतस्य धर्मित्वे व्याघातात्, असिद्धस्य धर्मित्वे आश्रयासिद्धेः । तस्माद्बोधान्तरानुपलम्भाद्बोध स्वप्रकाश । पराधीनप्रकाशत्वे ऽनवस्था ।

नच वित्तेर्नावश्यं वेद्यत्वम् । व्यवहारस्तु स्वरूपसत्तयेति वाच्यम् । तस्यां प्रमाणानुपन्यासे स्वरूपसत्ताया अप्यभावेन तया व्यवहारासम्भवात् । नच प्रमाणानुपन्यासेऽप्यस्तु तत्सत्ता सत्त्वविचाराविषयैव । तयाऽर्थनिश्चये व्यवहारोपपत्तेः। पश्चात्तु व्यवहारसत्त्वेनैव तत्सत्तानिश्चय इति वाच्यम्। सामान्यतो ज्ञान विना तज्जिज्ञासाया एवासम्भवात् ।

किञ्च व्यवहारस्यापि कथ सत्त्वमित्यनवस्थापत्त्याऽर्थासिद्धेरप्यापत्ते ।

तदुक्तम्—अप्रत्यक्षोपलम्भस्य नार्थदृष्टि प्रसिध्यति । इति ।

ज्ञाने अपरोक्षत्वमनङ्गीकुर्वत इत्यर्थः। तत्र तत्र सत्ताप्रमाणप्रश्ने यत्रैव प्रमाणे प्रमाणाभावमूलिका सत्तानिवृत्तिस्तत क्रमेण सर्ववस्तुसत्तानिवृत्त्यापत्तिरित्यनवस्थाऽस्वप्रकाशवादिन ।

नच नैरन्तर्येण ज्ञानतज्ज्ञानतज्ज्ञानधारा स्वीक्रियतेऽनवस्था स्यात्। किन्तु व्यवहारदर्शनादेका काचिद्वित्तिः कदाचित्प्रमीयते ततो वित्तित्वसामान्यात्सर्ववित्तिषु प्रमाणसिद्धत्व प्रतीयत इति वाच्यम्। निर्विषयघटादिवित्तीनामुपलम्भासम्भवात् । तावद्विषयशतयुक्ताया वित्तेरस्मदादिभिरननुभवात ।

नच सर्वज्ञस्य योगिनः सर्वविषया वित्तिः प्रत्यक्षा । तस्या अप्यन्यवित्त्यवभास्यत्वे ऽनवस्थापत्तेः ।

नच सर्वज्ञवित्ति सर्ववित्तिसन्ततिग्राहिणी स्वस्यापि संवित्तेर्भावात्स्वात्मानमपि प्रकाशयतीति वाच्यम् । तावता स्वप्रकाशत्वासिद्धे । नच सर्ववित्तिप्रवाहग्राहिणी सर्वज्ञवित्तिर्न स्वात्मान प्रकाशयति किन्तु ग्राह्यकोटिनिविष्टवित्त्यन्तरेणेति वाच्यम् । सर्वविषयाया एव वित्तेर्ग्रहणेन स्वस्यापि तद्विषयत्वेन स्वग्रहणे स्वप्रकाशतासिद्धे ।

नचैव घटादेरपि स्वत सिद्धतापत्ति अन्यथा तत्रापि तत्सामग्र्याः सामग्र्यन्तरजन्यत्वेनानवस्थापत्तिरिति वाच्यम् । तत्सामग्रीपरम्परायाः कुत्रचिद्विच्छेदे घटस्य सदातनत्वापत्त्या प्रमाणसिद्धा सा ऽनवस्था ज्ञानपरा तु प्रमाणशून्येति अन्धपरम्परेति वैषम्यात् ।

यदि ज्ञानसत्त्वसिद्ध्यनुपपत्त्या सर्वं ज्ञानमाविच्छिन्नपरम्परं प्रमी-

यते इत्युच्यते तर्हि किं तत्स्वात्मनो ऽपि प्रमापकमिष्यते उतान्यत्तत्प्रमापकम् नास्त्येव वा तत्प्रमापकम् । सर्वथा ऽप्युक्तदोषानिस्तारः । स्वात्मप्रमापकत्वे स्वप्रकाशता सिद्धैव । द्वितीये ऽनवस्था । तृतीये शेषासिद्ध्या सर्वासिद्धिरिति ।

किञ्च प्रमाणसिद्धं ज्ञानसत्त्वं वदता प्रमाणप्रमेयप्रमालक्षणानि वाच्यानि तानि च वक्तुमशक्यानि । वक्ष्यमाणदोषग्रासात् ।

नचैवं ज्ञानलक्षणस्यापि असम्भवो ज्ञानमपि नास्त्येवेति वाच्यम् । स्वतःप्रकाशमानस्य दुरपह्नवत्वात् । स्वप्रकाशत्वाङ्गीकारादेव च तस्य जन्मनाशादिसर्वदोषाभाववत्त्वम् ।

तथा हि जन्मादयो हि न स्वप्रकाशाः संविद्रूपापत्त्या जन्मादित्वस्यैव हान्यापत्तेः । एवं च तेषां जडत्वेन न संविद्धर्मत्वम् । एवं वक्ष्यमाणभेदभगन्यायेन द्रष्टव्यम् । न चाभावाङ्गीकारादेवाद्वैतव्याघातः सौगतप्राभाकरयोर्भावाद्भेदेनाभावानङ्गीकारे तद्व्यवहारवन्नैयायिकानामभावाभावस्य स्वरूपानतिरेकवदस्माकमपि तदतिरेकानङ्गीकाराद् विकल्पमात्रत्वाच्च तत्प्रतीतेर्न तेनाद्वैतव्याघात' । नच सत एव प्रतियोगित्वात्सर्वथा अद्वैतानङ्गीकारे 'न विद्यते द्वैतमत्र' इति संवेदने सर्वप्रकारभेदनिषेधायोग इति वाच्यम् । भ्रमविषयस्येवासतो ऽपि प्रतियोगिनो निषेधसम्भवात् । 'यद् रजतमभात्सा शुक्तिः' इति यथा मिथ्याभूतेनापि शुक्तिरूपं लक्ष्यते तथा व्यवहारसिद्ध्या वस्तुतो मिथ्ययैव श्रुत्या तात्पर्यवृत्त्याऽद्वैतं प्रतिपाद्यते । अविद्यादशायां च तस्या प्रमाणत्वव्यवहार. । स्वात्मसिद्धमेव चिद्रूपम् । इत्यन्यत्र विस्तरः ।

ननु ज्ञानस्य स्वप्रकाशत्वे स्वस्य प्रकाश इत्यर्थकस्वप्रकाशशब्दानुपपत्ति क्रियाकर्मभावानुपपत्तेः । क्रिया हि कर्मणो जन्या कर्म च जनकम् । नचैकस्यैव जनकत्व जन्यत्व च सम्भवति जनकजन्ययोः पूर्वपरकालनियतत्वात् । कार्यानवच्छिन्नकारणसत्ताकालस्य पूर्वकालत्वादिति चेद् क्रियायां कर्मजन्यत्वानङ्गीकारात् । नचैवं कर्मकारकत्वानुपपत्तिः । क्रियाजनकत्वस्यैव कारकपदार्थत्वादिति वाच्यम् । प्रत्यक्षे विषयस्य जनकत्वदर्शनमात्रेण तत्र कारकत्वव्यवहारात् । अन्यथेश्वरज्ञानस्य नित्यत्वनये तस्य

कर्मजन्यत्वाभावेन तत्कर्मणः कारकत्वानापत्त्या 'ईश्वरः सर्वं जानाति'इत्याद्यनापत्तिः । किञ्चाध्यात्मविदो निरुपाधिमात्मानं जानत 'आत्मान जानामि'इत्यनापत्ति. स्वस्य कर्त्तृत्वविरोधात् । तस्मात्कर्मकारकमिति सञ्ज्ञामात्रं वैयाकरणानामर्थविशेषमिष्ठ नदीवृध्यादिवत् । एव च यत्रापि सोऽर्थो नास्ति तत्रापि तदारोपेण तदाश्रयकार्यनिर्वाहो नैतावता तद्विरोधो वस्तुनि दूषणम् ।

नन्वेवमप्यभेदे विषयविषयिभावासम्भवः । विषयसम्बन्धित्वं हि विषयित्वम् । सम्बन्धिनोः स्वरूपभेदाज्ञाने सम्बन्धाभावावगमात् इति चेन्न ।

विषयविषयिभावस्य तत्स्वरूपातिरेकाभावात् । अतिरेकेऽपि ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इत्यादौ तत्सम्बन्धस्य षष्ठ्या प्रतीयमानस्य स्वाश्रयात्मकत्वमेवैष्टव्यमन्यथाऽनवस्था स्यात् । तथा च तत्रैव या सम्बन्धमिति सा सम्बन्धस्वरूपा सम्बन्धिनोर्भेद एव भवतीति नियमत्यागो यथा, तथा विनाऽपि सम्बन्धिभेदं विषयविषयिभावेन बाधाविषयत्वात्पारमार्थिकत्वे ऽप्यक्षतेः ।

किञ्च यथा तवान्येषु सत्तासम्बन्धात्सद्व्यवहार. सत्ता तु स्वयमेव सद्रूपा, न चात्माश्रयः, तथा ज्ञानं क्रियाकर्मविषयविषयिभावयोरभावेऽपि स्वत एव सिद्धरूपत्वात्स्वप्रकाशमिति व्यवह्रियते ।

किञ्च कुटादीत्यादौ तद्गुणसंविज्ञाने बहुव्रीहौ गुणभूतसहितस्यैवान्यपदार्थस्य तत्पदप्रतिपाद्यता तथा ज्ञानस्याविषयमपि स्वात्मानमादाय स्वविषयव्यवहारप्रवर्त्तनसमर्थनम् । प्रधानैकदेशस्य विशेषणतया संविज्ञानं यत्र स तद्गुणसंविज्ञान. । सोऽय गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्ष' नतु ब्रह्मस्वप्रकाशतापक्ष. । तस्य विषयाभावात् । किंतु यथा स्वाविषये कुटादौ बहुव्रीहिवाक्यं व्यवहारप्रवर्तकं तथा ज्ञानमविषयेऽप्यात्मन्यविद्यादशायां "जानामि" इत्यादिव्यवहारप्रवर्तकमिति तत्र स्वप्रकाशत्व बोध्यम् ।

तदेवमविषये ऽपि व्यवहारप्रवर्तकत्वादिरूपमन्यदृष्टविपरीत यद् यत् स्वप्रकाशत्वे आपतति तत् सर्वमन्यथाऽनुपपत्तिरूपतया स्वप्रकाशतासाधकम् ।

तद्यथा—अन्यो ज्ञाता ऽन्यो ज्ञेय इति अन्यत्र दृष्टम् "अहम्" इति व्यवहारानुपपत्त्या त्याज्य तथाऽन्यत् ज्ञानमन्यत् ज्ञेयमिति "जाना-

मि" इति व्यवहारानुपपत्त्या त्याज्यम् । सर्वतो बलवती अन्यथानुपपत्तिर्दृष्टतामात्रमवलम्ब्य प्रवृत्त 'संवेदन स्वातिरिक्तवेद्यं वस्तुत्वात् घटादिवद्' इत्यादितर्कशतमपि बाधते ।

तदुक्तम्—

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥ इति ।

तथा,

अन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्य सैव सर्वबलाधिका ॥
वाऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः ।
नह्येकत्र समावेशश्छायातपवदेतयोः ॥ इति ।

एव च वस्तुत्वं नातिरिक्तवेद्यत्वे प्रयोजकं किं त्वबोधत्वमेवेति दृष्टताभिनिवेशो व्यर्थः । यद्यपि स्वप्रकाशे मानमेयभावो नेष्यते तथाऽपि परानुसारेणार्थापत्तिप्रमाणमुपन्यस्तम्, वस्तुत स्वसंवेदन बलादेव स्वप्रकाशरूप विज्ञान द्रष्टव्यम् । नन्वेवं बौद्धवदेव स्वप्रकाशज्ञानं ब्रह्मवादिनोऽपि, नेत्याह बौद्धस्य ज्ञान ज्ञेयं च सर्वमेवानिर्वचनीयम् ।

तथाहि—

आदावन्ते च यन्नास्ति तन्मध्येऽपि नास्त्येव-यथा, शुक्तिरजतम् ।

यच्च यतो भेदेनास्ति तत्तद्व्यतिरेकेणाप्युपलभ्यते । ज्ञानज्ञेययोः परस्परेण निरूपणान्नैकमपि परमार्थमिति मत तस्य ।

तदुक्त भगवताऽलङ्कारावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥ इति ।

ब्रह्मवादिनस्तु विज्ञानातिरिक्तं विश्व सदसत्त्वाभ्यामनिर्वचनीय मन्यन्ते ।

तथाहि नेदं सत् । वक्ष्यमाणदूषणगणप्रसङ्गात् । नाप्यसदेव । लोके सर्वव्यवहारविलयापत्तेः ।

नच भेदस्य संबन्धत्वात्ते दोषा असदुत्तररूपजातयः स्युरिति वाच्यम् । स्वयमनिर्वाच्यैरेव दोषैः पदार्थेषु निर्वचनीयत्वबाधेनादोषात् । यथा स्वाप्नैरेव न्यायैः स्वप्ने जयपराजयव्यवहारस्तथाऽनिर्वचनीयैरेव तैर्व्यवहार इत्यदोषः ।

किञ्चासदुत्तरं जातिरिति तव परिभाषा युक्ता। जातिपदस्यान्यत्र लौकिकसङ्केतेन जात्यमणिवज्जात्युत्तरस्य साधुत्वमेव कुतो न।

किञ्च स्वव्याघातकमुत्तरं जातिरित्यत्र लक्षणे स्वव्याघातकमित्येव सिद्धे उत्तरपदं व्यर्थम्। किञ्च व्याघातकारणधर्मधर्मिभावखण्डनेन व्याघातकत्व खण्डितमेव भविष्यति।

ननु अनिर्वचनीयत्ववादे किं सदसत्त्वसंशय उत उभयबहिर्भावः। आद्ये एकपक्षदोषस्याभासत्वमङ्गीकृत्यैकस्याङ्गीकार आवश्यकः। तच्च सत्त्वपक्षीयदोषस्यैवोचितम्। सत्त्वाङ्गीकारे तत्पक्षदोषोक्तेरसम्भवात्। असत्त्वाङ्गीकारे तु सर्वासत्त्वे तत्पक्षदोषस्य कथं सत्त्वम्। न द्वितीयः। परस्परविरोधे प्रकारान्तरस्थितेरभावात् इति चेन्न। अद्वितीयसंवेदनातिरिक्तं सर्वमनिर्वचनीयमित्युक्त्या निर्वचनीयत्वस्याप्यनिर्वचनीयत्वोक्त्या दोषात्। पररीत्या तु निर्वचनीयत्वानिर्वचनीयत्वयोर्वक्ष्यमाणरीत्या निर्वचनीयत्वप्रतिषेधे ऽनिर्वचनीयत्वपर्यवसानमुच्यते। ननु पररीत्या तत्पर्यवसानेऽपि त्वया स्वपक्षे निश्चयाय तत्र प्रमाण वाच्यमिति वाच्य निर्वचनार्हत्वात्यन्ताभावरूपत्वस्य तस्यावस्तुतया साध्याभावेन तत्र प्रमाणोपन्यासानवसरात्। किन्तु वय सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनाविनिवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे भारमवलम्ब्य चरितार्थाः सुखमास्महे। कथ तर्हि वादे प्रवृत्तिरिति चेत्। स्वत्परिकल्पितसाधकदूषकयुक्तिभिर्मया ऽसतीत्वेन निर्णीताभिरेव कथाप्रवृत्तिसम्भवात्। भवत्कल्पितदूषणव्यवस्थयैव तासां व्याघातान्ममासतीत्वमभिमतम्। एवञ्च परसिद्धैरेव दूषणैः परव्यवस्थाभङ्गाय तस्य कथारम्भः पराजयाभावश्च। स्वकल्पितजात्युत्तरादिदूषणोद्भावनेन हि परेण निर्वचनीयवादी पराजेतव्यस्तदेव खण्डयतः पराजयकारणाभावात्। नच तत्साधनादिव्यवस्थाया असत्त्वाभिमाने तदुपन्यास एव कथमिति वाच्यम्। सत्त्वासत्त्वौदासीन्येन प्रसिद्ध्युपारूढतामात्रेणोपन्यास इत्यसकृदुक्तत्वात्। यदि तु नैयायिकादिप्रयुक्तहेतोस्तद्रीत्यैवासिद्ध्यादिदूषणे ऽभिहिते 'दूषणमेव मत्र' इत्यसौ ब्रूते तदा स्वपक्ष-

बाधकारित्वाज्ञात्युत्तरवादी स्यात् । नचानिर्वचनीयवादिना स्वोक्तदूषणासमर्थने तस्य पराजयः, समर्थनेन च खण्डनयुक्त्यैव परः खण्डयिष्यतीति वाच्यम् । अस्माभिर्निर्वाह्यमाणस्य त्वया बाधे ऽस्माकमेव जयात् । खण्डनयुक्तयो बाधिका निर्वाह्यपक्षश्च बाध्य इत्यस्यैवास्मत्पक्षत्वात् । तस्मात्त्वया निर्वाह्यमस्माभि खण्डनीयमितीदृश्यां कथायामेव त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथा । परस्तु परकल्पितसाधकदूषणादि परीत्यैव दूषयित्वा ब्रह्मभूत सन् कृतकृत्यतां मन्यते नान्यत्किञ्चित्पश्यति । तदेव भेदप्रपञ्चो ऽनिर्वचनीय. ब्रह्मैव तु परमार्थसद् अद्वितीयमिति स्थितम् ।

नन्वद्वैते किं प्रमाणमिति चेत् न । विशिष्टप्रश्नस्य विशेषणानभ्युपगमे ऽनुपपत्त्या तथाऽपि तत्संमत्या ऽस्य प्रश्नस्यैवासम्भवात् । व्यवहारत्वेन व्यवहारस्य स्वजनकज्ञानविषये एव प्रवृत्त्या प्रश्नविषयस्य प्रतीतत्वावश्यकत्वात् । अन्यथाऽन्यज्ज्ञानात्यन्यद्वदतीति व्यवहारविषयस्याव्यवस्थितत्वं स्यात् । व्यवहारीयविषयनियमे प्रयोजकान्तरासम्भवात् । नचाद्वैतं प्रश्नविषयः प्रतीतमेव प्रमयेति वाच्यम् । तस्याः प्रतीतेः प्रमात्वे यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाण त्वयाऽपि प्रतिपन्नमेवेति प्रश्नायोगात् । नच सामान्यतः सिद्धावपि विशेषतः प्रश्नः । निर्विशेषसामान्याभावेन सामान्यप्रतीतेर्विशेषबोधं विना पर्यवसानाभावेन सामान्यसिद्धैव विशेषस्यापि सिद्धा प्रश्नायोगतादवस्थ्यात् । त्वत्परिगणितेषु प्रमाणेषु यत्रैव दोषाभावप्रमा तत्रैव विशेषसामान्यस्य विश्रान्तेः । यदि सर्वेष्वेव तेषु दोषप्रमा, नच तदा प्रकारान्तरमाक्षिप्यापि सा विशेषे पर्यवस्येत् ।

नन्वस्ति को ऽपि प्रमाणविशेष इति सामान्यज्ञानमेव तत्र, का ऽसौ प्रमाणव्यक्ति प्रत्यक्षरूपा ऽनुमानरूपा वेति प्रश्नार्थ इति चेन्न । यथा पर्वतो ऽग्निमानित्युक्ते काऽसावग्निव्यक्तिः काष्ठजा करीषजा वेति निर्देष्टुमशक्यत्वे ऽपि न प्रमेयासिद्धिस्तथाऽत्रापि प्रमाणव्यक्त्यनभिधाने हान्यभावात् । अस्त्यद्वैत वस्तु, प्रमाणविशेषो ऽपि तत्रास्तीत्यस्य परेणाप्यङ्गीकारात् ।

नच सा मदीया प्रतीतिरप्रमैवेति वाच्यम् । अप्रमाविषये

शुक्तिरूप्यसमे प्रमाणप्रश्नानौचित्यात् । तवाद्वैतज्ञानस्य करणं मया प्रमाणरूपं वाच्यमित्यत्र ममानियमाच्च । नच त्वया स्वप्रमाकरण प्रमाण वक्तव्यमिति वाच्यम् । वह्निमत्यपि पर्वते वाष्प धूमत्वेन प्रतीत्य ततो वह्निमनुमाय तत्र वह्निं लब्धवानिति साऽनुमिति प्रमेति बाष्पविषयधूमज्ञानस्य प्रमाणत्वाभावे ऽप्यक्षतेः। किञ्च श्रुतिरेवाद्वैते प्रमाणम् । सा च "एकमेवाद्वितीयम् । नेह नानाऽस्ति किञ्चन"इत्यादिका ।

नच श्रुतेर्न प्रामाण्यम् । तत् किं शब्दस्यावाचकत्वाद्, अनाप्तप्रतीतत्वाद्वा । नाद्यः । व्यवहारोच्छेदापत्ते. । नान्त्यः । पुरुषधौरेयपरिगृहीते आप्तवाक्यवत् पुरुषार्थानुबन्धाबाधितवस्तुबोधके वेदे तत्प्रणीतत्वशङ्काया अप्यभावात् । तद्यथाऽद्वैतबोधात्प्राक् खण्डनयुक्त्याघातासहिष्णोरपि प्रत्यक्षादे प्रामाण्य परेनेष्टम् तथा वेदप्रामाण्यमप्येष्टव्यम् । किञ्च यथा कार्येऽर्थेऽ बाधितप्रतीतिजनकतया वेदस्य प्रामाण्य प्राभाकरो मनुते, तथा सिद्धार्थबोधके ऽप्यभ्युपैतु तेनैव सिद्धार्थानां श्रुतीनां ज्ञानविधिपरत्व युक्तम् । स्वार्थत्यागेनान्यपरत्वे मानाभावात् । तत्त्वेऽपि वा पदसमन्वयबलेन प्रतीयमानमबाधितमर्थमादायैवान्यपरत्वकल्पनाया औचित्यम् । धियां स्वत. प्रामाण्यस्य बाधैकापोद्यत्वात् । नचाद्वैतश्रुतीनां न यथाश्रुते ऽर्थे प्रामाण्यं घट. पटाद्भिन्न इत्यादिप्रत्यक्षादिबाधादिति चेन्न । कतिपयपटभेदग्राहित्वेऽपि तेषा सर्वाद्वैतबाधकश्रुतिबाधकत्वासम्भवात् । सकलव्यक्तिभेदग्राहिप्रत्यक्षस्यासप्रतिपन्नत्वात् । सत्त्वे वा सार्वज्ञ्यापत्ति. । तथा सति मच्चितस्थमपि भवान् जानीयात् । तस्माद् यत्किञ्चिद्विषये भेदग्रहसत्त्वे ऽपि तस्य स्वविषयादन्यत्र प्रवर्त्तमानाद्वैतश्रुतिबाधकत्वासम्भवः । प्रमया स्वविषयमात्रे विपरीतविषयज्ञानबाधात् । अन्यथा अग्नीषोमीयपश्वालभनश्रुत्या तत्प्रमया वा सर्वभूताहिंसाश्रुतेः सर्वथा बाधोत्पत्तिप्रसङ्गात् । नचैवमपि निरकुश सर्वाद्वैत न सिध्यति इति वाच्यम् । बाधकस्य प्रत्यक्षादेर्बाध्याया अद्वैतश्रुतिजप्रतीतेश्चैक्यबोधने बाधकाभावेन तयोरैक्ये तत्प्रत्यक्षस्य स्वबाधकत्वायोगात् । नचैव मिथ्याभेदविषयप्रत्यक्षादेर्बाध्यत्वेन तदभिन्नायाः श्रौतबुद्धेर्बाध्यत्वमपि स्यात् । इष्टापत्तेः । बुद्धेर्बाध्यत्वेऽपि तद्विषयद्वैतस्य बाध्यत्वेनाक्षतेः । किञ्च भेदबुद्धि. स्वविषयत.स्वस्य भेद न

बोधयतीति तयोरद्वैतश्रुत्या ऐक्यबोधने बाधाभावेन तदभिन्नाभिन्नस्य तदभिन्नत्वेन घटपटभेदानामप्यैक्यसिद्धौ विषयबाधेन भेदबुद्धेः श्रुतिबाधकत्वायोगात् ।

किञ्च तद्बुद्धौ ' स्वात्मना सह तस्यास्तद्विषयस्य वा भेदाग्रहेण तेष्वात्मैक्यबोधने बाधकाभावेनोक्तरीत्यैव भेदबुद्धेर्विषयबाध' । घटपटौ भिन्नावित्येव सा बुद्धिः, नत्वह घटात्पटाच्च भिन्ना, मत्तो वा तौ भिन्नाविति । नच प्राभाकरादिनये बुद्धेः स्वप्रकाशत्वात्स्वभेदग्राहकत्वमिति वाच्यम् । प्रकाशस्वरूपे व्यवहारप्रवर्त्तिकाया अपि स्वप्रकाशताया यतो यतः प्रकाशो भिद्यते ततस्ततः प्रकाशस्य भेदे ऽपि व्याप्तौ सर्ववस्त्ववच्छिन्नभेदस्य प्रकाशस्वरूपत्वे सर्व वस्तु प्रकाशस्वरूपे निक्षिपन्त्या प्रकाशाद्वैत एव पर्यवसानात् ।

-नच बुद्धि स्वात्मान स्वविषय च गृह्णातीत्युभयस्वरूपग्रहणमेव तयोर्भेदग्रह इति वाच्यम । पुरोवर्तिनि इद रजतमिति पुरोवर्त्यात्मनो रजतात्मन प्रकाशे भेदग्रहापत्तेः । नच पुरोवर्त्तिनः शुक्तित्वादिधर्मविशिष्ट स्वरूपमेव रजताद्भेदस्वरूपमिति तदग्रहाद् भ्रान्त्युपपत्तिरिति वाच्यम् । बुद्धेरपि प्रमितत्वादिधर्मविशिष्ट स्वरूपमेव रजताद्भेदस्वरूपमिति घटपटौ भिन्नाविति धियः स्वविषयात्स्वस्य भेदप्रकाशत्वाभावात् । धर्मग्रहणे मनःसनिकर्षाद्यपेक्षाया धिय प्राक् तदसम्भवेन तस्याः स्वरूपलाभकाले भेदग्रहासम्भव. । नच स्वरूपप्रकाशने यथा बुद्धेः सनिकर्षाद्यनपेक्षा तथा भेदग्रहोपयोगिस्वधर्मप्रकाशने ऽपि तदनपेक्षेति वाच्यम् । ग्रहणत्वस्मृतित्वादीनामपि तदनपक्षैयैव ग्रहणापत्तौ शुक्तिरजतादिज्ञानानां ग्रहणत्वस्मरणत्वयोर्वादिविप्रतिपत्त्यनुपपत्तेः ।

एव च घटपटौ भिन्नाविति धीः स्वप्रकाशत्वेऽपि स्वविषयात्स्वस्य भेद न बोधयतीति तस्या बुद्धेः श्रुत्या घटपटात्मत्वव्यवस्थितौ घटपटयोर्भेदे तस्याः प्रमाणत्वे स्वस्मादेव स्वस्य भेदे प्रमाणत्वानुपपत्त्या तस्या बुद्धेर्घटपटभेदांशे प्रमात्वाभावलाभेन घटपटयोरप्यभेद बोधयन्ती श्रुतिर्न तेन प्रत्यक्षेण बाधितु शक्या यतः सा प्रत्यक्षविषयातिरिक्तस्थले विरोधिराहित्येनासकुचत् यत्स्वत.प्रामाण्यन्तद्बललब्ध यत्तस्यास्तस्या बुद्धेरथैक्य तद-

न्यथानुपपत्तिरूपसहायसम्पदाऽन्येन जेतुमशक्या । अत सर्वाद्वैत-प्रमापकत्व तस्या द्रष्टव्यम् ।

नच प्रत्यक्षादेर्भेदे प्रमात्वानुपपत्त्या श्रुतेरेव बाध्यत्वमस्त्विति वाच्यम् । अद्वैतश्रुत्या सन्दिह्यमानतया भेदे प्रमात्वस्यैवासिद्धेः । भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाऽप्युपपत्तेः । नच सद्रूपेण विश्वस्यैकाद्वैतश्रुतिर्घटते घटपटरूपण भेदात्प्रत्यक्षादिप्रामाण्य चेति वाच्यम् । श्रुतौ "एकमेव" इत्येवकारेणैकान्तिकैक्यबोधनात् । "नेह नाना"इति निषेधाच्च ।

नन्वेव तव मत प्रत्यक्षविषय परिहृत्य प्रथममभेद बोधयति ततः प्रत्यक्षविषयमपीति । तदयुक्तम् । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति चेन्न । श्रुतितो द्रागेव जाताया सर्वविषयाद्वैतबुद्धौ तद्विषये ऽस्मद्बुद्धय एवाविधविचारसोपानपरम्परामारोहन्त्यो नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण परिनिष्ठिता भवन्तीत्युच्यमानत्वात् ।

ननु यद्यपि घटपटौ भिन्नाविति प्रत्यक्ष न स्वात्मना घटपटयोर्भेद विषयीकरोति तथाऽपि बुद्ध्यन्तरेण तद्भेदग्रहादद्वैतश्रुतेर्बाध एवेति चेन्न । द्वितीयबुद्धे स्वविषयेण ज्ञानज्ञेयभेदेन सहाभेद बोधयन्त्याः श्रुतेर्विरोधाभावात्प्रामाण्यमवलम्ब्य लब्धप्रतिष्ठाया सर्वाभेदे पर्यवसानात् । एव च यत्रैव गत्वा विषयान्तरसचारोच्छेदभयादनवस्थाभयाच्च भेदबुद्धिपरम्पराविच्छेदोऽङ्गीकार्यस्तस्यामेव बुद्धौ पद दत्वाऽद्वैतश्रुतिः सर्व विषयविषयिप्रवाहमभेदे स्थापयन्ती न केनापि बाधितु शक्या । तस्मात्—

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥

नचैकस्य बुद्धिधारानिवृत्तावपि अन्यस्य भेदबुद्धिस्तत्रास्तीति वाच्यम् । एकपुरुषीयान्त्या बुद्धि स्वविषयाद्भिन्नतयाऽन्येन प्रतीयते इति तव प्रत्यक्षासम्भवात् । परबुद्धेरप्रत्यक्षत्वात् । नाप्यनुमानादि । वक्तुशक्यत्वात् । तदीयज्ञानस्य तद्विषयभेद प्रमाणान्तरापेक्षायामनवस्थापत्तेश्च । नच कतिपयपरम्परया बाधिताऽद्वैतश्रुतिरन्त्यबुद्धेरपि भेदबुद्धित्वात्तयाऽपि बाध्येति वाच्यम् । या बुद्धिः सा स्वविषयाद्भिन्नेति बुद्धित्वस्वविषयभेदरूपौ व्याप्यव्यापकावालम्ब्योक्तव्याप्तिग्रह-

रूपाया समान्येन व्याप्यव्यापकसम्बन्धावलम्बिन्या श्रुतिबाधकत्वे यो धूमवान्सोऽग्निमानिति व्याप्तिबुद्धिबलादेव पर्वतेऽप्यग्निसिद्धावनुमित्युच्छेदापत्तेः । अन्त्यबुद्धिः स्वविषयाद्भिन्नेत्यनुमित्यङ्गीकारेऽपि तस्या आत्मन्यप्रवृत्त्या तदंशेऽद्वैतश्रुतेर्बाधायोगात् । नच सर्वा बुद्धयः स्वविषयेभ्यो भिन्ना बुद्धित्वात् घटपटबुद्धिवद् इति सामान्याकारेणात्मानमपि धर्मीकृत्य स्वविषयाद्भेद साधयिष्यत्यनुमेति वाच्यम् । बुद्धीनां विषयेभ्यो भेदानुमितावपि बुद्धे सकाशाद्विषयस्याभेदबोधने श्रुतेर्बाधकाभावात् । एव च विषयस्य बुद्ध्यात्मत्वे श्रुत्याऽऽवेदिते त्वदुक्तानुमानस्यैवासम्भव ।

नच विषयविषयिणौ परस्परभिन्नौ विषयविषयित्वात्सम्प्रतिपन्नवदित्यनुमिति । आत्मान जानामीत्यादावभेदे ऽपि विषयविषयित्वदर्शनात् ।

किञ्च सर्वासां बुद्धीनां स्वस्वविषयाद्भेदानुमितावपि अन्यबुद्ध्यन्यबुद्धिविषययोरभेदबोधने बाधहीनाया श्रुतेः सर्वाद्वैते एव पर्यवसानात् । घटपटबुद्ध्यो पटघटबुध्योश्चाभेदबोधने घटे पटबुद्धिमात्र स्थापयति । बुद्ध्योश्च मिथो विषयविषयिभावाभावात् तयोरभेद बोधयन्ती सर्वाभेदे पर्यवस्यति । नच सर्वबुद्धिविषयात्सर्वा बुद्धिर्भिन्नेत्यनुमातव्यम् । बुद्ध्यन्तरविषयादात्मनो ऽपि भेदापत्ते । नच सर्वा बुद्धि स्वव्यतिरिक्ताद् बुध्यन्तरविषयाद्भिन्नेत्यनुमीयते। सर्वाभेदमिच्छतामद्वैतिनां क्वचिदपि तदसिद्ध्या विशेषणाप्रसिद्धे । नच सर्वं भिन्नमिति वाक्येन विना बाधं स्वतःप्रमाणेन विरुद्धाऽद्वैतश्रुतिरिति वाच्यम् । यत कुतश्चिद्भेदोपगमे मिथ्यात सत्यभेदोपगमेन सिद्धसाधनात् । सर्वस्माच्चदुपगमे स्वतो ऽप्यापत्ति ।

किञ्च सर्व भिन्नमिति वाक्यमनुमानमूल प्रत्यक्षमूल वा । नाद्यः । सर्वस्य पक्षत्वे हेतुदृष्टान्तयोरभावेनानुमानासम्भवात् । नान्त्य । सार्वज्ञ्यप्रसङ्गात् । यदि सर्वमध्ये किञ्चित् त्यज्यते तर्हि तेनैवाभेदबोधने श्रुतिर्लब्धपदा । अन्ततो हेतुसाध्ययोरभेदबोधने तयोस्तद् न स्याद् अभेदबोधने च लब्धपदा सा । न च वेद्यवेदकभावानुपपत्त्या घटतज्ज्ञानयोर्भेदासिद्धि । तस्या अनुपपत्तेर्ज्ञानापेक्षणेन तज्ज्ञानत-

द्विषयर्योर्भेदस्य तथा ऽनवगाहनेन तत्रैवाभेदबोधने श्रुते सावकाशत्वात्। तयोर्वैद्यवेदकभावस्येव घटतज्ज्ञानयोरपि भेदाभावे तत्सिद्धिः, अन्यथा ऽनवस्था। नचात्र वाक्यार्थबोधाभावः। अस्यायमर्थो भवत्यस्य नेति एवरूपौ अन्वयव्यतिरेकौ संस्कारारूढौ दृढौ यस्य पुंसस्तस्य तदन्वयव्यतिरेकाभ्यामन्वयबोधप्रतिबन्धासम्भवात्। लोकगृहीतशक्तिकपदानां संसर्गबोधजनने सामर्थ्याभावात्। किञ्च यत्र विशेष्यविशेषणभावादिरूपान्वयस्य स्मृत्युपारूढो भावस्तत्रापि 'शशशृङ्गम्' 'अङ्गुल्यग्रे करिशतम्' इत्यादौ बोधस्तर्हि किं वक्तव्य यत्र तत्सत्ता तत्र बोधो जायते इति।

तदुक्तम्—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि। इति।

इयांस्तु विशेषः—तत्र बाधात्तज्ज्ञानमप्रमा। अत्र तु शब्दस्य स्वतःप्रामाण्येन निश्चला प्रमा उत्पद्यते विषयस्याबाधादिति।

ननु शशविषाणादिभ्यो न संसर्गज्ञानं किन्त्वसंसर्गाग्रहमात्रमिति गुरुनये "एकमेवाद्वितीयम्" इत्यादावसंसर्गाग्रहमात्रमिति वाच्यम्। तन्नयेऽपि अबाधिते 'शुक्तौ घट' इत्यादिवाक्ये ऽत्यन्तमसतो ऽसंसर्गस्याग्रहः संसर्गलग्नकमिति। नच भिन्नार्थसंसर्गबोधकत्वं श्रुतेरौचित्य सर्वत्र दृष्टत्वात्। इय चाद्वैतश्रुतिरभिन्नवस्तुबोधकत्वेन तद्विना। विमता श्रुतिर्नाद्वैते प्रमाण श्रुतित्वात्कर्मश्रुतिवदित्यनुमानेन बाध्यते इति वाच्यम्। अपौरुषेयत्वेन भ्रममूलत्वशङ्काराहित्येन श्रुतेर्बलवत्त्वाद्, अनुमाने च तच्छङ्कासत्त्वेन पक्षे एव व्यभिचारशङ्कासम्भवात्।

ननु "अन्धो मणिमविन्दद्" इति श्रुतेरयोग्यार्थत्वाद्यथा स्वार्थे तात्पर्यं नेष्यते तथाऽद्वयश्रुतेरपीति वाच्यम्। तेन वाक्येनायोग्यार्थत्वमूलभूतविपरीतप्रमाणानिरासेनानौचित्यानपगमेन तदस्तु इह तु व्याप्तेर्निरूपयितुमशक्यत्वेन स्वार्थतात्पर्यकत्वे बाधकाभावात्। नहि सर्वाद्वयमते व्याप्तिर्निरूपयितुं शक्या भेददर्शनभ्रमश्चाद्वैतश्रुतिजबोधेन निवर्त्स्यते इति दिक्।

नच यद्यत्त्वयोदाह्रियते ऽस्माद्विषयादस्य संवेदनस्य भेदो न गृहीतः साऽन्तिमबुद्धिस्तस्या अद्वैतश्रुतिजबुद्धेर्भेदग्रहस्य तवासम्भवात्।

तथा हि अन्तिमबुद्ध्यद्वैतवाक्यजबुद्ध्योर्युगपदवस्थानाभावेन तद्भेदग्राहिप्रत्यक्षासम्भवः वर्त्तमाननिष्ठभेदस्य प्रत्यक्षग्राह्यत्वा-

त् । नच प्रत्यक्षासम्भवे ऽपि केनचिद्धेतुना कयाऽप्यनुपपत्त्या तज्ज्ञानमिति वाच्यम् । अद्वैतवादिनः साध्याविशिष्टत्वात् हेतोर्भेदासिद्ध्या प्रमापकत्वासम्भवात् । अनुपपत्तेरपि येन विना सा तदभिन्नत्वेन प्रमापकत्वासम्भवात् । नच ताभ्यां मया स भेदो ज्ञायते नतु परं प्रति प्रयुज्यते इति नासिद्ध्यादीति वाच्यम् । ज्ञात्वा मौनावलम्बने तवाप्रतिभादोषापत्तेः । नच स्वयं प्रमितो भेदः परं प्रति केवलं वचसा बोध्यते इति वाच्यम् । त्वद्वचसि परस्याप्रत्ययात् ।

कस्तर्हि कथकवचनस्योपयोग इति चेत् । शृणु । विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तत्रार्थे स्वतस्तदर्थप्रतिपत्त्युपपादनपर्यवसायि, नचाद्वैतिनं प्रति तथा, दोषजिज्ञासायां दोषानुपलम्भेन प्रमाणमिति कर्तुं शक्यम् । तस्य प्रत्ययान्तरासिद्धेः । नच मद्वचनात्सन्देहे श्रुतेरप्रामाण्यम् । स्थाणुनिश्चयवत. 'पुरुषं पश्यामि' इति भ्रान्तवचनात्सन्देहाभाववत् सर्वत्राभेदनिश्चयवतः परवचनेन सन्देहस्यैवानुदयात् ।

तस्माद्—

एकं ब्रह्मास्त्रमादाय नान्यं गणयत. क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥

नच भेदानङ्गीकारे घटः पटाद्भिन्न इति व्यवहारव्याघातः । अविद्याकल्पितभेदस्यानिषेधात् वास्तवभेदस्यैव श्रुत्या निषेधात् । किञ्चापादकव्यवहारस्यापाद्यव्याघातस्य भेदासिद्ध्याऽनिष्टापादनस्य स्वरूपालाभात् ।

तस्मात्—

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि ।
असिद्धभेदाद् व्याघात एतेदापादकात्कुत ॥

किं च य. पदार्थानां प्रत्यक्षेण भेद. स किं स्वरूपात्मको ऽन्योन्याभावो वा वैधर्म्यं वा अन्य एव वा ।

नाद्यः । यद् घटपटयोः स्वरूपं परस्परस्माद्भेदस्तत्र परस्परप्रतियोगिरूपमन्तर्भवतीति घटपटयोः परस्परस्वरूपे प्रविष्टत्वात् घटपटयोरैक्यस्यैव प्रत्यक्षेण ग्रहणमापन्नम् । न च भेदप्रतीतेरुच्छेदः । आविद्यकभेदविषयत्वात् । भेदविशेषणस्य घटपटा-

(१५) शिवस्तोत्रावली । उत्पलदवविरचिता । श्रीक्षमराजविरचितवृत्तिसमेता (वेदान्त) २
(१६) मीमासाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । (मीमासा) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमासादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमासासारसग्रहश्च सम्पूर्ण (मीमासा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३
(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । (वेदान्त) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता१
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८
(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २
(२५) क्रोडपत्रसग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम्२
(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १
(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च १
(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—सस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११
(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६
(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठि सकलित ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २
(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २
(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमासाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २
(३७) वेदान्तदर्शनम् । परमहसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । ७
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो - प्रकाश गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४
(४१) वेदान्तसिद्धान्तसग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३
(४२) स्वानुभवादर्श । श्रीमत्परमहसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ९

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसवलिता । ९

(४७) व्याकरणसिद्धान्तसुधानिधी ।
पर्वतीय विश्वेश्वरसूरिविरचित । ६

(४८) वीरमित्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसङ्ग्रहाख्यया टीकया समलङ्कृत । ८

(५०) वीरमित्रोदय । राजनीतिप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ९

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय प० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वक टिप्पण्या परिष्कृत १

(५२) प्रशस्तपादभाष्यटीकासङ्ग्रह । तत्र कणादरहस्यम् । श्रीशङ्करमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृत विवरणोपेत २

पत्रादिप्रेषणस्थानम्  हरिदासगुप्तः, चौखम्बा बनारस सिटी

October 1917.

THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 238.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।

श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-

कुञ्जिकाकलाह्वटीकाद्वयसंवलिता ।

गुरुवरपण्डितश्रीनित्यानन्दपर्वतीयानां शासनमवलम्बमानेन

शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा

सशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU-MANJUSHÂ

BY

MAHAMAHOPADHYAYA ŚRÎ NAGEŚA BHATTA

With Two Commentaries, i. e Kunjikâ of Durbalâchârya and Kalâ of Bâlam Bhatta.

Edited by Pandit Parvatiya Nityananda Panta with the assistance of Sitarama Sastri Shende.

FASCICULUS X १०

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES

AGENTS —

OTTO HARRASSOWITZ, LEIPZIG

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY

PROBSTHAIN & CO, BOOKSELLERS, LONDON

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्री ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—३८

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणकाव्यशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिताः अन्ये च शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः सप्तानकाः ८ अन्यैर्देयं प्रतिस्तबकम्

५ प्रापणव्ययः पृथग् नास्ति ।

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) सत्कारररत्नमाला । गोपीनाथभट्टकृत खण्डे २

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहित तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाष्यप्रकाशसहित सम्पूर्णम् (वेदान्त) २

(५) करणप्रकाश । श्रीब्रह्मदेवविरचित १

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपाद (मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्त) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्रीमद्यामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्त १

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीत । आचार्यचित्सुखमुनिविरचितव्याख्योपेत (वेदान्त) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचित । सम्पूर्ण (न्याय) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा) १६

ग्मना भासं विना घटविशिष्टभेदस्य 'नागृहीतविशेषणा विशेषणविशिष्टबुद्धिः' इति न्यायेन घटस्वरूपत्वेन भावानुपपत्त्या सोऽपिशाच्यः । एवं च तत्रैव प्रतीतेः प्रमात्व भेदांशे त्वप्रमात्वम् उपजीव्यविरोधात् ।

किञ्च घटविशिष्टभेदस्य पटस्वरूपत्वे यदि तयोर्भेदस्तर्हि घटादेव घटस्य भेद इति घटस्वरूपस्यैवासिद्धि । नच प्रतियोगिनमुपलक्षणमाश्रित्य भेदमात्र पटस्वरूप तच्च घटादिना प्रतियोगिना निरूप्यते इति वाच्यम् । निष्प्रतियोगिकभेदस्य प्रमाणागोचरत्वेन शुद्धस्य तत्स्वरूपत्वायोगात् ।

किञ्च स्वरूपत्वे भेदस्य प्रतियोगिनिरूप्यत्व न स्यात् । नीलादिस्वरूपवत् । एव चान्यसाकाङ्क्षत्वे पटस्य स्वरूपमन्येन निरूप्यमाण भेद इति व्याहतम् । तदपेक्षानपेक्षालक्षणविरुद्धधर्मयोरेकत्रासम्भवात् । किञ्च पट प्रति प्रतियोगित्व घटस्य, तस्य घटस्वरूपत्वे तत्रैव पटमपि प्रक्षिपन्ती सा बुद्धिरद्वैते एव पर्यवस्यति । केवलं प्रतियोगित्वं घटस्वरूपमिति तु न युक्तम् । नहि इतरानपेक्षप्रतियोगित्वस्य प्रामाण्यमस्ति ।

किञ्च तस्य धर्मस्य धर्मिणा सहासबन्धे ऽतिप्रसङ्गः । सम्बन्धस्वीकारे सम्बन्धानन्त्येनानवस्था । तद्द्वया सबन्धस्य स्वरूपत्वोपगमे द्वयोरपि सबन्धस्वरूपे प्रवेशोऽभेद एव स्यात् ।

एवं घटस्य घटत्वं धर्म इत्यादावपि संबद्धत्वासबद्धत्वाभ्यां दोषो द्रष्टव्य इति धर्मधर्मिणोरभेदो द्रष्टव्यः । भेदप्रतीतिस्त्वाविद्यकीत्युक्तमेव ।

तस्मात्पटादिविशिष्ट प्रतियोगित्वं घटस्य स्वरूपमेवेति तत्प्रत्यक्षमद्वैते एव प्रमाणम् ।

नचान्यानपेक्षप्रतीतौ 'घटादिकम्' इत्येव प्रतीति, पटादिना निरूपणे तु तस्यैव 'भेदः' इति प्रतीतिरिति वाच्यम् । 'घटः' इति प्रतीत्यपेक्षया भेदप्रतीतेर्विलक्षणत्वेन घटस्वरूपमादाय तत्प्रतीतेर्निरूपयितुमशक्यत्वात् । घटस्य स्वरूपानिरूपणे पटप्रतीत्यनपेक्षणाच्च ।

नच तर्हि अन्योन्याभावरूपो ऽतिरिक्तो भेदो ऽस्तु तस्या विषय इति वाच्यम् । प्रतियोग्यनालिङ्गिताभावबुद्धेरभावेन प्रति-

योग्यपि भेदशरीरे ऽन्तर्भाव्यस्तदा तद्विशिष्टस्वाभावस्य घटस्वरूपत्वे घटपटयोरैक्यापत्तेः । धर्मत्वे चान्योन्यधर्मत्वप्रसङ्गो ऽन्योन्यस्य धर्मस्य सबन्धत्वविकल्पदोषप्रसङ्गश्च । एव प्रतियोगित्वांशेऽपि तद्दोषप्रसङ्गो बोध्यः ।

किञ्च घटपटादेस्तादात्म्यमन्योन्याभावप्रतियोगि तद्यदि सर्वथा तेषां नेष्यते तदा तद्विशिष्टस्य तदुपलक्षितस्य वा प्रमाणेन ज्ञानासम्भव । विशिष्टज्ञानस्य विशेषणोपलक्षणविषयत्वनियमात् । अत्यन्तमसाति तु शशविषाणभेदवत् कथ तव तत्प्रामाण्य येन श्रुतिर्बाध्येत ।

नच पटादिप्रतियोगिक एवाऽसौ घटाद्याश्रित इति नासत्प्रतियोगिकता तस्येति वाच्यम् । एव हि ससर्गाभावान्योन्याभावयोर्विशेषानापत्तेः । एवं च ससर्गाभावादन्योन्याभावस्यानतिरेके ऽन्योन्यात्मभूतं विश्वमद्वैत स्यादिति ससर्गाभावोऽपि न सिध्येत् ।

नच घटससर्गाभावः पटाश्रयो घटान्योन्याभावस्तु पट एवेति विशेष । एव हि घटाभावस्य पटः ससर्गीति घटससर्गाभावस्य पटे समर्थनवद् घटान्योन्याभावः पटात्मक इति घटतादात्म्याभावस्यापि पटरूपत्वसमर्थनापत्तेः । नचैतत्तवेष्टं तादात्म्याभावस्य त्वया पटवृत्तितास्वीकारात् ।

किञ्चैवं पटस्य घटाभावात्मत्वे घटस्यापि पटाभावात्मकतया घटपटयोरसिद्ध्यापत्तिः, तद्भेदासिद्ध्यापत्तिश्च । तस्मात्तादात्म्यं ससर्ग च प्रतियोगिकोटावन्तर्भाव्यान्योन्याभावससर्गाभावयोर्विशेषो वाच्य । तथा चात्यन्तासत्प्रतियोगिकता दुर्वारा । नच धर्मिणो धर्मातरसंसर्गनिषेधः ससर्गाभावः, घटपटयोरितरेतरधर्मनिषेधो ऽन्योन्याभाव इति नात्यन्तमसत्प्रतियोगिकत्वमिति वाच्यम् । एव हि घटत्वपटत्वयोर्निषेध्यधर्माभावेन तयोरन्योन्याभावाभावादैक्यप्रसङ्गे घटपटयोर्घटत्वपटत्वनिषेधात्प्रमाण द्वयमपि घटत्वपटत्वशून्यमेवावेदयेत् । एव च धर्मिप्रतियोगिविभागाभावादभावप्रमोच्छेदापत्तिरिति दिक् ।

एतेन वैधर्म्य भेद इत्यप्यपास्तम् । वैधर्म्ये घटत्वादौ वैधर्म्यान्तरस्य तज्ज्ञानस्य वाऽभ्युपगमे ऽनवस्थापत्ते । अननुभवाच्च । वैधर्म्ये

किञ्चानन्तासु व्यक्तिषु एकस्य स्वरूपपदस्य सङ्केतग्रहणानुपपत्तिः । किञ्च स्वरूपस्यैव भेदत्वे धर्मिणि दृष्टे स्वरूपं दृष्टमिति सन्देहानुपपत्तिः ।

नचाभिन्ने एव भेदो निविशते इति वाच्यम् । एकस्या अपि घटादिव्यक्तेस्तेन स्वाभेदे सति उदासीनाभावापत्तौ किमेकं नाना वा स्यादिति शून्यवादापत्तेः ।

एतेन भेदो नाम स्वरूपान्योन्याभावे वैधर्म्यानात्मको धर्मान्तर पृथक्त्वापरनामकमित्यप्यपास्तम् । तस्यापि स्वाश्रयभिन्ने ऽभिन्ने वेत्याद्युक्तदोषानिस्तारात् ।

किञ्च स्वाश्रयेण सह भेदस्य भेदानङ्गीकारे भेदस्य वस्त्वभेदेऽद्वैतापत्ति, स एव भेदः स्वस्मिन्निविशते चेदात्माश्रयः । अन्यस्तत्र भेदश्चेदन्योन्याश्रय', द्वितीयोऽपि भेदस्तृतीयापेक्षश्चेच्चक्रकम् । एव परम्परायामत ऊर्ध्वमनवस्था । तत्परिहाराय भेदभेदाश्रययोः क्वचिदभेदाङ्गीकारे तदैक्यदरिकामूलपर्यन्तमेकतापत्ति. ।

तदद्वैतश्रुतेस्तावद्बाध प्रत्यक्षत. क्षतः ।
नानुमानादिकं कर्त्तु तवापि क्षमते मते ॥

प्रत्यक्षेण भेदासिद्धौ व्याप्तिग्रहणाद्यसम्भवात् । नच शीतोष्णादिधर्माणां सहानवस्थानलक्षणविरोधसिद्ध्यनुपपत्त्या धर्मिभेदावगति. । तिलेभ्य एव तैलम्, पयस एव दधि इति कार्यभेदव्यवस्थानुपपत्त्या कारणभेदावगतिः, बद्धमुक्तव्यवस्थानुपपत्त्या चात्मभेदावगतिरित्यर्थापत्त्या तत्सिद्धिरिति वाच्यम् । सत्यभेदस्य चोक्तप्रकारेणासिद्ध्या कल्पितभेदाक्षेपकत्वेनैव तदुपपत्तेः । भेदकल्पनायाश्चाद्वैताविद्याकार्यत्वेनार्थापत्तीनामद्वैतगमकत्वाच्च ।

तदुक्तम्—

अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥ इति ।

नासीरमग्रगमनम् । द्वैतपक्षस्यासाधु यथा भवति तथा परान् परतरान् धुन्वती कम्पयन्ती अर्थापत्तिरूपपत्तीनां पदातीनां परम्परा सेवामवाद्वैतागमस्यार्जयति करोतीत्यर्थ. ।

नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्तीति स्वोपजीव्याभिर्भेदबुद्धिभिः कथ न बाध्या उपजीव

कस्योपजीव्याद् दुर्बलत्वादिति चेन्न । अविद्याकल्पितभेदस्य तत्रोपजीव्यत्वेन तस्य मिथ्यात्वेन दुर्बलतया तद्बाधकत्वायोगात् । एवं च तेषां पदार्थानां तद्भेदानां चाविद्याकृतसत्त्वमेव व्यवहारोपयोगीति बोधितम् ।"

एतेन द्वितीयाभावे 'एकमेव'इत्येवकारव्यवच्छेद्याभाव' । एवम् "अद्वितीयम्" "नेह नाना"इत्यादिव्यवच्छेद्याभाव इत्यपास्तम् । अविद्याकल्पितस्य सत्यतया व्यवच्छेद्यत्वेनाक्षतेः ।

किञ्च श्रुतिभिरद्वैत पारमार्थिक प्रतिपाद्यते । नच पारमार्थिकबुद्धिरपारमार्थिकबुद्धिबाध्या । अन्यथा शुक्तिरजतबुद्ध्या पारमार्थिकशुक्तिधीबाधापत्तेः ।

ननु 'अग्निरनुष्णः' इति बुद्धेः प्रतियोगिभूतोष्णज्ञानोपजीव्यत्वादुपजीव्येन बाधो दृष्टस्तथाऽत्रापि किं न स्यादिति चेन्न । द्वयोरप्युष्णताऽनुष्णतयोर्मिथ्यात्वात्तत्रोपजीवकत्वस्य दौर्बल्यप्रयोजकत्वेऽपि शुक्तिविषयस्य 'नेद रजतम्' इति ज्ञानस्य प्रसक्तप्रतिषेधतया प्रसञ्जकपूर्वप्रत्ययोपजीवकत्वेऽप्युपजीव्येन बाधस्याभावाद्, उपजीव्येन बाध इत्यस्योत्सर्गिकत्वात् । नच तत्रानुष्णता पारमार्थिक्येवास्तु । तस्या॰ पारमार्थिकत्वसाधने दृष्टान्तादिदृष्टायास्तैः साधने तत्सजातीयमिथ्यात्वस्यैव सिद्धेः । यद्यनुष्णताया लोकसिद्धरूपतां विहायात्यन्ताबाध्यत्वेष्टौ अद्वैतस्यैवेद नामान्तर कृत स्यात्तच्च तवानिष्टम् । अविद्यादशायां च ज्ञानज्ञेयादिभेदस्यावश्याङ्गीकरणीयतयोक्तजगद्बाधयुक्तिग्रासे प्रवशासम्भवात् ।

नन्वद्वैतेऽपि ज्ञान ज्ञाता मुमुक्षुरिति भेदस्याभ्युपगन्तव्यत्वाद्भेदबाधकयुक्तिप्रवेशासम्भवात् तस्या मिथ्यात्व स्याद् इति चेत् । न । द्वैतगोचरस्य बाधस्याद्वैते ऽनवकाशात् । ज्ञानज्ञेयज्ञात्रादिभेदस्य तत्र वस्तुतो ऽनङ्गीकारात् । अत एवापारमार्थिकत्वसम्भावनाऽपि न तत्र । न चोपजीव्यविरोधात् श्रुत्याऽद्वैतप्रमाजननमशक्यम् । काल्पनिकेनाविद्याकृतेन भेदेन पारमार्थिकाद्वैतस्य विरोधाभावात् । पारमार्थिक हि पारमार्थिकेन विरुध्यते । तस्मादविद्याव्यवस्थित भेद तद्बोध चोपजीवन्त्याः श्रुतिजनिताया परमार्थाद्वैतबुद्धेर्नोपजीव्यबाध । एव च यद्यपि श्रुतिजन्या ऽद्वैतबुद्धिरपि

अविद्याविद्यमानैव तथाऽपि तद्विषयस्तावत्परमार्थसदेवाद्वैतम् ।

एतेनाद्वैतबुद्धिर्बाध्या अविद्योपादानत्वाच्छुक्तिरूप्यबुद्धिवदित्यपास्तम् । बुद्धेर्बाध्यत्व विषयबाधेन मानान्तरविरोधेन वा प्रसिद्धम् । अद्वैते च मानान्तरविरोधो नास्तीत्यविद्योपादानकत्वहेतोरप्रयोजकत्वम् ।

श्रुत्यन्तरमपि "द्वितीयाद्वै भय भवति" इति ।

तच्चाद्वैत "ब्रह्मैवेद सर्वम्" "विज्ञानमानन्द ब्रह्म" इति श्रुत्यर्थैकवाक्यतया ज्ञानात्मकब्रह्मरूपतया ऽवतिष्ठते । चित्प्रतिबिम्बस्य श्रौतज्ञानस्य बिम्बाभेदाद् यदद्वैतज्ञानस्य श्रुत्या जन्यत्व तदपि न पारमार्थिक किन्त्वविद्याव्यवस्थितवत् तज्जन्यत्वमिति न पारमार्थिकतदजन्यत्वेन विरोधः ।

ननु यदिद विश्व श्रुत्यैक साध्यते तत्रैकत्वं यदि भेदाभावस्तर्हि तस्य प्रामाणिकत्वादद्वैतहानिः । यद्येकत्वसंख्या तदा गुणगुणिभावात्तद्धानिः । यदि सवेद्यस्य विश्वस्य संवेदनैक्यन्तर्हि विज्ञानवादवत् ग्राह्यस्य ग्राहकाभेदात्तद्धानिरिति चेन्न । एकत्वधर्मस्य निरूपणासहत्वेन बहुश्रुतिमुखप्रतिपन्नत्वेन तदसत्ताया अपि वक्तुमशक्यत्वेनैकत्वविषयकज्ञानस्याविशिष्टरूपेण श्रुतिजन्यवैशिष्ट्येन च निवृत्त्याऽक्षते । तद्धर्मिणस्त्वबाधात् परमार्थतो व्यवस्थितिः । नहि परमार्थशुक्तीरजततया प्रतीयते तदा तत्र बाधाद्रजतत्वे व्यावर्तमाने शुक्तिरपि तदपराधान्निवर्त्तते ।

सेयमद्वैतबुद्धिर्न तर्कशतमवतार्य प्राज्ञैरपनेया "तर्केण नैषा मतिरापनेया" इति श्रुते. ।

तस्माद्—

धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।

क्षेप्तु चिन्तामणि पाणिलब्धमब्धौ यदीच्छथ ॥

"सत्य ब्रह्म" इति निर्दोषा श्रुतिरत्यन्ताबाध्यतामाह सा न हन्तव्येत्यर्थः ।

सेयमद्वैतदृष्टिर्दृष्टार्थाऽपि ।

स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयाद् ॥ इति—

गीतोक्तेः । महतो भयात् संसारात् स्वल्पमपि सकृच्चिन्तनमपि । सा चेश्वरानुग्रहादेवेत्यपि तत्रैव स्पष्टम् ।

तदिदमद्वैत द्वैतवासनाया प्राबल्ये ऽपि उपनिषदर्थे श्रद्धया-ऽत्यल्पकालपकमपि भाव्यमान द्वैतवासनां निरस्य हृदि स्थिर भवत्येवेति श्रीहर्षादयो ऽत्र साक्षिणः । तत्कृते नैषधकाव्यान्तर्गतपरमपुरुषस्तुतिसर्गानुसन्धानेन च व्यक्तं चित्तस्याद्वैतास्वादे प्रवृत्तिः । यद्यपि प्रमाणमेयादिलक्षणानामत्यन्ताभावस्य वक्ष्यमाणत्वेऽपि पराभिमतव्यवहारेण श्रुतिः प्रमाणमद्वैतं प्रमेयमिति, सिद्धान्ते न क्षतिः । अद्वैतदर्शिनं प्रति त्विष्यत एव श्रुतेरप्रामाण्यमद्वैतस्याप्रमेयत्व च । "यत्र वेदा अवेदा "इति श्रुते. । तस्माद्याद्दशप्रमाणप्रमेयादिसत्त्वाभ्युपगमाश्रयासु सर्वास्वेव दर्शनस्थितिषु, प्रमाणादीनामवास्तवत्वप्रतिपादनाय श्रीहर्षमहाशयस्य खण्डनयुक्तिसिंहाः प्रगर्जन्ते । तासां युक्तीनामीश्वरविरचितेय प्रमाणादिव्यवस्था अस्या निरासे तवेश्वरद्रोहः स्यादित्यभिशापमन्तरेण खण्डनमशक्यम् ईश्वरपरवशाऽविचारितरमणीया व्यवहारक्षमा सृष्टिरियं नात्यन्तमत्र निरूपणायासः कार्य इति वा समाधानम् । तत्र यदि शून्यवादानिर्वचनीयवादाश्रयणं तदा खण्डनयुक्तीनां सर्वदर्शनमार्गोन्मूलनक्षमता स्पष्टैव ।

किञ्च प्रमाणादिसत्त्वाभ्युपगन्तृनैयायिकादिवादालम्बने विलक्षणप्रमाणखण्डनयुक्तीनां प्रत्येकं लक्षणविशेषलक्ष्यविशेषप्रमाणविशेषखण्डने तात्पर्यं कृत्वा प्रयोक्तुमौचित्यमेव । नच तत्सूत्रभाष्याद्युक्तलक्षणखण्डनेऽपसिद्धान्त । पराभिमततद्व्याख्याखण्डने तात्पर्यात् ।

नचैवं स्वाभिमत व्याख्यान्तरं वाच्यं स्यात् । वितण्डामालम्ब्य खण्डनयुक्तिप्रयोगस्य निर्बाधत्वात् । तस्यां स्वपक्षनिर्वाहपर्यनुयोगाभावात् । एव च वादिदर्शनमाश्रित्यापि एकदेशिवत्प्रत्यवस्थानेन खण्डनयुक्तिप्रयोगो निर्बाधः । वैयाकरणानामिव शब्दसिद्धिप्रश्नस्य परकीयज्ञाननिरूपणार्थेसमानपक्षस्थित्याऽपि पर्यनुयोगादिसम्भवात् । वादकथायामप्यासां प्रयोगो भवति वस्तुस्थितिं कुर्वाणेन वस्तुव्यवस्थितये आसां युक्तीनामुद्धरणीयत्वात् । जल्पकथायामप्यासामस्त्युद्भावनावसर परम्पराजित्य स्वपक्षे सदोषमप्यनुमानादि प्रमाणतयोपन्यस्य तत्रानैकान्तत्वादिदोषोद्भावनकारी पर. कामपि तल्लक्षणखण्डनयुक्तिम-

वतार्थं बाधनीय इति ।

वस्तुतो नास्त्येव जल्पो नाम कथान्तरम् । वितण्डाद्वयशरीरा हि सा ।

तथाहि यदा प्रतिवादी छलजात्यादिभि प्रतिवादिन दूषयति तदा तस्य स्वपक्षसाधनावसराभावात् दूषयित्वैवेति वर्तते इत्येका वितण्डा, दूषितश्च प्रतिवादी परावृत्य यदा प्रतिवादिन दूषयति तत्पक्षस्याग्रत एव दूषितत्वेन साधनानर्हत्वात्सोऽपि प्रतिवादिन दूषयित्वैवेति वर्त्तत इत्यपरा वितण्डा । तद्व्यतिरेकेण न परस्खलत् ।

तत्र लक्षणाधीना लक्ष्यव्यवस्थितिरिति तार्किकास्तदयुक्तम् । यतो ज्ञातैर्लक्षणैर्वस्तुस्थितिर्वाच्या सत्तामात्रेणानुपयोगात् । ज्ञानमपि लक्षणत एव व्यवस्थापनीयम् । तल्लक्षण च ज्ञानत्वजातिमत्त्वम् । जातिलक्षण चानुवृत्तज्ञानविषयत्वम् । एवं च ज्ञानसिद्धौ जातिसिद्धिस्तत्सिद्धौ ज्ञानलक्षणसिद्धिस्ततश्च ज्ञानपदार्थसिद्धिरिति चक्रकस्य, जातेर्व्यक्तिपारतन्त्र्यनियमाज्ज्ञानव्यक्तिषु सिद्धासु तज्जातिसिद्धिस्तत्सिद्धौ च ज्ञानत्वजातिमत्त्वेन ज्ञानव्यक्तिसिद्धिरितीतरेतराश्रयस्य, ज्ञानविशेषे तल्लक्षणाज्ज्ञानसिद्धौ ज्ञानसिद्धिरित्यात्माश्रयस्य चापत्तेः । एव यत्र आधीयते किञ्चित् तदधिकरणमित्यधिकरणलक्षणे ऽधिकरणवाचकसप्तम्यन्तप्रयोगेण निरूप्यमाणे ऽन्योन्याश्रयापत्तेर्लक्षणानामसम्भवे लक्ष्यस्याप्यसिद्धिरित्यादि द्रष्टव्यम् ।

सकलमपि द्वैत प्रमेय प्रमासिद्धौ सिध्यतीति प्रमाखण्डनमेव तत्खण्डने मुख्यो हेतुरिति तत्खण्डन प्रस्तूयते—

तत्त्वानुभूति प्रमेति न युक्त तस्य भावो हि तच्छब्दार्थ अत्र प्रकृतस्य कस्य चिदभावेन तत्त्वाप्रसिद्धि । नचानुभूत्याक्षिप्तो विषयस्तच्छब्देन परामृश्यते वक्तृश्रोतृबुद्धिस्थताया एव प्रकरणत्वात् । तेन यस्य यो भावस्तस्य तत्त्वमिति वाच्यम् । शुक्तौ रजतज्ञाने ऽतिव्याप्तेः रजतत्वस्यापि रजतत्वत्वात् । तदाश्रयस्य धर्मिणो घटादेस्तत्त्वशब्दार्थत्वाभावेन धर्म्यंशे विशिष्टे च प्रमाया अप्रमात्वापत्तेः ।

नचायन्तत्त्वशब्दो रूढ्या स्वरूपमात्रवचन । अतत्त्व-

ज्ञानविषयस्य रजतादेरसत्त्वेन स्वरूपाभावात्तद्व्यवच्छेद इति वाच्यम्। स्वरूपत्वस्य जातित्वे स्वरूपमिति पररूपव्यावर्तकोपाधित्वे वा तस्य स्वात्मनि वृत्तावात्माश्रयापत्ते, अवृत्तौ तदनुभवस्याप्रमात्वापत्ते.। स्वरूपशब्दस्य व्यक्तिवाचकत्व तदर्थस्यैकस्यासम्भवेन घटस्वरूपानुभूते. पटस्वरूपानुभूतित्वाभावेनाननुगमेन लक्षणाव्याप्ते. शुक्तिरजतादिज्ञानेऽतिव्याप्तेश्च। शुक्तिरजतत्वयोस्तयो. प्रतिभासमानसम्बन्धस्य च स्वरूपत्वात्। नच शुक्तौ रजतत्वस्य समवायो नास्तीति वाच्यम्। तत्रासत्वे ऽपि स्वरूपत्वाव्याहते। नहीह गृहे देवदत्तो नास्तीति तस्य स्वरूप हीयते। नच यद्देशकालसम्बन्धि यत् स्वरूप प्रतीत तद्देशकालसम्बन्धस्वरूप तस्य तत्त्वमिति वाच्यम्। देशकालसंबन्धांशे प्रमाया अप्रमात्वापातात्। तयो. स्वरूपमेव तत्त्वमिति चेत्। तत्त्वशब्दस्यानेकार्थत्वेन लक्षणाव्याप्ते.। नच यद् यथा प्रतीयते तत्तथा परमार्थतो व्यवस्थित तत्त्वमिति वाच्यम्। प्रतीतिसमयमपहाय कालान्तरे तथा भूतस्य तत्त्वत्वापत्त्या भाविपाकजरागस्य कुम्भस्य श्यामतादशायामपि रक्तपित्तिना रक्ततयोपलभ्यते इति तद्बुद्धे. प्रमात्वापत्ते.। यदा तदेति विशेषणे तु कालवैशिष्ट्येन प्रतीतेरप्रमात्वापत्ते। कालविशिष्टस्य कालान्तरसबन्धेऽनवस्थापत्तेः। नच स्वतः कालस्यैक्यान्नानवस्था अन्योपाध्यवच्छिन्नस्य तस्य कालस्यान्योपाध्यवच्छिन्नेन सबन्धो युक्त इति वाच्यम्। दण्डिनो देवदत्तस्य कुण्डलिन स्वं प्रत्याधाराधेयभावापत्ते.। उपाधिभेदे ऽप्युपधेयस्यैकत्वान्नाधाराधेयभावस्तत्रेति चेत्। कालस्याप्यैक्येन कालविशिष्टस्य काले वृत्त्यसम्भव इति तुल्यम्।

एतेन कारणत्वं तत्त्वमित्यपास्तम्। काले पूर्वकालवृत्तित्वरूपकारणत्वाभावेन तदनुभूते. प्रमात्वानापत्तेः। अन्त्यकार्यस्याकारणत्वेन तदनुभूतौ प्रमात्वानापत्तेश्च। नच स्वविषययोगिप्रत्यक्षस्य तत् कारणम्। शुक्तिरूप्यप्रत्यक्षस्य विषयाजल्पनप्रत्यक्षे विषयस्याकारणत्वात्। नच प्रत्यक्षप्रमा नियमेन स्वविषयजन्येति वाच्यम्। चक्रकापत्ते—प्रमासिद्धौ तद्भेदप्रत्यक्षसिद्धिस्तत्सिद्धौ चान्त्यकार्यस्य तज्जनकत्वेन कारणत्वसिद्धिस्तत्सिद्धौ च तत्त्वानुभूतिः प्रमेत्यस्य सिद्धिरिति।

किञ्च कारणानुभूते प्रमात्वे कारणत्वस्य स्वात्मनि वृत्तावेव तदनुभूतिः प्रमा स्यादित्यात्माश्रय ।

किञ्च यत्क्षणविशिष्टस्यैव कारणत्व नेष्यते तदनुभूतेरप्रमात्वापत्तिः। प्रतिक्षणविशिष्टस्य विश्वस्य कारणत्वाङ्गीकारेऽपसिद्धान्तः। यद् अर्थक्रियाकारि तत्सदिति अङ्गीकुर्वतो बौद्धस्य मते प्रवेशात् ।

किञ्चानुभवामीति प्रत्ययबललभ्याऽनुभवत्व न जातिः। माघस्नान कुर्वतः शब्दतो भाविस्वकीयस्वर्गसुखज्ञाने ऽप्यनुभवामीत्यप्रत्ययात् । परनारीरतस्यास्तिकस्यामुकस्य शब्दतो भाविस्वकीयनरकपातज्ञाने ऽपि नरकमनुभवामीत्यप्रत्ययाच्च । विपरीतममन्दानन्दानुभवात् ।

यदि तु "सितासिते सरिते यत्र सगथे तत्राप्लुतासो दिवमुत्पतन्ति" इति, परपत्नी समारुह्य नारकी स्यान्न सशयः, इत्यादिशब्दोपदर्शितया यो गङ्गायमुनासङ्गमे स्नाति स स्वर्गं गच्छति, परपत्नीरत स नरक गच्छतीत्यादिरूपव्याप्त्या जनित तस्मादहमपि तथेत्यनुमानमनुभवश्चेत् तर्हि सुख दु खमनुभवामीति तयोः प्रत्ययः स्यात् । नच साक्षात्कारमनुभवशब्दार्थमनुरुध्य तयोर्न तथा व्यवहारः । अनुभवत्वजातिमादाय तु भाविसुखादिज्ञान न स्मृतिरननुभूतविषयत्वादिति विमर्शकस्य भवत्येवानुभवामीति प्रत्यय इति वाच्यम् । प्रत्यक्षे साक्षात्कारत्वोपाधिनैवानुभवव्यवहारोपपत्तौ तत्र सा जातिर्न सिध्येद्, अनुमित्यादौ तु तया जात्येत्यनुभूत्यर्थभेदाल्लक्षणेनाननुगमापत्तेः ।

नच स्मृतिभिन्नेषु प्रत्यक्षादिषु सर्वेष्वनुगतप्रत्ययो न साक्षात्कारित्वनिबन्धन इति जातिरावश्यकीति वाच्यम् । स्मृतिभिन्नत्वेनैव तद्व्यवहारोपपत्तौ तज्जातिकल्पने मानाभावात् । अन्यथा गोपशुभूम्यादिषु अनुगतप्रतीत्या सकलसाधारणगोत्वस्याप्यापत्तिः ।

किञ्च प्रत्यभिज्ञायां स्मृतित्वानुभवत्वयोः सांकर्यान्नानुभवत्व जातिः ।

तथाहि स एवायमिति प्रत्यभिज्ञान स्मृत्यनुभवरूप ज्ञानद्वयं यतस्तस्यां प्रागवस्थाविशिष्टादिदन्ताविशिष्टस्य भेदः प्रकाशते, स न स्मृतिरननुभूतचरत्वात् । एतेन स्मृतिरेव प्रत्यभिज्ञेत्यपास्तम् । नाप्यनुभवः । प्रत्यभिज्ञाकाले ऽनुभवेन प्रागवस्थायाः संवेदनात् ।

इन्द्रियस्य वर्तमानमात्रग्राहकत्वात् । सहकारिसहितादिन्द्रियात्प्रागवस्थासंवेदने त्वनुभव एवेति पक्षश्चाग्रे दूषयिष्यते ।

नच प्रागवस्थाविशिष्टादभिन्न इत्ययमर्थोऽनेकांशस्तत्र प्रागवस्थाविशिष्ट इत्यंशे स्मृतित्वमभिन्न इत्यंशे त्वनुभवत्वमिति वाच्यम् । प्रागवस्थाविशिष्ट स इदन्ताविशिष्टोऽभिन्न इत्यस्य स्मृत्यनुभूतिभ्यामावेदनेऽपि प्रागवस्थाविशिष्टाश्रयतयाऽभेदस्य केनाप्यप्रकाशनेन य एव प्रागवस्थाविशिष्टः स एवायमिति प्रत्यभिज्ञाशरीरालाभात् । नचानुभवेनानुभूयमानधर्म्याश्रयतया यो भेदो बुध्यते स कोट्यन्तरं विना न पर्यवस्यतीति सन्निधानात्स्मृत्यंशोपनीतप्रागवस्थाविशिष्टरूपकोट्यन्तराश्रिततया ज्ञायत इत्यभेदस्य प्रागवस्थाविशिष्टाश्रुतासिद्धिरिति वाच्यम् । कोट्यन्तराश्रिततया यदिदन्तावच्छिन्नधर्म्यभेदस्य ज्ञानं तस्य स्मृतावनुभवे चान्तर्भावस्याशक्यतयोक्तदोषानिस्तारात् ।

किञ्च ज्ञानस्य निरंशत्वेऽपि विषयांशावच्छेदकल्पनतया स्मृतित्वानुभवत्वव्यवस्था कल्पयितुं शक्या । यद्यपि यस्य धर्मिणः पूर्वापरकालवैशिष्ट्यं तज्ज्ञाने जातिसङ्करः परापरभावशून्ययोर्जात्योरेकव्यक्त्याश्रयत्वप्रसङ्गो हि सः । अस्मद्दूषकताबीजं च वैधर्म्यभेदभङ्गप्रसङ्ग इति एकं ज्ञानं स इत्यंशे स्मृतिः, अयमित्यंशेऽनुभव इत्यसङ्गतम् ।

तथाहि संस्कारेण तत्तामात्रोपनय इति प्रत्यभिज्ञाशरीरं न स्यात् विशिष्टधर्मिण उपनये अयमित्यनुभवांशेऽपि धर्मिभानमावश्यकम् अन्यथाऽयमिति तच्छरीरं न स्यात् । तत्र संस्कारेन्द्रिययोरुपनिपाते यदि विशेष्यांशे भिन्नं ज्ञानं तदा प्रत्यभिज्ञायाः स्मृतित्वमनुभवत्वमपीति सङ्करो दुर्वारः ।

नच विषयभेदोपाधिकव्यवस्थाऽसम्भवेऽपि कारणभेदोपाधिकव्यवस्थाऽसम्भवेऽपि कारणभेदोपाधिकांशभेदकल्पनयाऽसाङ्कर्यम् ।

तथाहि संस्कारजत्वमादाय स्मृतित्वव्यवस्थितिरिन्द्रियसन्निकर्षजत्वमादायानुभवत्वव्यवस्थितिरस्तु, एकरूपे वस्तुनि विरुद्धजातिसमावेशस्यैव दोषत्वात् । तत्रैव हि जात्योरविरोधबुद्धिर्नात्र सेति न वैधर्म्यभेदभङ्ग इति वाच्यम् । प्रत्यभिज्ञायाः प्रमाऽप्रमारूपताया विषयव्यवस्थयैवोपगन्तव्यतया निर्विषययोस्तयोरसम्भ-

षात् । एवं चैकस्मिन्नेव धर्मिणि स्मृतित्वानुभवत्वयोर्निवेशे तदुभयो-रेकप्रत्यभिज्ञागोचरे धर्मिणि प्रमितत्वाप्रमितत्वलक्षणविरुद्धधर्म-प्रसङ्गस्य तदवस्थत्वम् ।

किञ्च विषयोपरक्तज्ञानानामात्मनि लिङ्गपरामर्शं विनैव भावाभावसंवेदनात्सर्वानुभवगम्यत्वं तेषां वाच्यम् । तथा स्मृतित्वादेरपि प्रत्यभिज्ञाया संस्कारजत्वाद्युपाधिपरामर्शं विनैव ग्रहणे नानौपाधिकत्वमेव वाच्यम् । ततः स्मृतित्वादेर्विषयनि-रूपणकृतव्यवस्थाऽनङ्गीकारे इदन्तायामपि स्मृत्यवगमप्रसङ्गेन स-ङ्करो दुर्वार ।

किञ्चेयं स्मृतिरित्यनुगताकारप्रतीते. संस्कारजत्वेनैव निर्वा-हे तज्जातौ न प्रमाणमिति तस्य साङ्कर्ये उद्भाविते तत्परि-हाराय स एवोपाधिरुपन्यस्यते इत्ययुक्तम् । नच तत्स्मृतित्वव्य-ञ्जकमिति ततोऽन्यदेव स्मृतित्वमिति नायं दोष इति वाच्यम् । संस्कारजन्यस्य सर्वस्मृतिसाधारणमेकं धर्ममनवच्छेदकीकृत्य स-र्वस्मृतिषु गृहीतुमशक्यमिति स्मृतित्वमेव तथा वक्तव्यम् । एवं च संस्कारजत्वव्यवस्थितौ स्मृतित्वमुपाधिः स्मृतित्वव्यवस्थितौ च संस्कारजत्वमित्यन्योन्याश्रयापत्ते. स्मृतित्वानुभवत्वसङ्करो दुर्वार ।

किञ्च स्मृत्यनुभवयोर्ये सामग्र्यौ ते प्रत्यभिज्ञायां नाङ्गीक्रियेते स्वीक्रियेते वा । नाद्य. । शृण्वतोऽपि स्मृतित्वानुभवत्वयोरनापत्तेः। तत्तत्सामग्रीं विनैव तथात्वे ज्ञानमात्रस्यापि द्विरूपतापत्त्या सङ्क-रापत्ते. । नान्त्य । प्रत्येकं स्वस्वकार्यसामर्थ्येन पृथगेव का-र्योत्पत्तिप्रसङ्गात् । नचात्र सामग्र्योः संवलितत्वेन संवलितकार्यो-त्पत्ति. । यद्यप्येवमन्यत्र दृष्टं न तथाऽपि चित्रस्वभावत्वादनयोः साम ग्र्योरीदृशत्वमिति वाच्यम् । तयो परस्परसहकारित्वाभावे मिलन-मात्रस्याप्रयोजकत्वेन पृथगेव कार्यापत्ते । परस्परसहकारित्वे तु अनुभवांऽशेऽपि संस्कारस्य स्मृत्यंशे प्रत्यक्षस्य व्यापार इति तयो-रुभयांशसाधारण्यात् स्मृत्यंशे ऽप्यनुभूतित्वमनुभूत्यंशेऽपि स्मृति-त्वमिति सङ्करो वज्रलेपायित ।

नचाऽनुभव एव प्रत्यभिज्ञेति वाच्यम् । इदन्तावच्छिन्ने त-त्तावच्छिन्नभेदो हि प्रत्यभिज्ञाविषयः । नच तद्ग्राहकः सं-स्कारः अभेदस्य प्रागननुभवात् । नापीन्द्रियसन्निकर्ष. पूर्वका-

लावच्छिन्ने सम्भवतीति तस्याविषयत्वमेव स्यान्नतु सोऽयमिति, दोषात् । नच चक्षुःसंयुक्तमनःसंयुक्तात्मवृत्तिसंस्कारविषयवस्तुविशेषणतया प्रत्यासत्त्या चक्षुषा तत्तावच्छिन्नस्याभेदग्रहणं संस्कारद्वारकप्रत्यासत्त्या इन्द्रियेणैव भविष्यति इति वाच्यम् । पूर्वदृष्टे चैत्रे 'सोऽयं न वा' इति संशयस्य कदाऽप्यनापत्ते । संस्कारद्वारकप्रत्यासत्त्या सर्वतदभेदग्रहसम्भवेन 'स एव' इति निश्चयस्यैवापत्तेः ।

नच संशयस्थले दोषवशात्तत्तावच्छिन्नाभेदप्रकाशो नेन्द्रियसम्बन्धैरिति वाच्यम् । विनाऽपि संस्कारम् अननुभूतेऽपि दोषवशात् 'सोऽयं न वा' इति संशयापत्ते, संस्कारस्य तत्राकारणत्वात् ।

किञ्च वस्तुप्रकाशके दोषत्वमपि वक्तुमशक्यम् । चक्षुरादावदर्शनात् । 'सोऽयम्' इत्यंशे वस्तुप्रकाशित्वेऽपि 'न वा' इत्यंशेऽवस्तुप्रकाशकत्वाद् दोषस्य दोषत्वं चेद् चक्षुरादेरपि तत्त्वं स्यात् । क्वचित्तस्याप्यवस्तुप्रकाशकत्वात् । वस्तुप्रकाशनशक्तिविशिष्टत्वेन चक्षुरादेरदोषत्वं दोषविशिष्टत्वेन मिथ्याज्ञानहेतुत्वमिति चेत् त्वदुक्तदोषेऽप्यदोषत्वं परिहर्तुमशक्यम् । यदि दोषत्वसिद्ध्यर्थं दोषस्य सतोऽपि वस्तुनः प्रकाशकता नेष्यते तर्हि संशयात्प्रेक्षावतां प्रवृत्त्यनापत्तिः । ननु वस्तुविषयत्वेऽपि तज्ज्ञानस्य दोषादनिश्चयतेति अनिश्चयहेतुत्वेन दोषत्वमिति चेद् न । 'सोऽयम्' इति वस्तुप्रकाशे तस्याभावकोट्या असंकीर्णत्वाद्वस्तुकृतं विशेषं विना ज्ञाने विशेषासम्भवादनिश्चयत्वस्यैवासम्भवात् । ननु 'सोऽयम्' इत्यंशे निश्चयेऽपि अंशान्तरे ऽनिश्चयहेतुर्दोष इति चेद् । न । संशयस्य अधिकतदभावग्राहित्वेऽपि 'सोऽयम्' इत्यंशे निश्चयत्वाप्रच्यवात् । एवं च 'न वा' इत्यपि कोट्यन्तरमेव स्यान्न संशय, संयोगाभावप्रकाशवत् ।

नच वस्त्ववभासेऽपि संशयत्वं जातिर्दोषाद्व्यज्यते इति तस्य दोषत्वमिति वाच्यम् । संशयत्वस्य ज्ञानवृत्तित्वे तदर्थकवाशब्दस्य 'इदं तद् वा न वा' इत्यादौ संशयकोट्यर्थकशब्दसमन्वयेन वाशब्दप्रतीतिव्यवहारयोर्नापत्ते. । विकल्पितरूपत्वं हि वाऽर्थः । तदेव संशयत्वम् । प्रतीत्या सह वाकारार्थस्य संबन्धे 'प्रत्येमि न वा' इति तदापत्तेश्च । 'स्थाणुमानय पुरुषं वा' इत्यादौ स्थाणुपुरुषगतपाक्षिकव्यवहारानुपपत्तेश्च । किञ्च वस्तुतः संस्कारेण तस्यात्मना तस्य मनसा तस्य बाह्येन्द्रियेण प्रत्यासत्तिसत्त्वात् तथैव सन्दे

ह्योपपत्तौ किं दोषेण, यदि तु संस्कारप्रत्यासत्तिमनपेक्ष्य सन्देहस्तदाऽननुभूय विस्मृत्य वा सन्दिह्येत । न च संस्कारसहकृतेन्द्रियेण प्रत्यभिज्ञाया तदर्थं इन्द्रियासन्निकृष्ट एव गृह्यते इदमंशः सन्निकर्षादेवेति वाच्यम्। 'सोऽयं न वा' इति संशयस्य कदाऽप्यनापत्तेः । किंचात्मसंयोगसहकृतमनसः सत्त्वादात्मार्थयोः संनिकर्षस्य च सत्त्वात्तदुभयतो जायमानायाः 'तदद्राक्षम्' इति स्मृतेरप्यनुभवत्वापत्तिरेव सति स्यात् । आत्मसंयुक्तमनसा प्रत्यक्षीक्रियमाणैर्ज्ञानादिभिः स्मर्यमाणस्याप्यर्थस्य मनःसंयुक्तात्मसंनिकृष्टत्वेन तुल्यत्वात् । किञ्च संस्कारोपनीते विषये ज्ञानस्यानुभवत्वे स्मृतेरप्यनुभत्वापत्तिः । नचानुभवकारणासंपृक्तसंस्कारजत्वं स्मृतित्वप्रयोजकम्, अक्षसंनिकर्षसापेक्षसंस्कारजत्वात्प्रत्यभिज्ञाऽनुभव एवेति वाच्यम् । संस्कारासंपृक्तानुभवकारणजत्वेनैवानुभवत्वम्, संस्कारसहितानुभवकारणजा प्रत्यभिज्ञा स्मृतिरेवेति वैपरीत्यापत्तेः । तस्मादुभयकारणजत्वात्प्रत्यभिज्ञा स्मृतिरनुभवश्चेति स्वीकार्यमिति तयोः सांकर्यात् स्मृतिव्यावृत्तानुभवत्वासिद्धिः । एवं च प्रमालक्षणेऽनुभूतिपदेन व्यवच्छेद्यं स्मरणमित्यसङ्गतम् । अविरोधात्।सर्वस्या अपि स्मृतेस्त्वयाऽनुभवत्वेन स्वीकर्तव्यत्वात् । तथाहि 'स घटस्तत्रासीद्' इत्यादिस्मृतौ पूर्वकालविशिष्टो घटो भासते । न चासौ पूर्वमनुभूतता भूततायाः संस्कारेणापनीयते प्रत्युत पूर्वं वर्तमानतैवानुभूत्या । तस्मादिदानीं पूर्वताधीसामग्रीसभेदात् 'सोऽयम्' इति प्रत्यभिज्ञानवद्विशिष्टावगमो ऽसौ स्मृत्यनुभवात्मैवोपगन्तव्य इति शुद्धस्मृत्युच्छेद एव । नच तदस्ति स्मरणं यत्र सा न प्रकाशते । नच दोषवशात्प्रमुष्टतत्ताकं स्मरणं भवतीति वाच्यम्। तस्य स्मृतित्वे मानाभावात् । नचानुभवसामग्र्यभावेन स्मृतित्वम् । यत्किंचिदनुभवसामग्र्यभावेन स्मृतित्वे ऽनुमित्यादेरपि स्मृतित्वापत्तेः । सर्वानुभवसामग्र्यभावेन तत्त्वे तत्तांशशून्यरजतज्ञानसामग्र्या अनुभवसामग्रीत्वाभावे मानाभावेन तदसम्भवः । क्व वा प्रतिपन्नं प्रमाणत्वेन परिगणितसामग्र्यभावे जायमानं ज्ञानं स्मृतिरिति । 'स घट' इत्यादेरनुभवत्वोपन्यासस्य कृतत्वात् । नच प्रत्यक्षादिकारणसामग्र्यनुपपत्त्या रजतमात्रस्य पूर्वमनुभवेन तद्विषयसंस्कारसम्भवेन तत्र संस्कारस्यैव हेतुना प्रमाणान्तरासहकृत-

संस्कारजत्वं तद्व्यङ्ग्यो जातिविशेषो वा स्मृतित्वमिति वाच्यम् । इन्द्रियस्यैव तत्र कारणत्वसम्भवात् । नच सन्निकर्षाभावात्तस्य न कारणत्वमसन्निकृष्टस्येन्द्रियस्य ज्ञानजनकत्वेऽतिप्रसङ्गाद् इति वाच्यम् । संस्कारस्यापि केवलस्य तज्जनकत्वे ऽतिप्रसङ्गात् । सहचरितचन्द्रदर्शनादिसहकारियोगेन संस्कारस्य तज्जनकत्वे नातिप्रसङ्ग इति चेन्न । तेनैव सहकारिणा सहितस्येन्द्रियस्यापि तज्जनकत्वेनातिप्रसङ्गाभावात् । अननुभूते ऽपि तर्हि प्रसङ्ग इति चेन्न । वस्तुतो रजतवतो ऽज्ञातरजतसादृश्यस्य ज्ञानसंस्कारवतः स्मृत्यापत्तेस्तवापि सत्त्वात् । ज्ञानमपि सहकारीति चेत् । ममापि पूर्वानुभवस्तथा संस्कारलोपजनककालव्यवधानाभावादेः सहकारित्वाभ्युपगमान्न लुप्तसंस्कारस्य स्मरणम् । 'रजतसदृशम् इदम्'इत्यनुसन्धानं रजतस्मरणपूर्वकमित्यप्युभयोः समम् । नचार्थसन्निकर्षं विनेन्द्रियस्य ज्ञानकारणत्वमदृष्टमिति वाच्यम् । विशिष्टरूपेण भ्रमविषये इन्द्रियस्य विशेषणांशे सन्निकर्षमन्तरेणैव ज्ञानजनकत्वात् । यद्वा सहकारिभूतदोषशक्तेरेव प्रत्यासत्तित्वोपगमेनादोषात् ।

किञ्च तत्तांशमोषे हेत्वभावः । पूर्वं वर्तमानकालविशिष्टस्य रजतादेरेकत्रानुभवे प्रकाशिततया तज्जन्येन संस्कारेण तथैवोपनेतुमौचित्यात् । प्रत्यभिज्ञायां तथैव दर्शनात् । नच दोषवशात् तत्तांशमोषः स्मृताविति वाच्यम् । दोषानिरुक्तेः । यतो भ्रान्त्युत्पत्तिः स एव दोष इति चेत् । विनष्टरजतस्य राङ्गान्धधियः शुक्त्यादिदर्शने तत्र तत्ताविशिष्टमिदं रजतमित्यादौ तत्तोल्लेखिभ्रमे ऽपि तत्तांशमोषापत्तेर्दोषस्य विभाव्यमानत्वात् ।

नापि स्मृत्यन्यत्वमनुभवत्वम् । यत्किञ्चित्स्मृतिभेदस्य स्मृतावपि सत्त्वात् स्मृत्यन्तरस्यानुभवत्वापत्तेः । यावत्स्मृतिभेदस्तु तासां दुर्ज्ञेयत्वेन अशक्यः । नच स्वीयस्मृतिप्रत्यक्षकाले सामान्यलक्षणयेन्द्रियप्रत्यासत्त्या सर्वस्मृतिप्रत्यक्षसंभवः । एकप्रमेयप्रत्यक्षकाले प्रमेयत्वसामान्यप्रत्यासत्त्या विश्वप्रत्यक्षापत्तौ सार्वज्ञ्यापत्तेः ।

नच स्मृतित्वाभाववत्त्वमनुभवत्वम् । स्मृतित्वभेदस्यापि तदभावत्वेन तस्य स्मृतावपि सत्त्वेन स्मृतेरप्यनुभवत्वापत्तेः ।

एतेन स्मृतित्वसंसर्गाभाववत्त्वमनुभवत्वमिति निरस्तम् । स्मृतित्वसंसर्गभेदस्य स्मृतावपि सत्त्वात् ।

एवं स्मृतित्वसंसर्गस्य ससर्गाभाव इत्युक्तावपि तद्भेदमादाय दोष एव। विशेषणप्रक्षेपपरम्परयाऽनवस्था च ।

किञ्च ससर्गससर्गस्य स्वरूपानतिरेकेण स्मृतित्वसंसर्गो धर्मिस्वरूप चेत्येतयो· ससर्गरूपत्वस्थितौ अनुभूतौ कथं तत्संसर्गस्य निषेध· ।अनुभूतेः स्मृतित्वससर्गस्य च सत्त्वेन निषेधायोगात् । स्मृतित्वससर्गस्यार्थान्तरभूतः ससर्गो यद्यविद्यमान एवानुभवे निषिध्यते तदा स्मृतावपि प्रसङ्गः। स्मृतावर्थान्तरभूतस्य तस्य भवता ऽनभ्युपगमात् । स्वरूपमेव हि तयोः सम्बन्ध इति तवाभ्युपगमः। अत्र तावताऽप्यनुभूतिस्वरूपे कस्य निषेधो वर्णितः । 'स्मृतित्वसंसर्गानुभूती सम्बद्धे' इत्येव बुद्धिजनकत्वस्येति चेद् । न । भ्रान्त्यात्मकेदृशबुद्धिजनकत्वस्य दुर्निवारत्वात् । यथार्थाया इति चेद्, ईदृशबुद्धेर्यथार्थायाः सत्त्वे ऽनुभवे स्मृतित्वापत्ति·,तदसत्त्वे किं प्रति तस्या जनकत्वाभावो वाच्यः । अथात्यन्तासतीमेव बुद्धिं प्रति जनकत्वाभावो ऽनुभूते स्वीक्रियते तदा स्मृतेरपि प्रसङ्गः । यावत्यस्तत्सम्बद्धत्वबुद्धयस्तत्र जायन्ते तदधिकां तद्बुद्धिमत्यन्तासती प्रत्यजनकत्वस्य स्मृतावपि सम्भवात् । सर्वामेव सम्बद्धत्वबुद्धिं प्रति अजनकत्वमनुभूतेर्नतु स्मृतेरिति चेन्न । सर्वतद्व्यक्तिप्रमित्यसम्भवात् । प्रतियोगिप्रमितिं विना ऽभावप्रमित्यसम्भवात् ।

ननु स्मृतित्वान्योन्याभावमादाय नातिप्रसक्ति·, भेदाभेदवादिमते स्मृतित्वभेदाभेदस्य स्मृतावभ्युपगमात्, ययोर्भेदाभेदस्तयोस्तत्रान्योन्याभावानभ्युपगमाद् इति चेन्न । स्मृतित्वस्य स्मृत्यैव भेदाभेदौ नानुभूत्येत्यत्र मानाभावात् । तथा ऽप्रतीत्या तादात्म्य न स्याद् । अत्यन्तासत्यास्तत्राप्यभावसम्भवात् । नच यत्र यस्य प्रागभावस्तत्र तस्य कदाचिद्भावो ऽपि दृष्ट इति प्रागभावप्रतियोगिन्याः प्रमाया भावादित्थमभ्युपेयते इति वाच्यम् । अनुभवे तादृश्याः स्वीकारेणानुभूतेरपि स्मृतित्वापातः । स्मृतिस्मृतित्वयोरन्योन्याभावाभावस्यातिरिक्तत्वेऽनवस्थाप्रसङ्गेनान्योन्यात्मकत्वस्वीकारे ऽनभूतेरपि स्मृतित्वान्योन्याभावस्तुल्यः । नहि स्मृतित्वाभावोऽनुभूतिरित्युक्तमेव । नच 'इदं तन्न भवति, इह तन्नास्ति' इति प्रतीत्या भेदससर्गाभावयोर्भेद इति वाच्यम् । समवायिकारणेषु द्रव्यगुणकर्मध्वसानां ससर्गाभावत्वानङ्गीकारे सयोगध्वसे ऽति व्याप्तिः ।

किञ्चैवं भेदात्यन्ताभावयोरपि घटादिप्रतियोगिकत्वाभावे घटादेरपि कालादिवन्निरवधिकत्व स्यात् । किञ्च 'इह भूतले घटो नास्ति, घटः पटो न' इति प्रमया घटाद्यविशेषितसंसर्गतादात्म्ययोर्निषेधे न गतिः, तदुच्छेदापत्तेः । एवं यद्यत् प्रतियोगि वाच्य तत्तत् स्वरूपेणैव न स्यात् प्रतियोगित्वात्तादात्म्यवत् । ततश्च सिद्धमद्वैतम् ।

ननु घटे घटात्मत्वस्य दृष्टस्य संसर्गः पटे निषिध्यते नतु स्वरूपेण तन्निषिध्यते इति चेत् । तस्यापि प्रतियोगिनः संसर्गस्य निषेधे स एव भग्नः स्यात् । तस्यापि संसर्गान्तरनिषेधे घटस्य पटात्मता निषिद्धा नेति घटः पटात्मा स्यादनवस्था च ।

ननु निषेध्यः प्रतियोगी तदभावो ऽनुयोगी तयोर्विरोधश्च सहभावाभावरूप. । एवञ्चान्यत्र सता रूपेण प्रतियोगित्वम् अन्यत्र चासता रूपेणाभावज्ञानाविषयत्वमिति न प्रतियोगित्वमात्रेण स्वरूपाभावप्रसङ्ग इति चेन्न ।

सहभावाभाव एककालीनत्वाभावो वा एकदेशस्थत्वाभावो वा । नाद्यः । प्रदेशान्तरे तदैव तदभावदर्शनात् । नान्त्यः । अनुयोगिनि प्रतियोग्यापत्ते । तावता ऽप्येकदेशस्थत्वाभावोपपत्ते. । अभाववृत्तित्वेन प्रतियोगिप्रमाया अभावान्न तथेति चेन्न । एकदेशस्थप्रमाऽभावमूलकतया सहानवस्थानमेव तयोरिति तव नियमस्य मदीयया आपत्त्या प्रतियोग्यनुयोगिभावरूपविरोधादेव परिहरणीयत्वं भङ्गात् ।

किञ्च गोत्वाश्वत्वयोरपि सहानवस्थानविरोधेन कस्ताभ्यां भावाभावयोर्विशेषः स्यादिति भावाभावरूपतैव न स्यात् । तस्मात्स्वरूपकृत एव तयोर्विरोधः । नच शुक्ल' पटो नास्तीति विशिष्टनिषेधे विशेषणस्यापि निषेधः, तथा घटादिविशेषितसंसर्गतादात्म्ययोर्निषेधे घटादेरपि स इति प्रागुक्तौ न घटादेर्नित्यत्वापत्तिरिति वाच्यम् । एव हि संयोगः समवायो न भवतीति संसर्गयोरन्योन्यतादात्म्यनिषेधोऽपि संसर्गनिषेध. स्यात्संसर्गप्रतियोगिकत्वादिति संसर्गान्योन्याभावयोरेकत्वापत्तौ स्मृतित्वसंसर्गाभावमादाय स्मृतावनुभूतित्वप्रसक्तादवस्थ्यात् ।

ननु तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽत्यन्ताभाव स्तत्सम्बन्धावच्छिन्नप्रतियोगिताको ऽन्योन्याभाव इति

चेद् न । तत्सम्बन्धावच्छिन्नप्रतियोगिताक इत्यस्य यदि तत्सम्बन्धवद्घटत्वप्रतियोगिक इत्यर्थस्तर्हि समवायसम्बन्धवद्घटत्वभेदोऽप्यत्यन्ताभावः स्यात् । अधिकस्य तदर्थत्वे तदर्थेऽप्यनिर्वक्तव्यत्वापत्तिः । अविदितस्वरूपस्य लक्षणानभिधाने इतरव्यवच्छेदेन तस्य ज्ञातुमशक्यत्वम् । अन्यथा को घट इति पृष्टे घट इत्येवोत्तरं स्यात् । तदितरसम्बन्धावच्छिन्नप्रतियोगिताकत्वं किमिति पक्षे तदितरसम्बन्धावच्छिन्नप्रतियोगिताकत्वमेव तदिति तवोत्तरवत् । तत्सम्बन्धसमानाधिकरणा प्रतियोगितेति चेत् । तत्सम्बन्धवद्घटत्वभेदीयप्रतियोगिताया अपि तत्सम्बन्धसामानाधिकरण्यमस्त्येव । किञ्च स्मृतिः स्मृतिर्भवतीति सामानाधिकरण्ययोगेन विधिनिषेधातिरिक्तकोट्यभावेन विध्यभावेन निषेधे पर्यवसानात्स्मृतेरपि स्मृत्यतिरिक्तत्वेनानुभवत्वापत्तिः । प्रकारभेदे हि सामानाधिकरण्यं यथा नीलो घट इति । यद्धर्मविशिष्टायां स्मृतौ स्मृतिसामानाधिकरण्यं कथ्येत तदनुपलम्भात् । ज्ञानत्वं तथेति चेत् । अनुभवेऽपि तत्सत्त्वेन स्मृतित्वापत्तिः । नच यथैकस्यां घटव्यक्तौ देशभेदाद्यवच्छेदं निमित्तीकृत्य सामानाधिकरण्यम्—'अयं घटः' इति स्मृतिव्यक्तिविशेषे तत्सामानाधिकरण्यं तदा स्मृतिव्यक्त्या अनुभवत्वापत्तिः । सर्वव्यक्तिषु तथाग्रहस्त्वनुपपन्नः । घटो भवतीति व्यवहारं यथा व्याघातभयान्न मन्यसे, तथा घटो घटो भवतीत्यपि रूपभेदाभावे सामानाधिकरण्याभावान्न मन्यसे । तदेव वस्तु देशान्तरेणावच्छिद्य तद्भवतीत्यभिधत्से चेदस्या वचनव्यक्तेर्व्यक्त्यन्तरेषु वृत्तिर्न स्यादिति सामान्यरूपतापत्तिः । मम त्वनिर्वचनीयवादिनो न क्षतिः । प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणं भवदपि जगत् सत्तोपगमे बाध्यमानत्वादनिर्वचनीयमिति ।

एवं संस्कारासाधारणहेतुकधीत्वं स्मृतित्वमित्यपि न । 'सोऽहम्' इत्यात्मप्रत्यभिज्ञानाद् । आत्मानुभवसंस्कार एव साधारणं कारणमिति स्मृतित्वापत्तेः । आत्ममनोयोगस्य साधारणत्वात् ।

किञ्चेदं प्रमाणलक्षणं 'मम मुष्टौ कति कपर्दाः' इति प्रश्ने 'पञ्च' इत्युत्तरयति कश्चित् तत्रातिव्याप्तम् । तत्र पञ्चैव दृश्यन्ते इति न तत्पदेन तद्व्यवच्छेदः । नाप्यनुभवपदेन अननुभूतचरत्वेन ।

स्मृतित्वाभावात् । नच संशयः सः । उत्प्रेक्षारूपकोटिनिश्चयावस्थानात् । नच प्रमैव तत् । प्रत्यक्षादिष्वनन्तर्भावादित्यलं प्रसक्तानुप्रसक्त्या ।

पारमार्थिकसत्यत्वं तु नेत्याह *अग्रेचेति । तदग्रिमे तत्त्वज्ञानविवृद्धिप्रकरणे चेत्यर्थः । उक्तानुवादेन सङ्गतिमाह *चित्तातीति । सूत्रार्थमाह *एवं तर्हीति । *सूत्रेणेति । इत्यर्थकेन (न्या० सू० अ० ४ आ०२सू०४३) "अपवर्गे ऽप्येवं प्रसङ्ग" इति सूत्रेणेत्यर्थः । (न्या०सू० अ०४आ०२सू०४४,४५)"न निष्पन्नावश्यम्भावित्वात्","तदभावश्चापवर्गे"इति सिद्धान्तसूत्रद्वयार्थमाह *चेष्टेन्द्रियेति। अयमाद्यसूत्रार्थः। द्वितीयार्थमाह *अपवर्गेचेति । तात्पर्यार्थमुपयुक्तमाह *एवञ्चेति । तदभावात् तद्बुद्ध्यभावेचेत्यर्थः । *तद्धर्मेति । शरीरधर्मेत्यर्थः । तथा सति योगसूत्रैकवाक्यतारूपं फलमाह *तदुक्तमिति । पतञ्जलिनेति शेषः । तदुत्तरं "तदव्यवहितम्" इति आशङ्कां तां हृदि निधाय एकसूत्रार्थमाह *तस्येति । शेषमाह *कार्यइति । चार्थमाह *ततइति । प्रत्यासत्त्या शेषमाह *ततइति । *अनेन—योगादिति कथनेन । ननु एवमपि न्यूनताऽत आह *योगपदमिति । *एवम्—अपवर्गार्थं तदावश्यकत्वे । *तेनैव—योगशास्त्रादिनैव । *इदम्—न्यायशास्त्रम् । *उक्तमिति । तदग्रिमे तत्त्वज्ञानपरिपालनप्रकरणे इत्यर्थः ।

उभयसाधनवती विजगीषुकथा जल्पः स्वपक्षस्थापनहीना परपक्षदूषणमात्रसाधनिका वितण्डा । तत्त्वज्ञानस्यानुपयोगादाह *अनुत्पन्नेति । तत्र मूलमाह *अप्रहीणेति । *तदर्थम्—तत्त्वज्ञानार्थम् । भाष्यादितात्पर्यमाह *तस्यामिति । दोषसत्तावस्थायामित्यर्थः । *कृतेति । गतेति पाठान्तरम् । तदा तद् शास्त्रपरं बोध्यम् । परमतात्पर्यमाह *स्थूलेति । फलान्तरम् । *उक्तम्—भाष्येण । *एवंविधत्वम्—तदङ्गत्वम् । ननु अन्येषां साक्षादेव कुतो न तत्त्वमत आह *किञ्चेति । सूत्रे सर्वाद्ये अपिना पृथग्ग्रहणे इति पाठः । *इदमपि—न्यायशास्त्रमपि । *अनेन—भाष्येण । *अत एव—तस्या एव तत्त्वादेव । *अस्य—गौतमीयस्य । प्रयोजनमित्यत्रान्वयः । प्रदीपादयो जहल्लिङ्गा विद्याविशेषणानि । *विद्योद्देशेइति भिन्ने पदे । विद्याव्ययविद्या, उद्देशो नाम्ना वस्तुसङ्कीर्त्तनम् । स च प्रत्यासत्त्या विद्यानामेवेत्याह *विद्योद्देशे-

इति । यद्यपि—

त्रैविद्येभ्यस्त्रयीविद्यां दण्डनीतिं च तद्विद ।
आन्वीक्षिकीं चात्मविद्यो वार्तारम्भांश्च लोकत. ॥

इति मनोरान्वीक्षिक्यध्यात्मविद्या, 'स्वरन्ध्रगोत्पा' इति याज्ञवल्क्ये य आन्वीक्षिक्यामात्मविद्यायां दण्डनीत्यामर्थयोगोपयोगिन्याम् वार्तायां वाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायां त्रय्याम् ऋग्यजु.सामरूपायामिति विज्ञानेश्वराद्य, तथाऽपि श्रवणादनु पश्चादीक्षा मनन तन्निर्वाहकत्वादस्यापि आन्वीक्षिकीति व्यवहार. । अत एव मोक्षधर्मे—

तन्त्रोपनिषदं नाम सविशेषांच पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीम्पराम् ॥

इत्युक्तम् । एतदाशयवान् परस्तदभिप्रेत्याह *अन्वीक्षिकीति अन्यदपि तत्र साधकमाह *तथेति । तद्वदित्यर्थः । यथाविद्यमित्यनेनान्येषां मतत्व स्पष्टमेवोक्तम् । नन्वेव तत्र चतुर्थिकेत्ययुक्तमत आह *चतुष्टयश्चेति । उपसहरति *तस्मादिति । तथा आद्यसूत्रे एव भाष्योक्तेरित्यर्थः । एतेनेदमपि मोक्षोपायः साक्षादिति तन्नवीनोक्तम्,एवं शास्त्रान्तरमपीत्युक्त चापास्तम् तदाह *इत्यन्यत्रेति । वेदान्ते इत्यर्थ ॥ २३ ॥

अनद्यतनत्वं चातीतरात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसो ऽद्यतनः तद्भिन्नत्वमिति वृत्तिः । अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसो ऽद्यतन इति लण्सूत्रे कैयटः ।

एवम् अनद्यतने भविष्यति लुट्, भविष्यत्सामान्ये ऌडित्यादि तदनुशासनादितो बोध्यम् । तत्रानद्यतने भूते ऽपि यदा भूतत्वमात्रविवक्षा तदा लुङेव । तेन ह्यो ऽपाक्षीदित्यादौ भूतत्वमात्रविवक्षायां लुङि पश्चात् ह्यः पदेनानद्यतनत्वप्रतीतिरिति न दोषः ।

एवमनद्यतनभविष्यति भविष्यत्त्वमात्रविवक्षया लृङपि । श्वः पक्ष्यतीति यथा । एवम् 'इयं नु कदा गन्ता येयं पादौ निदधाति' इत्यादावनद्यतनत्वारोपेण लुट् । आरोपफलं त्वतिविलम्बेन गमनप्रत्यायनम् ।

ननु वृष्टे देवे "देवश्चेद् वृष्टः सम्पन्नाः शालयः" इति प्रयुञ्जते, 'संपत्स्यन्ते' इति च प्रयुङ्क्ते 'मैवं वोचः, सम्पन्ना इति ब्रूहि' इति लोको वदति तद् अनुपपन्नमिति चेन्न । अप्शालिबीजसंयोगे निष्पदेर्वृत्तिस्वीकारेण तदुपपत्तेः । यद्वा फलनिष्पत्तिरेव निष्पदेरर्थः । अप्शालिबीजसंयोगे एव कार्यनिष्पत्तिरूपमध्यस्यते इति तस्यातीतत्वाद् भूतता । यद्वा तत्र कारणमेघोत्पत्तिगतमतीतत्वं वृष्टौ शालिसम्पत्तौ चारोप्य भूते क्तः । एतेन मेघोत्पत्त्युत्तरकाले ऽपि तथा प्रयोगः समर्थितः । आरोपफलन्तु कारणान्तरापेक्षाऽभावप्रतिपादनद्वाराऽवश्यंभावित्वप्रतीतिः । "यथा कोष्ठगतेष्वपि शालिषु भुज्यर्थमवहननादीनि प्रतीक्ष्यन्ते एवमेष्वपि स्थूलरूपेणाभिव्यक्तिः प्रतीक्ष्येति न तदैव भुजिक्रिया" इति "क्षिप्रवचने लृङ्" इत्यत्र भाष्ये । तथा ग्रामान्तरं जिगमिषवः स्थानविशेषे कूपसत्तानिश्चयवन्तो भाविनि तल्लाभे 'कूपो भविष्यति' अतीते 'अभूद्' इति प्रयुञ्जते, तत्र तल्लाभगतमतीतत्वादि कूपसत्तायामारोप्य तत्तत्कालप्रत्ययः, बुद्धिविषयत्वमात्रविवक्षायां 'कूपोऽस्ति' इति वर्तमानप्रत्यय इति "लुङ्", "भविष्यति गम्यादयः", "अनद्यतने लुट्" "क्षिप्रवचने लृङ्" इत्यादौ भाष्ये स्पष्टम् । एवञ्च व्याख्याने किर-

णावलीमुदयनः' इत्यादि भूतत्वानद्यतनत्वपरोक्षत्वानामारोपेण उपपन्नम्। आरोपफलं तु ग्रन्थे अतिसुकरत्वशीघ्रनिष्पाद्यत्वादिप्रत्यायनम्। तत्फलं तु अध्येतॄणामर्थप्रविवेकादिफलकममुं ग्रन्थं ज्ञातुं सोत्कानामाल्हादः। परोक्षत्वारोपोऽप्येतत्फलक एव। 'एवं सूक्ष्मकालेन करिष्यामि यत्र करणकाले स्वयमपि साक्षात्कर्तुमशक्यम्' इत्येव बोधनाद् अनायासेन ग्रन्थकरणमपि व्यङ्ग्यम्। सूर्योपमाऽप्येतत्पोषिकैव। इतरग्रन्थेभ्योऽत्र ग्रन्थे तत्कर्तृभ्यश्च स्वस्मिन् व्यतिरेकोऽपि व्यङ्ग्यः। भविष्यतः प्रयोगकाले वास्तवमेव परोक्षत्वमिति न तदंशे आरोपापेक्षेत्यपि वदन्ति।

ननु 'भावि कृत्यमासीद्'इत्यनुपपन्नम्। विरोधात्। नच "धातुसम्बन्धे प्रत्ययाः"इत्यनेन भाविशब्दे प्रधानभूताख्यातानुरोधेन भूते प्रत्ययः। एवं ह्यासीद्भाविशब्दयोः पर्यायतया युगपत्प्रयोगानापत्तिः।

किञ्च भाविनो भूतकालता या प्रतिपिपादयिषिता सा नावगम्येत किन्तु 'यदिदं कर्तव्यं वस्तु तदासीदेव' इत्येव प्रतीयेतेति चेन्न। यत् कृत्यमियन्तङ्कालं भावित्वेन व्यवहृतं तद् आसीदित्यर्थात्। एवं 'ज्योतिष्टोमयाज्यस्य पुत्रो भविता' इत्यत्र 'ज्योतिष्टोमयाजी'इत्येवं व्यवहरिष्यमाणो जनितेति बोधः। एवं च तादृशवाक्यार्थे वाक्यैकदेशप्रयोगोऽयम्। अत एव तस्य सूत्रस्य विधायकत्वं भाष्ये प्रत्याख्यातम्, तत्रत्यप्रत्यया इति च प्रत्याख्यातम्।

'गोमानासीत्' इत्यत्रापि गोमद्रूपस्यातीतत्वेन तत्सत्ताया अतीतत्वात् भूते प्रत्ययः । तेनार्थाद्गवामतीतत्वप्रतीतिः । 'वसन्नवतरन्तं ददर्श' इत्यादौ दर्शनकालिकं वासावतरणयोर्वर्तमानत्वं बुद्धिस्थीकृत्य प्रत्ययः । तत्फलं च दर्शने तत्समकालत्वप्रत्ययः । शतृस्थले क्रिययोः समानकालिकत्वप्रतीतेरित्यन्यत्र विस्तरः ।

ननु "लिङ्निमित्ते लृङ् क्रियाऽनिपत्तौ" इत्यनेन भविष्यति लृङ् विधीयते । "भविष्यति मर्यादावचने" इत्यतस्तदनुवृत्तेः । क्रियातिपत्तिश्चात्यन्तं क्रियानुत्पत्तिलक्षणा । "सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यद्" इत्यादौ सुवृष्टिभवनयोः साधनवैकल्यान्नियताऽनुत्पत्तिः प्रतिपाद्यते । तत्र भविष्यत्त्वादि अनुपपन्नम् । उत्पन्नश्च सत्त्वातिक्रमेण 'भूतः' इत्युच्यते । समर्थसाधनसंभावितोत्पत्तिश्च 'भविष्यन्' इति कथ्यते । अत्र च साधनाभावात्संभाविताऽपि नोत्पत्तिरिति चेन्न । साधनाभावादभविष्यत्यपि वस्तुनि भविष्यत्त्वमारोप्यते निषेधप्रतियोगित्वायेत्यदोषात् । सुभिक्षभवनहेतुसुवृष्टिभवनं भविष्यत्त्वेनासम्भावयन्नेवमभिधत्ते । एवं हि क्रियाऽतिपत्तिरवगता भवति । एतेनारोपितस्यार्थस्य न शाब्दबोधविषयतेत्यपास्तम् । अत्र सर्वथा गत्यभावात् । एवं भूते ऽपि योज्यमिति दिक् ॥२४॥

( कुं० टी० ) *देवश्चेद्वृष्टइति । अत्र वृष्टेर्भूतत्वेऽपि शालीनां भावित्वात्सम्पन्ना इति प्रयोगोऽनुपपन्न इत्याक्षेपः ।

*इति च प्रयुक्ते इति । सम्पत्स्यन्ते इति केनचित्प्रयुक्ते तं प्रत्यन्य आह सम्पन्ना इति ब्रूहीति । *अपूशालीति । अपां शालिबीजानां यः संयोगः स एवायं निष्पत्तिपदार्थः, तस्य च भूतत्वाद् भूतत्वमित्यर्थः । *यद्वेति । बीजसंयोगरूपकारणनिष्पत्तौ कार्यायाः शालिनिष्पत्तेरारोप इत्यर्थः । *कारणमेवेति । शाल्युत्पत्तौ कारणीभूता मेघोत्पत्ति तदतीतत्वेन शालीनामतीतत्वमित्यर्थः । *मेघोत्पत्तीति । मेघोत्पत्त्यनन्तरं वृष्टेः प्राग् वास्तविकवृष्टेर्भूतत्वाभावे ऽपि सिद्ध इत्यर्थः । *स्थूलरूपेणेति । सत्कार्यवादाभिप्रायेणेदम् । ननु शालीनां निष्पत्तेर्भूतत्वे भोजनमपि कुतो नेत्यत आह *नतदैवेति । उत्पत्तेरप्यपेक्षितत्वादिति भावः । *वसन्निति । अत्र वर्तमानत्वमारोप्य शता, यद्वा दर्शनकालिकवासे वर्तमानत्वारोपः तेनोभयोः समानकालत्वस्य लाभः । *भविष्यत्त्वमारोप्यते इति । सम्भावितस्यैव निषेधात् । *असम्भावयन्निति । सम्भावनाविषयो नेत्यनुसन्दधान इत्यर्थः । *भूतेऽपीति । भूतार्थकलृङ्विषये ऽपीत्यर्थः ॥ २४ ॥

(क० टी०) पूर्वं सामान्येनोक्तमपि प्रतियोगिविशेषजिज्ञासायामग्रिमोपयोग्याह *अनद्यतनत्वमिति । मतान्तरमाह *अतीतेति । *एवम्–तत्र लिड्वत् । *शासनादित इत्यादिना व्यवहारः । लडित्याद्याद्यादिसग्राह्यमेव सविशेषमाह *तत्रेति । तेषां मध्ये इत्यर्थ. । आदिना "छन्दसि लिट्" इत्यादि । उक्तविशेष तत्राप्याह *एवमिति । तत्र लुङादिवदित्यर्थः । लृडाद्यपीत्यपिः पूर्वसमुच्चये । आदिना "यावत्पुरानिपातयोर्लट्" इत्यादि । उक्तरीत्यैव प्रतीतेराह *श्व इति । इद च "लुङ्" "भविष्यति गम्यादयः" इति सूत्रभाष्ययोः स्पष्टम् । इदमपि सिद्धशब्दान्वाख्याने उपायमात्र न त्विच्छया तथा प्रयोगो न्याय्य । ध्वनित चेदमुक्तरीत्या

सिद्धस्यापि श्वोऽग्नीनाधास्यमानेनेत्यादेः "अनद्यतने लुङ्"इति सूत्रे ऽनद्यतने इति योग विभज्यानद्यतने लृटः सत्सञ्ज्ञौ भवतः, एतद्विधानादेव चानद्यतने लृङ् ज्ञाप्यते इति प्रकारेण साधन कुर्वता "व्यत्ययो बहुलम्" इति सूत्रे कालव्यत्ययेन तस्य साधनं कुर्वता च भाष्यकृता । तद्विपरीत विशेषान्तरमाह *एवमिति । तद्वदित्यर्थः । तदभिप्रायेणैव प्रयोगादाह *अद्यतनेऽपीति । इदमपि "अनद्यतने लुङ्"इतिसूत्रे भाष्ये स्पष्टम् । *इति–इत्यादि । *देवे सति । तमेव द्रढयति *सम्पदिति । चस्त्वर्थे । इद च "क्षिप्रवचने" इति सूत्रे भाष्ये स्पष्टम् । *तदनुपपन्नमिति । तत्सम्पत्तेर्भावित्वात् । आदिसंग्राह्यमाह *निष्पदेरिति । अत्र शब्दास्वारस्यादाह *यद्वेति । ननु सा भाविनीति कथ तत्त्वमत आह *अबिति । *तस्येति । निष्पत्तेरित्यर्थ. । विशेषान्तर वक्तु प्रकारान्तरमाह *यद्वेति । *तत्र–सम्पन्नाइत्यत्र । भूते क्त इत्यत्रान्वयः । वृष्टौ शालीतिपाठ. । वृष्टौ तद्गतमतीतत्त्व शालीत्यपपाठ. । आरोपितस्यान्यत्रानारोपात् । यदि तु यत्र नोभयं तत्राय प्रकारो यत्र तु वर्षणमपि जात तत्र तद्गतस्यैव तत्रारोप उचित' साक्षात्सम्बन्धेन न तु परपरया तस्य तत्रेति तदाशयेन तद्गतमतीतत्वमिति ग्रन्थ इत्युच्यते तदाऽस्तु । *आरोप्येति । कार्यकारणयोरभेदाध्यवसायात् । ननु प्रकृते वृष्टे देवे इति प्रक्रमाद्वर्षणगतातीतत्वारोप एव तत्र वक्तुमुचित इति किमित्येवमुक्तमत आह *एतेनेति । तथा कथनेनेत्यर्थ । अपिना प्रक्रान्तसमुच्चयः । कारणान्तरापेक्षाभावेत्यत्राकारप्रश्लेष. तस्य तदेव फलम् । ननु तदानीं कार्यमपीत्यत्र भाष्यसम्मतिमाह *यथेति । तत्रत्यमेव विशेषान्तरमाह *तथेति । *अतीते–तल्लाभे । कूप इत्यस्यानुषङ्गः सर्वत्र । यथाक्रममाह *लुङ्भवतीति । तथा व्याख्यातमेव । आदिना "निष्ठा"इति । यत्तु भूषणकृद् 'व्यातेने इति त्वयुक्तमेव । उक्तरीत्या यथाकथञ्चित्परोक्षत्वोपपादने ऽपि अनद्यनत्वातीतत्वयोर्बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थे विस्तारक्रियायां चासत्त्वेन लिटोऽयोगाद्'इति । तदसदिति ध्वनयन्नाह *एवं चेति । आरोपेण भाष्ये तत्प्रयोगोपपादने चेत्यर्थ. । *तदिति । अतिसुकरत्वादिप्रत्यायनेत्यर्थः । सादृश्यप्रयोजकधर्ममाह *अर्थेति । आदिना विकासादि । ननूक्तफलमाद्ययोरित्यस्तु तदारोपः परो-

क्षत्वारोपस्य तु न फलमिति कथ तदारोपो ऽत आह *परोक्षत्वेति । तत्व विशदयति *एवमिति । तस्य फलान्तरमप्याह *अनेनेति । इद च परोक्षत्वारोपमभ्युपेत्य । वस्तुतो न तदपेक्षेत्याह *भविष्यत इति । भूताद्यशे सत्त्वादाह *तदशे इति । वदन्तीत्यनेनान्यत्र तदपेक्षारूपा तत्रेव पूर्वत्रापि इदमपि सिद्धशब्देत्यादिना प्रागुक्ताऽरुचिः सूचिता । *एवमपि—आरोपेण निर्वाहाङ्गीकारे ऽपि । आरोप एव न सम्भवतीत्याह *भूतत्वेति । वैपरीत्यनिरासायाह *प्रधानेति । हि यतः । अत एव न पञ्चमी । ननु शास्त्रबलात्तथा स्यादत आह *किञ्चेति । ब्रिर्बद्धमितिन्यायेनाह *आसीदेवेति । सूत्रप्रत्याख्यानप्रकारमाह *यत्क्त्यमिति । अध्याहारस्य खण्डितत्वादस्य तात्पर्यमाह *एवं चेति । तथाऽर्थस्येष्टत्वे चेत्यर्थ । अस्य भाष्योक्तत्वमाह *अत एवेति । उक्तप्रकाराश्रयणादेवेत्यर्थः । धातुसम्बन्धे इत्यस्योत्तरार्थमावश्यकत्वादाह *तत्रत्यमिति । *चप्रेति । प्रत्याख्यातं चेत्यर्थः । तत्प्रत्याख्याने तदन्यलक्ष्योपपत्तिमाह *गोमानित्यादि । *रूपस्य-गोमत्त्वस्य । *तत्सत्तायाः—गोमत्सत्तायाः । नन्वेव कथ गवामतीतत्वप्रत्ययो ऽत आह *तेनेति । बाह्यस्य तस्यासम्भवादाह *बुद्धिस्थीकृत्येति । एतेन "ननु चोत्पततैव वचनलोप चोदिताः स्म." इति सरूपसूत्रस्थभाष्यप्रयोगो ऽपि व्याख्यातस्तदाह *इत्यन्य त्रेति । उद्द्योतादावित्यर्थः ।

तथैव वस्तुस्तात्पर्यमाह *सुवृष्टीति । यत इत्यादि । तदेवाह *एवहीति । एतेनेत्यस्यार्थमाह *अत्रेति । *एवमिति । अत्रैव लक्ष्यभूते चेत्यस्य विषये इत्यर्थ. । अत एवादिशब्दः, उत्पन्नश्चेति च प्रागुक्तम् । तत्र हि पूर्वसूत्रमनुवर्त्तते तदाह *इति दिगिति ॥ २४ ॥

'त्वं पचसि' 'अहं पचामि' 'त्वं पाठ्यसे' 'अहं पाठ्ये' इत्यादौ मध्यमोत्तमयोः प्रत्यक्त्वमपरत्वं च कर्तृकर्मविशेषणतया बुध्यते शब्दशक्तिस्वभावात् ।

तत्र प्रत्यक्त्वं प्रयोक्तुरहङ्कारानास्पदचेतनत्वम्,

अपरत्वमहङ्कारादचेतनत्वम् ।

तदुक्तं पुरुषसमुद्देशे हरिणा—

प्रत्यक्त्वापरभावश्चेत्युपाधी कर्तृकर्मणोः ।
तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ॥
सदसद्वाऽपि चैतन्यमेताभ्यामवगम्यते ।
चैतन्यभागे प्रथमपुरुषो न तु वर्तते ॥ इति ।

तत्र कर्मविशेषणतया तयोः प्रतीतिरात्मनेपदेनैवेत्युक्तं श्रुतिविशेषेणेति। वाचकत्वं द्योतकत्वम् । एवञ्च मध्यमोत्तमौ चैतन्ययुक्ते कर्तृकर्मणी बोधयतः। नन्वेवं "श्रृणोत ग्रावाणः"इत्यादौ मध्यमो न स्यादत उक्तं सदसद्वेति । असदनभिव्यक्तम् । एवञ्च चैतन्यवत्त्वेनैव तद्बोधस्ततो ऽपि एतद्बलेनैव सर्वस्य चेतनत्वं सन्सूत्रे भाष्ये उक्तम् । तत्र हि चेतनधर्मस्याचेतने आरोपमनुक्त्वा सर्वस्य चेतनत्वे इयं श्रुतिः साध्यसाधकत्वेनोक्ता । प्रथमपुरुषस्तु चैतन्यास्पर्शेन साधनभावमात्रमवगमयति नतु चेतनत्वम् । 'काष्ठानि पचान्ति'इत्यादावज्ञानार्थधातुविषये प्रथमपुरुषान्नियमेन तदनभिव्यक्तेः । युष्मदस्मदोश्चेतनेष्वेव प्रयोगाद् मध्यमोत्तमाभ्यां तदभिव्यक्तिः । सम्बोधनार्थो मध्यमे प्रतीयते । युष्मदश्च सम्बोधन एव प्रथमेति तु न युक्तम् । 'त्वं पचसि'इत्यादौ तदप्रतीतेः । क्रियाविनियोगफलकाभिमुखीकरणस्यैव सम्बोधनत्वादित्यग्रे निरूपयिष्यामः ।

अथोपग्रहः कः पदार्थ इति चेद् ।

अत्र हरिः—

यस्त्वात्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते ।
अन्यतश्चापि लादेशान्मन्यन्ते तमुपग्रहम् ॥

अन्यतः परस्मैपदात् । उपग्रह इति तस्य पूर्वाचार्यसंज्ञा ।

तं विभजते—

क्वचित्साधनमेवासौ क्वचित्तस्य विशेषणम् ।
साधनं तत्र कर्मादि व्यक्तवाक्त्वं विशेषणम् ॥

कर्मादीत्यादिना कर्ता भावश्च । भावोऽपि तिङनुवाद्यः । क्रियाया एकपदवाच्यसाधनावेशमावेदयन् भवति साधनम् । "व्यक्तवाचां समुच्चारणे" इति व्यक्तवाक्त्वं स्वाविशिष्टस्य कर्तृतामावेदयदुपग्रहः ।

क्वचित्क्रियाविशेष उपग्रह इत्याह—

धात्वर्थस्तद्विशेषश्चाप्युक्तः क्वचिदुपग्रहः ।
धात्वर्थे गन्धनादि स्याद्व्यतीहारो विशेषणम् ॥

तद्विशेषस्तद्विशेषणम् । गन्धनावक्षेपणादयः सन्तोऽपि नात्मनेपदमृतेऽभिव्यक्ता इत्युपग्रहः । यथा 'उत्कुरुते' इति । व्यतीहारस्तु क्रियाविशेषणम् । आत्मनेपदव्यङ्ग्य उपग्रहः । 'व्यतिलुनीते' इत्यादौ ।

क्वचिद्विषयभेदेन क्रियाविशेष उपग्रह इत्याह—

क्रिया विषयभेदेन जीविकादिषु भिद्यते ॥
लादेशे स क्रियाभेदः वाक्येष्वप्यवगम्यते ॥

विषयविशेषेण धात्वर्थः क्रिया भिद्यते, सच भेदो लादेशैरभिव्यज्यते इति शेषः । यथा पचेर्जीवनोपायत्वेनानुष्ठीयमानो विक्लित्त्यनुकूलव्यापारेणान्नसंस्कारलक्षणः पाकस्तदर्थकत्वं परस्मैपदव्यङ्ग्यम् ।

यथा—पचाति यजतीति । प्रधानं ह्यत्र क्रियाफलं न कर्तृगामि, भृत्यानां भृतिमात्रार्थित्वात् । यजमानादीनां तु पाकादिसामग्रीसङ्घटनरूपं प्रतिविधानं तदर्थः । तदर्थकत्व चात्मनेपदव्यङ्ग्यम् ।

'यत् क्रियाफलं कर्तृगामि तद्वृत्तिधातोरात्मनेपदम्' इति "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति सूत्रार्थः ।

म क्रियाभेदः—'स्वं यज्ञं यजते, यजति'इत्यादौ वाक्ये स्वादिपदेनापि गम्यते । "विभाषोपपदेन"इति तत्र पदद्वयमित्यर्थं हेलाराजः ।

अत एवोक्तम्—"स्वरितञितः" इत्यत्र भाष्ये "स्वरितञितः' इति शक्यमकर्तुम् । यात्यादिषु कस्मान्न भवति, कर्त्रभिप्राये क्रियाफले इत्युच्यते । सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति । त एव विज्ञास्यामः—येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्मनेपदं भवतीति । न चैषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति । तथाजातीयकाः खल्वप्याचार्येण स्वरितञितः पठिताः । ये उभयवन्तः । येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति" इति ।

अनेन च भाष्येणाकर्त्रभिप्रायक्रियाफलाभावप्रयुक्तो यात्यादिषु उभयाभावो लभ्यते ।

ननु यात्यादिष्वपि—'सेना प्रयाति, पित्रर्थं तीर्थानि गच्छति'इत्यादौ पराभिप्रेतं जयधर्मादि फलमस्तीति चेन्न । भाष्ये चश्रवणात्कर्त्रभिप्रायमेवाकर्त्रभिप्रायमेव

च क्रियाफलमस्तीत्यर्थाद् । इदं चोभयाभिप्रेतमिति न तथेत्यभिप्रायः । तत्र यजेर्ऋत्विग्व्यापारवचनत्वे कर्त्रभिप्रेतनत्फलाभावः । यजमानस्य तदा कर्तृत्वाभावात् । यजमानव्यापारवचनत्वे तद्वत्त्वम् । उभयवचनत्वे 'स्वामिदासौ' इति वक्ष्यमाणवत्प्रयोग इति तदाशयः ।

ननु पचादीनां विक्लित्त्यादिवचनत्वात्कथं प्रतिविधानमर्थः । किञ्च तदर्थत्वाभावे कर्त्रभिप्रेतक्रियाफलाप्रसिद्धिरत आह—

संविधानं पचादीनां क्वचिदर्थः प्रतीयते ।
तन्निमित्ता[1] यथाऽन्यापि क्रिया ऽधिश्रयणादिका ॥

"कः पचेः प्रधानार्थः याऽसौ तण्डुलानां विक्लित्तिः। अथेदानीं तदभिसन्धानपूर्वकमध्येषणं प्रेषणं वा युक्तं यत्सर्वं पच्यर्थः स्याद् ? बाढं युक्तम्" इति "हेतुमतिच" इति सूत्रभाष्योक्तेः संविधानमपि सामग्रीसंघटनरूपं पच्याद्यर्थः । यथा विक्लित्त्यर्थस्यापि पचेरधिश्रयणादिः कर्तृव्यापारो ऽर्थः—'देवदत्तः पचाति' इति । अन्यथा देवदत्तस्य कर्तृत्वानापत्तिः । णिच् तु न । नहि संविधानमेव णिजर्थः, अपि तु तत्पूर्वकं प्रेरणम् । यत्र सति प्रयोजक इत्युच्यते । संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत्प्रयोजक इत्युच्यत इति हेलाराजः ।

'भिक्षा वासयति, कारीषो ऽग्निरध्यापयति'

(१) तन्निमित्तमिति पाठ कलासमतः । मूलपुस्तकत्रितये तन्निमित्तेत्युपलम्भात्स एव मूलेऽवस्थापित. ।

इत्यादावपि प्रयोजकत्वारोपो बोध्यः । "तूष्णीमासीनो यस्तत्समर्थान्याचरति सोऽपि वासादिप्रयोजकः" इति भाष्यात् । तत्समर्थाचरणमात्रेण तत्प्रयोजकत्वारोप इति तदर्थः । अत एवायं यज्ञसम्भारान् संघटयति कं वा प्रेरयिष्यत्यार्त्विज्यायेति न जानीम इति व्यवहारः ।

ननु "स्वरितञितः"इतिसूत्रादयमर्थः कथं लभ्यते तत्राह—

कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम् ।
तथाभूता क्रिया सा हि तत्कर्ता फलभाग्यतः ॥

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानक्रिया निर्दिश्यते"नक्षत्रं दृष्ट्वा वाचं विसृजेद्"इत्यत्र नक्षत्रदर्शनेन कालविशेषनिर्देशवत् । यत एवंरूपक्रियायाः कर्ता फलेन युज्यते । नह्यसंविदधद्यागादि तत्फलं स्वर्गाद्यश्नुते । ततश्च कार्यभूतफलसंबन्धेन कारणभूताक्रियाविशेष उपलभ्यते तद्वाचकाद्धातोरात्मनेपदमित्युक्तं भवति ।

संविधानोपलक्षणं क्रियाफलं किं तत्राह—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत् प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥

तदेव सूत्रे क्रियाफलशब्देन गृह्यते इति भावः । तच्च पाकस्य भोजनं लोकतोऽवगतम् । यागस्य स्वर्गो वेदतः । तदुक्तं भाष्ये—"साधीयो यत्र कर्तारं क्रियाफलमभिप्रैति । नचान्तरेण यजिं याजिफलम्, वपिं च वपिफलं लभते । याजकाः पुनरन्तरेणापि यजिं गां-

लभन्ते, भृतकाश्च वेतनम्" इति ।

यत्र यस्यां क्रियायां सत्यामित्यर्थः । साधीयः क्रियाफलं स्वर्गादि । यजिं यागसंविधानरूपयज्यर्थम् । एवं वपिमित्यपि । अन्तरेणापि याजिम्-स्वसाध्ययागव्यापारं विनाऽपि ।

मतान्तरमाह—

क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता ।
असती वा सती वाऽपि विवक्षितनिबन्धना ॥

"सर्व इमे स्वभूत्यर्थं प्रवर्त्तन्ते, नहि कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते" इति भाष्योक्तेः सर्वस्य स्वार्थप्रवृत्त्या स्वार्थता सर्वत्र मुख्या । परार्थता त्वसत्येव । सतीवेति तु लौकिकी वाचोयुक्तिः । विवक्षितं विवक्षा सा निबन्धनं हेतुरस्याः परार्थताया इत्यर्थः ।

एवंचासत्परार्थताविवक्षायां माभूदात्मनेपदमिति कर्त्रभिप्राय इत्यनेन क्रियाफलं विशेषितम् । सूत्रार्थस्त्वेतत्पक्षे क्रियाफलके यते कर्त्रभिप्रेतोद्देश्यके आत्मनेपदमित्यर्थः । अत्र कश्चिदित्यनेनारुचिर्बोधिता । तद्बीज तु 'यजन्ते ऋत्विजः' इत्यादेरप्यापत्तिः । यः स्वर्गादिफलार्थं निर्वेशेनेतरं व्यापारयति स्वयं च प्रतिविधानमारभते तत्रैव यजमानादौ कर्तर्यात्मनेपदमिष्यते । यस्तु भृतिरूपनिर्वेशमात्रफलः स्वामिचित्तानुवर्तनादेव कृतार्थतां मन्यते तत्र नात्मनेपदं भृत्यादाविताति हेलाराजः ।

किञ्च स्वरितञिद्ग्रहणप्रत्याख्यानशोक्तभाष्यविरुद्धमिदम् तेनार्थद्वयवाचकत्व स्वाभाविकं यत्रास्ति ते-

ऽत्र विषया इति स्पष्टमेवोक्तं कस्तत्र विवक्षाया उपयोगः ।

किञ्च फलस्य स्वर्गादेरेवात्र ग्रहणमित्यर्थस्य भाष्यसंमनत्वेन क्रियाप्रवृत्तावित्यसङ्गतम् ।

किञ्च प्रवृत्तेः सर्वत्र स्वार्थोद्देश्यकत्वेन तत्र परार्थोद्देश्यकत्वे विवक्षाऽत्यन्तमनुचितैवेति दिक् ॥ २५ ॥

(कुं० टी०) अहङ्कारास्पदत्वम् 'अहम्' इतिप्रत्ययविषयत्वम् । अचेतने प्रयोगस्त्वारोपात् । *सर्वस्य चेतनत्वमिति । तेन 'कूलं पिपतिषति'इत्यादिसिद्धिः । सर्वत्र परिणामदर्शनाच्चैतन्याधिष्ठानं विना च तदसम्भव इति भावः । सकलचेतनकार्यं तु न भवति पदार्थानां विचित्रत्वात् । मनुष्याणामपि हि नानाजातीय एव व्यवहारो दृश्यते । *सम्बोधनार्थइति । यथा हि माणवकाधीष्वेत्यभिमुखीभावो गम्यते, एवमधीष्वेत्यत्रापि । अत एव युष्मदः सर्वत्र सम्बोधने प्रथमामिच्छन्ति ।

तदाहुः—

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः ॥ इति ।

अन्येतु अभिमुखीभावस्य प्रातिपदिकार्थ एवान्तर्भावान्न सम्बोधने प्रथमेत्याहुः । उपग्रहशब्दो भेदलभ्ये प्रसिद्धः । तत्र कस्य कथं भेदलभ्यत्वमिति निर्णेतुं पृच्छति *अथेति । *आत्मनेपदादिति । आत्मनेपदलभ्य इत्यर्थः । *साधनमिति । उपग्रह इति शेषः । तदुदाहरति *व्यक्तवाचामिति । अत्र बहुव्रीहिणा कर्तॄणामेव भेदकत्वम् । *तद्विशेषः—धात्वर्थविशेषणम् । *जीविकादिषु-जीविकाकुलायकरणेष्वित्यादिषु । *प्रधानमिति । तच्च भो-

जनम् । संघटनं सम्पादनम् । *व्यङ्ग्यमिति । धातूनामने-कार्थतया संविधानमपि धात्वर्थः । तद्द्योतकमात्मनेपदमि-त्यर्थ । *यात्यादिष्विति । राजा याति, सेना यातीत्यादौ क्रि-याफलस्य जयस्य कर्तृगामित्वतदभावयोर्दर्शनात् । *नचैषा-मिति । यात्यादीनां तु कर्त्रभिप्रायमेव क्रियाफलमस्तीति भा-वः । *अनेनचेति । यात्यादावकर्त्रभिप्रायं क्रियाफलं नास्ती-त्यत उभयाभाव इत्यर्थः । शब्दशक्तिस्वभावाच्च स्वरितञित एवोभयवन्तो नान्ये । *कर्त्रभिप्रायमेवेति । एकैकमात्रगामि यत्र भिन्नं भिन्नं फलमित्यर्थः । *इदंचेति । सेना प्रयातीत्यत्र जयरूपं फलमुभयाभिप्रेतमित्यर्थः । यज्यादावुभयगामिफलं दर्श-यति *ऋत्विग्व्यापारेति । स च प्रक्षेपादिः । *तद्वत्त्वम्—कर्तृगा-मिफलकत्वम् । कथं तर्हि "आत्मने वा यजमानाय वा यं यं कामं कामयते तं तमाशासानि" इति ऋत्विजां फलसम्बन्धः श्रूयत इति चेन्न । तस्य वाचनिकत्वात् । औडुलोमिस्त्वाह—स्वामिकर्माण्युपास-नानीत्ययुक्तम् । साङ्गकर्मणे हि ऋत्विग् यजमानेन परिक्रीयते । त-स्माद्गोदोहनादिवदुद्गीथाद्युपासनान्यपि ऋत्विग्विनिवर्त्यानि इति । "यां काञ्चन यज्ञ ऋत्विज आशिषमाशासते यजमानायैव तामाशा-सते" इति श्रुतेश्च । *क्रियाफलासिद्धिरिति । संविधातुर्यजमानस्य कर्तृत्वाभावात् । *संविधानमिति । पचते इत्यादौ संविधानं पचा-दीनामर्थ इत्यर्थः । *तन्निमित्तत्वमिति । फलार्थप्रेरणस्य धात्वर्थ-त्वाण्णिचो द्योतकत्वमपि भाष्यकारोऽव्यवस्थापयति *कः पचे-रिति । सकलक्रियाणां विक्लित्त्यर्थत्वात्सैव प्रधानं तदनुकूलानां फूत्कारादीनां व्यापाराणां यथा प्रेरणादीनामप्युचितमित्य-र्थः । ननु संविधानस्य धात्वर्थत्वे तद्द्योतनाय यथा तङ् प्रयुज्यते तथा पाचयतीत्यपि स्यादत आह *णिचूतुनेति । प्रेरण-

स्य चेतनधर्मत्वमाशङ्क्याह *भिक्षेति । तदुक्तं भाष्ये "भिक्षाच प्रचुरा व्यञ्जनवती लभ्यमाना संप्रयोजयति, कारीषोऽग्निर्निवाते-एकान्ते सुप्रज्वालितोऽध्ययनं प्रयोजयति" इति । *क्रियाभेदेति । तद्समभिव्याहारे संविधानरूपा क्रिया प्रतीयते इत्यर्थः । *यस्यार्थस्य–भोजनादेः । *पचादयः–पाकादयः । *लाभादि–वेतनादि । किन्तत्साधीयः क्रियाफलं तत्राह *नचान्तरेणेति । यज्यादिफलमन्तरेण यजिक्रियां नैव लभते तदित्यर्थः । गवादिषु व्यतिरेकं दर्शयति *याजकाइति । नहि स्वर्गादि फलं यागमन्तरेण भवति, गोलाभस्तु प्रतिग्रहेणापि भवतीति भावः । *क्रियाप्रवृत्ताविति । यज्यादौ परार्थत्वविवक्षा नास्त्येव । एवं च स्वार्थत्वपरार्थत्वोभयविवक्षावतां धातूनां स्वार्थत्वविवक्षाया तङानौ इति सूत्रार्थः । एवं च विवक्षाग्रहणात् 'कमलवनोद्घाटनं कुर्वते ये' इति सिद्धम् । क्रियामात्रविवक्षायां 'स्वामिदासौ पचत' इति । एषाच विवक्षा स्वरितञिद्विषयैव । आदित्योद्गमनं सम्भावयति आदित्यमुद्‌गमयतीत्यादीनुपसंख्येयान्प्रयोगान् भाष्यकारः सूत्रेणैव साधयति *सर्वइति । सूर्योऽपि स्वाभिप्राये वर्तते ततो णिच् । *स्वयंचेति ।

अयम्भावः–यद्यपि "स्वर्गकामो यजेत" इत्यत्र स्वर्गकामस्य यागकर्तृत्वमवगतं यजेतेत्यात्मनेपदं च क्रियाफलस्य कर्तृगामित्वे एवोपपद्यते इति यजमानस्यैव निखिलकर्मानुष्ठानं प्राप्तं तथापि 'पञ्चभिर्हलैः कृषति' इत्यादाविव प्रयोजकतयैव कर्तृत्वमिति । *दिगिति । ब्राह्मणाय गां ददाति, हरिं भजतीत्यादावात्मगामिक्रियाफले परस्मैपदं कथमिति चिन्त्यम् ॥ २५ ॥

(क० टी०) विशेषान्तर वक्तुं सर्वसाधारण विशेषमाह *स्व-

मित्यादिना । *मध्यमोत्तमयो –विषये इति शेष । यथासख्यमाह *प्रत्यक्त्वमिति । *बुध्यते–अर्थान्मध्यमोत्तमाभ्यामेव । तत्र बीजमाह *शब्देति । *तत्र–तयोर्मध्ये । युष्मदस्मदर्थौ क्रमेणाह *अहङ्कारेत्यादि । अपरभावो ऽपरत्वम् । *उपाधी–तयो॰ प्रत्येकमेते विशेषणे । *तयो॰–प्रत्यक्त्वापरत्वयोः । एवमग्रे । *एताभ्याम्–मध्यमोत्तमाभ्याम् । *चैतन्यभागे–चैतन्यरूपविशेषांशे । *तत्र–कर्तृकर्मणोर्मध्ये । तत्र तस्यैव विधानात् । पूर्वसिद्धान्ताविरोधायाह *द्योतकत्वमिति । एव सति तात्पर्यार्थमाह *एव चेति । द्योतकत्वे चेत्यर्थ. । *एवम्–चैतन्ययुक्तयोरेव ताभ्या बोधे । ननु चैतन्यस्यासत्त्व विरुद्धमत आह *अनभीति । अस्य तात्पर्यार्थमाह *एवचेति । तत्सत्ताया. सार्वत्रिकत्वेन तदभिव्यक्त्यनपेक्षणे चेत्यर्थः । तस्यामपि कर्त्रादिबोधस्तैनैवेत्यर्थः । अत्र भाष्यसमतिमप्याह *एतदिति । उक्तश्रुतीत्यर्थ. । चेतनत्वमिति पाठ. चेतनावत्त्वमिति वा । "धातो कर्मणः" इति सूत्रे "आशङ्कायाम्"इति वार्त्तिकप्रत्याख्यानाय पक्षद्वयमुक्त्वा तृतीयपक्षत्वेन सर्वस्य वा चेतनावत्त्वादित्युक्तत्वात् । तदाह *तत्रहीति । चैतन्यभागे इत्यर्धार्थमाह *प्रथमेति । स्पष्टार्थमात्रपदव्यावर्त्य स्पष्टयति *नत्विति । अस्पर्शेनेत्यनेन तत्सत्ता सूचिता । चैत्रः पचतीत्यादौ तत्प्रतीतेराह *काष्ठानीति । तत्रापि ज्ञानार्थकधातुयोगे तत्त्वादाह *अज्ञानेति । तत्रापि कृञादियोगे क्वचित्सत्त्वादाह *नियमेनेति । प्रकृते तनो वैलक्षण्यमाह *युष्मदिति । *तदिति । नियमेनेत्यादिः । प्राचोक्तयुक्ति खण्डयति *सबोधनेति । तद्रूपो ऽर्थ इत्यर्थः । सच चेतनधर्म इति तत्र तत्प्रतीतिरिति भाव. । *तदिति । सबोधनेत्यर्थ. । तदसम्भवमेवाह *क्रियेति । *अग्रे-प्रथमाकारके । श्रुतिविशेषेणेति हर्युक्तात्मनेपदप्रसङ्गेन तदुक्तमप्यद्वक्तु शङ्कते *अथोपग्रह इति । भेदो विशेष. । गम्यते इत्यत्र मध्यपठिते पञ्चम्यन्तद्वयान्वय. । *सञ्ज्ञेति । तदुपयोगस्तु सुप्तिङुपग्रहनराणामित्यादौ बोध्य. । *विभजते–स एव । एवमग्रेऽपि । *असौ–उपग्रह. । *तस्य–साधनस्य । *तत्र–तयोर्मध्ये । ननु भावस्य धात्वर्थत्वेन न साधनत्वमत आह *भावोऽपीति । अनतिप्रसङ्गायाह *तिङेति । हेतुगर्भविशेषणम् । अत एवाह *क्रियाया इति । साधनानावेशमिति पाठः । तत्रानावेशमित्यर्थ. ।

अनिवेशमिति पाठान्तरम् । तथा च तदनिवेशेन कर्तृत्वात्तत्त्वमि-त्यर्थः। ननु व्यक्तवाक्त्व न तद्बोध्यमिति कथ तस्य तत्त्वमत आह *व्यक्तवाक्त्वमिति । तथाच विशिष्ट तत्त्वेन तद्विशेषणस्या-पि तत्त्वमिति भाव । क्रियाविशेषावुपेति पाठ । क्रिया-च विशेषश्चेति द्वन्द्व· । विशेषस्तद्विशेषणम् । पूर्वार्धे उत्तरार्द्ध-विरोध परिहरति *तद्विशेषणमिति । ननु गन्धनाद-यो धात्वर्था एवेति न तद्गम्या इति कथ तत्त्वमत आह *गन्ध नेति । तथैवाह *व्यतिहारइति । *क्रियेति । भिन्न पदम् । *जी-विकादिष्विति विषयसप्तमी । भेदपदार्थ·–*विशेषेति । क्रियेत्यस्य व्याख्या *धात्वर्थ इति । पूर्वार्द्धार्थमुक्त्वा तृतीयपादार्थमाह *सचेति । तमेवोदाहरणतः प्रदर्शयति *यथेति । *पचेरित्यस्य पा-क इत्यत्रान्वय । अन्नसस्कारस्यान्यथाऽपि सम्भवादाह *विक्लित्त्ये-ति । तद्धेतुक स विक्लित्त्यादिरूपो धात्वर्थ इति भाव । *प्रधानम्–भोजनम् । जीविकादीत्यादिग्राह्यमाह *यजमानेति । *तदर्थ –धात्व-र्थः । तत्रैव कुत आत्मनेपदमित्यत आह *यदिति । तुर्यपादार्थे 'स क्रियाभेद' इत्यस्यानुषङ्गेणाह *सक्रियेति । अपे· शेषेणान्वयमाह *स्वादीनि । अपि पूर्वसमुच्चये, नात्रैव तत्समुच्चये । तदाह *विभाषेति । यत इत्यादिः । अत्र भाष्यसमतिमाह *अतएवेति । तद्भेदेन धात्वर्थभेदादेवेत्यर्थ· । द्वितीयेत्यन्तो भाष्यग्रन्थः । *सर्वेषाम्–सर्वधातूनाम् । *ते–वयम् । *येषाम्–धातूनाम् *नच–नहि । *एषाम्–यज्यादीनाम् । उक्तमेव विषयप्रदर्शनेन द्रढयति *तथेति । अस्य व्याख्या *ये उभयवन्तइति । परस्मैपदात्मनेपदवन्त इत्यर्थः । तत्र बीजमाह *येषामिति । शङ्कितु तावद् भाष्यता त्पर्यमाह *अनेनचेति । अस्माद्भाष्यादित्यर्थ । अत एव शङ्कते *नन्विति । *चश्रवणादिति । चद्वयेत्यर्थ· । निपातानामनेकार्थत्वात् सोऽवधारणार्थ इति भाव । गामश्वमितिवदाह *एवचेति । *इद च–जयधर्मादिरूपम् । *न तथा–तादृशोभयाभिन्नम् । अत एवेत्युक्त विशदयति *तत्रेति । तेषामर्थानां मध्ये इत्यर्थ· । *फलाभाव इति । तथा च तत्र परस्मैपदम् । *तद्वत्त्वम्—कर्त्रभिप्रेततत्फ लवत्त्वम् । तथा च तत्रात्मनेपदम् । ननु स्वामिदासयोर्युगपत्कर्त्तृ-त्वविवक्षायां स्वार्थवृत्तिताप्रयुक्तात्मनेपदस्य दासेनान्वयाभावात्प-

रार्थत्वप्रयुक्तपरस्मैपदस्य स्वामिनाऽनन्वयादप्राप्त्येदृशे विषये तिङन्तप्रयोगो न स्यादत आह *उभेति । *तदाशयः—उक्तभाष्याशयः । तत्र शङ्कते *नन्विति । तेन प्रतिविधानम् । हेलाराजमाह *कइति । प्रधानोऽर्थ इत्यर्थः । *याऽसाविति । तदर्थत्वात्कारकग्रामस्य तदनन्तरं च फलोत्पादादिति भावः । हरिरपि—

अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता ॥ इति ।

*तदभिसन्धिपूर्वकमिति । तद्विशेषणभूतमिति शेषः । *वा युक्तमिति । वा सर्वं पच्यर्थः इति स्याद् युक्तमेवेत्यर्थः । कैयटाद्युक्तसाङ्गत्यायाह *सामग्रीति । *तन्निमित्तमिति । पूर्वान्वयि । फलजनकमिति तदर्थः । अनेन तत्त्वबीजमनतिप्रसङ्गश्चोक्तः । अस्याग्रेऽप्यन्वयो लिङ्गभेदेनेत्यभिप्रेत्य "यथान्याऽपि" इति व्याचष्टे *यथेति । ननु तत्र णिच् कुतो नात आह *णिच्त्विति । *हि-यतः । *यन्त्र-प्रेरणे । *संविधानमित्यस्य यत इत्यादिः । नन्वेवं भिक्षादावचेतनत्वेन प्रेरणाद्यसंभवात् तत्र कथं णिजत आह *भिक्षेति । "हेतुमति च" इति सूत्रस्थभाष्यमाह *तूष्णीमासीनइति । निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः । *तदर्थः-उक्तभाष्यार्थः । *तत्र-भिक्षायाम् । तत्समर्थाचरणं लभ्यमानात्वप्रचुरात्वव्यञ्जनवतीत्वरूपम् । तद् अग्नौ निर्वाते एकान्ते सुप्रज्वलितत्वरूपं बोध्यम् । *अत एव-प्रेरणसंविधानयोर्भेदादेव । कारिकायामेकदेशेन विशिष्टग्रहणमित्याह *कर्त्रभिप्रायेति । क्रियाभेदमाह *संविधानेति । *हि-यतः । *तथाभूता-फलजनिका । *सा-संविधानरूपा । क्रिया धात्वर्थ इति तृतीयपादार्थमभिप्रेत्य तुर्यपादार्थमाह *यतइति । तदुपपादयति *नह्येति । *यागादीति । पूर्वान्वयि । तात्पर्यार्थे शङ्कानिरासायाह *ततश्चेति । *संविधानेति । तत्पुरुषः । *यस्येति । एवाध्याहारेण यत्सिध्यर्थं पचादय एवारभ्यन्त इत्यर्थः । तत्तात्पर्यमाह *तदेवेति । *भाष्ये-"स्वरितञित." इत्यत्रैव । यत्रेत्यस्यार्थमाह *यस्यामिति । संविधानरूपायामित्यर्थः । साधीय इत्यस्य क्रियाफलेनान्वय इत्याह *सा-

(१) तच्छब्देनात्र संविधानं गृह्यते ।

धीय इति । किन्तत्साधीयः क्रियाफलमित्याशङ्कायामुक्तम् । *नचा-न्तरेणेति । यद्यज्यादिफलमन्तरेण यजिक्रियां नच नैव लभन्ते त-दिति तदर्थस्तदाह *स्वर्गादीत्यादि । इकार उच्चारणार्थ इत्या-ह *यागेति । गवादिषु च तद्व्यतिरेकदर्शनायोक्तम् *याजकाः पुन-रिति। प्रतिग्रहादिनेति भाव । *चोऽय त्वर्थे। *यागेति । अग्नौ हविः-प्रक्षेपादिरूपेत्यर्थः । यद्यपि दानादिनाऽपि स्वर्गो भवति तथा ऽपि स्वर्गविशेषनियतत्वादनन्यलभ्यत्वमिति बोध्यम । मिथो ऽविरोधायाह *मतान्तरेति । आख्यातानिमित्तत्वेनेति शेष । हेलाराजमाह *सर्वैइति । *असत्येवेति। एव च स्वार्थतायां सतीत्वमेव, परार्थतायामसतीत्वमेवेति प्रत्येकं विकल्पासङ्ग-तिरत आह *सतीवेतीति । पूर्वो वा एवार्थः परार्थतामात्राभि प्राय । एव विकल्प इति भाव । नत्वसत्यास्तस्या. कथ तत्र नि-मित्तत्वमत आह *विवक्षितमिति । भावे क्त इत्याह *विवक्षेति । उत्तरार्धं सर्व परार्थनाविषयमित्याह *परेति । स्वार्थतायास्तु स-र्वत्र सत्त्वेन विवक्षाऽनुपयोगात् । तात्पर्यार्थमाह *एव चेति । विव-क्षिताया अपि तस्यास्तन्निमित्तत्वे चेत्यर्थः । सूत्रे क्रियाफले इति बहुव्रीहिः । कर्त्रभिप्राये इति अर्शआद्यजन्तं तदाह *क्रियाफ-लके इत्यादि । फलद्वारा क्रियैव कर्त्रर्था यत्र तत्रात्मनेपदमिति फ-लितम् । *अत्र-मतान्तरे। ननु तदिष्टमेवात आह * यइति । *निर्वे-शेन-भृत्या । *यस्तु-ऋत्विक् । *तत्र-भृत्यादौ। *भृत्यादाविति । नेत्यन्वय । स्वय दूषणान्तरमाह *किञ्चेति। *प्रत्याख्यानस्थोक्तेति । तत्परप्रागुक्तेत्यर्थ । विरोधमेवाह *तेनेति । भाष्येणेत्यर्थः। कइत्य-स्यास्तीत्यादिः । दोषान्तरमाह *किञ्चेति । एतेनैतन्मतप्रतिपादक-कैयटादिग्रन्था निरस्ता इत्यन्यत्र स्पष्ट तदाह *इति दिगिति ॥ २५ ॥

केचित्तु प्रतिविधानार्थादपि तदर्थद्योतकमात्म-नेपदं णिचा सह विकल्पते । संविधानमात्रं णिजर्थः । "सर्वे इमे स्वभृत्यर्थं प्रवर्तन्ते" इति न्यायेन स्वार्थे प्रवर्तमानस्य प्रयोज्यस्यानुकूल्यकर्ता संविधातोच्यते। प्रैषस्तु न णिजर्थः । एवंचैकविषयत्वात्तयोः पर्याय-

त्वम्-यजते याजयतीति वदन्ति ।

तन्मतमाह—

केषाञ्चित्कर्त्रभिप्राये णिचा सह विकल्पते ।
आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥

णिचा सह णिजर्था प्रकृतिर्धातुर्यथा विकल्पते तद्वत् । अन्येषां स्वरितञिद्व्यतिरिक्तधातूनाम् ।

"हेतुमतिच"इत्यस्यापि संविधानरूपे व्यापारे वर्त्तमानाद्धातोर्णिजित्यर्थः । यजतेश्च संविधानमेवार्थः । पाचयतीत्यादावप्येवमित्येतन्मतम् ।

वस्ततो णिच्प्रेरणावाची । "तत्प्रयोजको हेतुश्च"इति सूत्रात् ।

अत एव तदाश्रयस्य कर्त्तृत्वम् । अत एव 'पाचयति देवदत्तो यज्ञदत्तेन'इत्यादिप्रयोगाः,"गतिबुद्धीतिसूत्रं च चारितार्थम् ।

एवञ्च भिन्नविषयत्वाद्विकल्पोक्तिरसङ्गता ।

किञ्च सामान्यविहितस्य णिचो धातुविशेषाद्विहितेनात्मनेपदेन बाध एवोचितः । एतच्च केषांचिदित्यनेन सूचितमिति हेलाराजः ।

अथैतेषां णिजात्मनेपदयोर्विकल्पभ्रमबीजं दर्शयति—

क्रीणीष्व पचते धत्ते चिनोति चिनुते ऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थो ऽभिधीयते ॥

आत्मानं क्रीणीष्वेति विनतां कद्रूराह । तस्य च दास्यादात्मनो मोचनाय पुत्रसंविधानं कुर्वित्यर्थ इति तेषां तद्भ्रमबीजम् । तत्र प्रत्युपकाराद्विना दास्यमुत्यस-

म्भवात्, प्रत्युपकारस्य च स्वासाध्यत्वादर्थसामर्थ्या-त्पुत्रसंविधानं गम्यते न तु स तदर्थ इति स तेषां भ्रमः। एवं "केशश्मश्रु वपते" इत्यत्र वपनकर्तुः संवि-धानं कुरुते इत्यर्थ इति तेषां भ्रमबीजम्। तत्रापि स्वस्यासामर्थ्येन सामर्थ्यात्तद्गम्यते इति तेषां भ्रमः। एवमन्यत्राप्यूह्यमिति हेलाराजः।

अथ सिद्धान्ते शङ्कते—

यत्रोभौ स्वामिदासौ तु प्रारभेते सह क्रियाम्।
युगपद्धर्मभेदेन धातुस्तत्र न वर्तते॥

स्वामिसाध्यं सम्भारघटनरूपं संविधानम्, दास-साध्यं तु विक्लित्तिपर्यन्तं साधनविनियोगरूपम्। तत्र भिन्नत्वाद्व्यापारस्य युगपदेकधातुवाच्यत्वासम्भवेन किं संविधानापेक्षमात्मनेपदं किं वा संस्कारकापेक्षं परस्मैपदमिति संशयः। अनेकार्थत्वाद्धातूनां युगपद-र्थद्वयाभिधाने ऽप्येकत्र प्रयोगे विरुद्धलादेशद्वयानुपप-त्त्या स एव संशय इति हेलाराजः। नच क्रियागत-विशेषमविवक्षितं कृत्वा क्रियामात्रे साधनभावमा-त्रविवक्षायामत्र परस्मैपदं युक्तमिति वाच्यम्। तया क्रियया स्वामिनो भोजनस्य लाभेन दासस्य श्रममा-त्रलाभेन पूर्वपक्षस्यैव सिद्धेः।

किञ्चैवंरीत्या यजति यजमान इत्यस्याप्यापत्तिः।

नचेष्टापत्तिः। तदा कर्तृगामिनो ऽकर्तृगामिन-श्च फलस्याभावेन "स्वरितञित उभयवन्त" इति भा-ष्यस्यासङ्गतेः।

अत्र स्वामिपदार्थसामर्थ्यात्तद्गतं संविधानमव-

गतं दासपदार्थसामर्थ्याच्च तत्क्रियायाः परार्थत्वमवगतमिति नात्राख्यातस्य व्यापार इति शेषत्वात्परस्मैपदमिति केचित् ।

एवमपि पूर्वपक्षस्यैव सिद्धिरित्यन्ये ।

समाधत्ते—

संविधातुश्च सांनिध्याद् दासे धर्मोऽनुषजते ।
छत्रिणा चापि संबन्धाच्छत्रिशब्दाभिधेयता ॥

उत्तरार्धस्य यथेत्यादिः । दासधर्मस्य तु न स्वामिन्यारोपः । उत्तमे निकृष्टधर्मारोपाप्रतीतेरित्यलं विस्तरेण ।

"अग्नीनादधीत"इत्यत्र यद्यप्याधानफलमाहवनीयत्वादि अग्निनिष्ठं तथाऽपि यज्ञहोमादिसुखलाभरूपं कर्तृगतमप्यस्ति तदादायात्मनेपदम् । आहवनीयत्वादेराधानसंस्कारातिरिक्तत्वे मानाभावेन तस्य च धात्वर्थतया तदतिरिक्तस्यैव मदुक्तस्य तत्फलत्वौचित्यात् । स्पष्टं चेदम् "एकः पूर्वपरयोः"इति सूत्रे भाष्ये ।

एतेन कर्त्रभिप्रेतत्वं फले कर्त्रर्थत्वमेव नतु कर्तृसमवेतत्वमिति पार्थसारथ्युक्तमपास्तम् ॥ २६ ॥

(कुं०टी०) *केचित्त्विति । संविधानरूपधात्वर्थद्योतको यथा तङ् तथा णिजपीत्यर्थः । नन्वेवं संविधानस्य णिचा द्योतितत्वात्पाचयते इति तङ् न स्याद्,सत्यम् । द्वितीयं संविधानन्तत्रार्थः । *संविधानरूपे इति । हेतुमान् व्यापारः । तत्र वर्तमानाद्धातोर्णिजिति व्यापारमात्रस्य च धातुवाच्यत्वाण्णिज् द्योतक इति भावः । ननु त्यागो यज्यर्थ इत्यत आह *यजतेश्चेति । *इतिसूत्रा-

दिति । धात्वर्थव्यापाराश्रयकर्तुः प्रयोजकस्य हेतुसंज्ञाविधानात् । *इत्यादिप्रयोगाइति । प्रकृत्यर्थत्वे उभयोः कर्त्रोर्लेनाभिधानं स्यात्, प्रत्ययार्थत्वे तदर्थकर्तुरभिधानम् । *सूत्रं च चरितार्थमिति । कर्तृत्वे प्राप्ते कर्मत्वविधानात् । *केशश्मश्रु वपते इति । अत्रात्मनेपदेन यजमानसंस्कारो लभ्यते । नहि अध्वर्युसंस्कार आत्मगामिफलार्थः, वपनादिसंस्काराणां मालिन्यापनयनेन फलयोग्यतासम्पादनार्थत्वात् । *क्रियागतविशेषमिति । आत्मगामित्वाद्यविवक्षयेत्यर्थः । *छत्रिणा चापीति । यथा छत्रिसांनिध्यादच्छत्रिणामपि छत्रित्वम् । *निकृष्टधर्मेति । अत एव "आदित्यो ब्रह्म प्राणो ब्रह्म"इति श्रुतिमुदाहृत्य "आदित्ये ब्रह्मदृष्टिः कार्या नतु ब्रह्मणि आदित्यदृष्टिः"इति स्पष्टं शारीरकभाष्ये । *आहवनीयत्वादीति । आधानस्याग्निसंस्कारार्थत्वादाहवनीयत्वं सिध्यतीति भावः ॥ २६ ॥

( क० टी० ) अविरोधायैवात्र मतभेदसूचकाभावात्तौल्येनाह *केचित्त्विति । अपि. सिद्धान्ते प्रेरणासमुच्चायक' । *तत्–प्रतिविधानम् । ननु णिचः प्रेरणार्थत्वेन कथमिदमत आह *सविधानमिति । नन्वेव प्रयोज्यस्य प्रवृत्तिरेव न स्यादत आह *सर्वेइति । हेलाराजमाह *णिचेति । *तद्वदिति । आत्मनेपदं विकल्पत इत्यर्थ । केषां चिदित्यस्य स्वरितञितान्धातूनामित्यर्थं सूचयन्नाह *अन्येषामिति । ननु सूत्रादिद कथ लब्धमत आह *हेतुमतीति । नन्वेवमपि धातुत. कथ लाभो ऽत आह *यजतेश्चेति । प्रयोजकत्वव्यवहारस्य तत्रैव सत्त्वादाह *तत्प्रेरणेति[1] । *अत एव-तस्य तदर्थत्वादेव । अनतिप्रसङ्गाय तल्लक्षणे तथैव निवेशात् । अभ्युपेत्यापि दोषमाह *किञ्चेति । केषाञ्चिदित्यादेर्वादिनामित्यर्थ इत्याशयेनाह *एतच्चेति । बीज शिष्टप्रयोगरूपम् । हेला-

---

१ तत्प्रेरणेति कलायामुपलभ्यते मूलपुस्तकोपलब्ध. पाठस्तु मूलेऽवस्थापित एव ।

राजमाह *आत्मानमिति । कद्रूविनतयोः सूर्याश्वस्कन्धबालवर्णविवादे मिथो दास्यपणकेऽतिदुष्टबुद्धिः कद्रू प्रेषितनागकृताच्छादनेन बालश्यामतया स्वजय साधितवतीति प्राप्तदास्यकविनतायाः किंचित्कालोत्तर 'किं ममाजन्म दास्यमुत कथमपि मुक्तिर्भविष्यति' इति प्रश्नस्योत्तरमिद कद्र्वाः–'अमृतमानीय दीयते चेत्तव दास्यान्मुक्ति। तच्च यद्यपि तवासाध्य तथापि पुत्रद्वारा करणीयम्'इति। तत्सविधान कुर्वित्यर्थः । स्पष्ट चेदमादिपर्वणि। ननु तदर्थत्वे ममैवेति कुतो भ्रमो ऽत आह *तत्रेति। उक्तवाक्ये इत्यर्थः। गम्यते इत्यत्रान्वयः। *प्रत्युपकारेति। अमृतानयनरूपमित्यर्थः । प्राग्वदाह *तत्रापीति । उक्त प्रकारमन्यत्रातिदिशति *एवमिति । अन्तर्भावितण्यर्थत्वम्। प्रकरणादिक च तात्पर्यग्राहकम्। कदाचित्परस्मैपदेऽपि प्रतीत्या तस्यावश्यकत्वमत एव चिनातीत्यप्युक्तमिति तत्त्वम्। *सिद्धान्ते–क्रियाविषयभेदेनेत्याद्युक्ते। धर्मभेदो ऽवर्तने हेतुः। हेलाराजमाह *स्वामीति। *तत्र—उक्तवाक्ये। उत्तरार्धार्थमाह *भिन्नत्वादिति । हेत्वयुक्तत्वे ऽपि पूर्वपक्षोऽयुक्त एवेत्याह *अनेकार्थत्वादिति। हेत्वन्तरमाह *एकत्रेति। *क्रियागतविशेषणम्–उक्तरूपम्। *क्रियामात्रे–तत्सामान्ये। वस्तुत आह *स्वामिनइत्यादि । उक्तरीत्यैवाह *पूर्वेति ।एवमग्रे ऽपि। अभ्युपेत्याह *किञ्चेवमिति । केचिन्मतमाह *अत्रेति । उक्तवाक्ये इत्यर्थः। अत्र दोषमाह *एवमपीति । प्रकारान्तरेण तदुपपादने ऽपीत्यर्थः। उक्तरीत्यैवाह *पूर्वेति। लक्षणाबीजमाह *सांनिध्यादिति । यथाश्रुते ऽनुपपत्तेराह *इतरेति । वैपरीत्यशङ्कां निराचष्टे *दासेति । एतेन तथा कैयटादिसकलग्रन्थकारोक्तमपास्तम्। अधिकमुद्द्योते स्पष्ट तदाह *इत्यलमिति । लिङाद्यर्थं निरूपयितु तद्घटितवाक्ये क्वचित् परमत दूषयितुं कर्त्रभिप्रेतक्रियाफले आत्मनेपदमुपपादयति *अग्नीनिति। अपिना तत्समुच्चयः । नन्वेव कदाचित्परस्मैपदमपि स्यादत आह *आहेति । एवेन तस्य तत्त्वव्यवच्छेद । *स्पष्टश्चेदमिति। तत्र हि "अतयोः पूलयोः इति दृष्टान्तेनैकग्रहण प्रत्याख्याय शङ्कितम्–"शास्त्राधिकारिणः पुरुषान् प्रति प्रवृत्त सस्कारक तत्तच्छास्त्र प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधक यथा "आधानेनाग्नीन् सस्कुर्याद्" इत्यर्थक "व-

सन्ते ब्राह्मणोऽग्नीनादधीत" इति वाक्यं प्रतिब्राह्मण सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्त्तक च। अत एव पुन पुनराधानादिसंस्कारः" इत्यादिना। *एतेन—अतिरिक्तफलस्य कर्तृगतस्योक्तत्वेन। *कर्त्रर्थत्वमेव—कर्तृसमीहितत्वमेव । एतेन नहि कर्तृसमवेतता कर्त्रभिप्रायता आधानजन्या, आहवनीयत्वादिफलस्याग्निसमवेतत्वेनात्रात्मनेपदाभावप्रसङ्गात्, किन्तु कर्तृसमीहितत्वम् । तथा च जातेष्ट्या पुत्रगतपूतत्वादिजनने ऽपि अग्निसाध्यकर्मजन्यफलस्यात्मीयताबोधकाधानवाक्यगतात्मनेपदवदत्रापि तदविरोधः । पितृगतफलस्यापि कर्त्तृसमीहितत्वादित्यन्यमीमांसकोक्तमप्यपास्तम् ॥ २६ ॥

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इति-श्रुतिवाक्य पञ्चपादिकाविवरणे धृतम् । तादृशं ब्राह्मणमुपगतमुपनयनेन संस्कुर्यात्संस्कृतं चाध्यापयेदिति तदर्थः। नानाविधेतिकर्तव्यताकलापस्योपगमनविधेः श्रवणादुपगतमित्यस्य लाभः ।

छान्दोग्यश्रुतौ जाबालस्य प्रसिद्धमेव गुरूपगमनम् । तत्रोपनयनसंस्कारो नित्यस्तदभावे व्रात्यतादोषश्रवणात् ।

वाजसनेयिनामुपनयनं प्रक्रम्य "स्वाध्यायो ऽध्येतव्यः" इत्याद्यध्ययनविधेरुपनीतस्यैवाध्ययनम् । तदपि नित्यम् । "अश्रोत्रिया अननुवाक्या अनग्नयः शूद्रसधर्माणः" इति तदभावे दोषश्रवणात् ।

तत्र—

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ इति—

निन्दार्थवादश्रवणेन सार्थकाध्ययनमेव नित्यम् । निरर्थकाध्ययनं तु निषिद्धम् । निन्दार्थवादेन निषेधो-

ध्ययनात् । अधीतं शब्दतः । अविज्ञातमर्थतः । निगदेन पाठमात्रेण । अनग्नाविवेत्यादिना तस्य यज्ञाद्यनुपयोगित्वेन निष्प्रयोजनत्वमुच्यते ।

अत एव भाष्यकृतोक्तम्–"अनर्थकं माऽधिगीष्महि इत्यध्येयं व्याकरणम्"इति । निरर्थकाध्ययनेऽपि किञ्चित्फलसत्त्वे, दोषाभावे च "सार्थकमध्यगीष्महि" इत्येव वदेत् । "स्थाणुरयं भारहारः"इति निरुक्ते भारपदेन पापभार इत्यन्यत्र निरूपितम् ।

श्रुतिरपि पतञ्जल्युक्ताऽऽह–"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । निष्कारणो दृष्टकारणनिरपेक्षः। अनेन विशिष्टस्य नित्यतोक्ता ।

व्यासोऽपि —

मन्त्रार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः ।
स्वर्गलोकमवाप्नोति नरकं तु विपर्यये ॥ इति ।

अत्र'जपं जप्त्वा'इति मन्त्रसाध्यकर्ममात्रोपलक्षणम् ।

किञ्च स्वाध्यायपदस्य वक्ष्यमाणया "तेन प्रोक्तम्" इति सूत्रभाष्योक्तरीत्या वेदपदवत् शब्दार्थोभयपरतया "स्वाध्यायो ऽध्येतव्यः" इत्यस्योभयाध्ययनविधायकत्वम् । दोषश्रवणमपि तद्विधिबोधिताध्ययनाभावे इति उभयोरपि नित्यत्व बोध्यम् ।

"निष्कारणो धर्मः" इति वाक्ये "ज्ञेयश्च"इति तु अध्ययनमात्रेण सर्वस्य ज्ञानासम्भवाज् ज्ञानपर्यन्तमध्ययनं कार्यमित्यर्थकम् । अविज्ञातमित्यत्रापि विशिष्टविज्ञानमेव विवक्षितम् । अत एव "समानमीहमानानां समानं चाधीयानानां केचिदर्थैर्युज्यन्तेऽपरे

न" इति भाष्ये उक्तमिति बोध्यम् ।

तत्र 'उपनयीत'इत्यत्राचार्यकरणे द्योत्ये "संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः"- इत्यनेनात्मनेपदं नतु "स्वरितञितः" इत्यनेन । उपनयनफलस्याध्ययनस्य कर्तृनिष्ठत्वाभावात् । कर्तृनिष्ठफलकक्रियाया धात्वर्थत्वाभावाच्च । उपनयनफलं च "आचार्याधीनो वेदमधीष्व" इत्येतत्सहकृताध्ययनविधेः संस्कृतस्याध्ययनमेव । अन्तरङ्गत्वात् ।

आपस्तम्बो ऽपि-"उपनयनं विद्याऽर्थस्य श्रुतितः संस्कारः" इति ।

न गुरोरध्यापनम् । पचौ सूदादीनां लाभवत्, बहिरङ्गत्वाच्च ।

किञ्च यत्किञ्चिदुपनयनेनैव तत्सिद्धावतिदरिद्राशक्तोपनेयान्तरोपनयने ऽप्रवृत्त्यापत्तेः । जातोपनयनस्य गुरौ मृते गुर्वन्तरेणोपनयनं विनाऽप्यध्ययनदर्शनाच्च ।

आचार्यलक्षणं च "तद्धै द्वितीयं जन्म तद्यस्मात्स आचार्यः" इतिश्रुतावुक्तम् ।

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति-
स्मृतौ चोक्तम् ।

नच "आचार्याधीनो वेदमधीष्व"इत्येतत्सहकृताध्ययनविधिनैवाध्यापनलाभे तद्विधिर्व्यर्थः । किञ्च वृत्तित्वेनैवाध्यापनप्रवृत्त्युपपत्त्याऽयं विधिर्व्यर्थ एवेति वाच्यम् । स्वसंस्कृतोद्देशेनाध्यापनस्य

नित्यताबोधनार्थत्वात् । अध्ययनस्यापि नित्यत्वादुपनेतरि मृते ऽन्यगुरूपसदनमुपपन्नम् । अध्यापनस्य वृत्तिताश्रवणात्काम्यत्वमपीत्यन्यत् । नचाध्ययनं विनाऽध्यापनासम्भवेनाध्यापनविधिनैवाक्षेपादध्ययनलाभे स विधिर्व्यर्थ इति वाच्यम् । अग्निहोत्रादीनामप्यध्ययनं विनाऽसम्भवात्तद्विधीनामपि विद्याऽऽक्षेपकत्वेन शूद्राणामपि तत्राधिकारापत्तेः । सममेवोभाभ्यामप्याक्षेपात् । अध्ययनविधौ तु सति तदोभयात्प्रागेव श्रुत्या तद्बोधने ऽधीतवेदत्रैवर्णिकानामेवाधिकारो नान्यस्येति नियमप्रसिद्धेः फलत्वात् । अनुमितिसामग्र्यपेक्षया शाब्दसामग्र्या बलवत्त्वस्य न्यायनये, लिङ्गापेक्षया श्रुतेर्बलवत्त्वस्य मीमांसकनये सत्त्वेन शब्दोपस्थितलिङ्गानुमितार्थानुवादकत्वस्य वेदेऽन्याय्यत्वात् ।

यत्त्वध्यापनेनाध्ययनाक्षेपे नित्यानित्यसंयोगविरोधः । अध्यापनस्य काम्यत्वाद्, अध्ययनस्य नित्यत्वादिति । तन्न । तस्य दूषकताबीजानिरुक्तेः । न्यायनयेऽनित्यशब्दानुमिताकाशस्य नित्यत्ववद्, अनित्याध्यापनानुमिताध्ययनस्याकरणे दोषश्रवणेन नित्यत्वेऽपि बाधकाभावात् । उक्तरीत्याऽध्यापनस्यापि नित्यत्वाच्च ।

एतेन वृत्त्यर्थतयोपनयनाध्यापनयोः प्राप्त्या तद्विधिवैयर्थ्याद् "अष्टवर्षो ब्राह्मण उपगच्छेत्सो ऽधीयीत" इति चोक्तश्रुत्यर्थ इत्यपास्तम् ।

"न विधौ परः शब्दार्थः" इतिन्यायविरोधात् ।

दरिद्राशक्तादेरुपनयनाद्यनापत्तेश्च।

एतेन देवताया विग्रहवत्त्वे विग्रहस्यानित्यत्वेन नित्यशब्दवाच्यत्वे नित्यानित्यसंयोगविरोध इत्यपास्तम्।

घटाकाशयोः संयोगस्य नित्यानित्ययोर्जन्यजनकभावस्यैव प्रसिद्ध्याऽस्य दूषकताबीजाभावात्। स्वर्गकामादेर्विग्रहवत्त्वेनानित्यतया स्वर्गकामादिपदवाच्यतानापत्तेश्च। अनित्यस्य पशोर्नित्यया "पशुना यजेत" इति श्रुत्या विध्यनापत्तेश्च। प्रवाहनित्यता तूभयत्रापि समा। जातिनित्यताऽपि समा।

एतेनात्र संबन्धे शब्दार्थसंबन्धनित्यताहानिरित्यपास्तम्।

नच ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन विहितफलचमसस्याभिषवादिसंस्काराः स्युः। मम तु न दोषः, अभिषवादिसंस्काराणां निमित्तसंयोगाभावान्नित्यवदाम्नातानां निमित्तसंयोगेन विहितफलचमसेनानित्येन संबन्धायोगात्। किन्तु नित्यविहितसोमस्यैव संस्काराः। राजन्यवैश्यकर्तृके ऽपि यागे यजमानचमसादेव सोमस्य निवृत्तिः, अन्यत्र तु स स्थित एवेति स नित्य इति वाच्यम्। तावताऽपि बीजानिरुक्तेः।

किञ्च नित्यविध्युत्तरं नैमित्तिकविधिप्रवृत्तिरिति स्पष्टं न्यायविदाम्। एवं च यत्काले नित्यसोमविधानं तत्काले एव तद्विशेषणतया स्वार्थविधानेन कृतार्थाः संस्कारविधयो न नैमित्तिकेन संबध्यन्ते। आवृत्तिप्रसङ्गात्।

तथाच सिद्धान्तसूत्रम्—“नैमित्तिकमतुल्यत्वादसमानविधानं स्याद्” इति । फलचमसविषयेऽभिषवादिसंस्कारा न भवन्ति यतो नैमित्तिकमतुल्यत्वाद् नित्यधर्मसारूप्याभावाद् नित्येनासमानविधानं स्याद्, अतस्तत्र न संस्कारा इति तदर्थः । अतो नेदं नित्यानित्यसंयोगविरोधस्य मुख्यमुदाहरणम् । स्पष्टं चेदं शास्त्रदीपिकादाविति दिक् ।

“सर्वापेक्षाच यज्ञादिश्रुतेरश्ववद्”इति सूत्रे शाङ्करभाष्ये तु नित्यानित्यसंयोगविरोधादित्यस्यार्थ एवमुक्तः–“नित्यकाम्यत्वयोः कर्मण एकेन संयोगेन विधिना विधाने विरोध” इति । काम्यत्वेन तस्यानावश्यकत्वं नित्यत्वे तस्यावश्यकत्वमित्यावश्यकत्वानावश्यकत्वे एकस्यैकेन विधिना बोधयितुमशक्ये विरोधादिति तद्व्याख्यातारः । संयोगभेदे तु तयोर्विरोधः । तुल्यबलश्रुतिद्वयेन पृथगेव विधिः संयोगभेदः । यथा बैल्वो वा खादिरो वा पालाशो वेत्येको नित्यत्वबोधको विधिः, तस्यैव क्रत्वर्थस्य खादिरस्य “खादिरं वीर्यकामस्य”इत्यपरः काम्यत्वबोधको विधिरित्येकस्य खादिरत्वस्योभयार्थत्वमिति । नच सा रीतिः प्रकृते । एकस्योभयरूपत्वाभावात् । आक्षेपकविध्यपेक्षया आक्षेप्यविधेर्भिन्नत्वाच्च । तदुक्तं जैमिनिना–“एकस्य तूभयत्वे संयोगपृथक्त्वम्” इति । एकस्य नित्यनैमित्तिकत्वे नित्यकाम्यत्वे वा संयोगपृथक्त्वं विधिभेदोऽनियामकः । यथा “खादिरे बध्नाति” “खादिरं वीर्यकामस्य”इति तद्व्याख्यातार

इति विभावनीयम् ॥ २७ ॥

( कुं० टी० ) ननु "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यात्मगामिफलाभावादात्मनेपदानापत्तिरित्याशङ्क्य समाधातुमाह *अष्टवर्षमिति । *संस्कृतंचेति । एवंचोपनयनमध्ययनार्थम् । देवानां तु स्वयमेव वेदावभासान्नोपनयनम् । ननु "अधीत्य स्नायाद्" इति श्रुतौ अध्ययनानन्तर्यस्य स्नाने विधानात्कथमर्थज्ञानस्य नित्यत्वमत आह *यदधीतमविज्ञातमिति । "अधीत्य" इति श्रुतिस्तु अध्ययनसमावर्तनयोः पौर्वापर्यमेवाह नानन्तर्यमिति भावः । *स्थाणुरयमिति । यथा स्थाणुः फलपुष्पादिरूपं भारं वहति नतु तस्य किञ्चित्फलं लभते एवं निरर्थकाध्येताऽपीत्यर्थः । ननु अध्ययनस्यादृष्टफलकल्पनमन्याय्यमर्थज्ञानरूपस्य दृष्टस्यैव प्रयोजनस्य सम्भवादत आह *निष्कारणइति । *विशिष्टस्य—अर्थज्ञानविशिष्टस्य । *वेदपदवादिति । 'वेदं पठति' इत्यादौ अर्थविशिष्टशब्दपरत्वस्य 'वेदं जानाति' इत्यादावुभयपरत्वस्य च दर्शनाद् । अत एव शब्दमात्रतात्पर्यकस्य तदनुकरणस्याशौचादावुच्चारणे न दोष इत्याहुः । *अतएवेति । सार्थकाध्ययने एव हि तद्भाष्यसङ्गतिः । *आचार्यकरणे इति । तेन चात्रोपनेयत्वं गम्यते । *उपनयनफलं चेति । अध्ययनमित्यत्रान्वयः । तच्चाध्ययन संस्कृतस्यैव, "आचार्याधीनः" इत्यादिसहकृतैर्वचनैस्संस्कृतस्याध्ययनविधानादित्यर्थः । *अन्तरङ्गत्वादिति । अध्यापनं तु न फलम्, बहिरङ्गत्वादिति भावः । उपनयनस्य अध्यापनार्थत्वे दोषान्तरमाह *किञ्चेति । *आचार्यलक्षणमिति ।

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन कथ्यते ॥ इति—

पुराणेषु । *अध्यापनलाभेइति । अध्यापनं विनाऽध्ययनासम्भवात् । ननु स्वसंस्कृतस्यैवाध्यापने गुर्वन्तरेणाध्यापनं न स्यादत आह *अध्ययनस्यापीति । *अग्निहोत्रादीनामिति । अग्नये हूयतेऽस्मिन्निति व्युत्पत्तेः । यद्यपि सायमेवाग्नये हूयते प्रातस्तु सूर्याय तथाऽपि उभयकालसाध्यस्य होमस्याग्निदेवत्यत्वमप्यस्ति । *तद्विधीनामपीति । ज्ञानं विना यागासम्भवाज्ज्ञानाक्षेपे तेनैवाध्ययनाक्षेपः स्यादित्यर्थः । *अनुमितीति । समाने विषये शाब्दबोधस्यैवोदयेनानुमितेरनुदयात् । *लिङ्गापेक्षयेति । लिङ्गं सामर्थ्यम् । तदाहुः—

सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते । इति ।

यथा "बर्हिर्देवसदनं दामि"इत्यस्य लवनप्रकाशकतया लवनाङ्गत्वम् । एवंचाध्यापनेनाध्ययनाक्षेपे तदनुवादिका श्रुतिरित्यर्थः । *नित्यानित्येति । अनित्येनाध्यापनेन नित्यस्याध्ययनस्याक्षेपासम्भवात् । *सोधीयीतेति । तथाचोपनीतसंस्कार इति भावः । *नाविप्रोइति । अप्राप्तार्थत्वात् । *विरोधादिति । आचार्यार्थतया श्रुतस्य शिष्यार्थत्वे लक्षणापत्तेः । *विग्रहस्य नित्यत्वेनेति । अनित्यस्य विग्रहस्य नित्येन शब्देन संबन्धे नित्यताहानिरित्यर्थः । शाङ्करभाष्ये तु देवताऽऽकृतेर्नित्यत्वान्न दोष इत्युक्तम् । *नचेति । राजन्यवैश्ययोः सोमयागे फलचमसः श्रुतः । न्यग्रोधमुकुलपिष्टं चम्यते स फलचमसः । अत्र नैमित्तिकस्य निमित्तकाले ऽनुपस्थितत्वान्न तत्राभिषवादिसंस्काराः । *नैमित्तिकमिति । नैमित्तिकस्य तत्काले ऽनुपस्थितत्वान्न नित्यसंस्काराणां नैमित्तिकसमानविधानत्वमित्यर्थः । *सर्वापेक्षा चेति । विद्या सर्वाण्याश्रमकर्माण्यपेक्षते च । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन"इत्यादिना यज्ञादिश्रवणात् ।

उत्पन्ने तु तत्त्वज्ञाने न कर्मणोऽपेक्षेति चशब्दार्थः । *अश्ववदिति । यथाऽश्वो न लाङ्गलाकर्षणे युज्यते रथचर्यायां तु युज्यते एवमाश्रमकर्माण्यप्रीत्यर्थः । *खादिरेणेति । नित्यस्यापि खादिरयूपस्य वीर्यकामोद्देश्यत्वमपि । ननु कथमेकस्योभयार्थता, अन्यथा "यावतो ऽश्वान्प्रतिगृह्णीयात् तावतश्चतुरो मुष्टीन्निर्वपेद्" इत्यस्य लौकिकाश्वदानपरत्वमसङ्गतं स्यादिति चेन्न। "खादिरो यूपो भवति" "खादिरं वीर्यकामस्य" इति वाक्यरूपबलेनोभयार्थत्वसिद्धेः। एतेन प्रत्यवायपरिहारार्थं फलार्थं चावृत्त्या नित्यस्यानुष्ठानापत्तिरित्यपास्तम्। सकृदनुष्ठानस्यैवोभयार्थत्वात् । "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्रापि दर्शपूर्णमासवाक्यैकवाक्यतया क्रत्वर्थत्वे तृतीयाश्रुत्या च करणत्वान्यथाऽनुपपत्त्या फलार्थित्वेन पुरुषार्थत्वम् ॥ २७ ॥

( क० टी० ) नन्वेवमन्यत्राव्याप्तिरिति केषाञ्चिदुक्तिखण्डनायाह *अष्टवर्षमिति । उपलभ्यमानश्रुतावनुपलम्भादाह—*पञ्चपादिकेति । *तादृशान्-अष्टवर्षम । स्वसमीपनयनमेवोपनयनमिति, ग्रन्थासाङ्गत्यायाह *उपनयनेनेति । नन्विदङ्कुतो लब्धमत आह *श्रवणादिनि । *नानेति—कर्मधारयपूर्वबहुव्रीहि । "स गुरुमेवाभिगच्छेद्" इत्यादेरित्यर्थः । *छान्दोग्येति । तत्र हि उपनिषदि चतुर्थप्रपाठके "सत्यकामो ह" इति चतुर्थखण्डे "स ह हारिद्रुमत गोतममत्योवाच ब्रह्मचर्यं भगवाते वत्स्याम्युपयां भगवन्तामेति" इत्युक्तम् । *विधेरिति । उक्तत्वादिति शेष. । *तत्र-उपनयनाध्यापनयोर्मध्ये । ताण्ड्यब्राह्मणे उक्तत्वादाह *श्रवणादिति । नन्वेवमपि तयोर्हेतुहेतुमद्भाव. कुतो ऽत आह *वाजसनेयिनामिति । एतेन शाखान्तरे तदभाव सूचित. । आदिना तदीयेतिकर्त्तव्यतापरिग्रह । श्रुतिमाह *अश्रोत्रियाइति । *तत्र-अध्ययनविषये । *उन्नयनादिति । "प्रतितिष्ठन्ति" इतिस्तुत्यर्थवादेन विध्युन्नयनवद् । उत्तरार्धे तात्पर्यमाह *अनग्नाविवेति । *अत एव-तस्याफलत्वानपेक्षत्वा-

चैव । तदेव विशदयति *निरर्थकेति । निरुक्तस्यापीदमेव तात्पर्यं न तु निरर्थकतद्धारणरूपभार इत्यर्थ इत्याह *स्थाणुरिति । *अन्यत्र–उद्द्योतादौ । प्राग्वदाह *पतञ्जलीति । अदृष्टफलसत्त्वादाह *दृष्टेति । कारणशब्दः फलपर. । *अनेन–निष्कारणइति विशेषणेन । *षडङ्ग–शिक्षाद्यङ्गसहितः । *वेदः–स्वशाखारूप. । तस्य धर्मत्व च पुरुषयत्नसाध्यतया धर्मत्वेनेष्टाध्ययनज्ञानकर्मत्वेनौपचारिकम् । व्यासो ऽपीति पाठः । *मन्त्रार्थश्च इति । वेदार्थश्च इति पाठान्तरम् । *तथैव—अर्थविशिष्टम् । अध्ययनमित्यस्य कृत्वेति शेष. । कुर्वन् स्वर्गमिति पाठेन शेषपूरणम् । न्यूनतां निराचष्टे *अत्रेति । व्यासवाक्ये इत्यर्थ । मात्र कात्स्न्यें । एव तावदन्यथा तस्य तत्त्वमुक्त्वा प्रत्यक्षश्रुतिलभ्यमपीदमित्याह *किञ्चेति । *वक्ष्यमाणयेति । तद्धितप्रकरणे तत्सूत्रव्याख्यानावसरे इत्यर्थः । नन्वस्त्वेव तथाऽपि नित्यत्व पाठाध्ययनस्यैव नत्वर्थाध्ययनस्य तदभावे एव दोषश्रवणादिति कथ विशिष्टस्य नित्यत्वमत आह *दोषेति । 'अश्रोत्रिया.' इत्यादिना प्रागुक्तमित्यर्थ· । *तद्विधीति । "स्वाध्यायो ऽध्येतव्य." इति विधिबोधितोभयाध्ययनाभावे इत्यर्थः । नन्वेव भाष्योक्तश्रुतौ "ज्ञेय."इति व्यर्थमत आह *निष्कारणइति । *सर्वस्येति । कस्य चित्सामग्रीवैकल्यात्कस्य चित् तथा धारणशक्त्यभावादिति भाव । *ज्ञानेति । सम्यगर्थबोधेत्यर्थः । *इत्यर्थकम्–इत्यर्थतात्पर्यकम् । एव सति प्रागुक्तनिन्दार्थवादविरोध परिहरति *अविज्ञातमिति । प्रतियोगितयेति शेष· । एव च अयमेव तस्यार्थो न प्रागुक्तार्थ इति न तद्विरोध इति भावः । *अत एव—अध्ययनमात्रेण सर्वस्य ज्ञानाभावादेव । यदर्थमिदमुक्तं तदाह *तत्रेति । उभयोर्मध्ये इत्यर्थ. । प्रागुक्तसिद्धान्तरीत्या तस्य नैव प्राप्तिरित्याह *कर्तृनिष्ठेति । *क्रियाया–सविधानरूपायाः । ननूक्तवाक्येनाध्यापनस्यैव तत्फलत्वस्य बोधनेन तस्य कर्तृनिष्ठत्वेन तत्त्वमस्तीत्यत आह *उपनयनेति । शीघ्रतरोपस्थितये आह *एतत्सहकृतेति । एतेन "तमध्यापयीत"इतिवन्नाध्ययनस्य तन्मात्रादुपस्थितिरिति कथ तस्य तत्त्वमित्यपास्तम् । तदाह *अन्तरङ्गत्वादिति । स्वनिष्ठत्वादिति भावः । युक्त्या साधितेऽर्थे वचनमप्याह *आपस्तम्बइति । धर्मसूत्रे प्रारम्भे इत्यर्थ । विद्याऽर्थ प्रयोजन यस्य स वि-

द्यार्थस्तस्याय श्रुतिविहितः संस्कार उपनयन नाम । विद्यार्थस्येति वचनान्मूकादेर्न भवति । तथा च शङ्खलिखितौ-'नोन्मत्तमूकान्संस्कुर्याद्'इतीति हरदत्त' । अत एवाह *नगुरोरिति । उपनयनफलमित्यस्यानुषङ्ग । तत्र दृष्टान्तमाह *पचाविति । युक्त्यन्तरमाह *बहिरङ्गत्वादिति । अभ्युपेत्याप्याह *किञ्चेति । *तदिति । अध्यापनेत्यर्थः । द्रव्यलाभाभावमाह *अतिदरिद्रेति । सेवालाभाभावमाह *अशक्तेति । *जातोपनयनेति । येषां चाचार्यकरणविधिप्रयुक्तमध्ययन तेषामेतन्न स्यात् । उपनीयाध्यापनेनाचार्यक भावयेदिति सकृदुपनीतस्य न पुनरुपनयनसंस्कार' सम्भवतीति कथमन्यस्मादध्ययनमिति भावः । उक्तवक्ष्यमाणोपपत्तय आह *आचार्येति । *तत्-आचार्यपितृक सावित्रीमातृकम् । याज्ञवल्क्यमाह *उपनीयेति । *सकल्पम्-ससूत्रम् । साङ्गोपाङ्गोपलक्षणमेतद् । *सरहस्यम्-सोपनिषत्कम् । ब्रह्मशेषत्वात्सर्वविद्यास्थानम् । केवलाध्ययनविधेः पुस्तकावलम्बनेनापि साफल्यादाह *एतत्सहकृतेति । आक्षेपस्यापि नोपयोग इत्याह *किञ्चेति । *अयम्-"तमध्यापयीत"इति । तथैव लाभादाह *स्वसंस्कृतस्येति । तेन नातिप्रसङ्ग । नन्वेव तस्मिन्मृते तल्लोपापत्तिरत आह *अध्ययनस्येति । आदिना अध्ययनस्यापीत्यपिना अध्यापनसमुच्चयः । सद्नमपीति द्वितीयेन तेनाध्ययनसमुच्चयः । सामान्यत आह *अध्यापनस्येति । पूर्ववैपरीत्येन शङ्कते *नचेति । *स -"स्वाध्यायोऽध्येतव्य" इति । प्रतिबन्दीमाह *अग्निहोत्रेति । अध्ययनाक्षेप उभयत्र तुल्य इत्याह *सममिति । नन्वेव तदङ्गीकारे ऽपि तत्र तथा स्यादेवात आह *अध्ययनेति । *श्रुत्या-विधिना । तेषामेवाध्ययने उक्तरीत्या ऽधिकारादाह *त्रैवर्णिकेति । *अधिकार इति । अग्निहोत्रादिष्वित्यर्थः । ननु तदङ्गीकारे ऽपि तद्वत्तथाऽपि कुतो नेति कुतो नियमसिद्धिरत आह *अनुमितीति । समाने विषये इत्यर्थः । आदिना वाक्यादि । आनर्थक्यप्रतिहतत्वाभावे इत्यर्थः । *शब्दोपस्थितेति । शब्दोपस्थित यद् लिङ्ग तेन अनुमितार्थेत्यर्थ. । अर्थस्य विशेषणद्वयम् । *वेदे-"स्वाध्यायो ऽध्येतव्य." इत्यत्र । मीमांसकायुक्तिं खण्डयति *यत्त्विति । अनिरुक्तिमेवादावभ्युपेत्य विशदयति *न्याय्येति । तत्र बीजं तादृशनित्यत्वाभावादाह *आकाशस्येति । वस्तुतस्तदेव नेत्याह *उक्तेति । स्वसंस्कृतोद्देशेनेत्याद्युक्तरीत्येत्यर्थः । तदेकदे-

शिमत खण्डयति *एतेनेति । अस्यार्थमाह *नविधाविति । *पर'-लक्ष्य' । ननु "सोमेन यजेत"इत्यादौ तत्रापि तदङ्गीकारादाह *दरिद्रेति । आदिना-कृपणादि । तद्दोषस्योदाहरणान्तर तदुक्तमेव खण्डयति *एतेनेति । सगुणोपासकमतमिदम् । एतेनेत्यस्योक्तमेव सनिदर्शनमर्थमाह *घटेति । *नित्येति । खशब्दयो, परमाणुद्व्यणुकादेश्चेत्यर्थ । नन्वेवमपि वाच्यवाचकभावो नात आह *स्वर्गेति । नित्यवैदिकेत्यादि । सम्बन्धान्तरे ऽपि दोषमाह *अनित्यस्येति । विग्रहवत्त्वेनेति भावः । एतदुभयदोषान्यथापरिहारे तु तत्रापि न दोष इत्याह *प्रवाहेति । अद्वैतिमतेनेदम् । नैयायिकादिमतेनाह *जातीति । *एतेन-उक्तद्विविधान्यतरनित्यत्वाङ्गीकारेण । *अत्र सम्बन्धे-विग्रहवत्यनित्येऽर्थे शक्तिसम्बन्धे । तद्दोषावश्यकत्वाय शङ्कते *नचेति । *विहितेति । आपस्तम्बश्रौतसूत्रे सोमपञ्चके चतुर्थप्रश्ने "ब्रह्मन्यज"इति द्वितीये सप्रेष्यतीति चतुर्विंशतितमे खण्डे "यदि राजन्य वैश्य वा याजयेत्स यदि सोम विभक्षिषेन्न्यग्रोधस्तिभिनीराहृत्य सपिष्य दध्न्युन्मृज्य चमसेषु हूयमानेषु अन्तः परिध्यङ्गार निवर्त्य एतस्य चमसस्य दर्भतरुणेनोपहत्य"अह त्वदस्मि मदसि त्वम्"इत्यङ्गारे हुत्वा तमस्मै भक्ष प्रयच्छेद्"इत्युक्तम् । स्तिभिन्यः फलानि । "तद्यदेन सोम क्रीणीयात्तदेतानि फलानि क्रीणीयाद्" इति बह्वृचश्रुतौ क्रयकाल आम्नानादाह *अभिषवेति । *संस्कारा इति । "सोममभिषुणोति"इत्यादिना विहिता इत्यर्थः । *मम तु-तस्य दोषत्वाङ्गीकर्तु । नित्यत्वगमकाभावादाह *निमित्तेति । अत एवाह *नित्यवदिति । *निमित्तेति । राजन्यवैश्यरूपेत्यर्थ । अत एवाह *अनित्येनेति । नवेव तत्रैव सोमाभावात् तस्यापि न नित्यत्वमत आह *राजन्येति । *अन्यत्र तु-ऋत्विक्चमसेषु तु । *सः-सोम. । *तावताऽपि-तदभावात्तत्र तदापत्तिसम्भावनयाऽपि । ननु तद्वारणान्यथाऽनुपपत्तिरेव तद्बीजमत आह *किञ्चेति । पूर्वपक्षत्वनिरासायाह *सिद्धान्तेति । उक्तपूर्वपक्षे जैमिनीयमित्यर्थ. । अत एवाह *फलेति । विशेषमाह *यत इति । तात्पर्यमाह *अत इति । उपसंहरति *अत इति । उक्तरीत्या निवारणादित्यर्थ' । *इदम्-फलचमसरूपम् । एतेन तथा वदन्तो ऽन्येपि परास्ताः । तदाह *इति दिगिति । ननु तर्हि अयं प्रवादः किं निर्मूल एव, नेत्याह *सर्वा-

पेक्षा चेति । ब्रह्मविद्यया स्वार्थसिद्धौ कर्मणामनपेक्षणेऽपि स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षाऽस्त्येव ? । कुतः । यज्ञादिश्रुते' । "तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"इत्येव रूपाया' सर्वेषां कर्मणां ज्ञानसाधनत्वबोधिकायाः श्रुतेः सत्त्वात् । अश्वस्य लाङ्गलादावनपेक्षायामपि रथादौ यथाऽपेक्षा तद्वत् । यज्ञादीनां ज्ञानसयोगस्यापूर्वत्वाद्विधिरत्र कल्प्य । 'ब्रह्मानुभवकामो यज्ञादि कुर्याद्'इति सूत्रार्थ इत्येके । यथाऽश्व. श्रमाभावसम्पादनद्वारा ग्रामान्तरप्राप्तिसाधनमित्यन्ये । परेतु विद्याया' स्वातन्त्र्याद् बाह्ययज्ञाद्यनपेक्षा आन्तरयज्ञाद्यपेक्षया च सर्वापेक्षा । 'आत्मन्यग्नीन् समारोप्य ब्राह्मण' प्रव्रजेद् गृहाद्'इति स्मृत्याऽऽत्मनि तत्समारोपविधानात् । तत्फल च स्वदेहस्थे ऽग्नौ तैस्तैरान्तरैरेव साधनैरात्मत्वेन सर्वदेवतायाग. ॥ यथा "उषा वा अश्वस्य मेध्यस्य शिर."इत्यश्वमेधोपासने सवत्सरे समारोपिताश्वोऽङ्गतयाऽपेक्ष्यते तथैव स्वशरीरब्रह्मप्रणवादौ समारोपितोऽग्न्युपवानमन्त्रादिर्यज्ञाङ्गतयाऽपेक्ष्यते, बाह्याग्न्यादि नापेक्ष्यत इत्यर्थ इत्याहुः । कर्मणा सहेति शेष. । संयोगेनेत्यस्य व्याख्या *विधिनेति । विरोध इतीतिपाठः । *इतिर्भाष्यसमाप्तौ । तद्व्याख्यातृग्रन्थमाह *काम्यत्वेइति । एकेन विधिनेत्यस्य फलमाह *सयोगेति । अस्यार्थमाह *तुल्येति । अनेन बाध्यबाधकभावादिनिरासः । पुरुषार्थत्वस्य वक्ष्यमाणत्वादाह *क्रत्वर्थेति । विशेषमाह *खादिरेति । *नच—नहि । *प्रकृते—आध्यापनेनाध्ययनाक्षेपे । फलत्वेनोक्तार्थे समतिमाह *तदुक्तमिति । यत्तु एकस्य कर्मण. उभयत्वे अनेकफलसम्बन्धे उभयसम्बन्धबोधक यद्वाक्य तस्य पृथक्त्व भेदः स हेतु' । ततश्च ज्योतिष्टोमादिकर्मणां स्वर्गादिफलकानामपि "तमेतम्"इतिवचनाज् ज्ञानार्थत्वमपीति सूत्रार्थ इति, तन्नेति सूचयन्नाह *एकस्येति । विनिगमनाविरहादाह *नित्येति । "खादिरं वीर्यकामस्य"इतीतीति पाठ. ॥ २७ ॥

**लिङस्तु विध्यादयोऽर्थाः, लोटश्च । "विधिनिमन्त्र-**

---

१ विरोध इत्यनन्तरं मूले इतिरेतत्कलानुरोधेन प्रक्षिप्तः ।

णामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्", "लोट्च"इति शास्त्रात्।

तत्र विधिः प्रेरणा। यथा निकृष्टस्य भृत्यादेः स्वामिना स्वाभिलषिते प्रेरणम्। इयमेवाज्ञा। अप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपायप्रवर्तनोपदेशः। यथा "स्वर्गकामो यजेत"इत्यादि। यथा वा "अनेन पथा मा याहि"-इत्याप्तवचः। सोऽपि विधिरेव। निमन्त्रणम् नियोगकरणम्—आवश्यके श्राद्धभोजनादौ स्वाभिलषिते प्रवर्तनम्। आमन्त्रणं स्वाभिलषिते कामचारेण प्रवर्त्यप्रवर्त्तनम्। कामचारश्च प्रवर्त्यस्यैव। एषैव कामचारानुज्ञा। प्रवृत्तस्य प्रयोज्यस्य निवृत्तिप्रतिबन्धेन तद्धिते प्रवर्त्तिकोक्तिरनुज्ञा—'आरब्धं कुरु'इत्येवंरूपा। 'तथा कुरुष्व यथा हितम्' इत्युक्तिरप्यनुज्ञैव। एतत्सर्वोपलक्षणमामन्त्रणम्। अधीष्टः सत्कारपूर्वको व्यापारः। 'यथा माणवकमध्यापय'इति। एषैवाभ्यर्थना। प्रार्थना तु स्वाभिलषितवस्तुदानादिप्रवर्तिकोक्तिः। सर्वानुस्यूतं प्रवर्तनासामान्यं विध्यर्थः। तदतिरिक्तांशस्य मानान्तरलभ्यत्वात्। सूत्रे सप्रार्थनानां चतुर्णां ग्रहणं प्रपञ्चार्थमित्यग्रे निरूपयिष्यामः।

"प्रैषातिसर्ग-"इतिसूत्रेण प्रैषेऽपि लिङादयः। प्रैषो ज्ञातविषयप्रवर्तना।

तत्र प्रवर्तना प्रवृत्त्यनुकूलो व्यापारः प्रवर्तकनिष्ठो लिङादिघटितशब्दप्रयोगरूपः। प्रवर्तकत्वं च स्वातन्त्र्ये सति लिङाद्युच्चारयितृत्वम्। राजप्रे-

रितपदातेर्लिङाद्युच्चारयितृत्वेऽपि प्रवर्तकत्वव्यवहारवारणाय स्वातन्त्र्ये सतीति'। 'पदातिप्रेरितोऽहं न कुर्वे किन्तु राजप्रेरितः' इति व्यवहारात् । पिशुनप्रेरितराज्ञ्यपि स्वातन्त्र्यमस्त्येव ।

वेदे प्रवर्तना लिङ्घटितत्वरूपा, प्रवर्तकत्वं च शाब्दनिष्ठमेव ।

वक्ष्यमाणस्वरूपाप्तोक्तया च तया प्रतिबन्धकाभावविशिष्टया स्वे विषये इष्टसाधनत्वाद्याक्षेपः, ततः प्रवृत्तिः ।

यद्यपि जीवन्मुक्तस्येतरं प्रति तत्प्रार्थनया ब्रह्मोपदेशे प्रवृत्तौ नेष्टसाधनताज्ञानं प्रयोजकमिति व्यभिचारान्न तदाक्षेपकत्वसंभवस्तथाऽपि "सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते" इति "हेतुमति च"इतिसूत्रभाष्योक्त्या तदतिरिक्तप्रवृत्तौ तत्प्रयोज्यत्वनियमेन तदाक्षेपः सुलभः। 'आप्तोक्तया'इत्युक्तेः शत्रुप्रयुक्ताद्'विषं भुङ्क्ष्व' इतिवाक्यान्न तदाक्षेपः, नापि प्रवृत्तिः। 'विषं भुङ्क्ष्व मा चास्य गृहे भुक्थाः' इत्याप्तोच्चारितात्तद्वारणाय प्रतिबन्धकाभावविशिष्टयेति । तत्रानिष्टसाधनत्वनिश्चयप्रयुक्तद्वेषस्य प्रतिबन्धकस्य सत्त्वान्न दोषः । तद्गृहभोजनेऽत्यन्तानिष्टसाधनत्वबोधने एव तत्तात्पर्यात् । क्रुद्धेन सर्पेण चोक्ताद् 'मृदं भुङ्क्ष्व' 'पायसं भुङ्क्ष्व'इति वाक्याद्बोधो भवत्येव । प्रवृत्तिस्तु न, दोषविशिष्टोक्तत्वेन तदाक्षेपकत्वाभावात् । दोषराहितस्यैवाप्तत्वात् ।

आप्तत्वं च भ्रमादिदोषराहित्ये सति तत्तक्रि-

याविषये स्वेष्टप्रतिबन्धानिष्टोत्पत्त्युभयानुकूलयत्ना-भाववत्त्वम् । अत एव वने ऽपहृतसर्वस्वानामपि दस्यूनां मार्गोपदेशे आप्तत्वं भवत्येव । आप्तशब्दव-त्त्वेनाप्तानामनुगमः ।

तदाक्षेपश्च क्वचित्सामान्यतः । बहुवित्तव्ययायाससाध्ये तु विशिष्यैव । आक्षेपश्च पचेत्यादिशब्दोपस्थितभाविपाकं पाकत्वेन पक्षीकृत्योक्तहेतुना बोध्यः । व्याप्तिग्रहश्च यागादिविषये उपदेशात् । प्रथमोपदेष्टुस्तु योगतस्तज्ज्ञानम् ॥ २८ ॥

( कुं० टी० ) *अधीष्टइति । भाष्ये तु अधीष्टमिति पाठः । अध्येषणपर्याये अधीष्टशब्दे नपुंसके भावे क्तस्यैव न्याय्यत्वात् । *सर्वानुस्यूतमिति । सकलनिष्ठं प्रवर्तनात्वमेव वाच्यम्, निकृष्टत्वादि प्रकरणलभ्यमित्यर्थः । *प्रपञ्चार्थमिति । प्रवर्तनाभेदबोधनार्थमित्यर्थः । *प्रयोगरूपइति । लोके लिङादिप्रयोगद्वारा पुरुषः प्रवर्तकः, वेदे तु लिङादिरेव—लिङादिप्रयोग एव प्रवर्तकः । इयमेव शाब्दी भावनेति व्यवह्रियते । आर्थी भावना तु पुरुषप्रवृत्तिरूपा । *तदतिरिक्तेति । जीवन्मुक्तातिरिक्तेत्यर्थः । *तदाक्षेप इति । जीवन्मुक्तस्य करुणैव प्रवृत्तौ हेतुः । *नतदाक्षेपः—नेष्टसाधनत्वाक्षेपः । *तद्वारणाय—प्रवृत्तिवारणाय । विषंभुङ्क्ष्वेति । अत्र चकार एकवाक्यतासूचकः । नचाख्यातवाच्याक्रियायाः साक्षादन्वयः सम्भवति । एवं च विषभक्षणादप्येतद्गृहभोजनमनिष्टहेतुरतः सर्वथा माऽस्य गृहे भुङ्क्था इति वाक्यार्थः । स्यादेतत् । इष्टसाधनत्वस्यैव विध्यर्थत्वे अग्निहोत्रादिचोदनाऽपि पुरुषप्रवर्तनात्मिका तदनुष्ठाने पुरुषार्थसि-

द्धिमेवावगमयेत् । तावतैवच विधेरुपक्षीणत्वात् । अकरणस्य तु प्रत्यवायहेतुतां कथं वक्ति । नचार्थवादवाक्यबोधिताकरणजन्य-प्रत्यवायपरिहारार्थतासम्भवो ऽस्ति । अर्थवादवाक्यानामग्निहोत्रादावभावात् । नच "विहितस्याननुष्ठानान्नरः पतनमृच्छति" इति स्मृतिर्मूलम् । अभावरूपस्य विहिताकरणस्य कार्यान्तरजनकत्वासम्भवात् । नचैवं भोजनाभावरूपलङ्घनेन कथं ज्वरशान्तिर्जन्यत इति वाच्यम् । यतस्तत्रापि न लङ्घनाज्ज्वरशान्तिः किन्तु ज्वरनाशप्रतिबन्धके भोजनाभावे सति जठरानलपरिपाकजनिताद्धातुसाम्यादिति चेदत्रोच्यते । अग्निहोत्रादिविषयविकारात्फलासिद्धिरूपप्रत्यवायाभिप्रायेणेति न दोषः । *अपहृतेति । अपहृतं सर्वस्वं यैः ॥ २८ ॥

(क०टी०) अथ लिङाद्यर्थमाह *लिङस्त्विति । *तत्र–तेषां मध्ये । *प्रेरणा–उक्तरूपा । तस्या. सामान्यत्वाद्विशेषमाह *यथेति । *इयम्–प्रेरणा । उपदेशमाह *अप्रवृत्तेति । अथ वैदिक एवेति भ्रमनिरासायाह *यथावेति । अस्यान्तर्भावमाह *सोऽपीति । उपदेशोऽपीत्यर्थः । अभिलाषभेदेऽपि निकृष्टप्रेरणत्वसाम्यादिति भाव. । निमन्त्रिते प्रत्याख्यातुरधर्मादाह *आवश्यकेइति । अन्वये सन्देहादाह *कामेति । *एषैव च–तादृशप्रवर्तनैव च । केवलानुज्ञायामाह *प्रवृत्तस्येति । अनुज्ञाऽन्तरमाह *तथाकुरुष्वेति । अस्यान्तर्भावमाह *एतदिति एकदेशसाम्यादिति भाव । अधीष्टमिति पाठ । *व्यापार.–प्रेरणरूपः । अत एवाह *एषैवेति । तुर्वैलक्षण्ये । प्रकृतानुपयोगात्सप्रश्नत्यागः । नन्वेव नानाऽर्थतापत्तिरत आह *सर्वेति । हेतुगर्भविशेषणमिदम् । नन्वेवं कथ भेदधीरत आह *तदतिरिक्तेति । *मानान्तरेति । पदान्तरसमभिव्याहारादीत्यर्थ. । कौमुदीभूषणादिग्रन्थार्थं विशदयन्नेव सर्वस्यानर्थक्य परिहरति *सूत्रेइति । "विधि–" इति सूत्रे इत्यर्थः । चतुर्णामित्येवोक्ते विधीत्यस्यैव त्यागः स्यान्न प्रार्थनायाः तेषामव्यवहितपाठात्, तच्च न, प्रवर्तनाबोधनाय तस्यावश्यकत्वादत आह *सप्रार्थनानामिति । विधिभिन्नानामित्यर्थः ।

तथा च "विधिसम्प्रश्नयोर्लिङ्"इत्येव वाच्यमित्यर्थं । सप्रार्थनान्तानामिति त्वपाठो ऽत एव । सम्प्रश्नश्च सम्प्रधारण विचारः-'तन्न कर्त्तव्यमिद वा"इत्येवरूप । *अग्रे-अनुपदमेव विध्यर्थनिरूपणावसरे । अतिसर्गस्यामन्त्रणरूपत्वादाह *प्रैषेऽपीति। अपिना प्राप्तकालपरिग्रहः । लिङादय इत्यादिना कृत्यादय । तत्स्वरूपमाह *ज्ञातेति । अज्ञातेत्यपाठः । ननु का प्रवर्तना या लिङर्थो ऽत आह *तत्रेति । लिङादिविषये इत्यर्थ. । *प्रवृत्तेति-तत्रेत्यादिः । ननु तत्र तत्त्वमिष्टमेवात आह *पदातीति । एव सत्यव्याप्तिर्नेत्याह *पिशुनेति । तत्रापि तदिच्छायामेव प्रवृत्तिर्नान्यथेति भाव । नन्विदमुभय न वेदे सम्भवतीत्यत आह *वेदेइति । ननु कोपयोग प्रवर्तनाया., नच प्रवृत्तौ, विधिसहस्रेण बोधितेऽपि इष्टसाधनताज्ञानं विना प्रवृत्त्यदर्शनात् । एवं च तस्यास्तत्त्व निष्फलमत आह *वक्ष्यमाणेति । इदमाप्तविशेषणम् । तस्यास्तूक्तत्वात् । यद्यपि तत्स्वरूपमप्यधस्तादुक्तं तथाऽपि तन्मात्रेष्टमित्येवमुक्तम् । इदमपि लौकिकविषयम्, वेदे तु तत्त्व नि.सन्दिग्धमेवेति भावः । *तया-लिङर्थभूतप्रवर्तनया । आदिना कृतिसाध्यत्वम् । इतर एव तत्पदार्थः । *तदतिरिक्तेति । जीवन्मुक्तान्येत्यर्थ. । तथा च तदन्यविषय एव स नियम इति भाव । *तत्र-तस्मिन्स्थले । नन्वेव किमर्थं तत्प्रयोगो ऽत आह *तदिति । वक्ष्यमाणस्वरूपेनिविशेषणफलमाह *क्रुद्धेनेति । यथासंख्यमन्वयः । अत एव चयुतः पाठो न वायुतः । ननु तथोक्तावपि तस्य यथार्थवक्तृत्वात् तत्त्वमेव अत आह *दोषेति । नन्वेवमव्याप्तिरत आह *आप्तत्वश्चेति । आदिना प्रमादादय. प्रागुक्ता । *अत एवतत्तक्रियाविषये इति विशेषणादेव । नन्वेवमननुगमापत्तिरत आह *आप्तशब्देति । विशेषमाह *तदाक्षेपश्चेति । इष्टसाधनत्वादीत्यर्थ. । *क्वचिदिति । गुर्वादिप्रवर्तनया प्रवृत्तिस्थले इत्यर्थ. । 'किञ्चिदिष्टं ज्ञात्वा मां प्रवतयति'इति ज्ञात्वैव तत्र प्रवृत्तेरिति भाव । *सामान्यतः-इष्टत्वेन । *विशिष्यैव-स्वर्गत्वादिनैव । तथा ज्ञान विना तत्राप्रवृत्ते. । नन्वाक्षेपस्यानुमानत्वेन कथमत्र तदुपपत्तिरत आह *आक्षेपश्चेति । *पचेति । प्रवर्तकोच्चारितेत्यादि. । तस्यापीदानीमसत्त्वादाह *भावीति । उपस्थितत्वात्सम्भवतीतिन्यायादाह *पाकत्वेनेति । *उक्तेति । प्रवर्तनविषयेत्यर्थः । नन्वत्रान्यत्र व्याप्तिग्रहसम्भवे ऽपि

यागादौ न सम्भव इति कथं तत्र तदाक्षेपो ऽत आह *व्याप्तीति । शाब्दस्तत्र स इति भाव । नन्वेवमन्धपरम्परापत्तिरत आह *प्रथमेति । *तज्ज्ञानम्—व्याप्तिग्रहः ॥ २८ ॥

नच योगिसत्त्वे न मानम् । श्रुतेर्मानत्वात् ।

तदुक्तं हरिणा—

ज्ञानमस्मद्विशिष्टानां सर्वं सर्वेन्द्रियं विदुः ।
अभ्यासान्मणिरूपादिविशेषेष्विव तद्विदाम्॥इति।

अस्मद्विशिष्टानामीश्वरस्य योगसिद्धानां पतञ्जल्यादीनां च । ईश्वरसत्त्वेच त एव मुनयः प्रमाणम् ।

तत्र तेषां ज्ञानं सर्वं सर्वेन्द्रियसाध्यम् । "घ्राणतः शब्दं शृण्वन्ति पृष्ठतो रूपाणि पश्यन्ति" इत्यादिश्रुतेः । यथा रूपपरीक्षकाणामभ्यासातिशयान्मणिरूपातिशयप्रकाशस्तद्वद् योगाभ्यासबलाद् योगिनाम् । ईश्वरस्य स्वत एवेति नान्धपरंपरेति तदर्थः । शब्दं विनाऽपि स्वीयप्रवृत्तिस्थले स्मृतपाकशब्दादुपस्थितभाविपाके तद्ग्रहः । 'यस्य जातस्य पचिव्यवहारविषयता स इष्टसाधनम्' इत्याद्याकारस्तद्ग्रहः । एडमूकादेरपि जन्मान्तरानुभूतशब्दस्मरणं तन्मूलकं स्वीयमुच्चारणं च कल्प्यम् । बालकस्याद्यस्तनपानप्रवृत्तौ तज्ज्ञाननिर्वाहाय तत्राप्यस्यावश्यकत्वात् । "अहरहः" इत्यादिसमभिव्याहृतनित्यनैमित्तिकविध्योरवश्यानुष्ठेयत्वमपि प्रेरणया बोध्यते । तेन तदभावे प्रत्यवायसिद्धिः । "विश्वजिता यजेत" इत्यादौ स्वर्गातिरिक्तस्य सर्वेष्टस्याभावात्प्रवर्तनया स्वर्गरूपेष्टसाधनत्वाक्षेपः ।

प्रेरणाच प्रवर्तकनिष्ठप्रवृत्त्यनुकूलो व्यापारः । तत्र

लिङादिसमभिव्याहारे व्यापारान्तरस्याननुभवाल्लिङाद्यन्तशब्दरूप एव स इत्युक्तम् । तद्वति प्रेरणात्वं चाखण्डोपाधिः । तेन रूपेण तस्य लिङ्वाच्यता । शब्दरूपत्वाच्च सा शाब्दी भावनेत्युच्यते । शब्दनिष्ठेति व्यवहारो ऽपि प्रेरणात्वेन तस्यास्तद्वृत्तित्वेन । लोके पुरुषनिष्ठत्वं च तादृशशब्दप्रयोक्तृतयाऽवच्छेदकत्वेन । लिङ्गसङ्ख्याद्यनन्वयित्वाद्व्यापारपदव्यवहार्याऽपि सा । प्रेरणात्वेन सविषया चेति बोध्यम् ।

यत्त्विष्टसाधनत्वमेव प्रवर्तना, तज्ज्ञानस्य प्रवृत्तिहेतुत्वात् । इष्टं च क्वचित्साक्षात् क्वचित् परम्परया । 'भवत्प्रेरणयाऽहमध्यापयामि न किञ्चिन्ममेष्टम्' इति व्यवहारस्तु 'न मे साक्षात्किञ्चिदिष्टम्' इत्येवंपरः । इच्छाविषयत्वोपलक्षिततत्तत्फलसाधनत्वेन ज्ञानं प्रवर्तकम् । तेनैव च रूपेण विधेः शक्तिः । बलवदनिष्टाननुबन्धित्वज्ञानं तु न प्रवर्तकं बहुतरदुःखस्यापि कुतश्चिदल्पत्वेनानुगतबलवत्त्वस्य दुर्वचत्वात् । मधुविषसंपृक्तान्नभोजनादौ प्रवृत्तिस्तु न । तत्तद्विषयकबलवद्द्वेषस्य स्वातन्त्र्येण प्रतिबन्धकत्वेनादोषात् ।

युक्तं चैतत् । सत्यपि बलवदनिष्टजनकत्वज्ञाने तत्र द्वेषाभावदशायामास्तिककामुकस्य रागान्धस्य परदारगमनादौ प्रवृत्तेः । द्वेषे सत्यप्रवृत्तेश्च । क्वचित्तु तज्जन्यफले उत्कटेच्छाविरहे तज्जन्यदुःखे द्वेषे द्वेषविषयसाधनताज्ञानादुपाये द्वेषे उपायेच्छाभावादप्रवृत्तिः । क्वचित्फलद्वेष एव तथा । अत्र तज्ज-

न्यसुख उत्कटेच्छोत्तेजिका । तेन यत्रैव सुखापेक्षया-ऽनुत्कटानि दुःखानि यत्र वा क्रियाजन्यबहुसुखा-पेक्षया उत्कटदुःखान्यल्पानि तत्रापि तज्जन्यसुखे उत्कटरागात्प्रवृत्तिः । अत एवान्तरालिकश्रमे बलव-द्द्वेषवान् ज्योतिष्टोमादौ न प्रवर्तते । अन्यस्तु प्र-वर्तत एव ।

एतेन कृतिसाध्यताज्ञानं प्रवर्तकम् । कृतित्वं च निवृत्तिजीवनयोनियत्नव्यावृत्तो यत्नत्वव्याप्यो जाति-विशेष इत्यपास्तम् । कृत्यसाध्ये प्रवृत्त्यभावस्य तत इष्टाभावेन वृथाश्रमजनकतया द्वेषादुपपत्तेः । चिकीर्षाया एव कृतिं प्रति कारणत्वं तां च प्रति तत्करणमित्यदोषाच्च ॥ २९ ॥

( कुं० टी० ) *अस्मदिति । पञ्चम्यन्तम् । अस्मदपे-क्षया विशिष्टानाम् । *सर्वज्ञानम्—सर्वेन्द्रियजन्यम् । ननु 'इदं मादिष्टसाधनम्'इति ज्ञानं न प्रवर्तकं भाविवस्तुस्थले तदसम्भवादित्याशङ्क्याह *यस्यजातस्येति । सामान्यल-क्षणानङ्गीकारेणेत्थमुक्तम् । एडो बधिरः । *प्रत्यवायसिद्धि-रिति । अत एव "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्य-त्रापि प्रत्यवायाभाव एव फलम् । *स्वर्गातिरिक्तस्येति । वि-धिबलात्स्वर्ग एव फलं कल्प्यते इत्यर्थः । इष्टसाधने प्रवृत्त्या सर्वेष्टस्य स्वर्गस्य फलत्वादिति भावः । ननु भट्टमते अभिधा-रूपा शाब्दी भावना लिङादिनिष्ठाऽस्तु स्वमते तु कथमयं व्यवहार इत्यत आह *व्यवहारोऽपीति । प्रवर्तकतारूपप्रेर-णायाः शब्दनिष्ठत्वादित्यर्थः । *अवच्छेदकतयेति । चैत्रादि-

शरीरावच्छेदेन तत्प्रयोगाद् भट्टमते पराधीनप्रवृत्तौ प्रवर्तनाज्ञानं हेतुः । अत एव राजाज्ञया पितुः शिरश्छेदादौ प्रवर्तते ।

अत्र तार्किकाः—अत्रापि स्वेष्टसाधनताज्ञानमेव प्रवर्तकम् । 'नहि प्रयोजनमनुद्दिश्य' इति न्यायादिति वदन्ति । तान्निराकर्तुमाह *यत्त्विति । *इच्छाविषयत्वेति । इच्छाविषयो यत्फलं तत्साधनत्वेनेत्यर्थः । *विधेः—लिङादेः । मधुविषसंपृक्तान्नभोजनादौ प्रवृत्त्यदर्शनाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः । साध्यत्वसाधनत्वयोश्च न विरोधः कालभेदेन तयोः सम्भवादित्याशङ्क्याह *नप्रवर्तकमिति । *बलवद्द्वेषेति । तेन पाकादावान्तरालिकश्रमसत्त्वे ऽपि प्रवृत्तिः । *आस्तिकेति । उत्कटरागेण नरकजनकत्वज्ञानातिरोधानात् । प्रभाकरमतमाह *कृतिसाध्यताज्ञानमिति ।

अयम्भावः—प्रवृत्तिं प्रति चिकीर्षैव कारणम् । चिकीर्षा च कृतिसाध्यत्वप्रकारिका इच्छा । सा चेच्छा कृतिसाध्यताज्ञानादिति कृतिसाध्यताज्ञानमेव प्रवर्तकम् । अत एव वृष्ट्यादौ न प्रवृत्तिः । इष्टसाधनताज्ञानं तु न प्रवर्तकम्, कृत्यसाध्ये ऽपि प्रवृत्त्यापत्तेः । नचैवं चैत्यवन्दनादावपि प्रवृत्त्यापत्तिरिति वाच्यम् । इष्टसाधनत्वादिज्ञानसमानकालिकस्यैव कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वात् । अत एव बलवदनिष्टानुबन्धित्वग्रहदशायामपि न प्रवृत्तिः । नन्वेवमिष्टसाधनत्वसमानाधिकरणकृतिसाध्यत्वज्ञानमेव प्रवर्तकमस्त्विति चेन्न । साध्यत्वसाधनत्वयोर्विरोधात् । साध्यत्वे हि असिद्धविषयत्वम्, साधनत्वे च सिद्धविषयत्वमिति । *व्यावृत्त इति । तेन न तद्विषये प्रवृत्तिः । *यत्नत्वव्याप्य इति । प्रवृत्तित्वरूप इत्यर्थः । तेन जीवनयोनियत्नसाध्यप्राणपञ्चकसंचारे न प्रवृत्तिः । *कृत्यसाध्यप्रवृत्त्यभावस्येति । द्वेषादुपपत्ते-

रित्यत्रान्वयः । द्वेषस्य प्रतिबन्धकत्वान्न प्रवृत्तिरिति भावः । *चिकीर्षायाएवेति । कृतिसाध्यताज्ञानं विना चिकीर्षाऽनुदयात् तदभावे च कृतेरनुदयात् कृतिसाध्यताज्ञानं न हेतुरन्यथासिद्धत्वादित्यर्थः ॥ २९ ॥

( क० टी० ) मूले एवाशङ्कते *नचेति । श्रुतिमभियुक्तोक्त्या दर्शयति *तदुक्तमिति । *विशिष्टानामित्यस्य पदस्य व्याख्या *ईश्वरेति । अन्यथासिद्धनिरासार्थमाह *योगेनि । नन्वीश्वरसत्त्व एव न मानमत आह *ईश्वरेति । *न एव–तादृशपतञ्जल्यादय एव । अथ वाक्यार्थमाह *तत्रेति । तयोर्मध्ये इत्यर्थ । *तेषाम्–पतञ्जल्यादीनाम् । *सर्वम्–सर्वप्रकारम् । सर्वेन्द्रियमिति बहुव्रीहिरित्याह *सर्वेन्द्रियेति । उत्तरार्धार्थमाह *यथेति । तद्विदामित्यस्यार्थ—*रूपेति । योग्यतया लक्ष्यार्थमाह *सातिशयेति । विशेषपदार्थमाह *अतिशयेति । विषयसप्तमी । 'अभ्यासाद्'इत्यस्य मध्यमणिन्यायेन पूर्वत्राप्यन्वयादाह *योगेति । ननु स्वत एव प्रवृत्तौ नोक्तरीतिसम्भवो ऽत आह *शब्दमिति । प्रवर्तकशब्दमित्यर्थः । अत्र शब्दाभावात्तत्स्वरूपमाह *यस्येति । नन्विदं प्रकारद्वय मूकबधिरादौ न सम्भवतीति तत्र कथमत आह *एडमूकेति । अणुदित्सूत्रभाष्याविरोधायाह *तन्मूलकमिति । *स्वीयम्—स्वमात्रश्रव्यमान्तरम् । न केवलमत्रैवेदमित्याह *बालकस्येति । द्वितीयादावाद्यत. सम्भवादाह *आद्येति । *तदिति । इष्टसाधनत्वेत्यर्थ । अन्यथा इष्टसाधनशङ्कावपि विश्वजिदादौ स्वर्गरूपेष्टकल्पनम्, सन्ध्यावन्दनादौ चाकरणे प्रत्यवायकल्पनमित्यत्र तवापि नियामक न स्यात् । तत्र हि परवेदेनात्याप्तेनेष्टसाधनत्वोक्तौ वक्ष्यमाणरीत्या तत्कल्पनम् । नित्यादौ च तदनुपपत्त्यैतदकरणे प्रत्यवायकल्पनमिति । ननु काम्यस्थले तथाऽस्तु, नित्यनैमित्तिकस्थले तु इष्टस्यैवाभावात्तत्र कथ प्रवृत्तिरत आह *अहरहरिति । आदिना यावज्जीवादि । अपिना काचित्केष्टसाधनत्वसमुच्चयः । तच्चोक्त प्राक् । *सिद्धिरिति । तथा च तदभावरूपेष्टमादाय तत्र प्रवृत्तिरिति भावः । नन्वेवमपि वि-

श्वजित्यप्रवृत्त्यापत्तिः, तस्य बहुवित्तव्ययायाससाध्यत्वेन विशिष्यैव तदाक्षेपापेक्षा। साच तद्बोधकपदाभावाद् दुर्लभा। सामान्यतस्तदाक्षेपस्तु न तत्र प्रवर्त्तकः। तथात्वे ऽतिप्रसङ्गो ऽपीत्यत आह *विश्वेति। "स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वाद्"इति जैमिनीयन्यायेनाह *सर्वेष्टेति। विशेष वक्तुमनुवदति *प्रेरणेति। *तत्र—तेषां मध्ये। *शब्देति। तत्प्रयोगेत्यर्थः। नन्वेव शक्यतावच्छेदकगौरवमत आह *तद्वतीति। समवायाभावादाह *अखण्डोपेति। *तस्य—उक्तरूपव्यापारस्य। भावनात्वस्य वक्ष्यमाणत्वादाह *शब्देति। स्वार्थे प्रज्ञाद्यणिति भावः। नन्वेव वेदे कथ तस्याः शब्दनिष्ठत्वमत आह *शब्देति। औपाधिकभेदमादाय तथेति भाव। नन्वेवमपि शब्दस्याकाशनिष्ठत्वाद् लोके पुरुषनिष्ठत्व कथमत आह *लोके इति। सम्बन्धान्तरेणेति भावः। नन्वेवमपि तस्य कथं व्यापारत्व तल्लक्षणानाक्रान्तत्वादत आह *लिङ्गेति। ततो ऽपि विशेषमाह *प्रेरणात्वेनेति। भूषणकारादिमत खण्डयति *यत्त्विति। *प्रवृत्तीति। तन्मात्रेत्यर्थ। तथा च तस्या एव वाच्यत्वौचित्यम्। ननु तद्विना ऽपि क्वचित् तथैव प्रवृत्तिदर्शनात्कथ तस्यैव तत्त्वमत आह *इष्टेति। कर्तुरिति शेषः। अत एवाविरोधमाह *भवदिति। तस्यैवान्यरूपेण ज्ञातस्याप्रवर्त्तकत्वादाह *इच्छेति। विषयत्वस्य विशेषणत्वे सर्वासंग्रहादाह *उपलक्षितेति। अत एवाह *तेनैव चेति। नन्वेव वक्ष्यमाणेऽनतिप्रसङ्गाय तज्ज्ञानस्यापि प्रवृत्त्यौपयिकत्वेन शक्यत्वापत्तिरत आह *बलवदिति। नन्वेवं मधुविषसंपृक्तान्नभोजनादौ प्रवृत्त्यापत्तिरत आह *मध्विति। ननु विनिगमनाविरहात् तथाऽपि स्यादत आह *युक्तचैतदिति। नन्विष्टापेक्षयाऽनपकृष्टदुःखजनकत्वरूपबलवदनिष्टजनकत्वज्ञानमेव कुतो न प्रतिबन्धकमत आह *सत्यपीति। तस्मात्तत्त्वेऽन्यत्र दोषमुद्धरति—*क्वचित्त्विति। तथैवाह *क्वचिदिति। *तथा–प्रतिबन्धकः। *अत्र–उक्तविषये। उभयफलान्तरमाह *अत एवेति। तस्या उत्तेजकत्वात्तस्य प्रतिबन्धकत्वाच्चेत्यर्थः। ननु कारणतावच्छेदककोटिप्रविष्ट कृतित्व जातिरूपमतिप्रसक्तमत आह *कृतित्वञ्चेति। *जीवनयोनीति। तेन तत्साध्यप्राणपञ्चकसंचारे न प्रवृत्तिः, प्राणा-

यागादौ योगिनां प्राणसंचारे च प्रवृत्तिर्भवत्येव । तस्य तादृश-कृतिसाध्यत्वात् । एतेनेत्यस्यार्थमाह *कृत्यसाध्येति । चन्द्रमण्डल-ग्रहणादावित्यर्थः । *तत.—प्रवृत्तिन । *चिकीर्षायाएवेति । त-स्यास्तदकारणत्वे तु कृतिसाध्यताज्ञानवतोऽपि सिद्धत्वादिज्ञान-दशायां तत्साध्यकप्रवृत्त्यापत्तिः, मम तु सिद्धे इच्छाविरहेण चिकी-र्षाऽनुदयान्न क्षतिरिति भावः ॥ २९ ॥

यत्त्वशक्तस्यापि यत्किञ्चित्कृतिसाध्ये ऽप्रवृत्त्या-पत्त्या मदंशविशिष्टं प्रवर्तकं वाच्यम् । तस्य च विधितोऽसम्भवेन 'यागो मत्कृतिसाध्यो मत्कृतिसा-ध्यत्वविरोधिधर्मानधिकरणत्वाद्'इत्यनुमानेन तद्ग्रहो वाच्यः । एवंचान्यलभ्यत्वान्नास्य विधिशक्यता ।

उपायेच्छां प्रति फलेच्छायाः समवायसंबन्धेन कारणतयाऽतिप्रसङ्गभङ्गेनेष्टसाधनताज्ञानस्य मदंशा-न्तर्भावेण कारणत्वे न फलं नापि मानम् । फलेच्छो-पायजिज्ञासोपायज्ञानानामिच्छास्थैर्येण यौगपद्याङ्गी-कारात्फलेच्छायामुपायेच्छापूर्ववृत्तित्वस्य न क्षति-रिति । तन्न । सर्वत्राज्ञस्येन फलेच्छोपायजिज्ञासा-देर्यौगपद्योपपादनासंभवेन फलेच्छाया उपायेच्छां प्रत्यकारणत्वात् ।

किंच प्रतिपुरुषं विधेरावृत्त्या बोधकत्वेन तत्तत्पु-रुषज्ञातेन विधिवाक्येन तत्तत्पुरुषेष्टसाधनत्वस्य तत्तत्पुरुषकृतिसाध्यत्वस्य च बोधसंभवाद् नानुमा-नावश्यकता । 'यजेत'इति कर्त्रर्थकेन तत्तत्पुरुष प्रति प्रवृत्तेन वाक्येन प्रत्यासत्त्या तत्तत्पुरुषरूपकर्तुरेव बोधनात् । साधनत्वं चाखण्डोपाधिः । "ज्योतिष्टोमेन

स्वर्गकामो यजेत" इत्यादौ देवतोद्देशेन द्रव्यत्यागरूपस्य यज्यर्थफलस्य तदर्थकृत्यादिरूपभावनां प्रति करणत्वम्, तस्यां चेष्टसाधनत्वान्वयः । एवं च भावनानिष्ठस्येष्टकरणत्वस्य लिङोक्तावपि भावनानिरूपितस्य भावनाभाव्यनिर्वर्तकत्वरूपस्य त्यागनिष्ठकरणत्वस्यानुक्तत्वान्न तत्समानाधिकरणे ज्योतिष्टोमादिपदे तृतीयाऽनुपपत्तिः । ज्योतिष्टोमादिनामधेयमपि त्यागस्यैव। त्यागघटितदीक्षणीयाद्युदवसानीयान्तकर्मकलापे तथाव्यवहारस्तु गौणः । तस्य स्वर्गकरणत्वव्यवहारोऽपि तथैवेति बोध्यम् ।

"न कलञ्जं भक्षयेद्" इत्यादावनिष्टसाधनत्वं विध्यर्थः, अत्रैव नञ् तात्पर्यग्राहक इति । तन्न । चिकीर्षया इष्टसाधनत्वस्याप्यन्यथासिद्धेः । 'अमुकफलसाधनामिदं कृतिसाध्यं भवतु' इतीच्छाया एव चिकीर्षात्वात् । एवं हि प्रवृत्तौ फलविषयतानियमस्याप्युपपत्तिः । उपायेच्छयाऽपि तदन्यथासिद्धेश्च । सा च 'अमुकसाधनं पाको जायताम्' इत्याकारैव। इच्छायाः स्वजनकज्ञानप्रकारप्रकारकत्वनियमात् । न च द्वारेण द्वारिणो नान्यथासिद्धिः । यस्य द्वारिणो मानान्तरेण तत्कारणता सिद्धा, यथा-यागपरश्वोः, तदन्यथाऽनुपपत्त्या च द्वारस्यापूर्वादेः कल्पनम् तद्विषये, तदभावे ऽपि अन्यत्र तदभावे मानाभावात् ।

येषामपि चिकीर्षाव्यापारेच्छैव व्यापारे कृतेरपि निवेशात् कृतीच्छाऽपि सा । तेषामपि व्यापारविषये इष्टसाधनत्वकृतिसाध्यत्वज्ञानोत्तरमेव सेति

ते अन्यथासिद्धे एव ।

किंच 'इदं ते इष्टसाधनं कृतिसाध्यं च नाप्यत्र दुःखं तस्मात्त्वं कुरु' इति स्वारसिकलोकव्यवहारसत्त्वेन तस्य विध्यर्थता वक्तुमशक्या । पौनरुक्त्यापत्तेः ।

नचेदं पौनरुक्त्यं सर्वथा इष्टसाधनत्वबोधनाय, तस्मादित्यस्यानन्वयापत्तेः ।

अपि च 'राज्ञा प्रवर्तितोऽहम्' इत्यादिव्यवहारात्प्रवर्तना प्रवर्तकपुरुषनिष्ठा, सा लिङ्शक्येति सूत्रभाष्यादिसंमतम् । नचेष्टसाधनत्वं च तद्बोधो वा तन्निष्ठः । तज्ज्ञापनस्य तन्निष्ठत्वेऽपि न तदिष्टसाधनत्वेन, नापि तच्छक्यत्वेन तव संमतम् । तज्ज्ञानानुकूलव्यापारस्य मदुक्तातिरिक्तस्याभावाच्च ।

किंच इष्टसाधनताज्ञानादिव साध्येष्टकत्वज्ञानादपि प्रवृत्त्यनुभवेन विनिगमनाविरहेणोभयोः शक्यत्वे गौरवम् । साधनत्वमिव योगक्षेमसाधारणं साध्यत्वमप्यखण्डमिति न तत्पक्षेऽपि कारणताऽवच्छेदकगौरवम् ।

एवं कृतिसाध्यत्वज्ञानादिव "मत्कृतिसाधनकः पाकः" इति ज्ञानादपि चिकीर्षाप्रवृत्त्योर्दर्शनात्तच्छक्तावपि विनिगमनाविरह इति दिक् ॥ ३० ॥

(कुं० टी०) *यत्किञ्चित्कृतीति । अन्यदीयकृतिसाध्ये प्रवृत्त्यनुदयादित्यर्थः । *मदंशेति । मदंशान्तर्भावेणेत्यर्थः । *असम्भवेनेति । विधिना तथा अबोधनात् । *विधिशक्यतेति । विधिशब्देन प्रवर्तकः प्रत्यय उच्यते ।

ननु चैत्रीयफलेच्छावशान्मैत्रस्याप्युपायेच्छापत्तिरत आह *समवायसंबन्धेनेति । एकधर्मावच्छिन्नविशेष्यताकफलसाधनताज्ञानादन्यधर्मप्रकारकेच्छावारणाय तु प्रकारविशेषं निवेश्यैव कार्यकारणभावो वाच्यः । इष्टत्वं च इच्छाविषयत्वम् । तच्च स्वरूपसदेव फलविशेषणं नतु तदंशे ज्ञानमप्यपेक्षितम्, फलस्य सिद्धत्वेनेच्छाविरहेऽपि इष्टसाधनत्वज्ञानसम्भवात्सिद्धौदनादावप्युपायेच्छापत्तेः ।

ननु स्वरूपसत एव हेतुत्वे यत्रौदनत्वादिप्रकारेण फलविषयिणी इच्छा तत्र द्रव्यत्वादिप्रकारेण फलसाधनताज्ञानादपि पाकादिगोचरेच्छापत्तिरिति चेद् । अत्राहुः—स्वसामानाधिकरण्यस्वाव्यवहितोत्तरत्वोभयसंबन्धेनौदनत्वादिप्रकारकेच्छाविशिष्टपाकादिगोचरेच्छा प्रति तादृशेच्छात्वेन हेतुत्वमिति ।

ननु फलेच्छा उपायजिज्ञासां प्रति कारणं सा चोपायज्ञानजन्येति कार्याव्यवहितप्राक्क्षणे कारणस्याभावात्कथं हेतुत्वमत आह *इच्छास्थैर्येणेति । यत्तु 'यागो मत्कृतिसाध्यः' इति ज्ञानं न प्रवर्त्तकम्, अनागते तस्य ज्ञातुमशक्यत्वात्, किन्तु यस्य पुंसो यत्कृतिसाध्यम् इष्टं तादृशो ऽहमिति प्रतिसन्धानं स प्रवर्त्तते इति । तन्न । स्वकल्पितलिप्यादौ तदसम्भवात् । *सर्वत्राज्ञस्येनेति । योग्यात्मविशेषगुणानां स्वोत्तरोत्पन्नविशेषगुणनाश्यतया इच्छायाः स्थैर्यासम्भवात् । एवं कालान्तरेच्छामादायातिप्रसङ्गवारणाय संबन्धतावच्छेदकस्येच्छांशस्याव्यवहितप्राक्क्षणसत्त्वमेव कार्योत्पादप्रयोजकम् । तत्पुरुषीयत्वस्य लाभो न्यायसिद्ध इत्याह *किञ्चेति । *ज्ञातेनेति । येन पुरुषेण विधिवाक्यं ज्ञातं तस्येष्टसाधनत्वमित्यर्थः । ननु "विश्वजिता यजेत" इत्यादौ इष्टविशेषस्याश्रवणाद् यत्किञ्चिदिष्टसमाना-

धिकरणाभावप्रतियोगितावच्छेदकमेव यागत्वम्, किञ्च गङ्गास्नानादितोऽपि स्वर्गोत्पत्त्या गृहीतकारणत्वान्यथाऽनुपपत्त्या यागजन्यत्वावच्छेदकं स्वर्गनिष्ठं वैजात्यं कल्प्यते तस्य च कथं प्रागुपस्थितिरित्याशङ्क्याह *साधनत्वं चेति । *भावनाभाव्येति । भावना शाब्दी भावना । तया निर्वर्त्या आर्थी भावना तया फलं निर्वर्त्यते । *यज्यर्थफलस्येति । त्यागानुकूला भावना यज्यर्थः, त्यागः फलम् । तच्च भावनारूपव्यापारं प्रति कारणं तत्समानाधिकरणत्वात् तृतीयेत्यर्थः । ननु त्यागानुकूलभावनाया यज्यर्थत्वे त्यागस्य यागत्वाभावात्कथं तत्समानाधिकरणे तृतीयेत्याशङ्क्याह *ज्योतिष्टोमादीति । "अध्वर्युर्गृहपतिं दीक्षयित्वा"इत्यादिना बोधिता इष्टिर्दीक्षणीया । उदवसानशब्दः समाप्तिवाची । अवभृथानन्तरमुदवसानीया क्रियते । अत एव कृतेऽवभृथे दीक्षाया निवृत्तत्वाद् "दीक्षितो न ददाति न जुहोति"इत्यादिनिषेधो निवर्त्तते । *गौण- इति । अत एव प्रमादादिनाऽङ्गान्तरलोपे प्रायश्चित्तम् । *फलविषयतेति । फलस्य विषयत्वं चोद्देश्यतया । एतेन "पाकसाध्यं सुखं जायताम्'इतीच्छायाम् एकधर्मिकेष्टसाधनताज्ञानस्य हेतुतायां व्यभिचारः' इत्यपास्तम् । *तदन्यथासिद्धेः–इष्टसाधनताज्ञानस्यान्यथासिद्धेः । *नियमादिति । एवञ्चेच्छाया इष्टविषयकत्वेन कृतौ तद्विषयतानियमः सिद्धः, इच्छाकृत्योः समानविषयकत्वेनैव कार्यकारणभावादिति भावः । ननु दण्डादीनां विनाशेऽपि तज्जन्यभ्रमणसंबन्धेन घटोत्पादाद्घटं प्रति दण्डस्य कारणत्वासम्भव इत्यतः स्वजन्यभ्रमणसंबन्धेनैव दण्डस्य हेतुता वाच्या । अत एव व्यापारसम्बन्धावच्छिन्नं कारणत्वं करणत्वमिति वदन्ति । नच व्या-

पारस्यैव कारणत्वमस्तु, व्यापारशून्यकाले च व्यापाराभावेनैव फलानुत्पत्तेरिति वाच्यम् । व्यापारशून्यकाले व्यापारसंबन्धेन कारणाभावादेव फलानुत्पत्तिरित्यस्यापि वक्तुं शक्यत्वात् । तस्माद्विनिगमनाविरहेणोभयं कारणम्, अन्वयव्यतिरेकादिरूपयुक्तेस्तुल्यत्वादित्याशङ्कते *नचेति । *यस्येति । क्षणिकयागस्य कालान्तरभाविस्वर्गजननायादृष्टाख्यो व्यापारः कल्प्यते तत्र नान्यथासिद्धत्वमित्यर्थः । ननु क्लृप्तत्वाद्यागध्वंस एव व्यापारो ऽस्तु, उत्पाद्यफलध्वंसस्य प्रतिबन्धकत्वाच्च न स्वर्गादेरानन्त्यम् । अपूर्वस्वीकारे ऽपि तत्तदपूर्वनाशं प्रति तत्तत्फलस्य हेतुत्वस्वीकारेण तुल्यत्वादिति चेत् । सत्यम् । कर्मनाशाजलस्पर्शेन तस्य नाशः कल्प्यः । *परश्वोरिति । प्रहारादिद्वारैव छेदनं प्रति परशोर्हेतुत्वात् । *तदभावे ऽपि—अन्यथासिद्धत्वाभावेऽपि । *मानाभावादिति । इह तु 'प्रवृत्तिं प्रति इष्टसाधनताज्ञानं कारणम्' इति न मानान्तरसिद्धमिति भावः । *येषामपीति । कृञ उत्पत्त्यनुकूलव्यापारवाचितया तदुत्तरसना व्यापारेच्छाया एव प्रतिपादनात् । *कृतेरपीति । कृतेरपि व्यापारविशेषत्वात् । *सा—चिकीर्षा । *ते इति । चिकीर्षया इष्टसाधनत्वकृतिसाध्यत्वे अन्यथासिद्धे इत्यर्थः । *पौनरुक्त्यापत्तेरिति । इष्टसाधनत्वमेव विध्यर्थ इति मते हि इष्टसाधनमितिशब्दस्य विधिशब्दः पर्यायः स्यात् । नच पर्यायत्वं युज्यते । "इदं ते इष्टसाधनं तस्मात् त्वं कुरु" इति सह प्रयोगादिति भावः । *तन्निष्ठः—प्रवर्तकनिष्ठः । तस्मान्नेदं लिङर्थ इति भावः । *तच्छक्यत्वेनेति । तज्ज्ञापनानुकूलव्यापारस्यैव तदर्थत्वौचित्यात् । *किञ्चेष्टसाधनत्वज्ञानादिवेति । 'पाक ओदनसाधनम्' इति ज्ञानवत् 'पाकसाध्य ओ-

दनः' इति ज्ञानस्यापि प्रवर्तकतया इष्टधर्मिकोपायसाध्यताज्ञानस्य हेतुत्वे विनिगमनाविरह इत्यर्थः । ननु प्रवृत्तिं प्रति पाकत्वादिप्रकारविशेषमनन्तर्भाव्य धर्मितावच्छेदकताप्रत्यासत्त्या इष्टसाधनताज्ञानस्य हेतुत्वे लाघवमेव विनिगमकमिति वाच्यम् । 'पाकसाध्य ओदनः' इति ज्ञानस्यापि प्रकारविशेषमनन्तर्भाव्य फलविशेष्यतानिरूपितसाध्यत्वप्रकारतानिरूपितप्रकारतावच्छेदकतासंबन्धेन कारणत्वसम्भवात् । अत्र वदन्ति—पाकत्वादिकमनन्तर्भाव्य 'पाकसाध्य ओदनः' इति ज्ञानस्य न तन्निष्ठप्रत्यासत्त्या हेतुत्वसम्भवः । 'पाकसाध्यत्वाभाववति पाकसाध्यत्वम्' इत्याकारकाप्रामाण्यज्ञानाभावस्य कारणताऽवच्छेदकत्वानुरोधेन पाकत्वाद्यन्तर्भावस्यावश्यकत्वाद् इति । तदसत् । सदोषसामग्रीजन्यत्वग्रहे तज्ज्ञानस्याप्रमात्वकल्पनात् । ननु कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणनिष्ठाभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वमेव कारणत्वम्, साध्यत्वं च तादृशधर्मावच्छिन्नसामानाधिकरण्यरूपाव्यवहितोत्तरत्वरूपमिति साध्यत्वानिवेशे गौरवमत आह *साधनत्वमिवेति । अयम्भावः—अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्य कारणत्वे अनन्यथासिद्धत्वांशे अन्यथासिद्धिनिरूपकं यत्तद्भिन्नत्वस्यानुगन्तुमशक्यत्वेन दुर्ज्ञेयत्वं गौरवं च । तस्मात्कारणत्वमतिरिक्तमेवेति । *योगक्षेमेति । यत्सत्त्वे यत्सत्त्वं यदभावे यदभाव इत्येवं योगक्षेमसाधारण साध्यत्वमित्यर्थः ॥३०॥

(क० टी०) नृसिंहाश्रमोक्तिमेतन्मतखण्डनपूर्वकतन्मतसमर्थिकां खण्डयति *यत्त्विति । *यत्किञ्चिदिति । अन्येत्यर्थ । *विधित इति । तत्त्वादेव वेदेन बोधासम्भवेनेत्यर्थः । *एव च—अनुमानरूपलौकिकप्रमाणेन तद्ग्रहे च ।

नन्वेव मदिष्टसाधनताज्ञानमेव प्रवर्त्तकं वाच्यम् । अन्येष्टसाधनेऽन्यस्याप्रवृत्ते । एवञ्च कृतिसाध्यत्ववदिदमप्यशक्यं स्यादत आह *उपायेच्छामिति । ननु यत्रादौ फलेच्छा, तत उपायजिज्ञासा, तत उपायज्ञानम्, तत उपायेच्छा, तत प्रवृत्तिस्तत्र, फलेच्छाया नाशात्कथं कारणत्वमत आह *फलेच्छोपायेति । ज्ञानयौगपद्यानङ्गीकारेऽपीत्यादि । ज्ञानास्थैर्येऽपि प्रकृते उपयुक्तमाह *इच्छेति । तच्च धारारूपतया स्वतो वेत्यन्यत् । सिद्धान्तविरोध एव क्लेश इत्याह *आञ्जस्येनेति । तदुक्तवैषम्ये दोषमाह *किञ्चेति । "एकः पूर्व-" इतिसूत्रभाष्योक्तमाह *प्रतिपुरुषमिति । ननु प्रत्ययेन कर्तृत्वेनैवोपस्थितिरिति कथं विशेषधीरत आह *यजेतेतीति । *कर्त्रर्थकेन-तद्धटितेन । नन्वेवमपीष्टसाधनत्वं न शक्यम्, नापि जनकम्, साधनत्वस्य सखण्डोपाधिरूपत्वेनावच्छेदकगौरवादत आह *साधनत्वञ्चेति । एतेनेष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वानि विशिष्टानि प्रत्येकं वा विधिशक्यानीति जीर्णनैयायिकोक्तम्, आख्यातसामान्यशक्यकृते. साध्यत्वसंसर्गेण यागेऽन्वय, व्युत्पत्त्यन्तरकल्पनस्य शक्त्यन्तरकल्पनाऽपेक्षया लघुत्वादिति नव्योक्तं चापास्तम् । नचेष्टसाधनताज्ञानमपि न प्रवर्त्तकम् । अनिष्टसाधने उदासीने च "कष्टकर्म-" इतिन्यायेन द्वेषादप्रवृत्तेरिति वाच्यम् । आन्तरालिकश्रमे द्वेषाभावदशायाम्, तदज्ञानदशाया वा प्रवृत्त्यापत्ते. । नच चिकीर्षायां सत्यामिष्टापत्तिरिति वाच्यम् । इष्टसाधनताज्ञानं विना तस्या एवाभावात् । तस्मात्तदेव शक्यम् । तच्च विजातीयस्वर्गादिसाधनत्वेनैव । तेनैव रूपेण ज्ञानस्य प्रवर्तकत्वात् । न त्विष्टत्वेन । तस्य स्वरूपसत एव हेतुत्वेन तज्ज्ञानानपेक्षणात् । बहुवित्तव्ययायाससाध्ये विशिष्य तज्ज्ञानं विना प्रवृत्त्यभावात् । सामान्यत 'इष्टसाधनम्' इति ज्ञानस्येव सामान्यत 'स्वर्गसाधनम्' इति ज्ञानस्याप्यप्रवर्तकत्वाच्च । तत्र शक्तिग्रहसौकर्याय तदादाविव शक्यतावच्छेदकानामनुगमिकेच्छा । यथा-बुद्धिविषयतावच्छेदकघटत्वादिमति तदादिपदं शक्तमित्येव तदादे. शक्तिग्रहः । बुद्धिविषयत्वमुपस्थितावुपलक्षणतया ऽनुगमकमात्रं न तु तदंशे शक्ति, एवमिहापि लिङादेरिच्छाविषयताऽवच्छेदकविजातीयस्वर्गत्वादिमत्साधनत्वे शक्त इत्येव शक्तिग्रह । पदार्थोपस्थितिरपि तदादौ प्रकरणादिमहिम्ना बुद्धिविषयतावच्छेदकघट-

त्वादिनेवेहापि समभिव्याहृतस्वर्गादिपदमहिम्ना विजातीयस्वर्गादि-साधनमित्येव नतु वुद्धीच्छयोः शाब्दबोधे प्रवेशनम्। तयोरनुगममात्रफलकत्वेऽपि शक्यविषयत्वात् । एव च तत्र विशिष्येष्टतावच्छेदकविजातीयस्वर्गत्वादिप्रकारेण शाब्दबोधोत्पत्त्या विधिवाक्यात्प्रवर्तकज्ञाननिर्वाहः । एव चेच्छाविषयताऽवच्छेदकत्वोपलक्षितविजातीयस्वर्गत्वादिविशिष्टसाधनत्वे विधे शक्तिरिति फलितम् । नच स्वर्गस्य स्वर्गकामादिपदाल्लाभेन न तत्र शक्तिः । इतरविशेषणत्वेनोपस्थितस्यान्यत्रान्वयायोगात्, विश्वजिदादौ तत्पदसमभिव्याहारस्याप्यभावाच्चेति दिक् । तदेतदभिसन्धायैवोक्तं प्राग् *विषयत्वोपेति । नन्विष्टसाधनत्वस्य शक्यत्वे ज्योतिष्टोमेनेत्यादौ तृतीया न स्यात् । करणानभिधाने एव तद्विधानात् । नच यज्यर्थगतसाधनत्वे ऽभिहिते ऽपि तद्विशेषज्योतिष्टोमादिप्रातिपदिकार्थगतस्यानभिधानेन तृतीयेति माधवोक्त युक्तम् । ज्योतिष्टोमपदार्थयज्यर्थयोरभेदात् । "अनभिहिते" इत्यस्यानभिहितसङ्ख्याके इत्यर्थवादिभिरपि कृत्साधारण्याय करणतत्सङ्ख्यान्यतरानभिधाने इत्यर्थोऽवश्य वाच्य , अन्यथा 'पचति स्थाल्या' इत्यस्यापत्तेरत आह *ज्योतीति । सर्वधातूनामशद्वयं भावनापरपर्यायो व्यापार , पाकयागादिकश्च । तत्र धातूपात्तभावनां प्रति तदुपात्तयागस्य करणत्वं तदाह *देवतेति । अयञ्च मानस । *तदर्थेति । यजिवाच्येत्यर्थः । आदिना प्रक्षेपादि । प्राधान्यादाह *तस्यामिति । भावनानिष्ठकरणत्वस्येति पाठ । ननु तदपि प्राधान्याद् भावनासमानाधिकरणमेवेत्यनुपपत्तिरेवात आह *ज्योतिष्टोमादीति । तत्त्वसाधकन्यायैस्तथैव लाभात् । एवेन तद्व्यवच्छेदः । नन्वेवं व्यवहारविरोधोऽत आह *त्यागेति । *तस्य-कर्मकलापस्य । *तथैव-गौण एव । नन्वत्र मते "न कलञ्जम्" इत्यादौ का गतिस्तद्भक्षणादेस्तृप्त्यादिरूपेष्टजनकत्वेन तदभावस्य दुर्बोधत्वात् । नचेष्टसाधनत्वाभाव एव बुध्यते । तदुपपत्तये च तद्भक्षणस्य गुरुतरानिष्टसाधनत्व कल्प्यते तत्प्रतिसन्धाने च सादृष्टिकफलादिच्छानिवृत्तौ तस्येष्टत्वमेव नेति न दोष इति वाच्यम् । रागान्धास्तिककामुकस्य सत्यप्यनिष्टसाधनत्वज्ञाने इच्छाया अनिवृत्तेस्त प्रतीष्टसाधनत्वाभावबोधकनिषेधवाक्यस्याप्रामाण्यापत्ते. । एतेन वलव-

दनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावो बुध्यते । सर्वत्र विशिष्ट एव विध्यर्थः । सच प्रकृते विशेषणाभावात्मक । नचैवमर्थवादवैयर्थ्यम् । निषेध्येषु तात्कालिकेष्टापेक्षया भाव्यनिष्टस्य गुरुतरत्वबोधनस्य निन्दार्थवादफलस्य, यागादिषु तात्कालिकक्लेशापेक्षया भावीष्टस्य गुरुतरत्वबोधनरूपस्य स्तुत्यर्थवादफलस्य च तव विधिनैव लाभादिति वाच्यम् । तद्बोधनेऽपीष्टानिष्टयोः साम्येन तुल्यायव्ययत्वशङ्काऽवारणेन तत्साफल्यादित्यपास्तम् । अत आह *अनिष्टेति । नन्वेव नञो वैयर्थ्यमत आह *अत्रैवेति । अनिष्टस्यापीश्वरेच्छाविषयत्वसम्भवेनेच्छाविषयत्वोपलक्षितदु खत्वादिविशिष्टसाधनत्वेऽस्य शक्तिग्रहः सूपपादः । आवश्यकत्वस्य प्रागुक्तत्वादाह *चिकीर्षेति । अपिना कृतिसाध्यत्वम् । ननु चिकीर्षाया उपायविषयिण्या फलाविषयकतया कथ साऽत आह *अमुकेति । ननु स्वरसत उपायविषयैव सा नैवमत आह *एवहीति । अन्यथोक्तरीत्या तदनुपपत्तिरेव । अपिस्तत्समुच्चये । तादृशतदनङ्गीकारे आह *उपायेच्छेति । अपिस्तत्समुच्चये । ननूक्तरीत्या दुर्घटमिदमत आह *साचेति । ननु पाकत्वेन पाकस्योपायता न तु तद्विशिष्टस्यात आह *इच्छायाइति । तथाचेच्छाया इष्टविषयकत्वेन कृतौ तद्विषयतानियमोपपत्तिः । इच्छाकृत्योः समानविषयकत्वेन कार्यकारणभावात् । समाधत्ते *यस्येति । नहि इष्टसाधनताज्ञान प्रवृत्तिं प्रति कारणमित्यत्र तथोदासीन किञ्चिद् मानमस्ति । ईदृशोपायेच्छाऽनङ्गीकारे ऽप्याह *येषामपीति । मते इति शेषः । एवेनोक्तोभयनिरासः । मतान्तरसङ्ग्रहायाह *व्यापारेति । *साध्यत्वेति । तयोर्ज्ञानोत्तरमेवेत्यर्थः । तन्मते दोषान्तरमाह *किञ्चेदमिति । *तस्य—इष्टसाधनत्वस्य । "द्विर्बद्धम्" इति न्यायेनाह *नचेदमिति । दोषान्तरं तत्राह *अपिचेति । *सूत्रेति । इदमनुपदमेव स्फुटीभविष्यति । *नच—नहि । *तदिति । इष्टसाधनत्वेत्यर्थः । *तत्—तज्ज्ञापनम् । ननु भेदे ऽपि तदेवास्त्वत आह *नापीति । तथा तदनुक्तेः । नन्वनुक्तावपि 'अप्रतिषिद्धम्' इति न्यायेनेष्टमिति चेत् तर्हि मन्मतसिद्धिरेवेति तदसमतौ हेत्वन्तरमाह *तदिति । इष्टसाधनत्वेत्यर्थः । दोषान्तरमाह *किञ्चेष्टेति । *विनिगमेति । यद्यपि साध्यत्वस्य साधनोत्तरवर्तित्वरूपस्य गुरुत्वं

तथा, तथाऽपि तस्य सार्वत्रिकत्वेनात्र तज्ज्ञानापेक्षत्वेन च त-स्याकिञ्चित्करत्वम्, अन्यथा गौरवमपि न तथेत्याह *साधन-त्वमिति । यत्र सति अग्रिमक्षणे यत्सत्त्व यद्व्यतिरेके चासत्त्वमित्ये-वरूपं हि साध्यत्वमित्याह *योगेति । अलब्धलाभो योगः लब्धस्य परिपालन क्षेम । अत एव दुःखानुत्पादार्थिन' कर्मविपा-कादौ प्रवृत्तिः । उक्तदोष मतान्तरे दूषितेऽतादिशति *एव-मिति । दिगर्थस्त्वेतेनेत्यादिना प्रागुक्त एव ॥ ३० ॥

"न कलञ्जं भक्षयेद्"इत्यादावारोपितं कलञ्जभक्षणं प्रेरणाविषय इति वाच्यार्थः । तदभावः प्रेरणाविषय इति तु आर्थार्थः, न तु शाब्दः । नञ्वादोक्तरीत्या वा-च्यवृत्त्या विभक्त्यर्थान्वयाभावात् । तेन च प्रतियोगि-न्यनिष्टसाधनत्वं बोध्यते । 'यदभावत्वेन यदभावः प्रेरणाविषयतया बोध्यते तत्प्रतियोगी कलसेष्टाधिका-निष्टसाधनम्'इति व्याप्तेः । तद्भक्षणे प्रायश्चितविधयश्च तत्र तथाकल्पने तात्पर्यग्राहकाः ।

"तत्तु समन्वयाद्"इति सूत्रे शाङ्करभाष्येऽपि "न ब्राह्मणं हन्याद्"इत्यादौ "स्वभावतो हन्त्यर्था-नुरागी नञ् । एष एवच नञः स्वभावो यत्स्वसम्ब-न्धिनो ऽभावबोधनम्, निषेध्याभावबुद्धिश्च निषेध्य-विषयौदासीन्ये कारणम्"इति ।

औदासीन्यं निवृत्तिः । 'शस्त्रग्रहणादिरूपा या तद्धननोद्यमक्रिया तस्या उपरन्तव्यम्'इति बुद्ध्या या शस्त्रस्थापनादिक्रिया तदुपलक्षितवधप्रवृत्त्यभावस-मानाधिकरणः क्रियाविशेषो 'निवर्तते' इत्यादिपद-वाच्यो निवृत्तिः ।

नच प्रवृत्त्यभाव एव निवृत्तिरस्तु । विनिगमना-

विरहात्। तस्मादिदं पदार्थद्वयं परस्पराभावसमानाधिकरणमिति प्रामाणिकाः ।

अनेन हि धात्वर्थाभावे लिङर्थप्रेरणाविषयतेति लभ्यते ।

"आवृत्तावप्यविरोधः" इति सूत्रेऽपि भाष्ये–"न सुरां पिबेद्"इति वाक्ये नञ्वति पदत्रयसंबन्धात्सुरापाननिषेध एव गम्यते नतु विध्यर्थप्रतिषेधः" इत्युक्तम् ।

यत्तु मिश्रैः–'निषेध्येऽनिष्टसाधनताबुद्धिरेव निषेध्याभावबुद्धिः'इति व्याख्यातम्। तन्न । अक्षरास्वारस्यात् । मम तु निषेध्याभावस्य प्रेरणाविषयत्वेन बुद्धिर्निषेध्यविषयौदासीन्ये कारणमिति तदर्थः ।

किं च 'अनिष्टसाधनत्वम्'इत्यस्य यदीष्टसाधनत्वाभाव इत्यर्थः,तदा कलञ्जभक्षणादौ बाधः, यद्यनिष्टजनकत्वमर्थः, तदा नञो विध्यर्थानुरागेण, विध्यर्थैकदेशानुरागेण वा 'हन्त्यर्थानुरागी नञ्'इति भाष्यासङ्गतिः ।

एतेन तत्समभिव्याहारे प्रत्यवायाभावरूपेष्टसाधनत्वं विध्यर्थस्तदभावो नञा बोध्यते। 'ज्वरितो न भुञ्जीत'इत्यादौ दुःखवृद्ध्यभावरूपेष्टसाधनत्वं विध्यर्थः । एवं च निषेध्यकरणे ऽर्थात्प्रत्यवायदुःखवृद्धी इत्यपास्तम् ॥ ३१ ॥

( कुं० टी० ) *विभक्त्यर्थान्वयाभावादिति । विभक्त्यर्थेन नञर्थान्वयाभावादित्यर्थः । 'कलञ्जभक्षणाभावः प्रेरणाविषयः'

इति नार्थः । 'प्रत्ययानां प्रकृत्यर्थान्वित–'इतिन्यायेन धात्वर्थे भक्षणे एव प्रत्ययार्थप्रेरणाया अन्वयस्य न्याय्यत्वादिति भावः । एतेनैकदेशे धात्वर्थे कथं नञर्थान्वय इत्यपास्तम् । *तेनचेति । कलञ्जभक्षणाभावस्य प्रेरणाविषयत्वेन चेत्यर्थः । *प्रतियोगिनि—भक्षणे । *बोध्यते—आक्षिप्यते । *क्लृप्तेष्टाधिकेति । निषेधस्य प्राप्तिपूर्वकत्वाद्रागत इष्टसाधनत्वज्ञानमस्तीति सूचनायैव तत् । ननु "न ब्राह्मणं हन्यात्"इत्यादौ निवृत्तिः प्रतीयते, निवृत्तेश्चाक्रियात्वादक्रियार्थस्योपदेशोऽनर्थक इत्याशङ्क्याह *नब्राह्मणमिति । ननु अहननं कुर्यादित्यर्थाद्विधिरस्त्वित्याशङ्क्याह *स्वभावतइति । स्वभावतः शास्त्रादृते रागेण प्राप्तो यो हन्त्यर्थो हननं तदनुरागी तत्संबन्धी नञित्यर्थः । *स्वसंबन्धिनः–स्वप्रतियोगिनः । तस्माद्धननक्रियौदासीन्यमेवात्रार्थः । अभावबुद्धिश्च औदासीन्यकारणम् । औदासीन्यंच तस्मान्निवृत्तिः । अनेन हि स्वरसतो धात्वर्थाभावे लिङर्थान्वयो लभ्यते । ननु अभावबुद्धिर्यदि औदासीन्यस्थापने कारणं तदा अभावबुद्धौ नष्टायामौदासीन्यमपि निवर्त्तेत इत्यत आह *निवृत्तिरिति । तथा च दग्धेन्धनानलवदुपशाम्यतीति भावः । *प्रवृत्त्यभावएवेति । एतेनाभावस्य क्रियारूपत्वाभावेन प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनाविषयत्वासम्भव इति भावः । *इदमिति । प्रवृत्तिर्निवृत्तिश्चेत्यर्थः । *धात्वर्थाभावे–वधाभावे । *आवृत्तावपीति । कल्पान्तरेऽपि व्यवहारस्य तुल्यत्वान्न शब्दार्थसम्बन्धनित्यताविरोध इत्यर्थः । *नसुरामिति । विध्यर्थवादयोर्वाक्यैकवाक्यत्वादवान्तरार्थबोधे हि "न सुराम्"इत्यादौ "सुरां पिबेद्" इत्यवान्तरार्थबोधो न भवतीत्यर्थः । *तदेति । नासौ शा-

ब्दार्थ इति भावः । *एतेनेति । "न कलञ्जं भक्षयेद्"इत्यत्र इष्टसाधनत्वं कृतिसाध्यत्वं न विध्यर्थः तदभावस्याप्रतीतेः, किन्तु बलवदनिष्टाननुबन्धित्वमात्रम् अथवा प्रत्यवायाभाव एव तत्रेष्टमित्यर्थः ॥ ३१ ॥

( क०टी० ) सिद्धान्ते "न कलञ्जम्"इत्यादौ गतिमाह *न कलञ्जमिति । तत्र तावत्प्रागुक्तसिद्धान्तेनाह *आरोपितामिति। नन्वेवं तदभावः प्रेरणाविषय इति सर्वेष्टबोधोच्छेदो ऽत आह *तदभाव- इति। कलञ्जभक्षणाभावइत्यर्थ । "प्रत्ययानाम्"इति न्यायेनाह *नञ्वादोक्तेति । *तेनच—आर्थतथाबोधेन च । तत्र बीजत्वेन सामान्यमुखव्याप्तिमाह *यदभावत्वेनेति । ननु तस्य प्रेरणाविषयतया इष्टसाधनत्वेनावश्यानुष्ठेयत्वेऽपि कथ तादृशव्याप्त्या तेन तत्र तद्बोधनमत सामान्यमुखव्याप्तौ बीजमाह *तद्भक्षणे इति । *तत्रेति—तत्प्रतियोगिन्यनिष्टसाधनत्वकल्पने इत्यर्थः । उक्तार्थेऽन्यसंमतिमाह *तत्त्विति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद् ब्रह्म साक्षाद्वेदान्तप्रतिपाद्यम्, कुत', समन्वयात् साक्षादेवोक्ततात्पर्यवत्त्वादित्यर्थ. । उपासनस्य मोक्ष प्रति हेतुत्वानभ्युपगमादुपास्तिविधिशेषत्वेन प्रतिपादने मानाभावादिति भाव । *भाष्येऽपीत्यस्योक्तमिति शेषः । *अनुरागी—सम्बन्धी । औदासीन्य न प्रसिद्धमित्याह *निवृत्तिरिति । ननु तदभावरूपनिवृत्तेस्तत्सामग्र्यभावादेव सिद्धा न तत्र पृथक्कारणापेक्षेति तदसङ्गतिरत आह *शास्त्रग्रहेति । प्राग्वदाह *तदुपेति । तत्सत्त्वे मानमाह *निवर्त्तेति । वाच्य इति पूर्वविशेषणम् । उक्तांशेनैव शङ्कते *नचेति । *इदम्-प्रवृत्तिनिवृत्त्याख्यम् । यदर्थमिदमुक्त तदाह *अनेनहीति । स्वरसत इति भाव. । अन्यसूत्रस्थतत्समतिमप्याह *आवृत्ताविति । समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्चेति सूत्रे ऽपीत्यर्थ. । "प्रलयेन सर्वात्मना जगतो नाश संस्कारात्मना स्थितेरिति न वैलक्षण्यम् । "सूर्याचन्द्रमसौ"इति श्रुतेः ।

यथर्तुषु तु लिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ इति—

स्मृतेश्चेत्यर्थः । *मिश्रैः—वाचस्पतिमिश्रैः । अत्र मते तत्सम-

भिव्याहृतविधेस्तत्र लक्षणेति नासौ शब्दार्थ इति न दोषो ऽत आह *तदानञइति । ननु तत्र तात्पर्यग्राहकत्वे ऽपि कथं तदनुरागो ऽत आह *विध्यर्थैकेति । नञ इष्टपदेन समासो न लभ्यते इति भावः । *एतेन-शाङ्करभाष्यविरोधेन । *बोध्यतेइति । साधनत्व चात्र तत्सत्त्वे नियमत. प्रत्यवायाभावस्तदभावे नियमतः प्रत्यवाय इत्यन्वयव्यतिरेकवत्त्वम् । एव चार्थात्तद्भक्षणादौ प्रत्यवायः सिध्यतीति न दोष· । तत्साधनत्वज्ञानाच्च ततो निवर्त्तते । कलञ्जकवलग्रहणरूपायास्तद्भक्षणोद्यमाक्रयाया उपरन्तव्यमिति बुद्धा कर्त्तव्यत्वेनानुसन्धीयमाना या तत्कवलस्थापनक्रिया तदुपलक्षितभोजनप्रवृत्त्यभाव एव निवृत्तिव्यवहारविषय इति भावः । सर्वत्र नैवमित्याह *ज्वरितइति । उक्ताशयेनैवाह *एवचेति ॥२१॥

"यो ब्राह्मणायावगुरेत्तं शतेन यातयात्"इत्यादौ हेतुहेतुमतोर्लिङा 'यत्कर्तृको ब्राह्मणवधोद्यमस्तत्कर्मिका तादृशवधोद्यमजन्या यमदूतकर्तृका शतयातना'इति बोधेन साध्यसाधनत्वग्रहे प्रवर्तकत्वेन निवर्तकत्वेनैव वा वेदस्य प्रमाणत्वात् । तेन वधोद्यमनिवृत्तिपरत्वग्रहे तस्मान्नावगुरितव्यामिति विधिः कल्प्यते ।

अत एव भगवान्पाणिनिः "विधिनिमन्त्रण-"इति सूत्रे विधिपदार्थं तद्विशेषनिमन्त्रणादिभिर्विवृतवान् ।

निमन्त्रणं नाम श्राद्धादिभोजनानुकूलो व्यापारः प्रयोजकनिष्ठो, निमन्त्रयते इत्यादितस्तथा प्रतीतेः । नचेष्टसाधनत्वं तन्निष्ठमित्युक्तम् ।

उक्तं च हरिणा—

अस्ति प्रवर्तनारूपमनुरूपं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥

न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।

विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥ इति।

न्यायेत्यस्य प्रागुक्तन्यायेत्यर्थः । नन्वस्य लोकव्युत्पत्त्यैव सिद्धिरतः प्रपञ्चार्थमिति । चतुर्णामित्युपलक्षणम्–प्रार्थनस्यापि ।

अत एव "हेतुमतिच"इति–सूत्रे भाष्ये "पृच्छतु मां भवान्"इत्यत्र "णिच् कस्मान्न भवति"इति, लिङादिशब्दप्रयोगरूपस्य कर्तृप्रयोजकव्यापारस्य सत्त्वाद् इति प्रश्नः । उत्तरम् "अकर्तृत्वाद्"इति । सक्रियप्रेरणायां णिच्। निष्क्रियप्रेरणायां लोडादि।"तत्प्रयोजकः"इत्यत्र कर्तृपदेन व्यापाराविष्टः कर्ता गृह्यते इति भावः।"अथापि कथं चित्कर्ता स्यादेवमपि न दोषः।लोटोक्तत्वात्प्रेरणस्य णिज् न भविष्यति" इति । इष्टसाधनत्वस्य णिजर्थत्वाभावेन तस्य विध्यर्थत्वे तदसङ्गतिः स्पष्टैव ।

यत्तु कैयटेन "प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे, णिचा सह लोटः पर्यायप्रसङ्गः" इति प्रश्नाशय उक्तः, स चिन्त्यः । पर्यायस्य "लोटोक्तत्वाद्" इत्यनेन वारणासम्भवात् । नापि पर्यायः प्राप्नोति । लोट्प्रयोगरूपप्रेरणायास्तदप्रयोगे ऽभावात् ।

"विधिनिमन्त्रण–"इतिसूत्रे ऽपि भाष्ये "विधिः प्रेरणम्"इत्युक्तम् ।

वात्स्यायनोऽपि "विधिर्नियोगः" इत्याह ।

नियोगो नियोजनं नियोजयतीत्यादिप्रतिपाद्यं प्रवर्तकनिष्ठव्यापाररूपमेव । प्रेरणात्वं प्रेरणादि-

धात्वर्थतावच्छेदकतया सिद्धमेव । तस्य च लिङादिवृत्तित्वमात्रं कल्प्यते इति न मे किञ्चित् कल्प्यम् । एवंचेष्टसाधनत्वबोधे तस्यासाधुत्वं स्पष्टमेव ।

एतेन वक्तुः कर्तव्यत्वेनेच्छैव लिङर्थः। तया चेष्टसाधनत्वाद्यनुमानम् । तद्यथा स्वर्गकामस्य याग इष्टसाधनम्, कर्तव्यत्वेनाप्तोक्तलिङ्बोध्येच्छाविषयत्वात् । यथा मत्पित्रेष्यमाणं मम भोजनम्। विषभक्षणादेरपि कस्यचित्कृतिसाध्यतया तत्कर्तव्यत्वेनेश्वररूपाप्तेच्छाविषयत्वेन तदनुमापकत्ववारणाय लिङ्बोध्येति । वेदे आप्तस्तु ईश्वर एव । विधिरेव तावद्गर्भ इव कुमार्याः श्रुतेः पुंयोगे मानमित्याचार्योक्तमपास्तम्। वक्त्रिच्छाया अपि इष्टसाधनत्ववदनुमेयत्वाच। "कः प्रयोज्यस्य प्रेरणार्थो यदभिप्रायेषु आसज्जन्ते" इति "हेतुमति च" इति सूत्रस्थभाष्येणेच्छायां प्रेरणानुमेयत्वस्यैव लाभात् ।

किञ्च 'पच' इत्यादिप्रयोगाभावे तदिच्छां प्रकारान्तरेणानुमाय पाककरणोत्तरं 'कस्य प्रेरणया त्वया पाकः कृतः' इति प्रश्ने 'नाहमनेन प्रेरितः किन्तु एतदिच्छां ज्ञात्वा मयेदं कृतम्' इति व्यवहारात् । प्रेषितुरपि 'न मयाऽयं प्रेरितः किन्तु स्वचातुर्येणैव मदिच्छां ज्ञात्वा कृतवान्' इति व्यवहाराच्चेच्छाजन्यशब्दप्रयोगादेरेव प्रवर्तनात्वं लभ्यते न त्विच्छायाः ।

किञ्च वेदे 'अधिकारी इदं कुर्याद्' इतीश्वरेच्छाया अङ्गीकारे तदिच्छाया विसंवादिनीत्वापत्तेः । नचेश्वरेच्छाया विसंवादिनीत्वं त्वदीयानामपि संमतम्।

अधिकारिणाऽपि ज्योतिष्टोमादेः कदाचिदकरणात्[1] ।

किञ्च वेदस्य सकर्तृकत्वे ईश्वरज्ञानप्रामाण्यापेक्षया वेदप्रामाण्यापत्तौ स्वतःप्रामाण्यं तस्य भज्येत । बुद्धवाक्येऽपि प्रामाण्यापत्तेश्च । ईश्वरवचनत्वसाम्ये 'बुद्धवाक्यं न प्रमाणं वेदवाक्यं प्रमाणम्' इत्यत्र विनिगमनाविरहात् । श्वासप्रश्वासादिवदीश्वरकर्तृकत्वं तु वेदस्य न विवादविषयः । बौद्धाद्यागमास्तु नैवम्, बुद्धिपूर्वकयत्नेनैव बुद्धादिभिस्तत्करणादिति तच्छास्त्रे मत्स्यपुराणादिषु च प्रसिद्धम् ।

अत एव पस्पशायां भाष्ये सौत्रामण्यां सुराग्रहनिन्दाबोधकस्य—

'यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।
पीतं न गमयेत्स्वर्गं तत्किं क्रतुगतं नयेद्' ॥ इति

बुद्धश्लोकस्यापि भ्राजाख्यकात्यायनप्रणीतश्लोकवत्प्रामाण्यमाशङ्क्य "प्रमत्तगीत एष तत्रभवतः" इत्युक्त्वा तस्याप्रामाण्यमुक्तम् । 'प्रमादेन वेदविषयविप्रतिपत्त्याश्रयत्वेन गीतोऽतोऽप्रमाणमिति तदर्थः । तत्रभगवतः पूज्यस्यापि तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय सोक्तिर्न प्रमाणमिति तद्भावः । भ्राजाख्यश्लोकानां तु श्रुतिमूलकत्वात्प्रामाण्यम्' इति कैयट इति दिक् ।

'अपूर्वं विधिशक्यम्' इत्ययुक्तमेव । लौकिकवाक्ये तदसम्भवात् । किञ्च नित्येषु विधिषु, निषेधविधिषु पण्डापूर्वकल्पने गौरवमिति दिक् ॥ ३२ ॥

---

१ कदाचित्करणादित्यपि पाठः ।

(कुं० टी०) *अवगुरेदिति । अवगोरणं ताडनाय दण्डोद्यमनम् । यद्यपीदं प्रकरणाक्रत्वङ्ग प्राप्तं तथाऽपि यातनारूपफलश्रवणात्पुरुषार्थमेवेति प्रकरणाद् उत्कर्षः । *नचेष्टसाधनत्वमिति । नचेष्टसाधनत्वं प्रयोजकनिष्ठं यतस्तन्न विध्यर्थ इत्यर्थः । णिच् कस्मान्न भवतीति प्रश्नस्य णिचा सह समुच्चयः कस्मान्न भवतीत्याशयं वर्णयति *लिङादिशब्देति । णिचो द्योतकतापक्षे तत्प्राप्तिरिति भावः । ननु 'उक्तः करोति' 'प्रेषितः करोति' इत्यादाविव लोटोक्ते णिचः प्राप्तिरेव नास्तीति चेत् । सत्यम् । पचतु इत्यादिलोडन्तशब्दप्रयोगरूप एव प्रयोजकव्यापारो णिजर्थः । स च न लोड्वाच्यः इति भिन्नार्थत्वात् समुच्चयः प्राप्नोति इति भावः । *सक्रियेति । यो हि कर्त्तारं प्रयोजयति स एव हेतुसंज्ञः, प्रयोज्यस्य तु निर्व्यापारस्यात्र कर्तृत्वमेव विधीयते । यथा—'राजा भव युध्यस्व' इति राजत्वम् । ननु देवदत्तं गमयिष्यतीत्यादाविव भाविकर्तृत्वमस्तीत्यतो भाष्यकार आह *अथापीति । *लोटोक्तत्वादिति । तादृशशब्दप्रयोगस्यापि प्रेरणत्वेन लोड्वाच्यत्वादिति भावः । *इष्टेति । इष्टसाधनत्वस्य विध्यर्थत्वे तदसङ्गतिः, तस्य णिजर्थत्वाभावात् । स हि प्रयोजकव्यापार इति भावः । *प्रष्टेति । भावीति शेषः । *वारणासम्भवादिति । लोटोक्तत्वादित्यनेन पर्यायतायाः समाधानासम्भवादिति भावः । दोषान्तरमाह *नापीति । पर्यायप्राप्तिरपि नास्तीत्यर्थः । *लोट्प्रयोगेति । लोट्प्रयोगरूपैव हि प्रेरणा लोडाद्यर्थः । सा च तदप्रयोगे न भवतीत्यर्थः । *प्रवर्त्तकनिष्ठेति । तथा च प्रवर्तकनिष्ठप्रेरणमेव लोडर्थः । णिजर्थस्त्वन्यकर्तृकमपि प्रेरणमिति भेद इति भावः ।

*एवंचेति । प्रेरणाबोधे एव लिङः साधुत्वस्य भाष्यादिसम्मततया इष्टसाधनत्वबोधे असाधुत्वमेवेत्यर्थः । *लोट्प्रयोगेति । लोट्प्रयोगरूपैव हि प्रेरणा लोडाद्यर्थः । सा च तदप्रयोगे न भवतीत्यर्थः । *वक्तुरिति । इष्टसाधनत्वाद्यनुमापिकायाः प्रेरणाया अन्यथासिद्धत्वान्न लिङर्थत्वमिति भावः ।

तदुक्तमुदयनाचार्यैः—

विधिर्वक्तुरभिप्रायः प्रवृत्त्यात्मा लिङादिभिः ॥
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ इति ।

*वेदे आप्तस्त्विति । परमाप्तप्रणीतत्वेन वेदानां प्रामाण्यादिति तार्किकाः । तथा च गोतमसूत्रम्—"मन्त्रायुर्वेदप्रामाण्यञ्च तत्प्रामाण्यमाप्तप्रामाण्यात्"इति (न्या० सू० अ० २ आ० १ सू० ६७) । नित्यनिर्दोषत्वेन स्वत एव प्रामाण्यमिति तु मीमासकाः । तदाहुः—

दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते ।
वेदे वक्तुरभावाच्च दोषशङ्कैव नास्त्यतः ॥ इति । (श्लोकवार्तिके)

*अपास्तमिति । लिङादिविषये णिजापादनपरभाष्यविरोधात् । ननु यदि सर्व एव स्वभूत्यर्थं प्रवर्तन्ते तदा किं प्रयोज्यस्य प्रेरणया इत्याशङ्क्य भाष्यकार आह *यदभिप्रायेषु आमज्जन्तेइति । प्रयोजकस्याभिप्रायं ज्ञात्वा निर्वर्तयन्तीति प्रेरणायाः प्रयोजनमित्यर्थः । एवं च 'कः प्रयोज्यस्य प्रेरणार्थः' इत्यस्य प्रयोज्यप्रेरणायाः किं प्रयोजनमित्यर्थः । *स्वतः प्रामाण्यमिति । यद्यपि कारीर्यादौ संवादात्प्रामाण्यं तथाऽपि स्वर्गादिफले ज्योतिष्टोमादौ संवादाभावे ऽपि प्रामाण्यार्थं स्वतःप्रामाण्यमभ्युपेयते । *बुद्धेति । तस्यापि

ईश्वरावतारत्वात्। *श्वासेति। "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिश्रुतेः। एतेन वेदान्तिमते ब्रह्मपरतन्त्रो वेद इत्याशङ्का परास्ता। श्वसिततुल्यत्वेनापौरुषेयत्वे बाधकाभावात्। *अपूर्वमिति। एतच्च गुरुमतम्।

तथाहि "स्वर्गकामो यजेत"इत्यादौ नेष्टसाधनत्वं विध्यर्थः। क्षणिकस्य यागस्य स्वर्गसाधनत्वासम्भवात्। अपूर्वस्य च पूर्वमनुपस्थितत्वात्स्वर्गसाधनापूर्वजनकत्वबोधो ऽसम्भवीति तस्मात्कार्यमेव विध्यर्थः। तच्चापूर्वे पर्यवस्यति। तथा च यागविषयकं कार्यमिति बोधः। लौकिकवाक्यस्यापूर्वे तात्पर्याभावात् कार्यत्वे लक्षणेति।

गुरुमते अपूर्वस्य विध्यर्थत्वे दोषान्तरमाह *किंचेति। तस्माद्रात्रिसत्रन्यायेन नित्येष्वार्थवादिकं फलमपि, नित्यत्वादेव च न कामनाभावे प्रवृत्तिः। *पण्डेति। पण्डो नपुंसकम्, फलाजनकत्वात्॥ ३२॥

(क० टी०) यथा कथंचिद्भासमानविध्यविषयताकवाक्ये गतिमाह *योब्राह्मणायेति। योग्यतया आह *यमबूनेति। विनिगमनाविरहादाह *निवर्त्तकत्वेनेति। प्रकृते ऽनिष्टश्रवणादाह *तेनेति। अन्यथा प्रमाणत्वासम्भवेनेत्यर्थः। *अत एव-प्रेरणाया विध्यर्थत्वादेव। एवमग्रेऽपि। तदेवाह *निमन्त्रणमिति। तत्र तत्त्वे हेतुमाह *निमन्त्रयते इति। उक्तमेव व्यतिरेकमुखेन द्रढयति *नचेष्टसाधनत्वमित्यादिना ग्रन्थेन। तत्रादौ शङ्कते *अस्तीति। समाधत्ते *न्यायेति। *प्रागुक्तेनि। तत्स्वरूपविवरणरूपेत्यर्थः। प्रवर्तनासंप्रश्नयोर्लिङिति न्यासाभिप्रायेणाह *चतुर्णामिति। विध्यादीनामित्याद्युक्तेरिति भावः। *भाष्ये इत्यस्योक्तमिति शेष.। तस्य च द्वितीयेत्यन्तेनान्वयः। सत्त्वादित्यस्य तत्प्राप्तिरिति शेषः। कैयटोक्तमु-

(१) कामनाभावेकामनासत्त्वे एव प्रवृत्तिरिति नेत्यर्थः।

(२) द्वितीयो य इतिशब्दः भवतिशब्दात्परः तदन्तेनेत्यर्थ.।

त्तरार्थमाह *सक्रियेति । स्वय तदाशयमाह *तदिति । कर्तृपदेन तत्परामर्शकतत्पदेन किञ्चिद्व्यवहिततदग्रिमभाष्यमाह *अथापीति । तादृशकर्तुरपि यदि हेतुसञ्ज्ञासूत्रे ग्रहणमिति भावः । अत एवेत्युक्त विशदयति, *इष्टसाधनत्वस्येति । प्रयोजकव्यापारत्वाभावेनेत्यर्थः । *तदसङ्गतिरिति । शङ्कासमाधानयोरसङ्गतिरित्यर्थ । अभ्युपेत्याह *पर्यायेति । वस्तुतस्तदविषय एवेत्याह *नापीति । एव च शङ्कैव तावदयुक्तेति भावः । समत्यन्तरमाह *विधीति । परसमतिमप्याह *वात्स्यायन इति । *एवेनान्यव्यवच्छेदः । ननु क्लृप्तेष्टसाधनत्वादितो ऽपूर्वप्रेरणात्वादिकल्पने गौरवमत आह *प्रेरणात्वमिति । *एव च—निरूपितप्रेरणाबोधे लिङादे' साधुत्वस्य सूत्रभाष्यादिसमतत्वे च । उदयनाचार्यमतं खण्डयति *एतेनेति । उक्तसूत्रभाष्यादिविरोधेनेत्यर्थः । *लिङर्थइति । लिङादीत्यर्थ. । एवमग्रेऽपि । प्रेरणात्वेनेत्यादिः ।

तदुक्तम्—

विधिर्वक्तुरभिप्राय प्रवृत्त्यर्थो लिङादिभिः ।<br>
अभिधेयो ऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ इति ।

आदि प्राग्वत् । "न कलञ्जम्" इत्यादौ कलञ्जभक्षणमनिष्टसाधन कर्त्तव्यत्वेनाप्तेनानिष्यमाणत्वात् । यथा मतिपत्रा कर्तव्यत्वेनानिष्यमाण विषभक्षण मदिष्टसाधनमिति बोध्यम् । कलञ्जम् 'तबूज' इति भाषया प्रसिद्धम् । कलञ्ज तु विषदिग्धबाणहतमृगमांसमिति प्राच्याः । *तदिति । इष्टसाधनत्वादीत्यर्थ' । ननु लोके तथा सम्भवे ऽपि वेदस्य नित्यत्वेन तत्रासम्भवो ऽत आह *वेदेइति । दोषान्तरमाह *वक्तिरच्छेति । अत्र भाष्यसमतिमाह *कइति । प्रागुक्तत्वादाह । *हेतुमतीति । ननु तत्र दोषान्तरमाह *किञ्चेति । तत्र तावत्प्रयोज्यव्यवहारमाह *नाहमिति । प्रयोजकव्यवहारमाह *प्रेरयितुरपीति । दोषान्तरमाह *किञ्चेति । इष्टापत्त्यावाह *नचेति । नहीत्यर्थ ।*विसवादिनीत्वामिति । विसवादित्वे हेतुमाह *अधीति । दोषान्तरमाह *किञ्चेति । तत्र तदापत्तौ हेतुमाह *ईश्वरेति । ननु वेदान्तिमते वेदस्य ब्रह्मपरत्वेन पौरुषेयत्वमेवात आह *श्वासेति । तावताऽप्यपौरुषेयत्वाक्षतेः । नन्वेवमुक्तातिप्रसङ्ग एवात

आह *बौद्धेति । *अत एव–उक्तवैलक्षण्यादेव । उक्तमित्यत्रान्वयः । तत्तात्पर्यमाह *सौत्रेति । उदुम्बर ताम्रम् । ननु कर्तृकान्तप्रमत्त-शब्दस्य गीतशब्देन समासो ऽनुपपन्नस्तत्रभवत इत्यनेन साकाङ्क्षत्वादत कैयटमाह *प्रमत्तेति । भावे क्तः । *तत्रेत्यस्यार्थो *वेदेति । ननु तत्र न स्वाभाविक. सो ऽत आह *तत्त्वमिति । यस्त्वप्रमादेन गीतो यस्य कस्यापि तत् प्रमाणमिति ध्वनयन्नाह *भ्राजेति । *एक शब्दइति । श्रुतीत्यर्थ. । एतेन यजेतेत्यादिशब्द-प्रयोगरूपा प्रेरणा वेदे ईश्वरनिष्ठेत्यपास्तम् । तदाह *इतिदिगिति । मीमांसकादिमतं खण्डयति *अपूर्वमिति । अपूर्वत्वेनेति भावः । *विधीति । लिङादीत्यर्थ । वेदे सम्भवादाह *लौकिकेति । वेदेऽपि दोषमाह *किञ्चेति । यत इति शेष. । चेन नैमित्तिकविधिपरिग्रहः । *पण्डेति । क्लीबमित्यर्थ । निष्फलमिति यावत् । तृतीयाप्रकृति. षण्ढ. क्लीब. पण्डो नपुंसके इत्यमर. । प्रवृत्त्यादेरन्यथोपपत्तेराह *गौरवमिति । एतेन निष्फले सन्ध्यावन्दनादौ विध्यर्थबाधापत्तेर्नैतद्विध्यर्थ इति । न । तथा सति तत्र प्रवृत्त्यनापत्तेर्निष्फलत्वात् दु.खैकफलकत्वाच्च । प्रवृत्तिमात्रे इष्टसाधनताज्ञानस्य हेतुत्वाच्च । नचापूर्वोद्देशेन प्रवृत्तिः । तावताऽपि इदमेवेष्टमादायेष्टसाधनत्वस्य विध्यर्थत्वोपपत्ते । वस्तुत. प्रवृत्तिविषयसाध्यत्वे सतीच्छाविषयत्वमेव फले उद्देश्यत्वम् । नच तदपूर्वस्य । नचान्यदेव तत्कल्प्य मानाभावात् । पदार्थान्तररूपोद्देश्यत्वस्य प्रवृत्तावनुपयोगाच्चेति भूषणाद्युक्तम्, स्वविशेषणशौचादिवर्तमानताप्रतिसन्धानकालिकम् इष्टसाधनतालिङ्गक कार्यज्ञानमेव प्रवर्त्तकम् । कार्यता कृतिसाध्यत्वम् । तेन कृतौ जननीयायां चिकीर्षा द्वारम् । सा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयेच्छा–कृतिसाध्यो य. पाकः स मे भवत्वितीच्छाऽनुभवात् । पाकं कृत्या साधयेयमितीच्छाया अप्यत्रैव पर्यवसानम् । एव चेच्छाया. स्वप्रकारकधीसाध्यत्वनियमो ऽप्युपपन्न. । न त्विष्टसाधनताज्ञानसाध्या सा । कृत्यसाध्ये प्रवृत्त्यापत्तेः । कार्यत्वेन कार्य विध्यर्थ. । तच्च कार्य वेदे ऽपूर्वमेव । नच तस्य शक्यत्वे न मानम् । यतस्तस्यावाच्यत्वे स्वर्गकामस्य यागेनान्वयो वाच्यः–स्वर्गकामस्य यागः कार्यमिति । स च न सम्भवति धात्वर्थप्रत्ययार्थयोरभेदान्वयस्याव्युत्पन्नत्वात् । अत

एव लिङाऽपूर्वं कार्यत्वेनाभिधेयम् । कार्यत्वं च कृतिसाध्यत्व तत्रापूर्वस्य साक्षात्तत्साध्यत्वासम्भवात्, यद्द्वारा तस्य कृतिसाध्यत्व स धात्वर्थो यागदानहोमादिरनुबन्धो विषयो ऽवच्छेदक इति अपूर्वनिर्वर्त्तकत्वेन कारणम् इति च तैर्व्यवह्रियते ।

वरदराजो ऽप्याह मुख्यार्थमभिदधतः शब्दस्य यत्रार्थे तात्पर्यं तत्र मुख्यैव वृत्ति'—यथा स्वर्गकामपदस्य कक्षान्तरितनियोज्यपरस्येति । योग्यतासहकृतपदबोध्यत्वात्कक्षान्तरितत्वम् । अपूर्वमेव च नियोगपदनोच्यते । कार्यत्वेन नियोज्यकर्मकात्मविषयकप्रेरणकर्तृत्वात, इत्यादि प्राभाकराद्युक्तचापास्तम् । तदाह *इतिदिगिति ॥३२॥

एवं च "स्वर्गकामो यजेत" इत्यादिना ज्योतिष्टोमस्य गृहीता स्वर्गसाधनता क्षणिके यागे व्यापारमन्तराऽनुपपन्नाऽपूर्वं कल्पयति । अपूर्वं तु यागस्य काऽपि उत्तरावस्था फलैकनाश्या । यद्वा कर्मापूर्वादीनामचेतनतया फलजनकत्वासम्भवाच्चेननेश्वराधिष्ठितत्वेऽवश्यवक्तव्ये त्वेतन्निष्ठाभ्यां कर्मजन्यप्रीत्यप्रीतिभ्यां मायावृत्तिरूपतया अनित्याभ्यां प्रतिजीवकर्मसाध्याभ्यां सुखदुःखाद्युपपत्तिः । कर्मापेक्षत्वात्सेवानुरूपफलदो राजवदलौकिकोऽपीश्वर इति न तस्य वैषम्यनैर्घृण्ये । श्राद्धादिजन्यमपूर्वं पुत्रे पितृषु च । उभयत्र फलश्रवणात् । मुक्ते तु नादृष्टम् । तत्त्वज्ञानस्य तद्विरोधित्वात् । पित्रादिस्वर्गकामनया कृते पुष्करिणीमहादानादौ पित्रादेरेवादृष्टम् । कर्तुरेवादृष्टं तस्यैव फलमिति तूत्सर्गः ।

ननु स्वर्गत्वस्य वाजपेयगङ्गास्नानदानादिजन्यस्वर्गसाधारण्येन कथं ज्योतिष्टोमे स्वर्गसाधनताग्रहः कार्यतावच्छेदकस्यातिप्रसक्तत्वाद् इति चेन्न ।

प्रवर्तनया वाक्यान्तरपर्यालोचनवतो विजातीयस्वर्गसाधनत्वस्यैवानुमानात् ।

ध्वनितं चेदं "स्वरितञितः" इतिसूत्रे भाष्ये ।

तत्राहि—"नचान्तरेण यजिं यजिफलं लभन्ते" इत्युक्तम् । 'नहि स्वर्गादिफलं यागमन्तरेण भवति' इति कैयटः ।

एतेन यत्कैश्चिदुक्तं सर्वेषां स्वर्गसाधनत्वमेव गृह्यते । नच ज्योतिष्टोमाग्निहोत्रयोः फलसाम्यापत्तावल्पवित्तव्ययायाससाध्याग्निहोत्रेणैव सिद्धौ श्रमाधिक्येन द्वेषाज् ज्योतिष्टोमादावप्रवृत्तौ तद्विधीनामननुष्ठानलक्षणाप्रामाण्यापत्तिरिति वाच्यम् । तत्फलस्वर्गाणां भूयस्त्वाल्पत्वकल्पनया प्रवृत्तिसम्भवात् ।

युक्तं चैतत् । नहि वैजात्यमात्रज्ञानात्प्रवृत्तिः । सम्भवत्यपि क्षीरपाने मण्डपाने प्रवृत्त्यापत्तेः । तत्रापि फलवैजात्यज्ञानात् । भूयस्त्वमनेकधा फलबाहुल्यम् । फले उत्कटत्वं बहुस्वपुरुषगामित्वम्, शीघ्रताचेत्यादि । अन्यथा "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ"इत्युक्तेः समारब्धदर्शपूर्णमासानां काम्येष्टिप्रवृत्तिविलोपस्तवापि दुर्वारः ।

यद्वा लौकिकप्रतिष्ठारूपफलेच्छा यस्य तस्य प्रवृत्तिसम्भवः ।

अत एव सकलशास्त्रविदां युधिष्ठिरादीनां स्वल्पफलकराज्यार्थं गोत्रजब्राह्मणादिवधे प्रवृत्तिः । दर्शित चार्जुनं प्रति तदेव फलं भगवता—

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।

इत्यादिना ।

अत एवाधुनिकानां कर्मासाङ्गत्वं जानतामनधिकारिणामपि बहुवित्तव्ययायाससाध्येषु—

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात् कलौ युगे ॥

इति देवलवाक्यस्य, सङ्करेभ्यो वर्णानां पृथक्करणरूपो वर्णविभागो यावत्, यावच्च वेदस्य नियमाध्ययनरूपा प्रकर्षेण वृत्तिः, तावदेतद् द्वयमनुष्ठेयमित्यर्थकस्य कालबोधकैः,

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता । इति—

व्यासवाक्यादिभिः कलिवर्ज्येष्वपि अग्निहोत्रयागादिषु धनलाभफलकप्रतिष्ठार्थं प्रवृत्तिः । प्रतिष्ठाद्युपाधिवशाज्जायमाना उत्कटेच्छैव प्रवृत्तौ प्रयोजिकेति न दोषः ।

अत एव गीतायाम्—

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥

इत्यनेन दम्भस्यापि यज्ञफलनोक्ता । दम्भो धार्मिकत्वेन ख्यापनम् । अपिचेतिपदाभ्यां विकल्पेन समुच्चयेन फलत्रयमुक्तमिति तद्व्याख्यातारः ।

यद्यप्ययं निषिद्धत्वात्संप्रत्यधर्म एव, तथाऽपि

तत्त्वमजानतां लोकानां धर्मत्वभ्रमाद् दम्भार्था तत्र प्रवृत्तिः ।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहित यज्ञं तामसं परिचक्षते ॥ इति च ।

किञ्च समानफलानामपि कर्मणां शक्ताशक्तभेदेन व्यवस्था ।

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ॥
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ इति–
भारतोक्तेः ।

अत एव 'वित्तशाठ्यं न कारयेद्'इति न तत्तद्व्रतप्रकरणे पठ्यते इति । तत् परास्तम् । उक्तभाष्यविरोधात् ।

तत्तद्वैजात्यस्यापि तत्तद्भूयस्त्वसमनियतत्वान्न दोषः ॥ ३३ ॥

( कुं० टी० ) *क्षणिकेइति । कार्याव्यवहितपूर्ववर्तिन एव कारणस्य कार्यजनकत्वात् । *यागस्येति । यद्यपि देवतोद्देश्यकद्रव्यत्याग एव यागस्तथापि संपूर्णकर्मकलापस्य यागाङ्गत्वाद् यागत्वम् । *उत्तरावस्थेति । कारणपरिणाम एव कार्यमिति भावः । *फलैकनाश्येति । तेन न फलान्तरम् । नन्वीश्वरस्य सर्वान्प्रति एकरूपत्वात् स्वर्गनरकाद्यनुपपत्तिरत आह *कर्मापेक्षत्वादिति । नैर्घृण्यम्–निर्दयता । ननु "शास्त्रे देशितं फलमनुष्ठातरि"इति न्यायात्कर्तर्येवादृष्टं स्वीकार्यम् । तथाच पित्रुद्देश्यकपिण्डदानादौ कृते पुत्रे एवादृष्टोत्पत्त्या पित्रादेः स्वर्गाद्यनापत्तिः व्यधिकरणत्वात् । पुत्रादिकर्मणा पित्रादौ चादृष्टं न संभवति व्यधिकरणत्वा-

त् । अत आह *पुत्रे पितृषु चेति ।

अयं:—भाव सर्वत्र भोगाधिकरणे एवापूर्व लाघवात् । तथाहि भोगं प्रति साक्षात्संबन्धेनापूर्वस्य जनकता संभवति अन्यथा तु परंपरा कल्पनीयेति। ननु यत्र तत्त्वज्ञानिना पुत्रेण कर्म कृतं तत्र भोगाधिकरणे एव तदपूर्वकल्पनापत्तिः, अस्मन्मते तु तत्र मिथ्याज्ञानाद्यभावेनादृष्टानुत्पत्तेरिति चेन्न। यत्र मुक्तपितरमुद्दिश्य कर्म कृतं तत्र कर्तर्यदृष्टकल्पने गौरवं भोगायतने त्वसम्भवान्न तत्कल्पनम् । *तद्विरोधित्वादिति । "क्षीयन्ते चास्य कर्माणि" इति श्रुत्या अदृष्टजनकयोर्धर्माधर्मयोरुभयोरपि नाशबोधनात् । *साधारण्येनेति । अन्वयव्यतिरेकाभ्यां हि कारणताग्रहः। नच ज्योतिष्टोमवदन्यावृत्तिः स्वर्ग इति भावः । विजातीयदाहं प्रति तृणारणिमणीना कारणत्वादिति भावः । किंच "व्रीहिभिर्यजेत" "यवैर्यजेत" इति दर्शपूर्णमासोद्देशेन विहितयोः व्रीहियवयोः परस्परव्यतिरेकेण फलजनकत्वादुक्तैव गतिः। नहि तत्रैकशक्तिमत्त्वेनोभयोरनुगमः। "स्योनं ते सदनं कृणोमि" इति मन्त्रस्य व्रीहिप्रयोग एवाङ्गत्वं नतु यवप्रयोगे—"व्रीहीणां मेध सुमनस्यमान" इति मन्त्रालिङ्गादिति सिद्धान्तासङ्गतेः । 'व्रीहिभिर्यक्ष्ये' इति संकल्पावच्छिन्नसमवायसंबन्धस्यैव व्रीहिकार्यतावच्छेदकसम्बन्धत्वेन व्रीहिरूपकारणाभावेऽपि यवरूपकारणेन कार्योपत्तौ बाधकाभावः ।

*नहि वैजात्येति । तस्मादग्निहोत्रजन्यापूर्वविशिष्टसमवायसम्बन्धेन स्वर्गत्वमवच्छेदकमित्यदोषः । *सर्वेभ्यः कामेभ्यइति । दर्शपूर्णमासयोर्नित्यत्वात् तदनुष्ठानेन पुत्रादिफलस्यापि सम्भवात्पुत्रेष्ट्यादिविलोपापत्तिरित्यर्थः । ननु दर्शपूर्णमासयोराग्निसाध्यत्वेनाग्न्याधानात्प्राक् पुत्रेष्टिसाफल्य-

मस्त्येवेत्याशङ्क्याह *समारब्धेति । *लौकिकप्रतिष्ठार्थमिति ।

'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।

ततः स्वधर्मं कीर्तिं च' इतिभगवदुक्त्या लौकिकप्रतिष्ठाया अपि प्रवर्तकत्वात् । *गोत्रजेति । गोत्रजानां ब्राह्मणादीनां चेत्यर्थः । *त्रेता—त्रित्वम्—अग्नित्रयम् । गुण आर्षः । परेतु अग्निहोत्रशब्दः सर्वाधानपरः ।

अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ॥ इति ।

लौगाक्षिवचनात् । यावद्वर्णविभाग इतितु चत्वार्यब्दसहस्राणीत्यस्यैव सङ्कोचकम् इत्याहुः । *उक्तभाष्येति । "नचान्तरेण यजिं यजिफलम्" इति भाष्येत्यर्थः ॥ ३३ ॥

( क० टी० ) *एवञ्च—तस्य शक्यत्वेच । पदार्थान्तरकल्पने गौरवादाह *यागस्येति । तत्कल्पने ऽपि गौरवादाह *यद्वेति । आदिना ज्ञानम् । *वक्तव्येइति । गौरवमिति ततो लाघवादिति शेषः । *तदिति । ईश्वरेत्यर्थं । तयोर्नित्यत्वेऽनिष्टापत्तेराह *मायेति । वैचिच्याायाह *प्रतिजीवेति । आदिना मोह. । नन्वेव तस्य, वैषम्याद्यापत्तिरत आह *कर्मेति । स्पष्ट चेद ( उ० मो० अ० ३ पा० २ अधि० ८ सू० ४०–४१ ) "धर्मं जैमिनिरत एव" इति पूर्वपक्षखण्डकेन "पूर्वं तु बादरायणो हेतुव्यपदेशाद्" इति व्याससूत्रेणोक्तम्, हेतुश्रुत्युपपत्तिरूपम् । पूर्वमीश्वरम् । तुरुक्तवैलक्षण्ये । त फलदातार स आह । कर्मसापेक्षत्वाच्च न वैषम्यनैर्घृण्ये । कर्मव्यापारश्च'अनेनेद कृतमस्येदं फलममुककालेऽमुकदेशे भवतु'इतीश्वरोपाधिवृत्तिविशेषः फलवत्तारूप । फलबलादयमेवेश्वरप्रीतिपदेनोच्यते ।

चितिशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
प्रतिमाकर्मसञ्ज्ञाऽभा तृतीया शक्तिरिष्यते ॥
इतिविष्णुपुराणे कर्मण ईश्वरशक्तित्वम् ।
लभते च ततः कामान्मयैव विहितान् हितान् ॥
इतिगीतोक्तेश्चेति तदर्थः । आद्यपक्षे कश्चिद्विशेषमाह *आ-

द्धादीति । आदिना तर्पणम् । *उभयत्रेति । तत्राद्ये प्रत्यवायाभाव., ब्रह्महत्यादिपापनाश, सत्यां कामनायां पुत्रादि च फलम् । अन्त्ये नरकोद्धार, सर्वपापनाश, स्वर्गब्रह्मलोकप्राप्त्यादि यथायथ फलम् । इदमप्यमुक्तविषयमित्याह *मुक्तेत्विति । ततो ऽपि विशेष क्काचित्कमाह *पित्रादीति । *पुष्कारिणीति । अल्प सर इत्यर्थ । एवेन पुत्रऽव्यवच्छेद । ननूभयमयुक्त फलोत्पत्तेः कर्तर्येव दृष्टत्वात् । नच—

सुतादिकर्तृक यस्यां श्राद्ध श्रद्धासमान्वितम् ।
पित्राद्युद्देश्यफलद सा गया यागतोऽधिका ॥

इत्युक्तेन तथेति वाच्यम्।कर्मभि. कर्त्रैयैव फलोत्पादाद्।ततस्तत्र स्वर्गादिफलमित्यनुपपत्तेर्दुरुद्धरत्वात्। "शास्त्रीय फल प्रयोक्तरि तल्लक्षणत्वाद्" इति न्यायाद्।अन्यथाऽतिप्रसङ्गात् । जातेष्टाविवाकर्तर्यपि फलमिति । न । श्राद्धे पित्रादेर्देवतात्वात् । तस्यां च कर्मणः फलाजनन तज्जनने वा तस्याधिकारित्वापाताद्देवतात्वाभावापत्ति । उभयरूपतायां च फलभाक्त्वेनाधिकारितया कर्म प्रति प्राधान्याद्देवतात्वेन च तत्प्रत्येव गुणत्वादेकप्रतियोगिकैकनिष्ठगुणप्रधानभावरूपवैरूप्यापत्ति । "वाजपेयेन" इत्यादाविव जातेष्टौ पुत्रस्यादेवतात्वेनोक्तविरोधाभाव इति वैषम्यात्।अकर्तृनिष्ठफलजनने च कर्तुरप्रवृत्त्यापत्तेर्विरोध' । कर्तृसमीहितसाधनतावत्तावगमफलप्रवर्तकत्वव्याघातात्।स्वगतफलान्तरार्थ प्रवृत्तौ च तावतैव प्रवर्तकतानिर्वाहात्पित्रादिगतफलाभावापत्ते. । अन्यतरत्वेनोपपत्तावुभयगतफलाङ्गीकारकल्पनाक्लेशायोगात् । पितृगतफलश्रुतेरर्थवादतयाऽप्युपपत्ते.।यदाऽपि शास्त्रे फलशब्देनापूर्वमुच्यते तदाऽप्यपूर्वस्य प्रयोक्त्राख्यकर्तृगामित्वात्फलाङ्कुरावस्थाया एवापूर्वत्वादपूर्वफलयोश्च सामानाधिकरण्यनियमादन्यथाऽतिप्रसङ्गान्न ततस्तत्र फलमिति चेन्न । यथा "यस्मिञ् जाते" इति वचनात्तार्तीयन्याय बाधित्वा ऽकर्तर्यपि पुत्रे फल तथाऽत्रापि नानागुणवाक्यात्पित्रादौ तत्स्वीकारात् । "फलसंयोगस्त्वचोदिते न स्याद्शेषभूतत्वाद्" ( पू० मी० अ० ४ पा० ३ अधि० १७ सू० ३८ ) इतिचातुर्थिकन्यायात् । नचातिप्रसङ्गादि, शास्त्रस्यैव नियामकत्वात् । एवमपूर्वेऽपि । यदि कृतिसमानाधिकरणमेवादृष्ट स्यात्तदा तत्त्वज्ञानिकृतश्राद्धेन पितु. स्वर्गो न

स्यात् । श्राद्धकर्तुः पुत्रस्य कर्मनाशास्पर्शादौ पितु स्वर्गश्च न स्यात् । एव "शास्त्रे देशित फलमनुष्ठातरि" इति यथोत्सर्गः, तथा 'कृतिसमानाधिकरणमदृष्टम्' इत्यपि ।

एवञ्च यत्रोभयत्र फलश्रुतिस्तत्रोभयगतमदृष्टम्, यत्र त्वन्यतरस्यैव फलश्रुतिस्तत्र तत्रैव । यत्र न तथा वचन तत्र पित्रादिस्वर्गकामनया कृते पुष्करिणीमहादानादौ पित्रादिस्वर्गजनकत्व न स्यात् । तादृशशिष्टाचारेण तथा श्रुतिकल्पनात् । एव दुर्गापाठादावपि । फल च किंचिद्विधिवादोक्त क्वचिदर्थवादिकमित्यन्यत् ।एतेन 'कर्त्तर्येवापूर्वम् इति, 'फलवत्येव चापूर्वम्' इति चापास्तम् । तदेतदभिप्रेत्याह *कर्तुरेवेति । अपूर्वकल्पकस्वर्गसाधनताग्रहे प्रागुक्तं व्यतिरेकव्यभिचारमाशङ्कते *नन्विति । *प्रवर्तनयेति । विधिबोध्ययेत्यर्थ. । प्रतिपादितमिदमनुपदमेव । *कैयटइति । अन्यथा तदसङ्गति स्पष्टैवेत्यपि प्रतिपादितम् । भूषणकारादिमतं खण्डयति *एतेनेति । *सर्वेषां स्वर्गेति । तदन्यफलशून्यवैदिकादिवाक्यबोध्यकर्मणामित्यर्थ । कार्यतावच्छेदकधर्मस्यातिप्रसक्तत्वे ऽपि न दोषस्तत्सामानाधिकरण्येनैव कार्यत्वबोधो विधिलभ्यो नतु स्वर्गत्वावच्छेदेन, अवच्छेदकत्वांशबोधनासामर्थ्यादसम्भवाच्चेति भाव. । वैजात्यकल्पकनयोक्तमीमांसकसिद्धान्त खण्डयति *नचेति । विधिलभ्यार्थविचारकाले वैजात्यास्वीकारे इति शेष । *सिद्धाविति । समभिहितेत्यादि । *अप्रामाण्येति । तदापत्तावित्यर्थः । नन्वेव को विशेष कल्पनाया अविशेषादत आह *युक्तचेति । मात्रपदेन फलभूयस्त्वादिव्यवच्छेद' । हेतौ हेतुमाह *तत्रापीति । एवमपि न्यूनतापरिहारायाह *भूयस्त्वमिति । आदिना चिरकालस्थायित्वादि. । उक्तदोषस्तवापि । *क्वचिदिति । त्वयाऽपीदमवश्य तत्र ततो निर्वाहे ऽपि स्वीकार्यमित्याह *अन्यथेति । तेषा भूयस्त्वाद्यकल्पने इत्यर्थ. । *इत्युक्तेरिति । नचैतावता सर्वफलेषु तयो. प्राप्तावपि विनिगमनाविरह इति वाच्यम् । तत्प्रयोगस्य नित्यतया आवश्यकस्य पुत्रादिकामनयैवानुष्ठानप्रसङ्गान्नित्यसिद्धिसम्भवेन प्रयुक्तिलाघवलोभात् तत्रैव प्रवृत्तेः, तदाह *समारब्धेति । तत्र तादृशभूयस्त्वादिकल्पने गौरवादाह *यद्वेति । महति कर्मणीति भावः । अस्यावश्यकत्वमा-

ह *अत एवेति । तादृशफलेच्छात. प्रवृत्त्यङ्गीकारादेवेत्यर्थः । उक्तरीत्या अनिर्वाहमाह *स्वल्पेति । ऐहिकभोगादीत्यर्थ. । अत्र सम्मतिमप्याह *दर्शितञ्चेति । *तदेव–लौकिकप्रतिष्ठारूपमेव । *भगवता–श्रीकृष्णेन । गीतायामिति शेषः । आदिना—

सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।

ततःस्वधर्मं कीर्तिं च इत्यादि।प्रसङ्गात्सिद्धान्त कथयन्नाह *अत एवेति । उक्तोऽर्थ । प्रवृत्तिरित्यत्रान्वय । अर्थित्वाद्यभावादाह *कर्मेति । अत एवाह *अनधीति । साध्येष्वित्यादिसप्तम्यन्तद्वयस्य यागादिष्वित्यत्रान्वय । तदर्थमाह *सङ्करेभ्यइति । *तावदिति । नचैतद् द्वयमधुनाऽस्ति अन्यस्य वर्णविभागपदार्थस्य दुर्वचत्वात् । क्षत्रवैश्ययोरिदानीमसत्त्वेन तद्घटितविभागासम्भवादिति भावः । स्पष्टञ्चेदमन्यत्र । *त्रेतेति । श्रौताग्निषु रूढोऽयमुणादिसिद्ध. । आदिना भारते वनपर्वण्युक्तसग्रहः । तथाहि—

नाशुचिर्नाप्यनिर्णिक्तपादो नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुत्सवः शुचिकामा हि देवा नाश्रदधानाद्धि हविर्जुषन्ति ॥
नाश्रोत्रिय देवहव्ये नियुञ्ज्यान्मोघ पुरा सिञ्चति तादृशो हि ।
अपूर्वमश्रोत्रियमाह तार्क्ष्य न वै तादृग् जुहुयादग्निहोत्रम् ॥ इति ।

अनिर्णिक्तपाद –अप्रक्षालितपादः । अनाचान्तश्च । अब्रह्मविद् वेद पाठतोऽर्थतश्चाविद्वान् । अविपश्चिद् वेदादधिगतार्थस्यानुभवहीनः । अनेन तपोहीनत्व सूचितम् । बुभुत्सवः परचित्त ज्ञातुमिच्छवः । ऋत्विगप्येवविध एवेत्याह नाश्रोत्रियमिति । यज्ञादौ मोघं निष्फल सिञ्चति जुहोति पुरा शीलगोत्रादिज्ञानात्प्राक् । अश्रोत्रियपदार्थमाह अपूर्वमिति । अज्ञातकुलशीलम् । आह—वेदइति शेष. । ईदृशस्यैवाग्निहोत्राधिकारो नान्यस्येति भावः ।

अर्धाधानं स्मृत श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधान तयोरैक्यकृति पूर्वयुगाश्रिता ॥ इति ।

लौगाक्षिवाक्ये पूर्वयुगानि द्वापरान्तानि तदाश्रितेत्यर्थात्कलावर्धाधानमेव । तदपि तावत्पर्यन्तमेवेति तत्त्वम् । यत्तु युगस्य पूर्वं पूर्वयुग कले पूर्वभाग इत्यर्थ इति दीक्षिताद्याः । तन्न । पूर्वाणि च तानि युगानि चेति कर्मधारयस्यैवौचित्यात् । द्वापरकल्योः सन्धावेव स्मृतीनां प्रवृत्त्या तथाऽर्थस्यैव युक्तत्वात् ।

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) १

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम् — बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १२

( ) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा — संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३ ) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित । ४

( ३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २

( ७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

( ९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो — प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृति । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्याय ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधी । पर्वतीय विश्वेश्वरसूरिविरचित । ६

(४८) विरमित्रोदय । लक्षणप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचित । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलकृत. । ४

(५०) वीरमित्रोदय । राजनीतिप्रकाश । महामहोपाध्यायश्रीमित्रमिश्रविरचित । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय प० रामकृष्णभट्ट चर्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वक टिप्पण्या परिष्कृत । १

(५२) प्रशस्तपादभाष्यटीकासग्रह । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृताविवरणोपेत २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 253.

# वैयाकरणसिद्धान्तलघुमञ्जूषा

महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।

श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचित-

कुञ्जिकाकलाख्यटीकाद्वयसंवलिता ।

व्याकरणोपाध्याय-काव्यतीर्थेति पदवीद्वयधारिणा

शेण्डे इत्युपाह्वेन सीतारामशास्त्रिणा

संशोधिता ।

# VAIYÂKARANA SIDDHÂNTA LAGHU-MANJUSHÂ

BY

MAHAMAHOPADHYAYA ŚRÎ NAGEŚA BHATTA,

With Two Commentaries, i e Kunjikâ of

Durbalâchârya and Kalâ of Bâlam Bhatta

Edited by Pandit Sitarama Sastri Shende

Vyakaranopâdhyaya, Kavyatirtha.

FASCICULUS XI-१२

PUBLISHED & SOLD BY THE SECRETARY,

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES

AGENTS—

OTTO HARRASSOWITZ LEIPZIG

PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY

PROBSTHAIN & CO, BOOKSELLERS, LONDON

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press*

BENARES

*Price Rupee one*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकः—२५३


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्टये विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्रा ७आनका ८

५ अन्यैर्देयं प्रतिस्तवकं

६ प्रापणव्ययं पृथग् नास्ति।


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता खण्डे २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्त) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सपूर्णा (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्त) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभिः श्रीश्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्त १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्त) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्याय) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १६

वदता सर्वाधानमेव निषिध्यते अत एवोक्तरीत्या लौगाक्षिसङ्गति' रित्यपि दीक्षिताद्युक्तमपास्तमित्याद्यन्यत्र स्पष्टम् । *घनेति । लौकिकेत्यादि । ननु तत्सत्त्वान्निवृत्तिरेव कुतो नात आह *प्रतिष्ठेति । तत्र रागौत्कट्यादेव तत्र न द्वेष इति तज्ज्ञाने ऽपि न निवृत्तिरिति भाव. । *अत एव-उक्तोऽर्थ. । व्याख्यानग्रन्थमाह *दम्भइति । पदाधिक्य निराचष्टे *अपिचेतीति । अस्य तात्पर्यमाह *यद्यपीति । *अयम्-अग्निहोत्रादि. । अन्यदपि तत्रोक्तमित्याह *विधीति । अन्नदानरहितम । वस्तुतस्तद्वृत्तस्य तत्त्वकल्पनाऽपि न, मानाभावात्, गौरवाच्च, किं त्वन्यथा व्यवस्थैवोचितेत्याह *किञ्चेति । इदमन्यत्राप्यावश्यकमित्याह *अत एवेति । ततो व्यवस्थौचित्यादेवेत्यर्थः । एतेनेत्यस्यार्थमाह *उक्तेति । युक्त चैतदित्याद्युक्तदोषमुद्धरति *तच्चदिति ॥ ३३ ॥

ननु भीष्मकर्णवादीनां पाद्मोक्तयोः—

वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे ॥
अपुत्राय ददाम्येतदुदकं भीष्मवर्मणे ।
इत्यादितर्पणमन्त्र—
वसूनामवताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे ॥

इत्यर्घ्यदानमन्त्रयोर्नित्यब्रह्मचर्यश्रवणादपत्नीकतया ऽपत्नीकस्य च 'पत्नीवदस्याग्निहोत्रं भवति' इत्यादिवचनैरग्निसाध्ये कर्मण्यनधिकारात्कथं तदनुष्ठानम्? ।

'अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार' इति वचनाच्च । 'भाव्यनूर्ध्वरेतस्त्वमावृत्योर्ध्वरेतसं चकार' इति तदर्थः । आबाल्यब्रह्मचारिणे इत्याद्येकवाक्यत्वात् ।

त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम् ।
स्त्रीसहस्रैः परिवृतं पश्यामीहोर्ध्वरेतसम् ॥ इति-

शान्तिपर्वोक्तिस्तु दास्यादिभिरप्युपपन्ना । स्त्रीशब्दस्य पत्नीपर्यायत्वाभावात् । अनेकसहस्रविवाहाभावाच्च ।

अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।

इत्यस्या दाशाग्रे कृतप्रतिज्ञायाः पुनर्ब्रह्मचर्यं भविष्यतीत्यर्थः ।

किञ्च पूर्वं ब्रह्मचर्याभावे अमोघवीर्यत्वेन कथं तस्य पुत्राभावः स्यात् ।

किञ्च अनेकसहस्रपत्नीसत्त्वे "ऋतुस्नातां तु यो भार्याम्" इत्यादिदोषश्रवणात् तत्प्रतिज्ञाया अत्यनौचित्यं स्यात् । दाशो वा कथं तत्र पर्यनुयुञ्जीत । पश्यामीवेति पाठे 'ऊर्ध्वरेतसं शिवमिव पश्यामि'-इत्यर्थः ।

ऋते शान्तनवाद्भीष्मान्न पश्याम्यूर्ध्वरेतसम् ॥

इत्युत्तरार्धपाठः क्वचित् । ऊर्ध्वरेतस्त्वं चाष्टविधमैथुनेच्छारहितत्वम् । एतेनैतद्बलात्तस्य पत्नीकल्पनमपास्तम् ।

नच नित्यस्य ऋतुकालिकस्त्र्युपगमस्य नैमित्तिकेन पित्रर्थमङ्गीकृतेन ब्रह्मचर्येण बाधः । षोडश्यामेव संनिहितं प्राति अनेन नित्येन तत्तन्नैमित्तिकसकलनिषेधस्य बाधदर्शनात् । अत एव 'ऋतौ श्राद्धदिनेऽपि भार्यां गच्छतो न ब्रह्मचर्यहानिः' इति मिताक्षरा । तस्य अग्निहोत्रादिसत्त्वे मानं तु तन्मरणकाले—

महता राजयोगेन परिवारेण संवृतः ।
स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन् ॥
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
इत्यादि भारते युधिष्ठिरवाक्यश्रवणम् ।
य एष रोषात्प्रतपन् बलस्थो
यो नः सेनां सिंह इवाररक्ष ।
स एष भीष्मः कुरुवंशकेतुः
येनाहृतास्त्रिदशा वाजिमेधाः ॥
इत्यादि च ।

त्रिशतं वाजिमेधा इति क्वचित्पाठः । नोऽस्मत्तः, सेनां स्वसेनामित्यर्थः ।

कण्वस्य तु महाकविना कालिदासेन शकुन्तलानाटके शकुन्तलोपाख्याने भारतोक्तमूर्ध्वरेतस्त्वं प्रथमाङ्के स्वयमुक्त्वा चतुर्थे तस्य वैतानिकाग्निवर्णनं कृतम् । एवमाधुनिकानामप्यनधिकारिणां तत्कर्मणि प्रवृत्तिरिति चेन्न । बह्वृचब्राह्मणे "अपत्नीकोऽग्निहोत्रमाहरे३न्नाहरे३दू" इति विचारमुपक्रम्य "आहरेदित्याहुः, यदि नाहरेदनद्धा पुरुषः स्यादू, कोऽनद्धा पुरुषो न देवान्न पितृन् न मनुष्यानिति, तस्मादपत्नीकोऽप्य ग्निहोत्रमाहरेदिति तस्मात्सौम्यं याजयेदू"इत्युक्तेरपत्नीकस्याप्यग्निसाध्ये कर्मण्यधिकारात् । अद्धेति सत्यनाम तद्विपरीतोऽनद्धा इत्यर्थः । न देवानिति पूजयेदिति शेषः । मनुष्यानतिथीन् । अत्रापत्नीकोऽपीत्यपिना तस्या विद्यमानत्वे तां विना यज्ञाद्यभावं सूचयति ॥ ३४ ॥

( कुं० टी० ) ऊर्ध्वरेतसमिति । नच गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्''इति जाबालश्रुत्या आश्रमा नियमिताः स्मृतिरपि—

अनधीत्य द्विजो वेदाननुत्पाद्य तथाऽऽत्मजान् ।
अनिष्ट्वा चैव यज्ञैस्तु मोक्तुमिच्छन् व्रजत्यधः ॥ इति-

चेत्सत्यम् । नेह ''हृदयस्याग्रे ऽवद्यति अथ जिह्वाया अथ वक्षसः'' इतिवत् क्रमो विवक्षितः, ''यदिर्वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्''इत्यादिश्रुतेः । *स्त्रीसहस्रैरिति । स्त्रीसहस्रमध्यस्थत्वेऽपि मनःक्षोभाभावादूर्ध्वरेतस्त्वमित्यर्थः । *दास्यादिभिरिति । वस्तुतस्तु स्वर्गे भाविस्त्रीसहस्रकथनमिदम् ।

*नित्यस्येति । नित्यस्याप्येकादश्युपवासादेर्नैमित्तिकेन चान्द्रायणनिमित्तकभोजनेन बाधवद् इति भावः । क्वचिन्नित्यस्यैव प्राबल्यं दर्शयति *षोडश्यामिति । रजोदर्शनादिनादारभ्य षोडश निशा ऋतुः । यो हि षोडश्यामेव निशायां पत्नीसंनिधिमान् तत्र श्राद्धादिदिनेऽपि स्त्रियमुपगच्छेदेवेत्यर्थः । *नित्येनानेन—ऋतुकालिकगमनेन । *वैतानिकेति । वितानो ऽग्नीनां विस्तारः । तत्र भवो गार्हपत्यादिः । *आहरेदिति । ''वीरहा वा एष देवानां योऽग्निमुद्वासयते नापुत्रस्य लोकोऽस्ति''इत्यादिश्रुतेश्च भार्याद्वेषादिना यो बुद्धिपूर्वमग्निमुद्वासयते सवीरहेत्यर्थः । *अपत्नीको ऽपीति । दैववशाद् देशान्तरगमने अग्निं सह नयेदित्यर्थः कुतो नेति चिन्त्यम् ॥ ३४ ॥

( क० टी० ) *पाद्मोक्तयोरिति । हेमाद्रौ स्पष्टमिदम् । *इत्यादीति । आदिना—

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।

आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥ इत्यस्य—परिग्रहः । *तर्पणेति । माघसिताष्टम्यामिति भावः । इदं च न ब्राह्मणस्य तस्य क्षत्रियत्वेन ब्राह्मणपितृत्वाभावात् । स्पष्टं चेदं रामार्चनचन्द्रिकायाम् । *नित्येति । आजन्मब्रह्मचारिणे, आबाल्यब्रह्मचारिणे इत्युक्तेरिति भावः । *आवृत्त्येति । पाठे तन्निरस्येत्यर्थो बोध्यः । भारतमाह *अयमिति । बाल्यशब्दो हि कौमारपरो नत्वपत्यपर्याय । एतेन बाल्यशब्दोऽयं राजकुमार इतिवदपत्यपर्याय इत्यपास्तम् । राजकुमार इत्यस्य हि राजशिशुर्न तु राजेत्यर्थः । राजापत्यत्वमारभ्य ब्रह्मचारिणे इत्यर्थे ऽपि वा बाधकाभाव इति न त्वदिष्टसिद्धिः । आदिना "जायापती अग्नी आदधीयाताम्"इत्यादि । अनूर्ध्वरेतसत्व व्यावृत्त्योक्तेति पाठ । तन्निरासेनेत्यर्थः । आदिना । आजन्मेत्यस्य परिग्रहः । एवं जितेन्द्रिय इत्यस्यापि । सङ्कोचे मानाभावेन वैयाघ्रेत्यग्रेऽपुत्रायेति पाठेऽपि प्रागुक्तपाठान्तरविरोधं परिहरति *त्वांहीति । दास्यादीत्यादिना वेश्यापरिग्रहः । *अभावाच्चेति । असम्भवात् । अन्यथा बहुवचनासङ्गतिरेव स्यादिति भावः । भारतमेवाविरोधान्तरायाह *आद्येति । *कृतेति । आदिपर्वणीति भावः । *पुनः—पुनरपि । तथाचेदमुभयं न दारपरिग्रहसाधकमिति तात्पर्यम् । *पुत्राभाव इति । सच तर्पणमन्त्रे, 'अद्यप्रभृति' इत्यस्योत्तरार्धे च 'अपुत्रस्यापि ये लोका भविष्यन्त्यक्षया भुवि' इत्यत्र स्पष्टः । स्मृतिपादे ऽपूर्वार्थशिष्टाचारप्रामाण्यप्रतिपादके "अपि वा कारणग्रहणे प्रयुक्तानि प्रतीयेरन्" इति सूत्रे जैमिनीये भट्टाचार्योक्तिं खण्डयति *एतेनेति । पाठभेदेन प्रागुक्तसर्वदोषेणेत्यर्थः । पुनरपि तदुक्तिं खण्डयति *नचेति । यथा चैतत्तथा सर्वं स्पष्टीकृतं मिताक्षराव्याख्यायां लक्ष्म्याम् । *तस्य–भीष्मस्य । आदिना 'अग्नयस्ते समानीताः' इत्यादिपरिग्रहः । न केवलं तावन्मात्रं किन्तु यज्ञाद्यनुष्ठानश्रवणमपि प्रमाणन्तत्रत्यमित्याह *य एषे इति । विरोधाभावमाह *नोऽस्मत्त इति । अवधेः शेषत्वविवक्षायां षष्ठीति भावः । *स्वसेनाम्–स्वीयसेनाम् । *महेति । अभियुक्ततमेनेत्यर्थः । *भारतोक्तमिति । तत्प्रतिपादकभारतोक्तमित्यर्थः । *शकुन्तलोपेति । बहुव्रीहिर्वा । उपाख्याने करणे ल्युड्वा ।

ऊर्द्ध्वरेता महाभागे भगवांल्लोकपूजितः ।
चलेद्धि वृत्ताद्धर्मोऽपि न चलेच्छंशितव्रत ॥
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनी ।
संशयो मे महानत्र तं मे छेत्तुमिहार्हसि ॥ इति—

शकुन्तलां प्रति तत्र दुष्यन्तवाक्यम् । *स्वयमिति । विरोधसूचनाय । 'राजा—भगवान्काश्यपः परे ब्रह्मणि निष्णात इति,वः सखी शकुन्तला तदात्मजा' इति तत्रोक्तम् । *चतुर्थ इति । 'काश्यपः—वत्से इतः सद्यो हुतानग्नीन्प्रदक्षिणीकुरुष्व । सर्वे परिक्रामन्ति । काश्यपः—ऋक्छन्दसमाशास्ते—

अग्निं वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तविस्तीर्णदर्भाः ।
आघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पालयन्तु ॥ इति—

तत्रोक्तम् । यद्यपि तत्रादावग्निमित्येकवचनान्न श्रौताग्निर्नापि स्मार्तोऽग्निः ऋषीश्वराणामाश्रमे असत्त्वात्, तथाऽपि वैताना इत्यत्राग्नेर्वितानसंबन्धित्वं स्पष्टमेवेति न विरोधः । *कृतमिति । अन्यथा शास्त्रविरुद्धकथनेन काव्यदोषेषु तस्य प्रकाशादावुक्तत्वेन तस्य दुष्टत्वमेव स्यादिति भावः । एतेन हरिवंशे एकादशाधिकशततमेऽध्याये—

वृष्णीनामन्धकानां च गुरुर्गार्ग्यो महामनाः ।
ब्रह्मचारी स भूत्वा वै न स्म दारान्स विन्दति ॥
तथा हि वर्त्तमानं तमूर्ध्वरेतसमव्ययम् ।
श्यालो ऽभिशस्तवान् गार्ग्यमपुमानिति राजनि ॥
सोऽभिशस्तस्तदा राजन्नगरे त्वजितेन्द्रिय ।
अलिप्सुस्तु स्त्रियं चैव तपस्तेपे सुदारुणम् ॥

इत्युक्तेरूर्ध्वरेतसो ब्रह्मचारिणो ऽपि भार्यासद्भाव सिद्धः । दारान्विद्यमानानपि न विन्दति नाध्यगच्छत् । नचोर्ध्वरेतस्त्वान्न भार्येति वाच्यम् । श्यालपदासङ्गत्यापत्तेः । यद्यपि श्यालपदस्य राष्ट्रिकार्थकतया न तदनुरोधेनोर्ध्वरेतसो ब्रह्मचारिणो गार्ग्यस्य भार्याकल्पनं तथापि राष्ट्रिको यादवो वा ऽभिशप्तुमसमर्थः पूजकतत्सम्बन्ध्यन्यतरत्वात् । राजसभायामपुमानित्यभिशापो ऽपि स्त्रीसत्त्वे एव घटते । अतः पत्नीभ्राता श्याल एवात्र विवक्षितः ।

श्यालपदस्य राष्ट्रिकपर्यायत्वाभावश्चेत्यर्थादित्यपास्तम् । तत्रापि श्यालपदस्य भावितत्त्ववत्परत्वेनादोषादिति दिक् ।

अस्य पूर्वपक्षस्य प्रकृतसङ्गतिमाह *एवमिति । यथा युगान्तरे पत्न्यभावप्रयुक्तानधिकारे सत्यप्यनुष्ठानं तद्वदित्यर्थः । अपत्नीकोऽपीति पाठे । तथैव तत्र सत्त्वात् । *तदाहुरित्यादिः । अत्र प्लुतिद्वय विचारार्थम् । तत्र निर्णयमाह *आहरेदित्याहुरिति । अननुष्ठाने बाधकमाह *यद्गीति । प्रश्नोत्तराभ्यामनद्धाशब्दार्थं निश्चिनोति *कोऽनद्धा इति । उत्तरमाह *नदेवानिति । स्वपक्षमुपसहरति *तस्मादिति । ऋत्विजमाह *तस्मादिति । सौम्यं अपत्नीकम् । विपरीतः—अनृत. । तथा च तादृश. पुरुषो भवेदिति तदर्थ. । *अतिथीनिति । तथा च यो देवपित्रतिथींन्न पूजयेत्सो ऽनद्धेत्यर्थ. । अग्निहोत्राद्यननुष्ठाने देवपूजाद्यभावादनद्धात्वमिति भावः । *तांविनेति । तथा च तस्या. सति सम्भवे आवश्यकत्वमिति भावः ॥ ३४ ॥

नचेयं श्रुतिर्मृतपत्नीकपरा । सामान्यप्रवृत्तश्रुतेः संकोचेन व्याख्यानस्यायुक्तत्वात् ।

अत एव 'या यजमानस्य पत्नी साऽभिद्रुत्यावहन्ति यो वा कश्चिदविद्यमानायाम्' इत्यापस्तम्बसूत्रव्याख्याने रुद्रदत्तविद्यारण्याभ्यामुक्तम्—'अवहन्नीत्यनुकृष्यते । अविद्यमानायामनालम्भुकात्वादिना निमित्तेनासंनिहितायामभावे च तस्या इत्यर्थः । अविशेषात् । वक्ष्यति च 'पत्न्यभावे तेजआदि लुप्यते' इति । किंच 'अस्याग्निहोत्रं मे' इति यजमानस्यैव स्वामित्वख्यापनेन 'व्रीहियवपश्वाज्यकपालपत्नीसंबन्धानि' इति प्रसिद्धाङ्गसमभिव्याहारेण च तस्या अङ्गत्वेन तदभावेऽपि तत् । किञ्च विद्यमानायास्तस्याः सहाधिकारेऽपि न यजमानसाम्यम् । 'यदुक्तमाशीर्ब्रह्मचर्यं तन्न पत्न्या

अतुल्यत्वाद्'इति मीमांसकोक्तेः।

किञ्च "वसन्ते ब्राह्मणोऽग्निमादधीत" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"इत्यादिकर्मचोदना अपि यजमानमेवाधिकुर्वन्ति न पत्नीम्। '

बह्वृचब्राह्मणेऽप्युक्तम् "तस्मादपत्नीकोऽप्यग्निमाहरेद्" इति।

किंच आचारोऽप्यत्र दृष्टः शिष्टतमानां पूर्वेषाम्—यथा कण्वविभाण्डकभीष्मादीनाम्, यथा च भगवतो दाशरथे.' इति।

अत्रान्त्यो ऽसंनिहितपत्नीकः। आद्यास्तदभाववन्तः। अत्रैवं वदता विद्यारण्येन श्रुतेः सङ्कोचेन व्याख्यानं स्वानभिमतमिति दर्शितम्। अनेनाचारेणासंकोचेन व्याख्यानस्यैव लाभात्।

'पत्नीवदस्याग्निहोत्रं भवति'इति सूत्रे च रुद्रदत्तेनैवमुक्तम्—'अग्निहोत्रं पत्नीवत् सन्निहितपत्नीकम्। "स्वे आयतने पत्न्युपविशति" इत्युत्तरसूत्रेण सिद्धे पत्नीवद्वचनं तस्या विद्यमानत्वे आदरार्थम्। अस्येति वचनाद्यजमानस्यैव कर्मणि स्वाम्यं न पत्न्या इति ख्यापितं भवति। तच्च दर्शितं प्राग्' इति।

एतेन यद् रामाण्डारेण 'श्रुतिर्मृतपत्नीकविषया अत्रत्यमस्येति वचनं तु प्रवृत्तसत्राणां कस्य चिन्मरणे तन्नेदिष्ठं तत्स्थाने दीक्षयित्वा तेन सह सत्रसमापनमुक्तम्। एवं च कुण्डपायिनामयने मासमग्निहोत्रानुष्ठाने नेदिष्ठपत्न्या सह प्रयोगः प्राप्तः तथा मा भूत् मृतपत्न्यैव सह कर्तव्यमित्यर्थम्'इत्युक्तम्,

तदपास्तम् । विना बाधं प्रकरणान्तरे निवेशस्यायुक्तत्वात् । किञ्चैतद्व्याख्याने ऽस्येत्यस्य पत्नीविशेषणत्वे पत्नीवदिति वृत्तिरयुक्ता स्यात् । "सविशेषणानां वृत्तिर्न" इत्युक्तेः । मृतस्यात्रानुपस्थितेश्च ।

अत एव काव्यदोषेषु प्रकाशादावुक्तशास्त्रविरुद्धत्वदोषदुष्टकथनेन शकुन्तलानाटकरूपकाव्यस्य दुष्टत्वं न ।

नचैवमपि भीष्मादीनां वेदाध्ययनोत्तरं कृतसमावर्तनानामपि केनचिन्निमित्तेनानिच्छया वा अकृतदारपरिग्रहाणामनाश्रमित्वदोषापत्तिः। अग्निहोत्रानुष्ठानातिथिपूजनादिना तस्य गृहस्थाश्रमसिद्धेः । अग्निहोत्रिविधुरवद् अग्निहोत्रादिना देवर्णमुक्तिस्तेषाम् । पितृऋणापाकरणं भीष्मस्य पितृभक्त्या, अन्येषां दत्तकादिभिस्तपोबलेन मानसपुत्रैर्वा सिद्धम् ।

अत एव "कण्वादिभ्यो गोत्रे" इति गर्गादिषु कण्वपाठश्च सगच्छते ॥

यद्यपि "त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वाऽनृणो यः पुत्री यज्वा ब्रह्मचारी च" इति श्रूयते तथाऽपि नैष्ठिकब्रह्मचर्यादेनैतत् । तदृणापाकरणस्य ब्रह्मचर्येणाग्निकार्यादिना सिद्धेः स्मृतिषूक्तत्वात् । एतेन 'अत्र 'वाजिमेधाः' इत्येतत्तत्समफलकदानादिपरम् । पत्न्यभावेन मुख्ययज्ञासंभवात् । 'अग्निनादाय' इत्यपि संस्कारकाग्निपरम्' इति यत्कैश्चिदुक्तम्, 'एतदेव तस्य पत्नीकल्पकम्' इत्यन्यैरुक्तम्, तत् परास्तम् । अग्नी-

निति बहुवचनासङ्गतेश्च । इदानीन्तनानां न तदनुष्ठानम्, तथा आचाराभावात् । प्रागुक्तोर्ध्वरेतस्त्वादिगुणवतामेव तथाऽनुष्ठानौचित्येन इदानीन्तनानां प्रायस्तत्त्वासंभवाच्चेत्यलम् ॥ ३९ ॥

(कुं०टी०) *व्रीहियवेति । व्रीह्यादिवत्पत्न्या अप्यङ्गत्वमेव प्रतीयते इत्यर्थः । *तदभावे ऽपि—पत्न्यभावे ऽपि । *तत्—अग्निहोत्रम् ।

ननु 'विना ऽग्निभिर्यदा पत्नी नदीमप्यब्धिगामिनीम् ॥
अतिक्रामेत्तदाऽग्नीनां विनाशः स्यादिति श्रुतिः' ।
योगीश्वरोऽपि—
दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ इति ।
एवं च सपत्नीकस्यैवाग्निहोत्रं लभ्यते । तथा—
विहायाग्नीन्सभार्यश्चेत् सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधानमिष्यते ॥
पत्नी सीमामतिक्रान्ता यजमानो गृहे यदि ।
आहोमाद्यदि नागच्छेत्पुनराधानमर्हति । इति चेत् ।

सत्यम् । स्मार्तो गृह्याग्निरौपासनावसथ्यपर्यायोऽपत्नीकस्यापि भवति ।

यो ऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ इति—

स्मृतेः स्मार्ताग्नेरपि नित्यत्वात् । अतएव 'दाहयित्वाऽग्निहोत्रेण' इति प्रतीकमुपादाय मिताक्षरायां व्याख्यातम्—अग्निहोत्रेण श्रौताग्निनेति । एवंच श्रौताग्निदाहेऽपि स्मार्ताग्नि-

इत्यत्र कर्तृद्वित्वस्य क्षौमस्य च विधाने वाक्यभेदप्रसङ्गः। तस्माद् दम्पत्योः सहाधिकारात् तद्द्वित्वमनूद्य क्षौममात्रं विधीयते इति मीमांसकसिद्धान्ताद् कथं स्त्रिया नाधिकार इत्याशङ्क्याह *न यजमानसाम्यमिति । तथाच जैमिनिसूत्रम् "तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वाद्" इति । (पू० मी० अ० ६ पा० १ अधि० ६ सू० २४)। आशीरिति—'इदं मे प्रातःसवनं माध्यन्दिनं सवनमनुसंतनुत' इत्यादिराशीः, "अगन्म सुवः" इत्यादिमन्त्रकरणकादित्योपस्थानादिक यजमानेनैव कार्यं न पत्न्या, अध्ययनाभावात् । आज्यावेक्षणादिकं वचनाद्भवतीति सिद्धान्तः । *कर्मचोदनाः—कर्मविधयः । ननु आधानं विना क्रतुर्न संभवतीति अर्थादाधानमाक्षिप्तं किंतु कालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते इति कथं कर्मविधित्वम् ? । सत्यम्, लौकिकाग्नौ होमस्य संभवान्न सर्वथा ऽग्नेराक्षेपोऽस्तीति अप्राप्तमेव वसन्तादिकाले आधानं विधीयते । *दर्शपूर्णमासाभ्यामिति । यद्यपि "आग्नेयोऽष्टाकपालो भवति" इत्येतद्विधिविहितस्य कर्मणः फलसम्बन्धं "दर्शपूर्णमासाभ्याम्" इति वाक्यं विधत्ते इत्यधिकारविधित्वमेवास्य, यदि तु अस्यैवोत्पत्तिविधित्वं स्यात् "तदा आग्नेयोऽष्टाकपालः" इतिवाक्यस्य वैयर्थ्यं स्यात्, तथाऽपि फलार्थं कर्मबोधनात्कर्मचोदनात्वे बाधकाभावः । अत एवाधिकारविधित्वमेव बोधयितुमधिकुर्वन्तीत्युक्तम् । *न पत्नीमिति । तस्याः साहित्यमात्रेणोपयोगेऽपि न स्वातन्त्र्यमिति भावः । *अनेनाचारेण—भीष्माचारेण । ननु—

श्रुतिस्मृत्युदितो यश्च साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः ॥ इति—

विष्णुस्मृतिवचनात्स्वातन्त्र्येणानुष्ठितानां कथं सदाचार-

त्वम्। यत्तु—

नोल्लङ्घनीयाः कुलदेशधर्मा मूलं हि तेषां च्युतवेदशाखा। इति।

तन्न।

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः।

श्रुतिस्मृत्यविरोधेन देशधर्मः स उच्यते॥ इति—

बृहस्पतिविरोधादिति चेन्न। श्रुत्याद्यविरोधिसदाचारेणापि मूलभूतश्रुतेरनुमानात्। तत्रानुमानं स्मृतिद्वारेति मीमांसकाः। साक्षादिति तार्किकाः। ननु ज्योतिष्टोमादिश्रुतयः स्वबोधितयागनिष्पादकमाधानं प्रयोजयन्तीति मीमांसकसिद्धान्तस्तथाच तदर्थिनामेवाधानादौ प्रवृत्तिरस्त्विति चेत्। सत्यम्। स्मृतिष्वनाहिताग्निताया दोषश्रवणान्नित्यश्रुतयो ऽप्याधानस्य प्रयोजिकाः। अत एव दर्शपूर्णमासादिभिरेवाधानस्याक्षेप इत्यपि नाशङ्क्यम्॥ *नेदिष्ठमिति। सत्रे हि यजमाना एव ऋत्विजो भवन्तीत्येकस्य मृतावन्येन समाप्यते। *कुण्डपायिनामिति। तत्र हि "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति"इति श्रूयते। तत्र नित्याग्निहोत्रमनूद्य मासरूपो गुणो विधीयते इति पूर्वपक्षः। नित्याग्निहोत्रस्य प्रकरणान्तरस्थत्वात्कर्मान्तरमेवेदम्, अग्निहोत्रशब्दस्तु तद्धर्मातिदेशार्थ इति सिद्धान्तः। *अनाश्रमित्वेति।

अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः।

इति स्मरणात्। अत एव "अन्तरा चापि तु तद्दृष्टेः" (उ० मी० अ० ३ पा० ४ अधि० ९ सू० ३६) इति सूत्रेण विधुरादीनामाश्रमकर्माभावे ऽपि विधुराधिकारोऽस्तीत्युक्त्वा "अतस्त्वितरज्ज्यायः"इति सूत्रितम्। (उ० मी० अ० ३ पा० ४ अधि० ९ सू० ३९)। अनाश्रमित्वापेक्षया आश्रमित्वं ज्याय

इति तदर्थः । किञ्च विधुरादीनामपि जपोपवासादिविशेषैरेव विद्यानुग्रहः इति "विशेषानुग्रहश्च" इति (उ० मी० अ० ३ पा० ४ अधि० ९ सू० ३८) सूत्रेण लभ्यते । विधुरो मृतपत्नीकः ।

अत्रेदं चिन्त्यते–मृतभार्यस्य पुनर्विवाहाशक्तौ "निर्मन्थ्येन पत्नीम्" इतिभरद्वाजोक्तेर्निर्मन्थ्येन पत्नीं दग्ध्वाऽग्निहोत्रेत्यादि निर्वाह्यम् । तथाच विष्णुः—गृह्योत्तरपरिशिष्टं च—

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरेत् ॥

उपाधिश्चसुवर्णकुशपत्न्यादि ।

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते यावज्जीवं समा द्विजाः ॥ इत्यपरार्को-दाहृतस्मृतेः । सौवर्णसीतां कृत्वा रामेणापि तद्विधानाद् ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदिति—

स्मृतिविरोधमाशङ्क्याह *अग्निहोत्रादिनेति । जैमिनिस्तु प्रजोत्पादनं नियमाह "ब्राह्मणस्य सोमविद्याप्रजानृणवाक्येन संयोगाद्"इति । सोमपानं विद्याध्ययनं प्रजोत्पादनमित्य-र्थः । परे तु अधीतवेदान्तस्य कर्मावबोधात्प्रागपि ब्र-ह्मजिज्ञासोपपत्तेः "त्रिभिर्ऋणवान्"इत्यत्र 'गृहस्थः सम्पद्य-मानः' इति व्याख्येयमित्याहुः । *तपो बलेनेति । मान-सोत्पत्तौ हेतुः । *अत एव—कण्वस्यापत्ययोगादेव । आजीवं ब्रह्मचारी नैष्ठिकः । *नतदिति । अत एव "अन्तरा चापि तु तद्दृष्टेः"इति व्याससूत्रमुपादाय "अनाश्रमिणामपि भीष्मादीनां ब्रह्मविद्याधिकारदर्शनाद्"इति शारीरकभाष्यकारा व्याचख्युः । *अलमिति । "तस्याश्रमविकल्पमेके"इति गौतमः, "ब्रह्मचर्य-

वान् प्रव्रजेद्''इति बौधायनः, 'एषां महर्षिचर्याणान्त्यक्त्वा ऽन्यतमया तनुम्'इति याज्ञवल्क्यः, 'सर्वेषु यथोपदेशं वर्तमानः क्षेमं गच्छति'इत्यापस्तम्बः, 'सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः' इति मनुश्च समुच्चयमाह ॥ ३५ ॥

( क० टी० ) यद्यपीय श्रुतिर्विद्यारण्यैर्मृतपत्नीकपरतया व्याख्याता 'यदा पुरुषे जीवति भार्या मृता तस्याश्चाहिताग्न्येनाग्निना दाह• कृत• 'आहार्येणाहिताग्नि पत्नीच'इत्याश्वलायनोक्तेस्तदा स विवाहेच्छाराहितत्वादद्रव्यत्वाच्चापत्नीक एव तत्परेयम्'इति, तथाऽपि तन्न युक्तमित्याह *नचेयमिति । रुद्रदत्ताशयेनाह *सामान्येति । मानाभावादिति भाव• । विद्यारण्यसम्मतमपीदमेवेति ध्वनयन्नाह *अत एवेति । तस्यार्थस्यायुक्तत्वादेवेत्यर्थ• । *उक्तमिति । दाशरथेरित्यन्तेन । तदेवाह *अवहन्तीति । योवेत्युत्तरत्रेति भाव । स्वोक्तेऽर्थे सूत्रसम्मतिमाह *वक्ष्यति चेति । अविशेषादित्यत्राप्यन्वयः । ननु 'पत्नीवदस्याग्निहोत्र भवति'इत्यादिना कर्मणः पत्नीवत्त्ववचनात्तदभावे कथ कर्मात आह *किञ्चेति । 'अत्र 'अस्य'इतिवचनाद्यजमानस्यैव कर्मणि स्वाम्य न पत्न्या इति ख्यापितं भवति'इति रुद्रदत्तः । अङ्गत्वे युक्त्यन्तरमाह *व्रीहीति । *तस्या•—पत्न्या । तथा चाङ्गत्वादेव नोक्तदोष इति भावः । "जायापती अग्निमादधीयाताम्"इत्याद्युक्तेराह *सहेति । वाल्मीक्याश्रमगमने ऽपि मरणाभावादाह *असन्निहितेति । द्वयोर्विद्यारण्यीयत्वसाम्येऽपि आचारसवादेनास्यैव प्राबल्यमाह *अत्रैवामिति । *यायजमानस्येति । तत्सूत्रव्याख्यानावसरे युक्तिभिरुक्तार्थे आचारमुदाहरतेत्यर्थः । *व्याख्यानमिति । "अपत्नीकोऽपि"इति श्रुतेः स्वयकृतमपीत्यर्थः । तदेवाह *अनेनेति । नच सा श्रुतिरपि शब्दस्वारस्यात्सपत्नीकस्याग्निहोत्रावश्यकताबोधिकैवेत्येतदुक्तवती । "तदेषाऽभियज्ञगाथा गीयते—

यजेत्सौत्रामण्यामपत्नीकोऽप्यसोमप ।
मातापितृभ्यामनृणार्थाद्यजेति वचनाच्छ्रुतेः ॥ इति" ।
यज्ञमभिलक्ष्य गाथा याज्ञिकैर्गीयते इत्यर्थः ।

अपत्नीकोऽपि पुमान्सौत्रामण्यां यजेत सौत्रामणीयागमपि कुर्यात् किमुताग्निहोत्रादिकम् । सोमयागे तु नाधिकारोऽस्य किं तु हविर्यज्ञेष्वेवाधिकार इत्याह असोमप इतीति वाच्यम् । एव व्याख्याने रामस्याश्वमेधादौ प्रवृत्तेरसाङ्गत्यापत्तेः । तस्मादन्यथा व्याख्यान तस्या —यथा असोमपोऽपि सौत्रामणीं करोति तथाऽपत्नीकोऽपि, यथा पत्नीरहितोऽपि मातापितृभ्यां श्राद्धादि ददाति तथाऽग्निहोत्रमपि कुर्यात् । तत्र हेतुरनृणार्थाद् । ऋणपरिहारनिमित्तमित्यर्थः । "त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो य पुत्री यज्वा ब्रह्मचारी च" इति शाखान्तरे श्रूयते । तथा यजेति श्रुतेर्वचनात् । तस्मादनुष्ठानपक्ष एव । तदेतदभिप्रेत्यैवान्वर्थमुपसंहृत तत्र—"तस्मात्सोऽस्य याजयेद्" इति । पत्नीरहितत्वादृणानपाकरणदोषासहिष्णुत्वाच्च सौम्यत्वम् । नन्वेव "पत्नीवद्" इति सूत्रस्य का गतिरत आह *पत्नीवदिति । *आदरेति । अत एव सीताया मुन्याश्रमवासपर्यन्त भगवतो यज्ञानुष्ठाने सुवर्णपत्नीकरण ततो गमनानन्तर तत्र तदकरण पुराणे स्पष्टम् । *तच्चेति । "या यज" इतिसूत्रव्याख्यानावसरे इत्यर्थः । *इतिस्तदुक्तिसमाप्तौ । *श्रुतिः—'अपत्नीक' इति । *अत्रत्यम्—'पत्नीवदस्य' इतिसूत्रस्थम् । इत्यर्थमित्यत्रान्वयः । *नेदिष्ठम्—निकटवर्तिनम् । *एवमपि—तेषां तत्राधिकारेऽपि । एतेनेत्यस्यार्थमाह *विनाबाधमिति । एतेन पत्नीवदिति वचनादपत्नीकस्याग्निहोत्रेऽनधिकारः । बह्वृचब्राह्मणोक्त तु जलपटलोक्तदारकर्मणि यद् 'यशआत्मार्थमग्न्याधेयम्' इत्येतद्विषयम् । तत्रासामर्थ्याद् आग्निहोत्रार्थमग्नीनिति धूर्तभाष्योक्तमप्यपास्तम् । उक्ताशयेनैव *किञ्चैतदिति । नित्यसापेक्षत्वेनास्योद्धारे दोषान्तरमाह *मृतस्येति । मरणस्येत्यर्थ । *अत एव—अपत्नीकस्याधिकारादेव । ब्रह्मचर्यसत्त्वेन ऋषिऋणान्मुक्ते स्पष्टत्वादाह *अग्निहोत्रेति । *अन्येषाम्–कण्वादीनाम् । पुत्रिकापुत्रस्याप्यसम्भवादाह *दत्तेति । कलौ दत्तौरसान्यनिषेधेऽपि तदा सत्त्वादाह *आदीति । विभाण्डकस्य मृगीपुत्रस्य ऋष्यशृङ्गस्य प्रसिद्धत्वेऽपि अन्येषां तदप्रसिद्धेराह *तप इति । अस्य नेत्यत्रान्वयः । कथनेनेत्यस्य दुष्टत्वमित्यत्रान्वयः । *एवमपि–

तेष्वन्तत्राधिकारेऽपि । *केनचित्-पित्रर्थं कृतप्रतिज्ञारूपेण । उक्तरीत्या तस्याग्निहोत्राद्यनुष्ठानं भवत्येवेत्याह *अग्नीति । आदिना श्राद्धादि । *तस्य-भीष्मादे. । इदमन्यत्राप्यावश्यकमित्याह *अग्निहोत्रीति । एतेन कृतसमावर्तनस्याकृतदारपरिग्रहत्वकल्पने मानाभाव । नच तस्याऽस्त्रीसत्त्वे ऽपि न मानम् । अग्निहोत्रसद्भावस्यैव तत्सत्त्वे मानत्वात् । नच विधुरे ऽपि तत्कल्पनापत्ति. । मृतपत्नीकाग्निहोत्रस्य भाष्यकारैरेवाभ्यनुज्ञानेन तदसम्भवात् । नचाप्रमाण भाष्यकारवचनम्, निरङ्कुशेन तथा वक्तुं शक्यत्वे ऽप्यन्येन विदुषा तथा दुर्वचत्वादित्यपास्तम् । उक्तयुक्ते', तेनैव तथाऽध्वनितत्वस्योक्तत्वाच्च । उक्तार्थे पाणिन्यादिसम्मतिमप्याह *अत एवेति । दत्तकादिपुत्रादिसद्भावादेवेत्यर्थ. । द्वितीयमानमाह *गर्गादिष्विति । उक्तार्थे श्रुतिविरोधमापाततो भासमानमुक्ताशयेनैव परिहरति *यद्यपीत्यादि । आदिना कृतसमावर्तनप्रागुक्तपरिग्रह । *तत्-ऋणम । *तद्दणेति । त्रिविधऋणेत्यर्थं । आदिना तत्रोक्तनिमित्तसङ्ग्र. । एतेन नैष्ठिकब्रह्मचारिणो नाग्निहोत्राद्यनुष्ठानमिति सूचितम । *इदानीमिति । चतु शताधिकचतु सहस्रवर्षान्तर्गतानामित्यर्थ । *तदिति । अग्निहोत्रादीत्यर्थ । तथेति पाठे तद्वदित्यर्थ । अत एवाह *तथापरेति । [illegible]बाहुल्यादाह *प्राय इति । साम्प्रत तु [illegible] इत्यनुपदमेव प्रतिपादितम् । देवऋणमुक्तिस्तु पञ्च[illegible]यज्ञादिनेति ध्येयम् । तदाह *इत्यलमिति ॥ २५ ॥

नित्यनैमित्तिकयोरपि प्रत्यवायपरिहारः फलम् । वेदसहस्रैरपि बोधिते निष्फलत्वज्ञाने इष्टसाधनताया[illegible]याम प्रवृत्तेः । उक्तरीत्या विधिबलेन प्राप्तस्य प्रत्यवायस्य तत्करणे परिहारावश्यंभावात् ।

नच—

'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।

स सात्त्विकः' इति गीतावचनविरोधः । यज्ञादी-

न्युपक्रम्य—

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।

इत्यष्टादशे गीतायामेव पावनत्वोक्तेः। सङ्गः, कर्तृत्वाभिमानः । तस्मादनुद्दिष्टोऽपि प्रत्यवायपरिहारः फलमिति स्वर्गादिफलं त्यक्त्वाऽपि क्रियमाणस्य पावनत्वमिति तदाशयः। नित्ये शुचिजीवत्वमेवाधिकारः । नित्यत्वं च प्रत्यवायहेत्वभावप्रतियोगित्वम् । अहरहरित्यादिवीप्सायावज्जीवसदापदादिकं च तत्तात्पर्यग्राहकम्। चैत्रनिष्ठसन्ध्यावन्दनविषयकृतिसामान्याभाववतस्तत्तत्सन्ध्याकालस्य पापहेतुत्वाद् न कृतसन्ध्यावन्दनस्य कृतौ नष्टायां पापोत्पत्तिः ।

सन्ध्यामुपासते ये तु सन्ततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ इति–

क्वचिन्नित्ये फलश्रवणमप्यस्ति । नन्वयमर्थवादः स्तावको न तु फलबोधकः,प्रशस्तत्वरूपश्रुतिश्च प्ररोचनद्वारा पुरुषप्रवृत्त्यर्थेति चेन्न । "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यादेरपि तथात्वापत्तेः । चतुर्थी तु "ऊर्जो ऽवरुद्ध्यै" इत्याद्यर्थवादस्थचतुर्थीवन्नार्थसाधिका । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादितः फलाकाङ्क्षानिवृत्तेश्च ।

तत्तत्फलजनकत्वरूपं च प्राशस्त्यम् । धर्मान्तररूपं प्राशस्त्यं तु न प्रवृत्त्युपयोगि । विधित

इष्टावगमेऽपि तस्यावान्तररूपेण बोधनद्वारा क्वचित्क्वचिच्छीघ्रोत्पत्तिज्ञापनद्वारा त्वरितप्रवृत्तयेऽर्थवादा इतीदृशार्थवादानां फलबोधकत्वमपीति बोध्यम्।

अत एव सर्वशक्त्यधिकरणे काम्यं यथा फलायोपदिष्टं तथा नित्यमपीति भट्टैरुक्तम् ।

कर्मविपाकप्रायश्चित्तप्रवर्तनया दुःखानुत्पादरूपेष्टसाधनताऽनुमानम् । अन्यत्र पापध्वंससाधनतानुमानम् । अनुमाने पक्षश्च धात्वर्थे करणीभूतो यागस्तत्करणको व्यापारो वा ।

यत्तु तद्विषयकृतिपक्षकं तद् इति । तन्न, क्रियेष्टसाधनताज्ञानादपि प्रवृत्तिदर्शनात् । पाकादेरिष्टसाधनताज्ञानं विना तत्कृताविष्टसाधनत्वस्य ज्ञातुमशक्यत्वाच्चेत्यन्यत्र विस्तरः ॥ ३६ ॥

( कुं० टी० ) ननु नित्ये सन्ध्यावन्दनादाविष्टाभावात्कथं प्रवृत्तिः, ब्रह्मलोकादिफलकल्पनायां काम्यत्वापत्तिरित्याशङ्क्याह *नित्येति । *प्राप्तस्येति । अकरणे इत्यादिः । *तस्मादिति । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन"इत्यादिश्रुत्या यज्ञादीनामन्तःकरणशुद्धिद्वारा विद्योत्पत्तिसाधनत्वादेवेत्यर्थः । *स्वर्गादिफलमिति । तस्मान्नात्र विश्वजिन्न्यायः । *तदाशय इति । अत एव "कुर्वन्नेवेह कर्माणि"इति श्रूयते । जातायां च विद्यायां क्रियाकारककलापलक्षणस्य प्रपञ्चस्याविद्याकृतस्य विरोध एव । "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येद्"इति श्रुतेः । अत एव "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः"इति प्रजादिव्य-

तिरेकेणापि विद्योत्पत्तिः श्रूयते। "ब्रह्मचर्यादेव परिव्रजेद्"इत्यादिना चाश्रमान्तरपरिग्रहो ऽपि। अधिकारिणैव कर्मानुष्ठानादाह *नित्ये इति। *शुचिजीवित्वमेवेति। नतु काम्यकामनावत्त्वमपि। अत एव तत्कामनारहितस्यापि तत्र प्रवृत्तिः। अशुचेरनधिकारित्वेन सन्ध्याद्यकरणे प्रत्यवायाभावादुक्तम् *शुचीति। *प्रत्यवायेति। प्रत्यवायहेतुरभावः सन्ध्यावन्दनाद्यभावः। अथ कथमभावरूपस्य सन्ध्याद्यकरणस्य भावरूपदुरितादृष्टजनकत्वम्, 'नाभावाद्भाव उत्पद्यते इति प्रवादाद् इति चेत्। सत्यम्। नावश्यमयं नियमः। तार्किकाणां प्रागभावस्य कार्यजनकत्वात्, मीमांसकानामनुपलब्धेरभावप्रमाजनकत्वात्। किञ्च कार्यमात्रं कृतिजन्यमित्यपि न नियमः, अङ्कुरे व्यभिचारात्। संक्षिप्तं सम्यक्सम्पादितम्। *फलश्रवणमपीति। ग्रहणश्राद्धादौ नित्यनैमित्तिकत्ववदत्र नित्यस्य काम्यत्वे ऽपि बाधकाभावादिति भावः। *उभयेभ्यः कामेभ्य इति। नन्वत्र लिङाद्यभावान्न फले विधिः सम्भवति, तस्माद्वाक्यान्तरविहितफलस्यानुवादो ऽस्तु। नच "दर्शपूर्णमासाभ्यां स्वर्गकामः" इत्यनेन स्वर्ग एव फलं प्राप्तं नान्यदिति वाच्यम्। तदङ्गफलानां प्राप्तत्वात्। सामिधेनीप्रकरणे "एकविंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य"इत्यादिश्रुतेरिति चेन्न। तादर्थ्यचतुर्थ्यैव फलत्वप्रतीतेः। *सन्ध्यामिति। "सन्ध्यामुपासीत"इतिविधिना इष्टावगमेऽपि शीघ्रोत्पत्तिज्ञापनद्वारा प्रवृत्तिविशेषार्थमर्थवादः। अथ किमिदं नित्यत्वं यदकरणे प्रत्यवायो भवति तन्नित्यमिति चेत्। नैमित्तिकेऽतिप्रसङ्गात्। ननु नियतकालकर्तव्यत्वेन विहितं नित्यमिति चेत्। ग्रहोपरागादिरूपानियतकालविहितस्नानादेरपि नित्यताप्रसङ्गात्। उपरागो न नियत इति चेत्। एका-

दश्यादेरपि वृद्धिह्रासाभ्यामनियतत्वात्। अत्रोच्यते। वीप्सादिलिङ्गवत्त्वे सति यदकरणे प्रत्यवायस्तन्नित्यम्। वीप्सा, नित्यपदम्, सदापदम्, यावज्जीवपदम्, अकरणे दोषश्रुतिः, अत्यागचोदना, फलाश्रुतिश्चेत्यादीनि नित्यत्वलिङ्गानि। एतल्लिङ्गराहित्ये सति अकरणे प्रत्यवायजनकत्वं नैमित्तिकत्वम्। "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्रापि वीप्साश्रवणान्नित्यत्वे इष्टापत्तिरेव। यद्यपि नित्यमफलं काम्यं तु सफलं तथाऽपि सन्ध्योपासनादिवदेकस्योभयरूपत्वमविरुद्धम्। एकस्यैव खादिरस्य वीर्यकामार्थत्वयागार्थत्ववत्। *ऊर्जोऽवरुद्ध्या इति। "औदुम्बरो यूपो भवति" इत्यस्यानन्तरम् "ऊर्ग्वा उदुम्बर ऊर्जं पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुद्ध्यै" इति श्रूयते। अस्यायमर्थः-यजमानायौदुम्बररूपयोर्जा पशुरूपामूर्जमाप्नोतीत्यर्थः। तत्र ऊर्जोऽवरुध्यै इति चतुर्थीश्रवणादौदुम्बरतासाध्यं फलं गम्यते इति पूर्वपक्षः, अविहिताया औदुम्बरतायाः फलं न सम्भवति। नहि द्रव्यमात्रात्फलं भवति। तस्मात् स्तुतिद्वारा विधिः कल्प्यः। *धर्मान्तरेति। बलवदनिष्टाननुबन्धित्वादिरूपेत्यर्थः। *विधित इति। "वायव्यं श्वेतमालभेत भूतिकामः" इत्यनेनैव फलबोधने ऽपि "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यर्थवादेन वायुदेवताककर्मस्तुत्या शीघ्रफलदातृत्वं बोध्यते। वायुः शीघ्रगामिनी देवता। यो वायुं स्वेन भागेनोपधावति तं स भूतिं प्रापयतीति तदर्थः। *सर्वशक्त्यधिकरणे इति। तत्र हि सर्वाङ्गानुष्ठानसमर्थस्यैवाधिकार इति पूर्वपक्षे नित्यमशक्याङ्गपरित्यागेनाप्यनुष्ठेयमिति सिद्धान्तितम्। *नित्यमपीति। तथा च दर्शपूर्णमासयोः फलश्रवणेऽपि नित्यत्वम-

विरुद्धम् । वस्तुतस्त्वत्र स्वर्गशब्दोऽपरिमितश्रेयोनिःश्रेयसद्वयपरः। "पञ्चहोतारमपाग्नीध्रे स्वर्गकामस्य" इत्यत्र भाष्यकारैस्तथैव व्याख्यानात् अकरणे ऐन्द्राग्नपश्वादिविधानायेति ? । यस्मिन् क्षणे सूर्येण सङ्गतश्चन्द्रः स दर्शः, तद्युक्तत्वात्सम्पूर्णोऽप्यहोरात्रो दर्शस्तत्र दर्शेष्टिः, सा प्रतिपदि यद्यपि क्रियते तथाऽपि प्रातरन्वादधाति श्वोभूते यजेतेत्यादिना दिनद्वयसाध्यत्वावगमाद् दर्शशब्दोऽहोरात्रद्वयपरः, एवं पूर्णमासशब्दो ऽप्यहोरात्रद्वयपरो बोध्यः । यद्यपि पौर्णमास्यामुपक्रम्य दर्शयागः क्रियते तथाऽप्यल्पाच्तरत्वाद्दर्शशब्दस्य पूर्वप्रयोगः ॥ ३६ ॥

( क० टी० ) ननु काम्यस्थले भवदुक्तरीत्या प्रवृत्तिसम्भवे ऽपि न नित्यादौ, तत्र फलानुद्देशादत आह *नित्येति । ननु वेदबोधितत्वान्निष्फले ऽपि प्रवृत्तिरिति किमर्थं तस्य तत्त्वकल्पनमत आह *वेदेति । पामरादेरपीति भाव । ननु तत्रैव न मानमिति कथ तस्य तत्त्वमत आह *उक्तेति । नित्यादौ प्रेरणया ऽवश्यानुष्ठेयत्वमपि बोध्यते तेन तदभावे प्रत्यवायासिद्धिरिति प्रागुक्तेत्यर्थ । *सइति । 'यष्टव्यमेवेति मनः समाधाय' इत्यादिः । *उपेति । 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तद्' इत्यनेन । द्वयोर विरोधायाशयमाह *तस्मादिति । नन्वेव तदनिच्छोरनाधिकारापत्तिरत आह *नित्यइति । अत एव अफलत्व नित्यत्वमित्यपि नेत्याह *नित्यत्व चेति । ननु साम्यात्कथ विवेको ऽत आह *अहरहरिति । *तत्त्वे–नित्यत्वबोधने । ननु सन्ध्यावन्दनविषयकृत्यभावस्य पापहेतुत्वे तत्तत कोल कृतसन्ध्यावन्दनस्यापि कालान्तरे तदभावसत्त्वात्पापापत्तिरत आह *चैत्रेति । अवच्छेदकतासम्बन्धेनेति भाव । नित्ये सर्वत्र स एव फलमिति नियमो नेत्याह *सन्ध्यामिति । *शासितव्रताः–अनुष्ठितव्रता. । ननु का सा स्तुति क उपयोगश्च तस्या अत आह *प्रशस्तत्वेति । आदिना "सर्वेभ्यः कामेभ्यो ज्योतिष्टोम" इत्यस्य परिग्रहः। *तथात्वेति । स्तावकत्वेत्यर्थः। ननु 'सर्वेभ्य.' इति चतुर्थ्याः फलसमर्पकत्वमिति वषम्यमत

आह *चतुर्थीत्विति । नन्वेव तयोः फलाकाङ्क्षानिवृत्तिर्न स्यादिति तस्य फलबोधकत्वमावश्यकमत आह *दर्शेति । आदिना "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यस्य परिग्रहः । किञ्चार्थवादत्वे ऽपि स्तुतिवैयर्थ्यमेव । नच प्ररोचनार्थं सा । तस्या अपि व्यर्थत्वात् । नच प्रवृत्तिस्तत्फलम् । अर्थवादाप्रामाण्य जानतस्तदनुपपत्ते । 'बहुदुग्धेय गौ 'इति वाक्याप्रामाण्य जानतस्तद्वाक्यादिव अर्थवादस्य स्वर्गाद्यर्थकतायामप्रामाण्ये ऽपि प्राशस्त्यबोधकत्वद्वारा स्तावकत्वमित्यभ्युपगते ऽर्थे प्रामाण्यमिति चेत् तत्राह *तत्तदिति । तदन्यप्राशस्त्यस्य काप्यकल्पनात् । प्राशस्त्य तु ज्ञात सद् एतत्तात्पर्यमाह *विधित इति । एव चेत्यादि । "सन्ध्यामुपासीत" "सर्वेभ्यः कामेभ्य." इत्यादाविति भाव. । *क्वचित्, द्वितीये । आद्ये आह *क्वचिदिति । *अत एव-नित्यादिस्थले फलसत्त्वादेव । *सर्वेति । "सर्वशक्तौ प्रवृत्ति स्यात्तथाभूतोपदेशाद्"इति तदधिकरणपूर्वपक्षसूत्रे पुरुषार्थस्य भाव्यस्योभयत्रापि तुल्यत्वादित्युक्त तैः । तद्व्याख्यानग्रन्थमाह *काम्यमिति । नैमित्तिकविशेष विशेषमाह *कर्मेति । *अन्यत्रेति । तद्भिन्ने नैमित्तिके नित्ये च । *धात्वर्थे-व्यापारे । प्राधान्यादाह *तदिति । येषा मते कृतिरेव भावनेति तन्मतरीत्योक्त दूषयति *यत्त्विति । आवश्यकत्वेन तदेव युक्तमित्याह *पाकादेरिति । तस्मात्प्रवर्त्तनैव विध्यर्थो नान्यद् इति प्रागुक्त युक्तमिति । अन्येषामुक्तिरन्यथाऽयुक्तैवेति बोध्यम् । तदाह *इत्यन्यत्रेति । गुरुमञ्जूषादावित्यर्थ. ॥ ३६ ॥

तत्र लिङ्रूपा शाब्दी भावना त्र्यंशा भाव्यकरणेतिकर्तव्यताभिः । तत्र तस्याः सविषयत्वेन विषयाकाङ्क्षायां समानपदोपात्तत्वप्रत्यासत्त्यांऽशत्रयविशिष्टाऽऽर्थी भावना प्रवृत्तिरूपा विषयः । इयमेव भाव्याकाङ्क्षा साध्याकाङ्क्षेति चोच्यते । साध्यत्वाख्यविषयतयैव तस्या विषयत्वात् । साध्यत्वं च साक्षात्परंपरासाधारणम् । एवं तस्याः साध्यत्वे ऽस्वग-

ते केनेत्याकाङ्क्षायां प्रवृत्त्यनुकूलव्यापारबोधकत्वेन ज्ञातपदज्ञानं करणत्वेनान्वेति । करणत्वं च भावनाभाव्यनिर्वर्तकत्वम् । एवं कुठारादेरपि पुरुषव्यापारनिर्वर्त्यच्छेदनिर्वर्तकत्वेनैव करणत्वात् । भावनाभाव्यकरणाकाङ्क्षैव च भावनाकरणाकाङ्क्षेत्युच्यते। तत्र 'कष्टं कर्म' इतिन्यायादुपाये द्वेषेणालस्यादिना वा अप्रवर्तमानं पुरुषं प्रशस्तफलवत्ताज्ञापनेन द्वेषाद्यपसारणद्वाराऽर्थवादवाक्यजन्या पूर्वोक्तप्राशस्त्यवत्तारूपा स्तुतिः सहकारिकारणमिति इयमितिकर्तव्यतोच्यते।

ननु शब्दानुपस्थितकरणादेः कथमन्वय इति चेन्न । शब्दोपस्थितप्रवर्तनाया उक्तत्रयाकाङ्क्षायाः शब्दादुपस्थितैस्तत्सहकारेण मानसोपस्थितैश्च पदार्थैस्तद्विषयमानसबोधस्य तात्पर्यवशेनाङ्गीकारात् । तथाहि लिङादेः श्रोत्रेणोपस्थितिः । तस्य भावनाबोधकत्वेन ज्ञातत्वमपि मानसोपस्थितम् । एवं चार्थीं भावनां प्रवर्तनाबोधकतया ज्ञातपदज्ञानेन भावयेदिति बोधः ।

एवमर्थवादानामुपस्थितिः श्रोत्रेण, प्राशस्त्यस्य तु लक्षणया, ज्ञाततायास्तु मानसेत्यर्थवादैः प्रशस्तत्वेन ज्ञात्वेतीतिकर्तव्यतासंबन्धः । प्राशस्त्यं तु शीघ्रफलदातृत्वरूपम् ।

यत्तु स्वतः फलतो वा बलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यमर्थवादैर्बोध्यते इति । तन्न । श्येनफलस्य शत्रुवधस्यानिष्टहेतुत्वेन फलतोऽनिष्टहेतौ श्येने रागात्मकत्वेन प्रवृत्तिदर्शनेन तदर्थवादैस्तद्बोधनासंभवात् ।

प्राशस्त्यज्ञानजननेन विधेः प्रवृत्तिजनने साहाय्यमर्थवादैः क्रियत इति विधिस्तत्साकाङ्क्षः । एवमर्थवादा अपि भूतार्थानुवादकाः स्वाध्यायविध्यापादितप्रयोजनवत्त्वस्य लाभाय विध्याकाङ्क्षाः । तत्रार्थवादानां प्रयोजनांशो विधिना पूर्यते, विधेः शब्दभावनाया इतिकर्त्तव्यतांशोऽर्थवादैरिति उभयश्रवणे सम्पूर्णं वाक्यमेकश्रवणे त्वन्यस्य कल्पनेति बोध्यम् ।

एवमार्थी भावनाऽपि त्र्यंशा यथा, यजेतेति, अत्र 'यज देवपूजायाम्' इत्युक्तेर्देवपूजाकरणकव्यापारो यजेरर्थः । देवपूजा च मन्त्रकरणको देवतोद्देश्यको द्रव्यविषयस्त्यागः । अयमेव यागः । भाव्यस्तु स्वर्गकामादिपदोपस्थाप्यः स्वर्गोऽर्थतो लभ्यते । यद्यपि स व्यापारस्त्यागविषयोऽपि, तथाऽपि तस्य करणत्वेनैवोपस्थित्याऽसुखरूपत्वेनापुरुषार्थतया च न भाव्यत्वमिति बहिर्भूतस्वर्गस्यैव साध्यत्वम् । अत एव ज्योतिष्टोमेनेत्यादौ तृतीया । करणभूते धात्वर्थत्यागेऽभेदेन अन्वयात् ।

यत्तु भाव्याकाङ्क्षा 'किम्' इतिशब्देन मीमांसकैर्दर्शिता, तदयुक्तम् । 'भावयेद्' इति पदस्योत्पत्त्यनुकूलव्यापारवाचितया सकर्मकत्वेन तदुपस्थिते तथाऽऽकाङ्क्षौचित्येऽपि यजेतेत्यादितस्तेन रूपेणाबोधात्तदुपस्थाप्ये तथा ऽऽकाङ्क्षानौचित्यात् । ततोऽपि तथा बोधाङ्गीकारे भावयेदितिवत् 'स्वर्गं यजेत' इत्यापत्तेः । अतः 'किमर्थम्' इत्येव तदाकार उचितः । अत एवेदृशानां कामा-

न्तपदेन चतुर्थ्या वोल्लेखः । अत एव "धर्मे जैमिनिः" इति सूत्रे वाचस्पतिमिश्राः–'स्वर्गस्य भावनाभाव्यत्वाभावेऽपि तदुद्देश्यत्वम्' इत्याहुः ।

करणन्तु धात्वर्थयागः । करणत्वं भावनाभाव्यनिर्वर्तकत्वमुक्तमेव । सहकारिकारणाकाङ्क्षारूपकथंभावाकाङ्क्षा तु संनिधिपठिताश्रूयमाणफलक्रियाजातरूपेतिकर्तव्यतया निवर्तते । तैर्विना यागेनापूर्वाजननात् । पचतीत्यादौ सकर्मकस्थले तण्डुलादिरूपकर्माकाङ्क्षाऽप्यधिका । करणाकाङ्क्षाऽत्र बहिर्भूतकाष्ठादिपदैर्निवर्तते । बाह्यफलाकाङ्क्षाया 'तृप्तये' इत्याद्यपि प्रयुज्यते ।

नच विशिष्टस्य धात्वर्थत्वात्तदर्थस्वर्गभावनोद्देशेन यागस्य विधेयत्वं न स्यादिति वाच्यम् । विधिप्रत्ययबोध्यप्रवर्तनाविषयत्वरूपविधेयत्वस्य प्रकृत्यर्थे सम्पूर्णधात्वर्थे शाब्दबोधेऽपि स्वर्गस्य सुखरूपत्वेन स्वत एवेष्टतया तद्व्यापारे स्वरसत एव प्रवृत्तेः सिद्धत्वेन च विशेषणे फले तत्त्वप्रतीत्याऽदोषात् । यथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यादौ । उपपादयिष्यामश्चेदं समासे ।

इदञ्च 'भावनायाः प्रत्ययार्थत्वम्' इति मीमांसकमतेऽप्यावश्यकम्, तेषामपि समानपदोपात्तत्वप्रत्यासत्त्या लिङर्थप्रवर्तनायाः प्रथमतस्तदुपात्तभावनायामन्वयादिति दिक् ॥ ३७ ॥

---

(१) कर्मविपाकेत्यारभ्य 'इत्यर्थः' इत्यन्तो ग्रन्थ षट्त्रिंशदङ्कतः प्राग् ज्ञेयः ॥

(कुं०टी०) *कर्मविपाकेति । दुरितविपाक एव प्रायश्चित्तमित्यर्थः । *पक्षश्चेति । 'याग इष्टसाधनम्'इत्यनुमाने इत्यर्थः ।

*अंशेति । तथाहि यजेतेत्याख्यातसामान्यस्य शक्त्या प्रेर्यपुरुषप्रवृत्तिरूपा, भावनाऽर्थः । लिङादिविशेषशक्त्या च प्रवर्तनारूपा भावनोच्यते । प्रवर्तना च पुरुषप्रवृत्त्यनुकूलो व्यापारः । सच वेदे लिङादिप्रयोगः । तस्यैव प्रवर्तकत्वात् । इयमेव शाब्दी भावना । सा चेयमंशत्रया । तत्रार्थी भावना साध्यत्वेन संबध्यते । लिङादिज्ञानं तु करणत्वेन संबध्यते, प्राशस्त्यज्ञानं त्वितिकर्तव्यतात्वेन संबध्यते । तच्च प्राशस्त्यज्ञानं "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादैर्जन्यते । अर्थवादा हि स्वार्थःप्रतिपादने प्रयोजनमलभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति । *परेति । एकप्रत्ययोपात्तत्वादार्थभावनैव शाब्दभावनायां साध्यत्वेनान्वेतीत्यर्थः । *इयमेवेति । शाब्दी भावनैव । *भाव्येति । भाव्यामार्थभावनामाकाङ्क्षति । *तस्याः—आर्थभावनायाः । *साक्षात्परम्परेति । भावनायास्तत्साध्ययागस्य च साध्यत्वात् । *ज्ञातपदेति । प्रवृत्त्यनुकूलव्यापारवाचकत्वेन ज्ञातं यल्लिङादिपदं तज्ज्ञानं करणम् । ननु भट्टमते लिङादीनां करणत्वात्तन्निष्ठो ऽभिधैव व्यापारः । स्वमते तु लिङादिज्ञानस्य कथं करणत्वं व्यापाराद्यभावादत आह *करणत्वं चेति । शाब्द्या भावनया भाव्या आर्थी भावना तन्निर्वर्तकत्वाल्लिङादिज्ञानं करणमित्यर्थः । लोकेऽपि हि एवंविधमेव करणत्वं दृष्टमित्याह *कुठारादेरपीति । *स्तुतिरिति । इदं च निन्दादेरुपलक्षणम् । तद्यथा—"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अन्येन यजते स गर्ते पतति" इति निन्दारूप एवार्थवादः । तथा "तस्माद्वा एतेन

पुरा ब्राह्मणा अस्तौषन्यज्ञं प्रतन्महे" इत्यादिः पुराकल्पो ऽप्यर्थवादः इतिकर्तव्यताशब्देनोच्यते । नन्वार्थी भावना शब्दोपस्थिता भाव्यत्वेनान्वेतु शब्दादनुपस्थितं तु करणं कथमन्वेतीत्याशङ्क्याह *शब्दानुपस्थितेति । शब्दानुपस्थिताः शब्दसहकारेण मनसा उपस्थिता ये पदार्थास्तेषां मानसो बोध इत्यर्थः । *एवं चेति । प्रवर्तनाबोधकत्वेन ज्ञातं यल्लिङादिपदं तज्ज्ञानेनार्थी भावनां भावयेदित्यन्वयः । कथं भावयेदित्याकाङ्क्षायामर्थवादोक्तप्रशस्तत्वं तत्रान्वेति–संबध्यते, तेन चेतिकर्तव्यतात्वं लभ्यते । वेदो द्विविधः मन्त्रो ब्राह्मणं च । ब्राह्मणं द्विविधं विधिरर्थवादश्च । तत्र विधिः साक्षात्प्रवर्तकः । अर्थवादानां तु स्तावकत्वेनोपयोग इत्याह *एवमर्थवादानामिति । ननु भूतार्थानुवादकत्वे ऽप्रामाण्य "स्वाध्यायोऽध्येतव्यः" इत्यनेन सप्रयोजनाध्ययनस्य लाभात् । यद्यपि विधिविहितस्यानुवदनमनुवाद इति सूत्रेणार्थवादापेक्षयाऽनुवादः पृथगुक्तः । स चाद्विविधः विध्यनुवादो विहितानुवादश्चेति । द्विविधस्यापि विभागस्य विधिसमभिव्याहारे, भूतार्थवादरूपाणां वेदान्तवाक्यानां तत्रानुवादकाना च प्रामाण्यम्, याहीत्युक्त्यपेक्षया याहि याहीत्युक्तौ शीघ्रप्रत्यायनवत्, तथाऽपि अनुवादतुल्यत्वादर्थवादानामनुवादत्वम् । तत्राह *अर्थवादैरिति । *एवमार्थी भावनाऽपीति । अयम्भावः–"यजेत स्वर्गकामः" इत्यादौ धात्वर्थलिङर्थयोः परस्परमन्वये भावयेदित्यर्थः सम्पद्यते । तत्र किं भावयेदित्याकाङ्क्षायां फलं स्वर्गादि संबध्यते, केनेत्याकाङ्क्षायां तु यागादिर्धात्वर्थः, कथमित्याकाङ्क्षायां तु सोमादिद्रव्यदेवतादीनीति । पुरुषप्रवृत्तिरूपा आर्थी भावना ऽपि अंशत्रयवती । ननु लिङर्थभावनायां धात्वर्थस्यैव भाव्यत्वमुचि-

तम्, समानपदोपात्तत्वरूपश्रुतेः प्रबलत्वात् । स्वर्गादिफलं तु वाक्यलभ्यं दुर्बलमत आह *अर्थत इति । पुरुषप्रवर्तनैव लिङर्थः, पुरुषश्च स्वाभिलषिते प्रवर्तते इति अर्थात्स्वर्गस्य भाव्यत्वमिति भावः । *तथाऽपीति । यागस्य करणत्वाद् दुःखत्वाच्च न भाव्यत्वमित्यर्थः । कथं तर्हि "दध्ना जुहोति" इत्यादौ दध्ना होमं भावयेदित्येव धात्वर्थस्य साध्यत्वमिति चेत्सत्यम् । तत्र होमस्य "अग्निहोत्रं जुहुयाद्" इति वाक्येन प्राप्तत्वाद्दधिरूपगुणमात्रं विधीयते । "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यत्र तु अग्निहोत्रहोमेन स्वर्गं भावयेदित्यर्थो भवत्येव । "सोमेन यजेत" इत्यत्र तु सोमयागयोरुभयोरप्राप्तत्वादुभयोरपि विधानं 'सोमवता यागेनेष्टं भावयेद्' इति । पृथग्विधाने तु वाक्यभेदप्रसङ्गः । नाऽपि सोमेन यागम्, यागेनेष्टं भावयेदिति वैयधिकरण्येन संबन्धः । साधनत्वेनोपस्थितस्य यागस्य साध्यत्वेनान्वयासम्भवात् । तस्मान्मत्वर्थलक्षणया सोमवता यागेनेत्यर्थः । स्यादेतत् । "दध्ना जुहोति" इतिवत् "सोमेन यजेत" इत्यत्रापि गुणविधिरेवास्तु किं मत्वर्थलक्षणया ? । नच यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानं सम्भवतीति वाच्यम् । "ज्योतिष्टोमेन स्वर्गकामो यजेत" इतिवाक्येन यागस्य प्राप्तत्वादिति चेत्सत्यम् । ज्योतिष्टोमेनेत्यस्याधिकारविधित्वेनोत्पत्तिविधित्वाभावात् । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः फलविशेषसंबन्धबोधकत्वं चाधिकारविधित्वम् । *अतएवेति । धात्वर्थस्य करणत्वादेव । *किमिति शब्देनेति । 'किं भावयेद्' इत्याकारिका भाव्याकाङ्क्षा दर्शितेत्यर्थः । *तथाकाङ्क्षेति । कर्माकाङ्क्षा । *तेनरूपेणेति । उत्पत्त्यनुकूलव्यापारत्वरूपेण । *ततोपीति । यजेतेत्यतोऽपि ।

*धर्मं जैमिनिरिति । जैमिनिराचार्यः धर्मं फलदातारं मन्यते इति तत्सूत्रार्थः । *अपूर्वाजननादिति । यागेनेत्यादिः । यथा कुठारेणाप्युत्क्रमननिपतनादीतिकर्तव्यतारहितेन विना द्वैधीभावो न जन्यते । *विशिष्टस्येति । देवतोद्देश्यकत्यागविशिष्टव्यापारस्य यज्यर्थत्वादित्यर्थः । *विधिप्रत्ययेति । विशिष्टे विधेयत्वप्रतीतावपि विशेषणांशे फलतीत्यर्थः । *फले–यागे । *तत्त्वेति । विधेयत्वेत्यर्थः । *लोहितोष्णीषाइति । अत्र ऋत्विक्प्रचारणस्यान्यतः प्राप्तत्वाल्लोहितोष्णीषत्वमात्रं विधीयते यथा "दध्ना जुहोति" इत्यत्र होमस्य प्राप्तत्वाद्दधिविधानं तद्वत् ॥ ३७ ॥

( क० टी० ) बोधप्रक्रियामाह *तत्रेति । विधिघटितवाक्ये इत्यर्थ. । *त्र्यंशेति । तदुक्तम्—

लिङो ऽभिधा सैव च शब्दभावना भाव्या च तस्या पुरुषप्रवृत्तिः ।
सम्बन्धबोधः करण तदीय प्ररोचना चाङ्गतयोपयुज्यते ॥ इति ।

*तत्र–उक्तांशानां मध्ये । प्रेरणात्वेन सविषयत्वस्य प्रागुक्तत्वादाह *तस्या इति । शाब्दभावनाया इत्यर्थ । *इयमेव–विषयाकाङ्क्षैव । ननु विषयत्वमतिप्रसक्तमिति कथमिदमत आह *साध्यत्वेति । *तस्या'–आर्थभावनाया । एवमग्रे ऽपि । *एवम्–उक्त प्रकारेण । ननु तस्य न तत्साधनत्वमत आह *करणत्व चेति । लोकसिद्धमपीदमित्याह *कुठारादेरपीति । नन्वेव शाब्दभावनाया न करणाकाङ्क्षा ऽत आह *भावनेति । *तत्र–यागादौ । अप्रवृत्तावन्वय. । *पूर्वोक्तेति । तत्तत्फलजनकत्वरूपेत्यर्थ' । आर्थभावनाया' शब्दोपस्थितत्वेन भाव्यतयाऽन्वयसम्भवादाह *शब्दानुपेति । आदिनेतिकर्तव्यता । *आकाङ्क्षयेति । आकाङ्क्षाया इति पाठे हेतुपञ्चमी । तेषामुपयोगस्य तथोक्तत्वादाह *प्राशस्त्यश्चेति । तद्बोध्य तदेव प्रवृत्त्युपयोगीति भाव' । भूषणादिमत खण्डयति *यत्त्विति । तस्योत्तेजकत्वादाह *रागोत्कस्थेनेति । इतिकर्त्तव्यतासम्बन्ध उभयाकाङ्क्षया । तत्रार्थवादकृ

नस्तु उपकार उक्त एवेत्याह *प्राशस्त्येति । *तत्र–तयोर्मध्ये । *एवम्–शाब्दभावनावत् । उदाहरति *यथायजेतेति । तत्र तामुपपादयति *अत्रेत्यादिना । त्रितयान्यतमाभावे न तत्त्वमिति सूचयन्नाह *अत्रेति । चतुर्थ्यन्तानुल्लेखात्प्रत्यासत्तेश्चाह *स्वर्गेति । तस्य च तत्र तर्थेनान्वयस्तत्र तस्या इत्यादि प्रागुक्तरीत्या वाच्य । तत्र समानपदोपात्तत्वप्रत्यासत्त्या शङ्कते *यद्यपीति । हेत्वन्तरमाह *असुखेति । उक्तयुक्तेराह *स्वर्गस्यैवेति । आद्ये मानमाह *अत एवेति । करणत्वेनोपस्थितेरेवेत्यर्थः । ननु तावताऽपि कथ तृतीया तत्र, अत आह *करणेति । *अभेदेनेति । इतरससर्गानवच्छिन्नविशेषणविशेष्यभावेनेत्यर्थ । *ततो ऽपि–यजेतेत्यादितोऽपि । तथाऽनिष्टत्वादाह *आपत्तेरिति । *अत एव–तथाऽऽकारौचित्यादेव । ततस्तस्य साध्यत्वे ऽवगते केनेत्याकाङ्क्षा समानाभिधानश्रुत्योपस्थितयागेन निवर्त्तते इत्याह *करणात्विति । प्रत्यासत्ति तदाकाङ्क्षा चाह *स निधीति । *जातेति । कलापेत्यर्थ । विधेरपि तदाकाङ्क्षामाह *तैरिति । स्वर्गसाधकपरमापूर्वेत्यर्थ । समस्तापूर्वाणामेव तज्जनकत्वाद्, अन्यथा तदानर्थक्यापत्तेरिति भावः । सकर्मकधातुस्थले आह *पचनीति । *बाह्येति । धात्वर्थभूतविक्लित्त्याद्यन्येत्यर्थः । *विशिष्टस्य—यागविशिष्टभावनारूपस्य । *तदर्थेति । धात्वर्थभूतस्वर्गफलकभावनेत्यर्थ । तथाऽन्वये भेदेनोपस्थितेस्तन्त्रत्वादिति भाव । युक्त्यन्तरमाह *तदिति । *फलेत्यागरूपे । *तत्त्वेति । विधेयत्वेत्यर्थ । ननु दृष्टान्ते कथ तथा पर्यवसानमत आह *उपेति । *इद च–उक्तरीत्या पर्यवसानम् । *तदुपात्तेति । लिङ्गुपात्तेति पश्चादुक्तरीत्या तथेति भाव. । वस्तुतस्तथाऽन्वये भिन्नपदोपस्थितेस्तन्त्रत्वाभावस्य वक्ष्यमाणत्वेन शब्दतोऽपि आदावेव तथाऽन्वय सुवचनशङ्केवेति तथाऽङ्गीकारो वृथैवेति बोध्यम् । तदाह *इतिदिगिति ॥ ३७ ॥

औपनिषदास्तु त्यागानुकूलो व्यापार एव यजेरर्थः पच्यादेरिव । तत्र याग एव भाव्यः, स्वर्गस्तु पु-

रुषव्यापाररूपभावनाव्यवहितोत्तरवर्तित्वाभावान्न तद्भाव्यः, यागद्वारा तु स साध्यः । तथाहि विधिरप्रवृत्तप्रवर्तकत्वे सति प्रेर्यमाणेष्टप्रयोजनसाधनाविषयोपदेशरूपः। तस्य धर्मस्य ज्ञापक उपदेशो विधिरित्यर्थकात् "तस्य ज्ञानमुपदेशः" इति जैमिनिसूत्रात् । तत्र ज्योतिष्टोमादिवाक्ये प्रेर्यस्वर्गकामस्येष्टप्रयोजनसाधनतया यागावगतिर्विधिस्वभावात् । यागस्तु कर्मणां दुःखत्वेन चेतनसमीहाविषयत्वाभावान्नोक्तस्वरूपविधिबोध्यभावनोद्देश्यः किन्तु स्वर्गादय एव, तेषां नामपदोपात्तत्वेऽपि कामपदात्साध्यत्वप्रतीतेः । प्रवृत्त्यव्यवहितप्राग्वर्तीच्छाविषयत्वेनोपस्थितेश्च प्रीत्यात्मकत्वेन समीहितत्वाच्च । एवं च स्वर्गायेत्यध्याहृत्यं स्वर्गाय यागं भावयेत् स्वर्गकाम इति बोधः । यागे भावनाभाव्यत्वरूपसाध्यत्वस्य स्वर्गसाधनत्वेन विरोधाभावात् । अनेकविशेषणविशिष्टक्रियाविधिमत्त्वेनोभयोर्भाव्यत्वे ऽपि न वाक्यभेदः । अत्र करणाकाङ्क्षा बाह्यैर्व्रीह्यादिभिर्निवर्तते ।

यत्तु धात्वर्थस्य त्यागरूपस्य भावनां प्रति करणत्वमुक्तम् । तन्न । कारकाधिकारे "साधकतमं करणम्" इति सूत्रस्य क्रियाजनकेषु क्रियायाः प्रकृष्टं जनकं करणसंज्ञकमित्यर्थो भाष्यादिसम्मतः । अत एव वृत्तिकृदादिभिः क्रियासिद्धौ प्रकृष्टोपकारकं करणमित्युक्तम् ।

हरिरप्याह—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति—

अत एव करणस्य व्यापारः "कारके" इति सूत्रे भाष्ये दर्शितः । तद्व्यापारस्य धात्वर्थत्वे करणस्य कर्तृत्वं च तद्भाष्ये उक्तम् । त्यागश्च न भावनाजनको नापि व्यापारवानिति तस्य करणताया दुरुपपादत्वम् । भावनाभाव्यनिर्वर्तकत्वं करणत्वमित्यर्थस्य सूत्रभाष्यादितोऽलाभात् । व्यत्ययानुशासनमपि उक्तेष्वर्थेष्वेव व्यत्ययबोधकम्, नतु यस्मिन्कस्मिंश्चिदर्थे तद्बोधकमिति स्पष्टमेव ।

किञ्च "स ब्रह्महत्यान्तरति योऽश्वमेधेन यजते" इत्यादौ यच्छब्दयोगादनुवादके वाक्ये तृतीयानापत्तिः । नहि तत्र यजते इत्यस्य यागेन भावयतीत्यर्थः, भाव्यानुपस्थित्या साकाङ्क्षत्वात् । "स ब्रह्महत्याम्" इतिवाक्यान्तरेण हि ब्रह्महत्यातरणरूपभाव्योपस्थितिः । तस्यानुवादकवाक्ये भाव्यत्वेनान्वयस्तु न युक्तः । तच्छब्दयोगेन तस्य विधेयसमर्पकत्वात् ॥

किञ्च तस्यैवान्वये 'यो घटमुत्पादयति स घटं लभते' इतिवाक्यवदस्य वैदिकवाक्यस्य विसंष्ठुलतापत्तिः । किन्तु वाक्यद्वयजबोधोत्तरमेतत्कामोऽश्वमेधेन यजेतेति विधिः कल्प्यते इत्येव वृद्धमर्यादा ।

यदपि वाजपेयादिपदानि सुराग्र्यादिगुणविधायकानीति पक्षे एककरणावरुद्धे नेतरकरणान्वय इति तदन्वयानुपपत्तिरिति, तदपि न । अस्यार्थस्य श्रुतिस्मृतिबोधितत्वाभावात् ।

किञ्चैवं फलरूपकर्मावरुद्धायां भावनायां बाह्यकर्मान्तरयोगानापत्तिः, तव सर्वकारकाणां भावना-

न्वयनियमात् । तत्र फलद्वारैव भावनान्वये त्वत्रापि त्यागद्वारैव भावनान्वये बाधकाभावः । त्यागेऽपि सु-राद्रव्यस्य जनकत्वात् । अवदानग्रहणमेव च तद्व्यापारः ।

किञ्च वाजपेयेनेत्यादेर्विशिष्टेनेत्यध्याहारेण वाक्यैकदेशन्यायेन वा यज्यर्थयागेन गुणविधावपि संबन्ध उपपद्यते । न च लक्षणा, नापि वाक्यभेदः, विशिष्टविधेरिति विभाव्यताम् । तस्माद्वक्तृपरंपरोपदेशेन क्वचिद् "यो ऽश्वमेधेन यजते" "सप्तदशदीक्षो वाजपेयः" इत्याद्यनुवादेन च ज्योतिष्टोमेनेत्यादेः पदपरस्य स्वज्ञानद्वारा करणत्वेनान्वयो भावनायाम् । तस्यापि संकल्पद्वारा यागभावनाकरणत्वात् । पदस्य करणत्वं चोपस्थितयागविशेषणत्वेनैव संकल्पादिद्वारेति यागनामधेयत्वमपि सिद्धम् । स्पष्टं चेदं "धर्मं जैमिनिः" इत्यधिकरणे भाष्यभामत्योरित्याहुः ॥ ३८ ॥

(कुं० टी०) *यागानुकूलइति । द्रव्यत्यागस्य यागत्वाद्यागानुकूलव्यापार इत्यर्थः । अत एव समानपदोपात्तत्वाद्यागो भाव्यः । *प्रेर्यमाणेति । प्रेर्यमाणस्य इष्टं प्रयोजनं स्वर्गस्तस्य साधनं यागः । *तस्य ज्ञानमिति । अपौरुषेये वेदे आज्ञारूपविधेरसंभवात्तज्ज्ञानमेवोपदेश इति सूत्रार्थः । ननु स्वपदोपात्तत्वात् साक्षाद्भावनाभाव्यत्वाच्च यागे एव विधिबोध्यभावनोद्देश्यत्वमस्तु इत्यत आह *यागास्त्विति । *इतिबोधइति । स्वर्गसाध्यिका स्वर्गसाधनयागानुकूला भावना तद्विषया प्रेरणेत्यर्थः । ननु साध्यस्य यागस्य सिद्धत्वाभावात्कथं स्वर्गफलं प्रति साधनत्वं सिद्धत्वसाध्यत्वयोर्विरोधादत आह *यागेइति । विध्यु-

धात्वभावनाभाव्यत्वरूपसाध्यत्वस्य स्वर्गसाधनेऽप्यनेन विरोधाभावात्। ननु यागस्वर्गयोरुभयोर्विधेयत्वे वाक्यभेदापत्तिरत आह *अनेकविशेषणेति। स्वर्गोद्देश्यकयागकर्मकभावनेत्यर्थः। ननु यजेतेत्यत्र यागभावनयोःकरणत्वं कर्मत्व चोभयं बोधयितुमशक्यमिति चेन्न। सम्बन्धमात्रमेव ह्यत्र श्रुतं तत्र भावनां प्रति यागस्य साध्यत्वं फलं प्रति च साधनत्वमित्युभयोरपि संभवात् । करणाकाङ्क्षया यागः सम्बध्यत इत्येतन्निराकरोति *अत्रेति । करणत्वं व्यापारनियतमिति दर्शयितुमाह *कारकाधिकारे इत्यादिना । *एककरणावरुद्धे इति । यागरूपकरणावरुद्धायां स्वर्गभावनायां वाजपेयस्य करणत्वासंभवाद् गुणविधिरयम् । "दध्नेन्द्रियकामस्य जुहुयाद्"इत्यत्र दध्यादिवदित्यर्थः । *अस्यार्थस्येति । एककरणावरुद्धे अन्यस्य करणतया नान्वय इत्येतस्येत्यर्थः। *सर्वकारणमिति । फलं कर्मकारकं यागस्तत्करणम् । नच क्रियायोगमन्तरेण कारकाणां परस्परमन्वयः सम्भवति । तस्माद्भावनायामुभयोरन्वय इति भावः। *अत एवेति । "स्रुवेणावद्यति""द्विरवत्तं गृह्णाति"इति वचनात्। *विशिष्टेनेति। वाजपेयविशिष्टेन यागेनेत्यर्थात् ॥३८॥

(क० टी०) भाष्यसमतवाचस्पतिमिश्रोक्तमत प्रागुक्त मीमांसकरीत्येति सूचयितु सिद्धान्तत्वेनाह *औपनिषदाइति। तत्त्वज्ञा इत्यर्थ.। अत एव तु.। एवेन स्वर्गानुकूलव्यापारव्यवच्छेद । अत्र वैरूप्य नेत्याह *पच्यादेरिति । भाव्याकाङ्क्षायामाह *तत्रेति। व्यापारे इत्यर्थः। समानपदोपात्तत्वात् । एवेन भिन्नपदोपात्तपुरुषविशेषणस्वर्गव्यवच्छेदः । तस्य तद्भाव्यत्वे युक्त्यन्तरमाह *स्वर्गस्त्विति। तुश्चार्थे। सच किञ्चेत्यर्थे आदौ योज्य । *न तद्भाव्यः-साक्षाद्भावनाभाव्यो न। अत एवाह *यागेति । ननु विनिगमनाविरहोऽत आह *तथाहीति। प्रेरणाविषयपुरुषसम्बन्धी ह्य-

फलसाधनेत्याद्यर्थः । उपदेशस्वरूपं प्रागुक्तम् । ज्ञानशब्दे करणे ल्युडित्याह *ज्ञापकइति । *तत्र–तस्य तद्रूपत्वे सति । *इष्टेति । बहुव्रीहिः । सतिसप्तम्या सूचितमाह *विधीति । ननु यागस्यैव भावनाभाव्यत्वात्स्वपदोपात्तत्वाच्च भावनोद्देश्यत्वमुचितं न स्वर्गादेरत आह *स्वर्गस्त्विति । स्वर्गश्चेत्यर्थः । ननु तेषां लिङ्बोधकनामपदोपात्तत्वात्कथं तत्त्वमत आह *कामेति । नन्वेवमप्युक्तदोष एवात आह *प्रवृत्त्येति । उक्तव्यतिरेकमाह *प्रीत्येति । *एवं च–स्वर्गस्यैव तदुद्देश्यत्वे च । परमतेनाह *स्वर्गायेतीति । स्वर्गोद्देश्यिका स्वर्गसाधनयागानुकूला या भावना तद्विषया प्रेरणेति यावत् । नन्वेवमेकत्र यागे साध्यत्वं साधनत्वं च विरुद्धमिति मीमांसकाद्युक्तमेवात आह *यागेइति । *स्वर्गेति । विधिपदार्थस्वरूपनिरूपणलब्धेनेत्यर्थः । नन्वेवमपि एकत्र भावनायां यागस्वर्गयोर्विधेर्वाक्यभेदापत्तिरत आह *अनेकेति । *क्रिया–भावना । नियमतः स्वर्गादेरुद्देश्यत्वसत्त्वात्स्वर्गसाधने यागादौ स्वर्गकामादेरधिकारः सिद्ध इति बोध्यम् । नन्वेवं केनेति करणाकाङ्क्षानिवृत्तिर्न स्यादत आह *अत्रेति । मीमांसकादिमतं प्रागुक्तं खण्डयति *यत्त्वित्यादिना निषेधत्वादित्यन्तेन । हेतुमाह *कारकेत्यादिना । *सूत्रस्य–कारकपठितस्य । *क्रियाजनकेषु–तेषां मध्ये । *क्रियायाः–फलस्य । *अत एव–करणस्य सव्यापारत्वात्तदनन्तरं फलनिष्पत्तेरेव । अस्योभयत्रान्वयः । *व्यापारः–उद्यमनानपतनादिरूपः । चो व्युत्क्रमे उक्तश्च । नन्वेतावता किमत आह *त्यागश्चेति । चस्त्वर्थे । स्वर्गजनकत्वे आह *नभावनेति । कारकाधिकारपाठात्तत्त्वावश्यकत्वमिति भावः । भावनाजनकत्वे आह *नापीति । ननु प्राक्करणत्वमन्यादृशमेवोक्तमत आह *भावनेति । ननु व्यत्ययानुशासनलब्धः सोऽर्थोऽत आह *व्यत्ययेति । अभ्युपेत्य दोषान्तरमाह *किञ्चेति । यद्यपि "तरति ब्रह्महत्यां यो ऽश्वमेधेन" इति तैत्तिरीयश्रुतौ पठितम्, तथापि य इत्यस्य साकाङ्क्षत्वादाह *सत्रेति । ननु तस्यानुवादत्वेन भावयेदित्यर्थाभावे ऽपि लडन्तार्थसम्भवेनोक्तरीत्यैव तृतीया ऽत आह *नहीति । ननु तद्वाक्यस्वाक्यानुपस्थितावपि वाक्यान्तरोपस्थित्या तस्य तत्त्वमत आह *स ब्रह्मेति । *वाक्ये–तदर्थभावनायाम् । *योगेन—आर्थिकेन । ननु तथाऽप्युभयाकाङ्क्षा-

यामन्यथाऽनुपपत्त्या तथाऽङ्गीकारो ऽत आह *किञ्चेति । अनुत्पादकस्याऽपि घटलाभवत्तत्करणलाभसत्त्वाद्विसष्ठुलत्वम् । एव परमते ऽनिर्वाहमुक्त्वा सिद्धान्तमुक्तरीत्या तत्राह *किन्त्विति । रात्रिसत्रादिवदिति भावः । *द्रव्यजेति । अश्वमेधप्रकरणिका यत्कर्तृका यागानुकूला भावना तत्कर्तृक ब्रह्महत्याकर्मकन्तरणमित्येवमित्यर्थः । प्रसङ्गादन्यदपि मीमांसकोक्त खण्डयति *यदपीति । वाजशब्दस्यान्नपरत्वेऽपि पेयपदसमभिव्याहारादाह *सुरेति । तस्या अन्नविकारविशेषत्वात् । तत्र कर्मधारय इति भाव. । *पक्षे–पूर्वपक्षे । *एकेति । समानपदोपात्तयागरूपेत्यर्थः । *इतरेति । भिन्नपदोपात्तसुरादीत्यर्थः । *तदिति । वाजपेयेनेत्यादीत्यर्थः । ननु न तस्य स्वार्थे तात्पर्य किं तु तस्य करणाकाङ्क्षायामुक्त प्रत्यासत्त्या तस्यैवान्वयेन तन्निवृत्तौ न तदन्वय इत्याशयो ऽतो लौकिकवाक्ये दोषमाह *किञ्चैवमिति । तत्र तदनन्वये इत्यर्थः । इष्टापत्तावाह *तवेति । *तवापीति । एव च तदुपादानमुभयत्रानर्थकमेव स्यादिति भाव । फलस्यापि प्रागुक्तरीत्या क्रियात्वेनाह *यागेऽपीति । ननु तत्र को व्यापारो ऽत आह *अन्नदानेति । उक्त दोषमभ्युपेत्यापि अन्यथा तत्र पक्षे तदन्वयसम्भवात्तदनुपपत्तिरूपदोषो ऽयुक्त एवेत्याह *किञ्चेति । परमतेनाह *विशिष्टेनेति । सिद्धान्तेनाह *वाक्यैकेति । भावनया ऽसम्बन्धेऽप्याह *यज्यर्थेति । तत्पक्षेऽपि तेन स वाजपेयेनेत्यादेः सम्बन्ध इत्यर्थः । विशिष्टविधिपक्षे तदुक्तदोषमुद्धरति *नचेति । लक्षणाभावश्चेत्यर्थः । प्रागुक्तरीत्या दोषान्तरमपि नात एवेत्याह *नापीति । ननु एव सिद्धान्ते तत्र कथ तृतीयाऽत आह *तस्मादिति । कचिदित्यस्य मध्यमणिन्यायेनान्वय । नच वाजपेयपदेन सुराद्रव्यस्यैव विधानापत्ति, प्रकरणे द्रव्यान्तरविधिवैयर्थ्यात् । तत्सामर्थ्याद्विकल्पकल्पनापेक्षया पदपरत्वकल्पनाया एवौचित्यात् । सुराद्रव्यस्यापि मानान्तरेण लाभाच्च । अत एव सोमेनेत्यादौ न पदपरता । तत्र द्रव्यस्य मानान्तरेणालाभात् । तदेतदभिप्रेत्याह *ज्योतीति । साक्षादसम्भवादाह *स्वज्ञानेति । ननु पदस्य तद्द्वारा ऽपि न यागभावनाकरणत्वमत आह *तस्यापीति । अपिर्व्रीह्यादिसमुच्चये । 'ज्योतिष्टोमेन यक्ष्ये' इत्यादिसङ्कल्पेत्यर्थः । नन्वेवमधिकरणसिद्धान्ता-

सिद्धिरत आह *पदस्येति । द्वितीयाभावादाह *सङ्कल्पेति । आदिना को याग इत्युत्तरपरिग्रहः । शब्दार्थयोस्तादात्म्यादाह *यागेति । *धर्ममिति । तृतीयद्वितीये "धर्मं जैमिनिरत एव" इतिपूर्वपक्षसूत्रम् । "स्वर्गकामो यजेत" इत्यादिश्रुतेराशुनश्वरात्फलायोगेनावश्यकल्प्यापूर्वमेव यागोऽन्तरावस्थारूपम् फलदातृ । फलदातृत्वे वैषम्यनैर्घृण्यापत्तेः । यत एव श्रुत्युपपत्तिभ्यामीश्वरस्य फलदातृत्वं सिद्धान्तिसमनमत एव श्रुत्युपपत्तिभ्या धर्मं फलदातार जैमिनिराहेत्यर्थः । *भाष्येति । तत्रहि "स्वर्गकामो यजेत" इत्येवमादिषु वाक्येषु विधिश्रुतेर्विषयभावोपगमाद्याग स्वर्गस्योत्पादकोऽन्यथा ह्यननुष्ठातृको याग आपद्येत उपदेशवैयर्थ्यं स्यादित्युक्तम्भामत्यामिति ॥ ३८ ॥

"न हिंस्यात्सर्वा भूतानि" इति निषेधाद्यागीयपश्वालम्भे पापं भवत्येव। नचाग्नीषोमीयं पशुमालभेतेत्यादिर्यागीयहिंसाविधिर्निषेधस्य विहितेतरहिंसापरत्वं बोधयतीति वाच्यम्। विधिना प्रकरणेन च तस्या आप्तप्रेरणाविषयत्वेनेष्टहेतुत्वक्रत्वर्थत्वबोधनेऽपि उक्तरीत्याऽनिष्टाहेतुत्वबोधने मानाभावेन निषेधस्य हिंसायां पुरुषानिष्टहेतुत्वबोधकत्वेन विरोधाभावात्। परकीयसुन्दरीगमनादौ समावेशदर्शनात्।

किञ्चालम्भनमत्र स्पर्शः। अग्निहोत्रप्रकरणपठिते "वत्समालभेत" इतिवाक्ये तदर्थकत्वनिर्णयात्। हिंसात्वङ्गयागविशसनप्रकारोपदेशाभ्यामाक्षेपलभ्या। एवं चाक्षेपलभ्यार्थेन विरोधेऽपि वेदस्याप्रामाण्यप्रसक्त्यभावेन तत्सङ्कोचे न मानम्। अन्यतराप्रामाण्यभ्रान्त्या हि सङ्कोचः। पापसत्त्वेऽपि तद्दोषसहिष्णोरेव श्येनादाविव रागवशीकृतस्य ज्योतिष्टोमादावपि प्र-

वृत्तिरुपपद्यते । एतेन तक्रकौण्डिन्यन्यायेन अविरोधेऽपि निषेधस्य विहितेतरहिंसापरत्वं विशेषविधिना बोध्यते इत्यपास्तम्, हिंसाविधेरभावात् ।

नच निषेधस्य पुरुषार्थत्वेन 'यदर्थो निषेधस्तदर्थमेव निषेध्यम्' इति नियमेन पुरुषार्थहिंसाया एव स निषेध इति वाच्यम् । पुरुषार्थस्याप्युपगमादिनिषेधस्य क्रत्वर्थत्वदर्शनेन त्वदुक्तनियमस्य व्यभिचरितत्वात् । क्रत्वर्थहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थत्वाच्च ।

नच—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ । इति—

मनुवाक्यादिभिः पापाभावप्रतिपादकैर्निन्दाप्रायश्चित्तोपदेशाद्यसमभिव्याहृतविधिवाक्यबोध्यप्रवर्तनायाः स्वविषयप्रवृत्तिविषये धात्वर्थे सामान्यतोऽनर्थहेतुत्वप्रतिक्षेपकत्वकल्पनेन सामान्यनिषेधस्य तदतिरिक्तपरत्वम् । आक्षेपलभ्याया अपि विधितात्पर्यविषयत्वेन तत्राप्यनर्थहेतुताप्रतिक्षेपात् । अतएवान्यत्र "हिंसा चैवाविधानतः" इति अविधानेन हिंसैव पापजनिकोक्ता । श्रुतिरपि "अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः" इत्याह । तीर्थं यज्ञः । तीर्थं शास्त्राध्वरेति कोशात् । अतएव मरणान्तप्रायश्चित्ताहवाभिमुखहननोचितदण्डरूपचोरहननादीनां न पापजन-

कत्वम्। शुद्ध्यर्थं मरणे तस्यायुक्तत्वात्। 'न दोषो हिंसायामाहवे–'इत्युक्तेश्च। चोराद्यवधे राज्ञो दोषश्रवणाच्च। तस्मादगर्हितहिंसातिरिक्तविषयोऽयं निषेधः। अगर्हिता चानुपदिष्टप्रायश्चित्तिका हिंसा। एवं सर्वनिषेधेषु द्रष्टव्यमिति वाच्यम्। मनुवचने ऽवध इत्यत्र 'अनुदरा कन्या' इत्यादाविवाल्पार्थे नञः सत्त्वात् । अन्यथा 'घटोऽघटः'इतिवदस्याबोधकत्वेनावधपदस्य पापाजनकत्वलक्षणापत्तेः। यज्ञानुपक्रम्य—

अहिंसा परमो धर्मो गीतो वै मनुना पुरा। इति–

ब्रह्मवैवर्त्ते प्रथमखण्डे उक्ततया च मदुक्तस्यैवौचित्यात् । परमत्वं च पापाजनकत्वेनास्य-अल्पीयःप्रायश्चित्तेन परिहर्तुं शक्यत्वात्, न तत्र द्वेषः। किंच महतः फलस्य कामनया क्षुद्रे न द्वेषः, तत्र पशुहिंसाजन्यस्य पातकस्याल्पप्रायश्चित्तोपदेशेन बहुवित्तव्ययायाससाध्ययागजन्यस्वर्गात्प्रथममप्यल्पस्य मनुना यागविषयेऽत्यल्पत्वबोधनात्। एवंच न तद्बलेन विधेः स्वविषयेऽनर्थहेतुनाप्रतिक्षेपकत्वम् ॥ ३९ ॥

( कुं० टी० ) *नहिंस्यादिति। अत्र प्राभाकराः रागतः प्राप्ताया एव हिंसाया निषेधः, क्रत्वर्थसंज्ञपने तु न रागतः प्रवृत्तिरस्ति किन्तु विधिबलादिति व्यवस्थापयन्ति। अत्र कौमारिलतार्किकाः–रागं विना प्रवृत्त्यसम्भवान्नेय व्यवस्था युक्ता किन्तु विधिबोधितस्य निषेधायोगात् "पदे जुहोति"इत्यनेनाहवनीयहोमादेः संकोचवत् क्रत्वर्थसंज्ञपनातिरिक्ताविषयो निषेध इति वदन्ति। तान् दूषयति *पापभवत्येवेति। *विधिनेति। क्रतुप्रकरणे विहितत्वादग्नीषोमीयपश्वालम्भस्य क्रतूपकारकत्वमेव,

"न हिंस्याद्"इत्यनेन चाधर्मजनकत्वबोधनेन विरोधाभावात्समावेश एवेत्यर्थः ।

अत्र केचित् क्रत्वर्थमारणं हिंसिधातुवाच्यं न भवति, यथा-हि रोषादिकृते शरीरच्छेदादौ निग्रहो भवति न रागादिकृते तद्वत् । किञ्च "न वा उ एतन् म्रियसे न रिष्यसि न देवां इदि-देषि यथा सत् । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र देवस्त्वा सविता दधातु"इति श्रुत्या पशुस्वर्गार्थितयाऽनुग्राहकत्वमित्याहुः ।

अन्येतु मरणफलोपहितक्रियाकरणत्वं हिंसिधातोः प्रवृत्तिनिमित्तम् । मरणकारणत्वमात्रस्य योग्यतारूपस्य ग्रहणे लक्ष्योद्देश्यकखड्गादिप्रक्षेपादन्यस्य वधेऽतिव्याप्तिः । मरणफलकत्वमात्रस्य निवेशे गवादिमरणकतडागादिनिर्माणेऽतिव्याप्तिः । नच क्रत्वर्थहिंसाया अपि हिंसात्वे पश्वनुग्रहत्वानापत्तिः । व्रणशान्त्यर्थच्छेदादेः छिदिधातुवाच्यत्वेऽप्यनुग्रहत्ववत्पशुहिंसायाः हिंसात्वेऽप्यनुग्रहत्वसम्भवादित्याहुः । तन्न । तस्या अपि हिंसात्वे स्वीकृते "न हिंस्याद्"इति निषेधस्य दुर्वारत्वात् । नच रागप्रयुक्तहिंसाया एव निषेधो न विधिबोधिताया अपीति वाच्यम् । विधिना क्रत्वर्थत्वबोधनेऽपि हिंसात्वप्रयुक्तनिषेधस्य दुर्वारत्वात् । *स्पर्श इति । "विशये प्रायदर्शनाद्" इत्यधिकरणे मीमांसकैरालम्भशब्दे स्पर्शार्थकत्वोक्तेः । आलम्भपिञ्जविसरघातोन्माथवधा अपीत्यमरे तु भावित्रधाभिप्रायेण । अत एव ब्रह्मचारिणां निषेध्येषु स्त्रीप्रेक्षणालम्भनेति गौतमेन सूत्रितम् । आलम्भनं स्पर्श इतिच हरदत्तः । अत एव त्रिवृदर्थाधिकरणे "त्रिवृदग्निष्टुदग्निष्टोमः"इत्यत्र त्रैगुण्यवाची उत स्तोत्रीयानवकार्थ इत्युपक्रम्य त्रिवृद्बहिष्पवमानमित्युक्तेः स्तोत्रीयाणां नवकवाचीति संशये स्तोत्रीयानवके तत्र

प्रयोगदर्शनात् "त्रिवृदग्निष्टुदग्निष्टोमः" इत्यत्रापि तदेव ग्राह्यमिति सिद्धान्तितम् । *अङ्गयागेति । "प्राक्शिरसं प्रत्यक्शिरसं वा बर्हिषि उत्तरपादं निधाय प्रागूनाभेस्तृणवानमन्तर्धायतिर्यक् छित्वा वपामुद्धरेद्" इत्यादिविधानात् । वधं विना देवतोद्देश्यकद्रव्यत्यागरूपयागासम्भवाद् । विशसनं वधः । एवंच समानार्थत्वाभावान्न बाधसम्भवः । नचैवमन्यतः सिद्धेरेतत्सिद्धौ हिंसाया यागाङ्गत्वं न लभ्येत पत्नीसंयाजाना जाघनीवदिति वाच्यम् । पशुत्वसाधकैः प्राचीनपशुसंस्कारैर्यागाङ्गत्वनिर्णयात् । *पुरुषार्थत्वेनेति । अयं भावः—"न हिंस्याद्" इति निषेधः पुरुषार्थहिंसायाः शीघ्रोपस्थितिकत्वात् न क्रत्वर्थाया विलम्बोपस्थितिकत्वात् । आख्यातस्यैव कर्तृवाचकतया पुरुषार्थत्वस्यैव न्याय्यत्वात् । भावनार्थकत्वेऽपि तया कर्तुराक्षेपः । नच क्रत्वाक्षेपकं किंचिदस्ति येन "अथातोऽग्निष्टोमेन यजति" इत्यत्राग्नेर्यजिवान्ययागशेषत्ववदिह स्यात् । तत्रापि पर्णताया जुह्वाक्षिप्तक्रतुशेषत्ववत् । नापि "नानृतं वदेद्" इत्यत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्ववदिह स्यादिति । *पुरुषार्थेति । "न स्त्रियमुपेयाद्" इत्याख्यातेन पुरुषार्थत्वं प्रकरणात्क्रत्वर्थत्वम् । *आक्षेपलभ्याया अपीति । अत एव जुह्वा क्रतोराक्षेपेण पर्णतायाः क्रत्वर्थत्वम् । गौतमसूत्रमाह *नदोषइति । *आहवे—यथोचितयुद्धे । हिंसायां न दोष इत्यर्थः । *अल्पार्थेइति । अल्पत्वं चाल्पपापजनकत्वात् । ननु प्रकारान्तरेण नद्यादितरणेन त्वां नावं मन्ये इत्यत्र तस्मिन्नपि तद्भिन्नत्वं प्रत्याय्यत एवेत्यत आह *लक्षणापत्तेरिति । *अहिंसेति । अत एव याज्ञवल्क्येनापि अहिंसा सत्यमस्तेयमितिधर्मसाधनमुक्तम् । गृहेऽपिनिवसन् विप्रो मुनिर्मांसविवर्जनादितिवत्तत्राविहितस्य पृथगेव निषेधाद्विहितस्यापि त्यागार्थमिदम् ॥ ३९ ॥

( कुं० टी० ) निषेधविधिप्रसङ्गादाह *नहिंस्यादिति । एतेन मा हिंस्यादिति पाठः प्रत्युक्तः । पापाभावे सकलतान्त्रिकोक्तयुक्तिं खण्डयति *न चेति । आदिना "सप्तदश प्राजापत्यान्पशूनालभते" इत्यादि । विधिनेत्यस्यात्तेत्यादौ, प्रकरणेन चेत्यस्य क्रत्वर्थत्वे ऽन्वयः । *तस्या –याग्नीयहिंसायाः । *इष्टेति । पुरुषेष्टेत्यर्थः । *उक्तेति । निषेधविषयतया पापभवनेनेत्यर्थः । ननु विरुद्धार्थकत्वेन तदौचित्यमेवात आह *परकीयेति । इदं च तस्य हिंसाविधित्वमभ्युपेत्य । वस्तुतस्तदेव नेत्याह *किंचेति । *स्पर्श –स एव । *अग्नीति । तत्र तस्योत्सर्गसत्त्वात् । "विशये प्रायदर्शनात्" इत्यधिकरणे इदं सिद्धान्तितम् । तथाच त्रिवृदर्थाधिकरणन्यायेन सर्वत्र स्पर्शार्थकत्वं सिध्यति । नन्वेवं कथमत्र हिंसालाभोऽत आह *हिंसात्विति । ननु पत्नीसयाजादियागाङ्गजाघनीवदन्यतः सिद्धाङ्गैरेव तत्सिद्धेर्न प्रयोगान्तः सा लभ्याऽत आह *विशसनेति । नन्वेवं कथं तत्र प्रवृत्तिरत आह *पापेति । बाह्यहिंसाजन्यपापतुल्येत्यादि । सहिष्णुत्वे हेतुगर्भविशेषणमाह *रागेति । भाष्यसिद्धान्तमाह *तक्रेति । एतेनेत्यस्यार्थमाह *हिंसेति । पापाभावे प्राभाकरोक्तयुक्तिं खण्डयति *न चेति । अयं भावः—फलसाधनेऽपि रागत एव प्रवृत्तेर्न विधेः प्रवर्त्तकत्वं साक्षात् किन्तु मदिष्टसाधनताज्ञानलिङ्गकमत्कृतिसाध्यत्वज्ञानद्वारा, तेन श्येनस्य रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्यान्न तस्यानर्थहेतुत्वं विधिनाऽपाक्रियते । अग्नीषोमीयहिंसायां तु अङ्गभूतायां फलसाधनत्वाभावेन विधिरेव प्रवर्त्तकः । सच स्वविषयस्यानर्थहेतुतामुक्तरीत्या प्रतिक्षिपतीति प्रधानभूता हिंसा दोषाय न क्रत्वर्थेति । अनारभ्याधीतत्वादाह *पुरुषेति । एवेन क्रत्वर्थहिंसाव्यवच्छेदः । *स –न हिंस्यादिति । तथा स्मृतौ पाठादाह *पुरुषेति । आदिना मांसभक्षणादि । श्रुतौ तत्प्रकरणपाठादाह *क्रत्वर्थेति । तद्रीत्या प्रकृतेऽपि समावेशमाह *क्रत्वर्थेति । तत्र तदभावे प्रकारान्तरं ग्रन्थानुसार्युक्तं खण्डयति *नचेति । वाच्यमित्यत्रान्वयः । *अस्य–सर्वस्याधिकारिणः । तत्र हेतुमाह *वेदादिति । आदिना निषेधः । ननु नात्र हिंसा शाब्दी किन्त्वार्थीति प्रागुक्तत्वेन शाब्द्यां विधितात्पर्यविषयभूतायां तत्कल्पनेऽपि आर्थ्यामत्र तदतात्पर्यविषयभूतायां कथं तत्कल्पनमत आह *क्षे

पेति । या वेदविहिता हिंसेत्युक्तेरिति भाव । आदिपदार्थमेव विशदयन्नाह *अत एवेति । ततस्तस्य तदन्यपरत्वादेवेत्यर्थः । *अन्यत्र-स्मृत्यन्तरे । स्कान्दे दशपापगणनावसरे । *अत एव-विधाने पापाभावादेव। तत्प्रकारमाह *आहवेति । आहवेऽभिमुखस्य लक्ष्यीभूततया विज्ञाप्य स्थितस्य हनने इत्यर्थः। अन्यदाह *उचितेति। अन्यथाकरणे दोष एवेति सूचितम् । तथा च स्मृति.—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् ब्रह्मनिष्ठश्च रणे चाभिमुखो हत ॥
राजभिर्धृतदण्डश्च कृत्वा पापानि मानवाः ।
निर्मला स्वर्गमायान्ति सन्त. सुकृतिनो यथा ॥
स्तेनः प्रकीर्णकेशो मुशली राजानमियात्कर्म चाचक्षाणः ।
फलतो वधमोक्षाभ्यामघ्नन्नखी राजा ॥ इति ।

अत एवेत्यस्यार्थमाह *शुद्ध्यर्थमिति । ननु हिंसकस्य न विधिरिति तस्य दोष एवात आह *न दोष इति । द्वितीये आह *चोराद्येति । पूर्वपक्षमुपसहरति *तस्मादिति । *अयम्-न हिंस्यादिति । निन्दायाः सर्वत्रासत्त्वादाह *अगर्हितेति । उक्त-न्यायमन्यत्रातिदिशति *एवमिति । सामान्यनिषेधेष्वित्यर्थ' । सांख्यपातञ्जलाद्यनुरोधेनाह *नन्विति । ननु लक्षणायामिष्टापत्ति-रत आह *यज्ञानिति । एतेन तदन्यहिंसाया अधर्मत्वपर-मिदमित्यपास्तम् । उपक्रमविरोधापत्ते. । चो व्युत्क्रमेऽन्ते योज्य । *अस्य-अहिंसारूपधर्मस्य । पूर्वं बाह्यसमपापत्वे द्वेषोत्पत्त्या रागस्यो-त्तेजकत्वेन प्रवृत्तिरुपपादिता । अत्र पक्षे तु द्वेष एव नेत्याह *अल्पीय इति । बहुतरसुखानुविद्धतया दु खनान्तरीयकभ्रमे इव तदभाव इत्यपि बोध्यम् । पशुहिंसाया अहिंसात्वमिति तु शवरभाष्येऽप्येव बोध्यम् । प्रमादतः प्रायश्चित्तानाचरणेऽप्याह *किन्त्विति । क्षुद्र त्वमेवाह *पश्चादिति । *एवच-मनुवाक्यस्योक्ततात्पर्ये च ॥ ३९ ॥

अत एव गीतायां 'यज्ञानां जपयज्ञोऽस्मि' इत्यादिना जपयज्ञस्याहिंसारूपत्वेन प्राशस्त्यमुक्तम् ।

तथा—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥

इत्युपक्रम्य—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥

इत्यनेन विहिते ऽपि युद्धे पापं वदता ऽताद्दशस्य यज्ञे ऽपि तद् उक्तप्रायमेव ।

नचापशब्दज्ञानजाधर्मस्य कूपखानकन्यायेन सुशब्दज्ञानजधर्मेण नाशः फलान्तरं चेति भाष्ये पस्पशायामुक्तम् । कूपखानकस्तत्खननवेलायां मृदा लिप्तस्ततो जलं लब्ध्वा तं लेपं दूरीकरोति फलान्तरं च लभते । तेन न्यायेन तत्पापनाशः, फलान्तरं चेति न दोष इति वाच्यम् । अपशब्दज्ञानादधर्मस्य वाचनिकत्वेन केवलं वैपरीत्यमात्रेण कल्प्यस्यातिस्वल्पत्वाद् उत्कृष्टेन साधुशब्दज्ञानजधर्मेण नाशे ऽपि 'न हिंस्याद्' इतिवचनबोधितपापस्य तेन धर्मेण वचनं विना नाशायोगात् । उक्तगीतावाक्याच्च । अत एव चन्द्रादेः शताश्वमेधफलस्वर्गभोगसमये ऽनेकशो रावणमहिषासुरादिभ्यो दुःखधारा श्रुतिपुराणादिषूपवर्णिता । यज्ञान्तर्गतहिंसादिजन्यपापफलस्य यज्ञफलभोगान्तरुत्पत्तेरुपपत्तिसिद्धत्वात् । एतेन "अध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो ऽध्वरः" इति निरुक्तम्, 'अहिंस्रः' इति तद्भाष्यमपि व्याख्यातम् । नञोऽल्पार्थत्वात् ।

अत एव 'तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते' इति तद्भाष्ये उपसंहृतम् ।

उक्तं च—

स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः॥ इति।

"अहिंसत्सर्व–" इतिश्रुतिस्त्ववैधहिंसात्यागस्येष्टसाधनत्वं वैध्याश्च तत्त्वमाह नतु वैध्या अनिष्टसाधनत्वाभावम्। हिंसाविधयो ऽपि हिंसायाः स्वर्गसाधनत्वमात्रमाहुर्न त्वनर्थहेतुताप्रतिक्षेपमपि । अल्पायुष्ट्वाद्यनिष्टबोधकस्मृतिविरोधात् । तदुक्तं पातञ्जलभाष्ये "यदि कथं चित्पुण्यपापगता हिंसा भवेत् तदा तत्र सुखप्राप्तावप्यल्पायुर्भवेद्" इति । अत एव क्षत्रियाणामपि युधिष्ठिरादीनां स्वधर्मयुद्धेन जातज्ञातिहिंसायां प्रायश्चित्तश्रवणम् । तथा च भागवते मुचुकुन्दं प्रति कृष्णवाक्यम्—

क्षत्रधर्मस्थितो जन्तून्न्यवधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥ इति ।

आदिना युद्धम् ।

मार्कण्डेयेऽपि—

तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम् ।
त्रयीधर्ममधर्माढ्यं किंपाकफलसन्निभम्॥ इति ।

किम्पाको निम्बः । इन्द्रवारुणीत्यपरे ।

मोक्षधर्मे भारते पितापुत्रसंवादे—

तातैतद्बहुशो ऽभ्यस्तं जन्मजन्मान्तरेष्वपि ।
त्रयीधर्ममधर्माढ्यं न सम्यक् प्रतिभाति मे॥ इति ।

तथा केनचिदुञ्छवृत्तिना मृगरूपिणो धर्मस्य प्र-

लोभनावाक्यैर्वधे कृते उक्तम्—

तस्य तेनानुभावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुत्सन्नं तस्माद्धिंसा न यज्ञिया ॥ इति ।

यज्ञियाऽपि हिंसा न केवलं धर्मायेत्यर्थः । एवं चौषधीयज्ञे एव सात्त्विकब्राह्मणस्याधिकारः ।

नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः ।
स्वं यज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमिहास्थिताः ॥
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ॥ इति—
वनपर्वणि जाजलिसंवादे उक्तेश्च ।
अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैः परैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता ।
सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्धि हिंसन्ति बहिर्वेद्यां पशून्यथा । इति—
हिंसायुक्तयज्ञनिन्दापूर्वकम्—
विष्णुमेवाभिजानन्ति सर्वयागेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ॥ इति—
मोक्षधर्मेषु विचख्युवाक्याच्च ।

सा यथा पापाय तथा वेद्यन्तर्गन्तापीति तदर्थः । नास्तिकैरिति करणे तृतीया । तैः करणभूतैस्तानुद्दिश्येति यावत् । विष्णुमेवेति विष्णुत्वेनैव सर्वदेवता जानन्तीत्यर्थः । अत एव यागेषु ब्राह्मणानां पायसपुष्पैरेव तद्भागकल्पनेत्यर्थः । एतेनेदं स्वातन्त्र्येणापूर्वविष्णुयागविधायकमित्यपास्तम् ।

तैत्तिरीयश्रुतावपि—“परागावर्तते ऽध्वर्युः पशोः

संज्ञप्यमानाद्” इत्युक्तम् । तत्र पापसत्त्वे एव हि ततः परागावर्तनं युक्तं नान्यथा “रिच्यत एव वा एष प्रैव वा रिच्यते यो याजयानि प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वा ऽनश्नन् त्रिः स्वाध्यायमधीयीत” इति ऋत्विजां प्रायश्चित्तोपदेशाच्च । सोऽपि पापसत्त्वे एव युक्तः । एतेनोक्तपुराणानि अपशुचातुर्मास्यस्तावकान्येवेत्यपास्तम् । सर्वकर्मस्वहिंसामिति विचख्युवाक्ये श्रवणाच्च । हिंसामयानां नित्यत्वोक्तिरपि तामसं मांसभक्षणादिरागान्ध वेदमार्गे प्रवर्तयितुं न तु तत्त्वदृष्ट्या ।

अत एव भागवते—

मुन्यन्नैस्तु परा प्रीतिस्तथा न पशुहिंसया ।

इत्युपक्रम्य—

द्रव्ययज्ञैर्यक्ष्यमाणान् दृष्ट्वा भूतानि बिभ्यति ।
एष माऽकरुणो हन्यादतज्ज्ञो ऽसुतृपो भृशम् ॥
तस्माद्यथोपपन्नेन मुन्यन्नेनैव धर्मवित् ।
सन्तुष्टोऽहरहःकुर्यान्नित्यनैमित्तिकीःक्रियाः॥इति।

द्रव्यमत्र पशुः । पशुयज्ञैरिति पाठान्नरम् । तेन मुन्यन्नेन तुष्टस्य तेनैव यज्ञोऽर्थात्तेनासन्तुष्टस्य मांसादिलुब्धस्य तेनेति सूचितम् ।

तेषान्तामसाधिकारिकत्वं कपिलस्यूमरश्मिसंवादे मोक्षधर्मे स्पष्टमेव। लोके व्यवायामिषमद्यसेवेतिश्लोके भागवते ऽपि स्पष्टमेतत् ।तच्चैवकारवादे निरूपितम् ।

स्थलान्तरेऽपि भगवद्वाक्यम् ।

हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना ।

हिंसाविहाराद्यालब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवता यज्ञैरिति ।

हिंसायां तत्फलमांसभक्षणे यदि रागस्तर्हि यज्ञ एवेत्यनुज्ञाद्वारा तादृशरागवतः प्रति परिसंख्येयं न तु सर्वान् प्रत्यावश्यकत्वेनेयश्चोदनेत्यर्थः । नित्यत्वादिकमपि तान् प्रत्येवेत्यर्थकमुक्त्वा,

वेदस्य हृदयं लोके नान्यो मद्वेद कश्चन ।

इत्युक्तम् । मत् मत्तोऽन्यो न वेदेत्यर्थः । अत एव पतञ्जलिना योगसूत्रे एषां शुक्लकृष्णत्वेन व्यवहारः कृतः । गीतायामपि—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचिद् ॥

इत्युक्तम् । कर्मण इति जातावेकवचनम् । कस्यचित्कर्मण इष्टं सुखमेव फलम्, कस्यचिद् अनिष्टं दुःखमेव कस्यचिन्मिश्रम् ।

एतत्सर्वमत्यागिनां कर्मफलात्यागिनां प्रेत्य देहान्तरसंबन्धे भवति न तु सन्न्यासिनां तत्फलत्यागिनाम् । यत्तु अत्यागिनां कर्मफलत्यागे ऽपि कर्मानुष्ठायिनां सत्त्वशुद्धेः प्रागेव मृतानां तत्तत्कर्मफलं कर्मत्रैविध्यात्रिविधशरीरग्रहणरूपं भवति,पापस्यानिष्टं तिर्यगादिदेहरूपम् । पुण्यस्येष्टं देवादिदेहलक्षणम् । मिश्रस्य पापपुण्ययुगलस्येष्टानिष्टयुक्तं मनुष्यदेहलक्षणम्।सन्न्यासिनां मुख्यसंन्यासिनाम् । तेषां ज्ञाननिवृत्त्या देहसम्बन्धाभावाद् इति । तन्न । तिर्यगादिदेहस्याप्युभयारब्धत्वात् । तत्रापि सुखदुःखोभयानुभवात् ।

नहि देहभृता शक्यं त्यक्तु कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

इत्युक्तश्लोकस्थत्यागस्यैवात्र त्यागपदेन ग्रहीतुमौचित्याच्च। उक्तत्यागफलकथनपरत्वात् । पतञ्जल्येकवाक्यतया मदुक्तार्थस्यैवौचित्याच्च। संन्यासिपदेनाप्युक्तश्लोकस्थत्यागिन एव ग्रहणमुचितम् । तस्य गृहीतदेहस्यापि जीवन्मुक्तदशयाऽवस्थानात् कर्मफलप्राप्तिजन्यहर्षविषादाभाव इति तात्पर्यात् ।

यत्तु "ये इष्टापूर्तादिकर्मणा चन्द्रलोकं गतास्तत्र भुक्तभोगाः पुनरवतारसमये व्रीह्यादावन्याधिष्ठिते ऽनुशयिनः संसर्गभाज एव न तु तत्र भोगस्तेषां भोगप्रापककर्माभावात्"इति सिद्धान्तिनोक्ते पशुहिंसादियोगादिष्टस्याशुद्धत्वात्तस्य तत्र भोगप्रापकत्वमस्त्विति पूर्वपक्षे सिद्धान्तप्रबोधकं व्याससूत्रम् "अशुद्धमिति चेन्न शब्दाद्"इति । तस्यायमर्थः-अशुद्धमेवेति चेन्न। धर्मत्वाधर्मत्वयोः शब्दैकगम्यत्वाद्वैधहिंसाया धर्मत्वेनोक्तेर्न सा अधर्म एवेति । अल्पपापत्वादेव वैधहिंसा न पूर्णदोषायेत्येव मीमांसकाशयः। अत एव तस्याल्पपापस्याल्पायुष्ट्वादिकं फलमुक्तम् । स्थावरभावो हि सर्वथा ऽशुद्धस्यैव कर्मणः फलमिति व्यासाशयः ।

किञ्च यत्राल्पं सुखमधिकं दुःखं समे वा ते तत्रापि रागान्धास्तिकस्य परकीयसुन्दरीगमने इव तत्सुखे उत्कटेच्छावशात्प्रवृत्तिरुपपद्यते । दुःखस्याल्पत्वे तु सुतराम् । अत एव मरणरूपानिष्टसाधने

ऽपि सहगमनवेणीप्रवेशादावात्माहुत्यङ्गके सर्वस्वारयज्ञादौ च प्रवृत्त्युपपत्तिः। पुरुषस्य प्रत्यवाये ऽपि यागस्य साङ्गत्वमक्षतमेव।

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।
न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः॥ इत्युक्तेः।

तदुक्तं पञ्चशिखाचार्यैः—'कुशलं ह्येव बह्वन्यदल्पमस्ति स्वर्गेऽप्यल्पममर्षमनुभवति' इति।

किञ्च जैमिनेरेव सर्ववस्तुतत्त्वज्ञत्वाभावो मार्कण्डेयपुराणादवगम्यते सुतरान्तदीयानाम्। तत्र हि व्यासशिष्यो जैमिनिर्भारतविषयेषु केषुचित्पदार्थेषु सन्दिहानो मार्कण्डेयं प्रपच्छ स च न मेऽवसरस्तस्मात्सर्वज्ञान् विन्ध्याचलवासिनश्चतुरः पक्षिणः पृच्छेत्युक्तवान्।

तस्यायमाशयः—व्यासशिष्योऽप्ययमशुद्धचित्ततया व्यासोक्तं न साधु मन्यते सर्वम्, फलदं परमेश्वरं तत्त्वेन न मनुते किन्तु कर्मैव फलदमिति। तथा देवतिर्यगादीनां व्यासोक्तं ज्ञानाधिकारं न मन्यते असम्भवात्। "अनधिकारं जैमिनिः" इति व्यासोक्तेः। अतस्तिरश्चां शिष्यो भूत्वा तेषां ज्ञानाधिकारे ज्ञाते सर्वत्र व्यासोक्ते विश्वस्तो भवेदिति देवासुरसङ्ग्रामादेस्तन्मुखतः श्रवणे तेषामविग्रहत्वाभिमानं च त्यक्ष्यतीति। तस्मात्पातञ्जले भाष्ये व्यासोक्तमेव श्रद्धेयमिति।

अत एव रामायणे वाल्मीकीये वालिवधे कृते तेन भगवतो रामस्याधिक्षेपे कृते भ्रातृजायापहारेण तस्य पापित्वमुक्तं भगवता। अज्ञतिरश्चां तु

कर्मानधिकारः । तथा पराशरस्मृतिव्याख्यायां माधवाचार्यो जैमिनिमतानुसारिणो जहास—

ईशासिद्धिभयाद्वेदशास्त्राप्रामाण्यमीयुषाम् ।
शास्त्रकृज्जैमिनिमुनिः केन मानेन्न सिध्यति ॥ इति।

ईशासिद्धीत्युपलक्षणम् देवताविग्रहादेरपि । इत्थं हि तदीयानामुक्तिः-प्रबलाध्यक्षाविषयं भेदं दुर्बलवेदगीर्मिथ्यात्वान्निःस्वरूपाच्च न निषेद्धुमलं किलेति, इति दिक् ॥ ४० ॥

(कुं०टी०) वेपथुश्च शरीरे मे रोमहर्षश्च जायते । इति—
अर्जुनोक्ते-

उत्तरमाह *स्वधर्ममपि चेति । चकारेणात्मनो नाशाभावः । नच श्रेयो ऽनुपश्यामीत्योत्तरमाह *धर्म्याद्धीति । *अवाचनिकत्वेनेति । 'यावद्वचनं वाचनिकम्'इतिन्यायेनापशब्दप्रयोगस्यैवाधर्महेतुत्वं न तु ज्ञानस्येति भावः । *दुःखधारेति । अत एवाकृते प्रायश्चित्ते परिपच्यत एव तद् दुःखमिति साख्याः । *तत्त्वम्—इष्टसाधनत्वम् । इष्टं च यागादिकमेव । *प्रतिक्षेपम्—निवृत्तिम् । *त्रयीधर्ममिति ।

त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि वर्तमान इति भागवतेऽपि । *यज्ञानिन्देति ।

किञ्च—

त्रैवार्षिकाधिकान्नो यः स हि सोम पिबेद् द्विजः । इति-
धनवत एव यज्ञेऽधिकारः ।

जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः ।
इति स्मृत्या चोञ्छस्यैव मुख्यत्वबोधनान्नास्ति पापसम्भवः।

*अपशिवति । पशुरहितेत्यर्थः । *नचोदनेति । न विधिः, रागत एव प्राप्तत्वादित्यर्थः । एवमृतौ स्त्रीगमनस्यापि परिसंख्यात्वमेव । तत्र चान्यत्र च प्राप्तत्वात् । नियमार्थत्वे तु ऋतौ गच्छेदेवेत्यर्थः स्यात् । न च "द्वादशरात्रं संवत्सरं वा ब्रह्मचर्यम्" इति तदा स्मृतिविरोधः । संवत्सरात्प्राग् ऋतौ तत्र गमनापत्तेः । तस्मादृतावेव गच्छेदिति परिसंख्यैवेति । नियमेन च प्राप्तबाधादिदोषत्रयापत्तेः । फलत्यागस्य फलमाह *अनिष्टमिति । इदं सर्वमत्यागिनां सकामानां प्रेत्य परत्र भवति न तु संन्यासिनां कर्मफलत्यागिनाम् । अत्यागिनामित्यस्य सकामानामित्यर्थमपहाय निष्कामकर्मात्यागिनामित्यर्थमाह*फलत्यागेऽपीति । अत एव संन्यासिनामित्यस्य मुख्यसन्न्यासिनामित्यर्थं वक्ष्यति । फलत्यागो ऽतो गौणसंन्यासिनः ।

ननु कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपाभावेन ज्ञाननिष्ठत्वमत आह *नहिदेहभृतेति । *कर्मफलत्यागीति । तत्त्वज्ञानस्यैव मुक्तिं प्रति सन्निपत्योपकारककर्मत्वेऽपि कर्मणामपि सत्त्वशुद्धिद्वारा उपकारकत्वमस्त्येवेति भावः । *इष्टेति । इष्टं यागम्, आपूर्तं तडागादि । *चन्द्रलोकामिति ।

यज्ञेन तपसा दानैर्ये हि स्वर्गगता नराः ।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ॥
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम् ।
क्रमात्ते संभवन्तीह पुनरेवं व्रजन्ति च ॥ इति स्मृतेः ।

अयं भावः—"अथ परमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते-धूममभिसम्भवन्ति" इति "आकाशाच्चन्द्रमसम्" इतिच श्रुतेर्धूमादिना पितृयानेनाकाशाच्चन्द्रमसं प्राप्य भुक्तभोगा अवरोहन्ति । तथाच श्रुतिः—

"अथैतमेवाध्वानं निवर्तन्ते पथेतमाकाशो भूत्वाऽऽकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवाः ओषधिवनस्पतयः तिलमाषा इति जायन्ते" इति। पथेतमित्यस्य पथाऽऽगतमित्यर्थः। तत्राकाशो भूत्वेत्यस्याकाशादिसदृशो भूत्वेत्यर्थः । आकाशस्वरूपापत्तौ तु वायुर्भूत्वेति रूपान्तरापत्तेरसङ्गतेः । तत्राकाशसादृश्यं सूक्ष्मत्वात् । वायुर्भूत्वेत्यस्य वायुवशो भूत्वेत्यर्थः । धूमादिभिस्तु संपृच्यत इत्यर्थः । *अन्याधिष्ठितेइति । अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रं प्रतिपद्यन्ते न तत्सुःखदुःखभाजो भवन्ति । यथा हि, धूमादिभावस्तत्संश्लेषमात्रं तथा च पारमर्षं सूत्रम्—"अन्याधिष्ठिते पूर्ववदभिलापाद्" इति । पूर्ववत् धूमादिवत् । *अनुशयिनः—कर्मशेषवन्तः । कृतात्यये ऽनुशयवानिति व्याससूत्रात् । कृतस्य कर्मणोऽत्यये सतीति तदर्थः। अत्र केचित् स्वर्गार्थस्य कर्मणो भुक्तफलशेषोऽनुशय इति । तदसत् । स्वर्गार्थस्य कर्मणः स्वर्ग एव फलजनकत्वात् । यदि तु तस्यैव लेशो ऽनुशयः स्यात्तदाऽनुशयविभागश्रुतिर्विरुध्येत । "तद्य इह रमणीयचरणा अभ्यारोहन्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा अथ य इह कपूयचरणा अभ्यारोहन्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा" इति । चरणमाचारः । कपूयः कुत्सितः। तत्र तस्यैव शेषे रमणीय एवैकोऽनुशयः स्यात् । तस्मात्पारलौकिककर्मफले भुक्ते अवशिष्टमैहिकफलं कर्मान्तरमनुशयः। *नतुतत्रभोगइति । तस्मिन्विधौ शरीरानिष्पत्तेरुपभोगासंभवात् । *पशुहिंसादीति । हिंसादियुक्तकर्मणो ऽशुद्धत्वादनुशयिनां मुख्यमेव व्रीह्यादिजन्मास्त्वित्यर्थः । *अशुद्धमेवेति । पशि-

हिंसाया अपि हिंसात्वेन पापजनकत्वाद् दुःखहेतुत्वमिति भावः । *शब्दैकगम्यत्वादिति । न हि हिंसायाः पापहेतुत्वे हिंसात्वं प्रयोजकं किन्तु निषिद्धत्वं तच्चात्र नास्ति "वायव्यं श्वेतम्"इत्यादिशब्दैर्विहितत्वादिति भावः । *इत्येव मीमांसकाशयइति । नतु सर्वथा दोषाभावः । *व्यासाशयइति । अशुद्धमित्यादिसूत्राशयः । *सहगमनेति ।

तिस्रः कोट्यो ऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत् स्वर्गे भर्तारं याऽनुगच्छति ॥ इति–

स्मृतेः ।*कुशलमिति। कुशलं बहु, अन्यदकुशलम् अल्पम्। कुशलाकुशलोभयमिश्रत्वं च स्वर्गेऽप्यमर्पश्रवणादित्यर्थः । अत एवोक्तं भागवते—

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।
भूतहत्या तथैवैकां न यज्ञैर्माष्टुर्महतीति । *किन्तुकर्मैवेति ॥

अयं भावः—यजेतेति पदेन यागस्यैव साध्यत्वं प्रतीयते तस्यैव सम्बन्धो न्याय्यो न सिद्धाया देवतायाः, प्रत्यक्षस्य हविषो देवताभोगः प्रत्यक्षविरुद्धश्चेति । देवतायाः फलदातृत्वप्रवादस्तु मन्त्रिणा ग्रामो दत्त इतिवत् । देवतानामपि तपश्चरणश्रवणेन कर्मण एव फलदातृत्वम् । किंचैकैव देवता दध्नेन्द्रियं ददाति पयसा पशुमित्यत्र सुरभाव एव हेतुरिति । "एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते" इति ईश्वरस्यैव फलदातृत्वाश्रवणात् । *असम्भवादिति । आदित्यादीनामुपास्यत्वश्रवणात् तेषामुपासकत्वासम्भवादित्यर्थः । *अतइति । आदित्योपासनादेरसम्भवेऽपि ब्रह्मविद्यायां देवानामधिकारोऽस्ति । ननु तेषामुपनयनादि नास्तीति चेन्न ।

उपनयनार्थत्वेन तेषां स्वत एव वेदावभासात् । *तेषामिति । कर्मवैजात्येन जातिस्मरत्ववत् ॥ ४० ॥

( क० टी० ) अत एव यागीयहिंसाजन्यपापसत्त्वादेव । अन्यदप्याह *तथेति । *अतादृशस्येति । तत्रासमदृष्टेरित्यर्थः । अन्यथा निषेधोक्तिरसङ्गतैव स्यादिति भाव । अत्रोत्तरोत्तर हेतुता बोध्या । प्रकारान्तरेण तद्रूपेण तन्निरास परोक्त निराचष्टे *न चेति । न्यायस्वरूपमाह *कूपेति । अभ्युपगमे आह *उक्तेति । स्वधर्ममपीत्याद्युक्तविरोधापत्तेश्चेत्यर्थः । *अतएवेति । तत्र स्वल्पपापसत्त्वादेव । ननु सा तत पूर्वमनन्तरमुचितेति तत्र कथमुपवर्णिता ऽत आह *यज्ञान्तरिति । एतेनेत्यस्यार्थमाह *नञइति । भाष्यसम्मतमपीदमेवेत्याह *अतएवेति । अल्पपापसत्त्वादेवेत्यर्थः । अन्यथा स्वत एव तत्त्वेन तथोक्तिरसङ्गतैव स्यादिति भाव । *उक्त चेति । नन्वेवं प्रागुक्तश्रुतिविरोधो ऽत आह *अहिंसन्निति । न दोषो हिंसायामित्यपि नञो ऽल्पार्थपर समदृष्टिपर वा । अभ्युपेत्याप्याह *हिंसेति । स्मृतेः खपुष्पायमाणत्व निराचष्टे *तदुक्तमिति । *पुण्येति । बीजवद्धर्मक्षेपमध्यगतेत्यर्थः । सर्वत्र तदभावाद्यदीत्युक्तम् । कथंचिदित्यनेन तस्याविहितत्वमाक्षेपलभ्यत्व चेति सूचितम् । *अतएवेति । अनर्थहेतुताप्रतिक्षेपकत्वाभावादेव । प्राग्वदाह *तथाचेति । त्रयीधर्मस्य विशेषणद्वयम् । भारतान्तरमाह *तथेति । *उक्तम्—व्यासादिना । *समुत्सन्नम्—अत्यन्त नष्टम् । उपक्रमाद्यविरोधाय तुर्यपाद व्याचष्टे । प्रागुक्तसर्वतात्पर्यमाह *एवं चेति । तत्र पापसत्त्वे चेत्यर्थः । अन्यस्य तत्राधिकारस्योक्तत्वादाह *सात्त्विकेति । मानान्तरमाह *नमइति । *सुकृत हव्यम्— अधर्म-

---

१ एतद्विवरणादहिंसन्निति नान्तः पाठः प्रतीयते मूलत्रितये अहिंसदिति तान्तपाठोपलब्धेः श्रौतत्वाच्चास्य प्रयोगस्य श्रुतिस्थलविशेषस्य चाज्ञातत्वेन यथावत्पाठदर्शनस्याशक्यत्वात् श्रुतेश्चाविपरिवर्तनीयत्वाद्यथादृष्टमेव मूले तान्तमवस्थापितम् ।

जनकत्वानाक्रान्तम् । तदेवाह *नमस्कारेति । मानान्तरमाह *अव्यवस्थितेति । एतेषां कर्तृत्वेऽर्थासङ्गतेराह *नास्तिकैरिति । अन्यान्यस्य विशेषणानि एतद्विवरणपराणि । तथा च तत्तुल्या रागान्धा आस्तिका एव तादृशा विवक्षिता न तु वास्तवनास्तिकास्तेषामहिंसाया एव परमधर्मत्वात् । करणत्वमपि तेषां न वास्तवं किं तूद्देश्यस्य तत्त्वविवक्षेति वैवक्षिकमित्याह *तानिति । बाह्यहिंसापरमेवेदमिति भ्रमनिरासायाह *सायथेति । सादृश्यादेवाल्पत्वसिद्धिरिति न पूर्वविरोध । पूर्वार्द्धं भिन्न वाक्यमित्याह *विष्णुत्वनैवेति । अग्रिममेतत्सिद्धार्थपरमेकमित्याशयेन तत्तात्पर्यमाह *अतएवेति । तत्त्वेन ज्ञानादेवेत्यर्थ. । पूर्वानुषङ्गादिना आह *सर्वेति । *तत्तदिति । यथा चैतत्तथा पाखण्डखण्डनावसरे पिष्टपशुप्रतिपादनावसरे प्रतिपादित तत एव बोध्यम् । *एतेन–उक्तस्यैकवाक्यतालाभेन । अन्यथा श्रुतिद्वयकल्पनापत्त्या गौरवमिति भाव. । तत्र पापसत्त्वे तैत्तिरीयश्रुत्युक्तमेव हेत्वन्तरमाह *रिच्यते इति । *एतेन–उक्तश्रुतिद्वयविरोधेन । *उक्तेति । भागवतादीनीत्यर्थः । प्रागुक्तमेव दोषान्तरमाह*सर्वेति । ननु तत्र पापसत्त्वे कथ तेषां भिन्नत्व सात्त्विकाननुष्ठेयत्वादत आह *हिंसेति । *तत्त्वेति । वस्तुतस्त्वेत्यर्थ. । *उपक्रम्य–उक्तमिति शेष । *भूतानि–प्राणिन. । *अतज्ज्ञ –अतत्त्वज्ञ. । *असुतृपः–प्राणशोषक. । यथाश्रुतासङ्गतेराह *द्रव्यमिति । तत्फलितमाह *तेनचेति । यदन्नादः स्वय तदन्नादस्तस्य देवता इति न्यायेनाह *समुत्पन्नेनेति । तत्र हेतुगर्भविशेषणमाह *मांसादीति । उक्तेऽर्थे मानान्तरमप्याह *तेषामिति । हिंसामयानामित्यर्थ. । *तत्रैव—भागवत एव । यथाश्रुतासङ्गतेराह *तत्फलेति । *विहाराः–क्रीडा' । अन्यदपि तत्रत्यमाह *नित्येति । *तान्–अतामसान् । *इत्यर्थकम्–वाक्यम् । *अतएव–पापसत्त्वादेव । मिश्रत्वे सम्मत्यन्तरमप्याह *गीतायामिति । यथाश्रुतासङ्गतेराह *कर्मेति । सर्वं वाक्यमिति न्यायेनाह *सुखमेवेति । तद्व्याख्याकारोक्त खण्डयति *यत्त्विति । तत्र लिङ्गमाह *तत्रापीति । तत्र दोषान्तरमाह *नहीति । *शक्यमिति । जातावेकवचनम् । *अशेषत.—अशेषाणि । नहि कश्चित्क्षणमपीत्युक्त्या नि.शेषेण क-

मेत्यागस्य दु:शकत्वादिति भाव । *उक्तेति । अव्यवहि- तोक्तेत्यर्थः । एव सत्येकवाक्यतामाह *उक्तेति । युक्त्यन्त- रमाह *पतञ्जलीति । शुक्लकृष्णत्वकथनपरेत्यर्थः । तत ए- वाह *सन्न्यासीति । नन्वेव कर्मफलस्य तेषामपि सत्त्वा- त्कथ तन्निषेधो ऽत आह *तस्येति । त्यागिन इत्यर्थः । वैदिकाहिसाया अपि पापहेतुत्वे दु:ख भवत्विति शङ्कते *अ- शुद्धेति । नहि हिंसाया: पापहेतुत्वे हिसात्व प्रयोजक किन्तु निषिद्धत्व तच्चात्र नास्ति, "वायव्य श्वेतम्"इत्यादिशब्दैर्विहित- त्वादित्याह *शब्देतीति । यद्यपि व्याख्यात भूषणकारादिभिस्तथा- पि नेद व्यासाभिमतमित्यन्यथा तद्विरोधमुक्तार्थे परिहर्तुमाह *यस्विति । "अन्याधिष्ठिते पूर्ववदभिलापाद्"इति । ततः पूर्वसूत्रार्थ- माह *य इत्यादि । छान्दोग्ये स्पष्टमेतत्सर्वम् । *अन्ये-जीवान्तरे- त्यर्थः । अन्वित्यस्य व्याख्या *ससर्गेति । कण्डनादिना ऽधि- ष्ठातुर्नाशस्ततस्तदन्नद्वारा तस्यानुशयिनो रेत सिग्योगस्ततस्त- द्योगाद्योनिसम्बन्धेन पुनः शरीरमिति प्रक्रिया । आदिना सुरा- पानम् । *इष्टस्य-ज्योतिष्टोमादियागकर्मण. । सर्व वाक्यमितिन्या- येनाह *अशुद्धमेवेति । एव च मिश्रत्व सिद्धमिति न त- द्विरोधः । मीमासकविरोधो ऽपि नेत्याह *अल्पेति । *अत एव-अ- ल्पपापसत्त्वादेव । व्यासोक्तमेवोक्तमाह *तस्येति । नन्वेवमपि मिश्रस्य तत्र भोगप्रापकत्व कुतो नात आह *स्थावरेति । वि- शेषं वक्तु प्रागुक्तमेव सविशेषमाह *किञ्चेति । आदिना भृ- गुपतनादि । यत्त्वेव सति साङ्ख्यागानुष्ठानापत्तिरिति तत्खण्डय- ति *पुरुषस्येति । कर्त्रधिकरणस्थभट्टोक्तिमाह *योनामेति । पातञ्जलभाष्ये भगवता व्यासेनोदाहृतमाह *कुशलमिति । स्या- त्स्वल्पः सङ्करः सुपरिहरः कुशलस्य नापकर्षणायाल कस्मादि- त्यादि । अस्यार्थो भूषणे स्पष्टः । जैमिनीयानां पापाभाव- कथनं मूलाज्ञाननिबन्धनमेवेत्याह *किञ्चेति । *तस्य—मार्क- ण्डेयस्य । सामान्योक्तमेव विशिष्याह *सर्वेति । *तत्त्वेन—फ- लदातृत्वेन । अत एवाह *किन्त्विति । "धर्मं जैमिनिरत एव"इति व्यासोक्तेरुक्तत्वात् । विशेषान्तरमाह *तथेति । अत्र हेतुमनुक्त- माह *असम्भवादिति । *च त्यक्ष्यति-त्यक्षति चेत्यर्थः । *इति-

राशयसमाप्तौ । उपसहरति *तस्मादिति । तच्च प्रागुक्तम् । *अतएव—तिरश्चां ज्ञानाधिकारसत्त्वादेव । तस्माज् ज्ञानिनामेव तेषां कर्माधिकार इति सिद्धम् । तत्फलितमाह *अत्रेति । जैमिनीयानामज्ञाने मानान्तरमाह *तथेति । न्यूनतां निराचष्टे *ई-शेति । ननु तदप्रामाण्यप्रतिपादिका का तेषामुक्तिरत आह *इत्थ-हीति । *अध्यक्षम्–प्रत्यक्षम् । दौर्बल्ये हेतुर्मिथ्यात्वादिति । एवं च वेदविहितहिंसा न दुष्टेति सकलतान्त्रिकोक्तं भूषणकृदाद्युक्त चायु-क्तमेवेति बोध्यम् । तदाह *इतिदिगिति ॥ ४० ॥

एवं च—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥ इति ।

एतेनापि सूचितमेतत् । आद्यपादेन तत्रैहिक-रत्यन्तकालदुःखसदृशदुःखसमानदुःखनिरासः । नच-ग्रस्तमित्यनेन तदधिकदुःखनिरासः । अनन्तरमित्य-नेन निद्राकालवद्वैषयिकोभयरहितदिनरूपकालनि-रासः, अन्यथा सकलदुःखाभावस्याद्यपादेनैव प्रति-पादने सिद्धे नचग्रस्तमित्यस्य वैयर्थ्यापत्तेः । अभि-लाषोपनीतत्वेन विषयसम्पादनक्लेशनिरासः । स्वर्गे-पि वैषयिकमेव सुखमिति "अप्सरस एत जायाभूत्वो-पशेरने" इत्यग्निष्टोमादिफलकथनेन "एकः पूर्वपरयोः" इति सूत्रे भाष्ये स्पष्टमुक्तम् । एवं च विजातीयसुख-त्वमेव स्वर्गत्वम् । तस्मान्महिषासुरादिजन्यं दुःख-मस्त्येवेति सूचितम् । यद्वा स्वनान्तरीयकाव-श्यंभाविदुःखान्यदुःखजनकाधर्मानारब्धदेहोपभोग्य-सुखत्वं तत् । सहगमनादौ मरणान्तप्रायश्चित्तादौ चोक्तरीत्या न पापजनकत्वम् ।

अन्ये तु तत्र अल्पं पापं भूयान्धर्मो ज्योतिष्टोमन्यायेनेति वदन्ति इति दिक् ।

श्येनफलीभूतस्य शत्रुवधस्य रागतः प्रवृत्तिविषयस्य विधिविषयत्वाभावेन "न हिंस्याद्"इतिनिषेधविषयत्वं पूर्णमेव । यज्ञान्तःपातिवधस्यैव मनुनाऽल्पवधत्वबोधनात् । अत एव तज्जन्यपापे बलवद्द्वेषवतां शिष्टानामपेक्षितवैरिवधसाधनत्वे ऽपि न तत्र प्रवृत्तिः । श्येनस्तु मरणानुकूलव्यापारो ऽपि न हिंसा मरणोद्देशेन प्रवृत्तस्य श्रौतविधिबोधितस्य तदनुकूलव्यापारस्यैव हिंसात्वात् ।

तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन् द्विजः ।
श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन् ॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमाः ॥

इत्यादिना श्रौतस्य मनुनाऽभ्यनुज्ञानात् । श्रुतीरित्यस्य तद्बोधिताभिचारकर्माणीत्यर्थः । कूपादौ विनष्टे गवि कूपकर्तुर्हिंसकत्ववारणाय मरणोद्देशेनेति। मरणकामनयेत्यर्थः । एवमन्योद्देशेन प्रक्षिप्तनाराचहते ब्राह्मणे न तत्क्षेप्तुर्ब्रह्महन्तृत्वम् । ब्राह्मणमरणकामनया तदप्रक्षेपात् । तथा काशीमरणोद्देशेन कृतशिवपूजनादेर्न हिंसात्वम् । 'यदा मे मरणं भवति तदा काश्यां भवतु'इत्येवं कामनया मरणस्य काश्यधिकरणत्वविषयतया तदाचरणे ऽपि मरणकामनया ऽनाचरणात् । एवं चात्र हिंसात्ववारणाय दृष्टाद्वारकत्वविशेषणं

वदन्तो मान्या एव । मरणोद्देशेन कृतस्य तु हिंसात्वं भवत्येव । श्रौतविध्यबोधितेत्युक्तेस्तन्त्राद्युक्ताभिचाराणां हिंसात्वमेव । श्येनादावपि शिष्टानां विगान तु श्येनाद्वधो वधाच्च नरक इतिप्राप्तिसन्धानेन बोध्यम् । श्येनानुष्ठानकाले शत्रून् हन्तीति प्रयोगस्तु गौण एव । उपपातकेष्वभिचारगणनं तु वैदिकेतराभिचारपरम् । स्मृत्यपेक्षया श्रुतेर्बलवत्त्वात् । एवं च श्येने कृते प्रतिप्रयोगादिना दैवाद्रिपोरमरणे श्येनकर्तुर्न किञ्चिदपि प्रायश्चित्तम् । शत्रोर्मरणे तु तत्र तस्य प्रयोजककर्तृत्वात्प्रयोजकस्य यत्प्रायश्चित्तमुक्तं तावदेव न संपूर्णम् । मरणजनकरोगादिकं प्रति अन्यकर्तृकखड्गाभिघातादिकं प्रति च श्येनस्य हेतुताया वेदेन बोधनात् । श्येनवधप्रयुक्तमत्यल्पं भवत्येव । तान्त्रिकाभिचारकर्तुर्मरणसिद्धौ तत्तद्वधप्रयोजकत्वप्रयुक्तमुपपातकप्रयुक्तं च प्रायश्चित्तम् । कृतेऽभिचारे दैवादमरणे तु उपपातकप्रयुक्तमेव । ब्राह्मणविषये त्वभिचारस्य मन्वादिस्मृतौ निषेधात्तत्राधिकं प्रायश्चित्तम् । श्येनादिश्रौताभिचारकरणेऽपि प्रायश्चित्तं तद्विषये । भाट्टा अपि श्येनो विहितत्वादिष्टसाधनत्वाच्च धर्म एव तत्फल वैरिवधस्त्वनर्थहेतुत्वादधर्म एवेति प्रतिपन्नाः ।

परे त्वेवं सति "चोदनालक्षणोऽर्थो ऽधर्मः" इत्यत्रार्थपदं व्यर्थं निषिद्धकलञ्जभक्षणादि तु न चोदनालक्षणमिति न तद्व्यावृत्तिफलकं तत् । तस्मात् श्येनो विहितत्वान्नाधर्मः नरकसाधनहिंसाफलक-

**त्वाच न धर्म इति प्रतिपन्ना इत्यलम् ॥ ४१ ॥**

(कुं०टी०)*यन्नदुःखेनेति। अत्र "सुखदुष्ख तत्क्रियायाम्" इति मूर्धन्योपधपाठेन दुष्खेणेति णत्वं पितृचरणा वदन्ति। मूलकृता तु तत्रापि विसर्गोपधपाठ एव स्वीकृतः। *संभिन्नम्—मिश्रम्। *स्वःपदास्पदम्—स्वर्गपदवाच्यम्। *यद्वेति। दुःखाजनकोऽधर्मानाश्यो यो देह इत्यर्थः। *सहगमनेति। यत्तु आत्ममरणस्य निषिद्धत्वेऽपि प्रवृद्धस्वर्गाभिलाषाया निषेधशास्त्रमालोचयन्त्याः सहगमनोपदेशः श्येनादिवद् इति। तन्न। तथा हि ये वदन्ति श्येनकरणिकायां हिंसारूपभावनायां विधिसंस्पर्शो नास्तीति प्रतिषेधसंस्पर्शस्यानर्थत्वमिति। तन्मते सहगमनशास्त्रेणात्महिंसाया एव स्त्रिया विधानेन प्रतिषेधसंस्पर्शो नास्ति। ये तु वदन्ति-मरणानुकूलव्यापाररूपत्वात् श्येनोऽपि हिंसैव श्येनश्च रागादिप्रयुक्तहिंसारूपत्वात्प्रतिषिद्ध इति तन्मतेऽपि मरणस्यैव स्वर्गसाधनतयाऽनुगमनशास्त्रेण विधानाद् रागप्रवृत्तेऽपि मरणे निषेधस्पर्शाभावात्। *अथर्वाङ्गिरसीरिति। आर्थवणवेदीयाङ्गिरसशाखाया मारणादिप्रयोगाना विधानात्। *कूपादाविति। तत्र हि कूपोऽनेन खानितोऽतोऽहमात्मानं व्यापादयामीत्येवं कूपखनननिमित्तव्यापादने तस्मात्कूपकर्तुः कारणकारणत्वमेव। औषधादियत्नानन्तरं मरणे तु वचनादेव प्रायश्चित्ताभावः। *प्रयोजकस्य यदिति। कथं पुनः प्रयोजकव्यापारस्य हिंसात्वम्। तन्मरणाननुकूलत्वात्। अन्यथा मातापित्रोरपि हिंसकत्वापत्तेः। सत्यम्। यत् खलु स्वरूपव्यतिरिक्तकार्योत्पत्त्यनुकूलव्यापारं तत्कारणम्। "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्" इत्यत्र हि यथा नैन्द्रवायवाग्रतायां सोम-

यागः स्वरूपेण कारणमेवं मातापितरावपि । *प्रायश्चित्तमिति । ननु प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेदिति स्मृतेः कामकृतस्य कथं प्रायश्चित्तेन नाशः । अत एव गौतमेन नहि कर्म क्षीयत इति प्रायश्चित्तानाश्यत्वमुक्तमिति चेत्सत्यम् । "तरति ब्रह्महत्यां यो ऽश्वमेधेन यजते" इति विधिप्रामाण्यमाश्रित्य कुर्यादित्यपरे इति गौतमेनैव सिद्धान्तितम् । योगीश्वरोऽपि विहितं यदकामानां कामात्तद् द्विगुणं भवेदिति । अत एव श्रोत्रियवधादौ मरणान्तिकप्रायश्चित्तम् । *विहितत्वादिति । श्येनयागाङ्गभूतपशुहिंसाविधिनिबन्धनास्ना न निषिद्ध्यन्ते । या तु तेनाभिचारयागेन शत्रुवधात्मिका हिंसा सा द्वेषनिबन्धनैवेति विध्यसंस्पर्शान्निषिध्यत इत्यर्थः । *चोदनालक्षणइति । चोदना विधिः लक्षणं यस्य तादृशो ऽर्थः । बलवदनिष्टाननुबन्धीष्टसाधनं य सः धर्मः । अर्थो धर्म इत्युक्ते भोजनादावतिव्याप्तिः । तस्य विधिप्रमाणकत्वाभावान्निरासः । श्येनस्यापि विधिप्रमाणकत्वात् तद्वारणायार्थ इति । श्येनस्तु हिंसाजनकत्वाद्बलवदनिष्टनरकानुबन्धीति तन्निरासः । सचायं क्रियारूपो यागहोमादिः द्रव्यरूपो गोदोहनादिः गुणरूपो नीचैस्त्वोच्चैस्त्वादिः । एवं च धर्मे प्रमाणं चोदनेति सिद्धम् । तथाहि विधिवाची लिङादिश्चोदनेत्युच्यते ।तदुक्तं वार्तिके—

प्रवर्तते इति ज्ञानं येन शब्देन गम्यते ।
स चोदनोच्यते शब्दः प्रवर्तनफला मतिः ॥ इति ।

चोदनाया वैदिकवाक्यनिष्ठत्वात् घटं कुर्वित्यादिलौकिकवाक्यव्युदासः।लिङादिश्च प्रवर्तनारूपविधिबोधकः । प्रवर्तना च इष्टसाधने भवतीति यागादेरिष्टसाधनत्वं गम्यते ॥ ४१ ॥

(कु० टी०) उक्तेऽर्थे परसमतिमप्याह *यत्रेति । *एतत्-अ त्प-

पापसत्त्वम् । तदेवाह *आद्येति। *तत्र–स्वर्गे । *सद्दशेति दुःख-विशेषणम् । *तदिति । सुखेत्यर्थः। *उभयम्–सुख दु.ख च। आद्यार्द्धस्योक्तानाशयकत्वेन दुःखसामान्याभावाशयकत्वम् । ननु स्वर्गे विषयसुखस्यैवाभावात्कुतस्तत्सपादनक्लेशो ऽत आह *स्व-र्गेऽपीति । *एत्र च—द्वयोरेव निरासेनाल्पदु खसत्त्वे च । उपसहरति *तस्मादिति । उक्तार्थस्य ततो ऽस्पष्टतया प्रती-तेर्विनिगमकाभावाच्चाह *यद्वेति। *स्वम्–स्वर्गसुखम्। *उक्तेति। पञ्चशिखाचार्योक्तरीत्येत्यर्थ । वैपरीत्यनिरासायाह *ज्यो-तिष्टोमेति। एतेन तत्र तद्धन्न पापमिति पूर्वोक्तम्। एवं 'यन्न दु खे-न''इत्यर्थवाद एवेत्यपि तथा। एव चोक्तवाक्यत पापस्याल्पत्वक ल्पनमयुक्तम्। सकृत्प्रवृत्ताया. किमवगुण्ठनपटेनेति न्यायेन निषेध-कल्पपापस्य समांशे एव सकोचकत्वासभवात सकोचस्याप्येकदे-शबाधकत्वादिति अनयैवानुपपत्त्या इष्टोत्पत्तिनान्तरीयकदुःखाधिक-दु.खाजनकत्वमपि विधिशक्तौ प्रवेशयन्त इष्टसाधनत्व कृतिसाध्य-त्वम्–इत्यादित्रयम् विधिशक्यम् ज्योतिष्टोमादौ पशुहिंसाज न्यपापापत्त्या शिष्टानामप्रवृत्त्यापत्तिवारणाय तृतीयमिति चायुक्तमे-वेति स्पष्ट भूषणे। तदाह *इतिदिगिति। ननु श्येनेनेत्यादिविधेस्त-ज्जन्यारिमरणस्यापि वैधहिसात्वेन निषेधविषयत्वं न स्यात्। या वेदे विहितेत्यादिस्मृतिबोधितमल्पहिंसात्व वा स्यादत आह *श्येनेनेति। *विधीति। विधिजन्यप्रवृत्तिकर्मत्वरूपाविध्धीत्यर्थ ।,तथाच तत्र वि-धिना ऽनर्थहेतुत्वाप्रतिक्षेप इति भाव. । द्वितीये दोषमाह*यज्ञान्त-रिति। *अत एव–पूर्णनिषेधविषयत्वादेव। *तत्–वधरूपम्। *तत्र–श्येने । तस्याधर्मत्वापत्तिरत आह *श्येनस्त्विति। ननु वदतो व्या-घातो ऽत आह *मरणोद्देशेनेति। प्रकृते श्रौतेत्यनेन तत्त्वनिरास इति तस्य तल्लक्षणाक्रान्तत्वाद्धर्मत्वमेव । एतेन नहिंस्यादिति हिंसिधा-तुप्रवृत्तिनिमित्त मरणान्तत्वविशिष्ट तदिति अन्योक्तम्, तदन्यत्व-रूपपुरुषार्थप्रतियोगित्वविशिष्टं तदिति अन्योक्तम्। पुरुषार्थनिषेध प्रतियोगित्वमात्रविशिष्ट तत् वैधस्य विधिविरोधान्न निषेधविषयते-त्यप्पदीक्षितोक्तमप्यपास्तम् । नन्वदृष्टाद्वारकेति विशेषणमेवो-क्तेष्टसाधक कुतो न दत्तमत आह *तस्मादिति ।

न ब्राह्मणो वेदयीत किञ्चिद्राजनि धर्मवित् ।

स्ववीर्येणैव तान् शिष्यान्मानवानपकारिणः ।
स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् ॥ इत्यादि ।

स्ववीर्यमेव द्विजस्याह *श्रुतीरिति । प्रकारान्तरमाह *क्षत्रियइति । *श्रौतस्यैवेति । प्रायश्चित्ताल्पत्वात् । एतेन तान्त्रिकव्यवच्छेद इत्यनुपदमेव स्फुटीभविष्यति । अतस्तथोक्तम् । यथाश्रुतासङ्गतेराह *श्रुतीति । *गवि–बलीवर्दे । अस्य फलान्तरमाह *एवमिति । अस्यार्थमाह *ब्राह्मणेति । तथाव्याख्यानफलमाह *तथेति । नन्वत्र तथा वारणे ऽपि मरणकामनया कृतस्यापि तत्त्ववारणाय तद्विशेषणमावश्यकमत आह *मरणोद्देशेनेति । मरणकामनयेत्यर्थः । यद्यप्यदृष्टाद्वारकेति विशेषणेनापि श्येने न दोषस्तथापि मन्वनुरोधेन तथोक्तस्य फलान्तरमप्याह *श्रौतेति । उक्तमानवे श्रुतीरित्युक्त्या तन्त्राद्युक्ताभिचाराणामुपपातकत्वाद्धिंसात्वाच्चाधर्मत्वलाभेनेदमेव विशेषण ज्याय इति भाव. । नन्वेव श्येने ऽविगानेन शिष्टानां प्रवृत्ति. स्यादत आह* श्येनादाविति । नन्वेव श्येनकरणकाले शत्रु हन्तीति प्रयोगो न स्यात्तस्याहिंसात्वादत आह *श्येनेति । ननूपपातकप्रकरणे 'अभिचारो हीनकर्म च'इति मनूक्तेरभिचारत्वेनोपपातकत्वान्नरकजनकत्वेन कथ तस्य धर्मत्वम् । न च तद्वैधेतराभिचारपरम् । सर्वेषामभिचाराणां वैधत्वादत आह *उपेति । *एवं च—तस्योपपातकत्वाभावेच । ननु साक्षात्कर्तृत्वमेव कुतो नात आह *मरणेति । एव च किञ्चिन्निमित्त विना तदसभवेन तेनान्यथासिद्ध्या न तस्य तत्त्वमिति भाव. । तदधिकरणपूर्वपक्षमतेनाह *श्येनेति । तस्य वधेत्यर्थ. । सिद्धान्ते तु अग्नये रुद्रवते पशुरिति पशुवधो बोध्यः । तत्रैवाह *कृते इति । *ब्राह्मणेति च । *मन्वादीनि ।

विधाता शासिता वक्ता मैत्रो ब्राह्मण उच्यते ।
तस्मै नाकुशल ब्रूयान्न शुष्कां गिरमीरयेद् ॥ इति मनुः ।

अकुशल अकुशलसंपादकाभिचारम् । शुष्का गीराक्रोशवाक्यम् । *तद्विषये–ब्राह्मणविषये । परसमतमपीदमित्याह *भाट्टाइति । तत्रार्थपदव्यावर्त्यं तु निषिद्धकलञ्जभक्षणाद्येवेति भाव । शिष्टाशिष्टयोस्ते तु प्रागुक्ते एव । इद दूषयति *परेत्विति । ननु व्यावर्त्यमु-

कमेवात आह *निषिद्धेति । *तस्मादिति । एतेनार्थपदव्याधर्त्य-स्वादधर्मत्वमेवेति गुरूक्तमप्यपास्तम् । तदाह *इत्यलमिति ॥ ४१ ॥

यत्तु मीमांसकैः "वाजपेयेन यजेत"इत्यादौ वाजपेयपदे न द्रव्यं सुरारूपं स्वपदोपात्तयागरूपकरणावरुद्धायां स्वर्गभावनायां बहिर्भूतद्रव्यस्य करणत्वेनान्वयासम्भवाद्, वाजपेयवतेति बोधे तु मत्वर्थलक्षणा, वाजपेयेन यागं भावयेद् यागेन स्वर्गं भावयेदिति बोधे वाक्यभेदापत्तिस्तस्माद् तन्नामधेयमिति सिद्धान्त इत्युक्तम्। तत्र मत्वर्थलक्षणेत्यस्य तत्कृतासाधुत्वं दोष इत्यर्थः । तदर्थे तेषां प्रत्ययानां साधुत्वबोधकव्याकरणेन तत्रार्थे लक्षणया प्रकृतिप्रयोगस्यासाधुत्वबोधनात् । 'कुन्ताः प्रविशन्ति'इत्यादावपि कुन्तत्वादीनां तत्संयोगिन्यारोपो नतु कुन्तसंयोगित्वेन लक्षणा । अत एव बाभ्रव्य इत्यर्थे बभ्रुरित्यादीनामसाधुत्वमुक्त "परश्च"इति सूत्रे भाष्ये। नच तद्बोध्यं शक्तिभ्रमेण बाधेऽप्यसाधुत्वपरम्। शक्तिभ्रमस्य दुरुपपादतायाः प्रागुक्तत्वात्। तत्सम्बन्ध्यपत्यमित्यर्थे ऽणादिप्रत्ययसमासयोः साधुत्वस्य सूत्राद्बोधेन तत्रार्थे ऽन्यशब्दस्य लक्षणया ऽप्यसाधुत्वमित्यर्थस्य सूत्रस्वारस्येन लाभाच्च । एतन्मूलक एव 'विभक्तौ न लक्षणा'इति प्रवादः । रघूणामन्वयमित्यादौ तदपत्ये रघुत्वारोपो बोध्यः । "सोमेन यजेत"इत्यादौ छान्दसी मत्वर्थलक्षणेति बोध्यम् । अर्शआद्यजन्तं वा सोमपदम् ।

अत एव "प्रोक्ताल्लुग्" इति सूत्रे प्रोक्तार्थकप्रत्ययान्तादित्यर्थे प्रौक्तादिति भाष्यमित्याशङ्क्य सौ-

त्रो निर्देश इति भाष्ये समाहितम् ।

अत एव "गुणवचनेभ्यो मतुपो लुग्वक्तव्यः" इति वचनं वार्त्तिककृताऽऽरब्धम् । अन्यथा तद्वति लक्षणयैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । लुगपि समानाधिकरणद्रव्यवाचकसत्त्वे एव । लक्षणाऽपि तत्सत्त्वे एव । तत्रैवानुपपत्तिप्रतिसन्धानात् । नच लुकाऽपि लक्षणैवान्वाख्यायत इति वाच्यम् । शास्त्रबोधितत्वेन तत्र साधुत्वस्य निर्बाधत्वात् । गुणगुणिनोरभेदस्यापि सत्त्वेन तत् प्रत्याख्यातमित्यन्यत् । "गुणवचनानामाश्रयतो लिङ्गवचनानि" इत्यनेन तत्र पक्षे लिङ्गादिसिद्धिर्बोध्या । अन्यत्रापि नामधेयत्वबीजं पूर्वमीमांसायां स्पष्टम् । नामधेयत्वे च वाजपेयादिपदं पदपरम् । मत्वर्थलक्षणायामसाधुत्वे ऽप्यस्यां तत्त्वाभावात् । स्वरूपस्यापि पदशक्यत्वाच्च । पदतदर्थयोश्चाभेदाध्यवसायस्य पूर्वमुपपादितत्वेन 'वाजपेयपदाभिन्नो यागः' इति बोधे पश्चात्साङ्गोपाङ्गविधिपर्यालोचने प्रवृत्तिनिमित्तरूपवैजात्योपस्थितौ 'विजातीयोऽयं यागो वाजपेयपदशक्यः' इति शक्तिग्रहे ऽन्यत्र तेन पदेन यागविशेषोपस्थितिः । 'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ सहकारतर्वधिकरणकं मधुररवणं यत्कर्तृकं स पिकपदाभिन्न इति बोधे सहकारे कोकिलत्वजातिमत एव मधुररवणं जानतस्तद्वैजात्योपस्थितौ तदवच्छिन्ने पिकपदशक्तिग्रहे तेनरूपेण बोधः ।

यत्तु पदस्य वाच्यतासम्बन्धेन यागेऽन्वय इति

तन्न। सम्बन्धाप्रसिद्धेःपूर्वमनुपस्थितसम्बन्धस्य भानाङ्गीकारे ऽपि सर्वथा ऽप्रसिद्धस्याज्ञातस्य संबन्धस्य भानाननुभवात्। वाजपेयपदोत्तरतृतीयाया असाधुतापत्तेश्च। करणाभेदेन हि सेति सिद्धान्तः।

यदपि वाजपेयपदं क्वचिच्छक्तमिति सामान्याकारशक्तिग्रहेण सामान्यतो वाजपेयपदशक्य इत्युपस्थित्या ऽभेदान्वय इति। तदपि न। तथोपस्थितेः कारणाभावात्। किंचिदित्येवोपस्थितेश्च। नहि किंचिदभिन्नो याग इति बोधो ऽनुभवसिद्धः।

किंच वाजपेयपदस्य योगेन सुराद्रव्ये शक्तिग्रहसत्त्वेनेह शक्तिग्रहासम्भवादित्यलम् ॥ ४२ ॥

( कुं० टी० ) *सुरारूपमिति। विधीयत इति शेषः। तथा च गुणविधिरयम्। *असम्भवादिति। यागस्य तु त्यागरूपस्य क्रियात्वाभावेन तत्र कारकान्वयासम्भवात्। *वाजपेयेनयागमिति। ननु यदि यजेतेत्याख्यातेन कर्मत्वं यागस्योच्येत तदा वाजपेयगुणेन यागं कुर्यादिति वाक्यार्थः स्यात्। यदि तु करणत्वं स्यात् तदा यागेन स्वाराज्यं भावयेदिति स्यात् तत्कथमुभयसबन्धसम्भव इति चेत्। सत्यम्। यागभावनयोः संबन्धमात्रं यजेतेति श्रुत्या उच्यते। तच्चाविशेषाद्वाजपेयगुणं प्रति यागस्य कर्मता, फलं प्रति करणताऽपि। *वाच्यभेदापत्तिरिति। विधेयभेदादिति भावः। नच तन्त्रेण यागस्य उभयान्वयः शङ्क्यः। गुणं प्रति विधेयत्वं फलं प्रत्यनुवाद्यमिति विरुद्धत्वापत्तेः। तस्माद् वाजं सुराद्रव्यं पेयमस्मिन्निति सुराग्रहविधानान्नामधेयत्वम्। *तदर्थे

इति । मतुबर्थे । मतुबादिसाधुत्वबोधकव्याकरणेन लक्षणया प्रकृतिमात्रप्रयोगस्यासाधुत्वं बोध्यत इत्यर्थः । *दुरुपपादताया इति । शक्तेः पदतदर्थघटितत्वात् । कथं तर्हि सोमेनेत्यस्य सोमवतेत्यर्थस्तत्राह *छान्दसीति । सोमादिपदानां द्रव्ये प्रसिद्धतया सामानाधिकरण्यासम्भवात् । *अन्यत्रापीति । तद्यथा "चित्रया यजेत"इत्यत्र चित्रत्वस्त्रीत्वयोर्गुणयोर्विधाने वाक्यभेदप्रसङ्गाच्चित्राशब्दो नामधेयम्, एवम् "अग्निहोत्रं जुहोति"इत्यत्र वाक्यान्तरेण कर्मणो विहितत्वाभावेन तदनूद्य गुणविध्यसम्भवाद् नामधेयत्वम् । "श्येनेनाभिचरन्यजेत"इत्यत्र "यथा वै श्येनो निपत्यादत्ते" इत्युपमया स्तुतिदर्शनात् श्येनो नामधेयम् । ननु "अग्निहोत्रं जुहोति"इत्यस्य कथं कर्मविधित्वं द्रव्यदेवतयोरभावात् । तस्माद्दध्यादिवाक्यविहितकर्मणोऽनुवादोऽस्तु इति चेत्, सत्यम् । तथा सति कर्मणो विहितत्वाभावेन दधिरूपगुणविधानं कुत्र स्यात् । ननु वाजपेयादिशब्दानां पदपरत्वे लक्षणापत्तिस्तदवस्थैवेत्यत आह *मत्वर्थेति । वस्तुतो लक्षणा नास्तीत्याह *स्वरूपस्यापीति । अन्यत्राप्येषैव गतिरित्याह *इहसहकारेति । अत्रापि हि प्रथमं सामान्यरूपेण शक्तिग्रहः पश्चाद्विशेषबोधः । *पदस्येति । वाजपेयादिपदस्य *वाच्यतासंबन्धेनेति । वाजपेयपदवाच्येन यागेनेत्यर्थः । *संबन्धाप्रसिद्धेरिति । वाजपेयपदवाच्यस्य ज्ञातत्वाभावात् । शाब्दबोधे योग्यताज्ञानस्यापि हेतुत्वात् । तदहेतुत्ववादेऽपि संसर्गांशे तात्पर्यज्ञानस्य हेतुत्वात् । *अनुपस्थितस्येति । श्रुत्यादिभिः संबन्धसामान्योपस्थितौ प्रकरणादिवशाद्विशेषोपस्थितिरिति भावः । *सर्वथा प्रसिद्धस्येति । उपस्थिता-

नामेव संबन्धाना मध्ये प्रकरणादिवशाद्विशेषावसायः । इह तु वाजपेयपदवाच्यस्याज्ञातत्वान्न तत्संभव इति भावः । ये वदन्ति तात्पर्यग्रहो न शाब्दबोधे हेतुरपितु प्रामाण्यग्रह एव, तद्रीत्याऽपि दोषमाह *साधुतापत्तेश्चेति । वाजपेयपदोपात्ततृतीयया यागस्य करणत्वबोधासम्भवात् । *अभेदान्वयइति । वाजपेयपदशक्याभिन्नेन यागेनेत्याकारकः । *तथोपस्थितेः— सामान्योपस्थितेः । *कारणाभावात्—उत्पादकाभावात् । *सुराद्रव्ये इति । वाजं सुराद्रव्यं पेयं यस्मिन्निति व्युत्पत्तेः । तत्र च सुराग्रहा गृह्यन्ते इति श्रुतिर्मूलम् ॥ ४२ ॥

( क० टी० ) प्रसङ्गान्मीमांसकोक्ति 'यथाश्रुतां सङ्गतां तत्सिद्धान्तस्य सम्मतत्वात्परिष्करोति *यस्त्विति । *मीमांसकैर्भट्टानुयायिभिः । वाजो ऽन्न तद्विकारः सुरा वाज च तत्पेय चेति व्युत्पत्तिस्तदाह *तद्रव्यमिति । *यागेनचेति । तादृशेत्यादि । *वाक्य भेदेति । विधेयानेकत्वात् । *तस्माद्–गुणविध्युत्थुकदोषत्रयात् । *नामेति । वाजं पेय यत्रेति योगेन तत्प्रख्यन्यायेन । सुराद्रव्यस्य वचनान्तरेण विधानात् । लक्षणाया जघन्यवृत्तित्वेऽपि स्वतो दुष्टत्वादाह *तत्रेति । ननु गङ्गामित्यादौ न तत्कृतासाधुत्व दृष्टमत आह *तदर्थे इति । नन्वेव कुन्तादिपदस्य तत्सयोगिनि लक्षणेत्यसङ्गत स्यादत आह *कुन्ताइति । तत्पदप्रवृत्तिनिमित्तानामित्यर्थः । निरूपित चैतच्छक्तिवादे । *अत एव–व्याकरणस्यासाधुत्वबोधकत्वादेव । *इत्यर्थे–इत्याद्यर्थे । *दुरुपपादतायाइति । पदतदर्थघटितत्वात् । तत्रैव दोषान्तरमाह *तत्सम्बन्ध्येति । अपिना भ्रम । एवच सङ्कोचो न युक्तः । *एतदिति । असाधुत्वेत्यर्थ । दीक्षिताद्युक्तरसाङ्गत्यायोक्तैव गतिरन्यत्रापीत्याह *रघूणामिति । इत्यादावपीत्यर्थः । नन्वेव सोमद्रव्यस्यान्यतो ऽप्राप्तत्वात् तत्र का गतिरत आह *सोमेनेति । अगत्येति भावः । इदमपि मीमासकमतेन न सिद्धान्ते इत्याह *अर्शआद्यजिति । *अत एव–प्रकारद्वयाङ्गीकारा-

देव । सौत्र इत्यस्य तत्त्वेन छान्दस इति अर्शआद्येतिसूत्रकृत-इति वेत्यर्थ । *अत एव-तया तत्र प्रयोगे ऽसाधुत्वादेव । तदेवाह *अन्यथेति । तदसत्त्वे इत्यर्थ. । ननु पदान्तरसमभिव्याहारे ल-क्षणाया. सिद्धावपि न केवले इति तदर्थं वार्तिकमावश्यकमत आह *लुगपीति । केवले मतुप एवाभावात् । गमकाभा-वाल्लुघवादाह *न चेति । अपिनोक्तभाष्यसमुच्चयः । स-म्भावनायां वा । तावताऽपि नोक्तदोष इत्याह *शास्त्रेति । ननु सिद्धान्ते वार्त्तिक प्रत्याख्यातमिति कथ प्रकृते तत्साध-कमत आह *गुणेति । अपिना भेद. । ननु प्रत्याख्याने तेषां गुणवा-चकत्वेनाजहल्लिङ्गत्वम् , तस्य चकत्वात्कथ लिङ्गादिसिद्धिरत आह *गुणेति । *तत्र पक्षे-प्रत्याख्यानपक्षे । आदिना द्विवचनादि । *अन्यत्रापीति । अय भाव.-उक्तरीत्यैवाद्भिदत्पदमपि फलोद्भेदन-कारित्वयोगेन तथा, अग्निहोत्रपदमपि 'यदग्नये च'इत्युक्तेरग्निदेव-ताप्राप्त्या देवताविध्यसम्भवाद्देवताकत्वयोगेन तथा, श्येने तु "यथा व' इति वाक्यशेषदर्शितोपमानोपमेयभावेन तथा इत्यादि बोध्यम् । तत्र तत्त्व न तदुक्तरीत्या किन्त्वौपेतिप्रागुक्तसि-द्धान्तरीत्येत्याह *नामेति । नन्वेव लक्षणातादवस्थ्यमतआह *मत्वर्थेति । *अस्याम्-पदे लक्षणायाम् । वस्तुतो नात्र सेत्याह *स्वरूपेति । *पूर्वम्-आरम्भे । *पर्यालोचने-प्रवृत्तिनिमित्तविशेषप-रिचये सति । *अन्यत्र-सङ्कल्पादौ । इय गतिरन्यत्राप्यावश्यिकेत्या-ह *इहेति । नैयायिकनव्योक्ति खण्डयति *यत्त्विति । ननु वाक्या-र्थस्यापूर्वत्वेन तत्र कथमत आह *पूर्वमिति । ननु योग्यताज्ञानवत्स-सर्गांशे तात्पर्यग्रहो ऽपि न शाब्दबोधहेतुः किन्तु प्रामाण्यज्ञान एवेति नोक्तदोषो ऽत आह *वाजेति । जीर्णनैयायिकोक्ति खण्डयति *यदपीति । शक्तिग्रहोपस्थितिबोधानां समा-नप्रकारत्वनियमादाह *तथा ऽपि । इष्टापत्तावाह *नही-ति । अभ्युपेत्येदम् । वस्तुत स एव नेत्याह *किञ्चेति । त-त्र पूर्वपक्षे आह *सुरेति । किञ्च तेनाभेदेनान्वयस्य बाधाद् ब-हुव्रीहिरूपयोगेनापि न निर्वाहस्तथा सति 'द्रव्य घट' इतिवत्सामा-न्यविशेषभावेन ततो वैजात्यरूपेण बोधानापत्तिस्तस्मादुक्तरीति-रेव शरणम् । तदाह *अलमिति ॥ ४२ ॥

प्रवर्तना च लिङादेर्द्योत्या पचेत्यादौ विनाऽपि लिङादिकं प्रवर्तनाप्रतीतेः। अन्तर्भावितण्यर्थे प्रवर्तनाया धात्वर्थत्वस्य दृष्टत्वाच्च। कर्त्रादिष्वपि द्योत्यताया एव दृष्टत्वाच्च। अत एव 'निमन्त्रयेय भवन्तम्'इत्यादौ धातुना निमन्त्रणस्योक्तत्वे ऽपि लिङ्सिद्धिः। यद्वा ऽत्र "अर्हे कृत्यतृचश्च"इति लिङ्लोटौ निमन्त्रणादिनिष्ठमर्हत्वं चावश्यकर्तव्यतालक्षणम् ।

किञ्च तस्या वाच्यत्वे तस्या एव विशेष्यत्वेन तत्रैकत्वेन द्विवचनानापत्तिः। संख्यायाः स्ववाचकप्रत्ययान्तजबोधविशेष्य एवान्वयात् । कर्तृगतसंख्यायास्तन्निष्ठधात्वर्थ इव तद्विषयकप्रवर्तनायामध्यारोपणात्तत्साधुत्वमित्यपि क्लिष्टम्। तत्र धातूपस्थितव्यापाराणां मध्ये प्रयोजकव्यापारस्य विषयितया विशेषणत्वम् । इतरेषां तु विषयतया विशेष्यत्वम् । एवंच पचेदित्यादावेककर्तृका प्रवर्तनाविषयीभूता पाकानुकूला क्रियेत्यादिरीत्या बोधः ।

यत्तु द्योतकत्वे ऽपि प्रवर्तना विशेष्येति तन्न। द्योत्येऽर्थे विशेषणताया एव न्याय्यत्वात् ।

किंच तस्या विशेष्यत्वे देवदत्तादेः प्रधानभूतधात्वर्थानाश्रयत्वेनाकर्तृत्वे कर्तरि लिङाद्यनापत्तिः।

किंच "स्वाध्यायोऽध्येतव्यः"इत्यादौ सत्त्वप्रधाने कृदन्ते प्रवर्तनाया विशेषणत्वमावश्यकमिति सर्वत्र तथैवोचितम्। तत्र हि प्रवर्तनाविषयाध्ययनकर्म स्वाध्याय इति बोधः। प्रवर्तनाविषयत्वेन बुद्धस्य धात्वर्थस्य भाव्यत्वेन ग्रहात् । कथंभावाकाङ्क्षा गुरूपसदना-

दिविधिना निवर्तते । करणाकाङ्क्षा च बाह्यैरध्ययननियमविधिभिर्निवर्तते । फलाकाङ्क्षा च यज्ञादिविधिभिः ।

यद्वा गुरूपसदनं करणं नियमश्चेतिकर्तव्यता । अयं विधिः सम्पूर्णवेदस्य प्रयोजनवदर्थपर्यवसायित्वबोधकः । निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वाक्यान्तरादध्ययनस्य नित्यत्वमपीति नित्यकाम्यमेतदित्याहुः । तत्र सकलकारकविशिष्टे धात्वर्थे प्रवर्तनाया विशेषणत्वे विधिप्रत्ययस्तात्पर्यग्राहकः । एवंच प्रवर्तनाऽऽक्षिप्तमज्ञातज्ञाप्यत्वं श्रेयःसाधनत्वं च विशिष्टे एव । धात्वर्थस्य प्राप्तत्वे तु तात्पर्यतो गुणांशे पर्यवस्यति । प्रवर्तनाऽत्र वर्तमानकालैव भासते शब्दशक्तिस्वभावात् । इतरधात्वर्थस्तु भविष्यत्काल एव तत एव । एतेन प्रेरणाप्रयोज्यपाकवर्तमानतादशायां पचेदिति स्यादित्यपास्तम् ।

विधिलिङादावुत्तमस्तु न । स्वप्रवृत्तौ स्वप्रेरणाया अकारणत्वेन तज्ज्ञानानुपयोगात् । इदमेवाभिप्रेत्योत्तमपुरुषो विधिशक्तिप्रतिबन्धक इति तान्त्रिकाः । एवं यच्छब्दयोगैवकारादियोगो ऽपि विधिशक्तिप्रतिबन्धक इति बोध्यम् । इति तिङर्थविचारः ॥ ४३ ॥

( कुं० टी० ) *अतएव—द्योतकत्वादेव । *विशेष्य-

१ अथ-आहुः-अथ पाठः कलानुरोधी एकस्मिन्नेव मूलपुस्तके उपलब्धोऽत्रावस्थापितः ।

त्वेनेति । पचेदित्यादौ पाकविषयिका प्रेरणेत्यर्थात् । ज्ञानेच्छादीनामेव सविषयकत्वमिति नियमे तु मानाभावः । अन्यत्रापि तदनुभवात् । *स्ववाचकेति । कर्तृगताद्वित्वादेः क्रियायामारोपात् । *विषयतयेति । प्रेरणाविषयः पाकः इत्यर्थात् । *देवदत्तादेः—प्रयोज्यस्य । *करणाकाङ्क्षी—प्रवर्तकाकाङ्क्षा । *तत एव—शब्दशक्तिस्वभावादेव । *इतिस्यादिति । पाकस्य वर्तमानत्वात् । *अकारणत्वेन—अनपेक्षितत्वेन । *यच्छब्दयोगेति । तेनानुवाद्यत्वप्रतीतेः । इति तिङर्थविचारः ॥ ४३ ॥

( कु० टी० ) एवं साधिते प्रवर्तनाया लिङर्थत्वे परसमतवाचकतापक्षनिरासेन सिद्धान्ते द्योतकतापक्षमाह *प्रवर्तनाचेति । अपूर्वकल्पना नेत्याह *अन्तरिति । पञ्चभिर्हलैः कृषतीत्यादावित्यर्थः । एकवाक्यताऽप्यत्रेत्याह *कर्त्रादीति । *अत एव—द्योतकत्वादेव । तत्समुच्चयस्यान्यत्र दृष्टत्वात् । सम्भवात्पक्षान्तरमाह *यद्वेति । *लक्षणम्—लक्षणमेव । एवमदुष्टं द्योतकत्वमुपपाद्य पक्षान्तरे दोषमाह *किञ्चेति । तद्विषयमादाय न तदित्याह *सख्याया इति । ननु तत्र यथा निर्वाहस्तथा ऽत्रापीत्यत आह *कर्तृगतेति । प्रत्यासत्तिं सूचयन्नाह *तन्निष्ठेति । प्रत्यासत्तेरेव आह *क्लिष्टमिति । बोधप्रक्रियामाह *तत्रेति । द्योतकत्वे सतीत्यर्थः । लिङाद्यन्ते वा । प्राचीनमतं खण्डयति *यत्त्विति । *तस्याइति । यतो द्योतकत्वे इत्यादि । एकरूप्यायाह *किञ्चेति । *सर्वत्र—पचेदित्यादावपि । नन्वप्रधानत्वे तस्याः कथं ऽयशात्वमत आह *प्रवर्त्तनेति । *भाव्यत्वेन—साध्यत्वेन । आकाङ्क्षायां हेतुरयम् । आद्ययोर्विनिगमनाविरहादाह *यद्वेति । अर्थवादपादे सकलमीमांसकोक्तं सिद्धान्तमाह *अयम्—विधिरिति । *पर्यवेति । पर्यवसाय्यध्ययनकर्मत्वबोधक इत्यर्थः । एवं च काम्यत्वं सिद्धम् । अत एवाह *निष्कारणेति । *वाक्यान्तरात्—श्रुत्यन्तरात् । आहुरित्यरुचिबीजं तु प्राक् प्रतिपादितं ध्येयम् । *नित्यामिति । तादृशविधिना संपूर्णवेदस्य स्वरूपतः प्रयोजनवदर्थपर्यवसायित्वबोधने ऽप्यध्ययनस्य तस्वाबोधनात् । अत एव न-

तद्विरोधोऽपीति। अत एवायमित्याहुरित्यन्तः पाठो न दृश्यते कचित्। *तत्र—तयोर्विशेषणविशेष्यभावे सति। *विधीति। तेन कर्तुर्बोधनात्कारकान्वय विना धात्वर्थस्य निरूपयितुमशक्यत्वात्। *एव च—कारकाविशिष्टक्रियाया एव प्रवर्तनाविषयत्वे च। *गुणांशेइति। यथा "दध्ना जुहोति" इत्यादौ। *अत्र—लिङादौ। *तत एव—शब्दशक्तिस्वभावादेव। *एतेन—तत एव तस्य तत्त्वेन। *तान्त्रिका—मीमांसका। स्पष्ट चेद "विधिमन्त्रयोरैकार्थ्यमैकशब्द्याद्"इत्यधिकरणे द्वितीयाध्यायादिभागे। "देवांश्च याभिर्यजते, अग्नीदग्नीन्विहर, बर्हिर्देवसदन दामि, यस्योभय हवि" इति तत्रोदाहृतम्। *एवकारेति। अत एव "औदुम्बरो यूपो भवति" इत्यादे "यदष्टाकपालो भवति गायत्र्यैवैनम्"इत्यादेश्चार्थवादत्व सिद्धान्तित पूर्वमीमांसायाम। एव च 'तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्'इत्यभियुक्तोक्त चिन्त्यमव। आदिना वाऽपिशब्दादिपरिग्रह इति स्पष्टम्। लक्षण मिताक्षराव्याख्यायाम्। सम्बोधनविभक्तेरपि इति तत्त्व बोध्यम। इति तिङर्थविचारः ॥ ४३ ॥

पिपठिषतीत्यादौ सनर्थ इच्छा। तस्याः प्राधान्यानुभवात्। तत्र धात्वर्थस्य कर्मत्वसमानकर्तृकत्वैतदुभयसम्बन्धेन विशेषणता। "धातोः कर्मणः समानकर्तृकादिच्छायां वा"इति सूत्रस्वरसात्। "गमेर्ग्रामः कर्म इषेस्तूभे कर्मणी"इति सन्सूत्रस्थभाष्योक्तेः। अस्मात्कर्मण्यपि लादयः।

अत एव निदिध्यासितव्यो विजिज्ञासितव्य इत्यादिप्रयोगाः सङ्गच्छन्ते।

ननु ज्ञानस्वभावत्वाद्वर्त्तमानाऽप्याशंसा विषयभविष्यत्वाद्भविष्यत्कालेति"आशंसायां भूतवच्च"इति सूत्रे उक्तम्, तद्रीत्या वर्तमानाया अपीच्छाया विषयभविष्यत्वेन भविष्यत्कालत्वात्सन्नन्ताद्वर्तमानप्रत्ययासू-

ङ्गतिरिति चेन्न। सन्प्रत्ययार्थेच्छायाः प्रधानत्वेन गुणभूतप्रकृत्यर्थाननुयायित्वात् । आशंसा तु न प्रत्ययार्थ इति प्रधानार्थानुयायिन्येव ।आबाधादिवत् ।प्रयोक्तृधर्मो ह्याशंसा । आशंसे इत्यादिशब्दप्रयोगे प्रयोक्तृधर्मः सा गम्यत इत्यन्यत्र विस्तरः"।

श्वा मुमूर्षति, कूलं पिपतिषतीत्यादौ आशङ्कायां सन्। श्वकर्तृकमरणविषयाऽऽशङ्केति बोधः। इच्छाऽऽरोपेणात्र प्रत्यय इति भाष्यसम्मते पक्षे उक्तोऽर्थः पश्चान्मानसबोधविषय इति बोध्यम् ।

सन्नन्ते पिपठिषति गन्तुमित्यादिवारणायैकार्थीभावः । तस्य पदविधित्वाभावे ऽपि "वावचनानर्थक्यं नित्यत्वात्सनः। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । तत्र स्वभावत एतद् भवति वाक्यं वृत्तिश्च" इति भाष्यात्सः । वृत्तेरेकार्थीभावविषयत्वाद्वाक्यस्य व्यपेक्षाविषयत्वाद्भिन्नार्थत्वेन बाध्यबाधकभावाप्रसङ्ग इति कैयटाच्च ।

पुनःपुनरतिशयेन वा पचति पापच्यत इत्यादौ यङा प्रकृत्यर्थगतं पौनःपुन्यं बाहुल्यं वा द्योत्यते। बाहुल्यं कात्स्न्र्यम्। क्वचित्कौटिल्यगर्ह्यपि। "नित्यं कौटिल्ये गतौ" "लुपसदचर-"इत्यादिशास्त्रप्रामाण्यात्। तद्विषये क्रियासमभिहारे यङ् न। अनभिधानात् ।

पाचयतीत्यादौ णिज्वाच्या प्रेरणा न तु द्योत्या । विशेषणत्वापत्तेः । एवं च तदाश्रयस्य कर्तृत्वानापत्तौ ण्यन्तात्प्रयोजककर्तरि लाद्यनापत्तिः ।

अत एव द्योतकतापक्षस्य तत्र भाष्ये प्रकृत्यर्थ

विशेषणशब्देनोल्लेखः कृतः ।

किञ्चैवमपि प्रयोजकस्य कर्तृत्वाङ्गीकारे गमितो ग्रामं देवदत्तो यज्ञदत्तेनेत्यादौ प्रयोजकव्यापारस्य गमिवाच्यत्वात्प्राधान्येन गत्यर्थत्वाच्च प्रयोजककर्तरि क्तस्यापत्तिः । द्योत्यस्य विशेष्यत्वाङ्गीकारेऽपि पाचयति देवदत्तश्चैत्रेणेत्यादौ प्रधानीभूतव्यापारानाश्रयत्वेन प्रयोज्यस्य कर्तृत्वानापत्तिः । मम तु धातुभेदान्न दोषः ।

नच स्वतन्त्रपदेन शब्दतः प्रधानस्यैवार्थतः प्रधानस्यापि ग्रहादुभयोः कर्तृत्वं तत्र प्रेरणायाः विशेषणत्वेऽपि तस्या अन्यानधीनत्वलक्षणमार्थं प्राधान्यमिति वाच्यम् । प्रयोज्ये कर्तरि तृतीयेव ण्यन्ताल्लादेरप्यापत्तेः । दुहादीनामप्रधाने कर्मण्यपि लादिस्वीकारेण लादिविधौ कर्त्राद्यंशे प्रधानन्यायाप्रवृत्तेः । तन्त्रार्थप्राधान्यस्य सत्त्वाच्च ।

किञ्चैवमन्तर्भावितण्यर्थेऽप्युभयोः कर्तृत्वापत्तिः।

स्वसाध्यक्रियाजनकप्रयोक्तृत्वं स्वतन्त्रत्वमिति पक्षेऽपि स्वतन्त्रं कारकं क्रियाजनकं कर्त्रित्यर्थे बाधकाभावेन क्रियायाः प्रधानभूताया एव ग्रहणान्नोभयोस्तत्त्वम् ।

मम तु तत्र प्रयोज्यकर्तुः प्रायेण करणत्वेन विवक्षा तत्क्रियाया अपि धातुना प्रायेण करणत्वेनैव बोधान्न तदाश्रयस्य कर्मत्वम् । क्वचित्तु तदपि । यथा गर्गाः शतं दण्ड्यन्तामित्यादौ ।

तत्र प्रयोज्यव्यापारानुकूलव्यापारो धात्वर्थ इति

बोध्यम्। अत एव चारेणाहं परसैन्यमनुप्रविश्य संकलयानीत्यादौ प्रयोज्यकर्तुश्चारादेः करणत्वमुक्तं भामत्याम् । चारेणेत्यस्यानुप्रवेशनान्वयेऽपि करणे एव तृतीयेति बोध्यम् । वाचकत्वे तु न दोषः। प्रयोज्यस्य ण्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ण्यन्तार्थकर्तृत्वाभावात् । "ण्यन्तात्प्रधानकर्तरि ल."इति भाष्ये प्रधानत्वं लप्रकृत्यर्थकर्तृत्वरूपम् । स्पष्टं चेदं "हेतुमतिच"इति सूत्रे भाष्ये । इति सनाद्यर्थविचारः ॥ ४४ ॥

(कुं०टी०) ननु पुत्रीयतीत्यादौ पुत्रकर्मिका इच्छा इत्यर्थाद्धातुनैव कर्माभिधानात् कर्मणि न प्रत्ययः। एवं पिपठिषतीत्यत्रापि पाठकर्मिका इच्छा इत्यर्थेन कर्मणि लकारो न स्यादित्याशङ्क्याह *इषेस्तूभेइति । गमेर्ग्रामः कर्मेत्युक्तेर्ग्रामं ग्रामाय वा गन्तुमिच्छतीति गत्यर्थकर्मणि द्वितीयाचतुर्थ्योः सिद्धिः। इष्यते ग्रामो गन्तुमित्यत्र तु इच्छाकर्म ग्रामोऽपीति प्रथमा । तस्मिन्नेव च कर्मणि लादयः । एवम्"आत्मा जिज्ञासितव्यः"इत्यत्रापि इच्छाकर्मणि कृत्यप्रत्ययः । *ज्ञानस्वभावत्वादिति । आशङ्कासंभावनयोरविशेष इति तत्सूत्रे वार्तिककृता आशङ्कितत्वात् । आशंसा अभिमतविषयिणी इच्छा, भवितव्यमनेनेति ज्ञानं संभावनमिति तु तयोर्भेदः । ज्ञानस्वभावत्वादित्यनेन ज्ञानवद् इच्छाया अपि भविष्यद्विषयत्वं सूचितम् । *वर्तमानाऽपीति । इच्छारूपाऽऽशंसा यद्यपि वर्तमाना तथाऽपि इच्छाविषयस्य भविष्यत्वाद्भविष्यत्काला अतस्तत्र भूतवद्वर्तमानवच्च लाभार्थम् "आशंसायां भूतवच्च"इति सूत्रमिति भावः । *सन्नन्तादिति । उक्तरीत्या पाठस्य भविष्यत्त्वेन पाठविषयकेच्छाया अपि भविष्यत्त्वाल्लुडाद्यनुपपत्तिरित्यर्थः ।

*प्रधानत्वेनेति । लडाद्युपस्थाप्यकालस्य प्रकृत्यर्थे एवान्वयात् । *गुणभूतेति । नहि गुणानुरोधि प्रधानम् । पूर्वोक्तभाष्यविरोधं परिहरति *आशंसात्विति । तत्र हि आशंसा विषयभूता । आशास्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यय इत्यर्थः । *आबाधादिवदिति । 'यत्रहि पीडाविशिष्टः कर्ता तत्र द्वित्वं विधीयते अन्यथा तु पीडितादिशब्द एव स्यादिति भावः । *आशङ्कार्थ इति । सा च प्रयोक्तृधर्मः । शङ्के कूलं पिपतिषतीत्यर्थात् । अत्र स्वार्थे प्रत्यय इति कैयटोक्तेः । आशङ्काविषयभूतं स्वकर्तृकं मरणमिति बोधः । *इच्छाऽऽरोपेणेति । यथा हि प्रवृत्तिरूपमिच्छाकार्यं चेतनेष्वस्ति एवमचेतनानामपीच्छाकार्यसादृश्यादिच्छाऽऽरोप्यते । 'यथा हि संनद्धरज्ज्वादिपाणिं दृष्ट्वा अद्धा अयं कटं चिकीर्षतीत्यनुमीयते, एवं लोष्टानां शीर्णता भिदा च दृष्ट्वा कूलस्य पिपतिषाऽनुमीयते' इति भाष्योक्तेरिति भावः । *पश्चान्मानसेति । स्वकर्तृका मरणविषयिणी इच्छेत्येव तु शाब्दो बोधः । तच्च मरणस्याप्रियत्वादाशङ्काया पर्यवसानम् । ननु क्यजादीनां सुबन्ताद्विधानेन पदविधित्वान्महान्तं पुत्रमिच्छतीत्यादौ सापेक्षे अस्तु वृत्त्यभावः । सनस्तु पदविधित्वाभावात् गन्तुं पिपतिषतीत्यपि स्यादत आह *पदविधित्वाभावेऽपीति । अत एव प्रकर्तुमिच्छति प्रचिकीर्षतीत्यादावुपसर्गस्य द्योतकत्वात्स इति स्पष्टं भाष्यकैयटयोः । एतेन सनपि एकार्थीभावविषय एवेति भावः । *पदविधित्वाभावेऽपि—पदविधित्वाभावेऽपि उक्तप्रयोगवारणाय एकार्थीभाव इत्यन्वयः । अत्रैव मानमाह—*वावचनेति । *सः—एकार्थीभावः । वाग्रहणं विनाऽपि कैयटो विकल्पमुपपादयति *वृत्तेरिति ।

यङन्ते निरूपयति *पुनःपुनरिति । *बाहुल्यं चेति ।

पौनःपुन्यं भृशार्थो वा क्रियासमभिहार इत्युक्तेः । *गर्हाद्यपीति । *द्योत्यन्त इति पूर्वेणान्वेति । *तद्विषये-कौटिल्यादिविषये । णिजर्थं निरूपयति *णिज्वाच्यप्रेरणेति । पाचयतीत्यस्य पाकविषयिका प्रेरणेत्यर्थः । *विशेषणत्वापत्तेरिति । प्रेरणाविषयपाके एव प्रयोजकस्य कर्तृत्वेनान्वयात् । द्योत्यत्वे विशेषणत्वापत्तिरित्यत्र मानमाह *अतएवेति । *किञ्चैवमिति । प्रेरणाया अपि गत्यर्थत्वात्कर्तरि क्तः स्यादित्यर्थः । *प्रयोज्यस्येति । प्रेरणाया एव प्रधानत्वात् । *धातुभेदादिति । णिजन्तस्य णिप्रकृतेश्च धातुत्वात् । *उभयोरिति । स्वव्यापारे उभयोरपि स्वतन्त्रत्वात् । चारो दूतः । इति सनाद्यर्थविचारः ॥ ४४ ॥

(क० टी०) अथ धातुप्रकृतिकसनाद्यर्थं निरूपयति *पिपठीति । *सनर्थ–सन्वाच्य. । *तत्र-इच्छायाम् । *लादय इति । तेच न धात्वर्थकर्मणि तत्सङ्गृहीतकर्मत्वेन अकर्मकत्वात्, किन्तु ग्रामादिकर्मणि तदाह *अत एवेति । द्वितीयकर्मसत्त्वादेवेत्यर्थः । *ज्ञानेति । तथात्वे हेतुमाह *आबाधेति । *इत्यन्यत्रेति । आशङ्कायामिति वार्त्तिकविषये आह *श्वेति । एककोटिक ज्ञानमाशङ्का । वार्त्तिकप्रत्याख्यानप्रकारमाह *श्वकर्तृकेति । इद पक्षान्तरस्याप्युपलक्षणम । *अत्र–कुल पिपतिषतीत्यादौ । *पश्चादिति । तत्र चेदृशसमभिव्याहार कारणम् । ननु फलसत्त्वे ऽपि सनो ऽपदविधित्वात्सूत्राप्राप्तेः कथ सो ऽत आह *तस्येति । सन इत्यर्थ. । भाष्यमाह *वावचनेति । तत्रत्यकैयटमाह *वृत्तेरिति । यङर्थमाह *पुनरिति । तस्य तद्विशेषणत्वादाह *द्योत्यत इति । अपौनरुक्त्यायाह *कार्त्स्न्यमिति । प्रायिकमिदमित्याह *क्वचिदिति । *गर्हाद्यपि–द्योत्यमादिग्राह्य चिन्त्यम् । *तद्विषये–कौटिल्यादिविषये । दीक्षिताद्युक्तेरसाङ्गत्यायाह *अनभीति । णिजर्थमाह *पाचयतीति । *कर्तृत्वेति । तल्लक्षणे प्रधानी

भूतेति विशेषणात् । *अत एव–तत्र तस्य तत्त्वेन विशेषणत्वादेव । *एवमपि—द्योत्यत्वे ऽपि । *अङ्गीकारे–स्वतन्त्रत्वविवक्षया । दोषान्तरमाह *द्योत्यस्येति । सिद्धान्ते आद्यदोषाभावे ऽपि चरमदोषमुद्धरति *ममत्विति । तस्मादुभय दुर्वचमित्युक्तदोषापत्त्या वाच्यत्वमेव न द्योत्यत्वमिति भाव । तत्र हीति पाठ । वास्त्वर्थे शब्दत इत्यर्थ. ।। ननु प्रधानाप्रधानन्यायेन नायं दोषो ऽत आह *दुहेति । अवैरूप्यायाह *कर्त्रांयशे इति । सूत्रैकदेशे इत्यर्थः । तदभावमभ्युपेत्येदम् । वस्तुतस्तत्सत्त्वमेवेत्याह *तत्रेति । *एवम–तत्रोक्तरीत्या । उभयो. कर्तृत्वे स्वत्वानिवेशे ऽपि नापत्तिरित्याह *स्वसाध्येति । अधिकारादाह *कारकमिति । तदर्थमाह *क्रियेति । नन्वेव कथ सिद्धान्ते तत्रान्तर्भावितण्यर्थे तृतीया ऽत आह *ममत्विति । प्रायेणेत्यस्य फलमाह *कचित्त्विति । प्रधानक्रियान्वये प्रोक्तरीत्या दोषाभावादाह *अनुप्रविश्येति । अपिना ण्यर्थः । ननु सिद्धान्ते प्रयोज्यकर्तृरि तृतीयावण्ण्यन्ताल्लादेरप्यापत्तिरेवात आह *वाचकेति । ननु किमेतावता प्रधानन्यायस्य तु असचार उक्त एवात आह *ण्यन्तादिति । *स्पष्टमिति । तत्र हि द्योतकतापक्षे उभयोरविधानापत्तिमुक्त्वा वाचकतापक्षे उक्तरीत्या समाहितम् । तस्योक्त एवाशयो न कैयटोक्त इत्युद्द्योते स्पष्टम् । इति सनाद्यर्थविचार ॥ ४४ ॥

कर्तृकर्मविहितकृतां कर्तृकर्मणी वाच्ये । तयोरेव च लिङ्गाद्यन्वययोग्ययोः प्राधान्यम्। "सत्त्वप्रधानानि नामानि"इत्युक्तेः । कर्मकृति च फलव्यापारयोर्व्यत्यास इत्युक्तम् ।

तत्र शतृशानजन्तार्थस्याख्यातार्थक्रियाविशेषणत्वमित्यर्थो 'लिखन्नास्ते भूमिम्'इत्यत्र चतुर्थोल्लासे स्पष्टः काव्यप्रकाशे ।

हरिरप्याह—

चङ्क्रम्यमाणो ऽधीष्वात्र जपंश्चङ्क्रमणं कुरु ।

तादर्थ्यस्याविशेषेऽपि शब्दाद्भेदः प्रतीयते ॥ इति।

अध्ययनमत्र जपः । उभयत्रापि जपस्यैव विधिः । शब्देन त्वाद्ये जपस्य प्राधान्यमन्ते तस्य गुणभाव इति तदर्थः ।

क्वचित्तु शत्रन्तार्थस्याबुद्धिपूर्वकत्वादिरूपमप्राधान्यं प्रकरणादिवशाद्व्यञ्जनया वा प्रतीयते । यथा 'लिखन्नास्ते' इत्यादौ । एवं च तदर्थे समानाधिकरणनामार्थस्य विशेषणत्वमेव । अन्यथा तत्र विशेषणतामापन्नस्याख्यातार्थे विशेषणत्वं न स्यात । गलद्रक्तधारेत्यादौ समासे तद्विग्रहवाक्ये च विपरीतमिति न गलदित्यादेः पूर्वनिपातासिद्धिः ।

भावार्थानां कृत्यसंज्ञकतव्यादीनां खलर्थानां नपुंसके भावे क्तस्य च साध्यावस्थापन्नधात्वर्थानुवादकत्वमेव । साध्यावस्थस्यापि पचतिरूपमित्यादाविव लिङ्गयोगः । अत एवैधितव्यमित्यादौ न क्रियान्तराकाङ्क्षा । अतस्तेष्वेकवचनमेव । "सत्त्वप्रधानानि नामानि" इत्युक्तेः । तत्र लिङ्गान्तरासम्भवाल्लिङ्गसर्वनामत्वाच्च नपुंसकत्वमेव । लिङ्गान्वयित्वमेव च तत्र सत्त्वम् । शायितव्यादावर्थे दिगन्त्या लिङ्गान्वयोपयोगिसिद्धत्वावेदनमिति कश्चित् ।

घञादिवाच्यस्तु सिद्धावस्थापन्नः । पाक इत्यादौ क्रियान्तराकाङ्क्षादर्शनात्, सर्वसङ्ख्यादियोगदर्शनाच्च । तत्रापि प्रकृत्या साध्यावस्थापन्नस्यैवोपस्थित्या 'ओदनस्य पाकः' इत्यादौ न कारकान्वयहानिः ।

अध्याहृततिङन्तार्थक्रियायां तत्र कारकान्वय इति तु न युक्तम्। "नलोक-"इतिनिषेधेन कृद्योगषष्ठ्यनापत्तेः। "कर्तृकर्मणोः"इत्यस्य वैयर्थ्यापत्तेश्च। 'काष्ठैः पाकः' इति त्विष्टापत्तिग्रस्तम्।

नचैकस्यैव सिद्धत्वसाध्यत्वाभ्यामुपस्थितिः कथम्, विरोधादिति वाच्यम्। यथा सम्बन्धिभेदेनैकस्यैवाचार्यत्वं मातुलत्वं च, तथा कारकलिङ्गादिसम्बन्धिभेदेन साध्यत्वस्य सिद्धत्वस्य चैकत्र विरोधस्यैवाभावात्। यथा वा 'मृगो धावति पश्य'इत्यादौ धावनस्य मृगं प्रति साध्यत्वं दर्शनं प्रति च साधनत्वं तद्वत्। एकस्यैव धात्वर्थस्य साध्यत्वेन प्रकारता सिद्धत्वेन विशेष्यता। एकनिष्ठत्वाच्च तयोर्न स्फुटं ग्रहो बोधे।

एतेन घञ्वाच्यो भावः प्रधानमिति ग्रन्था व्याख्याताः।

तदुक्तं "कर्तरि कृद्"इति सूत्रे भाष्ये "घञादिवाच्यो भावो बाह्यः प्रकृत्यर्थात्" इति।

"तुमुनादिवाच्यस्त्वभ्यन्तरः"इति "तुमर्थे"इति सूत्रे भाष्ये। तत्र शोभना इत्यस्य धात्वर्थफलान्वये 'शोभनं पाकः' इत्येव। "कर्तृकर्मणोः"इति षष्ठी तु न। कर्तृसाहचर्येण कर्मणां धात्वर्थे भेदेनान्वयिन एव तत्र ग्रहणात्। स्पष्टं चेदं "पूजनात्पूजितम्" इत्यत्राष्टमे भाष्ये।

एतच्च निरूपितम्-"कर्तृकर्मणोः"इति सूत्रे शब्दे-

न्दुशेखरे ।

व्यापारान्वये तु 'शोभनः पाकः' इत्येव । तस्य कर्मत्वाभावेन तद्विशेषणे द्वितीयाया अप्राप्तेः । तिङन्तार्थव्यापारान्वये तु नपुंसकतैव ।

एतेन घञादीनां प्रयोगसाधुतामात्रमित्यपास्तम् ।

तदुक्तम्—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥इति ।

सिद्धभावः सिद्धत्वम् । यथा पचतीत्यादौ कल्पितान्वयव्यतिरेकाभ्यां धातुभागः क्रियायां प्रत्ययः कारके इति कल्पनाऽऽश्रीयते, तथा प्रकृतिः साध्यस्वभावमाचष्टे, घञ् तस्याः सत्त्वभावमित्यर्थ इति हेलाराजः । अनेनात्रापीयं शास्त्रकृत्कल्पनैवेति दर्शयति । स्पष्टं चेदं "भावे" "सार्वधातुके यक्"इति सूत्रयोर्भाष्ये । साध्यत्वेन भानादेव क्रियार्थक्रियोपपदे विधीयमानतुमुनादिसिद्धिः–'भोक्तुं पाकः' इत्यादि, क्रियापदस्य साध्यत्वविशिष्ट एव वृत्तेः । 'पदार्थः पदार्थेनान्वेति' इति न्यायस्तु क्रियातिरिक्तविषय एव । 'भोक्तुं गतो' 'देवदत्तेन ग्रामो गतः' 'कृतपूर्वी कटम्' इत्यादौ कारकाणां गुणभूतक्रियाया अन्वयात् । साध्यावस्थस्य प्रकारतया भानात् तस्य प्रसज्यप्रतिषेधरूपनञर्थे ऽन्वयेन तेन द्वित्वावच्छिन्नपा-

काभावकर्तृका सत्तेति बोधाभिप्रायेण पाकौ नास्तीति न।

वस्तुतो भोक्तुं पाको भोक्तुं गत इत्याद्यसाध्वेव। क्रियार्थायां क्रियायामित्युक्त्या प्रत्यासत्त्या क्रिययोरेकजातीयत्वलाभेन स्वप्रकृतिकप्रत्ययार्थे प्रत्यगुणीभूतायाः साध्यावस्थमात्राया एव क्रियार्थक्रियाया ग्रहणात्। ध्वनितं चेदम् "उपपदमतिङ्" "गतिकारकोपपदात्कृद्"इतिसूत्रयोर्भाष्य इत्यन्यत्र प्रपञ्चितम्।

किञ्च यत्र कार्ये क्रियावाचकशब्दग्रहणं तत्रोक्तक्रियाया एव ग्रहणम्, यत्र तु क्रियारूपार्थग्रहणं तत्र गुणीभूतादेरपि ग्रहणम्।

अत एव गतपाकादियोगे कारकविभक्तिकृत्वसुच्क्त्वादीनां साधुत्वमित्यन्यत्र विस्तरः॥ ४९॥

(कुं०टी०) *कर्तृकर्मणीइति। नामार्थयोरभेद इति न्यायात्। *व्यत्यासइति। पक्व इत्यत्यत्र व्यापारजन्यविक्लित्त्याश्रय इति बोधात्। *लिखन्नास्तेइति। अतिमानवतीं प्रति सख्या इयमुक्तिः। दयितः भूमिं लिखन् बहिरास्ते इत्यन्वयः। *अध्ययनमिति। जपन्नित्यस्य पठन्नित्यर्थः। *अबुद्धिपूर्वकत्वादीति। अत एव तत्र लिखतीति नोक्तम्। *गलद्रक्तेति। रामसैन्येन परिवृतां लङ्कां वीक्ष्य रावणस्येयमुक्तिः। छिन्नगलक्षरद्रक्तधाराप्रक्षालितशंभुचरणप्रसादस्य किमिदं फलमित्यर्थः। भावार्थानामित्यस्योत्तरत्र सर्वत्रान्वयः। धातोर्भावना-

परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-

स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ इति-

सलिख्यात्र लिखन्निति नतु लिखतीति, तेन शत्रा लेखनस्या-प्राधान्यमबुद्धिपूर्वकत्वरूपम्, आस्ते इति-न त्वासीदिति, तेन तथावस्थानस्य प्रसादपर्यन्तता, भूमिमिति न तु भूमाविति तेन बुद्धिपूर्वकं भूमौ न किञ्चिल्लिख्यते इति व्यङ्ग्यमित्युक्तम् । अग्रिमानुरोधेनाह *अध्ययनेति । तादर्थ्यस्येत्यस्य चङ्क्रमणे जपार्थत्वस्येत्यर्थः । तदाह *उभेति । तुर्यपादार्थमाह *शब्देन-त्विति । तत्राऽपि विशेषमाह *क्वचित्त्विति । उक्तमिदम् । *एवं च—तस्य तत्र विशेषणत्वे च । तत्र नामार्थे व्युत्पत्तिवैचित्र्यादाह *गलदिति । कर्मधारयः । भावेत्युभयविशेषणम् । अत एव भेदेनाह *नपुंसक इति । *अतः—क्रियायां स्वतः एकत्वाद्, आरोपनिमित्ताभावाच्च । ननु तत्त्वे कथं लिङ्गयोगो ऽत आह *सत्त्वेति । दृष्टान्तदानेन तस्यादृष्टचरत्वं निरस्तम् । तन्मूलकमेवानतिप्रसङ्गायाह *तत्रेति । लिङ्गानां मध्ये इत्यर्थः । लौकिकशास्त्रीयलिङ्गाभावादाह *लिङान्तरेति । बीजं तूक्तरीत्या निर्वाहे एतत्कल्पनमफलमिति । विशिष्योक्तेः फलमाह *घञादीति । आदिना क्तिनादि । *क्रियान्तराकाङ्क्षेति । सर्वसंख्यादियोगेति पाठान्तरम् । यत्किञ्चिद्योगस्य पूर्वत्रापि सत्त्वात्सर्वेत्युक्तम् । विवक्षया शास्त्रीयसम्भवे त्वाह *लिङ्गेति । सर्वलिङ्गसाधारणत्वाच्चेत्यर्थः । ननु सत्त्वस्यान्यादृशत्वे ततः कथं तत्सिद्धिरत आह *लिङ्गेति । *तत्र—निरुक्ते । एकदेशिमतमाह *शायितव्येति । आदिना लिङ्गत्वावच्छिन्नम् । नन्वोदनस्य पाक इत्यादौ कारकान्वयो न स्यात् । साध्यावस्थापन्नक्रियास्वेव तदन्वयव्युत्पत्तेरत आह *तत्रापीति । घञन्तेऽपीत्यर्थः । परमतं खण्डयति *अध्याहृतेति । *क्रियायाम्—तस्यामेव । *तत्र—ओदनस्य पाकइत्यादौ । तद्वत्तत्रापि तथैवेत्याह *इत्यस्येति । नन्वेवं काष्ठैः पाक इत्यपि स्यादत आह *काष्ठैः पाक इति । *कथम्—एकदेत्यादिः । *सम्बन्धीति । शिष्यभागिनेयेत्यर्थः । क्रियाविषयमेव दृष्टान्तमाह *यथावेति । एतेन

पाक इत्यादौ वारद्वय बोधः स्यादित्यपास्तम । ननु प्रत्ययार्थान्वये स्तोक पाक प्रकृत्यर्थान्वये स्तोक पाक इति विरुद्धम् । सिद्धत्वान्वये पुस्त्वस्य दुरुपपादत्वादत आह *एकस्येति । तयो. प्रकारताविशेष्यतयो. । बाह्यत्वस्य अन्यथाऽसम्भवादुक्तमेव तत्तापर्यम् । तत्र विशेषणोक्तिफलमाह *तुमुनादीति ।'तथा तत्र भेदाभावात् । तदेवाह *तत्रेति । घञाद्यन्त इत्यर्थ. । इत्येवेति । पाकादिपदेभ्यो ऽपि फलस्य साध्यत्वेनैवोपस्थापनात् । कथ स्पष्टमत आह *एतश्चेति । *तस्य–व्यापारस्य । *नपुसकतैवेति । ज्योतिष्टोमेन भक्तिपूर्व यजेतेत्यादौ पर तु प्रथमा नतु द्वितीया उक्तहेतो । नैयायिकनव्योक्ति खण्डयति *एतेनेति । उक्तप्रयोगाणामिष्टत्वेनेत्यर्थ. । *घञादीनाम्–लब्धावर्तमानत्वाद्यबोधकानाम् । *तदुक्तम्–हरिणा । पूर्वानुरोधेनाह *सिद्धत्वमिति । तदर्थमाह *यथेति । सिद्धान्ते तयोरप्यसत्त्वस्य प्रागुक्तत्वादाह *कल्पितेति । प्राप्ताप्राप्तविवेकन्यायेनाह *सत्त्वभावमिति । तस्य फलान्तरमाह *साध्यत्वेनेति । नन्वेव पदार्थ. पदार्थेनेति न्यायविरोधो ऽत आह *पदार्थइति । तत्र मानमाह *भोक्तुमिति । नन्वेव पाकादिपदोपात्तस्य प्रसज्यप्रतिषेधार्थकनञर्थेऽन्वयापत्तौ पाकौ नास्तीत्याद्यपि स्यात्तथा बोधसम्भवादत आह *साध्येति । एकत्र विशेषणतयेति व्युत्पत्तेः । *तस्य–प्रकृत्यर्थस्य । घञ्द्योत्यस्तु न क्रियेति न तत्र तस्यान्वयः ।

इदं प्राचीनमतमिति सूचयन्सिद्धान्तमाह *वस्तुत-इत्यादि । यद्यप्याद्येनैवोभयनिरासस्तथाऽपि तस्याः स्वरूपमाह *साध्येति । *अन्यत्र—शब्देन्दुशेखरे । नन्वेव पञ्चकृत्वः पाक इत्याद्यपि न स्यादत आह *किञ्चेति । अभ्यर्हितत्वादाह *कारकेति । आदिना वतिः । अत एव द्विष्प्रयोगो द्विर्वचनेऽचीत्यादिप्रयोगसङ्गति । अतिप्रसङ्गस्त्वभिधानान्न तदाह *इत्यन्यत्रेति । उद्द्योतादावित्यर्थः ॥ ४५ ॥

तुमुन्नादीनामसत्त्वभूतो भाव एवार्थः । "अव्ययकृतो भावे" इत्युक्तेः । पाक इत्यादाविव तुमुनर्थे वैलक्ष-

ण्यानवुभवात् । एवं चायं धात्वर्थानुवादक एव । तत्र "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्" इत्युक्तेरुद्देश्यत्वरूपं तादर्थ्यमपि तुमुन्र्थोऽस्यम् । तच्च संसर्गः । प्रकृत्युपपदार्थयोस्तादर्थ्यवत्समानकर्तृकत्वमपीहाभिधानबललभ्यः संसर्गः ।

क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्येन तु न भानम् तदाकाङ्क्षादर्शनात् । कारकान्वययोग्यतावच्छेदकवैजात्येन तु भानमस्त्येव ।

एतद्विहितण्वुल् तु कर्तर्येव । 'कृष्णं द्रष्टुं याति' 'तं दर्शको याति' इत्यादौ कृष्णकर्मकभविष्यद्दर्शनोद्देश्यकं दर्शनकर्तृकर्तृकं यानम्, कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं तद्दर्शनोद्देश्यकं गमनमित्यादिरीत्या बोधः ।

एवं क्त्वाणमुलादीनामपि असत्त्वभूतभाव एवार्थः । तुमुन्वत् क्त्वाप्रकृत्यर्थक्रियाऽपि क्रियान्तरे विशेषणम् । धातुसम्बन्धाधिकारात् । तयोः संबन्ध एककर्तृकत्वं पूर्वकालत्वोत्तरकालत्वं च । समानकर्तृकयोः पूर्वकाले क्त्वेत्यनुशासनात् । समानकर्तृकयोरिति निर्धारणे सुप् । पूर्वकाले इति बहुव्रीहिः । समानकर्तृकयोः क्रियारूपार्थयोर्मध्ये पूर्वकालसंबन्ध्यर्थवाचकाद्धातोः क्त्वेत्यर्थः । एवं वाक्यशक्त्योक्तसंबन्धतात्पर्यग्राहकाः क्त्वादयः । सूत्रबलादेव तयोः क्रिययोरेककर्तृकत्वबोधः ।

कश्चित्तु जन्यत्वव्याप्यत्वादिकमप्यधिकं भास-

ते । तत्तु मानान्तरगम्यत्वान्न क्त्वाद्योत्यम् । यथा भुक्त्वैव तृप्तो न पीत्वा, अधीत्य तिष्ठतीत्यादौ । अत एवाध्ययनकालिकस्थितिमादायैवाधीत्य तिष्ठतीति प्रयोगो न तदभावकालिकस्थितिमादायेति बोध्यम् ।

तदपि संसर्गमर्यादयैव भासते ।

एतेन समानकर्तृकत्वं क्त्वावाच्यमित्यपास्तम् । संसर्गमर्यादयैव लाभेनान्यलभ्यत्वात् ।

"कर्तरि कृद्" इत्यस्य तु नात्र प्रवृत्तिः, 'अव्ययकृतो भावे' इत्युक्तेः । तत्राव्यवहितपूर्वकालत्वाद्येव संसर्गः । अत एव वर्षान्तरीयभोजनमादाय भुक्त्वा व्रजतीति न ।

अव्यवधानं च तात्पर्यवशाद्दण्डमुहूर्ताहरादिभिर्यथायथं बोध्यम् । तेनाद्य भुक्त्वा श्वो गन्तेत्याद्युपपत्तिः ।

नच पूर्वकालत्वादेः संसर्गत्वे मुखं व्यादाय स्वपितीति न स्यात् । व्यादानस्य स्वापपूर्वकालत्वाभावादिति वाच्यम् । व्यादानोत्तरमपि स्वापानुवृत्त्या तमादाय तदुपपत्तेः ।

अत्र कालिकसम्बन्धेन व्याप्यत्वमपि भासते । तेन व्यादानोत्तर स्वापे कृते तदनुवृत्तावेव तथा प्रयोगो न तु मुखमीलने तथाप्रयोगः । तदातननिद्रायास्तद्व्याप्यत्वाभावात् ।

"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादौ

दर्शादियागवैशिष्ट्यस्य सोमयागे विधानम् । अतो द-
र्शादितः प्राक् सोमकरणे प्रत्यवायसिद्धिः । दर्शमात्र-
करणे सोमाकरणे च तदभावसिद्धिः । आधानोत्तरं
तावत्कालं संदिग्धजीवनस्याविश्रद्धावतस्तु ततः प्राक्
सोमानुष्ठानेऽपि न प्रत्यवायः । 'प्रागपि सोमेनैके'
इत्याश्वलायनोक्तेः ।

उत्तरकालमात्रं पूर्वकालमात्रं वा संबन्ध इति
तु न युक्तम् । संबन्धस्योभयनिष्ठताऽऽवश्यक-
त्वात् । तत्रोत्तरकालवृत्तित्वं न तद्ध्वंसाधिकरण-
कालवृत्तित्वं स्थित्वा पश्यतीत्यादावभावात्
किन्तु तदधिकरणसमयध्वंसाधिकरणसमयोत्पत्ति-
कत्वम् । उत्तरकालस्य प्रत्ययार्थत्वं तु न युक्तं
कृति प्रत्ययार्थस्य विशेष्यत्वदर्शनात्तस्य विशेष्य-
त्वापत्तौ क्रियाप्राधान्यविरहेणाभीक्ष्ण्ये द्वित्वाभावा-
पत्तेः । गुणभूतक्रियामाश्रित्य तत्प्रवृत्तौ पाचक इत्या-
दावतिप्रसङ्ग इति प्राञ्चः ॥ ४६ ॥

( कुं० टी० ) असत्त्वभूतवाचकत्वे युक्तिमाह *पाक-
इत्यादाविनेति । यथाऽत्र लिङ्गसंख्यान्वयित्वरूपं वैलक्ष
ण्यमनुभूयते न तथा तुमुनादावित्यर्थः । *अयमिति । तुमुनि-
त्यर्थः । *द्वयोः—वाक्ययोः । क्रमेण शाब्दबोधं दर्शयति—
*कृष्णकर्मकेत्यादि । *वाक्यशक्येति । संसर्गस्य वाक्यल-
भ्यत्वात् । एतेनैषां पराभिमतं क्त्वावाच्यत्वं निराकृतम् । तत्र
चैत्रभोजनोत्तरं मैत्रस्य गमने चैत्रेण भुक्त्वा मैत्रो गच्छतीति
प्रयोगवारणाय समानकर्तृकत्वस्य संसर्गता ।

ननु —

अवजानासि मां यस्मादतस्ते न भविष्यति ।

मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥

इत्यत्र भिन्नकर्तृके कथं क्त्वाप्रत्यय इति चेत्, तत्रानाराध्य स्थितस्येति क्रियान्तराध्याहारात् । ननु भुक्त्वैव तृप्तो न पीत्वेति प्रयोगानुपपत्तिः । तृप्तौ भोजनात्तृप्तस्येव पानात्तृप्तस्याप्यविशिष्टत्वादत आह *जन्यत्वेति । कदाचिदध्ययने अधीत्य तिष्ठतीति न प्रयोगः, किन्तु निरन्तराध्ययने एवेत्यभिप्रेत्याह *व्याप्यत्वादिकमपीति । व्याप्यत्व चात्र कालिकम् । तथा च स्थितिसमानकालिकाभावाप्रतियोगित्वमध्ययने लभ्यते । तत्र चैत्रीयाध्ययनसमानकालिकमैत्रस्थितौ कालिकव्याप्यत्वसत्त्वादुक्तप्रयोगवारणाय सामानाधिकरण्यविशिष्टव्याप्यत्वमेव संसर्गो बोध्यः । *मानान्तरेति । तात्पर्यादीत्यर्थः ।

एतेन क्त्वो नानार्थत्वं वदन्तः परास्ताः । अधिकमित्युक्त्या पूर्वार्थसमुच्चयलाभेन नानार्थत्वाभावात् ।

व्याप्यत्वप्रतीतेरेव मुखव्यादानशून्यकाले मुखं व्यादाय स्वपितीति न प्रयोगः । "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्र क्त्वाप्रत्ययेन वाजपेयाङ्गत्वं बृहस्पतिसवस्य बोध्यत इति मीमांसकाः ।

*वर्षान्तरीयेति । न केवलं पौर्वापर्य सम्बन्धः किन्तु अव्यवधानगर्भमिति भावः ।

एतेन पूर्वकालत्वं क्त्वावाच्यमभ्युपेत्य व्यवधाने तथाप्रयोगमभ्युपगच्छन्तः परास्ताः ।

ननु क्रियान्तरानुकूलक्षणविलम्बाभाववत्त्वमव्यवधानम् । तत्र च क्षणे विषयान्तरसञ्चारे ऽपि भुक्त्वा व्रजतीति प्रयोगात्तादृशमव्यवधानं दुर्वचमतस्तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिकालत्वमेवाव्यवहितपूर्वकालत्वं वाच्यम्, तत्र च कालस्यानुगतस्य विशेषयितुमशक्यत्वमत आह *तात्पर्यवशादिति । *वैशिष्ट्यस्येति । दर्शाद्युत्तरकर्तव्यतायामावश्यकत्वेन तात्पर्यमिति भावः । *नप्रत्यवायइति ।

अत्रेदं चिन्त्यते—एकस्यैव कर्मणः कथं मतभेदेन धर्माधर्मजनकत्वम् । नहि षोडशिग्रहणाग्रहणयोः कदाऽप्यधर्मजनकत्वम् । अत एवोदितानुदितहोमयोः सूत्रभेदेन विकल्पः । तस्मात्स्मर्तृभेदादुभयोरपि धर्मत्वमेव न्याय्यमिति ।

पूर्वकालत्वं न क्त्वावाच्यम् । भोजनपूर्वकालिकं गमनमिति बोधापत्तेः किन्तु उत्तरकालिकत्वमिति मणिकारमतन्निराकरोति *उत्तरकालस्येति ॥ ४६ ॥

( क० टी ) पूर्वत्र सत्त्वरूपताप्रतिपादनाद्विशेषमाह *तुमुनेति । द्वितीये मानमाह *अव्ययेति । आद्ये मानमाह *पाक इति । *एव च-तस्यैव तदर्थत्वे च । *तत्र-तुमुन्नन्ते । तादर्थ्यस्यानेकविधत्वादाह *उद्देश्येति । तस्यात्र न प्रकारत्वम्, अनन्यलभ्य इति न्यायादित्याह *तच्चेति । *इह—तुमुनन्ते । *अभिधानम्—सूत्रम् । भूषणादिमत खण्डयति *क्रियान्तरेति । स्वमते इष्टसिद्धिमाह *कारकेति । आदिपदग्राह्यो न ण्वुलित्याह *एतद्विहितेति । तत्र तुमुन्प्रकृत्यर्थं उपपदार्थं प्रति विशेषण नात्रेत्याह *कृष्णमिति । आदिपदग्राह्यमेव विशदयति *एवमिति । अत्रादिग्राह्य चिन्त्यम् । *एवार्थ इति । हेतुरुक्त एव । *तुमुन्वत्-तुमुन्प्रकृत्यर्थक्रियावत् । अपिना णमुल्प्रकृत्यर्थक्रियासमुच्चयः । तत्र मानमाह *शास्त्रेति । प्रत्यया इति तु प्रत्याख्यातमेव । अन्यत्र विशे-

षणत्वेनेति व्युत्पत्तिस्त्वसति गमके इति भाव । *तयो — धात्वर्थयोः । तत्र मानमाह *समानेति । एकेत्यर्थः । ततस्तल्लाभे साधनमाह *समानेति । षष्ठीसप्तम्यो' सग्रहायाह *सुबिति । *एव च–तथा सूत्रार्थे च । *उक्तेति । एककर्तृकत्वादीत्यर्थ । इद मन्यदेव द्योतकत्व प्रागुक्तेभ्य । नन्वेतावता द्वितीयसबन्धबोधेऽपि कथमाद्यसबन्धबोध,,तस्य तदवाच्यत्वादत,आह *सूत्रेति । *समानेति । तद्विशेषणबलादेवेत्यर्थः । तयोस्तद्वत्तदपि सर्वं क्त्वद्योत्यामिति । भूषणाद्युक्तेरसांगत्यायाह *क्वचित्त्विति । आदिना व्यापकत्वम् । *मानान्तरेति । एवकारतात्पर्यादीत्यर्थ । *यथेति।आद्ये जन्यत्वम्,द्वितीये व्याप्यत्वम् । आदिना यथाक्रम भुक्त्वा व्रजति ईश्वरो ज्ञात्वा तिष्ठतीत्यादि । *अतएव–तयो' कालिकव्याप्तेर्भानादेव । प्रकारत्वादिनिरासायाह *तदपीति । जन्यत्वादिकमपीत्यर्थ । मीमांसकमत खण्डयति *एतेनेति । अस्यार्थमाह *ससर्गेति । भुक्त्वा व्रजतीत्यादौ बाधलक्षणे एकैकाधिकरणे ऋत्विगभ्युच्चयाधिकरणेच समानकर्तृकत्वमर्थमादाय पूर्वपक्षसिद्धान्तौ कृतौ तत इतिसमानकर्तृकता पूर्वकालता च प्रतीयत इति देवताधिकरणे भामत्युक्तिस्तु सिद्धान्ते नानुपपन्ना । तत्प्रकारकबोधानुभवस्तु नास्त्येव । एतेनापूर्वकालिकत्वमात्र शक्यमिति जीर्णनैयायिकोक्तम्, अव्यवहितपूर्वकालिकत्वमात्र शक्यमिति वक्ष्यमाणोपपत्तिक ततो नव्योक्तम्, पूर्वकालिकत्व न शक्य भुक्त्वा व्रजतीत्यादौ भोजनोत्तर व्रजतीत्यन्वयबोधात् व्रजनपूर्वकाले भोजनमित्यबोधाच्च तस्मादुत्तरकालरूपमानन्तर्य शक्यमिति ततो नव्योक्तमप्यपास्तम् । तदेतद् ध्वनयन्भूषणकारादिमतमाह *तत्रेति । तयोर्मध्ये इत्यर्थ । अनतिप्रसङ्गायाह *अव्यवेति । दण्डो घटो । आदिना दिनादि । *तेनेति । तत्र दिनकृतव्यवधानाभावात् । *तदुपपत्ते –तथाप्रयोगोपपत्ते । नन्वेव मुखव्यादानोत्तर स्वापानुवृत्तावेव मध्ये मुखमीलने सति तथा प्रयोगापत्तिरत आह *अत्रेति । उक्तप्रयोग इत्यर्थ' । दैशिकानिरासायाह *कालिकेति । *तदिति । व्यादानानुवृत्तावेवेत्यर्थ । ननु पूर्वकालत्वादे ससर्गत्वे सोमयागप्रकरणस्थवाक्ये सोमयागपूर्वकालत्वस्य दर्शादौ विधानात्तथा सोमाकरणे दर्शादिमात्रकरणे प्रत्यवायापत्तिरत आह *दर्शेति । विनिगमनाविरहेण

तयोस्त्यागादाह *दर्शादीति । विशिष्टविधावपि प्राप्ताप्राप्तविवेकन्यायेनेति भाव । अत्र मतान्तरमाह *आधानोत्तरमिति । *तावत्काल दर्शादिपर्यन्तम् । उक्तार्थसिद्धेरन्यथोपपत्त्या न तत्र तद्दैशिकविधानमिति भूषणाद्युक्त खण्डयति *उत्तरेति । इद चारम्भे प्रपञ्चितम् । नैयायिकनव्योक्त खण्डयति *तन्नोत्तरेति । विशिष्टसबन्धमध्य इत्यर्थ । *नतु-पूर्वक्रिया । *स्थित्वेति । स्थितेर्दर्शनकालेऽपि सत्त्वात् । *तदधीति । पूर्वक्रियोत्पत्त्यधिकरणक्षणध्वसेत्याद्यर्थः । नैयायिकनव्योक्ति खण्डयति *उत्तरेति । तद्रूपानन्तर्यस्येत्यर्थः । इष्टापत्तावाह *क्रियेति । ननु तत्र यथाकथञ्चित्क्रियाग्रहणमत आह *गुणाते । *प्राञ्च.—भूषणकृदादय ॥ ४६ ॥

परे तु समानकर्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तेर्धातोः क्त्वेति सूत्रार्थात् पूर्वकालः क्त्वाप्रकृत्यर्थे प्रकारः, तद्बलादानन्तर्यसम्बन्धेन तस्य धात्वन्तरार्थे ऽन्वयः ।

अत एव भाष्ये समानकर्तृकत्वेन पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोक्तत्वान्नेति परिहृतम् । पूर्वशब्दस्यात्र पूर्वकालो ऽर्थो न तु धातोस्तत्र वृत्तिरिति तदर्थः । नतूक्तार्थानामप्रयोग इति तदर्थः । तथा सति "इह कस्मान्न भवति आस्यते भोक्तुम्" इति शङ्कापरभाष्यासङ्गतेः । तत्रापि फलार्थकतुमुना पूर्वकालत्वस्यासिक्रियायां द्योतितत्वेन तदप्राप्तेः । तत्र पूर्वकालत्वस्याप्रतीतौ तु कथं क्त्व आपादनम् । वासरूपन्यायेन लटा साधितमित्यन्यत । यदा त्वासेः क्त्वा तदा भुजेस्तुमुनन‌भिधानान्नेति कैयटः । पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यादावन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा अन्येभ्यो व्रजितृभ्यः प-

आद्व्रजतीत्यर्थ इति । साधनोत्तरक्रियापेक्षपौर्वकाल्यमिति "विभाषाऽग्रे"इति क्त्वा आनन्तर्यसम्बन्धेन पूर्वकालिकदर्शादिवैशिष्ट्यं च सोमे विधीयत इति न तत्र दोषः ।

एवंच पूर्वकाल इति कर्मधारय एव । भूत इति तु नोक्तं लाघवानादरात्, तत्त्वेन बोधाननुभवाच्च । एवं च षष्ठ्याः सम्बन्धवाचकत्ववदेषामपि समानकर्तृकत्वादिरूपसम्बन्धवाचकत्वं वक्तुं शक्यमिति प्राहुः ॥ ४७ ॥

(कुं०टी०) *परेत्विति । समाने कर्तरीति वाच्ये निर्धारणविभक्त्या द्योत्यत्वं लभ्यते । निर्धारणविभक्तिबलादेव च पूर्वकाल इति बहुव्रीहिः । निर्धारणस्य च समानविषयत्वात् क्रिया लभ्यते । अत एवोक्तम्—*विशिष्टार्थवृत्तेर्धातोरिति । *प्रकार इति । भुक्त्वा व्रजतीत्यत्र पूर्वकालभोजनकर्तृकर्तृकं व्रजनमित्यर्थात् । *तद्बलादिति । पूर्वकालत्वेनानन्तर्याक्षेपात् । *अत एवेति । पूर्वकालविशिष्टे ऽर्थे वर्तमानाद्धातोरित्यर्थकरणादेवेत्यर्थः । *फलार्थकेति । भोजनस्य फलत्वे आसनस्य पूर्वकालत्वं दुर्वारमिति भावः । *विभाषाग्रेइति । साधनपौर्वापर्ये तेन क्त्वो ऽभिधानात् । *आनन्तर्येति । "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत"इत्यत्रानन्तर्यमात्रबोधान्न वाजपेयकाले शरदि कार्यं किंतु स्वकाले वसन्त एव । ननु पूर्वकाल इत्येतावतैव गतार्थता, भूतत्वं हि समभिव्याहृतक्रियापेक्षमेवेति पूर्वकालत्व एव पर्यवसानादत आह *भूतइतितुनोक्तमिति । *एवं चेति ।

अत्र प्राभाकराः—समानकर्तृकत्वस्य नियमेन प्रतीतेस्तद्

वाच्यमेव, पूर्वकालत्वं तु न वाच्यमाक्षेपादेव लाभात् । भोजनव्रजनकर्त्रोरेकत्वे ऽवगते हि अर्थादेकस्य पूर्वत्वलाभात् । यद्यपि यज्ञोपवीतं वहन् सभ्यान् पश्यन् व्रजतीत्यत्र युगपदनेकक्रियाकर्तृत्वं सम्भवति तथाऽपि अनेकप्रधानक्रियाकर्तृत्वं युगपदेकस्य न सम्भवतीति युक्त एवाक्षेप इत्याहुः ।

तन्न । भुक्त्वा व्रजतीत्यत्र व्रजनस्यापि पूर्वत्वसम्भवेन भोजने नियमतः पूर्वकालत्वाक्षेपासंभवात् । नहि पूर्वोपस्थितक्रियाया एव पूर्वत्वमिति नियमः सम्भवति । न व्रजति भुक्त्वेत्यत्र व्यभिचारात् । अत एव पूर्वभाविक्रियावाचकपदं प्राक् प्रयुज्यत इत्यस्यापि न नियमः ।

अन्ये तु समानकर्तृकत्वं न वाच्यं भोजनव्रजनकर्त्रोरभेदस्य विशेष्यविशेषणभावमहिम्नैव लाभात् भोक्तुं व्रजति पश्यन् व्रजतीत्यादिवत् । नहि तत्रापि समानकर्तृकत्वं वाच्यम् ॥ ४७ ॥

( कं० टी० ) एतत्सूचितामरुचिं प्रकाशयन्सिद्धान्तमाह *परेत्विति । *तद्बलादेव–तस्य तत्र प्रकारत्वबलादेव । आनन्तर्यं चोक्तरूप न तु तथेति नोक्तदोषः । *अत एव–तस्य तत्र प्रकारत्वादेव । कैयटाद्युक्तेरसागत्याथाह *पूर्वेति । *शङ्कापरेति । तदग्रिमेत्यर्थः । अर्थग्रहणलब्धमाह *फलेति । क्रियारूपेत्यर्थः । *तदेति । उक्तार्थत्वेनेत्यादिः । वैपरीत्येऽनिष्टमाह । *तत्रेति । नन्वज्ञानेन शङ्कायामपि सिद्धान्तस्तथैवाभिमत इति नोक्तदोषो ऽत आह *वास्तेति । *विधिना न्यायेनेति पाठान्तरम् । कैयटमपि तत्र साधकत्वेनाह *यदात्विति । ननु पूर्वं भुङ्क्ते पश्चाद्व्रजतीतिवदन्यत्रापि इष्ट तदनापत्तिरत आह *पूर्वमिति । इत्यादावित्यस्य क्त्वा इत्यत्रान्वय. । स्पष्ट चेद भाष्ये । दर्शपूर्णमासाभ्यामित्यादावुक्तदोषोऽत्रापि मते इत्याह *आनन्तर्येति । *एव

च—तस्य तत्र प्रकारत्वे च। लाघवादाह *कर्मेति। एवेन प्राशुक्तवर्तुर्बहिर्व्यवच्छेदः। ततोऽपि लाघवादाह *भूत इति। पर्यायेति परिभाषया आह *लाघवेति। *तत्त्वेन–भूतत्वेन। प्राचां मते आह *एवञ्चेति। तस्य तत्र प्रकारतया भाने चेत्यर्थः। *एषाम्–क्त्वादीनाम्। आदिना पूर्वकालत्वोत्तरकालत्वम्, सिद्धान्तपरत्वे त्वस्य आदिना आनन्तर्यम्। अस्योत्कृष्टत्वादाह *श्रेति ॥ ४७ ॥

नन्वेवमिष्टकाः पक्त्वा ऽहं भोक्ष्ये, अहं भुक्त्वा व्रजामीत्यादौ तृतीयापत्तिः। नच तिङन्तेन कर्तुरभिधानान्न सेति वाच्यम्। तिङन्तार्थकर्तुरुक्तत्वेऽपि क्त्वान्तार्थकर्तुरभिधानाभावात्। अनभिहिते भवतीति पर्युदासात्। अत एव प्रासादे आस्ते इत्यत्र सद्क्रियाधिकरणस्याभिधाने ऽप्यासिक्रियाधिकरणस्यानभिधानात्सप्तमीति भाष्यादौ स्पष्टम्। तथा पक्त्वौदनो भुज्यत इत्यत्र द्वितीयापत्तिरिति चेन्न। कर्त्रादेरेकत्वे प्रधानतिङन्तार्थक्रियानिरूपितशक्त्यभिधाने क्त्वान्ताद्यर्थगुणक्रियानिरूपितशक्तेरप्यभिहितत्वस्य भाष्यादिप्रामाण्येनाङ्गीकारात्।

तदुक्तं हरिणा—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।<br>
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥<br>
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।<br>
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥

क्रियान्तरसम्बन्धस्य बुद्धिविषयत्वे एव क्त्वः साधुत्वम्।

एतेन पूर्वं क्त्वान्तार्थमात्रस्य बुद्धिविषयत्वे

तस्य कर्तृकर्माकाङ्क्षासत्त्वाद् अन्तरङ्गत्वेन द्वितीयादिकं दुर्वारमित्यपास्तम् । ओदनं पक्त्वा ग्रामो गम्यते देवदत्तेनेत्यादौ द्वितीया भवत्येव कर्मशक्त्योरेकनिष्ठत्वाभावात् ।

अत एव "स्थाण्वमि" इति सूत्रे भाष्ये क्त्वातुमुन्णमुलादयः समभिव्याहृतेनानुप्रयुज्यमानेन समानाधिकरणे तद्वाच्यकारके वक्तव्याः, तेनोक्तविषये तृतीयादि नेत्युक्तम् । "अव्ययकृतो भावे" इत्याश्रित्य च प्रत्याख्यातम् । तत्र समानशब्द एकपर्यायः ।

एवं च क्षुधं प्रतिहन्तुं शक्यमिति कैयटोक्तं चिन्त्यम्, वचनारम्भे ऽसिद्धेः ।

क्षुधः प्रतिघातमात्रविशेषणत्वमपि न युक्तम् । "गमेर्ग्रामः कर्म इषेस्तूभयम्" इति सन्सूत्रस्थभाष्यविरोधात् । अत एव ग्रामो गन्तुमिष्यत इत्येव न तु ग्रामाय ग्रामं वेति ।

एवं चावृत्त्या उभयत्रापि शाब्दान्वय एव । ग्रामो गन्तुमिष्यत इत्यत्र गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न कदाऽपि भवतस्तदपेक्षकर्मत्वस्याप्यभिहितवत्प्रकाशादिति कैयटोक्तेः ।

हरिरपि—

इषेश्च गतिसंस्पर्शाद् ग्रामे यो लो विधीयते ।
तत्रेषिणैव निर्भोगः क्रियते गतिकर्मणः ॥ इति ।

संस्पर्शात् इषौ क्रियामुखेनैव द्रव्यसम्बन्धात् ।

निर्भोगः, अभिधानम् । इषिणा तद्विहितत्वादिना अत एव—

पक्त्वा भुज्यत इत्यत्र केषां चिन्न व्यपेक्षते ।
ओदनं पचतिः सो ऽसावनुमानात्प्रतीयते ॥

इत्यत्र केषां चिदित्युक्तम् । प्रथमान्तौदनपदवाच्यस्यायोग्यत्वान्न पचिक्रियया सम्बन्धः, किन्तु भुजिनैवेति न पचिनिरूपिता शक्तिरुपात्ता ओदनपदार्थे किन्तु सामर्थ्याद् द्वितीयान्तौदनपदार्थस्तत्र गम्यते इति केषां चिन्मतामिति तदर्थ इत्यलम् ।

आख्यातवाच्यक्रियायाः प्राधान्यात्तां प्रत्येव क्त्वान्तोपस्थिताः सर्वा विशेषणं न तु तासां परस्परं सम्बन्धः, गुणानां च परार्थत्वादिति न्यायात् । अत एवानियतः प्रयोगः स्नात्वा भुक्त्वा पीत्वा व्रजति पीत्वा भुक्त्वा स्नात्वेत्यादि च ।

आवाह्य षोडशोपचारैः पूजयेदित्यत्रोक्तसम्बन्धेनावाहनविशिष्टे पूजने षोडशोपचारैरित्यस्य करणत्वम् । तेनावाहनस्य षोडशोपचारान्तर्गतत्वेऽपि न दोषः ।

दक्षिणदेशस्थैरप्राप्य गङ्गां पर्वत इत्यादौ "परावरयोगे च" इति क्त्वा । प्राप्यत इत्यध्याहारः । अप्राप्येत्यस्य दक्षिणदेशस्थपुरुषकर्तृका नदीकर्मिका आरोपितप्राप्तिरर्थः । सा चोत्तरकालिकत्वेन पर्वतकर्मकप्राप्तिक्रियान्वयिनी । अत्र परभू-

तया नद्या अप्राप्येत्येतद्द्वारकः सम्बन्धः ।

एवमतिक्रम्य पर्वतं नदी इत्यत्रावरयोगः । उत्पत्तिकालावच्छिन्नदक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिध्वंसोत्तरकालिकी नदीप्राप्तिरिति बोधः । तेनोभयत्र क्रमेण प्रागभावसमानाधिकरणत्वं ध्वंससमानाधिकरणत्वं चेतरप्राप्तौ फलति ।

क्वचित्साक्षात् क्रियाया एव परावरयोगः । यथा अवेमर्ऽसमिति विगृह्याविकशब्दादुत्पत्तिरित्यत्र । तत्र विग्रहो विभिन्नत्वेन ज्ञानं तदुत्तरकालिकी अविकशब्दावधिका प्रत्ययकर्तृकोत्पत्तिरित्यर्थः । परत्वादिकमत्र लोकव्यवहाराद्वैवक्षिकमित्यन्यत्र विस्तरः । इति कृदर्थविचारः ॥ ४८ ॥



( कुं० टी० ) *नचैवमिति । क्त्वादीनां भावार्थकत्वे इत्यर्थः । *तृतीयापत्तिरिति । भोक्ष्ये इत्यादिना कर्तुरभिधानेऽपि पक्त्वा इत्यादिभिरनभिहितत्वात्तृतीयापत्तिरित्यर्थः । *प्रधानेतरयोरिति । प्रधानगौणक्रियानिरूपिता यत्र द्रव्ये शक्तिर्भिन्ना तत्र गौणक्रियानिरूपिता शक्तिः प्रधानमनुरुध्यते । अनुरोधमेवाह *प्रधानविषयेति ।

यदा प्रधानक्रियानिरूपिता शक्तिः प्रत्ययेनाभिधीयते तदा गुणनिरूपिता शक्तिरनुक्ताऽपि तद्वदेव उक्तवदेव भासत इत्यर्थः । एवं च न गौणक्रियाऽनुरोधेन कारकमिति भावः ।

*अनुप्रयुज्यमानेनेति । अनुप्रयुज्यमानक्रियावाच्ये कारके भवतीत्यर्थः । तेन पक्त्वौदनो भुज्यत इत्यत्र न द्वितीयेति भावः ।

अत्र वचनारम्भे प्रथमामात्रप्राप्त्या प्रत्याख्याने ऽपि तथैव व्याख्येयम् । नन्वेवं क्षुधमुपहन्तुमिति कैयटप्रयोगासङ्गतिः शक्यमित्यनेनाभिधानादिति सर्वतः प्रधानभूताया आख्यातवाच्यक्रियाया एव ग्रहणात् । एवं च क्षुदुपहन्तुं शक्यमित्यपि भवतीति मतं तद् निराकरोति *चिन्त्यमिति । *इपेश्चेति । इच्छतेर्गतिसबन्धाद् ग्रामे कर्मणि यो लकारो विधीयते तत्रेष्यत इत्यनेनैव गतिकर्म अभिधीयत इत्यर्थः । *न दोष इति । आवाहनोत्तरकालिके पूजने षोडशोपचाराणाङ्करणन्वात् । *परावरयोगेचेतीति । अवरशब्दोऽत्र पूर्ववृत्तिवाची । परावरशब्दयोः सम्बन्धिशब्दत्वाद्यदपेक्षं परानरत्वङ्गम्यते तयोः परावराभ्यां योग उच्यते । अप्राप्य गङ्गामित्यत्र गङ्गाप्राप्तिप्रागभावसमानाधिकरणः पर्वत इत्यर्थः । अतिक्रम्येत्यत्र तु पर्वतप्राप्तिध्वंससमानाधिकरणा नदीत्यर्थः । अव्यविकन्यायस्य स्वरूपं भाष्यकारो दर्शयति अवेर्मांसमिति विगृह्य अविकशब्दात्प्रत्ययोत्पत्तिरेवेति आविकं मासमिति । अत्राविकशब्दादेव प्रत्ययस्तेनैव च विग्रह इति न्यायाशयं दर्शयितुं विगृह्येत्यस्यार्थमाह–विभिन्नत्वेन ज्ञानमित्यर्थः । प्रकृत्यर्थादिविभागस्याताात्त्विकत्वादाह *वैयक्षिकमिति । अतात्त्विकद्वाराश्रयेणैव शास्त्रप्रवृत्तेः ॥ ८ ॥

इति श्रीमद्देवीदत्तात्मजरामसेवकसून्वाचार्यकृष्णमित्रकृतायां मञ्जूषाकुञ्चिकाया कृदर्थविचारः ॥

---

(क० टी०) यत्तु परिमले अप्पदीक्षितैरुक्त समानकर्तृकयोः पूर्वकाले इति स्मरणात्कर्ता क्त्वाद्यर्थः, अन्यथेष्टकाः पक्त्वेत्यादि, तस्य

खण्डयति *नन्वित्यादिना । *एवम्–पक्षद्वयेऽपि तस्य क्त्वाद्यर्थत्वाङ्गीकारे । सिद्धान्तेनाह *तिङन्तेनेति । शक्तिमतोऽभेदेनाह *तिङन्तार्थेति । नन्वेतावताऽपि निषेधः कुतो नात आह *अनभीति । ननु प्रसज्यप्रतिषेधः एवायमास्तामत आह *अत एवेति।पर्युदासाश्रयणादेवेत्यर्थः । दोषान्तरमाह *तथेति । धर्मभेदेऽपि न धर्मिभेद इत्याह *कर्त्रादेरिति । वैपरीत्यनिरासायाह *प्रधानेति । शक्तिरित्यस्य मध्यमणिन्यायेनान्वयः । क्रियाद्वयनिरूपिता एकाश्रयनिष्ठा भिन्ना शक्तिरित्यर्थः । *तत्र–विषये । तयोर्मध्ये वा । अनुरोधमेवाह *प्रधानेति । तत्क्रियानिरूपितेत्यर्थः । *यदेति । पूर्वान्वयि । विशेषमाह *क्रियान्तरेति । समानकर्तृकयोरित्युक्तेरिति भावः । *बुद्धीति । पूर्वमित्यादि । कैयटोक्तिं खण्डयति *एतेनेति । तथा सत्यन्तरङ्गत्वाभावेनेत्यर्थः ।मात्रपदेन क्रियान्तरसम्बन्धव्यवच्छेदः । आदिना तृतीया।*दुर्वारमिति । नहि तत्काले प्रधानक्रियानिरूपितशक्तेर्ज्ञानमस्ति नापि तदभिहितत्वस्येति भावः । एकनिष्ठेत्यस्य फलमाह *ओदनमिति । *कर्मेति । प्रधानक्रियागुणक्रियानिरूपितशक्त्योरनेकत्वेन तदभिधानेनैतदभिधानाभावादित्यर्थः ।भाष्यादीत्युक्तभाष्यकैयटग्रन्थं प्रकाशयन् क्रियान्तरेत्युक्तार्थे भिन्ननिष्ठत्वे तदिष्टत्वे च मानमाह *अत एवेति । उक्तरीत्या प्राप्ततदभावस्येष्टत्वादेवेत्यर्थः । तस्य व्याख्या *तद्वाच्येति । अन्यथा पचिक्रियाकर्मत्वादेरनभिधानात्तत्स्यात् । नन्वज्ञानेन तथोक्तावपि प्रत्याख्यानाशय स एवात आह *अव्ययेति । प्रत्याख्याने चेत्यर्थः । एतत्प्रतीकमुपादाय तत्र तृतीयाद्याशंक्याख्यातार्थे क्रिया प्रधानं क्त्वान्तार्थो गुणभूतः । तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितैव प्रधानानुरोधात् । गुणाभावे तद्विरुद्धकार्यारम्भकत्वाभावादिति कैयटेनोक्तम् । अन्त्यलाभोपायमाह *तत्रेति । भाष्यीयवार्त्तिके इत्यर्थः । तद्वाच्यकारकाभिन्नं यत्र क्त्वान्तादि कारकं तदैव तत्र क्त्वादीति तदर्थः । एवंचेत्यस्यार्थमाह *वचनेति । कैयटस्याशयान्तरमपि व्याख्याकृदुक्तं खण्डयति *क्षुध इति । मात्रपदेन शक्यार्थव्यवच्छेदः । *अत एव–उभयकर्मत्वादेव । *एव च–तथा प्रयोगाभावे च । सकृदुपात्तस्य तदसम्भवादाह *आवृत्त्येति । तत्र मानमाह

*ग्रामइति। *हरिरपि–आह। अधिकरणस्य सम्बन्धित्वविवक्षया तत्र षष्ठीत्याह *इषाविति। लक्ष्यार्थमाह *क्रियेति। अन्यथा तत्र ल एव न स्यात्। यथाश्रुतासंगतेराह *तद्धीति। प्रकृतत्वादाह *अभीति। इदमेव तत्पमनमिति सूचयन्नाह *अत एवेति। तत्र तस्य तेनाभिधानादिवेत्यर्थ। पचतिरित्यन्तस्यः प्रागन्वय। *सोऽसौ–ओदन.। अन्वयप्रयोजकरूपवत्त्व योग्यतेति सिद्धान्तेनाह *अयोग्येति। *पचीति। तदर्थेत्यर्थ। तत एवाह *सामर्थ्यादिति। योग्यत्वादित्यर्थः। एतेन शाब्दार्थान्वयभेदेनोभय स्वीकुर्वन्त. सकलग्रन्थकारा परास्ता इत्यन्यत्र स्पष्टम्। तदाह *इत्यलमिति। अत्र सिद्धान्तमाह *आख्यातेति। एवव्यवच्छेद्यमाह *नेत्विति। एतेनामीषा पूर्वमानयत्युक्ते यथा मध्यमो नानीयते एवमत्रापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात्प्रत्ययो न स्यादित्यपास्तम्। गुणानामिति न्यायस्त्वनन्यित्वे नास्ति गमके, इत्थ सति तासा मिथ सम्बन्धोऽपि, गुणः कृतात्मसस्कार इति न्यायोऽप्यत्रानुकूल.। अत एव हुत्वा दत्वा च धारयेदित्यत्र न दोषस्तत्र गमकानि सुयज्ञोपवीतानि नवानि कृत्वा तदुक्तमन्त्रेण हुनेदथाग्नौ स्वय तु देवात्मपितृभ्य इत्थ दद्यात्ततो धार्यमिति।

वेदारम्भणत पूर्व सक्तुप्राशनत परम्।
नवयज्ञोपवीतानि हुत्वा दत्वा च धारयेद्। इति च।

नवानि द्विजै' प्रथम हुत्वाऽऽदौ गुरवे दत्त्वा पितृभ्यो धारयेत् इति च सप्तव्रतकार्ष्णाजिनिगालववचांसि। वक्ष्यमाणादोषायाह *आवाह्येति। *इत्यत्र—इत्यत्रतु। सूत्रान्तरविषयमाह *दक्षिणेति। सिद्धान्तेनाह *आरोपितेति सूत्रस्यार्थद्वयमिति सूचयन्नाह *अत्रेति। *एतदिति। अर्थेत्यर्थः। पर्वतस्येति भाव.। अत एव द्वितीयोदाहरणमाह *एवमिति। एतद्द्वारक इत्युक्ते फलमाह *क्वचिदिति। ननु देशकालादिकृतमत्र परत्वमत आह *परत्वादीति। एतेनान्यथाऽत्र शाब्दबोध वर्णयन्तः प्राचीनाः परास्तास्तदाह *अन्यत्रेति। शेखरादावित्यर्थः।

इति कृदर्थव्याख्या ॥ ४८ ॥

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) २
(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मज-भट्टशङ्करविरचित । (मीमांसा) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ४
(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवर-श्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सपूर्णम् (वेदान्त) ३
(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८
(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथ-भट्टकृता (वेदान्त) २
(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्कर-सिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्यां प्रत्यक्षानुमानमाथुर्यां व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि ३
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहित श्रीदेवाचार्यप्रणीतासिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्र-सूरिकृत । १
(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित प्रमेयरत्नार्णवश्च १
(२९) अनुमानचिन्तामणि-व्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११
(३१) वीरमित्रोदय । महामहोपाध्यायश्री-मित्रमिश्रविरचित आह्निकप्रकाश ६
(३२) स्मृतिसारोद्धार ,विद्वद्वरविश्वम्भरत्रिपाठिसंकलित । ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २
(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २
(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसा-भाष्य श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्य-नारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया सवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्य-श्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृत-वर्षिणीसमाख्यव्याख्यासवलितम् । ४
(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठल-नाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो—प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४
(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालि-मिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्म सुधातरङ्गिण्याख्य टीकया सहिता । ३
(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

